* ओ३म् *

# व्याकरण-महाभाष्यम्

[ प्रदीप-उद्योत-विमर्शैः समलङ्कृतम् ]

## द्वितीयो भागः

( प्रथमद्वितीयाध्यायात्मकः )

प्रकाशकः—

हरयाणा-साहित्य-संस्थानम्

गुरुकुल झज्जर ( रोहतक )

॥ ओ३म् ॥

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

[ श्रीकैय्यटकृतप्रदीपेन नागोजीभट्टकृतेन भाष्यप्रदीपोद्द्योतेन च विभूषितम् ]

तस्यायं—

## द्वितीयो भागः

( प्रथम-द्वितीयाऽध्यायात्मकः, नवाह्निकादग्रिमः )

स च—

परमतपस्विनां श्रीमताम्भगवान्देवाचार्याणामन्तेवासिना
महाविद्यालयगुरुकुलझज्जरस्योपाचार्येण
वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्येण
पण्डित वेदव्रतेन वर्णिना सम्पादितो
'विमर्श' टिप्पण्या च संयोजितः ।


प्रकाशकः—

हरयाणा-साहित्य-संस्थानम्
गुरुकुल झज्जर (रोहतक)

प्रथम संस्करणम्
द्विसहस्रम्
२०००

२०२० विक्रमाब्दे
१८८५ शकाब्दे
१९६३ ख्रिस्ताब्दे

मूल्यम् १६·००
षोडशरुप्यकाः
( सोलह रुपये )

प्रकाशकः—

हरयाणा-साहित्य-संस्थान

पो० गुरुकुल झज्जर, जि० रोहतक

सम्पादकः—

श्री वेदव्रतः स्नातकः सिद्धान्तशिरोमणिः

वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्यः

( उपाचार्यः—महाविद्यालयगुरुकुलझज्जरस्य )

मुद्रकः—

श्री शिरीशचन्द्र शिवहरे, एम. ए.

मैनेजिंग डायरेक्टर

दी फाइन आर्ट प्रिंटिंग प्रेस, अजमेर.

❁ ओ३म् ❁

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

[ प्रदीप-उद्द्योत-विमर्शैः समलङ्कृतम् ]

तस्य—

## द्वितीयो भागः

( प्रथम-द्वितीयाऽध्यायात्मकः, नवाह्निकादग्रिमः )

---

### गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ १ । २ । १ ॥

### ङित्किद्वचने तयोरभावादप्रसिद्धिः ॥ १ ॥

ङित्किद्वचने तयोरभावात्—ङकारककारयोरभावात्—ङित्त्वकित्त्वयोरप्रसिद्धिः । सता ह्यभिसम्बन्धः शक्यते कर्तुम् । न चाऽत्र ङकारककारावितौ पश्यामः । तद्यथा—'चित्रगुर्देवदत्तः' इति; यस्य ता गावो भवन्ति स एव ताभिः शक्यतेऽभिसम्बन्द्धुम् । भाव्येते तर्ह्यनेन,—'गाङ्कुटादिभ्योऽञ्णिन्ङिद्भवती'ति । 'असंयोगाल्लिट् किद्भवती'ति‡ ।

---

प्रदीपः—गाङ्कुटादिभ्यः । चत्वारोऽत्र पक्षा उपक्षिप्ता भाष्ये—ङित्त्वकित्त्वसम्बन्धप्रतिपादनम्, भावनम्, सञ्ज्ञाकरणम्, अतिदेशश्चेति । तत्राद्यपक्षनिराकरणाय वार्तिकमुपन्यस्यति—ङित्किद्वचन इति । सता हीति । विद्यमानेन वस्तुना सम्बन्धोऽर्थस्य

---

उद्योतः—गाङ्कुटादिभ्यो० । अस्य तद्वदतिदेशत्वेन वार्तिकानुत्थानमाशङ्क्याह—चत्वारोऽत्रेति । उपक्षिप्ताः । दूषणद्वारा साक्षाच्चोक्ता इत्यर्थः । तत्राद्येति । तत्र हि गाङ्कुटादिभ्यः परोऽञ्णित्प्रत्यय इत्सञ्ज्ञकङकारयुक्त इत्यर्थः । तयोरिति तच्छब्देन गुणभूतयोरपि ङकारककारयोर्बुद्धिस्थतया परामर्श इत्याह भाष्ये—ङकारककारयोरिति । यथा चैतत्तथा पस्पशायामुक्तम् । ङित्त्वकित्त्वयोरप्रसिद्धिरिति । तद्व्यवहाराऽप्रसिद्धिरित्यर्थः । तदाह—येन तस्येति । सत्त्वे वेति । 'यङादेरिति' शेषः । अञ्णिग्रहणवैयर्थ्यापत्त्या च मो राजीतिव-

---

‡ असंयोगाल्लिट् कित् १. २. ५.

**भवतीति चेदादेशप्रतिषेधः ॥ २ ॥**

भवतीति चेदादेशस्य प्रतिषेधो वक्तव्यः । ङकारककारवितावादेशौ प्राप्नुतः । कथं पुनरित्सञ्ज्ञो नामादेशः स्यात् ? किं हि वचनान्न भवति ? एवं तर्हि षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते, न चात्र षष्ठीं पश्यामः । 'गाङ्कुटादिभ्य' इत्येषा पञ्चमी 'अञ्णि'दिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति—'तस्मादित्युत्तरस्य' ( १. १. ६७ ) इति ।

सञ्ज्ञाकरणं तर्हीदम्—गाङ्कुटादिभ्योऽञ्णिन्ङित्सञ्ज्ञो भवतीति । असंयोगाल्लिट्कित्सञ्ज्ञो भवतीति ।

**सञ्ज्ञाकरणे क्ङिद्ग्रहणेऽसम्प्रत्ययः शब्दभेदात् ॥ ३ ॥**

सञ्ज्ञाकरणे क्ङिद्ग्रहणेऽसम्प्रत्ययः स्यात् । किं कारणम् ? 'शब्दभेदात्' । अन्यो हि शब्दः 'क्ङिती'ति अन्य 'किती'ति 'ङिती'ति च । तथा किद्ग्रहणेषु ङिद्ग्रहणेषु चानयोरेव सम्प्रत्ययः स्यात् ।

प्र०—शक्यते कर्त्तुम् । न च गाङ्कुटादिभ्यः परस्य प्रत्ययस्य ङकार इत्सञ्ज्ञकोऽस्ति येन तस्य ङिदिति व्यपदेशः स्यात् । सत्त्वे वा भूतानुवादे प्रयोजनाऽभाव इत्यप्रामाण्यमापतति । न च गाङ्कुटादिभ्यश्चङादेः क्ङितोऽनेन विधानमुपपद्यते, अञ्णिद्ग्रहणानर्थक्यप्रसङ्गात् । भाव्येते इति । गाङ्कुटादिभ्यः परो योऽञ्णित्प्रत्ययः स ङिद्भवति । ङकार इत्सञ्ज्ञकस्तस्य भवतीत्यर्थः । स तु ङकार आदौ मध्येऽन्ते वेति देशविशेषं नापेक्षते, इद्धर्माक्रान्तस्यैव विधानात् । इतां च धर्मोऽश्रूयमाणानामपि कार्यं प्रति विशेषकत्वम् । भवतीति चेदिति । टित्त्वकित्त्वमित्त्वानामभावात्, ङ इदनन्तरोऽस्येत्यनन्तरार्थे बहुव्रीह्यभावाच्चादेः परस्येत्यादेः स्थाने ङकार आदेशः प्राप्नोतीत्यर्थः । ङ इत् ङिदिति तत्पुरुष एव न्याय्यः, स्वपदार्थप्राधान्येन तस्यान्तरङ्गत्वात्, बहुव्रीह्यर्थानुपपादाच्च 'कुटिते' त्यादौ प्रसिद्धङित्त्वाश्चङादयो यद्यादेशाः क्रियन्ते तदा नैते तदर्थाभिधाने समर्थाः । तृङादयश्च नेह शास्त्रे प्रसिद्धाः । अथाऽस्मादेव वचनादपूर्वाः क्रियेरंस्तदा ङिच्चेत्यन्त्यस्य स्युः । कथं पुनरिति । इत्सञ्ज्ञो ह्यसन्नेव कार्यमात्रं प्रति-

उ०—लोपाऽभावार्थमनुवाद इति न शङ्क्यम् । ननु शशविषाणादिशब्दैरसताऽपि विषाणेन शशस्य सम्बन्धः प्रतिपाद्यते इति चेन्न, तद्वदस्याप्यप्रामाण्यप्रसङ्गात् । अञ्णिद्ग्रहणेति । नच धूङेदिति विहितण्यङः कमेर्णिङश्च व्यावृत्तये तदिति वाच्यम्, गाङ्कुटादिभ्योऽनेन तयोर्विधानेऽपि प्रत्ययाधिकारेऽस्य पाठाऽभावेन प्रत्ययत्वाऽभावाञ्ञकारणकारयोरित्त्वाऽप्रवृत्तौ ञ्णितोस्तयोरसम्भवात् । भाष्ये भाव्येते तर्ह्यनेनेति । प्रकरणेनैत्यर्थः । ननु 'भाव्येते' इत्ययुक्तं, पञ्चमीनिर्देशेनादेशविध्यसम्भवादत आह—गाङिति । गाङादिभ्यः परस्य प्रत्ययस्य तव्यादेः सिद्धत्वाद्विशेषण एव विधितात्पर्यमित्याह—ङकार इति ।

तद्वदतिदेशस्तर्ह्ययम्—'गाङ्कुटादिभ्योऽञ्णिन्ङिद्वद्भवती'ति । असंयोगाल्लिट्किद्वद्भवती'ति । स तर्हि वतिनिर्देशः कर्तव्यः, नह्यन्तरेण वतिमतिदेशो गम्यते ? न कर्त्तव्यः, अन्तरेणापि वतिमतिदेशो गम्यते । तद्यथा—'एष ब्रह्मदत्तः' । अब्रह्मदत्तं ब्रह्मदत्त इत्याह । ते मन्यामहे—ब्रह्मदत्तवदयं भवतीति । एवमिहाप्यङितं ङिदित्याह, ङिद्वदिति गम्यते । अकितं किदित्याह, किद्वदिति गम्यते ।

तद्वदतिदेशेऽकिद्विधिप्रसङ्गः ॥ ४ ॥

तद्वदतिदेशेऽकिद्विधिरपि प्राप्नोति । 'सृजिदृशोर्झल्यमकिति' ( ६. १. ५८ ) । सिसृक्षति दिदृक्षते† । अकिल्लक्षणोऽमागमः प्राप्नोति ।

प्र०-पादयति, आदेशस्तु भावरूपोऽन्यस्य प्रसङ्गे भवति । किं हीति । लोपस्य यथादेशत्वं तथा ङकारस्यापीत्सञ्ज्ञकस्य भविष्यतीत्यर्थः । तत्र स्थानिनं निवर्त्त्य ङकारो निवर्तेत । सञ्ज्ञाकरण इति । अक्तपरिमाणा सञ्ज्ञा कृतेति न्यूनातिरिक्तशब्दोच्चारणे सञ्ज्ञास्वरूपानुपलम्भात्सञ्ज्ञिनामसम्प्रत्ययः । ङित्सञ्ज्ञाकरणे तु व्यचेः 'कुटादित्वमनसी'ति वचनात्सम्प्रसारणार्थं स्यात् लिटः कित्सञ्ज्ञा च वचिस्वपीति । सम्प्रसारणार्था स्यात् । गाङ्कुटादिभ्यस्तर्हि ङित्सञ्ज्ञा किमर्था स्यात् ? अनर्थिका भवतु, न्यायानुगतेऽर्थे किं कुर्मः । क्ङिति चेत्यादिषु यौगिकस्यैव ग्रहणं स्याद्यस्य ककारो ङकारश्चेत्संज्ञकः ।

उ०- नन्वेवं लोपस्यावश्यकत्वेन विधानं व्यर्थमत आह—इतां चेति । एवं च कार्यार्थं विधानमिति भावः । ननु भाष्यमानः सर्वोऽप्यादेश एवेत्यत्र मानाऽभावादादेशप्रतिषेध इत्ययुक्तमत आह—टित्त्वेति । अनेनागमत्वं निराकृतम् । उरण्रपरवदनन्तरोऽस्त्विति चेदत्राह—ङ्—इदनन्तर इति । नन्वेवमपि बहुव्रीहिणा ङिच्छब्देन प्रत्ययाभिधानात्तस्य चानेकाल्त्वात् कथमादेः स्यादत आह—तत्पुरुष इति । न च तस्यादित्वे इत्त्वं व्यर्थं लशक्वतद्धित इत्येव सिद्धेरिति वाच्यम्, अतद्धित इति पर्युदासेन प्रत्ययसञ्ज्ञाकालिकादेरेव तेनेत्त्वविधानात् । अनुपपादः—अनुपपत्तिः तामेव दर्शयति—कुटितेत्यादाविति । अथास्मादेवेति । अन्तरतमपरिभाषासंस्कृतादित्यर्थः । अन्त्यस्य स्युरिति । न च ङित्त्वस्य गुणप्रतिषेधाद्यर्थत्वेन चारितार्थ्यात्तातङ्न्यायेन सर्वादेशो भविष्यतीति वाच्यम्, गुणप्रतिषेधाद्यर्थत्वे सर्वादेशत्वं, सर्वादेशत्वे च तदर्थत्वमित्यन्योन्याश्रयेण सर्वादेशत्वाऽलाभेऽन्त्यादेशत्वापत्तेरिति भावः । तातङ्स्तु यथा सर्वादेशत्वं तथोक्तम् । भाष्ये तस्मादित्युत्तरस्येति । एवं चादेः परस्येत्यस्य प्राप्त्या आदेशपक्षे इष्टाऽसिद्धेः स न युक्त इति भावः । संप्रसारणं—व्यचेर्ग्रहिज्येत्यनेन । गाङ्कुटादिभ्य इति । व्यचिमेवानुवदेदिति भावः । भाष्ये—क्ङिद्ग्रहण इति । क्ङिति चेत्यादावित्यर्थः । कृत्रिमेति । उभयगतिमजानत इदं दूषणं बोध्यम् । भाष्ये

† हलन्ताच्च १. २. १०.

## सिद्धं तु प्रसज्यप्रतिषेधात् ॥ ५ ॥

सिद्धमेतत् । कथम् ? प्रसज्यप्रतिषेधात्, प्रसज्यायं प्रतिषेधः क्रियते—'क्किति ने'ति ।

## सर्वत्र सन्नन्तादात्मनेपदप्रतिषेधः ॥ ६ ॥

सर्वेषु पक्षेषु सन्नन्तादात्मनेपदं प्राप्नोति उच्चुकुटिषति, निचुकुटिषति—'ङितः' इत्यात्मनेपदं प्राप्नोति‡ । तस्य प्रतिषेधो वक्तव्यः ।

## सिद्धन्तु पूर्वस्य कार्यातिदेशात् ॥ ७ ॥

सिद्धमेतत् । कथम् ? पूर्वस्य यत्कार्यं तददतिदिश्यते । किं वक्तव्यमेतत् ?

---

प्र०—अनयोरेवेति । 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय' इति न्यायात् । चङादीनां तु ङित्करणं ङित्प्रदेशेषु ग्रहणार्थं स्याद्यत्र संज्ञारूपानुपलब्धिः । एष ब्रह्मदत्त इति । निर्ज्ञाते भेदे तत्कार्यप्राप्तये तद्रूपारोपणं क्रियत इत्यतिदेशगतिः । अकिद्विधिप्रसङ्ग इति । कार्यातिदेशे तत्प्रतिबद्धानि कार्याणि व्यपदेशमन्तरेणापि भवन्तीति गुणनिषेधादीनामेवातिदेशः । अमागमस्तु स्वाश्रयः केन निवार्यते । यथा ब्राह्मणवदतिदेशः क्षत्रियस्य स्वाश्रयं युद्धादि न निवर्तयति । 'अकिती'ति च पर्युदासाश्रयणात्कित्प्रतिबद्धकार्याऽभावात्स्वाश्रयोऽमागमः स्यात् । सिद्धं त्विति । प्रसज्यप्रतिषेधे अमागमनिषेध एव कित्कार्यम् । सिद्धं तु पूर्वस्येति । विशिष्टमत्र ङित्कार्यमतिदिश्यते न सर्वमित्यर्थः ।

---

उ०—एष ब्रह्मदत्त इति, भेदप्रदर्शनम् । अब्रह्मदत्तमिति । अस्य 'अयं चे'त्यादिः । तदाह—निर्ज्ञाते भेदे इति । निर्णीते भेदे इत्यर्थः । अतिदेशगतिरिति । तत्फललाभ इत्यर्थः । आहार्यारोपस्य तत्कार्यबोधनफलकत्वादिति भावः । व्यपदेशातिदेशे किद्व्यपदेशविरुद्धाऽकिद्व्यपदेशस्य स्वाश्रयस्य निवर्तनदाह—कार्येति । व्यपदेशम्—ङित्त्वादिरूपं निमित्तम् । करणे घञ् । यदि तु अतिदिश्यमानविरुद्धस्वाश्रयकार्याऽभावोऽतिदेशस्वभावसिद्धः, यथा तत्रैव दृष्टान्ते मद्यपानादिनिवृत्तिरिति न दोषस्तथापि परिहारान्तरस्याभिधास्यमानत्वान्नैतत्सुष्ठु निरूपितं भगवता । विशिष्टमत्रेति । ततः परस्य यत्तन्नातिदिश्यत इत्यर्थः ।

---

‡ अनुदात्तङित आत्मनेपदम् १. ३. १२.

नहि। कथमनुच्यमानं गंस्यते? सप्तम्यर्थेऽपि वतिर्भवति। तद्यथा मथुरायामिव 'मथुरावत्' पाटलिपुत्र इव 'पाटलिपुत्रवत्'। एवं ङितीव 'ङिद्वत्', कितीव 'किद्वत्'।

अथ किमर्थं पृथङ्ङित्कितौ क्रियेते, न सर्वं किदेव स्यात्, ङिदेव वा।

**पृथगनुबन्धत्वे प्रयोजनं वचिस्वपियजादीनामसंप्रसारणं सार्वधातुकचङादिषु ॥ ८ ॥**

---

प्र०— सप्तम्यर्थेपि वतिरिति। सप्तम्यर्थे वर्तमानादिवार्थे वतिरित्यर्थः। ननु नेह वतिरुपात्तः तत्कथमयं परिहारः। अयं भावः—यथा न सर्वकार्यप्राप्त्यर्थ एवाब्रह्मदत्ते ब्रह्मदत्तत्वारोपः, अपि तु कस्यचिदेव कार्यस्य लाभार्थः। एवमिहापि व्याख्यानाद्विशिष्टङित्कार्यातिदेशार्थ एवान्यूणितः प्रत्ययस्य तद्रूपासङ्गः उपदेशग्रहणानुवृत्त्या चोपदेशे यो ङित्तस्मादात्मनेपदमिति सामर्थ्यात्पूर्वस्य कार्यातिदेशोऽयम्।

अथ किमर्थमिति। कार्यार्थत्वादनुबन्धासङ्गस्यैकेनैवानुबन्धेन गुणनिषेधादेः सिद्धत्वादनुबन्धभेदोऽनर्थक इति प्रश्नः। एकस्य चानुबन्धस्य करणेऽतिदेशोपि भेदेन न कर्तव्यः।

आवसथ इति। रुदिविदिभ्यां ङिदित्यतो ङिदिति वर्तमाने उपसर्गे वसेरित्यथप्रत्ययः।

---

उ०— सप्तम्यर्थे वतेरविधानादाह—सप्तम्यर्थ इति। यद्यपि सप्तम्यर्थवत्यन्तैकदेशस्तदर्थे प्रयुक्तः सत्या सत्यभामेतिवदित्यपि भाष्याशयो वक्तुं शक्यस्तथापि सार्वधातुकमिति सूत्रविषये पचेतामित्यादावातो ङित इति स्वकार्यस्यातिदेशानापत्तिरत आह—अयं भाव इति। तद्रूपासङ्गः तद्रूपारोप इत्यर्थः। निर्लिङ्गं व्याख्यानमयुक्तमत आह—उपदेशेति। पूर्वस्येति। परभिन्नस्येत्यर्थः। भाष्ये सप्तम्यर्थेपीत्यपिना षष्ठ्यर्थसंग्रहः। तेनोभयसिद्धिः। तेन तुल्यमिति वत्यन्तैकदेशत्वाभावे तात्पर्यात्। तेन ततः परस्य यत्कार्यं तन्नेति बोध्यम्।

अनुबन्धभेद इत्यस्य प्रत्ययादावित्यादिः। अतिदेशोपि भेदेनेति। अत्र प्रकरणे इत्यादिः। अपिना तत्तत्प्रदेशेषु चोभयग्रहणं न कर्तव्यं भवतीति सूचितम्।

श्वेर्विभाषा धेट्श्व्योरिति चङ्। जृस्तम्भिवस्यङ् च। वचेरस्यतिवक्तीत्यङ् वचउमित्युम्। सर्वत्र ङित्त्वे कित्त्वे वा दोषाः। यथेह भवतीति भाष्यस्य—यथेह शून इत्यादौ सम्प्रसारणं भवति तथा चङादावपि स्यादित्यर्थः। भाष्यस्य—अथङ् इति। एवमानुपूर्वीक

पृथगनुबन्धत्वे प्रयोजनं वचिस्वपियजादीनामसंप्रसारणं सार्वधातुके चङा-दिषु च† ।

सार्वधातुके प्रयोजनम्—यथेह भवति सुप्तः सुप्तवानिति, एवं 'स्वपितः स्वपिथः' अत्रापि प्राप्नोति ।

चङादिषु च प्रयोजनम् । के पुनश्चङादयः ? चङङ्नजिङ्ङ्वनिबथङ्नङः । चङ्—यथेह भवति 'शूनः शूनवानिति, एवम् 'अशिश्वियत्' अत्रापि प्राप्नोति । अङ्—यथेह भवति शून उक्त इति, एवम् 'अश्वद् अवोचद्' अत्रापि प्राप्नोति । नजिङ्—यथेह भवति सुप्तः सुप्तवान् इति, एवं 'स्वप्नक्' अत्रापि प्राप्नोति । ङ्वनिप्—यथेह भवतीष्टमिष्टवानिति, एवं 'यज्वा' अत्रापि प्राप्नोति । अथङ्—यथेह भवत्युषित इति, एवम् 'आवसथः' अत्रापि प्राप्नोति । नङ्—यथेह भवतीष्टमिति, एवं 'यज्ञः' अत्रापि प्राप्नोति ।

## जाग्रोऽगुणविधिः ॥ ६ ॥

जागर्तेरगुणविधिः प्रयोजनम्‡ । यथेह भवति—जागृतः जागृथ इत्यङि-तीति पर्युदासः, एवं जागरितः जागरितवानित्यत्रापि प्राप्नोति ।

अपर आह—"जाग्रो गुणविधिः ।" जगार्तेर्गुणविधिः प्रयोजनम् । यथेह भवति—जागरितः जागरितवानिति । एवं जागृतः जागृथ इत्यत्रापि प्राप्नोति ।

प्र०- जाग्र इति । किति गुण इष्यते, न ङिति । एवं च विषयविभागः पृथगनुबन्धो-पादानादेव लभ्यते ।

उ०—एव प्रत्यय इति भावः । अन्यथा फलाभावात् उपसर्गे वसेरित्यत्र ङिदित्यननुवृत्तौ भाष्या-सङ्गतिः स्पष्टैवेति केचित् ।

भाष्ये अपर आहेति । यद्यपि सर्वत्र ङित्त्वे कित्त्वे वा सूत्रे तत्तत्पदमेवोपादातव्यम् । एवं च सर्वथा जागरित इत्यादौ गुणभवनमसिद्धमिति भाष्यदृष्टान्तासंगतिस्तथापि जागरित इत्येतत्सिद्ध्यर्थमन्यतरदपि यदि तत्सूत्रे न क्रियते तदायं ग्रन्थ इत्याहुः ।

† वचिस्वपियजादीनां किति ६.१.१५. । १ 'इष्टवान्' क्वचिन्न । ‡ जाग्रोऽविचिण्णल्ङित्सु ७.३.८५.

## कुटादीनामिट्प्रतिषेधः ॥ १० ॥

कुटादीनामिट्प्रतिषेधः प्रयोजनम् । यथेह भवति—'लूत्वा, धूत्वा' इति 'श्र्युकः किति' [ ७. २. ११ ] इतीट्प्रतिषेधः, एवं 'नुविता धुविता' अत्रापि प्राप्नोति ।

## क्त्वायां कित्प्रतिषेधश्च ॥ ११ ॥

क्त्वायां कित्प्रतिषेधश्च प्रयोजनम् । किं 'च' ? इट्प्रतिषेधश्च । नेत्याह । अदेशेऽयं चः पठितः—"क्त्वायां च कित्प्रतिषेध" इति । यथेह भवति—देवित्वा सेवित्वेति "न क्त्वा सेट्" [ १. २. १८ ] इति कित्त्वप्रतिषेधः, एवं 'कुटित्वा पुटित्वा' अत्रापि प्राप्नोति ।

अथवा देश एवायं चः पठितः—क्त्वायां कित्प्रतिषेधश्चेट्प्रतिषेधश्च । कित्प्रतिषेध उदाहृतम् । इट्प्रतिषेधो यथेह भवति 'लूत्वा धूत्वा' "श्र्युकः किति" इतीट्प्रतिषेधः, एवं 'नुवित्वा धुवित्वा' अत्रापि प्राप्नोति ।

---

प्र०— नुवितेति । नू स्तुतौ । धुवितेति । धू विधूनने । कितीति सप्तमीनिर्देशात् इट्प्रतिषेधस्याप्यतिदेशः स्यादित्युपन्यासः । नत्विट्प्रतिषेधः पूर्वस्य कार्यम् ।

कुटित्वेति । न क्त्वा सेडिति । निषेधो विशेषानुपादानादौपदेशिकवदातिदेशिकस्यापि कित्त्वस्य स्यात् । अथवा यदप्राप्तं कार्यं तदतिदिश्यते इति क्त्वाप्रत्यये कित्त्वातिदेश एव न स्यात् ।

नुवित्वेति । ङित्त्वेनात्र कित्त्वं येन नाप्राप्तिन्यायेन बाध्यत इति भावः ।

---

उ०— नू धू, कुटादी । सप्तमीनिर्देशादिति । वस्तुतः पूर्वस्य कार्येऽतिदेश इत्यस्य परभिन्नकार्ये इत्यर्थः । स्वकार्यं त्विष्यत एवातो ङित इत्यादीति बोध्यम् ।

ननु न क्त्वेति निषेध औपदेशिकस्यैवेति न दोषो ऽत आह—न क्त्वेति । नन्वौपदेशिकस्य प्रथमोपस्थितत्वेन तन्निषेधेन चरितार्थमातिदेशिकं न निषेधेदित्यरुचेराह—अथवेति । न स्यादिति । कुटादिभ्यः परस्य कित्त्वविधानं त्वन्यत्र चरितार्थं कुटित्वेत्यादौ कित्त्वप्रतिषेध एव स्यात् । न तु कित्त्वमिति भाष्याक्षरार्थः । एवं च कुटित्वेत्यादौ गुणः स्यात् ।

ननु पृथगनुबन्धकरणेऽपि नुवित्वेत्यादौ कथं श्र्युक इति निषेधो न, औपदेशिककित्त्वसत्त्वादित्यत आह—ङित्त्वेनेति ।

---

१—पूत्वा ।

स्यादेतत्प्रयोजनं यद्यस्य नियोगत आतिदेशिकेन ङित्त्वेनौपदेशिकं कित्त्वं बाध्येत । सत्यपि तु ङित्त्वे किदेवैषः । तस्मान्नूत्वा धूत्वेत्येव भवितव्यम् ॥१॥

## सार्वधातुकमपित् ॥ १ । २ । ४ ॥

सार्वधातुकग्रहणं किमर्थम् ? अपिदितीयत्युच्यमाने आर्धधातुकस्याप्यनेनापितो ङित्त्वं प्रसज्येत—कर्ता हर्ता । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—नानेनार्धधातुकस्यापितो ङित्त्वं भवतीति । यदयमार्धधातुकीयान् कांश्चिन्ङितः करोति चङङ्नजिङ्ङ्वनिबथङ्नङः । सार्वधातुकेप्येतज्ज्ञापकं स्यात् । नेत्याह । तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयः ? यथाजातीयकाश्चङङ्नजिङ्ङ्वनिबथङ्नङः । कथंजातीयकाश्चैते ? आर्धधातुकीयाः ।

---

प्र०— सत्यपीति । विरोधाभावादतिदेशेन स्वाश्रयस्य कित्त्वस्यानिवर्तनाद् येन नाप्राप्त इति न्यायाभावाच्च । नहि कुटिता कुटितुमित्यादौ कित्त्वे प्राप्ते ङित्त्वारम्भः ॥१॥

सार्वधातुक । लिङ्गादव्याप्तिरतिव्याप्तिर्वेति प्रदर्शनाय सार्वधातुकग्रहणस्याक्षेपप्रतिसमाधाने भाष्यकारेणोपन्यस्ते ।

आर्धधातुकीयानिति । अर्धधातुषु भवा इति ठञन्तत्वादन्तोदात्तत्वाभावाद् बह्वचोन्तोदात्ताट्ठञिति ठञभावे वृद्धाच्छो भवति । तातङस्तु ङित्त्वं तिपः पित्त्वादप्राप्तमित्यज्ञापकं सार्वधातुकाङित्त्वस्य, ङ्वनिपो ङित्त्वमज्ञापकमस्य हि पित्त्वात् ङित्त्वाप्राप्तिः ।

---

उ०— भाष्ये तस्मादिति । एवं च 'अदेशे ऽयं चः' इति स्थितम् ॥१॥

सार्वधातु । लिङ्गादिति । चङादीनां ङित्त्वादित्यर्थः । तुल्यजातीयस्य ज्ञापने तृजादौ ङित्त्वमतिव्याप्तम् । धातुप्रत्ययसामान्यविषये तु ज्ञापकेऽव्याप्तमिति भावः । आर्धधातुकशब्दस्य चरत्याद्यर्थठगन्तत्वेनान्तोदात्तत्वाद् बह्वचोन्तोदात्तादिति ठञ् प्राप्नोतीत्यत आह—अर्धेति । अर्द्धधातुशब्दस्तत्पुरुषेन्तोदात्तः, ततश्च भवादावर्थे बह्वच इति ठञ्, ञित्त्वादाद्युदात्तत्वमिति भावः । भवेति । तेषु भवा संज्ञार्धधातुकमित्यर्थः । ठञन्तत्वादिति । आर्धधातुकशब्दस्येति शेषः । आर्धधातुकसंज्ञायां संज्ञित्वेन भवानार्धधातुकीयानित्यर्थः । आर्धधातुक इतिवदार्धधातुकानिति वक्तव्ये आर्धधातुकीयानित्युक्तिः प्रियतद्धिता दाक्षिणात्या इति न्यायेनेति बोध्यम् । ननु हेर्ङित्त्वेनैव सिद्धे तदादेशतातङो ङित्त्वं सार्वधातुकाङित्त्वस्य ज्ञापकं स्यादत आह—तातङस्त्विवति । पित्त्वान्ङित्त्वाप्राप्तिरिति । तद्धि सुस्त्वेत्यत्र तुगर्थमनुदात्तार्थं चावश्यकमिति भावः । एवं च पूर्वसूत्रे सहनिर्देशादिहापि तदुच्चारणमिति तात्पर्यम् । यद्वा ङ्वनिप्प्रक्षिप्तः ङ्वनिट्भूतकालानामिति च प्रक्षिप्तः पाठ इति तात्पर्यम् । छङ्विकरणानामिति । ते चङ्क्सिच्चिणः ।

यद्येतदस्ति तुल्यजातीयस्य ज्ञापकमिति, चङङौ लुङ्विकरणानां ज्ञापकौ स्याताम्, नजिङ्वर्तमानकालानाम्, ङ्निब् भूतकालानाम्, अथङ्शब्द औणादिकानाम्, नङ्शब्दो घञर्थानाम्। तस्मात् सार्वधातुकग्रहणं कर्तव्यम्।

किं पुनरयं पर्युदासः—यदन्यत्पित इति, आहोस्वित्प्रसज्यायं प्रतिषेधः—पिन्नेति? कश्चात्र विशेषः?

**अपिन्ङिदिति चेत् शबेकादेशप्रतिषेध आदिवत्त्वात्॥ १॥**

अपिन्ङिदिति चेत् शबेकादेशे प्रतिषेधो वक्तव्यः। च्यवन्ते प्लवन्ते। किं कारणम्? आदिवत्त्वात्। पिदपितोरेकादेशोऽपित आदिवत्स्यात्। अस्त्यन्यत् पित इति कृत्वा ङित्त्वं प्राप्नोति।

अस्तु तर्हि प्रसज्यप्रतिषेधः—पिन्नेति।

**न पिन्ङिदिति चेदुत्तमैकादेशप्रतिषेधः॥ २॥**

---

प्र०— च्यवन्ते प्लवन्त इति। गुणात्पूर्वं नित्यत्वादन्तरङ्गत्वाच्चैकादेशः। तत्र कृते परस्येहापित आश्रितत्वात्परस्य कार्यं प्रत्यादिवद्भावाद् गुणनिषेधः स्यात्, साधारण-परिहाराभिधानाय वार्णादाङ्गमिति नाश्रितम्। प्रसज्यप्रतिषेधे तु ङित्त्वनिषेधः पूर्वस्य कार्यमिति पूर्वं प्रत्यन्तवत्त्वान्ङित्त्वाभावः। यद्यपि सार्वधातुकावयवस्याकारस्यैकादेशः तथापि परं प्रत्यादिवत्त्वादन्तशब्दः सार्वधातुकमपिद् भवतीति स्यादेव ङित्त्वम्। च्यवे इति चोत्तमैकवचने सर्वस्यैव सार्वधातुकस्यैकादेश इति ङित्त्वप्रसङ्गः।

---

उ०— प्रत्यादिवद्भावादिति। शाब्दफललाभायादिवत्त्वमेव प्राप्नोति, नत्वन्तवद्भावः। तेन हि ङित्त्वाभाव आर्थः फलति नतु शाब्द इति भावः। साधारणेति। व्याश्रयेप्यस्य प्रवृत्तिमङ्गी-कृत्येदम्। वस्तुतस्तु विभिन्ननिमित्ते प्रवृत्तावपि विभिन्नस्थानिके न तत्परिभाषाप्रवृत्तिरिति भाष्याशयः। यद्यपीति। अकारयोरेकादेशस्योक्तन्यायेनापित्त्वेप्युभयत आश्रयणेऽन्तादिवत्त्व-निषेधात्सार्वधातुकत्वाभावेन न ङित्त्वम्। परादिवद्भावेन तु न सार्वधातुकत्वलाभः परस्य सार्वधातुकावयवत्वेपि तत्त्वाभावादिति भावः। परं प्रतीति। परं समुदायं प्रतीत्यर्थः। एका-देशस्थानिनावचौ पूर्वपरौ ययोः समुदाययोरन्तादी एकादेशोपि तयोरेवान्तादिवदिति सूत्रार्थ इति भावः। अभ्युपेत्यापि अचावेव प्रत्यन्तवत्त्वं दोषान्तरमाह—च्यवे इति। हलः श्नः सूत्रभाष्ये तु 'ङिच्च पिन्न पिच्च ङिन्न' इत्यर्थसिद्ध्यर्थं प्रसज्यप्रतिषेध एवाश्रितः।

न पिन्ङिदिति चेदुत्तमैकादेशे प्रतिषेधः प्राप्नोति। तुदानि लिखानि† । किं कारणम्? आदिवत्त्वादेव। पिदपितोरेकादेशः पित आदिवत् स्यात्। तत्र पिन्नेति प्रतिषेधः प्राप्नोति।

यथेच्छसि तथास्तु। ननु चोक्तमुभयथापि दोष इति। उभयथापि न दोषः। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद् व्यवधानम् ॥४॥

## असंयोगाल्लिट् कित् ॥ १ । २ । ५ ॥

### ऋदुपधेभ्यो लिटः कित्त्वं गुणाद्विप्रतिषेधेन ॥ १ ॥

ऋदुपधेभ्यो लिट कित्वं गुणाद्भवति विप्रतिषेधेन‡ । ववृते ववृधे।

---

प्र०— तुदानीति। यद्यप्युत्तमस्य पित्त्वं तथापि तद्भक्तत्वादाटः पिदवयवस्यैकादेशः पित उत्तमस्यादिवदिति स्यान्ङित्त्वनिषेधः। तुदै इत्यत्र च सर्वस्यैव पित एकादेशः पित आदिवदिति ङित्त्वप्रतिषेधप्रसङ्गः।

स्थानिवद्भावादिति। यथा स्थानिकाले यथायोगं गुणप्रवृत्तिनिवृत्ती तथाऽऽदेशेपि कृतेऽव्यवधानबुद्ध्या भवतः ॥४॥

असंयोगात्। ऋदुपधेभ्य इति। बिभिदतुः बिभिदुरित्यादौ कित्त्वं नित्यं गुणस्त्वनित्यः। ववृत इत्यादौ तु द्वयोरप्यनित्यत्वं तत्र परत्वाद् गुणप्रसङ्गः पूर्वविप्रतिषेधाश्रयेण निवार्यते।

---

उ०— यद्यप्युत्तमस्येति। आडुत्तमस्येत्यस्योत्तमस्याडागमो भवति यस्याद् स पिदित्यर्थ इति भावः। नन्वाटायमेकादेशो, न च स पिदवयवो, भिन्नेव हि पिद्, इत्यत उक्तम्—तद्भक्तत्वादिति। शास्त्रेण तद्भक्तत्वबोधनादित्यर्थः।

ङित्त्वविधिप्रतिषेधौ न पूर्वस्य कार्ये इत्यत आह—यथेति। अव्यवधानबुद्ध्येति। शपूशयोरव्यवधानबुद्ध्येत्यर्थः। भाष्ये—व्यवधानमिति। ङित्त्वप्रयुक्ते निषेधे कर्तव्ये शपा व्यवधानमित्यर्थः ॥४॥

असंयोगात्। ऋदुपधेभ्य इति विशिष्योक्तिः किमर्थेत्यत आह—बिभिदतुरिति। यद्यपि गुणे कृते कित्कार्याऽभावात् तदप्राप्तौ कित्त्वमनित्यमिति शक्यं वक्तुम्। तथापि कृताकृतप्रसङ्गमात्रेण नित्यत्वमिति भावः। द्वयोरप्यनित्यत्वमिति। क्त्विे क्ङिति चेति प्रतिषेधाद् गुणोऽनित्यः। गुणे संयोगात्परत्वात्कित्त्वमनित्यमिति भावः।

---

† आडुत्तमस्य पिच्च ३. ४. ९२. ‡ पुगन्तलघूपधस्य च ७. ३. ८६.

## उक्तं वा ॥ २ ॥

किमुक्तम् ? 'न वा क्सस्यानवकाशत्वादपवादो गुणस्य*' इति ।

विषम उपन्यासः । युक्तं तत्र यदनवकाशं कित्करणं बाधते । इह पुनरुभयं सावकाशम् । कित्करणस्यावकाशः—ईजतुः, ईजुः× । गुणस्यावकाशः—वर्तित्वा वर्द्धित्वा+ । इहोभयं प्राप्नोति—ववृते ववृधे । परत्वाद् गुणः प्राप्नोति ।

इदं तर्ह्युक्तम्—"इष्टवाची परशब्दः" इति, "विप्रतिषेधे परं यदिष्टं तद्भवति" इति† ॥५॥

---

प्र०— न वा क्सस्येति । यथा क्सस्य कित्करणसामर्थ्याद् गुणो बाध्यते तथेहातिदेशसामर्थ्यादित्यर्थः ।

युक्तं तत्रेति । क्सस्य कित्करणे प्रयोजनान्तराभावः । इह तु सम्प्रसारणविधौ कृतार्थत्वाद् दुर्बलेनातिदेशेन प्राप्यमाणो गुणनिषेधो दुर्बलत्वान्न तद्विधिना सह स्पर्धते तातङ्न्यायेन ।

इष्टवाचीति । सूत्रकारेणैवायमर्थः संगृहीतः स तु स्मर्तव्य इत्यर्थः ॥५॥

---

उ०— ननु क्सस्यानवकाशत्वादिदमयुक्तम् । गुणे कृतेऽपि भूतपूर्वगत्या क्सप्राप्तेरत आह—यथेति । अन्यथाजातस्य निषेधायोगेन विशिष्टविधानं व्यर्थं स्यादिति व्यवस्थायां प्राप्तगुणं बाधित्वा क्स एवेति भावः । तथेहेति । ऋदुपधविषयैतल्लक्षणोपप्लवप्रापितनिषेधसामर्थ्यादित्यर्थः ।

ननु विध्युन्मूलकत्वेन निषेधस्य बलवत्त्वमयं च कार्यातिदेशोऽत आह—दुर्बलेनेति । अतिदेशदुर्बलत्वे हेतुः कृतार्थत्वादित्यन्तः । तातङ्न्यायेनेति । तातङि गुणादिनिषेधार्थत्वेन ङित्त्वस्य चरितार्थत्वादनेकाल्शिदित्यनेन यथाऽपवादङिच्चेत्यस्य बाधस्तथेत्यर्थः । केचित्तु इदं न युक्तं, विचति गृह्णातीत्यादौ सम्प्रसारणेन चरितार्थतया ङित्त्वस्य गुणनिषेधातिदेशानापत्तेः, अतिदेशोपप्लुततद्विषयनिषेधसामर्थ्याद् गुणबाध इत्येवं वार्तिकस्य कैयटेन व्याख्यानादेतदाशयानभिज्ञैकदेशिनश्च विषम इत्यादिर्ग्रन्थ इत्याहुः ॥५॥

---

* ३. १. ४५. वा० २. × वचिस्वपि० ६. १. १५. + न क्त्वा सेट् १. २. १८. 'वर्तिता वर्धिता' पाठान्तरम् । † १. ४. २. वा० ७.

## इन्धिभवतिभ्यां च ॥ १ । २ । ६ ॥

किमर्थमिदमुच्यते ? इन्धेः संयोगार्थं वचनम् । भवतेः पिदर्थम् । अयं योगः शक्योऽवक्तुम् । कथम् ?

### इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां किद्वचनानर्थक्यम् ॥ १ ॥

इन्धेश्छन्दोविषयो लिट् । नह्यन्तरेण छन्द इन्धेरनन्तरो लिड् लभ्यः । आमा भाषायां भवितव्यम्‡ । भुवो वुको नित्यत्वात् । भवतेरपि नित्यो वुक्* । कृते गुणे प्राप्नोति, अकृतेपि प्राप्नोति । ताभ्यां किद्वचनानर्थक्यम् । ताभ्यामिन्धिभवतीभ्यां किद्वचनमनर्थकम् ॥६॥

---

प्र०— इन्धि । किमर्थमिति । विनापि सूत्रेणेष्टं सिध्यति सत्यपि चेष्टं न सिध्यति । बभूवेत्यजलक्षणत्वाद् वृद्धेरिग्लक्षणत्वाभावात्प्रतिषेधाप्रसङ्गात् । गुणमात्रनिषेध एव तु बभूविथ अहं बभूवेति च णित्त्वाभावपक्षे स्यादिति प्रश्नः ।

इन्धेरिति । भाषायां लिट आमा व्यवधानाच्छन्दस्यमन्त्र इत्याम्प्रतिषेधादेतदुक्तम् । न त्वस्य भाषायां प्रयोगाभावः । तत्र छन्दस्युभयथेति लिटः सार्वधातुकत्वात्समीध इति ङित्त्वान्नलोपः । आर्धधातुकत्वाच्च श्नमभावः । व्यत्ययो बहुलमिति वचनाद्वा । नित्यो वुगिति । ओः सुपीत्यत ओरिति नानुवर्तत इति भावः । एकदेशविकृतस्यानन्यत्वाच्च शब्दान्तरप्राप्त्यभावः । सत्यामपि वा शब्दान्तरप्राप्तौ कृताकृतप्रसङ्गित्वाद्वुको नित्यत्वं, वुकि कृते गुणस्य प्राप्तिरेव नास्तीति नैतयोस्तुल्यबलत्वम् ॥६॥

---

उ०— इन्धिभवति । इष्टासिद्धिमेव दर्शयति—बभूवेत्यजिति । ननु कित्त्वविधानसामर्थ्याद्निग्लक्षणाया अपि वृद्धेः प्रतिषेधो भविष्यतीत्यत आह—गुणमात्रेति । एवं च तन्निषेधेनास्य चारितार्थ्येनानिग्लक्षणवृद्धिनिषेधसत्त्वे मानाभाव इति भावः ।

ननु छन्दस्येव समीधे इत्यादौ नलोपाद्यर्थं कित्त्वमावश्यकमत आह—तत्रेति । नन्वेवं विकरणः स्यादत आह—आर्धेति । नन्वेवं शब्दान्तरप्राप्तिः क्वापि न स्यादत आह—सत्यामपीति । श्रौतरूपमादायेति भावः ॥६॥

---

‡ इजादेश्च गुरुमतः० ३. १. ३६. * भुवो वुग् लुङ्लिटोः ६. ४. ८८. १—इदं क्वचिन्न ।

## मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ १ । २ । ७ ॥

किमर्थं मृडादिभ्यः परस्य क्त्वः कित्त्वमुच्यते, न किदेव हि क्त्वा ? "न क्त्वा सेट्" [१. २. १८] इति प्रतिषेधः प्राप्नोति तद्बाधनार्थम् । यदि तर्हि मृडादिभ्यः परस्य क्त्वः कित्त्वमुच्यते नार्थो 'न क्त्वा सेड्' इत्यनेन कित्त्वप्रतिषेधेन । इदं नियमार्थं भविष्यति— मृडादिभ्य एव परस्य क्त्वः कित्त्वं भवति नान्येभ्य इति ।

यदि नियमः क्रियते, इहापि तर्हि नियमान्न प्राप्नोति—लूत्वा पूत्वा । अत्राप्यकित्त्वं प्राप्नोति । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः ? यथाजातीयको मृडादिभ्यः परः क्त्वा ? कथंजातीयकश्च मृडादिभ्यः परः क्त्वा ? सेट् । एवमप्यस्त्यत्र कश्चिद्विभाषितेट्[1][†] सोऽनिटां नियामकः स्यात् । अस्तु तावद्ये सेटस्तेषां ग्रहणं नियमार्थम् । य इदानीं विभाषितेट् तस्य ग्रहणं विध्यर्थं भविष्यति ॥७॥

प्र०— मृड । मृडादिभ्य एवेति । विपरीतनियमस्तु व्याख्यानान्न भविष्यति मृडादिभ्यः क्त्वैव किद्भवतीति । नह्यनिष्टार्था शास्त्रप्रवृत्तिर्लक्ष्यमूलकत्वाद्व्याकरणस्मृतेः ।

लूत्वेति । क्त्वाप्रत्ययमात्रस्य नियमः स्यात् । कित्त्वं तु क्त्वातोसुन्कसुन इत्यादौ विशेषणार्थं स्यात् ।

एवमपीति । क्लिशः क्त्वानिष्ठयोरिति विकल्पेनेड्विधानात् । अस्तु तावदिति । मृडमृदवदवसां क्त्वः कित्त्वविधानं नियमार्थं गुधकुषक्लिशीनां तु रलो व्युपधादिति विकल्पे प्राप्ते नित्यार्थम् । तत्र विधिसम्भवे क्लिशेरनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति ॥७॥

उ०— मृडमृद । विपरीतेति । विशेषणीभूतमृडादिसंकोचस्य न्याय्यत्वादयं न्याय्य इति भावः । न च लोके प्रधानसंकोच एव न्याय्यत्वेन व्यवह्रियते 'राज्ञः संकोचः कार्यः' इति, राजनिमित्तं स्वव्यवहारसंकोचस्तदविस्तररूपः कर्तव्य इति तदर्थात् । समाधत्ते— व्याख्यानादिति ।

विशेषणार्थं स्यादिति । सुत्वेत्यादि च व्यावर्त्यं स्यादित्याहुः । अस्यानर्थकत्वेनैव वारणाद्विशेषणव्यावर्त्यं चिन्त्यम् । वस्तुतः क्त्वः कित्त्वसामर्थ्यादेव तुल्यजातीयापेक्षो नियम इति बोध्यम् । भाष्ये विभाषितेड्ग्रहणमुपलक्षणमित्याशयेनाह—गुधेति ॥७॥

१–इदं क्वचिन्न । † क्लिशः क्त्वानिष्ठयोः ७. २. ५०.

## रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥ १ । २ । ८ ॥

स्वपिप्रच्छ्योः सनर्थं ग्रहणं किदेव हि क्त्वा ॥ ८ ॥

## इको झल् ॥ १ । २ । ९ ॥

किमर्थमिकः परस्य सनः कित्त्वमुच्यते ?

### इकः कित्त्वं गुणो मा भूत्

इकः कित्त्वं क्रियते गुणो‡ मा भूदिति । चिचीषति तुष्टूषति । नैतदस्ति प्रयोजनम् ।

### दीर्घारम्भात्

दीर्घत्वमत्र बाधकं भविष्यति+ ।

---

प्र०— सन्नर्थमिति । तत्र चरितार्थत्वादनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति ॥८॥

इको । किमर्थमिति । इको झल् हलन्ताच्चेत्येक एव योगः कर्तव्यः किमर्थो योगविभाग इति प्रश्नार्थः । वक्ष्यमाणश्चात्राभिप्रायः ।

दीर्घत्वमिति । अज्झनगमां सनीति दीर्घत्वं नाप्राप्ते गुण आरभ्यमाणं तस्य बाधकमिति भावः ।

---

उ०— ननु रुदविदेति । सूत्रे स्वपिप्रच्छिग्रहणमनिटां नियामकं स्यादतो भाष्ये—रुदविदमुष-ग्रहिस्वपीति । तत्र सूत्रे स्वपिप्रच्छयोर्ग्रहणमित्यर्थः । तद्ध्वनयन्व्याचष्टे—तत्रेति । व्याख्या-नात् क्त्वया न सम्बन्ध इति भावः । स्वपिप्रच्छयोः क्त्वः कित्वविधानमनिटः क्त्वो नियमार्थं न भवतीत्यन्वयः ॥८॥

इको झल् । सूत्रे किमर्थमिति वक्तव्ये किमितीकः परस्येत्युक्तमत आह—इक इति । उत्तरार्थं सूत्रमावश्यकमिति भावः । अत एवेक्धातोर्न ग्रहणम् । उत्तरत्रार्थाधिकारा-नुरोधात् ।

ननु गुणस्य परत्वात्कथं दीर्घो बाधकोऽत आह—अज्झनेति । एवं चानवकाशत्वाद् दीर्घो गुणस्य बाधक इति भावः ।

---

१—'रुदविदमुषग्रहि' इत्येव भाष्यपाठः । सम्पूर्णसूत्रपाठोऽङ्कयोगश्च प्रामादिक इति कश्चित् ।

‡ सार्वधातुका० ७. ३. ८४. + अज्झनगमां सनि ६. ४. १६.

**कृते भवेत् ।**

कृते खलु दीर्घत्वे गुणः प्राप्नोति ।

**अनर्थकं तु**

अनर्थकमेवं सति दीर्घत्वं स्यात् ।

**ह्रस्वार्थम्**

ह्रस्वानां दीर्घवचनसामर्थ्याद् गुणो न भविष्यति ।

भवेद् ह्रस्वानां दीर्घवचनसामर्थ्याद् गुणो न स्यात् ।

**दीर्घाणां तु प्रसज्यते ॥ १ ॥**

दीर्घाणां तु खलु गुणः प्राप्नोति । दीर्घाणामपि दीर्घवचनसामर्थ्याद् गुणो न भविष्यति । न दीर्घाणां दीर्घाः प्राप्नुवन्ति ? किं कारणम् ? नहि भुक्तवान् पुनर्भुङ्क्ते, कृतश्मश्रुश्च पुनः श्मश्रूणि कारयति । ननु च पुनः प्रवृत्तिरपि दृष्टा—भुक्तवानपि पुनर्भुङ्क्ते, कृतश्मश्रुश्च पुनः श्मश्रूणि कारयति ।

---

प्र०— कृते भवेदिति । शास्त्रमावर्तमानं धर्मसाधनं जपादिवदिति भावः । अनर्थकं त्विति । शास्त्रपूर्वकात्प्रयोगाद्धर्मो न तु शास्त्रप्रवृत्तिमात्रादिति भावः । ह्रस्वार्थमिति । ह्रस्वानामेव दीर्घविधानसामर्थ्याद् गुणो न स्यात् । दीर्घाणां तु प्रागेव तादृूप्याद्रूपविशेषसंपत्तिफलत्वाच्छास्त्रस्य दीर्घशास्त्राप्रवर्तनाद् गुणप्रसङ्गः । दीर्घाणामपीति । गुणापाकरणार्थं दीर्घेष्वपि दीर्घशास्त्रं प्रवर्तत एवेत्यर्थः । नहि भुक्तवानिति । तृप्तिफलं भोजनं फले सम्पन्ने पुनर्न प्रवर्तते । ननु चेति । तृप्तोपि पुनर्भुङ्क्त इत्यर्थः ।

---

उ०— भाष्ये—कृते भवेदिति । अनवकाशत्वेन बाधकस्य प्रवृत्त्युत्तरमुत्सर्गप्रवृत्तेरङ्गीकारादिति भावः । शास्त्रं प्रवर्तमानमिति । एवं चादृष्टार्थं प्रवृत्त्या शास्त्रस्यानर्थक्याभावान्न बाध इति भावः । शास्त्रमावर्तमानमिति क्वचित्पाठः । तत्राप्ययमेवार्थः ।

ननु शास्त्रस्य साधारणत्वेन ह्रस्वविषये एव बाधो नान्यत्रेत्यत्र किं विनिगमकमत आह—ह्रस्वानामेवेति । ह्रस्वार्थं दीर्घविधानं चेत्किं, तत्राह भाष्ये—भवेदित्यादि । गुणापेति । एवं च तन्निवृत्त्या रूपविशेषसम्पत्तिः फलमस्येवेत्यर्थः । नहीतिहिशब्दसूचितं हेतुमाह—तृप्तीति ।

## सामर्थ्याद्धि पुनर्भाव्यम्

सामर्थ्याद्धि पुनः प्रवृत्तिर्भवति। भोजनविशेषाच्छिल्पिविशेषाद्वा। दीर्घाणां पुनर्दीर्घत्ववचने न किंचित्प्रयोजनमस्ति। "अकृतकारि खल्वपि शास्त्रमग्निवत्"। तद्यथा—अग्निर्यददग्धं तद्दहति।

दीर्घाणामपि दीर्घवचन एतत्प्रयोजनं गुणो मा भूदिति। "कृतकारि खल्वपि शास्त्रं पर्जन्यवत्"। तद्यथा—पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति। यथैव तर्हि दीर्घत्ववचनसामर्थ्याद् गुणो न भवति। एवमृदित्त्वमपि न प्राप्नोति—चिकीर्षति जिहीर्षति।

### ऋदित्त्वं दीर्घसंश्रयम्।

नाकृते दीर्घे ऋदित्त्वं प्राप्नोति। किं कारणम्? ऋत इत्युच्यते।

भवेद् ह्रस्वानां नाकृते दीर्घे ऋदित्त्वं स्याद्, दीर्घाणां तु खल्वकृतेपि दीर्घत्वे ऋदित्त्वं प्राप्नोति।

---

प्र०— भाव्यमिति। कर्तव्यं भोजनं तृप्तिविशेषार्थिभिरित्यर्थः। न किंचिदिति। नहि दीर्घाणां दीर्घतरः सम्पद्यत इत्यर्थः। अग्निवदिति। दग्धस्यायोग्यत्वाददाह इति भावः। इहाप्ययोग्यत्वाद्दीर्घेषु दीर्घशास्त्रेण न प्रवर्तितव्यमिति भावः।

दीर्घाणामपीति। ह्रस्वेष्वपूर्वदीर्घरूपसंपादनार्थं दीर्घशास्त्रं प्रवर्तते, दीर्घेषु तु रूपप्रतिबन्धिगुणनिवर्तनेन स्वरूपप्रत्यापत्तये। यथा—मो राजि समः क्वाविति मकारस्य मकार इति भावः। ततश्च ह्रस्वानामिव दीर्घाणामपि येन नाप्राप्तिन्यायेन दीर्घेण गुणो बाध्यत एव। यथैवेति। दीर्घारम्भादविकृतेनैव दीर्घेण स्थातव्यमिति भावः।

ऋदित्त्वमिति। यद्यन्तरेण दीर्घविधानं प्राप्नुयादृदित्त्वं तदा तद्दीर्घेण बाध्येत यतस्तु दीर्घाश्रयमेव ऋदित्त्वं तदा तदेव फलं दीर्घस्य संजातमिति ऋदित्त्वं प्रवर्तिष्यते। तथा चोच्यते—'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते' इति।

---

उ०— भाव्यमित्यस्य कर्तव्यमिति व्याख्या, शेषपूरणमन्यत्। तृप्तिविशेषेति। विजातीया तृप्तिस्तत्तद्भोजनफलमिति भावः। भाष्ये—भोजनविशेषादिति। [1]भोजनेति कर्मणि ल्युट्। शिल्पविशेषादिति पाठः। नहीति। तत्र तृप्तिविशेषवद् नात्र दीर्घविशेषः फलमिति भावः।

ह्रस्वेष्विति। लक्ष्यभेदादेकस्यापि विधिनियमरूपेण प्रवृत्तिरिति भावः। येन नाप्राप्तिन्यायेन। अनवकाशत्वेन। [ भाष्ये ] ऋदित्त्वम्। ऋत इद्धातोरितीत्त्वम्।

---

१—शिल्पविशेषादिति नागेशभट्टसम्मतः पाठः। † ऋत इद्धातोः ७. १. १००.

## दीर्घाणां नाकृते दीर्घे

दीर्घाणामपि नाकृते दीर्घत्वे ऋदित्त्वं प्राप्नोति । यदा दीर्घत्वेन गुणो बाधितः तत उत्तरकालमृदित्त्वं भवति ।

## णिलोपस्तु प्रयोजनम् ॥ २ ॥

इदं तर्हि प्रयोजनम् । णिलोपो यथा स्यात्+ज्ञीप्सति ।

क्वास्ताः क्व निपतिताः, क्व कित्त्वं क्व णिलोपः । को वा ऽभिसंबन्धः— यत्सति कित्त्वे णिलोपः स्याद्, असति कित्त्वे न स्यात् ? एषोऽभिसम्बन्धः— यत्सति कित्त्वे सावकाशं दीर्घत्वं परत्वाण्णिलोपो बाधते । असति पुनः कित्त्वेऽनवकाशं दीर्घत्वं यथैव गुणं बाधते, एवं णिलोपमपि बाधेत । तत्र

प्र०— दीर्घाणामिति । इत्त्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेनेति गुणप्रसङ्गादिति भावः । ज्ञीप्सतीति । असति कित्त्वे गुणवण्णिलोपस्यापि विशेषाभावाद्दीर्घत्वं बाधकं स्यादित्यर्थः ।

क्वास्ता इति । यथान्यत्र क्षिप्तानां शरादीनामन्यत्र निपातो ऽसंभाव्यः । एवं कित्त्वणिलोपयोरपि संबन्धो न संभाव्यत इत्यर्थः । एषोऽभिसंबन्ध इति । ज्ञीप्सतीति णेर्गुणलोपदीर्घत्वानि प्राप्नुवन्ति । तत्रासति कित्त्वे ऽनवकाशत्वाद्विशेषाभावाच्च गुणवण्णिलोपस्यापि दीर्घत्वं बाधकं स्यात् । अथवा पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति णिलोपस्यैव बाधकं तत्स्यात्, गुणस्तु स्यादेव । सति तु कित्त्वे तेनैव गुणो बाधित इति चिचीषतीत्यादौ लब्धावकाशं दीर्घत्वं परत्वाण्णिलोपेन बाध्यते । नन्वसत्यपि कित्त्वे येन नाप्राप्त इति न्यायेन गुणस्यैव बाधकं दीर्घत्वं

उ०— णिलोपस्य किन्निमित्तत्वाभावात्कथं णिलोपस्तत्र प्रयोजनमत आह—असतीति । णिलोपस्यापीति । बाध्यसामान्यचिन्तायामिति भावः ।

ज्ञीप्सतीति । ज्ञपेश्चुरादिणिचि मितां ह्रस्वत्वे सनीवन्तेतीडभावे आप्ज्ञप्यृधामीत् इत्त्वेऽभ्यासलोपे रूपम् । विशेषचिन्तायामपि दोष इत्याह—अथवेति । ननु येन नाप्राप्तिन्यायेन यत्रोभयापवादतासम्भावना तत्रैषां व्यवस्थापकत्वं, नच तथा प्रकृते । यथैत्येधतीत्यादौ पररूपत्वावच्छिन्ने बाध्ये 'किंशास्त्रविहितस्य' इत्याकाङ्क्षायां मध्येऽपवादाः पुरस्तादिति

+णेरनिटि ६. ४. ५१.

णिलोपस्यावकाशः—कारणा हारणा । दीर्घत्वस्यावकाशः—चिचीषति तुष्टूषति । इहोभयं प्राप्नोति—ज्ञीप्सति । परत्वाण्णिलोपः ।

असत्यपि कित्त्वे सावकाशं दीर्घत्वम् । कोवकाशः ? इस्भावः—निमित्सति प्रमित्सति । मीनातिमिनोत्योर्दीर्घत्वे कृते मीग्रहणेन ग्रहणं यथा स्यात्×।

प्र०-भविष्यति न णिलोपस्य, गुणबाधनेन च सावकाशं दीर्घत्वं परत्वाण्णिलोपेन बाधिष्यत इति नार्थः कित्त्वेन । नैतदस्ति । यदा बाध्यं भेदेनापेक्ष्यते इदं सर्वत्र प्राप्तमिदं तु कचिदेवेति, तदायं न्यायः । यदा तु बाध्यमात्रमपेक्ष्यते विध्यन्तरेणाव्याप्तो विषयो न कश्चिदस्तीति तदा सर्वस्यैव बाधया भवितव्यम् ।

असत्यपीति । मीनातिमिनोत्योः सन्यनवकाशत्वाद् गुणं बाधित्वा दीर्घः प्रवर्तते । ततो मीग्रहणेन ग्रहणादिस्भावेन प्रतिपदविहितेन गुणो बाध्यते । कृते चेस्भावे हलन्ताच्चेति कित्त्वाल्लघूपधगुणाभावः । तत्र सामान्यग्रहणे चरितार्थत्वाद्दीर्घविधानस्य ज्ञीप्सतीतिपरत्वाण्णिलोपो भविष्यतीति नार्थः कित्त्वेन । ननु लाक्षणिकत्वान्मिनोतेर्मीरूपस्य मीग्रहणेन ग्रहणं न प्राप्नोति । नैष दोषः । यत्र लक्षणाभिनिर्वृत्तत्वेन शब्दरूपमपेक्ष्यते तत्र लक्षणप्रतिपदोक्तयोरिति परिभाषोपस्थानं न तु यत्र प्रयोगरूपाश्रयणं तत्र । नन्वेवमसत्यपि मीग्रहणेन ग्रहणे मीनातीत्यादिनाऽऽत्वे कृते गामादाग्रहणेष्व-

उ०-न्यायविषयः । येनेत्यस्य यद्धर्मावच्छिन्नकार्येणेत्यर्थः । येन लक्षणेनेत्यर्थे तु नास्य विषयः, नापि कार्यभेदे, यच्छब्दपरामर्श्यानुगमकरूपाभावादिति चेन्न । व्यक्तिपक्षे 'किमिदं गुणबाधकतया सर्वविषयम्, उत णिलोपबाधकतया णिविषयम्' इति सन्देहे व्यवस्थाया अवश्यापेक्षितत्वेन शास्त्रप्रवृत्तिः सूपपादेत्यभिमानात् । वस्तुतस्त्वेवं सति णिगमेत्येव वदेदिति बाध्यसामान्यचिन्तापक्षमाश्रित्यैव भाष्यव्याख्योचितेति दिक् । तद् ध्वनयन् शङ्कते—नन्वसत्यपीति । येनेत्यस्य येन कार्येणेत्ययं इति भावः । नैतदिति । येनेत्यस्य स्वेतरेणेत्यर्थकतया यदा बाध्यसामान्यचिन्तापरत्वमस्य न्यायस्य तदायं ग्रन्थ इति भावः । भाष्ये कित्वारम्भे न दोष इत्याह—तत्र णिलोपस्येत्यादिना ।

प्रतिपदविहितेनेति । मीविषयेणाचरितार्थेनेत्यर्थः । एवं च तत्र सूत्रे मीग्रहणेन मिनोतेरपि ग्रहणं दीर्घस्य प्रयोजनमिति भावः । सावकाशमिति । भाष्यस्य सार्थकमित्यर्थः । परत्वादिति । यद्यपि प्रमित्सतीत्यत्र अपवादत्वाद् दीर्घेण गुणस्येव ज्ञीप्सतीत्यत्र बाध्यसामान्यचिन्तायां णिलोपस्यापि बाधेन भाव्यं, तथापि दीर्घसमानकालिकस्य णिलोपस्य गुणस्येव बाधेपि दीर्घे कृते स्थानिवत्त्वेन प्राप्तणिलोपः स्यादेव । न च दीर्घविधानसामर्थ्यम् । इस्भावे सामान्यग्रहणसम्पादनेन कृतार्थत्वात् । एवं च परत्वादित्यस्य दीर्घोत्तरकालं प्राप्तत्वादि-

× सनि मीमाघु० ७. ४. ५४.

यथैव तर्ह्यसति कित्वे सावकाशं दीर्घत्वं परत्वाण्णिलोपो बाधते, एवं गुणोपि बाधेत । तस्मात्कित्वं वक्तव्यम् ।

इकः कित्वं गुणो मा भूद् दीर्घारम्भात्कृते भवेत् ।
अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ॥१॥
सामर्थ्याद्धि पुनर्भाव्यमृदित्वं दीर्घसंश्रयम् ।
दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम् ॥२॥

प्र०–विशेष इति माग्रहणेन ग्रहणादिस् भविष्यतीति सामान्यग्रहणमपि दीर्घस्य प्रयोजनं नोपपद्यते । एवं तर्हि दोषान्तराभिधानेनास्य पूर्वपक्षस्य निराकरणाद्भाष्यकारेण नैतत्सुष्ठु निरूपितम ।

तदेव दोषान्तरमाह—यथैवेति । सामान्यग्रहणे उपयुक्तत्वाद्दीर्घत्वस्य नास्त्यनवकाशत्वमिति द्वाभ्यामपि गुणणिलोपाभ्यां दीर्घत्वं बाध्यत इति कर्तव्यं कित्वम् । न च दीर्घविधानस्य 'कुङ् शब्दे' इति धातुरवकाशः चुकूषत इति । यस्मात्कूङ् शब्द इति पाठस्तत्र कुटादित्वान्ङित्वे सति गुणाभावाद्दीर्घस्य श्रवणं सिद्धम् । वेद[1]लोकयोश्चाकूतशब्दस्य प्रयोगो दृश्यते । गुधुवाववकाशाविति चेद् उहनिगमामिति ब्रूयात् किं प्रत्याहारेण ॥९॥

उ०–व्यर्थः । भ्रष्टावसरन्यायस्तु शास्त्रे नास्त्येवेति भावः । यत्र लक्षणेति । यथा 'विभाषा दिक्समासे' 'तृतीयासमास'इत्यादौ । तत्र हि समासशब्दस्य संज्ञात्वेन तज्ज्ञानाय लक्षणपर्यालोचनमित्यर्थः । प्रयोगरूपेति । तच्च मीयत इत्यादिप्रयोगनिष्ठम् । एवं हि गामादाग्रहणेष्वविशेष इत्यादेरसङ्गतिः स्यादिति मासाहचर्याद् मीशब्दांशेऽपि सा न प्रवर्तत इत्येव समाधातुं युक्तम् । तद् ध्वनयन्नाह—नन्वेवमसत्यपीति । कित्वाभावे एज्विषयत्वेनात्वस्य सुलभत्वादिति भावः । एवं च मीग्रहणमपि व्यर्थमिति तात्पर्यम् । भाष्ये मीनातिमिनोत्योर्दीर्घत्वे कृत इत्यत्र पर्जन्यवल्लक्षणप्रवृत्तिमाश्रित्य मीनातिनिर्देशः ।

[ भाष्ये ] परत्वादित्यस्योत्तरकालप्राप्तत्वादित्येवार्थः । यथादीर्घोत्तरं स्थानिवत्त्वेन णिलोपो भवति, एवं तत्प्रवृत्त्युत्तरमेव गुणोपि स्यात् । दीर्घत्वं तु सामान्यग्रहणाविघातार्थं स्याद् इति भावः । नास्त्यनवकाशत्वमिति । नास्त्यनर्थकत्वमित्यर्थः । दीर्घत्वं बाध्यते इति । प्रवृत्तमपि निवर्त्यते इत्यर्थः । धातुरवकाश इति । तस्य च कुटादित्वप्रयुक्तङित्वेन गुणनिषेधाद्दीर्घश्चरितार्थ इति भावः । एवं चेस्भावे एवावकाशोक्तिर्भाष्योक्ताऽसङ्गतेति तात्पर्यम् । उहनीति । न चाजादेशगमेरित्यर्थलाभार्थमज्ग्रहणम् । हनिसाहचर्येण लुविकरणस्थानिकादेशगमेरेव ग्रहणेनादोषात् । एवं च कुङः सत्वेपि न क्षतिरिति बोध्यम् । कुगुध्रुभ्यः कुटादिभ्यश्च सनोऽनभिधानमित्यन्ये ॥९॥

[1]–तद्यथा वेदे—"यदाकूतात् समसुस्रोद्धृदो वा मनसो वा संभृतं चक्षुषो वा । (यजु० १८ । ५८)

## हलन्ताच्च ॥ १ । २ । १० ॥

अयुक्तोयं निर्देशः । कथं हीको नाम हलन्तः स्यादन्यस्यान्यः ? कथं तर्हि निर्देशः कर्तव्यः ? 'इग्वतो हलः' इति । यद्येवं 'यियक्षति' अत्रापि प्राप्नोति† । एवं तर्हि 'इगुपधाद्धलन्ताद्' इति वक्ष्यामि । एवमपि दम्भेर्न प्राप्नोति । सूत्रं च भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तम्—'अयुक्तोयं निर्देशः' इति । नायुक्तः । अयमन्तशब्दोऽस्त्येवावयववाची । तद्यथा—'वस्त्रान्तः, वसनान्तः' इति, वस्त्रावयवो वसनावयव इति गम्यते । अस्ति सामीप्ये वर्तते । तद्यथा—'उदकान्तं गतः' इति, उदकसमीपं गत इति गम्यते । तद्यः सामीप्ये वर्तते, तस्येदं ग्रहणम् ।

प्र०- हलन्ताच्च । अयुक्त इति । अन्तशब्दमवयववचनं मत्वा पर्यनुयुङ्क्ते । अन्यस्यान्य इति । अत्यन्तभेदमनेन दर्शयति । अवयवावयविनोस्तु भेदविवक्षापि भवति—तन्तूनां पट इति । अभेदविवक्षापि—पटीभवन्ति तन्तव इति । इग्वतो हल इति । हलन्तादित्यर्थः । यियक्षतीति । अत्र संप्रसारणप्रसङ्गः । तद्यः सामीप्य इति । एवं च हल् चासावन्तश्चेति कर्मधारयः । निपातनाच्च विशेषणस्य परनिपातः ।

उ०- हलन्ताच्च । अन्तशब्दस्य समीपवचनत्वान्नार्थानुपपत्तिर्हल्समीपादिकः पर इत्यर्थः, ततः परत्वं न सामर्थ्यादेकवर्णव्यवहितं ग्राह्यमत आह—अवयवेति । भेद एवावयवावयविभावादाह—अत्यन्तभेदमिति । भेदाभेद एवावयवावयविभाव इत्यर्थः । भाष्ये इष्टार्थबोधाक्षमत्वेन निर्देशस्यायुक्तत्वम् । इको नामेति । इगन्तस्य धातोरित्यर्थः । हलन्तः स्यादिति । हलन्तावयवः स्यादित्यर्थः । अन्यस्य । इगन्तस्य । अन्यः । हल् कथमन्तो भविष्यतीति शेषः । इक्पदेन वर्णमात्रग्रहेपि द्वयोर्वर्णयोः परस्परमवयवावयविभावो विरुद्ध इति भावः । नन्वानन्तर्यादिषु बहुव्रीहेरिव मत्वर्थीयस्याप्यभावाद्वर्णयोरवयवावयविभावाच्च 'इग्वतो हल' इत्ययुक्तमत आह—हलन्तादिति । सनाक्षिप्तस्य धातोः शब्दस्वरूपस्य वा हला विशेषणात्तदन्तविधिरित्यर्थः । वस्तुत इग्वतो हलन्तादिति न्यासकरणे तात्पर्यम्, अत एवेगुपधाद्धलन्तादिति वक्ष्यति । कर्मधारय इति । स्वपदार्थप्रधानत्वेनान्तरङ्गत्वादयमेवोचित इति भावः । पूर्वनिपातदोषं परिहरति—निपातनादिति । बहुव्रीहिपक्षेप्येतदावश्यकमिति भावः ।

† यचिस्वपि ६. १. १५.

एवमपि दम्भेर्न सिध्यति‡। यो ह्यत्रेक्समीपो हल् न तस्मादुत्तरः सन्, यस्मादुत्तरः सन् नासाविक्समीपे हल्। एवं तर्हि—

**दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम् ॥ १ ॥**

हल्जातिर्निर्दिश्यते—इक उत्तरा या हल्जातिरिति ॥१०॥

---

प्र०— एवमपीति। व्यक्तिनिर्देश इति भावः। असति च कित्त्वे नलोपो न स्यात्।

दम्भेरिति 'वर्णग्रहणे जातिग्रहणम्' इति निपात एकाजनाङित्यत्रैकग्रहणेन ज्ञापितत्वात्। न चात्र व्यक्तिगतमेकत्वम्, अपि तु जातेः स्वगतम्। तत्र यदा तावद्व्यक्तिव्यतिरिक्ता जातिस्तस्याश्च व्यक्तिद्वारकाः सामीप्यादयो धर्मास्तदा तस्या एकत्वादिक्समीपत्वं सनश्च परत्वं तदपेक्षमस्तीति सिद्धं धिप्सतीति कित्त्वम्। हकारादिषु चाभिन्नप्रत्ययाभिधानाद्धल्त्वजातेः सद्भावः। यदापि 'त्यक्तभेदा व्यक्तय एव जातिः' इति पक्षस्तदा भेदव्युदासादभेदाश्रयणादिष्टसिद्धिः ॥१०॥

---

उ०— दम्भ इच्चेतीत्त्वेऽलघूपधत्वाद् गुणाप्रसक्तेः किं कित्त्वेनेत्याशङ्क्याह—असतीति। नलोप अनिदितामित्यनेन।

एकत्वं—हलन्तादित्येकवचनोपात्तम्। जातेः स्वगतमिति। तस्याः प्राधान्येन विवक्षितत्वाद् एको व्रीहिः सम्पन्नः, इतिवदिति भावः। ननु जातिनिर्देशे पौर्वापर्यं कथमत आह—यदा तावदिति। यद्यप्येकैकव्यक्तिव्यङ्ग्या जातिस्तथापि ज्ञापकेन विजातीयव्यक्त्यव्यवधाने यत्किञ्चिद्व्यक्तिद्वारकं समीप्यं यत्किञ्चिद्व्यक्तिद्वारकं च ततः परत्वमाश्रीयत इति भावः। व्यक्तिद्वारका इति। विशेषणीभूतव्यक्तिद्वारका इत्यर्थः। तदपेक्षं व्यक्तिद्वारकं जात्यपेक्षम्। अभिन्नप्रत्ययः। हलित्येकाकारः प्रत्ययः। अनेन हल्त्वजातौ प्रमाणं संज्ञाशब्दाश्च जातिशब्दा एवेति दर्शितम्। यदापीति। यदा तु साक्षादेव परत्वादिति भावः। परस्परभेदधर्मपरित्यागेन व्यक्तिमात्रविवक्षायां सा एकैवेति तात्पर्यं तदाह—भेदव्युदासादभेदाश्रयणादिति। अयं पक्षो मञ्जूषायामुपपादितो विस्तरेणास्माभिः शक्तिवादान्ते। परे तु हल्जातिरित्यस्य तज्जात्याश्रयहल्समुदाय इत्यर्थस्तस्य च साक्षादेव समीप्यं ततः परत्वं चोपपद्यते। तदुक्तं भाष्ये—इक उत्तरा या हल्जातिरिति। अत एवार्धधातुक इति सूत्रे वक्ष्यति—जातेः पौर्वापर्यासम्भवाद्विषयसप्तमी विज्ञास्यत इतीत्याहुः ॥१०॥

---

‡ दम्भ इच्च ७. ४. ५६. अनिदितां हल० ६. ४. २४.

## लिङ्सिचावात्मनेपदेषु ॥ १ । २ । ११ ॥

कथमिदं विज्ञायते—आत्मनेपदं यौ लिङ्सिचाविति । आहोस्विदात्मनेपदेषु परतो यौ लिङ्सिचाविति ? किं चातः ? यदि विज्ञायते—आत्मनेपदं यौ लिङ्सिचाविति, लिङ् विशेषितः, सिजविशेषितः । अथ विज्ञायते—आत्मनेपदेषु परतो यौ लिङ्सिचाविति, सिज्विशेषितः, लिङविशेषितः ।

यथेच्छसि तथास्तु । अस्तु तावद्—'आत्मनेपदं यौ लिङ्सिचौ' इति । ननु चोक्तम्—'लिङ् विशेषितः, सिजविशेषितः' इति । सिच्च विशेषितः । कथम् ? आत्मनेपदं सिज्नास्तीति कृत्वा आत्मनेपदपरे सिचि कार्यं विज्ञास्यते ।

अथवा पुनरस्तु—आत्मनेपदेषु परतो यौ लिङ्सिचौ—इति । ननु चोक्तम्—सिज्विशेषितो लिङविशेषितः—इति । लिङ् च विशेषितः । कथम् ? आत्मनेपदेषु परतो लिङ् नास्तीति कृत्वाऽऽत्मनेपदे लिङि कार्यं विज्ञास्यते ।

प्र०— लिङ्सि० । कथमिति । आत्मनेपदेष्विति सकृच्छ्रुतस्य अर्थद्वयं न लभ्यते । तत्र यदि निर्धारणसप्तमी तदा तुल्यजातीयस्य निर्धारणाल्लिङेव विशेषितः स्याद्, लिङ्शब्देन लिङादेशग्रहणात् । अथ परसप्तमी तदा सिजेव विशेष्यते, न लिङ् । सीयुडादिसमुदायो लिङ्शब्देन गृह्यते इति तस्यात्मनेपदपरत्वाभावः । नचानयोर्भिन्नयोरर्थयोः सहविवक्षा संभवतीत्येकशेषस्याप्रयोगः । सिच्च विशेषित इति । आत्मनेपदपरत्वादुपचारात्सिजेवात्मनेपदमुच्यते गौणमुख्यार्थयोरात्मनेपदशब्दयोः सारूप्यमात्रप्रतिबद्ध एकशेषः करिष्यत इति भावः ।

आत्मनेपदे लिङीति । अवयवगतं पौर्वापर्यं समुदाय आश्रयिष्यत इति भावः । अथवा तन्त्रेण शब्दद्वयोच्चारणादर्थद्वयं लभ्यते ।

उ०— लिङ्सिचौ । सकृच्छ्रुतस्यार्थद्वयमिति । कालभेदेनार्थद्वयबोधजनकत्वमित्यर्थः । नन्वात्मनेपदं यौ लिङ्सिचाविति व्याख्याने सप्तम्यनुपपन्नेत्यत आह—निर्धारणे इति । सम्भवव्यभिचारयोरभावादिति भावः । ननु लिङ आत्मनेपदत्वाभावोत आह—लिङ्शब्देनेति । ननु सम्भावितात्मनेपदपरत्वौ सुट्सीयुटावेव लिङ्ग्रहणेन ग्रहीष्येते इत्यत आह—सीयुडादिति । नन्वस्त्भयोरेकशेषनिर्देशोत आह—न चेति । अनेन शास्त्रीयैकशेषो वारितः । अप्रयोग इति । कृतैकशेषस्य सूत्रेऽप्रयोग इत्यर्थः । निर्धारणविभक्त्यन्तत्वे सिज्विशेषणत्वासम्भवादाह—आत्मनेपदेति । ननु सकृच्छ्रुतस्य कथमर्थद्वयबोधकत्वमत आह—सारूप्यमात्रेति । अर्थभेदेपीत्यर्थः । अक्षा इतिवदिति भावः । सौत्र एकशेष इति बोध्यम् ।

नैव वा पुनरर्थो लिङ्विशेषणेनात्मनेपदग्रहणेन । किं कारणम् ? झलिति वर्तते† । आत्मनेपदेषु चैव लिङ् झलादिः, न परस्मैपदेषु । तदेतत्सिज्विशेषणमात्मनेपदग्रहणम् ।

अथ सिज्विशेषणे आत्मनेपदग्रहणे सति किं प्रयोजनम् ? इह मा भूत्—अपाक्षीत् । अवाप्सीत्‡ । नैतदस्ति । इक इति वर्तते† ।

एवमपि—अचैषीत् अनैषीत् अत्रापि प्राप्नोति । एतदपि नास्ति प्रयोजनम् । हलन्तादिति वर्तते । एवमपि अकोषीत् अमोषीत् अत्रापि प्राप्नोति । नैतदस्ति । झलीति वर्तते ।

एवमपि—अभैत्सीत् अच्छैत्सीत् अत्रापि प्राप्नोति । नैतदस्ति । इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैषेग्लक्षणा वृद्धिः+ ।

इदं तर्हि प्रयोजनम्—इह मा भूत्—अस्राक्षीत् अद्राक्षीत् । किं च स्यात् ? अकिल्लक्षणोऽमागमो न स्यात्× ॥११॥

## स्थाघ्वोरिच्च ॥ १ । २ । १७ ॥

### इच्च कस्य तकारेत्त्वम्

कस्य हेतोरिकारस्तपरः क्रियते ?

---

प्र०— नैव वेति । संभवव्यभिचाराभ्यां सिजेव विशेष्यते न लिङित्यर्थः ॥११॥

स्थाघ्वोरिच्च । इच्च कस्येति । कथं पुनरत्र षष्ठी यावता हेतुशब्दः श्लोके न प्रयुक्त इति हेतुतृतीयया भाव्यम् । नैष दोषः । हेतुरूपताया अविवक्षणात् । संबन्धि-

---

उ०— समुदाये इति । व्यपदेशिवद्भावेनेत्यर्थः । अथवेति । तन्त्रं त्वसहविवक्षायामपि विद्वन्मानसराजहंसेतिवदिति भावः ॥११॥

स्थाघ्वो । न प्रयुक्त इति । एवं च षष्ठी हेतुप्रयोग इत्यस्याप्राप्तिरिति भावः । अपत्यरूपत्वस्येति । तत्त्वेन विवक्षायां तु छो न स्यात्फिञ्च स्यादिति भावः । वस्तुत उक्तादन्य एवेदन्त्वेनेदंपदार्थः । शेषाधिकारात् । एवं चेदंत्वेनाप्यपत्यबोधे शैषिको न साधुरिति तस्येदमिति सूत्रे तस्यापत्यमिति सूत्रे च निरूपयिष्याम इति चिन्त्यमिदम् । स च सम्बन्धो हेतुहेतुमद्भावे पर्यवस्यतीति भाष्ये हेतोरिति प्रयुक्तम् । हेतुशब्देन चात्र फलम् । इत्संज्ञकतकारः किं मुखसुखार्थं उत तपरसूत्रप्रवृत्त्यर्थं इति विचारतात्पर्यम् । तकार इदिति । यस्येति शेषः, बहुव्रीहेरयं त्वः ।

---

† इको झल् १. २. ९. ‡ वचिस्वपि० ६. १. १५. 'अयाक्षीत् अवात्सीत्' इति पाठान्तरम् ।
+ वदव्रजहलन्तस्याचः ७. २. ३. × सृजिदृशोः ६. १. ५८.

### दीर्घो मा भूत्

दीर्घो मा भूदिति ।

### ऋतेपि सः ।

अन्तरेणाप्यारम्भं सिद्धोऽत्र दीर्घः "घुमास्थागापाजहातिसां हलि:" [ ६. ४. ६६ ] इति ।

### अनन्तरे प्लुतो मा भूत्

इदं तर्हि प्रयोजनम्—अनन्तरे प्लुतो मा भूदिति । कुतो नु खल्वेतत्—अनन्तरार्थ आरम्भे ह्रस्वो भविष्यति, न पुनः प्लुत इति ?

**प्लुतश्च विषये स्मृतः ॥ १ ॥**

---

प्र०—रूपेण विवक्षितत्वात् । यथा 'मदीयाः पुत्राः' इति शैषिकः प्रत्ययः, तदुत्पत्तिकाले अपत्यरूपत्वस्याविवक्षणात् । तकार इत् तकारेत् तस्य भावस्तकारेत्त्वं किमर्थं क्रियते ।

दीर्घो मा भूदिति । आन्तरतम्यात्प्राप्नोतीति भावः । भाव्यमानोण् सवर्णान्न गृह्णातीत्येष तु परिहारोऽनित्यत्वान्नोक्तः । क्वचिद्भाव्यमानेनापि सवर्णग्रहणात् । यथा ऽमूभ्यामित्यादावूकारो दीर्घस्य भवति । परिहारान्तराभिधानाद्वा ।

अन्तरेणापीति । इकारविधानेन विनापीत्यर्थः । कित्त्वं तु कर्तव्यमेव । तेन विना ईत्वस्य प्राप्त्यभावात् । अनन्तर इति । असदृश आदेशे क्रियमाण इत्यर्थः ।

प्लुतश्च विषय इति । अनेन तपरत्वं प्रत्याख्यायते । यद्यनेन प्लुतो विधीयेत तदा यत्रापि विषयेऽनन्त्यस्यापि प्रश्नाख्यानयोरित्यादिना प्लुतो विहितस्तत्राप्यनेन विधीयेत, अस्मिंश्चकर्तव्ये पूर्वत्रासिद्धमित्याष्टमिकस्य प्लुतस्यासिद्धत्वात्ततश्च पक्षेऽ-

---

उ०—इच्चेत्यत्रेत्संज्ञकतकारवत्त्वं किमर्थमिति भाष्यार्थः । मुखसुखार्थोपि तदर्थत्वेन वर्णोच्चारणस्य सार्थक्यादित्संज्ञां लभत इति भाष्यमतम् । ननु श्रुतत्वाद् ह्रस्व एव भविष्यतीत्यत आह—आन्तरतम्यादिति ।

सूत्रारम्भं विनेत्यर्थः किं न स्यादत आह—कित्त्वं त्विति । तदर्थं सूत्रमावश्यकमिति भावः । ईत्वस्येति छेदः । असदृश इति । सामर्थ्यादसदृशे इत्यर्थः । अव्यवहितपरोऽनन्तर-शब्दो नेति भावः ।

यद्यनेनेति । टिग्रहणं वाक्येनैव संबध्यते नत्वनन्त्येन पदेनेति भावः । भाष्ये विषये प्रश्नाख्यानादिविषये प्लुत उच्यते । यदा स विषयो भवति तदाप्यनेनैव सूत्रेण प्लुतेन भाव्य-मित्यनुवाददोषभिया नानेन प्लुतविधानमित्ययमत्र पक्षे भाष्याक्षरार्थः कार्यः । अन्ये त्विति । अनन्तरेपीति । सूत्रेऽसदृशे आदेशे श्रूयमाणेपीत्यर्थः । क्रियमाण इति पाठेपि श्रूयमाण इत्येवार्थः । दीर्घ एवेति । आन्तर्यादिति भावः । वार्तिके ऽनन्तरे इत्यस्यानन्तरे श्रूयमाणेपि दीर्घः स्यादिति शेषो बोध्यः । प्लुतो मा भूदिति शङ्कोत्तरत्वेनावतारयति—

विषये प्लुत उच्यते* । यदा च स विषयो, भवितव्यमेव तदा प्लुतेन ।

इच्च कस्य तकारेत्वं दीर्घो मा भूदृतेपि सः ।
अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः ॥१॥

न क्त्वा सेट् ॥ १ । २ । १८ ॥

न सेडिति कृते ऽकित्त्वे

न सेडित्येव सिद्धम्, नार्थः क्त्वाग्रहणेन । निष्ठायामपि तर्हि प्राप्नोति—गुधितः गुधितवानिति ।

निष्ठायामवधारणात् ।

निष्ठायामवधारणान्न भविष्यति । किमवधारणम् ? "निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" [ १. २. १९ ] इति ।

प्र०—नुवाददोषः प्राप्नोतीति ह्रस्व एव भविष्यति । अन्ये तु तपरत्वमनेन समर्थितमिति व्याचक्षते । अनन्तरेप्यादेशे श्रूयमाणे दीर्घ एव स्यात् । ननु सिद्ध एव दीर्घ इत्युक्तं, सिद्धस्यापि पुनर्विधानं प्लुतनिवृत्त्यर्थं स्यात् । माभूत् प्लुत इति चेत् । तन्न प्लुतश्च विषये स्मृत इति । स चासति तपरत्वे न प्राप्नोतीति दीर्घनिवृत्त्यर्थं तपरत्वं स्थितम् । प्लुतविधौ तु वाक्यस्य टेरित्यधिकारात्कथमिकारस्य प्लुतः स्यादिति चिन्त्यमेतत् ॥१७॥

न क्त्वा । कृते ऽकित्त्वे इति । अकारप्रश्लेषः । निष्ठायामिति । शीङादिभ्य एव परा निष्ठा न किदिति नियमः । विपरीतस्तु निष्ठैवेति व्याख्यानान्न भवति ।

उ०—नन्विति । स्यादिति । तथा च तत्र प्लुत इष्टः । स चासति तपरत्वे पुनर्विहितेन दीर्घेण बाधितः सन्न स्यादित्यर्थः । ननु किमिति प्लुतस्तत्रेष्यत इति शङ्कते—मा भूदिति । स्मृत इति । एवं च प्रश्नाख्यानादिविषये तस्येष्टत्वान्न तन्निवृत्त्यर्थं विधानमित्यर्थः । स चासतीति । सिद्धे दीर्घे दीर्घविधानसामर्थ्येन बाधादित्यर्थः । सति तु तपरत्वे दीर्घाप्राप्त्या प्लुतो निर्विघ्न इति भावः । पश्चात्प्राप्तस्तु तपरत्वेन न बाध्यते ऽसिद्धत्वादित्याशयः । प्रकारद्वयमपि दूषयति—प्लुतेति । अनन्त्यस्य पदस्य टेः, अपिना वाक्यस्य च टेः प्लुतः प्रश्नाख्यानयोरित्यर्थस्तस्येति भावः । टिग्रहणं वाक्येनैव सम्बध्यते न त्वनन्त्येन पदेनेति तु भाष्यतात्पर्यम् । यत्त्वदिद्धमित्यादौ गुरोरनृत इत्येतद्विषयं भाष्यमिति । तन्न । तेन हूयमानार्थवाचिन एव टेः प्लुतविधानादित्याहुः ॥१७॥

न क्त्वा । न सेडित्यनेन कथं कित्त्वं क्रियेतेत्यत आह—अकारेति । विपरीतस्त्विति । तथापि सति शयित्वेत्यादावपि कित्त्वं स्यादित्यर्थः ।

* अनन्त्यस्यापि प्रश्नाख्यानयोः ८. २. १०५.

परोक्षायां तर्हि प्राप्नोति । किं च स्यात् ? पपिव पपिम ङ्कित्याकारलोपो† न स्यात् । मा भूदेवम्, इटीत्येवं भविष्यति† । इदं तर्हि—जग्मिव जघ्निव क्ङितीत्युपधालोपो‡ न स्यात् ।

## ज्ञापकान्न परोक्षायाम्

ज्ञापकात्परोक्षायां न भविष्यति । किं ज्ञापकम् ?

**सनि झल्ग्रहणं विदुः ॥ १ ॥**

यदयम् "इको झल्" [ १. २. ९. ] इति झल्ग्रहणं करोति तज्ज्ञापयत्याचार्यः—"औपदेशिकस्य कित्त्वस्य प्रतिषेधो नातिदेशिकस्ये"ति । कथं कृत्वा ज्ञापकम् ? झल्ग्रहणस्यैतत्प्रयोजनं झलादौ यथा स्यात्, इह मा भूत्—शिशयिषत इति । यदि चात्रातिदेशिकस्यापि कित्त्वस्य प्रतिषेधः स्यात्, झल्ग्रहणमनर्थकं स्यात् । अस्त्वत्र कित्त्वम्, 'न सेड्' इति प्रतिषेधो भविष्यति । पश्यति त्वाचार्य औपदेशिकस्य कित्त्वस्य प्रतिषेधो नातिदेशिकस्येति, ततो झल्ग्रहणं करोति ।

नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात् "स्थाघ्वोरिच्च" [ १. २. १७ ] झलादौ यथा स्यात्, इह मा भूत्—उपास्थायिषाताम् उपास्थायिषत ।

---

प्र०- परोक्षायामिति । पूर्वाचार्यप्रसिद्ध्या परोक्षा लिडुच्यते । अस्त्वत्रेति । प्राप्नोतु कित्त्वमित्यर्थः । न तु निर्वृत्तस्य निषेधः कर्तुं शक्यः ।

उपास्थायिषातामिति । स्थास् आतामिति स्थिते इत्त्वं च प्राप्नोति चिण्वद्भावश्च । तत्र परत्वाच्चिण्वद्भावे युक् च प्राप्नोति वृद्धिश्च । तत्र वृद्ध्यपवादो युगागमः । तत्र कृते यकारस्येत्त्वप्रसङ्गः । न च पुनर्वृद्धिर्लभ्यते । पूर्वमेव युका बाधितत्वादिति भावः ।

---

उ०- न तु निर्वृत्तस्येति । न चैवं क्त्वोपि विद्यमानस्य कित्त्वस्य कथं निषेध इति वाच्यम् । कार्यस्यैव निषेधे न तु विद्यमानकित्त्वस्येति न दोषः । आतिदेशिकस्य निर्वृत्तस्य निषेधे तु तेन कृतकित्कार्यस्यानेन प्रतिषेधे विरोधः स्पष्ट एवेति दिक् ।

ननु झल्ग्रहणाभावेपि सिचश्चिण्वदिटि इत्त्वे वृद्धावायादेशे च सिद्धमित्यत आह—स्थासिति । तत्र चिण्वद्भावे परत्वात् कृते इत्यन्वयः । वृद्ध्यपवाद इति । येननाप्राप्तिन्यायेन, मत्त्वनवकाशत्वेनेति भावः । तदेवाह—न च पुनरिति ।

---

† आतो लोप इटि च ६. ४. ६४. ‡ गमहनजन० ६. ४. ९८. + स्यसिच्सीयुट्० ६. ४. ६२; आतो युक् चिण्कृतोः ७. ३. ३३.

## इत्त्वं कित्संनियोगेन

कित्त्वसंनियोगेनेत्त्वमुच्यते। तेनासति कित्त्वे इत्त्वं न भविष्यति।

## रेण तुल्यं सुधीवनि।

तद्यथा—सुधीवा सुपीवेति ङीप्संनियोगेन र उच्यमानो ऽसति ङीपि न भवति×।

अथवा ऽस्त्वत्रेत्त्वम्। का रूपसिद्धिः? वृद्धौ कृतायामायादेशो भविष्यति।

प्र०— असति कित्त्वे इति। झल्ग्रहणस्य ज्ञापकत्वं न तावत्स्थितमिति आतिदेशिकस्यापि कित्त्वस्य न सेडिति निषेधो भवतीत्यभिप्रायः।

सुधीवनीति। अनो बहुव्रीहेरिति प्रकृतस्यैव ङीपो निषेधो न तु रेफस्यापि, स तु सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपाय इति न्यायान्निवर्तते। अयं न्यायो बिल्वकादिभ्यश्छस्य लुगित्यत्र छग्रहणेन ज्ञापितः।

अस्त्वत्रेति। यकारस्य कृते इत्त्वे वृद्धिर्भविष्यति। युगागमेन ह्याकारस्य वृद्धिर्बाध्यते, नत्विकारस्यापि।

उ०— भाष्ये इत्त्वं कित्सन्नियोगेनेति उत्तरार्थत्वं खण्डयति। तदाह—अतिदेशिकस्यापीति। तथा च कित्त्वनिषेधे तत्सन्नियुक्तेत्त्वस्याप्यभाव इति भावः। ज्ञापिते त्वातिदेशिकान्निषेधे उत्तरत्राप्युपयोग इत्यन्यत्।

नन्वनो बहुव्रीहेरित्यस्य स्त्रियां विहितं नेत्यर्थाद् रेफस्यापि निवृत्तिर्वाचनिकीति विषमो दृष्टान्तोऽत आह—अन इति। प्रत्ययाधिकारात्प्रत्ययस्यैव निषेध इति भावः। छग्रहणेनेति। तद्धि बिल्वकादेरुत्तरस्य प्रत्ययस्य भनिमित्ते तद्धिते विधीयमानो लुक् प्रत्ययान्तराभावात् छस्यैव सिद्ध इति छमात्रस्य लुग्यथा स्यान्न तु तत्सन्नियोगशिष्टकुको निवृत्तिरित्यर्थमिति भावः।

ननु युका वृद्धेर्बाधितत्वात्कथमिकारस्य वृद्धिरत आह—युगागमेनेति। तत्प्राप्तिवेलायामिकाराभावेन तत्र वृद्धेरप्राप्तेरिति भावः। भ्रष्टावसरन्यायस्तु शास्त्रे नास्त्येवेति तात्पर्यम्। वस्तुतोऽथवास्त्वत्रेत्त्वमिति भाष्यमेकदेश्युक्तिर्विन्मतोर्लुका टिलोपमात्रबाधवत्तत्राप्यापत्तेरिति बोध्यम्। तस्माद् झल्ग्रहणस्य ज्ञापकत्वं स्थितम्—औपदेशिकस्यैव निषेध इति।

× वनो र च ४. १. ७. अनो बहुव्रीहेः ४. १. १२.

## वस्वर्थम्

वस्वर्थं तर्हि क्त्वाग्रहणं कर्तव्यम् । वंसोर्ह्यौपदेशिकं कित्त्वम् । किं च स्यात् ? पपिवान् तस्थिवान् किंतीत्याकारलोपो न स्यात् । मा भूदेवम् । इटि चेत्येवं भविष्यति† ।

इदं तर्हि जग्मिवान् जघ्निवान् किंतीत्युपधालोपो‡ न स्यात् ।

## किदतीदेशात्

अस्त्वत्रौपदेशिकस्य कित्त्वस्य प्रतिषेधः । आतिदेशिकमत्र कित्त्वं भविष्यति+ । यत्र तर्हि तत्प्रतिषिध्यते, अञ्जेः—आजिवानिति ।

एवं तर्हि च्छान्दसः क्वसुः । लिट् च च्छन्दसि सार्वधातुकमपि भवति । तत्र सार्वधातुकमपिन्ङिद्भवतीति× ङित्युपधालोपो भविष्यति ।

## निगृहीतिः

इदं तर्हि प्रयोजनम् । इह मा भूत्—निगृहीतिः उपस्निहितिः निकुचितिः* ।

---

प्र०— आजिवानितीति । इदं नोपपद्यते । अत्र हि नलोपे कृते द्विर्वचन एकादेशे च वस्वेकाजाद्घसामितीडागमः । तत्र हि कित्त्वप्रतिषेधान्नलोपनिवृत्तौ द्विहल्त्वान्नुटि सत्येकाच्त्वाभावादिण्निवृत्तौ नलोपादीनां चक्रकप्राप्तिः । चक्रकेषु चेष्टतो व्यवस्था । भाष्यकारेण तु परिहारान्तरसद्भावादेष परिहारो नाश्रितः । निगृहीतिरिति । तितुत्रेष्वग्रहादीनामितीडागमः ।

---

उ०— भाष्ये आतिदेशिकमिति । असंयोगाल्लिडित्यनेन । आजिवानिति । द्वित्वात्परत्वात् पूर्वमिटि न सेडिति निषेधेन कित्वाभावान्नलोपभावे ऽसंयोगादित्यस्याप्राप्तेर्नलोपसिद्धये क्त्वाग्रहणम् । संज्ञापेक्षाकृतं बहिरङ्गत्वं त्वत्र शास्त्रे नाश्रीयत इति भावः । एकादेशे च वस्वेकाजिति । कृतद्विर्वचनानामेकाचामिति स्थितत्वादिति भावः । नलोपनिवृत्ताविति । निमित्तापायन्यायेनेति भावः । द्विहल्त्वादिति । तस्मान्नुडित्यनेन नुडिति भावः । इण्निवृत्ताविति । तन्निवृत्तौ सत्यां कित्वान्नलोपे ऽद्विहल्त्वान्नुण्निवृत्तावेकादेशेनैकाच्त्वादिडि सेट्त्वात्कित्त्वप्रतिषेध इत्येवं नलोपादीनां चक्रकप्राप्तिरित्यर्थः । इष्टत इति । सा चौपदेशिककित्त्वेन नलोपे इटः प्रवृत्ताविष्टसिद्धिरूपा इत्यर्थः । उक्तन्यायस्य भाष्यकृतानङ्गीकारेण चक्रकप्राप्तिरेव नेत्यन्ये ।

तितुत्रेत्यादिनेडागमप्रतिषेधः किं न स्यादत आह—अग्रहादीनामिति ।

---

१—'वसौ' पाठान्तरम् । २—'क्ङिति' पाठान्तरम् । † ६. ४. ६४. ‡ ६. ४. ९८. + असंयोगाल्लिट् कित् १. २. ५. × १. २. ४. * तितुत्रेष्वग्रहादीनाम् ७. २. ९. वा० १.

तत्तर्हि क्त्वाग्रहणं कर्तव्यम् ? न कर्तव्यम् ।

**क्त्वा च विग्रहात् ॥ २ ॥**

उपरिष्टाद् योगविभागः करिष्यते* । "न सेट् । निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" [ १९ ] "मृषस्तितिक्षायाम्" [ २० ] "उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" [ २१ ] ततः "पूङः" । पूङश्च निष्ठा सेट् किन्न भवति । ततः "क्त्वा" च । क्त्वा च सेट् किन्न भवति । पूङ इति निवृत्तम् ।

न सेडिति कृते ऽकित्त्वे निष्ठायावधारणात् ।
ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ॥१॥
इत्त्वं कित्संनियोगेन रेण तुल्यं सुधीवनि ।
वस्वर्थं किदतीदेशान्निगृहीतिः क्त्वा च विग्रहात् ॥२॥

**उदुपधाद्भावादिकर्मणोरन्तरस्याम् ॥ १ । २ । २१ ॥**

इह कस्मान्न भवति—गुधितः गुधितवान् ?

**उदुपधाच्छपः ॥ १ ॥**

शब्विकरणेभ्य इष्यते ॥२१॥

**पूङः क्त्वा च ॥ १ । २ । २२ ॥**

**पूङः क्त्वानिष्ठयोरिटि वाप्रसङ्गः सेट्प्रकरणात् ॥ १ ॥**

---

प्र०- क्त्वा च विग्रहादिति । विग्रहो विभागो योगस्य करिष्यत इत्यर्थः ॥१८॥
उदु । उदुपधाच्छप इति । शपः सम्बन्धी शब्विकरणो यस्तस्मादित्यर्थः ॥२१॥
पूङः । पूङ इति । सेडित्यन्यतरस्यामिति चानुवर्तनात्सेटोरेव क्त्वानिष्ठयोः

---

उ०- अतीदेशादित्यत्रोपसर्गस्य घञीति दीर्घः ॥१८॥
उदुपधाद् । शप इत्यस्य पञ्चम्यन्तत्वे शबन्तोदुपधात्परनिष्ठाऽसम्भव इत्यत आह—शपः सम्बन्धीति ॥२१॥
पूङः क्त्वा च । नन्विटि वाप्रसङ्ग इत्यत्र सेट्प्रकरणादिति हेतुर्न्यूनोत आह—

---

* पूङः क्त्वा च १. २, २२.

पूङः क्त्वानिष्ठयोरिटि विभाषा कित्त्वं प्राप्नोति । किं कारणम् ? सेट्प्रकरणात् । सेडिति वर्तते[1] ।

**न वा सेट्त्वस्याकिदाश्रयत्वादनिटि वा कित्त्वम् ॥ २ ॥**

न वा एष दोषः । किं कारणम् ? सेट्त्वस्याकिदाश्रयत्वात् । अकिदाश्रयं सेट्त्वम् । यदा अकित्त्वं तदेटा भवितव्यम् । सेट्त्वस्याकिदाश्रयत्वादनिट्येव विभाषा कित्त्वं भविष्यति ।

इड्विधौ पूङो ग्रहणं क्रियते†‡ । तेन वचनादिट्, सेट्प्रकरणाच्च इट्येव विभाषा कित्त्वं प्राप्नोति ।

**इड्विधौ ह्यग्रहणम् ॥ ३ ॥**

इड्विधौ हि पूङो ग्रहणं न कर्तव्यं भवति ।

भारद्वाजीयाः पठन्ति—नित्यमकित्त्वमिडाद्योः क्त्वाग्रहणमुत्तरार्थम् । नित्यमकित्त्वमिडाद्योः क्त्वानिष्ठयोः सिद्धम् । कथम् ? विभाषामध्येऽयं योगः क्रियते । विभाषामध्ये च ये विधयस्ते नित्या भवन्ति । किमर्थं तर्हि क्त्वाग्रहणम् ? क्त्वा ग्रहणमुत्तरार्थम् । उत्तरार्थं क्त्वाग्रहणं क्रियते "नोपधात्थफान्ताद्वा" [ २३ ] "वञ्चिलुञ्च्यृतश्च" [ २४ ] इति ॥२२॥

प्र०—कित्त्वविकल्पः स्यात् । ततश्च पुवित्वा पुवित इति पक्षे स्यात् । अस्ति चेडागमः पूङश्चेति विकल्पेनेड्विधानात् ।

न वेति । इड्विधौ पूङश्चेति सूत्रं वार्तिककारः प्रत्याचष्टे । तत्रानिटोरेव क्त्वानिष्ठयोरनेन कित्त्वं विकल्प्यते । तत्र यदा कित्त्वं तदा श्र्युकः क्कितीति इट्प्रतिषेधात्पूत्वा पूत इति भवति । यदा त्वकित्त्वं तदेड्गुणयोः पवित्वा पवित इति भवति ।

भारद्वाजीया इति । लाघवमनादृत्य सूत्रकारेण पूङश्चेतीड्विधौ पठितम् । इह तु विकल्पो नानुवर्तते उत्तरत्र वाग्रहणादिति सिद्ध्यतीष्टमिति भावः । उत्तरार्थमिति । न क्त्वा सेडिति कित्त्वप्रतिषेधस्य सिद्धत्वात् ॥२२॥

उ०—अन्यतरस्यामिति चेति । ननु श्र्युकः क्कितीति निषेधात्कित्त्वनिषेधं विनेडेव दुर्लभ इति सेडनुवृत्तिरयुक्तेत्यत आह—अस्ति चेति । ननु सति पूङश्चेत्यस्मिन् कथमकिदाश्रयं सेट्त्वमत आह—इड्विधाविति ।

ननु गौरवाद्भारद्वाजीयं मतमयुक्तमत आह—लाघवमिति । विभाषामध्ये इति । विभाषयोर्मध्य इत्यर्थः । किमर्थं तर्हि क्त्वाग्रहणमिति प्रश्नो भारद्वाजीयमते बोध्यः । नन्विहार्थत्वे सम्भवति कथमुत्तरार्थत्वमत आह—न क्त्वेति ॥२२॥

१—क्वचिन्न । † १. २. १८. ‡ पूङश्च ७. २. ५१.

## तृषिमृषिकृषेः काश्यपस्य ॥ १ । २ । २५ ॥

काश्यपग्रहणं किमर्थम् ? काश्यपग्रहणं पूजार्थम् । वेत्येव हि वर्तते ॥२५॥

## रलो व्युपधाद्धलादेः संश्च ॥ १ । २ । २६ ॥

किमिदं रलः क्त्वासनोः कित्त्वं विधीयते, आहोस्वित्प्रतिषिध्यते ? किं चातः ? यदि विधीयते, क्त्वाग्रहणमनर्थकम् । किदेव हि क्त्वा । अथ प्रतिषिध्यते, सन्ग्रहणमनर्थकम् । अकिदेव हि सन् । अत उत्तरं पठति—

**रलः क्त्वासनोः कित्त्वारम्भः ॥ १ ॥**

रलः क्त्वासनोः कित्त्वं विधीयते । ननु चोक्तम्—'क्त्वाग्रहणमनर्थकं किदेव हि क्त्वा' इति । नानर्थकम् । 'न क्त्वा सेट्' [ १ । २ । १८ ] इति प्रतिषेधः प्राप्नोति तद्बाधनार्थम् ॥२६॥

---

प्र०— तृषि । पूजार्थमिति । शास्त्रस्य पूजापारम्पर्यप्रतिपादनेनानादित्वात्प्रामाण्यप्रतिपादनात् ॥२५॥

रलो । किमिदमिति । किमियमप्राप्ते विभाषा, आहोस्वित् प्राप्त इति प्रश्नः । तत्राऽप्राप्तविभाषायां सन एवाऽप्राप्तं कित्त्वं पक्षे विधीयत इति क्त्वानुवृत्तिरनर्थिका । नहि तस्य कित्त्वं विधेयं, स्वत एव भावात् । अथ प्राप्तविभाषा तदा क्त्वः कित्त्वमस्तीति तस्यैव पक्षे निषेधः कर्त्तव्य इति सङ्ग्रहणं न कार्यं नहि तस्य कित्त्वमस्ति यत्पक्षे निषिध्यते ।

रल इति । अप्राप्तविभाषेयमेकेनैव रूपेण व्यवस्थितेत्यर्थः । एकरूपत्वप्रदर्शनाय च विचारः कृतः । न ह्युभयत्र विभाषा न सन्ति, प्रतिलक्ष्यं व्यापाराश्रयणे तासां सिद्धत्वात् ॥२६॥

---

उ०— तृषिमृ । पारम्पर्यप्रतिपादनेनेति । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् परम्पराप्रतिपादनेनेत्यर्थः ॥२५॥

रलो व्यु । 'वे'त्यनुवृत्तेरुभयथापि विकल्पसिद्धेर्विचारोनुपपन्न इत्यतस्तात्पर्यमाह—किमिति । ननु क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन व्यापारादुभयत्र विभाषाऽस्तु, प्रतिलक्ष्यं लक्षणभेदादत आह—एकरूपत्वेति । व्यापारैक्ये सम्भवति तद्भेदाङ्गीकारो निष्फल इति भावः ॥२६॥

## ऊकालोऽज्ह्रस्वदीर्घप्लुतः ॥ १ । २ । २७ ॥

अयुक्तोऽयं निर्देशः । 'ऊ' इत्यनेन कालः प्रतिनिर्दिश्यते, 'ऊ' इत्ययं च वर्णः तत्राऽयुक्तं वर्णस्य कालेन सह सामानाधिकरण्यम् ।

कथं तर्हि निर्देशः कर्तव्यः ? 'ऊकालकाल' इति । किमिदमूकालकाल इति ? 'ऊ' इत्येतस्य काल ऊकालः, ऊकालः कालो यस्य च ऊकालकाल इति ।

स तर्हि तथानिर्देशः कर्तव्यः ? न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा—उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः । खरमुखः । एवमूकालकाल ऊकाल इति ।

अथवा साहचर्यात्ताच्छब्द्यं भविष्यति । कालसहचरितो वर्णः । वर्णोऽपि काल एव ।

### ह्रस्वादिषु समसङ्ख्याऽप्रसिद्धिर्निर्देशवैषम्यात् ॥ १ ॥

ह्रस्वादिषु समसङ्ख्यत्वस्याऽप्रसिद्धिः । किं कारणम् ? 'निर्देशवैषम्यात्' । तिस्रः सञ्ज्ञा एकः सञ्ज्ञी, वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति† ।

### सिद्धं तु समसङ्ख्यत्वात् ॥ २ ॥

सिद्धमेतत् । कथम् ? 'समसङ्ख्यत्वात्' । कथं समसङ्ख्यत्वम् ?

---

प्र०- ऊकालः । अयुक्तोयमिति । तपरस्तत्कालस्येत्यत्र व्याख्यातत्वादिह न व्याख्यायते ह्रस्वादिष्विति । 'ऊ' इत्येकस्यैव शब्दस्योच्चारणाद्भेदानवगमात् सञ्ज्ञिविशेषणस्यैकत्वे सति सञ्ज्ञिनोप्येकत्वात्, सञ्ज्ञानां च त्रित्वात्सङ्ख्यातानुदेशप्रसङ्गः ।

सिद्धं त्विति । त्रयाणां कृतैकादेशानां निर्देशाद्विशेषणत्रयाविच्छन्नत्वात्सञ्ज्ञिना-

---

उ०- ऊकालो । भाष्ये—प्रतिनिर्दिश्यत इति । विशेष्यत इत्यर्थः । ऊकालः कालो यस्येति । ऊकाल इव कालो यस्येत्यर्थः । ननूकालानां वर्णानां बहुत्वादेकः सञ्ज्ञीत्यनुपपन्नमत आह—ऊ इत्येकस्येति । उपात्तद्विमात्रत्वाकारेणैक इति भावः । सञ्ज्ञिविशेषणस्येति । 'ऊ'इत्यस्येत्यर्थः । सञ्ज्ञानां चेति । प्रदेशेषु त्रिविधव्यवहारदर्शनादितिभावः ।

---

† यथासङ्ख्यमनुदेशः समानाम् १. ३ १०,

## त्रयाणां हि विकारनिर्देशः ॥ ३ ॥

त्रयाणामयं प्रश्लिष्टनिर्देशः । कथं पुनर्ज्ञायते—त्रयाणामयं प्रश्लिनिर्देश इति ? तिसृणां सञ्ज्ञानां करणसामर्थ्यात् ।

यद्यपि तावत्तिसृणां सञ्ज्ञानां करणसामर्थ्याज्ज्ञायते—त्रयाणामयं प्रश्लिष्टनिर्देश इति । कुतस्त्वेतदेतेनाऽऽनुपूर्व्येण सन्निविष्टानां सञ्ज्ञा भविष्यतीति, आदौ मात्रिकस्ततो द्विमात्रस्ततस्त्रिमात्र इति । न पुनर्मात्रिको मध्ये वाऽन्ते वा स्यात्, तथा द्विमात्र आदौ वा स्यादन्ते वा, तथा त्रिमात्र आदौ वा मध्ये वा स्यात् ?

अयं तावत् त्रिमात्रोऽशक्य आदौ वा मध्ये वा कर्तुम् । कुतः ? प्लुताश्रयो हि प्रकृतिभावः प्रसज्येत‡ । मात्रिकद्विमात्रिकयोरपि घ्यन्तं पूर्वं निपततीति+ मात्रिकस्य पूर्वनिपातो भविष्यति ।

यत्तावदुच्यते—'अयं तावत् त्रिमात्रोऽशक्य आदौ मध्ये वा कर्तुं

प्र०–मपि त्रित्वाद्यथासङ्ख्यं सम्बन्धः सिद्ध इत्यर्थः । अर्थतश्च साम्यं यथासङ्ख्यसूत्रे आश्रीयते न शब्दत एव । अथवा शब्दतः साम्याश्रयणेपि संहितावशादैक्यमिव प्राप्तास्त्रयः शब्दा उच्चारिता इत्यदोषः ।

कथं पुनरिति । प्रत्यक्षेणैकस्यैव शब्दस्य श्रवणाद्भेदावगमे प्रमाणाऽभाव इति भावः । तिसृणामिति । अनुमानाद्भेदावसाय इति भावः । अयन्तावादात । लौकिकव्यवहाराश्रयणेन प्लुतत्वं ह्रस्वत्वं च सिद्धमाश्रित्यैतदुच्यते । यत्तावदिति । शास्त्रात्

उ०–[ भाष्ये ]—सङ्ख्यातानुदेश इति । सङ्ख्यातं सम्यग्ज्ञानमनतिक्रम्यानुदेशः सम्बन्ध इत्यर्थः । सुप्सुपेति समासः । ज्ञानक्रमेणान्वय इति यावत् ।

नन्वेवमर्थतः समसङ्ख्यत्वेऽपि शब्दतस्तदभावात्कथं यथासङ्ख्यसूत्रप्राप्तिरत आह—अर्थतश्चेति । अत एव परस्मैपदानां णलित्यादौ यथासङ्ख्यमिति भावः । ऊशब्दस्य त्रयोऽर्था इति तात्पर्यम् । त्रयः शब्दा इति । वैयाकरणैस्तथा सुज्ञेयत्वादिति भावः ।

भाष्ये विकारो दीर्घरूपः, तेन निर्देश इति तृतीयातत्पुरुषः । तदाह—प्रश्लिष्टेति । अनुमानादिति । अनेकसञ्ज्ञाकरणात्सञ्ज्ञिनां शब्दतो भेदावसाय इत्यर्थः । प्रयोगस्तु 'विमताः सञ्ज्ञा भिन्नसञ्ज्ञिविषयाः' नानासञ्ज्ञात्वा'दिति ।

भाष्ये प्लुताश्रय इति । न च मध्ये करणे कथं प्लुताश्रयः प्रकृतिभाव इति वाच्यम् । मध्ये त्रिमात्रसत्त्वे पूर्वेण दीर्घे त्रिमात्रस्यैवापत्तौ लोकाश्रयप्लुतत्वमादायाग्रिमेण सन्धौ कर्त्तव्ये प्रकृतिभावापत्तिः । सङ्ख्याव्यवहार इव दीर्घादिव्यवहारोऽपि लौकिकशास्त्रीयोभयविषय इत्यभिमानस्तदाह—लौकिकेति । शास्त्रादिति । लौकिकव्यवहारोप्यनादिशास्त्रसंस्कारपूर्वकः,

‡ प्लुतप्रगृह्या अचि नित्यम् ६. १. १२५. + द्वन्द्वे घि २. २. ३२,

प्लुताश्रयो हि प्रकृतिभावः प्रसज्येते'ति प्लुताश्रयः प्रकृतिभावः, प्लुतसञ्ज्ञा चानेनैव। यदि च त्रिमात्र आदौ वा मध्ये वा स्यात् प्लुतसञ्ज्ञैवास्य न स्यात्कुतः प्रकृतिभावः।

यदप्युच्यते 'मात्रिकद्विमात्रिकयोरपि घ्यन्तं पूर्वं निपततीति मात्रिकस्य पूर्वनिपातो भविष्यती'ति ह्रस्वाश्रया हि घिसञ्ज्ञा† ह्रस्वसञ्ज्ञा चानेनैव। यदि च मात्रिको मध्ये वान्ते वा स्याद्ध्रस्वसञ्ज्ञैवास्य न स्यात्, कुतो घिसञ्ज्ञा, कुतः पूर्वनिपातः? एवमेषा व्यवस्था न प्रकल्पते।

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—न मात्रिकोन्ते भवतीति, यदयं—'विभाषा पृष्टप्रतिवचने हेः' [ ८. २. ९३ ] इति मात्रिकस्य प्लुतं शास्ति। कथं कृत्वा ज्ञापकम्? योऽन्ते स प्लुतसञ्ज्ञः। यदि च मात्रिकोऽन्ते स्यात्प्लुतसञ्ज्ञाऽस्य स्यात्। तत्र हि मात्राकालस्य मात्राकालवचनमनर्थकं स्यात्।

मध्ये तर्हि स्यादिति। अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति—न मात्रिको मध्ये भवतीति। यदयम्—'अतो दीर्घो यञि' 'सुपि चे'ति [७. ३. १०१-१०२] इति दीर्घत्वं शास्ति। कथं कृत्वा ज्ञापकम्? यो मध्ये स दीर्घसञ्ज्ञकः। यदि च मात्रिको मध्ये स्याद्दीर्घसञ्ज्ञाऽस्य स्यात्। तत्र मात्राकालस्य मात्राकालवचनमनर्थकं स्यात्।

द्विमात्रस्तर्ह्यन्ते स्यादिति। अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति—न द्विमात्रोऽन्ते भवतीति, यदयम्—'ओमभ्यादाने' [ ८. २. ८७ ] इति द्विमात्रिकस्य प्लुतं शास्ति। कथं कृत्वा ज्ञापकम्? योऽन्ते स प्लुतसञ्ज्ञः। यदि च द्विमात्रोऽन्ते स्यात् प्लुतसञ्ज्ञाऽस्य स्यात्। तत्र द्विमात्राकालस्य द्विमात्राकालवचनमनर्थकं

प्र०-स्थितायां ह्रस्वादिव्यवस्थायां लोके ह्रस्वादिव्यवहारो नान्यथेति भावः। यदयमिति। अनन्तरतमादेशविधानार्थमेतत्स्यादिति चेत्। तन्न। नहि स्थानेन्तरतम इत्यस्याः परिभाषायाः प्रत्यक्षाया बाधा युक्तेति विशिष्टानुपूर्वीप्रतिपत्तौ लिङ्गत्वमेव प्लुतविधानस्य।

उ०-अन्यथा सञ्ज्ञाकरणानर्थक्यमिति भावः। अनन्तरतमः। उकारादिः। नहीति। अबाधेनोपपत्तौ बाधो न युक्त इति भावः। घ्यन्तत्वात्पूर्वनिपातबाध इति न युक्तं, प्रागुक्तयुक्तेरत आह—लिङ्गद्वयेनेति। अएत्वादिति। इदं जातिपक्षस्याप्युपलक्षणम्। ननु ह्रस्वसञ्ज्ञावद्-

† शेषो घ्यसखि १. ४. ७.

स्यात् । मात्रिकेण चास्य पूर्वनिपातो बाधित इति कृत्वा क्वान्यत्रोत्सहते भवितुमन्यदतो मध्यात् । एवमेषा व्यवस्था प्रक्लृप्ता । भवेद् व्यवस्था प्रक्लृप्ता ।

## दीर्घप्लुतयोस्तु पूर्वसञ्ज्ञाप्रसङ्गः ॥ ४ ॥

दीर्घप्लुतयोरपि पूर्वसञ्ज्ञा प्राप्नोति । का ? ह्रस्वसञ्ज्ञा । किं कारणम् ? 'अणसवर्णान् गृह्णाती'ति† ।

## सिद्धं तु तपरनिर्देशात् ॥ ५ ॥

सिद्धमेतत् । कथम् ? तपरनिर्देशः कर्तव्यः—'उदूकाल' इति । यद्येवं—द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसङ्ख्यानं कालभेदात्‡ ।

प्र०—मात्रिकेणेति । लिङ्गद्वयेनान्तमध्याभ्यां मात्रिकस्यापकृष्टत्वादित्यर्थः । दीर्घप्लुतयोस्त्विति । उकारोऽणत्वाद्द्विमात्रत्रिमात्रयोः स्वरूपस्य च ग्राहक इति ह्रस्वसञ्ज्ञा त्रयाणामपि प्राप्नोति । न च दीर्घप्लुतसञ्ज्ञाभ्यां द्विमात्रत्रिमात्रयोर्ह्रस्वसञ्ज्ञा बाध्यते । सञ्ज्ञानां समावेशाभ्युपगमात् 'आकडारादेकासञ्ज्ञे'ति वचनात् । द्विमात्रत्रिमात्रौ त्वनणत्वाद्भिन्नकालानां न ग्राहकाविति न तत्र दोषः । यावच्चेति । एककार्यत्वादेतदुक्तम् । ऊ अजित्येव कालार्थो लभ्यते । उकारादयो ह्यच्त्वं न व्यभिचरन्तीति नाऽच्त्वेन ते विशेष्यन्ते, अपि तु तैरच् । तत्रोकारादिकालत्वादुकारादिसदृशोऽज् ग्रहीष्यत इति नार्थः कालग्रहणेन । तत्क्रियते श्रूयमाणेनैवोकारेण कालं विशेषयितुमिति सवर्णग्रहणं न भविष्यति । तत्रेतत्स्यात् । उकारात्परः कालशब्दो न श्रूयत इत्याह—प्रत्येकं चेति । षण्मात्रस्याऽचोऽसम्भवात्सञ्ज्ञात्रयकरणाच्चेति भावः ।

उ०—दीर्घप्लुतसञ्ज्ञे अपि त्रयाणां स्यातामिति सञ्ज्ञात्रयकरणं व्यर्थमत आह—द्विमात्रेत्यादि । अनणत्वादिति । यत्नाधिक्येन व्यापकजात्यविवक्षणाच्चेत्यपि बोध्यम् । नन्वेवं पञ्चानां सञ्ज्ञित्वाद्यथासङ्ख्यभङ्ग इति चेन्न । शब्दसाम्येनाऽदोषात् । भाष्ये—सिद्धं त्ववस्थिता इति । द्रुतत्वादयोऽभिव्यक्तिगता एवेति भावः । ननु तपरस्तत्कालस्येतिवत् कालपरस्तत्कालस्येतिसूत्राऽभावात्कथं समत्वमत आह—एकेति । तदेवोपपादयति—ऊ—अजिति । किं चैवमुकाराणामेव सञ्ज्ञित्वेन सञ्ज्ञाविधानवैयर्थ्यापत्तिः । अपि तु तैरजिति । तत्र च मुख्यसामानाधिकरण्ये उक्तदोषाल्लक्षणया सामानाधिकरण्यं दर्शयति—तत्रेति । तत्र सादृश्या-

---

† अणुदित्सवर्णस्य चाप्रत्ययः १. १. ६९. ‡ ''द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसङ्ख्यानं कर्तव्यम् · तथा विलम्बितायां तपरकरणे द्रुतमध्यमयोरुपसङ्ख्यानं कर्तव्यम् । किं पुनः कारणं न सिध्यति ? कालभेदात् । ये हि द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायाम् । ये मध्यमायां वर्णास्त्रिभागाधिकास्ते विलम्बितायाम् ।''

इत्यधिकं कोष्ठान्तर्गतं क्वचित् पठ्यते । तदनावश्यकमिह । 'तपरस्तत्कालस्य' १. १. ७०. सूत्रे व्याख्यातत्वात् ।

## द्रुतादिषु चोक्तम् ॥ ६ ॥

किमुक्तम् ? 'सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराऽचिरवचनाद्वृत्तयो विशिष्यन्ते' इति× ।

स तर्हि तपरनिर्देशः कर्तव्यः ? न कर्तव्यः । इह कालग्रहणं क्रियते । यावच्च तपरकरणं तावत् कालग्रहणम् । प्रत्येकं च कालशब्दः परिसमाप्यते— उकाल ऊकाल ऊ३काल इति ।

अथवैकसञ्ज्ञाधिकारेऽयं योगः कर्तव्यः+ । तत्रैका सञ्ज्ञा भवति या परा अनवकाशा चेति । एवं हि दीर्घप्लुतयोः पूर्वसञ्ज्ञा न भविष्यति ।

अथवा 'स्वं रूपं शब्दस्याशब्दसञ्ज्ञा' [ १. १. ६८ ] इत्ययं योगः प्रत्याख्यायते । तत्र यदेतत् 'अशब्दसञ्ज्ञे'ति, एतद्यया विभक्त्या निर्दिश्यमानमर्थवद्भवति तया निर्दिष्टमुत्तरत्रानुवर्तिष्यते । 'अणुदित्सवर्णस्य चाप्रत्ययः' [ १. १. ६९ ] 'अशब्दसञ्ज्ञाया'मिति । अथवा ह्रस्वसञ्ज्ञावचनसामर्थ्याद्दीर्घप्लुतयोः पूर्वसञ्ज्ञा न भविष्यति । ननु चेदं प्रयोजनं स्यात्—'सञ्ज्ञया विधाने नियमं वक्ष्यामीति†' ह्रस्वसञ्ज्ञया यदुच्यते तदचः स्थाने यथा स्या'-

प्र०— अशब्दसञ्ज्ञायामिति । ह्रस्वसञ्ज्ञा च शब्दसञ्ज्ञेति तद्विधाने उकारः सवर्णान्न ग्रहीष्यतीति । उदात्तादयस्तु गुणा न भेदका इति तद्भिन्नस्यापि ह्रस्वसञ्ज्ञा भविष्यति । उदात्तादिसञ्ज्ञास्वज्ग्रहणं निवृत्तमिति दीर्घप्लुतानामपि ता भविष्यन्ति । हलां त्वयोग्यत्वात्तदभावः । 'इको यणची'ति तु न शब्दसञ्ज्ञाविधानम् अपि तु 'आदिरन्त्येने'तिविहितसञ्ज्ञानुवाद इति सवर्णग्रहणं भविष्यति । अथवा ह्रस्वसञ्ज्ञेति । त्रयाणां चेद्ध्रस्वसञ्ज्ञा, तदा ह्रस्वप्रदेशेषु त्रयः सञ्ज्ञिन उपतिष्ठन्ते, तत्रान्तरतमादेशविधाने ह्रस्वसञ्ज्ञाविधानमनर्थकमेव स्यात् । अथ वचनादनन्तरतमो भवेत्, एवमपि ह्रस्व-

उ०-न्तरासम्भवाद् व्याख्यानाच्च कालकृतस्यैव तस्य ग्रहणमिति भावः । हलां त्विति । शिक्षादावचामेव स्वरकथनादिति भावः । प्रत्याहारेषु जातिपक्षाश्रयणान्न दोष इति तात्पर्यम् । ननु ह्रस्वसञ्ज्ञा ह्रस्वविधायकेषु एकमात्रादीनां त्रयाणामपि ग्रहणार्था स्यादित्यत आह— त्रयाणां चेदिति । अन्तरतमेति । 'प्रमाणत' इति शेषः । ह्रस्वप्रदेशेष्वज्ग्रहणमिति । न च विधौ ह्रस्वग्रहणे त्रयाणां विधानम्, अज्ग्रहणे त्वेकस्यैव विधीयमानत्वेनासवर्णाऽग्राहकत्वादिति विशेष इति वाच्यम् । विधीयमानेनाऽपि क्वचित्सवर्णग्रहणादित्यभिमानः । अनुवादे तूभाभ्यामपि त्रयाणां ग्रहणेनाज्ग्रहणमेव कार्यमिति भावः । भाष्ये ननु चेदमिति । ह्रस्वप्रदेशेष्वज्ग्रहणे

× १.१.७०. वा० ५. + आकडारादेका संज्ञा १.४.१. † संज्ञया विधाने नियमः १.२.२८. वा० ३.

दिति । स्यादेतत्प्रयोजनं यदि किञ्चित्कराणि ह्रस्वशासनानि स्युः । यतस्तु खलु यावदज्ग्रहणं तावद्ध्रस्वग्रहणमतोऽकिञ्चित्कराणि ह्रस्वशासनानि ।

इदं तर्हि प्रयोजनम्—'एच इग्घ्रस्वादेशे' [ १. १. ४८ ] इति वक्ष्यामीति । अनुच्यमाने ह्येतस्मिंस्त्रिह्र्स्वप्रदेशेष्वेच इग्भवतीति वक्तव्यं स्यात् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' [ १. २. ४७ ] 'एच इग्भवती'ति । 'णौ चङ्युपधाया ह्रस्वः' [ ७. ४. १ ] 'एच इग्भवती'ति । 'ह्रस्वः, हलादिः शेषः' [ ७. ४. ५९. ६० ] 'एच इग्भवती'ति ।

सञ्ज्ञा च नाम यतो न लघीयः । कुत एतत् ? लघ्वर्थं हि सञ्ज्ञाकरणम् । लघीयश्च त्रिह्र्स्वप्रदेशेष्वेच इग्भवतीति, न पुनः सञ्ज्ञाकरणम् । त्रिह्र्स्वप्रदेशेषु एच इग्भवतीति षड् ग्रहणानि । संज्ञाकरणे पुनरष्टौ । ह्रस्वसंज्ञा वक्तव्या । त्रिह्र्स्वप्रदेशेषु ह्रस्वग्रहणं कर्तव्यं—ह्रस्वो ह्रस्वो ह्रस्व इति । एच इग्घ्रस्वादेशे

प्र०-प्रदेशेष्वज्ग्रहणमेव कुर्यादित्यर्थः । इदं र्हीति । असत्यां ह्रस्वसञ्ज्ञायां ह्रस्वादेश इति कर्तुं न युज्यते । ततश्च ह्रस्वविधिप्रदेशेषु बहुकृत्व एच इगिति वक्तव्यं तद्गुरु भवति । ग्रहणानीति । गृह्यतेनेनाऽर्थ इति ग्रहणं पदमुच्यते । ह्रस्वादेश इत्याङः प्रश्लेषनिर्देशात् पृथक्प्रयोगाभावादाङ्न गणितः । ननु 'मितां ह्रस्व' इत्यत्र 'हेड वेष्टन' इत्यस्य हिडयतीत्यर्थमेच इगिति वक्तव्यम् । तथा 'खित्यनव्ययस्ये'त्यत्रापि परमनुमन्य इत्यर्थमिति गौरवप्रसङ्गः । एवं तर्ह्येच इगिति पञ्चकृत्वोप्युच्चार्यमाणे प्रतिपत्तिलाघवं भवतीति

उ०-त्वचश्चेति नियमभावाद्धलामप्यादेशः प्राप्नोतीतिभावः । परिहरति—स्यादेतदिति । किञ्चित्कराणि—किञ्चिद्विशेषकराणि । न चास्ति कश्चिद्ध्रस्वविधाने विशेषः । अन्तरतमपरिभाषया मात्रिकस्थाने मात्रिकस्य द्विमात्रिकस्थाने द्विमात्रिकस्यैव विधानादिति भावः । न चानन्तरतमादेशविधानार्थम् । तद्बाधकल्पनापेक्षयेष्टानुरोधेन तयोर्ह्रस्वसंज्ञाभावज्ञापनस्यैवौचित्यमिति भावः । यावदज्ग्रहणमिति । प्रयोगे यत्परिमाणकाज्उच्चारणमित्यर्थः । तावद्ध्रस्वग्रहणमिति । तत्परिमाणकस्यैव ह्रस्वशब्देन ग्रहणं विधानमतस्तानि व्यर्थान्येवेत्यर्थः । ये तु ह्रस्वविधायकेष्वज्ग्रहणमेव कार्यमित्येतद्भाष्याशयं वर्णयन्ति । तेषां संज्ञया विधाने नियममित्यादेः समाधिरयं कथमिति चिन्त्यम् । षड्ग्रहणान्यष्टौग्रहणानीति भाष्यस्य चोपपत्तिश्चिन्त्येति दिक् । अनुवादे तु ह्रस्वग्रहणाऽज्ग्रहणयोः समतैवेति, एतदर्थद्वयबोधनार्थमेवेदशविलष्टशब्दोपादानं भाष्ये इति बोध्यम् । लाघवोपलक्षणपरमिति । केचित्तु एतत्सूत्रस्यैतद्भाष्यप्रामाण्यात्, कमेर्णिङिति सूत्रे चिण्णमुलोरिति सूत्रस्थदीर्घग्रहणस्यैतदिदानीं प्रयोजनं यद्दीर्घविधौ स्थानिवत्त्वनिषेध इति वदतो भाष्यकारस्य प्रामाण्याच्च, चिण्णमुलोरिति सूत्रस्थभाष्याच्च हेड वेष्टन इति धातोर्घटादावसाम्प्रदायिकः पाठः । परमनुम्मन्य इत्यादेश्चैतद्भाष्य-

इति । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद् गरीयांसं यत्नमारभते तस्यै-तत्प्रयोजनं दीर्घप्लुतयोस्तु पूर्वसञ्ज्ञा मा भूदिति ॥२७॥

अचश्च ॥ १ । २ । २८ ॥

किमयमलोऽन्त्यशेष आहोस्विदलोऽन्त्यापवादः† ? कथं चाऽयं तच्छेषः स्यात्, कथं वा तदपवादः ? यद्येकं वाक्यं तच्चेदं च 'अलोऽन्त्यस्य विधयो भवन्त्यचो ह्रस्वदीर्घप्लुता अन्त्यस्येति, ततोऽयं तच्छेषः । अथ नाना-वाक्यम्,—'अलोऽन्त्यस्य विधयो भवन्ति' 'अचो ह्रस्वदीर्घप्लुता अन्त्यस्या-नन्त्यस्य चे'ति, ततोऽयं तदपवादः । कश्चाऽत्र विशेषः ?

**ह्रस्वादिविधिरलोऽन्त्यस्येति चेद्वचिप्रच्छिशमादिप्रभृतिहनिगमि-दीर्घेष्वज्ग्रहणम् ॥ १ ॥**

ह्रस्वादिविधिरलोऽन्त्यस्येति चेद्वचिप्रच्छिशमादिप्रभृतिहनिगमिदीर्घेष्वज्ग्रहणं कर्तव्यम् । क्विपि वचिपृच्छ्योर्दीर्घः‡ 'अचः' इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति ।

शमादीनां दीर्घः+ 'अच' इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति ।

हनिगम्योर्दीर्घः× 'अच' इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति । अस्तु तर्हि तदपवादः ।

**अचश्चेन्नपुंसकह्रस्वाऽकृत्सार्वधातुकनामिदीर्घेष्वनन्त्यप्रतिषेधः ॥२॥**

प्र०–लाघवोपलक्षणपरं भाष्यं द्रष्टव्यम् । ह्रस्वदीर्घप्लुत इति सौत्रत्वान्निर्देशस्य लिङ्ग-व्यत्ययेन पुंस्त्वम् ॥२७॥

अचश्च । 'इको गुणवृद्धी' इत्यनेन समानमिदम् । शमादिप्रभृतीति । प्रभृति-

उ०–प्रामाण्यादनभिधानमिति यथाश्रुतं भाष्यमेव सम्यगित्याहुः । पुंलिङ्गैकवचनदर्शनाद् द्वन्द्वा-नुपपत्तिमाशङ्क्याह—सौत्रत्वादिति । लिङ्गस्य लौकिकत्वात्तद्व्यत्यय उचितो न तु शास्त्री-यैकवचनस्येति भावः ॥२७॥

अचश्च । भाष्येऽलोऽन्त्यस्य विधयो भवन्तीत्यनेन तस्य व्यापकत्वं बोधितं तेनैतत्प्र-वृत्त्यभावेऽपिस्थानषष्ठीरूपाल्लिङ्गादिव उदित्यादावलोऽन्त्यस्येत्यस्य प्रवृत्तिः सूचिता । एक-

† अलोऽन्त्यस्य १.१.५२. १–कचिन्न । ‡ वचिप्रच्छ्यायतस्तुकटप्रजुश्रीणां दीर्घश्च ३.२.१७८ वा० २.
+ शमामष्टानां दीर्घः श्यनि ७. ३. ७४. × अज्झनगमां सनि ६. ४. १६.

अचश्चेन्नपुंसकह्रस्वाऽकृत्सार्वधातुकनामिदीर्घेष्वनन्त्यस्य प्रतिषेधो वक्तव्यः। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' [ १. २. ४७ ] यथेह भवति—रै-अतिरि, नौ-अतिनु । एवं 'सुवाग्ब्राह्मणकुल'मित्यत्रापि प्राप्नोति ।

'अकृत्सार्वधातुकयोर्दीर्घः' [ ७. ४. २५ ] यथेह भवति—चीयते सूयते । एवं छिद्यते भिद्यते अत्रापि प्राप्नोति ।

नामि [ ६. ४. ३ ] दीर्घो यथेह भवति—अग्नीनाम् वायूनाम्, एवं षण्णामित्यत्रापि प्राप्नोति । नैष दोषः ।

'नोपधायाः' [ ६. ४. ७ ] इत्येतन्नियमार्थं भविष्यति । प्रकृतस्यैष नियमः स्यात् । किं च प्रकृतम् ? 'नामि' इति । तेन भवेदिह नियमान्न स्यात् षण्णामिति । अन्यते तन्यत इत्यत्रापि प्राप्नोति । अथाप्येवं नियमः स्यात्—'नोपधाया नाम्येवे'ति । एवमपि भवेदिह नियमान्न स्यात्—अन्यते तन्यत इति । 'षण्णा'मित्यत्र प्राप्नोति । अथाप्युभयतोऽयं नियमः स्यात्—'नोपधाया एव नामि', 'नाम्येव नोपधाया' इति । एवमपि भिद्यते छिद्यते सुवाग्ब्राह्मण-कुलमित्यत्रापि प्राप्नोति ।

एवं तर्हि ह्रस्वो दीर्घः प्लुत इति यत्र ब्रूयादच इत्येतत्तत्रोपस्थितं द्रष्ट-व्यम् । किं कृतं भवति ? द्वितीया षष्ठी प्रादुर्भाव्यते । तत्र कामचारः—गृह्य-माणेन वाऽचं विशेषयितुमचा वा गृह्यमाणम् । यावता कामचारः, इह ताव-द्वचिप्रच्छिश्रमादिप्रभृतिहनिगमिदीर्घेषु गृह्यमाणेनाऽचं विशेषयिष्यामः । एतेषां दीर्घो भवति, अच इति । इहेदानीं नपुंसकह्रस्वाकृत्सार्वधातुकनामिदीर्घेष्वचा गृह्यमाणं विशेषयिष्यामः । नपुंसकस्य ह्रस्वो भवति, अचः—अजन्तस्येति । अकृत्सार्वधातुकयोर्दीर्घो भवति, 'अचः'—अजन्तस्येति । नामि दीर्घो भवति 'अचः' अजन्तस्येति । इह कस्मान्न भवति—'द्यौः' पन्थाः' 'स' इति* ।

प्र०–ग्रहणेन ष्ठिवुक्लम्वादयो गृह्यन्ते । भिद्यते इति । यकारादौ यदङ्गं तस्य योऽवयवो-जित्येवमत्र प्रसङ्गः । यदा त्वजेव यकारादिना विशेष्यते, तदाऽत्र व्यवधानान्नास्ति

उ०–वाक्यतां दर्शयति—अच इति । आदिप्रभृतिशब्दयोः पौनरुक्त्यं परिहरति—प्रभृतीति । आदिपदं तु शमामष्टानामिति सूत्रस्थबहुवचनानुवादकमिति भावः । यदा त्विति । इदं

* दिव औत् ७. १. ८४; पथिमथ्यृभुक्षामात् ७. १. ८५; त्यदादीनामः ७. २. १०२, ६ .

**सञ्ज्ञया विधाने नियमः ॥ ३ ॥**

सञ्ज्ञया ये विधीयन्ते तेषु नियमः । किं वक्तव्यमेतत् ? नहि । कथमनुच्यमानं गंस्यते ? अजिति† हि वर्तते । तत्रैवमभिसम्बन्धः करिष्यते-- अचः अज्भवति ह्रस्वो दीर्घः प्लुत इत्येवं भाव्यमान इति । अथ पूर्वस्मिन् योगेऽज्ग्रहणे सति किं प्रयोजनम् ?

**अज्ग्रहणं संयोगाऽच्समुदायनिवृत्त्यर्थम् ॥ ४ ॥**

अज्ग्रहणं कियते संयोगनिवृत्त्यर्थम्, अच्समुदायनिवृत्त्यर्थं च । संयोगनिवृत्त्यर्थं तावत्--प्रतक्ष्य प्ररक्ष्य । 'ह्रस्वस्य पिति कृति तुक् [ ६. १. ७१ ]

प्र०--प्रसङ्गः । एवमन्यत्रापि ज्ञेयम् । अजिति हि वर्तत इति । ततश्च ह्रस्वादिशब्दा इहानुवृत्ता नाऽचमुपस्थापयन्ति, तस्य स्वयमुपस्थानादित्याश्रितस्वरूपव्यापारा आश्रीयन्ते । तेन ह्रस्व इत्येवं योऽच् सोऽचः स्थाने भवतीत्यर्थः सम्पद्यते । एवं दीर्घप्लुतयोरपि । अथेति । इहैव तदज्ग्रहणं क्रियतां पूर्वसूत्रे तु न वक्तव्यमिति प्रश्नः । प्रतक्ष्येति । यथा प्रत्याहारे अश्रुता आकारादयो दीर्घप्लुतसञ्ज्ञे लभन्ते तथा संयोगोऽपि ह्रस्वसञ्ज्ञः स्यादिति तुक्प्रसङ्गः । तितउच्छत्रमिति । परत्वाद्दीर्घलक्षणे वा तुकि सति सकृद्गतौ विप्रतिषेध इति न्यायाद्ध्रस्वलक्षणः पुनर्न प्रवर्तते । नचैवंविधे विषये पुनःप्रसङ्गविज्ञानमस्ति । नित्यविकल्पयोर्विरोधात्, पूर्वेण परस्य बाधप्रसङ्गात् । यत्र हि पूर्वो विधिः परं न बाधते तत्र पुनः प्रसङ्गविज्ञानं क्वचिदाश्रीयते । समुदाये वा कार्यं प्रति व्याप्रियमाणे अवयवानां पारतन्त्र्यादव्यापारान्नैव ह्रस्वलक्षणतुक्प्रसङ्गः । ननु क्रियमाणेऽप्यज्ग्रहणे वर्णग्रहणे जातिग्रहणादच्समुदायस्याऽपि दीर्घसञ्ज्ञाप्रसङ्गः । नैष

उ०--चिन्त्यं, प्रत्ययस्याङ्गांश एवोत्थिताकाङ्क्षत्वात् । नाऽचमिति । ह्रस्वादिसंज्ञका अचोऽचः स्थाने इति नार्थं इति भावः । स्वयमिति । अचपदेनैवेत्यर्थः । आश्रितः स्वरूपस्य शब्दस्य व्यापारो यैरित्यर्थस्तदाह—ह्रस्व इत्येवमिति । ननु मात्रिकाणां हलामुपदेशाऽभावादसत्त्वेन सञ्ज्ञाभावमाशङ्क्याह—यथेति । वा तुकीति । वैकल्पिके तुकीति यावत् । विरोधादिति । तथा च विकल्पविधिप्रवृत्तेर्वैयर्थ्यापत्त्या नित्यस्य बाध एवेत्यर्थः । क्व तर्हि पुनःप्रसङ्गविज्ञानं, तत्राह—यत्र हीति । यथा भिन्धकीत्यत्र परत्वाद्धौ कृते पुनःप्रसङ्गविज्ञानादकच् । न हि तत्राऽकच्—धिप्रवृत्त्योर्विरोधः । समुदाये वेति । इदं चिन्त्यम्, बहुशो दृष्टत्वात् । व्यक्तिद्वारकपरिमाणाऽसम्भवं प्रकृते आह—एकैकेति । द्विमात्राकालकव्यक्तिगताऽच्त्वजातिर्दीर्घ इति ह्यर्थः स्यात् । तत्र या व्यक्तिः प्रत्येकरूपा न सा द्विमात्राकाला, या च तादृशी न सा व्यक्तिरिति भावः । हलन्ताच्चेत्यादौ तु इक्समीपव्यक्तिवृत्तिहल्त्वजातेः पर इत्यर्थान्न धिप्सतीत्यादौ दोषः । जातेर्हि जात्यन्तरं व्यवधायकमिति न सजातीयद्वितीयव्यक्तिर्व्यवधायिकेति

† ऊकालोऽज्ह्रस्वदीर्घप्लुतः १. २. २७.

इति तुङ्मा भूदिति । अच्समुदायनिवृत्त्यर्थं—तितउच्छत्रं तितउच्छाया । दीर्घात्पदान्ताद्वा' [ ६. १. ७५; ७६ ] इति विभाषा तुङ्मा भूदिति ॥२८॥

उच्चैरुदात्तः ॥ १ । २ । २९ ॥ नीचैरनुदात्तः ॥ १ । २ । ३० ॥

किं षष्ठीनिर्दिष्टमज्ग्रहणमनुवर्तते, उताहो न† ? किं चातः ? यद्यनुवर्तते 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवती'त्येषा परिभाषा न प्रकल्पते । कथं हलो नाम स्वरप्राप्तिः स्यात् । एवं तर्हि निवृत्तम् । बहून्येतस्याः परिभाषायाः

प्र०—दोषः । 'ऊकाल' इति विशेषणादिह व्यक्तिराश्रीयते । नहि जातेः परिमाणमस्ति । व्यक्तिद्वारकं वा जातेः परिमाणमाश्रीयते । एकैकव्यक्तिव्यङ्ग्या हि जातिर्न समुदायव्यङ्ग्या ॥२८॥

उच्चैः । षष्ठीनिर्दिष्टमिति । उच्चैर्नीचैरित्येते अव्यये अधिकरणशक्तिप्रधाने । तत्राच इत्यनुवृत्तौ सत्यामयमर्थो भवति—'उच्चैः स्थान उपलभ्यमान उदात्तसञ्ज्ञः स चाचः स्थान' इति । हल्स्वरप्राप्ताविति । सत्यामच इत्यस्यानुवृत्तौ 'समासस्ये'-त्यन्तोदात्तत्वं राजपुरुष इत्यादावेव स्यान्न तु राजदृषदित्यादौ षकाराकारस्य । असत्यां त्वनुवृत्तौ समासस्य योऽन्तो दकारस्तस्य स्वरप्राप्तावविद्यमानत्वादकारस्य स्वरः सिध्यति । एषा च परिभाषा 'यतोऽनाव' इत्यत्राऽनाव इति प्रतिषेधेन ज्ञापिता । अन्यथा नाव्यमित्यत्र नकारस्याऽयोग्यत्वादाकारस्य चानादित्वादुदात्तत्वं न भविष्यतीति किमनाव इति प्रतिषेधेन ।

उ०—बोध्यम् । परे तु वर्णाद्वर्णान्तरोच्चारणेऽर्धमात्राकालस्य सत्त्वेन वर्णसमुदाये मात्राकालिकत्वाद्यसम्भव इति प्रश्नो भाष्ये—अथ पूर्वेति । उत्तरं तु तावत्सूक्ष्मकालग्रहणाऽसमर्थस्य तत्र सञ्ज्ञाप्रवृत्तिशङ्कावारणार्थमित्याशयेन । एवं च जातिग्रहणमित्यस्य जात्याश्रयानेकव्यक्तिग्रहणमित्यर्थोपि न दोषः । मात्राकालोऽवग्रहोऽर्धमात्राकालोऽवग्रह इति प्रातिशाख्ययोरविरोधाय परः सन्निकर्ष इति सूत्रस्थभाष्येण च वर्णाद्वर्णान्तरोच्चारणेऽर्धमात्राकालव्यवायस्यावश्यकत्वादित्याहुः ॥२८॥

उच्चैरुदात्तः । नन्वच इत्यनुवृत्तावपि कथं परिभाषाऽप्रक्लृप्तिरनुवृत्तस्य प्रकृतसूत्रेष्वपेक्षितसञ्ज्ञिसमर्पकत्वेपि स्वरोऽच एव स्थाने इत्यर्थकत्वे मानाभावादत आह—उच्चैरिति । सञ्ज्ञिसमर्पणस्य प्रथमान्तानुवृत्त्यापि सिद्धेरिति भावः । स्थाने—ताल्वादौ । उच्चैः—उच्चदेशे, उपलभ्यमान इत्यन्वयः । उपलभ्यमानः,—व्यज्यमानः । स चाच इति । वाक्यभेदेन षष्ठ्यन्ताऽच्पदेन सम्बन्ध इति भावः । नन्वज्ग्रहणानुवृत्त्यैव सिद्धे मास्तु परिभाषाप्रवृत्तिरत आह—सत्यामिति । समासस्येत्यत्राच इत्यस्योपस्थित्या तेन समासे विशेष्यमाणे राजदृषदित्यादौ न स्यादित्यर्थः षकाराकारस्येति । तथा च तत्सिध्यर्थं परिभाषैव कर्त्तव्या नाच

† अचश्च १. २. २८.

प्रयोजनानि । अथ प्रथमानिर्दिष्टमज्ग्रहणमनुवर्तते, उताहो न‡ ? किं चार्थोऽनुवृत्त्या ? बाढमर्थः । यद्येते व्यञ्जनस्यापि गुणा लक्ष्यन्ते । ननु च प्रत्यक्षमुपलभ्यन्ते—'षे त्वोर्जे त्वा×' । नैते व्यञ्जनस्य गुणाः, किन्त्वच एव । तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते । तद्यथा—द्वयो रक्तयो-र्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते । बदरपिटके रिक्तको लोहकंस-स्तद्गुण लभ्यते ।

कुतो नु खल्वेतत्—'अच एते गुणाः, तत्सामीप्यात्तु व्यञ्जनमपि तद्गुण-मुपलभ्यते, न पुनर्व्यञ्जनस्यैते गुणाः स्युस्तत्सामीप्यात्त्वजपि तद्गुण उपल-

प्र०- अथ प्रथमानिर्दिष्टमिति । ननु को विशेषः यावता यत्र स्वरो विधीयते तत्र व्यञ्जनस्याऽविद्यमानत्वादच एव भविष्यति । 'अनुदात्तादेर'ञित्यादावनुवादेऽपि न दोषः, स्वत एव हलोनुदात्तत्वं भवतु, अजुपरागवशाद्वा, तदनुवादेन कार्यविधाने न कश्चिद्विशेषः । एवं तर्हि न्यायव्युत्पादनार्थ एवायं विचारः । ननु चेति । बाधक-भावाच्च भ्रान्त्यसिद्धिः । नैते इति । अन्यथाऽप्युपलम्भोपपत्तेरितिभावः । अन्तरेणापि व्यञ्जनमिति । 'आप्यायध्व'मिति यथा । अत्र ह्याकार उदात्तः, तिङन्तस्य निघातः । ततश्चान्वयव्यतिरेकाभ्यामच एवैते गुणाः । यदि तु हलामप्येते गुणा अभविष्यन् तदा हलामचां च भिन्नस्वरताप्युपालप्स्यत, यस्मात्त्वचामेव स्वरमनुविदधति, न हलः,

उ०-इत्यनुवृत्तिरिति भावः । तदाह—भाष्ये—बहून्येतस्या इति । यतोऽनाव इति । यदन्तस्य द्व्यच्कस्यादिरुदात्त इति तदर्थः । यावतेति । न चाचः स्थाने हलप्युदात्तादिशब्देन प्रत्यायितः स्यादिति वाच्यम् । अन्तरतमपरिभाषयाऽप्राप्तेः । ननु स्वरशेषाया अविद्यमानवत्परिभाषया अन्यत्राप्राप्तेस्तत्र दोषोऽत आह—अनुदात्तादेरिति । स्वत एवेत्यस्याऽचां त्रैस्वर्यवत्तेषामनु-दात्तत्वमेवेति विशेषस्वराप्राप्त्या स्वस्वर एवावतिष्ठत इत्यर्थः । ननु स्वतस्तथात्वकल्पने मानाभावः । किञ्चोदात्तसमवधानेप्यनुदात्तत्वप्रतीत्यापत्तिरेवञ्च हलादिप्रातिपदिके आद्युदात्ते-प्यनापत्तिरत आह—अजुपेति । न्यायेति । उदात्तत्वादीनामज्धर्मत्वविषयकन्यायेत्यर्थः । भाष्येऽनुवृत्तेः प्रयोजनाभावात्सन्देहानुपपत्तिरिति पृच्छति—किञ्चेति । अनुवृत्तेर्न फल-मित्यर्थः । भाष्ये यदि लक्ष्यन्ते तदाऽर्थः, यतो न लक्ष्यन्तेऽतो नार्थ इत्यन्वयः । नन्वियं प्रतीती रक्तस्फटिकप्रतीतिवद् भ्रान्तेत्यत आह—बाधकेति । प्रतीतिर्भ्रान्तैवेत्याह—नैते इति भाष्ये । तद्व्याचष्टे—अन्यथापीति । रिक्तको लोहकंसः—आदर्शः । रिक्तकः—घर्षणेन उज्ज्वलीकृतः । बदरपिटकं—बदरफलयुक्तपेटिकेति सम्प्रदायः । प्रतीतेर्भ्रान्तत्वे बीजं

‡ ऊकालोऽज् ह्रस्वदीर्घप्लुतः १. २. २७. × य० वे० १. १ । १–'अच एते गुणाः' पा० ।

भ्येते'ति ? अन्तरेणापि व्यञ्जनमच एवैते गुणा लक्ष्यन्ते, न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति। अन्वर्थं खल्वपि निर्वचनम्—स्वयं राजन्त इति स्वराः, अन्वग्भवति व्यञ्जनमिति।

उच्चनीचस्यानवस्थितत्वात्सञ्ज्ञाऽप्रसिद्धिः ॥ १ ॥

इदमुच्चनीचमनवस्थितपदार्थकम्। तदेव हि कञ्चित्प्रत्युच्चैर्भवति, कञ्चित्प्रति नीचैः। एवं हि कश्चित्कञ्चिदधीयानमाह—किमुच्चै रोरूयसे शनैर्वर्ततामिति। तमेव तथाऽधीयानमपर आह किमन्तर्दन्तकेनाधीषे उच्चैर्वर्ततामिति। एवमुच्चनीचमनवस्थितपदार्थकम्, तस्यानवस्थितत्वात्सञ्ज्ञाया अप्रसिद्धिः।

एवं तर्हि लक्षणं करिष्यते—आयामो दारुण्यमणुता खस्येति उच्चैःकराणि शब्दस्य। आयामो गात्राणां निग्रहः। दारुण्यं स्वरस्य दारुणता रूक्षता। अणुता खस्य कण्ठस्य संवृतता। उच्चैःकराणि शब्दस्य।

---

प्र०-तस्मान्न हलां स्वयं स्वरोस्तीति निश्चयः। अन्वग्भवतीति। अनुगच्छतीत्यर्थः। शिष्टसमाचाराच्चेदं निर्वचनमभिहितं, न त्वत्र वर्णसादृश्यं किञ्चिदस्ति। अथवा गतिरपि व्यञ्जेरर्थः, विविधं गच्छत्यजुपरागवशादिति व्यञ्जनमित्ययमर्थः पर्यायान्तरेण भाष्यकारेणाभिहितः। उपरागश्च पूर्वपराऽच्सन्निधानेऽपि परेणाऽचा हलो भवति न पूर्वेण। उच्चनीचस्येति। श्रुतिप्रकर्षापकर्षलक्षणोच्चनीचत्वाश्रयः पर्युनुयोगः। न चानवस्थितवस्त्वाश्रयेण साधुत्वं व्यवतिष्ठते। एतदपीति। श्रोता हि वक्तृगतानायामादीन्धर्मान्कार्यादवस्यति, कार्यं च सङ्कीर्णम्। तथाहि—महाप्राणो नीचैरप्युच्चारयन्स्वरेण महान्तं देशं व्याप्नोति अल्पप्राणस्तूच्चैरपि वदन्नल्पं देशं व्याप्नोति।

---

उ०-पृच्छति—कुतो न्विति। अजन्वयव्यतिरेकौ बीजमित्याह—अन्तरेणापीति। अत्र हीति। निपाता आद्युदात्तास्तिङ्ङतिङ इत्याभ्यामिति भावः। न पुनरन्तरेणेति। अन्वयप्रदर्शनमिदं प्रक्रियाप्राप्तातिरिक्तविषयं सौत्रप्रयोगातिरिक्तविषयकं च बोध्यम्। स्वयं राजन्त इति भाष्यस्योदात्तादिगुणैरित्यर्थः। अनुगच्छतीति। 'अज्गुण'मिति शेषः। न त्वत्र वर्णसादृश्यमिति। निर्वचनं हि तत्तद्धात्वर्थयोगेनाऽर्थाभावेपि वर्णसादृश्येन वेत्याशयः। अर्थयोग एवास्तीत्याह—अथवेति। विविधमिति। उदात्तत्वादिरूपनानाप्रकारगमनमजधीनमिति शब्दादेव लभ्यत इति भावः। पर्यायेति। यो हि यमनुगच्छति स तद्वद्विविधं गच्छतीत्यर्थः। ननु विरुद्धस्वरद्वयमध्यगतस्य व्यञ्जनस्य स्वरद्वयाजुपरागापत्तिरत आह—उपरागश्चेति। स्वभाव एवात्र बीजम्। अधिकरणशक्तिप्रधानत्वात्कथमयं पर्यनुयोगोत आह—श्रुतीति। 'उच्चैः श्रूयमाण उदात्त' इत्यादिरर्थ इत्यभिमानः। नन्ववस्त्वनवस्थितत्वं, को दोषोत आह—

---

१—'अथ नीचै' पा०।

अन्ववसर्गो मार्दवमुरुता खस्येति नीचैःकराणि शब्दस्य । अन्ववसर्गो गात्राणां शिथिलता । मार्दवं स्वरस्य मृदुता स्निग्धता । उरुता खस्य महत्ता कण्ठस्येति नीचैःकराणि शब्दस्य ।

एतदप्यनैकान्तिकम् । यद्धर्थल्पप्रमाणस्य सर्वोच्चैस्तद्धि महाप्राणस्य सर्वनीचैः ।

**सिद्धं तु समानप्रक्रमवचनात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? समाने प्रक्रम इति वक्तव्यम् । कः पुनः प्रक्रमः ? उरः कण्ठः शिर इति ॥२९॥३०॥

**समाहारः स्वरितः ॥ १ । २ । ३१ ॥**

समाहारः स्वरित इत्युच्यते । कस्य समाहारः स्वरितसञ्ज्ञो भवति ? अचोरित्याह ।

**समाहारोऽचोश्चेन्नाभावात् ॥ १ ॥**

प्र०– सिद्धं त्विति । प्रक्रम्यन्तेऽस्मिन्वर्णा इति प्रक्रमः स्थानमुच्यते । तेनायमर्थः— एकस्मिंस्ताल्वादिके स्थाने ऊर्ध्वाधरभागयुक्ते ऊर्ध्वभागेनोच्चार्यमाण उदात्तः अधरभागनिष्पन्नोऽनुदात्तः । एवं चोच्चैरित्यनेनोर्ध्वभागो गृह्यते नीचैरित्यधरभागः । अभ्याससमधिगम्यश्चायं स्वरविशेषः षड्जादिवद्विज्ञेयः ॥२९॥३०॥

समा । कस्येति । समाहरणं समाहार इति भावसाधनं मत्वा कस्येति प्रश्नः । अचोरिति । तयोश्च समाहार उपश्लेषरूपः । अन्यत्र चौत्तराधर्यरूपोऽपि सम्भवति । गाङ्गेऽनूप इति स्थानिनोरेकाराकारयोरुदात्तानुदात्तयोः समाहारात् स्थानिधर्मेणादेशस्यापि तथा व्यपदेशः । समाहारोऽचोश्चेदिति । 'कार्य' 'क' 'कन्या' इत्यादौ स्थानि-

उ०–नचेति । भाष्ये—एवं तर्हि लक्षणमिति । न श्रुतिगतप्रकर्षाश्रयमुच्चत्वं नीचत्वं किन्तु ईदृशज्ञापकज्ञापितमिति भावः । श्रोता हीति । आयामादीनां श्रुतिप्रकर्षानुमेयत्वात् तस्याव्यवस्थितत्वादव्यवस्थितत्वमिति भावः । प्रक्रम्यन्त इति । अधिकरणे घञि नोदात्तोपदेशस्येति वृद्धिप्रतिषेधः । ऊर्ध्वभागेनेति । ऊर्ध्वभागावच्छिन्नवायुसंयोगेनेत्यर्थः । न चेदमपूर्वं कर्तव्यमित्याह—एवं चेति । करणस्य चाधिकरणत्वविवक्षा बोध्या । कस्योर्ध्वभागे इत्याकाङ्क्षायां योग्यतया स्थानस्येति लभ्यत इति भावः । मन्दं प्रति तु वचनमेवावश्यकमिति बोध्यम् । भाष्ये—उरः कण्ठः शिर इति । शिरःपदं ताल्वादीनामुपलक्षणम् ॥२९॥३०॥

समाहारः । समाहारशब्दे कर्मसाधने कस्येति षष्ठ्यन्तेन पृच्छानुपपन्नेत्यत आह—भावेति । जातौ च कस्येत्येकवचनम् । उपश्लेषः—अव्यवहितोत्तरत्वरूपः । अन्यत्र—

१–'हि' क्वचिन्न ।

समाहारोऽचोश्चेत्, तन्न । किं कारणम्? 'अभावात्' । नह्यचोः समाहारोस्ति । नन्वयमस्ति गाङ्गेऽनूप इति? नैषोचोः समाहारः । अन्योयमुदात्तानुदात्तयोः स्थाने एक आदिश्यते । एवं तर्हि गुणयोः ।

गुणयोश्चेन्नाच्प्रकरणात् ॥ २ ॥

गुणयोः समाहार इति चेत्, तन्न किं कारणम्? 'अच्प्रकरणात्' । अजिति वर्तते ।

सिद्धं त्वच्समुदायस्याऽभावात्तद्गुणसम्प्रत्ययः ॥ ३ ॥

सिद्धमेतत् । कथम्? अच्समुदायो नास्तीति कृत्वा तद्गुणस्याचः समाहारगुणस्य सम्प्रत्ययो भविष्यति ।

प्र०-द्वारकोऽपि समाहारव्यपदेशो नास्ति । यत्राप्यस्ति गाङ्गेऽनूप इति—तत्राप्यसौ गौणः । तत्र गाङ्गशब्दोऽणन्तत्वादन्तोदात्तः । सप्तम्येकवचनेन सुप्त्वादनुदात्तेन सहैकादेश उदात्तः । अनूपशब्दः 'अनोरप्रधानकनीयसी' इत्यन्तोदात्तत्वादनुदात्तादिः, तत एकादेशः स्वरितो वाऽनुदात्ते पदादाविति स्वरितः । एवं तर्हीति । गुणयोर्नैरन्तर्येणोपलम्भादस्ति समाहारः । अच्प्रकरणादिति । प्रकरणं—प्रस्तावो न तु स्वरितत्वादनुवृत्तिः, तस्याः पूर्वं प्रत्याख्यानात् । तदयमर्थः,—पूर्वसूत्रयोः सामर्थ्याक्षिप्तोऽजेव सञ्ज्ञी उदात्तानुदात्तशब्दयोरिति ताविहानुवृत्तावचं प्रत्याययतो न तु गुणम् ।

सिद्धं त्विति । गुणिनोरचोः समाहारासम्भवात्सामर्थ्याद् गुणयोः समाहारा-

उ०-पूलादौ । औत्तराधर्यमाधाराधेयभावः । न च वर्णानां सः, अमूर्तत्वादस्थिरत्वाच्चेति भावः । स्वरितभाज एकादेशस्यैकत्वात् कथमत्र द्वयोरचोः समाहारोत आह—स्थानिनोरिति । कार्यक्शब्दयोर्ण्यदन्तयोस्तित्वात्स्वरितत्वं, कन्येत्यत्र कन्याराजन्यमनुष्याणामन्त इति तत् । एवं च गौणोपि सर्वत्र नास्तीत्यर्थः । गौण इति । स्थानिनोरुपश्लेषस्याशास्त्रीयत्वेन स्थानिवत्सूत्राप्रवृत्तेः । लोकन्यायसिद्धस्तु गौण इत्यर्थः । नन्वचोः समाहाराभावे कथं तद्गुणयोः समाहारोत आह—गुणयोरिति । एकाज्निष्ठयोरेव तयोः समाहारः इत्यर्थः । नैरन्तर्येणेति । 'तस्यादित उदात्त'मित्युक्तेः । पूर्वं प्रत्याख्यानेनाच्प्रकरणादिति विरुद्धमत आह—प्रस्ताव इति । सामर्थ्यादवगतिरित्यर्थः । तदुपपादयति—तदयमिति । अजिति वर्तत इति भाष्येऽच्शब्देन तद्विशेषबोधकावुदात्तानुदात्तशब्दौ लक्ष्येते इत्यर्थः । भाष्ये तद्गुणस्येत्यस्य व्याख्या समाहारगुणस्येति । उदात्तानुदात्तसमाहाररूपगुणवत इत्यर्थः । अचः सञ्ज्ञित्वेनानुपादानादयं प्रश्नोऽयुक्तोऽत आह—स्वरित इति । न चाच्समाहार इति । भावसाधन-

१—'गुणे' पा० ।

कथं पुनः समाहार इत्यनेनाऽच्छब्दः प्रतिनिर्दिष्टम् ? मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा—पुष्पका एषां ते पुष्पकाः । कालका एषां ते कालका इति । एवं समाहारवान् समाहारः ।

अथवा अकारो मत्वर्थीयः । तद्यथा तुन्दः घाट इति ।

यद्येवं त्रैस्वर्यं न प्रकल्पते । तत्र को दोषः ? 'त्रैस्वर्येणाधीमहे' इत्येतन्नोपपद्यते । नैतद्गुणापेक्षम् । किं तर्हि ? अजपेक्षमेतत्—'त्रैस्वर्येणाधीमहे' त्रिप्रकारैरज्भिरधीमहे, कैश्चिदुदात्तगुणैः कैश्चिदनुदात्तगुणैः कैश्चिदुभयगुणैः । तद्यथा—शुक्लगुणः शुक्लः, कृष्णगुणः कृष्णः, य इदानीमुभयगुणः स तृतीयामाख्यां लभते—कल्माष इति वा सारङ्ग इति वा । एवमिहाप्युदात्तगुण उदात्तः, अनुदात्तगुणोऽनुदात्तः, य इदानीमुभयगुणः स तृतीयामाख्यां लभते स्वरित इति ॥३१॥

## तस्यादित उदात्तमर्द्धह्रस्वम् ॥ १ । २ । ३२ ॥

'अर्द्धह्रस्व'मित्युच्यते तत्र दीर्घप्लुतयोर्न प्राप्नोति । कन्या । शक्तिके३ शक्तिके† । नैष दोषः । मात्रचोऽत्र लोपो द्रष्टव्यः । अर्द्धह्रस्वमात्रमर्धह्रस्वमिति ।

प्र०—श्रयणमित्यर्थः । कथं पुनरिति । स्वरित इत्यनया सञ्ज्ञया योग्यत्वादच्सञ्ज्ञित्वेनाक्षिप्तः । न चाऽच्समाहारो भवति । मतुब्लोप इति । गुणगुणिनोरभेदोपचाराद् गम्यमानार्थस्य मतुपोऽप्रयोग इत्यर्थः । अकार इति । अर्शआदेराकृतिगणत्वात् । त्रैस्वर्यमिति । उदात्तानुदात्तगुणव्यतिरेकेण स्वरितत्वस्याऽभावात् त्रैस्वर्यव्यवहारो न स्यात् । अस्ति चायं व्यवहारः । अजपेक्षमिति । स्वरशब्देनाऽच उच्यन्ते । त्रय एव स्वरास्त्रैस्वर्यमिति स्वार्थे ष्यञ् ॥३१॥

तस्यादित उदात्त । अक्तपरिमाणस्य ह्रस्वसञ्ज्ञा कृता नान्यपवृक्तस्येति न्यायाद्दीर्घप्लुतावयवो ह्रस्वग्रहणेन न गृह्येतेत्यालोच्याह—अर्धह्रस्वमिति । कन्येति । 'कन्याराजन्यमनुष्याणामन्त' इति स्वरितः । शक्तिके ३ शक्तिके इति । स्वरितमाम्रेडितेऽ-

उ०—स्वरसमाहारशब्दस्येति भावः । अर्शआदेरिति । अधिकरणे घञिति तु नोक्तं, ल्युटा बाधाद्बाहुलकस्यागतिकत्वात् । उदात्तेत्यादि । स्वरशब्दस्य गुणपरत्वाभिप्रायं चोद्यमित्यर्थः । त्रैस्वर्यमिति । भावे ष्यञिति भावः । ननु स्वरशब्दस्य गुणे प्रसिद्धेः कथं त्रैस्वर्यमित्यस्याजपेक्षत्वमत आह—स्वरशब्देनेति । एवमपि ष्यञनुपपत्तिरत आह—त्रय एवेति । चातुर्वर्ण्यादित्वादिति भावः ॥३१॥

तस्यादितः । अक्तपरिमाणस्येति । अनवयवस्येत्यर्थः । अन्यपवृक्तः—अवयवः । इति न्यायादिति । इति हेतोर्न्यायाद्वाच्यप्रवृत्त्येत्यर्थः । शक्तिके इत्यत्र 'वाक्यादेरामन्त्रि-

१—'वान्' पा० । † स्वरितमाम्रेडितेऽसूयाऽसम्मतिकोपकुत्सनेषु ८. २. १०३.

किमर्थं पुनरिदमुच्यते ? आमिश्रीभूतमिवेदं भवति । तद्यथा—'क्षीरोदके सम्पृक्ते आमिश्रीभूतत्वान्न ज्ञायते-'कियत् क्षीरम्' 'कियदुदकम्' 'कस्मिन्नवकाशे क्षीरम्' 'कस्मिन्वोदक'मिति । एवमिहाप्यामिश्रीभूतत्वान्न ज्ञायते—कियदुदात्तम्, कियदनुदात्तम्, कस्मिन्नंनुदात्तमिति । तदाचार्यः सुहृद्भूत्वान्वाचष्टे—'इयदुदात्तमियदनुदात्तमस्मिन्नवकाश उदात्तम्, अस्मिन्नवकाशेऽनुदात्त'मिति ।

यद्ययमेवं सुहृत्किमन्यान्यप्येवंजातीयकानि नोपदिशति । कानि पुनस्तानि ? स्थानकरणानुप्रदानानि । व्याकरणं नामेयमुत्तरा विद्या । सोऽसौ छन्दःशास्त्रेष्वभिविनीत उपलब्ध्याधिगन्तुमुत्सहते । यद्येवं नार्थोऽनेन । इदमप्युपलब्ध्याऽधिगमिष्यति ।

सञ्ज्ञाकरणं तर्हीदम् । तस्य स्वरितस्यादितोऽर्द्धह्रस्वमुदात्तसञ्ज्ञं भवतीति ।

---

प्र०–सूर्ये'ति स्वरितः प्लुतः । मात्रच इति । अर्द्धह्रस्वशब्दः प्रमाणवाची रूढिशब्दः । व्युत्पत्त्यर्थं तु ह्रस्वस्योपादानम् । अर्द्धमात्रा त्वनेनाऽभिधीयते । ततः प्रमेये मात्रचं विधाय तस्य 'प्रमाणे ल' इति लोपः क्रियते । तत्र यथा ह्रस्वे बुद्ध्याऽर्द्धमात्रा विभज्यते, एवं दीर्घप्लुतयोरपीति ।

किमर्थमिति । नैवम्भूतमिहान्वाख्यानं दृश्यते, सन्ध्यक्षरादिविषयस्यापि विभागस्यान्वाख्यानप्रसङ्गादिति प्रश्नः । आमिश्रीभूतमिवेति । तत्त्वतोऽस्त्येव विभाग इति इवशब्द उपात्तः । क्षीरोदके इति । नियतव्यक्तिविवक्षायां जातिपरत्वाऽभावादेकवद्भावो न कृतः । उत्तरा विद्येति । पुरा कल्पे पूर्वा, अद्यत्वे तूत्तरेति पस्पशायां व्याख्यातम् । सञ्ज्ञाकरणमिति । प्रदेशेषु चैकदेशप्रत्यायनात्समुदाय आक्षेप्स्यते इति भावः ।

---

उ०–तस्ये'ति द्वित्वम् । नन्वर्द्धह्रस्वशब्दस्यावयववचनत्वेन प्रमाणवचनत्वाभावात्कथं मात्रजत आह—अर्धह्रस्वेति । रूढ्याऽर्धमात्रारूपप्रमाणविशेषोऽनेनोच्यते, न ह्रस्वस्य अर्द्धमित्यर्थं इति भावः । व्युत्पत्त्यर्थमिति । अनुलोमादिवदिति भावः । एवमपि दीर्घादावर्द्धमात्राकालावयवविभागाभावाद्दोष एवेत्यत आह—तत्र यथेति । उभयोरपि समा गतिरिति भावः । ननु गुणयोः प्रमाणोद्देशविशेषप्रतिपादनरूपान्वाख्यानार्थत्वात् प्रश्नोऽनुपपन्नोऽत आह—नैवम्भूतमिति । सन्ध्यक्षरादीति । अवर्णभागः पूर्व इकारादिभाग उत्तर इत्येवं रूपस्येत्यर्थः । तत्त्वत इति । अन्यथान्वाख्यानासङ्गतिरिति भावः । भाष्ये—स्थानेत्यादि । स्थानानि कण्ठादीन्यष्टौ । करणम्—आभ्यन्तरप्रयत्नः, अनुप्रदानं—बाह्यप्रयत्नः । उत्तरयति—व्याकरणं नामेति । छन्दः-शास्त्रेषु प्रातिशाख्यशिक्षादिषु । अभिविनीतः—शिक्षितः । उपलब्ध्या—

---

१–'अवकाशे' इत्यधिकः पाठः क्वचित् । २–स्थानकरणनादानुप्रदानानि' इति महर्षिदयानन्दकृताऽष्टाध्यायीभाष्ये उद्धृतो भाष्यपाठः । ( ११२ पृ० द्वि० सं० )

किं कृतं भवति ? त्रिरुदात्तप्रदेशेषु स्वरितग्रहणं न कर्तव्यं भवति। 'उदात्तस्वरितपरस्य सन्नतरः' [ १. २. ४० ] 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' [ ८. २. ४ ] 'नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्' [ ८. ४. ६७ ] इति।

एतदपि नास्ति प्रयोजनम्। सञ्ज्ञाकरणं हि नाम यतो न लघीयः। कुत एतत् ? लघ्वर्थं हि सञ्ज्ञाकरणम्। लघीयश्च त्रिरुदात्तप्रदेशेषु स्वरितग्रहणं न पुनः सञ्ज्ञाकरणम्। त्रिरुदात्तप्रदेशेषु स्वरितग्रहणे नवाक्षराणि, सञ्ज्ञाकरणे पुनरेकादश।

एवं तर्ह्युभयमनेन क्रियते। अन्वाख्यानं च सञ्ज्ञा च। कथं पुनरेकेन यत्नेनोभयं लभ्यम् ? लभ्यमित्याह। कथम् ? अन्वर्थग्रहणात्। अन्वर्थग्रहणं विज्ञास्यते। तस्य स्वरितस्यादितोर्धह्रस्वमुदात्तसञ्ज्ञं भवति। ऊर्ध्वमात्तमिति चात उदात्तम्।

यदि तर्हि सञ्ज्ञाकरणम्, उदात्तादेर्यदुच्यते तत्स्वरितादेरपि प्राप्नोति। अन्वाख्यानमेव तर्हीदं मन्दबुद्धेः।

**स्वरितस्यार्द्धह्रस्वोदात्तादोदात्तस्वरितपरस्य सन्नतरादूर्ध्वमुदात्तादनुदात्तस्य स्वरितात् कार्य, स्वरितादिति सिद्ध्यर्थम् ॥ १ ॥**

प्र०-उभयमिति। सत्यप्यक्षरगौरवे महतोऽर्थस्य व्याप्तिर्भवति, सुखेन विभागस्यापि परिज्ञानात्। उदात्तादेरिति। उदात्तादेः प्रतिपादकं यच्छास्त्रमाद्युदात्तश्चेति तत्स्वरितादेरपि प्रतिपादकं प्राप्नोति ततश्च प्रत्ययः कदाचित् स्वरितादिरपि स्यादित्यर्थः। अन्वाख्यानमेवेति। न केवलमिदं सूत्रम्। यावता उच्चैरुदात्त इत्यादिसञ्ज्ञाकरणमपि मन्दबुद्धिप्रतिपादनार्थम्। सिद्धो हि वेदाध्यायिनां शिक्षायामेवोदात्तादिव्यवहारः। स्वरितस्येति। 'आ अर्धह्रस्वोदात्ता'दित्याकारप्रश्लेषः। इयं नवसूत्री 'उदात्तादनुदात्तस्य स्वरित' इत्येतस्मात्परा कर्तव्या। तेन 'स्वरितात्संहितायामनुदात्ताना'मित्येक-

उ०-व्युत्पत्त्या। एवं तर्हि इदमपि व्यर्थमित्याह—यद्येवमिति। ननु प्रदेशेषु स्वरितग्रहणाऽकरणे उदात्तग्रहणेनावयवस्य बोधनेपि तत्स्थाने यणोऽभावादुदात्तस्वरितयोर्यण इत्यत्रानुपपत्तिरेवेत्यत आह—आक्षेप्स्यत इति। तत्र सूत्रे एतदुपस्थितिसामर्थ्यादिति भावः। सत्यपीति। प्रयोजनविशेषलाभाद् गौरवं न दोषायेति भावः। भाष्ये—ऊर्ध्वमात्तमिति। ताल्वादिपूर्ध्वदेशे उच्चारणेन गृहीतमित्यर्थः। उदात्तादेरुच्यमानं कार्यमिह शास्त्रे न किञ्चिदत आह—उदात्तादेरिति। इदमुपलक्षणमन्तोदात्तस्यापि। एवम्भूतमन्वाख्यानं न दृश्यत इति यदुक्तं

स्वरितस्यार्द्धह्रस्वोदात्ताद् आ 'उदात्तस्वरितपरस्य सन्नतरः' [ १. २. ४० ] इत्येतस्मात्सूत्रादिदं सूत्रकाण्डमूर्ध्वम्—'उदात्तादनुदात्तस्य स्वरितः' [ ८. ४. ६६ ] इत्यतः कर्त्तव्यम्। किं प्रयोजनम्? 'स्वरितादिति सिद्ध्यर्थम्'। स्वरितादिति सिद्धिर्यथा स्यात्—'स्वरितात्संहितायामनुदात्तानाम्' [ १. २. ३ ] इति। इमं मे गङ्गे यमुने सरस्वति शुतुद्रि†। क्व तर्हि स्यात्? यः सिद्धः स्वरितः—'कार्यं'‡ देवदत्तयज्ञदत्तौ'।

## स्वरितोदात्तार्थं च ॥ २ ॥

स्वरितोदात्तार्थं च तत्रैव कर्तव्यम्। 'न सुब्रह्मण्यायां स्वरितस्य तूदात्तः' [ १. २. ३७ ]। इन्द्र आगच्छ। क्व तर्हि स्यात्? यः सिद्धः स्वरितः—सुब्रह्मण्योमिन्द्रागच्छ।

## स्वरितोदात्ताचाऽस्वरितार्थम् ॥ ३ ॥

स्वरितोदात्ताचाऽस्वरितार्थं तत्रैव कर्तव्यम्। इन्द्रागच्छ।

प्र०–श्रुतौ विधीयमानायामुदात्तादिति स्वरितस्य सिद्धत्वं भवति। तेन 'मे' शब्दात् स्वरितात्परेषां गङ्गेप्रभृतीनामामन्त्रितत्वादनुदात्तानामेकश्रुतिर्भवति। क्व तर्हीति। आश्रयात्सिद्धत्वं स्वरितस्य भविष्यतीत्यभिप्रायः। कार्यमिति। अत्र 'तित्स्वरित'मिति स्वरितत्वम्, तच्च सिद्धमित्यत्रैव स्यात्। स्वरितोदात्तार्थमिति। स्वरितस्य य उदात्तो विधीयते स आष्टमिकस्याऽसिद्धत्वान्न प्राप्नोति। सुब्रह्मण्योमिति। सुब्रह्मणि साधुरिति यत्प्रत्ययस्तित्त्वात्स्वरितः। ततष्टाबेकादेशः स्वरितानुदात्तयोरान्तरतम्यात्स्वरितः। तत ओमाङोश्चेत्युदात्तस्वरितयोरेकादेशः स्वरित एव, तस्य सिद्धत्वादुदात्तत्वम्। सुब्रह्मण्यायामिति च स्वरूपमेव गृह्येत न तु निगदो लक्ष्येत। स्वरितोदात्ताच्चेति।

उ०–तत्परिहरति—न केवलमिति। 'उच्चैरुदात्त'इत्यादिकमपि तादृशमिति भावः। भाष्ये इदमित्यस्योच्चैरुदात्त इत्यादिकमित्यर्थो बोध्यः। आकारप्रश्लेष इति। तदभावेऽर्द्धह्रस्वोदात्तादिति पञ्चम्यनन्विता स्यादिति भावः। आङ्द्वयमारम्भाभिविध्योरिति, तत्फलितमाह—इयं नवेति। तेन मेशब्दादिति। फिट्स्वरेणेदमोऽन्तोदात्तत्वादिममित्येकादेशस्वरेणान्तोदात्तं, ततो मेशब्दस्यानुदात्तं सर्वमपादादावित्यनुदात्तत्वे इममित्युदात्तात्परत्वेनोदात्तादनुदात्तस्येति। स्वरितत्वं ततो गङ्गेप्रभृतीनामामन्त्रितस्येत्याष्टमिकेन निहतानामेकश्रुतिः। अत्र तिदिति। तदेकादेशोप्यान्तरतम्यात् स्वरितः। करोतेर्ण्यति कार्यम्। तदुत्तरं देवदत्तयज्ञदत्तावित्यामन्त्रितस्य चेति निहतम्। भाष्ये—इन्द्र आगच्छेति। आद्युदात्तः, गच्छेति निहतम्। तत उदात्तादनुदात्तस्येति गकाराकारः स्वरितः। तस्यानेनोदात्तः। इन्द्रेत्यामन्त्रितमाद्युदात्तं, द्वितीयो वर्णं उदात्तादिति स्वरितः, तस्याप्यनेनोदात्तः। स्वरित एवेति।

† ऋ० वे० १०, ७५. ५. ‡ तित्स्वरितम् ६. १. १८५.

## स्वरितपरसन्नतरार्थश्च ॥ ४ ॥

स्वरितपरसन्नतरार्थं च तत्रैव कर्तव्यम् । 'उदात्तस्वरितपरस्य सन्नतरः [ १. २. ४० ] माणवकजटिलकाध्यापक न्यङ्× । क्व तर्हि स्यात् ? यः सिद्धः स्वरितः—माणवक जटिलकाभिरूपक क्व+ । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

**देवब्रह्मणोरनुदात्तवचनं ज्ञापकं स्वरितादिति सिद्धत्वस्य ॥ ५ ॥**

देवब्रह्मणोरनुदात्तवचनं[1] ज्ञापकं सिद्ध इह स्वरित इति ।

यद्येतज्ज्ञाप्यते, स्वरितोदात्तात्परस्यानुदात्तस्य स्वरितत्वं प्राप्नोति । न ब्रूमो देवदत्तब्रह्मणोरनुदात्तवचनं ज्ञापकं सिद्ध इह स्वरित इति । किं तर्हि ? परमेतत्सूत्रकाण्डमिति ॥३२॥

प्र०—आगच्छेत्यत्र 'ग'शब्दाकारस्य स्वरितस्योदात्तत्वे कृते 'उदात्तादनुदात्तस्य स्वरित' इति 'छ'शब्दाकारस्य स्वरितत्वं प्राप्नोति । न्यङ्ङिति । 'न्यधी चे'ति पूर्वपदप्रकृतिस्वरस्तत 'उदात्तस्वरितयोर्यण' इत्यकारः स्वरितस्तस्याऽसिद्धत्वात् पूर्वस्य सन्नतरो न स्यात् । देवब्रह्मणोरिति,—लिङ्गात्पाठक्रमबाधेन क्रमान्तरमाश्रीयतेऽन्यथा स्वरितस्यासिद्धत्वादनुदात्तविधानमनर्थकं स्यात् । यद्येतदिति । स्वरितस्यैव सिद्धत्वमनेन लिङ्गेन ज्ञाप्यत इति प्रश्नः । न ब्रूम इति । सन्निवेशान्तरज्ञापनार्थं लिङ्गं व्याख्यायत इत्यर्थः ॥३२॥

उ०—एकादेश उदात्तेनेत्यत्रानुदात्तस्येत्यनुवृत्तेः स नेति भावः । न चेको गुणेति सूत्रे 'एङि पररूप'मित्यत्र रूपग्रहणस्य परस्य यादृशं रूपं तादृश एव यथा स्यादिति फलमुक्तमिति अत्र ओम उदात्तत्वादुदात्त एकादेशो युक्त इति वाच्यम् । 'तृज्वत्क्रोष्टु'रिति सूत्रभाष्यप्रमाणेन स्वरस्य रूपत्वाऽभावात् । ननु सुब्रह्मण्यामिति निगदाभिधानादयमेव विषयो न युक्त इत्यत आह—सुब्रह्मण्यायामिति । 'स्वरितस्य तूदात्त' इति वाक्ये सुब्रह्मण्याशब्दस्वरूपमेव गृह्यतेत्यर्थः । उदात्तत्वे कृते इति । 'न सुब्रह्मण्याया' मित्यनेन । उत्कर्षे त्वस्यासिद्धत्वाच्छशब्दाकारोऽनुदात्त एवेत्यर्थः । न्यधी चेति । अञ्चतौ वप्रत्ययान्त उत्तरपदे नि अधि इत्येतत्पूर्वपदं प्रकृतिस्वरमिति सूत्रार्थः । 'न्यङ्स्वरौ स्वरिता'विति फिट्सूत्रमेतदर्थस्यैवानुवादकमिति भावः । क्वेति,—अप्रत्ययान्तत्वात्स्वरितम् । देवब्रह्मणोरिति । अनयोः सुब्रह्मण्यानिगदान्तर्गतयोः स्वरितस्योदात्तत्वे प्राप्तेऽनेनानुदात्तत्वं क्रियते । देवा ब्रह्माण इति चामन्त्रिताद्युदात्तः, ततः शेषनिघाते 'उदात्तादनुदात्तस्ये ति स्वरितः । स्वरितस्यैवेति । स्वरितस्यैव सिद्धत्वमात्रज्ञापने त्वस्य प्रकरणस्यासिद्धत्वे मानाऽभावात् । 'न सुब्रह्मण्ये'ति विहितस्वरितोदात्तगकारात्परत्वेनेन्द्र आगच्छेत्यादौ छकाराकारस्याष्टमिकः स्वरितः स्यादित्युत्कर्ष एव ज्ञाप्यत इति बोध्यम् । असिद्धकाण्डे पठनमेव—सन्निवेशान्तरम् । न च 'देवब्रह्मणो'रित्यत्राश्रयात् सिद्धत्वमिति वाच्यम् । इष्टानुरोधेनैतत्प्रकरणोत्कर्षद्वारैव तत्सिद्धत्वज्ञापनादिति दिक् ॥३२॥

× न्यधी च ६. २. ५३; उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ८. २. ४. + किमोऽत् ५. ३. १२; तित्स्वरितम् ६. १. १८५.

## एकश्रुति दूरात्सम्बुद्धौ ॥ १ । २ । ३३ ॥

किमिदं परिभाषिक्याः सम्बुद्धेर्ग्रहणम् 'एकवचनं सम्बुद्धिः' [ २. ४. ४६ ] इति, आहोस्विदन्वर्थग्रहणं—सम्बोधनं सम्बुद्धिरिति ? किं चातः ? यदि पारिभाषिक्याः सम्बुद्धेर्ग्रहणं देवा ब्रह्माणः† अत्र न प्राप्नोति। अथान्वर्थग्रहणं, न दोषो भवति। यथा न दोषस्तथास्तु।

किं पुनरियमेकश्रुतिरुदात्ता, आहोस्विदनुदात्ता ? नोदात्ता। कथं ज्ञायते ? यदयम् 'उच्चैस्तरां वा वषट्कारः' [ १. २. ३५ ] इत्याह। कथं कृत्वा ज्ञापकम् ? अतन्त्रं तरनिर्देशः। यावदुच्चैस्तावदुच्चैस्तरामिति।

यदि तर्हि नोदात्ता, अनुदात्ता। अनुदात्ता च न। कथं ज्ञायते ? यदयम्—उदात्तस्वरितपरस्य सन्नतरः' [ १. २. ४० ] इत्याह। कथं कृत्वा ज्ञापकम् ? अतन्त्रं तरनिर्देशः। यावत्सन्नस्तावत्सन्नतर इति। सैषा ज्ञापकाभ्यामुदात्तानुदात्तयोर्मध्यमेकश्रुतिरन्तरालं ह्रियते।

अपर आह—किमियमेकश्रुतिरुदात्ता, आहोस्विदनुदात्ता ? उदात्ता। कथं ज्ञायते ? यदयम् 'उच्चैस्तरां वा वषट्कार' इत्याह। कथं कृत्वा ज्ञापकम् ? तन्त्रं तरनिर्देशः। उच्चैर्दृष्ट्वा उच्चैस्तरामित्येतद्भवति।

यदि तर्ह्युदात्ता नानुदात्ता। अनुदात्ता च। कथं ज्ञायते ? यदमु'दात्त-

प्र०— एक। किमिदमिति। 'कृत्रिमाकृत्रिमयोः कृत्रिमे संम्प्रत्यय' इत्यु'भयगतिरिह शास्त्रे भवती'ति च न्यायद्वयसम्भवात्प्रश्नः। यथा न दोष इति। नहि दूरादिति विशेषणमेकवचनस्योपपद्यते। सम्बोधनस्य तु क्रियारूपत्वादपादानतया दूरादिति विशेषणसम्भवः। व्याप्तिश्चान्वर्थग्रहणेन भवति। किं पुनरिति। उदात्तानुदात्तानुरागवशात्प्रश्नः। यावदुच्चैरिति। यदि चोदात्तैकश्रुतिरभविष्यत्तदा यज्ञकर्मणीत्येकश्रुतेः सिद्धत्वादुच्चैस्तरां वा वषट्कार इति सूत्रं नाकरिष्यदित्यर्थः। यावत्सन्न इति। तत्रैकश्रुत्यनुवृत्त्यैव सिद्धत्वात्सन्नतरविधानमनर्थकं स्यात्। अन्तरालं ह्रियत इति। हरतेर्द्विकर्मकत्वात्प्रधानकर्मणि लकारः। क्षीरोदकवदुदात्तानुदात्तयोर्भेदतिरोधानमेकश्रुतिरित्यर्थः। स्वरिते तु विभागेन तयोरुपलब्धिः। उच्चैर्दृष्ट्वेति। 'सोमस्याग्ने व्रीही

उ०— एकश्रुति। 'एकवचनं सम्बुद्धि'रित्युक्तेर्विचारानुपपत्तिरत आह—कृत्रिमेति। अकृत्रिमग्रहणं सामर्थ्याद्भवतीत्यतः सामर्थ्यं दर्शयति—नहीति। ननु कृत्रिमग्रहणेपि महासञ्ज्ञाबलाद् दूरात्सम्बोधनार्थकैकवचनान्तस्येत्यर्थलाभोऽत आह—व्याप्तिश्चेति। अस्याः स्वरान्तरत्वप्रसिद्धेः प्रश्नानुपपत्तिरत आह—उदात्तेति। उच्चैस्तरामिति। तेनोदात्तमात्रस्य

† देवब्रह्मणोरनुदात्तः १. २. ३८. १—'उत' पा०।

स्वरितपरस्य सन्नतरः' इत्याह । कथं कृत्वा ज्ञापकम् ? तन्त्रं तरनिर्देशः । सन्नं दृष्ट्वा सन्नतर इत्येतद्भवति ।

त एते तन्त्रे तरनिर्देशे सप्त स्वरा भवन्ति—[१]उदात्तः, [२]उदात्ततरः, [३]अनुदात्तः, [४]अनुदात्ततरः, [५]स्वरितः [६]स्वरिते य उदात्तः सोऽन्येन विशिष्टः, [७]एकश्रुतिः सप्तमः ॥३३॥

## न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ १ । २ । ३७ ॥

प्र०—वौष'डित्यत्र मन्त्रे 'यज्ञकर्मणी'त्यनेनैकश्रुतिर्विहिता, तदपेक्षया वौषट्शब्दस्योदात्ततरत्वं विधीयते । सति चैकश्रुतेरुदात्तानुरागे तदपेक्षः प्रकर्षो युज्यते । यथा मलिने वस्त्रे शौक्ल्यानुबन्धसद्भावात्तदपेक्षो वस्त्रान्तरेषु शुक्लतरव्यपदेश इत्यर्थः । सन्नं दृष्ट्वेति । एकश्रुतिगतमित्यर्थः । सोऽन्येनेति । अनुदात्तेनोपरक्तः । यथा शुक्लः पटो वर्णान्तरयुक्तेन द्रव्येणेत्यर्थः । कस्यचित्तु स्वरितस्योदात्तभागो नानुदात्तेनानुरज्यते इति पृथक् स्वरितो निर्दिष्टः । स्वरितस्य भेदा जात्यस्वरादयोऽष्टौ, ते भाष्यकारेणाप्रकृतत्वादिह नोक्ताः । इयं चैकश्रुतिरप्लुतात्सम्बोधनवाक्यस्य भवति । प्लुतस्तूदात्त एव, विधानसामर्थ्यात् ॥३३॥

न सु । ओकार उदात्त इति । नेदमपूर्वविधानं, सूत्रव्यापार एव तु प्रदर्श्यते । यथा चोदात्त ओकारस्तथा 'तस्यादित'इत्यत्रोक्तम् । 'ओमभ्यादाने' इति तु प्लुतोदात्तत्वं

उ०—विधानात्पक्षे एकश्रुतेश्च विधानादितिभावः । भाष्ये सैषा ज्ञापकाभ्यामिति । ज्ञापकाभ्यां कर्तृभ्याम् एकश्रुतिरुदात्तानुदात्तयोर्मध्यस्थानं प्राप्यत इत्यर्थः । मध्यमित्यस्यान्तरालमिति व्याख्या । हरतेरिति । व्यापारद्वयार्थत्वात् 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणा'मिति वचनाच्च । स्वरिताद्विशेषं दर्शयितुमाह—क्षीरेति । सति चेति । वौषड्व्यतिरिक्तमन्त्रभागस्योदात्तत्वे सत्येव तदपेक्षप्रकर्षप्रत्ययोपपत्तिरिति भावः । एकश्रुतिगतोदात्तापेक्षया प्रकर्षानुपपत्तिमाशङ्क्य दृष्टान्तेन साधयति—यथेति । अत्रापि पक्षे भेदतिरोधानमेव स्वरिताद्विशेषस्तेनैव चोभयरूपतेति बोध्यम् । एवं च सन्नतर एकश्रुतिविषये एवेति बोध्यम् । सप्तस्वरमध्ये उदात्ततरानुदात्ततरावेकश्रुतिगतोदात्ताद्यपेक्षयैवातिशयविशिष्टौ न तु स्वतन्त्रोदात्तापेक्षया । अनुदात्तेनेति । उदात्तस्वरितपरत्वे इत्यर्थः । कस्य चिदिति । तदपरस्येत्यर्थः । प्लुतस्त्विति । तस्य वैकल्पिकत्वाद्यदा स जायते तदेत्यर्थः ॥३३॥

न सुब्रह्मण्या । न चात्रोदात्तोऽन्यथासिद्ध इत्याह—ओमिति । अभ्यादानपदेनाऽयज्ञकर्मोच्यत इति भावः । अत एव जपेऽपि तं प्लुतमेव जपन्ति । अभ्यादानं प्रारम्भ इति तु

१—"शतपथब्राह्मणे तृतीयकाण्डे तृतीयप्रपाठके प्रथमब्राह्मणस्य सप्तदशीं कण्डिकामारभ्य विंशतिकण्डिकापर्यन्तं यो वेदमन्त्रस्य व्याख्यानरूपः पाठोऽस्ति, तस्य सुब्रह्मण्या-सञ्ज्ञाऽस्ति ।" ( इत्यष्टाध्यायीभाष्ये महर्षिदयानन्दः । पृ० ११८ द्वि० सं० )

"नितराङ्क्यत इति निगदः । परप्रत्यायनार्थमुच्चैः पठ्यमानः पादबन्धरहितो यजुर्मन्त्रविशेषः ।" इति शब्दकौस्तुभे भट्टोजीदीक्षितः ।

**सुब्रह्मण्यायामोकार उदात्तः ॥ १ ॥**

सुब्रह्मण्यायामोकार उदात्तो भवति । 'सुब्रह्मण्योम्' ।

**आकार आख्याते परादिश्च ॥ २ ॥**

आकार आख्याते परादिश्चोदात्तो भवति । 'इन्द्र आगच्छ' । 'हरिव आगच्छ' ।

**वाक्यादौ च द्वे द्वे ॥ ३ ॥**

वाक्यादौ च द्वे द्वे उदात्ते भवतः । इन्द्र आगच्छ । हरिव आगच्छ ।

**मघवन्वर्जम् ॥ ४ ॥**

[ मघवन्नित्येतं वर्जयित्वा ] आगच्छ मघवन् ।

**सुत्यापराणामन्तः ॥ ५ ॥**

सुत्यापराणामन्त उदात्तो भवति । 'द्व्यहे सुत्याम्' 'त्र्यहे सुत्याम्' ।

**असावित्यन्तः ॥ ६ ॥**

---

प्र०—न भवति, तस्यायज्ञकर्मविषयत्वादित्याहुः । इन्द्र आगच्छेतीन्द्रशब्द आमन्त्रितत्वादाद्युदात्तः, तस्य द्वितीयो वर्णो वर्ज्यमानस्वरेणानुदात्तः । स 'उदात्तादनुदात्तस्य स्वरित' इति स्वरितः, तस्यानेनोदात्तत्वम् । आकार आख्यात इति । तिङन्ते गच्छशब्दे परत आकार उपसर्गत्वादुदात्तः । परादिश्चेति । अकारात्परस्य गच्छेत्यस्यादिरुदात्तः । 'तिङ्ङतिङ' इति निघाते पूर्ववत्स्वरिते च कृतेऽनेनोदात्तविधानात् । वाक्यादौ चेति । अनन्तरोक्तप्रक्रिययेति भावः । मघवन्वर्जमिति । मघवन्नित्यस्यामन्त्रितस्येति निघातविधानात् । सुत्यापराणामिति । सुत्याशब्दः परो येभ्यस्तेषामित्यर्थः । द्व्यह इति । टजन्तत्वादन्तोदात्तत्वम् । असावित्यन्त इति । इदं वाच-

---

उ०—वृत्तिः तद्रीत्या त्वत्र प्राप्तिरेव नेति बोध्यम् । स्वरितस्य तूदात्त इत्यंशस्योदाहरणान्तरं प्रसङ्गादाह—इन्द्र आगच्छेति । इन्द्रशब्द इति । हरिवच्छब्दस्याप्युपलक्षणम् । हरिव इति मतुवसोरिति रुः । अनन्तरेति । 'इन्द्र आगच्छेतीन्द्रशब्द' इत्याद्यनुपदोक्तयेति भावः । एतन्निमित्तः शेषनिघातस्तु न, अस्यासिद्धत्वात् । भाष्ये द्वे द्वे इति । वर्णरूपे इत्यर्थः । श्वःसुत्यामागच्छ मघवन्निति वाक्यम् । तत्र श्वःशब्दो निपातत्वादुदात्तः, सुत्याशब्दः सञ्ज्ञायां समजेति क्यबन्तोऽन्तोदात्तः तत्रोदात्त इत्यनुवर्त्तते । निघातविधानादिति । पूर्वं छकारस्याप्यनुदात्तत्वेन स्वरिताऽप्राप्त्या 'स्वरितस्य तूदात्त' इत्यस्याऽप्राप्तेरिति भावः । तत 'एकश्रुति दूरा'दित्येकश्रुतिस्तन्नेति तत्त्वम् । सुत्याशब्द इति । सर्वनामकार्याऽभावाद् बहुव्रीहित्व-

---

१—इदमसांवैत्रिकम् ।

असावित्यन्त उदात्तो भवति । गार्ग्यो यजते । 'वात्स्यो यजते' ।

**अमुष्येत्यन्तः ॥ ७ ॥**

अमुष्येत्यन्त उदात्तो भवति । दाक्षेः पिता यजते ।

**स्यान्तस्योपोत्तमं च ॥ ८ ॥**

स्यान्तस्योपोत्तममुदात्तं भवति, अन्तश्च । गार्ग्यस्य पिता यजते । वात्स्यस्य पिता यजते ।

**वा नामधेयस्य ॥ ९ ॥**

वा नामधेयस्य स्यान्तस्योपोत्तममुदात्तं भवति । देवदत्तस्य पिता यजते । देवदत्तस्य पिता यजते ॥३७॥

**देवब्रह्मणोरनुदात्तः ॥ १ । २ । ३८ ॥**

**देवब्रह्मणोरनुदात्तत्वमेके ॥ १ ॥**

---

प्र०-निकम् । असाविति प्रथमान्तोपलक्षणम् । गार्ग्य इति । ञित्त्वादाद्युदात्तत्वे प्राप्ते ऽन्तोदात्तत्वमिति । अमुष्येति । षष्ठ्यन्तोपलक्षणमेतत् । दाक्षेरिति । पूर्वपदाद्युदात्तत्वं प्राप्तम् ॥३७॥

देव । अनुदात्तत्वमेक इति । ये 'देवा ब्रह्माणः' इति पदयोर्वैयधिकरण्यमाहुस्तदा हि पूर्वस्यामन्त्रितस्याऽविद्यमानत्वाद् द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे शेषनिघाते च स्वरितत्वे च कृतेऽनेनानुदात्तत्वं क्रियते । यदा तु देवा ब्रह्माण इत्यनयोः समानाधिकरण्यं तदा 'विभाषितं विशेषवचने बहुवचन'मिति पक्षे विद्यमानत्वादा-

---

उ०-निश्चयः । श्वःशब्दस्थाने 'द्व्यहे इत्याद्यूहः । इदमिति । अग्रिमाण्यप्येवम् । स्यान्तस्येति । चेन उपोत्तमान्त्योदात्तयोः समुच्चयः ॥३७॥

देवब्रह्मणो । भाष्योक्तमेक इति व्याचष्टे—ये इति । ये आहुस्ते एके इत्यर्थः । एके इत्युक्तिर्न विभाषाग्रहणानुवृत्तिकृता किन्तु ब्रह्मांशे सूत्रारम्भानैयत्यबोधिकेति भावः । तदा हि—वैयधिकरण्ये हि । अविद्यमानत्वादिति । 'आमन्त्रितं पूर्वं'मित्यनेन 'एके' इत्यनेन ध्वनितं मतान्तरं दर्शयितुमाह—यदा त्विति । नानेनार्थ इति । 'ब्रह्माण' इत्यत्रानुदात्तार्थंनेत्यर्थः । देवार्थं तु कार्यमेव । भाष्ये त्वेवं योजना—देवब्रह्मणोर्मध्ये ब्रह्मन्शब्दस्यानेनानुदात्तत्वमेके वैयधिकरण्यवादिन इच्छन्ति । सामानाधिकरण्यपक्षे 'दे' इत्येक एवोदात्तः । वैयधिकरण्यवादिनां तु 'दे' इति 'ब्र' इति च द्वयमुदात्तम् । इदमेव ध्वनयितुं द्विःपाठ उदाहरणस्येति बोध्यम् । केचित्तु वेदार्थस्याऽव्यवस्थितत्वे मानाऽभावादिदं चिन्त्यम् । किञ्च पक्षे विद्यमानत्वेपि पक्षेऽविद्यमानत्वस्यापि सत्त्वेन 'ब्रे'त्यस्योदात्तस्याग्रिमस्यानुदात्तस्य च श्रवणाय

देवब्रह्मणोरनुदात्तत्वमेक इच्छन्ति । देवा ब्रह्माणः, देवा ब्रह्माणः ॥३८॥

**स्वरितात्संहितायामनुदात्तानाम् ॥ १ । २ । ३९ ॥**

**स्वरितात्संहितायामनुदात्तानामिति चेद् द्व्येकयोरैकश्रुत्यवचनम् १**

स्वरितात्संहितायामनुदात्तानामिति चेद् द्व्येकयोरैकश्रुत्यं वक्तव्यम् । आग्निवेश्यः पचतीति । किं पुनः कारणं न सिध्यति ? 'बहुवचननिर्देशात्' । बहुवचनेनायं निर्देशः क्रियते, तेन बहूनामेवैकश्रुत्यं स्याद् द्व्येकयोर्न स्यात् ।

नैष दोषः । नात्र बहुवचनेन निर्देशस्तन्त्रम् । कथं पुनस्तेनैव च नाम निर्देशः क्रियते, तच्चातन्त्रं स्यात् ? तत्कारी च भवांस्तद्द्वेषी च । नान्तरीयक-

प्र०-आमन्त्रितस्येति निघातस्य सिद्धत्वान्नानेनाऽर्थ इत्यन्येषां मतमिति मतभेदप्रदर्शनार्थमेक इत्युक्तम् ॥३८॥

स्वरि । द्व्येकयोरिति । पशुना यजेतेतिवत्सङ्ख्याया विवक्षितत्वात् । आग्निवेश्य इति । यञन्तत्वादादिरुदात्तः । शेषनिघातः । ततो द्वितीयो वर्ण उदात्तादिति स्वरितः, तस्मात्परौ द्वावनुदात्तौ । पचतीति । धातुरुदात्तः । शप्तिपावनुदात्तौ । ततः शबकारः स्वरितः, ततः पर एकोनुदात्तः । द्व्येकयोरित्यत्र द्विशब्देन द्वित्वमुच्यते, एकशब्देन चैकत्वम् । तेन द्वित्वे एकत्वे च सतीत्यर्थः । नात्रेति । 'तन्त्रशब्दोऽत्र प्रधानवाची, यथा ग्रहं सम्मार्ष्टीति सङ्ख्या न विवक्ष्यते तथेहापीत्यर्थः । तत्कारी चेति । असत्यां बहुत्वसङ्ख्यायां बहुवचनमेव न स्यादिति तद् विवक्षणीयम् । नात्र निर्देशस्तन्त्रमिति वचनात्तदेवाऽविवक्षितमिति विरोध इत्यर्थः । नान्तरीयकत्वादिति । शब्दसंस्कारार्थ-

उ०-सूत्रमावश्यकमेव । भाष्यं तु विभाषानुवृत्तिफलकमेव । तथा च पक्षे आमन्त्रितस्वरेणाद्युदात्तस्य देवशब्दस्य ब्रह्मन्शब्दस्य चान्तोऽनेनानुदात्तः । 'स्वरितस्य तूदात्त' इत्यस्यायमपवादः । सुप्तु तत्राऽनुदात्त एव । पक्षान्तरे तु पूर्वसूत्रेणान्तेप्युदात्ते एकश्रुतिदूरादित्येकश्रुतिः । अत एवैकश्रुतीति सूत्रे सम्बुद्धिपदार्थनिरूपणावसरे 'देवा ब्रह्माण' इत्यत्रैकश्रुतिरुक्ता भाष्ये । इदं च सूत्रं वृत्तावेवं व्याख्यातं—'सुब्रह्मण्यायां देवा ब्रह्माण इति पठ्यते तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेन तस्याऽनुदात्तो विधीयत' इति । एकश्रुतिसूत्रोदाहृतं देवा ब्रह्माण इति सुब्रह्मण्यानिगदस्थातिरिक्तमेवेत्यत्र न मानमित्याहुः ॥३८॥

स्वरितात् । सङ्ख्याया इति । 'अनुदात्तानामिति पदोपात्तव्यक्तिगताया' इति शेषः । उपात्तस्याऽविवक्षाकारणाऽभावादिति भावः । सङ्ख्येयप्रधानत्वे द्व्येकेषामिति स्यादत आह— द्वित्वमिति । नन्वेवं सङ्ख्याया ऐकश्रुत्यविधानायोगात्स्वष्ठयनुपपन्नेत्यत आह—तेनेति । अनुदात्तद्वित्वादौ सति तदधिकरणभूतानामैकश्रुत्यं वक्तव्यमिति भाष्यार्थः । तन्त्रशब्द इति । विवक्षितत्वलक्षणं प्राधान्यम् । भाष्ये—नात्रेति । अनुवादस्थल इत्यर्थः । व्याप्तिन्यायश्चाऽ-

त्वादत्रबहुवचनेन निर्देशः क्रियते—अवश्यं कयाचिद्विभक्त्या केनचिद्वचनेन निर्देशः कर्तव्य इति । तद्यथा—कश्चिदन्नार्थी शालिकलापं सपलालं सतुषमाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृजति । तथा कश्चिन्मांसार्थी मत्स्यान् सकण्टकान् सशकलानाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति । एवमिहापि नान्तरीयकत्वाद् बहुवचनेनेननिर्देशः क्रियते, अविशेषेणैकश्रुत्यं भवति ।

**अविशेषेणैकश्रुत्यमिति चेद्व्यवहितानामप्रसिद्धिः ॥ २ ॥**

अविशेषेणैकश्रुत्यमिति चेद्व्यवहितानामैकश्रुत्यं न प्राप्नोति—'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि'† ।

**अनेकमपीति तु वचनात्सिद्धम् ॥ ३ ॥**

अनेकमप्येकमपि स्वरितात्परं संहितायामेकश्रुति भवतीति वक्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तम्—'स्वरितात्संहितायामनुदात्तानामिति चेद् द्व्येकयोरैकश्रुत्यवचनम्', 'अविशेषेणेति चेद्व्यवहितानामप्रसिद्धि'रिति । नैष दोषः । कथम् ? एकशेषनिर्देशोयम् । अनुदात्तस्य चानुदात्तयोश्चानुदा-

प्र०—मेवात्र बहुत्वं विवक्ष्यते न तु कार्यसिद्ध्यर्थमित्यर्थः । तुषपलालानीति । तुषसहितानि पलालानीति तत्पुरुषः । द्वन्द्वे तु जातिवाचित्वादेकवद्भावप्रसङ्गः । एवं शकलकण्टकानीति । व्यवहितानामिति । स्वरितादिति पञ्चमीनिर्देशानन्तरस्यैव कार्येण भाव्यमिति—'इमं मे गङ्गे' इत्यत्र 'मे'शब्दात्स्वरितात्परस्यैकस्यैवानन्तरस्य स्यात्, न द्वितीयादीनां व्यवधानादित्यर्थः । एकशेषनिर्देशोयमिति । योगारम्भपक्षे वर्गत्रयो-

उ०—विवक्षाहेतुरिति बोध्यम् । विनार्थकाऽन्तराशब्दाद्भवार्थे छो गहादित्वात् । स्वार्थे कः, नञ्समासो नलोपाऽभावश्च पृषोदरादित्वान्नान्तरीयकशब्दे । ननु बहुत्वसङ्ख्याविवक्षापूर्वकत्वाद्बहुवचनस्य नान्तरीयकत्वमयुक्तमत आह शब्देति । शब्दकृतः संस्कारः—तदुच्चारणकृतमदृष्टं तदर्थमित्यर्थः । सौत्रं बहुवचनमिति तात्पर्यम् । न तु कार्येति । शब्दानां कार्यमर्थोपस्थितिः सा प्रकृते न विवक्षितेत्यर्थः । स[1]शल्कानिति पाठः । व्यवधानादित्यर्थ इति । बहुत्वविवक्षायां तु सामर्थ्यात्परिभाषाबाध इति भावः । योगारम्भे इति । एकशेषसूत्रारम्भे इत्यर्थः । एकशेषेपि त्रिप्रभृतिष्वेव स्यादत आह—वर्गत्रयेति । तात्पर्यवशाद्भिन्नसङ्ख्याक-

१—सशल्कानिति पाठो नागेशाभिमतः । † ऋ० वे० १०. ७५. ५,

त्तानां चानुदात्तानामिति। एवमपि षट्प्रभृतीनामेव प्राप्नोति। षट्प्रभृतिषु ह्येकशेषः परिसमाप्यते। प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति द्वयेकयोरपि भविष्यति ॥३९॥

अपृक्त एकाल्प्रत्ययः ॥ १।२।४१ ॥

**अपृक्तसञ्ज्ञायां हल्ग्रहणं स्वादिलोपे हलोऽग्रहणार्थम् ॥ १ ॥**

अपृक्तसञ्ज्ञायां हल्ग्रहणं कर्तव्यम्। एकहल्प्रत्ययोऽपृक्तसञ्ज्ञो भवतीति वक्तव्यम्। किं प्रयोजनम्? 'स्वादिलोपे हलोऽग्रहणार्थम्'। एवं हि स्वादिलोपे हलो ग्रहणं न कर्तव्यं भवति। 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' [ ६.१.६८ ] इत्यपृक्तस्येत्येव सिद्धम्।

अणिञोर्लुगर्थमल्ग्रहणम्। अणिञोर्लुगर्थमल्ग्रहणं कर्तव्यम्। किं प्रयो-

प्र०–पादानेनैकशेषः क्रियते। अनुदात्तयोरनुदात्तानामिति च कृते एकशेषे पुनरेकशेषः कर्तव्यः। आकृतिपक्षाश्रयेण तु प्रत्याख्याते सूत्रे जात्याख्यायामिति बहुवचनं कृतम्, ततश्चैकद्विबहुषु स्वरितात्परस्या जातेरानन्तर्येणोपलम्भात्सर्वेषामैकश्रुत्यस्य सिद्धत्वाद्दोषाऽभावः। एवमपीति। सहविवक्षायामेकशेषविधानात्समुदितानां कार्यप्रसङ्गः। प्रभृतिग्रहणेन चैकशेषवाक्येऽनुदात्तानामित्यनेनैव चतुरादयोऽप्यनुदात्ता गृह्यन्ते इति दर्शयति। प्रत्येकमिति। निर्देश एव सहविवक्षा। कार्यप्रवृत्तिस्तु प्रत्येकं यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युक्ते देवदत्तादयः पृथगेव भुञ्जते ॥३९॥

अपृक्त। स्वादिलोप इति। 'बिभेदे'ति णलोऽपृक्तग्रहणेनैव निवृत्तिः सिध्यतीत्यर्थः। अणिञोरिति। पदद्वयोच्चारणमेव गौरवमिति भावः। णवचनेति। लुगपवादो

उ०–लितेत्यर्थः। जातेः—अनुदात्तत्वजातेः। व्यक्तिद्वारा परत्वं, कार्यसम्बन्धश्चेति बोध्यम्। तत्राऽव्यवहितव्यक्तिद्वारैव सर्वगतजातेः परत्वं बोध्यम्। इदं चिन्त्यम्, एकैकव्यक्तिव्यङ्ग्यत्वाजातेस्तद्व्यक्तिद्वारकं परत्वं तद्व्यक्तिव्यङ्ग्याया। किं चार्धधातुके इति सूत्रस्थभाष्याद्व्यक्तिद्वारकं परत्वादि जातेरयुक्तमिति निरूपितं हलन्ताच्चेति सूत्रे। तस्मादेकशेषप्रत्याख्यानेपि भिन्नसङ्ख्याकलितप्रातिपदिकार्थानां तन्त्रं भिन्नसङ्ख्याकलितार्थप्रातिपदिकानां वा। जात्याख्यायामित्यस्यापि भाष्ये प्रत्याख्यातत्वेनेदमेव युक्तमिति परे। ननु वर्गत्रयोपादानेनैकशेषकरणादेवमपीत्याद्यनुपपन्नमत आह—सहविवक्षायामिति। एकया क्रियया गुणेन वाऽनेकस्य युगपत्सम्बन्धप्रतिपादनेच्छा सहविवक्षेत्यर्थः। 'षण्णा'मित्येव वक्तव्ये प्रभृतिग्रहणमधिकमत आह—प्रभृतीति। एकशेषवाक्ये—एकशेषविग्रहवाक्ये। निर्देश एवेति। बोधपूर्वेत्यर्थः। यथेति। तत्रैव 'मातापित्रोः श्राद्धं कुर्या'दित्यत्रेव चात्रापि निर्देश एव सहविवक्षेत्यदोषः ॥३९॥

अपृक्त ए। अपृक्तग्रहणेऽक्षराधिक्यादाह—पदद्वयेति। अपृक्तमित्यखण्डमिति भावः।

जनम् ? अणिञोर्लुकि ग्रहणं न कर्तव्यं भवति 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' [ २. ४. ५८ ] इत्यपृक्तस्येत्येव सिद्धम् ।

**अणिञोर्लुगर्थमिति चेण्णेऽतिप्रसङ्गः ॥ २ ॥**

अणिञोर्लुगर्थमिति चेण्णेऽतिप्रसङ्गो भवति । इहापि प्राप्नोति—फाण्टाहृतेरपत्यं माणवकः फाण्टाहृत इति† । णवचनसामर्थ्यान्न भविष्यति ।

**वचनप्रामाण्यादिति चेत्फञ्ञिनवृत्त्यर्थं वचनम् ॥ ३ ॥**

वचनप्रामाण्यादिति चेत्फञ्ञिनवृत्त्यर्थमेतत्स्यात् । फञतो मा भूदिति‡ ।

**पैलादिषु वचनात्सिद्धम् ॥ ४ ॥**

यद्येतावत्प्रयोजनं स्यात् पैलादिष्वेवास्य* पाठं कुर्वीत । तत्र पाठादन्येषामपि फञो निवृत्तिर्भवति । एवं सिद्धे सति यदयं णं शास्ति तज्ज्ञापयत्याचार्यो 'नास्य लुग्भवती'ति ।

तान्येतानि त्रीणि ग्रहणानि भवन्ति—अपृक्तसञ्ज्ञायां हल्ग्रहणं कर्तव्यम् । स्वादिलोपे हलो ग्रहणं न कर्तव्यम् । अणिञोर्लुकि ग्रहणं कर्तव्यम् । अल्ग्रहणेपि वै क्रियमाणे तान्येव त्रीणि ग्रहणानि भवन्ति—अपृक्तसंज्ञायामल्ग्रहणं कर्तव्यम् । स्वादिलोपे हलो ग्रहणं कर्तव्यम् । अणिञोर्लुकि ग्रहणं न कर्तव्यं भवति, अपृक्तग्रहणं कर्तव्यम् । तत्र नास्ति लाघवकृतो विशेषः ।

अयमस्ति विशेषः । अल्ग्रहणे क्रियमाणे एकग्रहणं न करिष्यते । कस्मान्न भवति—दर्विः जागृविः† ? अलेव यः प्रत्ययः । किं वक्तव्यमेतत् ? नहि ।

प्र०-णो विज्ञास्यते । अन्यथाऽण एव लुकि सिद्धे णविधानमनर्थकं स्यादित्यर्थः । फञ्ञिनवृत्त्यर्थमिति । यञिञोश्चेति प्राप्तस्य फञो बाधनार्थं णवचनं स्यात् तस्य च लुक् स्यादेवेत्यर्थः । कस्मान्न भवतीति । प्रत्ययस्य विशेषणमल्ग्रहणमिति तदन्तविधि॰

उ०-युवापत्यसम्प्रत्ययार्थत्वाण्णस्य कथं सामर्थ्यमत आह—लुगपेति । अण एव—तस्यापत्यमिति सामान्यविहितस्य । प्राप्तस्येति । 'अणपवादत्वेने'ति शेषः । तदेवं णस्य लुगभावं प्रसाध्य हल्ग्रहण इवाऽल्ग्रहणेपि त्रीण्येव पदानीति पक्षद्वयसाम्यमित्याह—भाष्ये—तानीति । अनेन पदसाम्ये मात्रावैषम्यमकिञ्चित्करमिति सूचितम् । ननु प्रत्ययेनाऽलि विशेष्यमाणे

† फाण्टाहृतिमिमताभ्यां णफिञो ४. १. १५. ‡ यञिञोश्च ४. १. १०१. * पैलादिभ्यश्च २. ४. ५९.
† वेरपृक्तस्य ६. १. ६७.

कथमनुच्यमानं गंस्यते ? अल्ग्रहणसामर्थ्यात् । यदि च योऽल् चान्यश्च तत्र स्यात्, अल्ग्रहणमनर्थकं स्यात् ।

हल्ग्रहणेऽपि वै क्रियमाणे एकग्रहणं न करिष्यते । कस्मान्न भवति— दर्विः जागृविः ? हलेव यः प्रत्ययः । किं वक्तव्यमेतत् ? नहि कथमनुच्यमानं गंस्यते ? हल्ग्रहणसामर्थ्यात् । यदि च यो हल् चान्यश्च तत्र स्यात्, हल्ग्रहणमनर्थकं स्यात् । अस्त्यन्यद्धल्ग्रहणस्य प्रयोजनम् । किम् ? हलन्तस्य यथा स्यादजन्तस्य मा भूदिति ।

एवं तर्हि सिद्धे सति यदल्ग्रहणे क्रियमाणे एकग्रहणं करोति, तज्ज्ञापयत्याचार्यः—'अन्यत्र वर्णग्रहणे जातिग्रहणं भवती'ति । किमेतस्य ज्ञापने

प्र०—सद्भाव इति मत्वा प्रश्नः । इदं तु नाश्रितम्—अनुनासिकपरत्वादिति । अल्ग्रहणसामर्थ्यादिति । यद्यलन्तस्य स्यात्केवलस्य चाद्यन्तवद्भावात्तदाऽल्ग्रहणेन न किञ्चिद्व्यावर्तितं स्यात् । दर्विरिति । ननु हलन्तत्वाभावादत्र प्राप्तिरेव नास्ति । नैष दोषः । अयं साम्प्रतिको विशब्द इति क्विबादिषु भूतपूर्वगतिर्न लभ्यते, तत्रापृक्तसञ्ज्ञायां हल्ग्रहणेन हल्वान् गृह्येत । यथा 'गुरोश्च हल' इत्यत्र गुरुमान् । हलेवेति । हलः प्राधान्यात्प्रत्ययस्य च विशेषणत्वादित्यर्थः । क्विबादिषु भूतपूर्वगत्याश्रयणाद् गौणी चेत्कल्पना अत्र हल्शब्देन तद्वतो ग्रहणे किं न गौणी । हल्ग्रहणसामर्थ्यादिति । क्विबादयो हि हल्वन्तो, दर्विरित्यादौ विप्रत्ययोपीति किमनेन व्यवच्छिन्नं स्यादित्यर्थः । हलन्तस्य यथा स्यादिति । ततश्चाऽसत्येकग्रहणे हन्यादित्यादौ तिलोपः स्यादिति कर्तव्यं हल्ग्रहणे क्रियमाणे एकग्रहणम् । अल्ग्रहणे तु क्रियमाणे न कर्तव्यं, कृतं तु ज्ञापनार्थं तद्दर्शितं भाष्ये । यद्यप्ययमर्थो 'निपात एकाजना'ङित्यत्रैकग्रहणेन ज्ञापितस्तथापि मन्द-

उ०—तदन्तविध्यभावात्कथमत्र प्राप्तिरत आह—प्रत्ययस्येति । व्याप्तिन्यायेनाऽलेव विशेषणमिति भावः । ननु वेरपृक्तस्येत्यत्राऽनुनासिकः परो यतस्तस्य वेर्लोप इति वक्ष्यते इति कथं दर्वौ प्राप्तिः । अत एवास्येत इत्त्वं नेत्यत आह—इदं त्विति । भाष्ये अल् चेति । केवलाऽलात्मक इत्यर्थः । अन्यश्चेति । समुदायात्मक इत्यर्थः । अयं साम्प्रतिक इति । वेरपृक्तस्येति सूत्रे उद्देश्यतया प्रधानस्य विग्रहणस्य मुख्यार्थत्वलाभाय हलित्यत्र सौत्रो मतुब्लोप इति भावः । हलः प्राधान्यादिति । सञ्ज्ञावाक्यार्थप्रतिपत्त्युत्तरमेव प्रदेशार्थप्रतिपत्तेरसञ्जातविरोधन्यायेन तत्रोक्तकल्पनानुचितेति भावः । किं च शास्त्रस्याऽल्पविषयतापत्तिरित्यपि बोध्यम् । किं न गौणीति । क्लिष्टेत्यर्थः । किमनेनेति । वेरपृक्तस्येत्यस्य लक्ष्यानुसारात् सर्वत्र प्रवृत्त्यङ्गीकारे इत्यर्थः । तिलोपः स्यादिति । आगमविशिष्टस्य तित्वाद्धलन्तत्वेनापृक्तत्वाच्च यादित्यस्य लोपः स्यादित्यर्थः । अत्र पक्षे हल्ङ्याबिति सूत्रे हल्ग्रहणं नास्त्येवेति भावः । अल्ग्रहणे त्विति । तदुपादानसामर्थ्येन तदन्तविध्यभावादिति भावः । ज्ञापित इति । एवं चात्र जाति-

प्रयोजनम् ? 'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्ध'मित्युक्तं† तदुपपन्नं भवति ॥४१॥

**तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ १ । २ । ४२ ॥**

**तत्पुरुषस्समानाधिकरणः कर्मधारय इति चेत्समासैकार्थत्वादप्रसिद्धिः ॥ १ ॥**

तत्पुरुषः समानाधिकरणः कर्मधारय इति चेत् समासस्यैकार्थत्वात् सञ्ज्ञाया अप्रसिद्धिः । एकोऽयमर्थस्तत्पुरुषो नाम, अनेकार्थाश्रयं च सामानाधिकरण्यम् ।

**सिद्धं तु पदसामानाधिकरण्यात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? तत्पुरुषस्समानाधिकरणपदः कर्मधारयसञ्ज्ञो भवतीति वक्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तम्—'तत्पुरुषः समानाधिकरणः कर्मधारय इति चेत् समासैकार्थत्वादप्रसिद्धि'रिति । नैष दोषः । अयं तत्पुरुषोस्त्येव

प्र०–बुद्धीनामनुग्रहाय पुनरिह ज्ञापितः । अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे सञ्ज्ञाविधानं विस्पष्टार्थम् । 'वृद्धिरादै'जित्यत्राऽस्य परिभाषात्वं व्यवस्थापितमिह कथं सञ्ज्ञात्वेन व्यवहारः । पारार्थ्यसामान्यात्परिभाषा सञ्ज्ञात्वेन व्यवह्रियते इत्यदोषः ॥४१॥

तत्पुरुषः । समासैकार्थत्वादिति । भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्यानेकस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमुच्यते । नीलोत्पलादिश्च तत्पुरुष एक एवेति सामानाधिकरण्यमनुपपन्नम् । वर्तिपदानां तु सामानाधिकरण्यमुपपद्यते, तत्पुरुषत्वं

उ०–ग्रहणशङ्कावारणायैवैकग्रहणं चरितार्थमिति कथं ज्ञापकमिति भावः । पुनरिहेति । युगपदेव विनिगमनाविरहात् प्रमाणद्वयप्रवृत्तिरिति भावः । वृद्धिरादैजिति । अस्य तत्त्वं तत्रैवोक्तम् । व्यवस्थापितमिति । 'मये'ति शेषः ॥४१॥

तत्पुरुषः । 'समासैकार्थत्वा'दिति वार्तिके समासस्यैकप्रवृत्तिनिमित्तत्वादित्यर्थः । पर्यायव्यावृत्त्यर्थम्—भिन्नेति । भिन्नप्रवृत्तिनिमित्तप्रकारकभिन्नोपस्थितिजनकस्येत्यर्थः । वस्तुतः पर्यायाणामपि कोशे सामानाधिकरण्यस्येष्टताया नामन्त्रिते समानाधिकरणे इति सूत्रे भाष्ये ध्वनितत्वेनेदं चिन्त्यम् । गौरश्व इत्यादौ तद्व्यावृत्तये—एकस्मिन्नर्थ इति । भाष्ये—एकोयमर्थस्तत्पुरुषो नामेति । तत्पुरुषसञ्ज्ञकनीलोत्पलादिशब्दार्थं एक, एकोपस्थितेरित्यर्थः । यद्येकविशेष्यकप्रतीतिजनकत्वं सामानाधिकरण्यं तदा तत्पुरुषमात्रस्य कर्मधारयत्वापत्तिः, समानाधिकरणपदवैयर्थ्यं चेति तात्पर्यम् । तत्पुरुषत्वमिति । समासादिसञ्ज्ञा समुदायनिवेशिनीति

† १. २. १०. वा० १.

प्राथमकल्पिको यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तित्वं च । अस्ति तादर्थ्यात् ताच्छब्द्यं तस्येदं ग्रहणम् ॥४२॥

## प्रथमानिर्दिष्टं समास उपसर्जनम् ॥ १ । २ । ४३ ॥

**प्रथमानिर्दिष्टं समासे उपसर्जनमिति चेदनिर्देशात् प्रथमायाः समासे संज्ञाऽप्रसिद्धिः ॥ १ ॥**

प्र०—तु तेषां नास्ति । ऐकपद्यमिति । पदशब्देनाऽर्थ उच्यते । ऐकार्थ्यमित्यर्थः । अथवा समासाद्विभक्त्युत्पत्तौ सत्यामैकपद्यमुच्यते । एकविभक्तित्वमिति । एककारकत्वमित्यर्थः । तद्य इति । ननु मुख्यस्य तत्पुरुषस्य पदान्तरेण सामानाधिकरण्यं सम्भवत्येव-राजपुरुषः शोभन इत्यादौ, तत्कथं गौणस्य ग्रहणम् । नैष दोषः । तत्पुरुषस्य पदान्तरेण सामानाधिकरण्यं वहिरङ्गम्, अन्तरङ्गं तु वर्तिपदानामिति । तदेवाश्रीयते । ततश्च सामर्थ्यात्तत्पुरुषशब्दो गौणार्थवृत्तिः परिगृह्यते । तेन समासावयनामेव पदानां कर्मधारयसञ्ज्ञा विधीयते, समुदाये च वाक्यपरिसमाप्त्या पदसमुदायस्यैकैव कर्मधारयसञ्ज्ञा न तु प्रत्येकम् । तत्पुरुषसञ्ज्ञाप्रकरणे इयं सञ्ज्ञा न कृता, एकसञ्ज्ञाधिकारात् तत्पुरुषसञ्ज्ञाया बाधो मा भूदिति ॥४२॥

प्रथमा० । अनिर्देशात्प्रथमाया इति । समासे किं प्रथमानिर्दिष्टं भवतुमर्हति ? यस्मात्समासे प्रथमा विधीयते । न च तथाभूतस्य सम्भवः । समासे हि कृते तत एव

उ०—भावः । ननु एकपदत्वैकविभक्तित्वयोः पौनरुक्त्यमित्यत आह—पदशब्देनेति । पदतदर्थयोरभेदोपचारादिति भावः । अथवेति । अन्तवर्तिविभक्त्यपेक्षस्तूत्तरपदादिव्यवहार इति भावः । नन्वेकविभक्तीति पुनरुक्तमत आह—एककारकत्वमिति । विभज्यतेऽनया प्रातिपदिकार्थ इति व्युत्पत्तेः । तद्य इत्यादि भाष्ये । 'ताच्छब्द्य'मिति स्वार्थे ष्यञ् । तत्—ततो हेतोर्मुख्यार्थे सामानाधिकरण्यासम्भवाद्धेतोर्यस्तादर्थ्यात्तच्छब्दस्तस्येदं ग्रहणमित्यक्षरार्थः । यद्वा यस्तादर्थ्यात्ताच्छब्द्यं, तच्छब्दवाच्यतां लभत इति शेषः । अन्तरङ्गं त्विति । अर्थनिबन्धनसामानाधिकरण्याश्रयोऽन्तरङ्गन्यायस्तु तत्पुरुषशब्दमात्राश्रयगौणमुख्यन्यायात्प्रबल इति भावः । ननु तत्पुरुषार्थपदानां कर्मधारयसञ्ज्ञालाभेपि समुदायस्य सा न स्यात्, इष्यते च तस्येत्यत आह—समुदाये चेति । समानाधिकरणपदमर्शआद्यजन्तं तु नाश्रितं, तादृशानामपि गौणत्वात् बाधो मा भूदिति । तत्पुरुष इत्यनुवृत्तावपि पाक्षिको बाधो मा भूदित्यर्थः । समानाधिकरणः कर्मधारयश्चेति तु सुवचं, द्विगुश्चेतिवत् ॥४२॥

प्रथमानि० । समासे किमिति । समासे इति सप्तमीनिर्देशात्समासे विद्यमानं प्रथमान्तमिति सूत्रार्थं मत्वा वार्तिकारम्भ इत्याशयः । तत एवेति । समासादेवेत्यर्थः । तथा च समासः प्रथमानिर्दिष्टः स्यान्न तु समासे किञ्चिदिति सप्तम्यनुपपत्तिः स्यादिति भावः । अन्तर्वर्तिन्येति । समासे विद्यमानाद्यतः प्रथमोच्चार्यत इत्यर्थ इति भावः । न कष्टशब्दस्येति । तच्चानिष्टमिति भावः । प्रथमान्तमिति । सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधि-

प्रथमानिर्दिष्टं समास उपसर्जनमिति चेदनिर्देशात् प्रथमायाः समास उपसर्जनसञ्ज्ञाया अप्रसिद्धिः । नहि कष्टादीनां समासे* प्रथमां पश्यामः ।

**सिद्धं तु समासविधाने वचनात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? समासविधाने प्रथमानिर्दिष्टमुपसर्जनसञ्ज्ञं भवतीति वक्तव्यम् । ततर्हि वक्तव्यम् ?

**न वा तादर्थ्यात्ताच्छब्द्यम् ॥ ३ ॥**

न वा वक्तव्यम् । किं कारणम् ? तादर्थ्यात्ताच्छब्द्यं भविष्यति । समासार्थं शास्त्रं समास इति ।

**यस्य विधौ प्रथमानिर्देशस्ततोऽन्यत्राप्युपसर्जनसंज्ञाप्रसङ्गः ॥ ४ ॥**

यस्य विधौ प्रथमानिर्देशः क्रियते ततोन्यत्रापि तस्योपसर्जनसञ्ज्ञा प्राप्नोति । राज्ञः कुमारीं राजकुमारीं श्रितः । श्रितादिसमासे द्वितीयान्तं प्रथमानिर्दिष्टं तस्य षष्ठीसमासेप्युपसर्जनसञ्ज्ञा प्राप्नोति† ।

प्र०—प्रथमोत्पद्यते । न तु तदवयवात् । अन्तर्वर्तिन्या च विभक्त्या प्रथमानिर्दिष्टत्वे आश्रीयमाणे कष्टश्रित इत्यत्र श्रितशब्दस्यैवोपसर्जनसञ्ज्ञा स्यान्न कष्टशब्दस्य, निर्दिष्टग्रहणं चानर्थकं स्यात् । समासे प्रथमान्तमुपसर्जनमिति वक्तव्यं स्यात् ।

न वेति । मुख्यार्थाऽसम्भवाद् गौणोऽर्थो गृह्यत इत्यर्थः । यस्य विधाविति । निर्देशापेक्षया समासस्याधारत्वात्प्रथमानिर्दिष्टस्य सर्वत्रोपसर्जनसञ्ज्ञा प्राप्नोतीति भावः । राजकुमारीमिति । सत्युपसर्जनत्वे ह्रस्वः स्यात्, पूर्वनिपाताव्यवस्था च । सिद्धं

उ०—प्रतिषेधादन्तपदोच्चारणम् । मुख्यार्थासम्भवादिति । निर्दिष्टग्रहणोपबृंहितसमासग्रहणस्य मुख्यार्थासम्भवादित्यर्थः । ननु प्रत्यासत्त्या यत्समासशास्त्रे यत् प्रथमानिर्दिष्टं तन्निरूपितकार्ये एव तदुपसर्जनं स्यादत आह—निर्देशापेक्षयेति । ईदृशप्रत्यासत्तिर्दुर्ज्ञेयेति भावः । सत्युपेति । परिनिष्ठितविभक्त्या समास इति पक्षे इदम् । इदमेव ध्वनयितुं भाष्ये श्रितपदोपादानम् । अवयववृत्त्या सर्वनामादिपदैरिवानेनाभीष्टार्थालाभादाह—लोके चेति । सञ्ज्ञामहत्त्वमेतत्पदरूढ्यर्थभूतलौकिकार्थाऽपरित्यागे हेतुरिति भावः । अप्रधानस्यैव सञ्ज्ञित्वेऽव्याप्तिं शङ्कते—यद्येवमिति । पुरुषव्याघ्र इति । इदमुदाहरणं चिन्त्यम् । परवल्लिङ्गसूत्रस्थतत्पुरुषग्रहणप्रत्याख्यानपरेण भाष्येण तस्योत्तरपदार्थप्रधानतासूचनात् । ननु सञ्ज्ञाविधानमेव कथं तत्प्रयोजकाभावेऽत आह—प्रथमानिर्देशेति । 'पूर्वापराधरोत्तरम्' 'अर्द्धं'मिति । एतेन

* द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २. १. २४. १—'भवति' पा० ।

† गोस्त्रियोरुपसर्जनस्य १. २. ४८; उपसर्जनं पूर्वम् २. २. ३०.

## सिद्धं तु यस्य विधौ तं प्रतीति वचनात् ॥ ५ ॥

सिद्धमेतत् । कथम् ? यस्य विधौ यत्प्रथमानिर्दिष्टं तं प्रति तदुपसर्जनसञ्ज्ञं भवतीति वक्तव्यम् ।

तर्हि वक्तव्यम् ? न वक्तव्यम् । 'उपसर्जन'मिति हि महती सञ्ज्ञा क्रियते । सञ्ज्ञा च नाम यतो न लघीयः । कुत एतत् ? लघ्वर्थं हि सञ्ज्ञाकरणम् । तत्र महत्याः सञ्ज्ञायाः करण एतत्प्रयोजनमन्वर्थसञ्ज्ञा यथा विज्ञायेत,—अप्रधानमुपसर्जनमिति । प्रधानमुपसर्जनमिति च सम्बन्धिशब्दावेतौ । तत्र सम्बन्धादेतद् गन्तव्यम्—यं प्रति यदप्रधानं तं प्रति तदुपसर्जनसञ्ज्ञं भवतीति ।

---

प्र०—त्विति । यस्य—श्रितादेः समासविधौ तं श्रितादिकं प्रतीत्यर्थः । महती सञ्ज्ञेति । लोके चाऽप्रधानमुपसर्जनमुच्यते, इहापि तथैवाश्रीयत इत्यर्थः । यद्येवं पूर्वकायोऽर्द्धपिप्पली पुरुषव्याघ्र इत्यादिषु उपसर्जनसञ्ज्ञा प्रधानस्य न प्राप्नोति । नैष दोषः । अन्वर्थसञ्ज्ञा हि यत्र सोऽर्थः सम्भवति तत्र प्रवृत्तिनिमित्तापेक्षाः प्रवर्तन्ते अन्यत्र तु विधानसामर्थ्यान्निमित्तनिरपेक्षाः । यथा कर्मप्रवचनीयसञ्ज्ञा स्वत्यादीनामिति । प्रथमानिर्देशसामर्थ्यादर्द्धादीनां सञ्ज्ञा प्रवर्तते । अथ यत्रेति । परिहारान्तरसद्भावादेत-

---

उ०—प्रदेशेष्वन्वर्थत्वेनैव व्यवहारोपपत्तौ सञ्ज्ञाविधानं व्यर्थं स्यादित्यपास्तम् । निर्विभक्तिकस्योच्चारणासम्भवात्प्राथम्याच्च लघुत्वाच्च तन्निर्देशस्य सत्त्वेन तत्सामर्थ्यं चिन्त्यम् । भाष्ये—प्रधानमुपसर्जनमिति च सम्बन्धिशब्दाविति । तत्र प्रधानमिति दृष्टान्तार्थं, तद्वदुपसर्जनशब्दस्तत्प्रतिद्वन्द्व्यप्रधानार्थकत्वात्सम्बन्धिशब्द इति भावः । तदाह—यं प्रति यदिति । समासे प्रथमानिर्दिष्टमप्रधानत्वसमानाधिकरणोपसर्जनपदाभिन्नमिति सूत्रार्थः । एवं च यस्यायस्या यन्निरूपितमप्रधानत्वं तन्निरूपितमेवोपसर्जनसञ्ज्ञाकार्यं पूर्वनिपात इत्यर्थः । ह्रस्वोपि न, यं प्रत्यप्रधानत्वं तद्घटितसमासोत्तरपदभूतस्यैव ह्रस्वविधानात् । परेतु यं प्रतीत्यादिभाष्यस्यायमर्थः—समासशास्त्रे, यन्निरूपितं यस्याऽप्राधान्यं तं प्रति तदुपसर्जनमिति । समासशास्त्रे च सहार्थतृतीयान्तार्थापेक्षया प्रथमान्तार्थस्याप्रधानत्वमिति तं प्रत्येव तदुपसर्जनम् । यद्यपि सहार्थविशेषणत्वरूपमप्राधान्यं तृतीयान्तार्थस्य, तथापि तत्समभिव्याहृतप्रथमाद्यन्तार्थस्य तदपेक्षया लौकिकमप्रधानत्वमितराधीनत्वरूपं बुध्यते । अत एव समकक्षयोर्मध्ये 'एकेन सहागन्तव्यं त्वये'त्युक्ते परस्य दुःखं दृश्यते । पूर्वकायासिद्ध्या कैयटोक्तपक्षाश्रयणमशक्यमित्याहुरित्यभिप्रायेण भाष्ये—अथ यत्रेति । परिहारान्तरेत्यादिकैयटश्चिन्त्य एव । उपसर्जनसञ्ज्ञाप्रयोज्यत्वं पूर्वनिपातस्य नास्तीति दर्शयितुं पूर्वनिपातप्रकरणप्रत्याख्यानमनुवदति—तत्र हीति । एवं हि तत्र भाष्यम्—"उपसर्जनस्य पूर्ववचनं परप्रयोगनिवृत्त्यर्थम्, न वाऽनिष्ठादर्शनात्" । अथ यत्र द्वे षष्ठ्यन्ते कस्मात्तत्र प्रधानस्य पूर्वनिपातो न

अथ यत्र द्वे षष्ठ्यन्ते कस्मात्तत्र प्रधानस्योपसर्जनसञ्ज्ञा न भवति । राज्ञः पुरुषस्य राजपुरुषस्येति‡ ।

षष्ठ्यन्तयोश्चोपसर्जनत्वे उक्तम् ॥ ६ ॥

किमुक्तम् ? 'षष्ठ्यन्तयोः समासेऽर्थभेदात् प्रधानस्याऽपूर्वनिपातः' इति+ । एवं न चेदमकृतं भवति 'उपसर्जनं पूर्व'मिति । अर्थश्चाऽभिन्न इति कृत्वा प्रधानस्य पूर्वनिपातो न भविष्यति । यद्यपि तावदेतदुपसर्जनकार्यं परिहृतम्, इदमपरं प्राप्नोति,—राज्ञः कुमार्याः राजकुमार्याः । 'गोस्त्रियोरुपसर्जनस्य' [ १. २. ४८ ] इति ह्रस्वत्वं प्राप्नोति ।

प्र०—दुच्यते । अन्वर्थाश्रयणेन ह्येतदपि सिध्यति । षष्ठ्यन्तयोश्चेति । पूर्वनिपातप्रकरण इदमुक्तम् । तत्र हि पूर्वनिपातः प्रत्याख्यायते—'न वाऽनिष्टादर्शना'दिति । अथाप्यारभ्यते तथापि राजशब्दस्यैव पूर्वनिपातो न पुरुषशब्दस्य । एवं हि वाक्यापेक्षया समासस्यैकार्थता भवति । अन्यथा वाक्यसमासयोर्भिन्नार्थता स्यादित्यर्थः । तथा हि—पुरुषार्थो राजापेक्षया प्रधानमेवात्रेति नासौ भिद्यते—राजापेक्षया न व्यतिरिच्यते इत्यर्थः ।

उ०—भवती'त्याशङ्कायां 'षष्ठ्यन्तयोः समास' इत्यादि । अनिष्टेति । नित्येषु शब्देषु प्रयोगे स्थिते गाव्यादिप्रयोगनिवारणाय शास्त्रम्, इह तु 'पुरुषराजे'ति प्रयोगो न दृश्यत इति किं तन्निवृत्त्यर्थेन यत्नेनेत्यर्थः । अबुधबोधनाय तदारम्भे पूर्वपक्षिणाऽऽशङ्कितस्य राज्ञः पुरुषस्येत्यादौ पूर्वनिपातिताऽनियमदोषस्योद्धारपरं षष्ठ्यन्तयोरिति वार्तिकम् । तद्व्याचष्टे—तथापीति । पुरुषस्य पूर्वनिपाते हि राज्ञः प्राधान्यमेव स्यात्, पुरुषराजशब्दात्तथैव प्रतीतेरिति वाक्यसमासयोर्भिन्नार्थतेति भावः । नासौ भिद्यत इति । 'वाक्यात्समासे' इति शेषः । पूर्वनिपाते हि तस्याऽप्राधान्यं प्रतीयेतेति भावः । तदेवाह—न व्यतिरिच्यत इति । व्यतिरेको विशेषणत्वं तद्वान्भवतीत्यर्थः । परे तु—ननु प्रधानस्य पूर्वनिपातेऽप्यर्धपिप्पलीत्यादौ न वाक्यसमासयोर्भिन्नार्थतेत्यतो भाष्यं प्रकारान्तरेण व्याचक्षते,—षष्ठीति सूत्रे येन समासस्तन्निरूपितसम्बन्धार्थकषष्ठ्यन्तमेव गृह्यते, तदेव च तत्र प्रथमानिर्दिष्टम् । पुरुषपदे च न राजापेक्षभेदसम्बन्धे षष्ठी, तस्या विशेषणादेवोत्पत्तेरित्यर्थः । अर्थश्चाभिन्न इति भाष्यस्य प्रधानोऽर्थो न समासघटकविशेषणेन भेदमूलकसम्बन्धवानतः प्रधानस्य तादृशषष्ठ्यन्तत्वाभावादनुपसर्जनत्वेनाऽपूर्वनिपातः । कैयटरीत्या तु प्रधानपक्षकाऽपूर्वनिपातानुमाने हेतोर्वैयधिकरण्यम् । 'उपसर्जनसञ्ज्ञा न भविष्यती'त्यनेन पूर्वनिपाताभावः, प्रधानस्यैतन्मूलक एव तत्रापीति सूचितम् । किं च कैयटरीत्या व्याख्याने 'न प्रयोजनानुवर्ति प्रमाण'मिति न्यायविरोधः । कैयटोपि वा एवमेव व्याख्येयः । एवं च पुरुषापेक्षयाऽप्रधानस्यैव राज्ञः षष्ठ्यन्तस्य प्रथमानिर्दिष्टत्वमस्मिन्समास इति तस्यैवोपसर्जनत्वेन पूर्वनिपात इति भावः । राजकुमार्यो

‡ षष्ठी २. २. ८. + २. २. ३०. वा० ३. १—'भवेत्' पाठः० ।

उक्तं वा ॥ ७ ॥

किमुक्तम् ? 'परवल्लिङ्गमिति शब्दशब्दार्थौ' इति । तत्रौपदेशिकस्य ह्रस्वत्वम्, आतिदेशिकस्य श्रवणं भविष्यति ॥४३॥

एकविभक्ति चापूर्वनिपाते ॥ १ । २ । ४४ ॥

द्वितीयादीनामप्यनेनोपसर्जनसञ्ज्ञा प्राप्नोति । तत्र को दोषः ? तत्राऽपूर्वनिपात इति प्रतिषेधः प्रसज्येत ।

नाऽप्रतिषेधात् । नायं प्रसज्यप्रतिषेधः—'पूर्वनिपाते ने'ति । किं तर्हि ? पर्युदासोऽयम्—'यदन्यत्पूर्वनिपाता'दिति । पूर्वनिपातेऽव्यापारः । यदि केनचित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति तेन भविष्यति ।

प्र०—ततोऽप्रधानस्यैवात्र राज्ञः पूर्वनिपातः । शब्दशब्दार्थाविति । नन्वेतत्तत्र प्रत्याख्यातं 'परमयुवतिरित्यादौ द्वौ तिशब्दौ स्याता'मिति । एवं तर्हि अन्वर्थाश्रयेणाऽस्य परिहारस्योक्तत्वादत्र सूक्ष्मेक्षिका न कृता ॥४३॥

एक । समास इति वर्तते । मुख्य एव चेह समासो गृह्यते, समासे विधातव्ये यदेकविभक्तीति, समासार्थे वाक्यं वा समासो गृह्यते । सर्वस्य च शब्दस्यैकविभक्तित्वमिति विशेषणोपादानसामर्थ्याद्यस्य पर्यायेणापि न सर्वविभक्तित्वं तदुपसर्जनसञ्ज्ञं' यथा निष्कौशाम्बिरित्यत्र कौशम्बीशब्दो निष्क्रमणक्रियापेक्षयाऽपादानशक्तिसम्बन्धात् पञ्चम्यन्त एव । नह्यस्य क्रियान्तरापेक्षः शक्त्यन्तराऽऽविर्भावः । द्वितीयादीनामिति । कष्टश्रितादिषु कष्टादयः श्रितादिविशेषणत्वादेकविभक्तिका इत्यनेनोपसर्जनसञ्ज्ञा तेषां प्राप्नोति । ततश्चाऽपूर्वनिपात इति प्रतिषेधः प्राप्नोति । पूर्वसूत्रस्य तु नीलोत्पलादिः

उ०—इत्यादौ ह्रस्वत्वमपि अनेन वारितामिति सूचयन्नाह—उक्तं वेति । विकल्पार्थवाशब्दघटितम् । अन्यथा तदसङ्गतिः । सूक्ष्मेक्षिकेति । अर्धपिप्पल्यादौ तु गतिरुक्तैवेति भावः ॥४३॥

एकविभक्ति चा । स्पष्टप्रतिपत्तये सूत्रार्थं दर्शयति—समास इति । समासार्थं वेति । अस्त्याद्यपेक्षया बहिरङ्गक्रियाध्याहाराल्लक्षणां युक्तां मन्यते । शास्त्रं तु न गृह्यते, 'एकविभक्ती'त्यस्य वैयर्थ्यापत्तेः । सर्वस्य चेति । 'एकस्मिन् प्रयोगे' इत्यादिः । श्रितादिविशेषणत्वादिति । कर्माकाङ्क्षश्रितादिविशेषणत्वादित्यर्थः । ननु निरवकाशपूर्वप्राप्त्या इयं प्राप्तिर्बाध्येतात आह—पूर्वसूत्रस्य त्विति । अपवादेति । अपूर्वनिपात इति हि सः । भाष्ये—एकविभक्ताविति । शब्दशब्दार्थावित्यस्य प्रत्याख्याने इदं वचनमेव कर्तव्यम् । एकदेशिसमासविषयकमेव तत्, भाष्ये तथोदाहरणात् । नन्वेवमपि प्राप्तजीविक इत्यादौ परवल्लिङ्गं स्यात्, एवं स्त्रीगोव्यक्तिभिः क्रीतपटेषु पञ्चगूनितीष्यते, न च सिध्यतीत्यत आह—

† २. ४. २६ वा० ६.

अप्राप्तेर्वा । अथवा अनन्तरा या प्राप्तिः सा प्रतिषिध्यते । कुत एतत् ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सति बाधितुम् ।

**एकविभक्तावषष्ठ्यन्तवचनम् ॥ १ ॥**

एकविभक्तावषष्ठ्यन्तानामिति वक्तव्यम् । इह मा भूत्+ अर्धं पिप्पल्याः अर्धपिप्पलीति† ।

**उक्तं वा ॥ २ ॥**

किमुक्तम् ? 'परवल्लिङ्गमिति शब्दशब्दार्थौ'* इति । तत्रौपदेशिकस्य ह्रस्वत्वम्' आतिदेशिकस्य श्रवणं भविष्यति ।

कानि पुनरस्य योगस्य प्रयोजनानि ?

**प्रयोजनं द्विगुप्राप्तापन्नालंपूर्वोपसर्गाः क्तार्थे ॥ ३ ॥**

द्विगुः‡—पञ्चभिर्गोभिः क्रीतः पञ्चगुः । दशगुः ।

प्राप्तापन्न×—प्राप्तो जीविकां प्राप्तजीविकः । आपन्नो जीविकामापन्नजीविकः ।

अलंपूर्व××—अलं कुमार्यै अलंकुमारिः ।

उपसर्गाः क्तार्थे××—निष्कौशाम्बिः निर्वाराणसिः ॥४४॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य द्वितीयपादे प्रथममाह्निकम् ॥१॥

प्र०—समानाधिकरणसमासोऽवकाशः । ननु चेयमिति । प्रतिषेधयुक्तत्वाऽयुक्तत्वेन विरोधात्परत्वादिति भावः । नोत्सहत इति । अपवादविषयं प्रकल्प्योत्सर्गस्य प्रवर्तनात् । पञ्चगुरिति । 'द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः' इति वचनात्परवल्लिङ्गं न भवति । अलंकुमारिरिति । 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्ये'ति समासः ॥४४॥

इत्युपाध्यायजैयटात्मजकैयटकृते महाभाष्यप्रदीपे प्रथमस्य द्वितीये पादे प्रथममाह्निकम् ॥१॥

उ०—द्विगुप्राप्तेति । वस्तुतो द्विगुग्रहणं परवदित्यस्यान्तरङ्गत्वेन तत्पुरुषसञ्ज्ञकशब्दमात्रनिमित्तकलिङ्गबाधकताया एव युक्तत्वाद्व्यर्थमिति बोध्यम् । पर्यादय इति । कुगतीति सूत्रे आदिशब्दस्य प्रकारार्थत्वादिति भावः । अलंशब्दयोगे चतुर्थीविधानसामर्थ्याद्वाक्यमपीत्याहुः ॥४४॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्य द्वितीये प्रथममाह्निकम् ॥१॥

+ गोस्त्रियोरुपसर्जनस्य १.२.४८. † अर्धं नपुंसकम् २.२.२. * २.४.२६ वा० ६. ‡ तद्धितार्थोत्तरपदसमाहारे च २.१.५१. × प्राप्तापन्ने च द्वितीयया २.२.४. ×× प्रादयः क्तार्थे २.२.१८ वा० ४.

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ १ । २ । ४५ ॥

[ अर्थवद्ग्रहणं किमर्थम् ? ] "अर्थवदिति व्यपदेशाय"। वर्णानां च मा भूदिति। किं च स्यात् ? वनं धनमिति 'नलोपः प्रातिपदिकान्तस्य' [ ८. २. ७ ] इति नलोपः प्रसज्येत।

प्र०- अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। अभिधेयवचनोऽत्राऽर्थशब्दः आश्रीयते। तत्राऽधातुरप्रत्ययः इति पर्युदासाश्रयणादर्थवत एव सञ्ज्ञा भविष्यति नार्थोऽर्थवद्ग्रहणेनेत्याशङ्क्याह—अर्थवदिति व्यपदेशायेति। 'सञ्ज्ञिन' इति वाक्यशेषः। पर्युदासाश्रयणे केन धर्मेण सादृश्यमाश्रीयत इत्यप्रतिपत्तिः स्यादिति भावः। वर्णानां मा भूदिति। विशिष्टसञ्ज्ञिव्यपदेशफलं दर्शयति। क्वचिद्वर्णानां चेति पाठः। तत्र 'च'शब्देन पदसमुदायोऽनर्थको 'दश दाडिमानी'त्यादिः समुच्चीयते। किं च स्यादिति। सङ्ख्याकर्मादिषु स्वादीनां विधानादनर्थकेभ्यः स्वाद्युत्पत्तिर्न भविष्यतीति प्रश्नः। वनमिति। नन्वधातुरिति नान्तस्य प्रतिषेधो भविष्यति। नैतदस्ति। प्रतिवर्णमत्र विभक्त्युत्पत्तिप्रसङ्गः। न च प्रतिवर्णं धातुसञ्ज्ञासमावेशः। अयं भावः—अविशेषेण स्वादय उत्पद्यन्ते, तेषूत्पन्नेष्वर्थनियमः, प्रकृतार्थापेक्षया वा प्रत्ययनियम इति स्यादेव स्वाद्युत्पत्तिः,—अव्ययादिव। यदुक्तम्—'संघातस्यैकार्थ्यात्सुबभावो वर्णा'दिति, तद्वर्णानामर्थवत्तापक्षे। तत्र हि तन्त्रेणैकैव विभक्तिः समुदायावयवार्थगतमेकत्वं प्रत्याययिष्यति। एकमेव हि तदेकत्वम्। तच्चैकेनैव हि सुपा प्रत्यायितमित्यवयवेभ्यो विभक्तिर्न भविष्यति। अनर्थकस्य तु प्रातिपदिकसञ्ज्ञायां प्रकाशयितव्यस्यार्थस्या-

उ०- अर्थवदधातु। अभिधेयेति। सर्वशब्दानां प्रयोजनवत्त्वेनाऽव्यभिचारात् प्रयोजनवाचिनोऽसम्भवाच्च धनवाचिनो ग्रहणाऽभावादिति भावः। 'कस्ये'त्याकाङ्क्षायामाह—सञ्ज्ञिन इति। व्यपदेशो—विशिष्टसञ्ज्ञिनो लाभः। केनेति। शब्दत्वादिनापि तदाश्रीयेतेति भावः। नञिवयुक्तन्यायानित्यत्वज्ञापकं तदित्यन्ये। चश्रवणाद्व्यपदेशापेक्षया भिन्नमे[व]तत्फलमिति भ्रमनिवृत्तये आह—विशिष्टेति। 'च'पाठस्तु प्रामादिक इति भावः। तमपि समर्थयते—क्वचिदिति। समासग्रहणं त्वर्थवत्समुदायस्यैव नियामकमिति भावः। सङ्ख्येति। 'द्व्येकयोः' 'कर्मणी'त्यादीनां स्वादिविध्येकवाक्यत्वादिति भावः। एवं च कार्याभावात्सञ्ज्ञापि न स्यादिति तात्पर्यम्। न च प्रतीति। क्रियावचनत्वाभावाऽदिति भावः। ननूक्तरीत्या स्वाद्यनुत्पत्तौ कथं पदत्वनिबन्धनो नलोपोऽत आह—अयं भाव इति। उत्पन्नेष्विति। उत्पन्नस्यापि लुगादिनैव निवृत्तिरित्यर्थः। एकस्मिन्नेवैकवचनमिति सामान्यापेक्षप्रत्ययनियमे कस्या अप्यनवस्थितेराह—अर्थनियम इति। अनेकप्रकरणव्यवधानादेकवाक्यतापक्षो दुर्बल इत्यभिमानः। प्रत्ययनियमेपि न दोष इत्याह—प्रकृतेति। सन्निहितेत्यर्थः। अवश्यमेवमाश्रयणीयमित्याह—अव्ययादिवेति। यत्तूक्तमिति। हयवरट्सूत्रे इति शेषः।

१—अयं पाठः क्वचिदेव दृश्यते।

अधातुरिति किमर्थम् ? 'अहन् वृत्रम्' ।

अधातुरिति शक्यमवक्तुं[1]म् । कस्मान्न भवति 'अहन्वृत्रम्' इति ? आचार्यप्रवृत्तिर्ज्ञापयति—न धातोः प्रातिपदिकसञ्ज्ञा भवतीति, यदयं 'सुपो धातुप्रातिपदिकयोः' [ २. ४. ७१ ] इति धातुग्रहणं करोति । नैतदस्ति ज्ञापकम् । प्रतिषिद्धार्थमेतत्स्यात्—'अपि काकः श्येनायत' इति† ।

अप्रत्यय इति किमर्थम् ? काण्डे कुड्ये‡ ।

प्र०—भावात्समुदायादिव प्रतिवर्णं विभक्त्युत्पत्तिप्रसङ्गः । नलोप इति । विभक्तेस्तु श्रवणं न भवति, समुदायस्य पृथक् प्रातिपदिकसञ्ज्ञायां तदन्तर्भावाल्लुको भावात् । नलोपस्योपलक्षणार्थत्वाज्जश्त्वादीनामपि प्रसङ्गः । अहन्निति । विशेषविहितत्वाल्लङा-द्युत्पत्तौ सत्यामडागमस्य धातुभक्तत्वात्प्रातिपदिकसञ्ज्ञायां सत्यां नलोपप्रसङ्गः । न चाऽप्रत्यय इति प्रत्ययलक्षणेन प्रतिषेधः । 'न ङिसम्बुद्ध्योः'रिति ज्ञापनान्नलोपे विधीय-माने प्रत्ययलक्षणेनाऽप्रत्यय इति निषेधाऽभावात् । धातुग्रहणं करोतीति । पुत्री-यतीत्यादौ प्रातिपदिकत्वादेव लुक्सिद्ध इति भावः । श्येनायत इति । अत्राऽप्रत्यय

उ०—प्रकाशयितव्यस्यार्थस्याभावादिति । तदभावेपि प्रातिपदिकसञ्ज्ञासामर्थ्यादित्यर्थः । समुदायादिवेति । अनर्थकनिपातरूपात्समुदायादिवेत्यर्थः । वस्तुतः सङ्ख्याकर्मादेरभावाद्वि-भक्तेरत्रानुत्पत्तिरेव । अर्थनियमादिप्रकारास्तु महासञ्ज्ञाविरोधाद्गमके सत्येव, न सर्वत्र । एतद्व्यावर्त्यं तु निरर्थकसमुदाय इति बोध्यम् । ननु सर्वसुबुत्पत्तौ तेषां श्रवणापत्तिः, सर्वैकवचनोत्पत्तावपि एवमेवात आह—विभक्तेस्त्विति । समुदायस्येति । कृदन्तस्य । अन्तरङ्गत्वादवयवसञ्ज्ञा—तन्निमित्तसुप्प्रवृत्तिकालोत्तरकाले इत्यर्थः । समासनियमस्त्वर्थवत्स-मुदायविषय इति भावः । न च धनतीत्यादौ प्रतिवर्णं सुबुत्पत्तौ तच्छ्रवणप्रसङ्ग इति वाच्यम् । धातुप्रत्ययपदयोर्धात्ववयवप्रत्ययान्तावयवपरतया तत्र सर्वत्र वारणेनाऽदोषात् । तस्माद-व्युत्पन्नप्रातिपदिकावयववर्णानां सञ्ज्ञैवापाद्या, तत्र च समुदायप्रातिपदिकावयवत्वेन तल्लोपः । धनवनादिकमव्युत्पन्नमिति भावस्तद् ध्वनयन्नाह—जश्त्वादीनामिति । एतेन जश्त्वादौ धका-राद्युच्चारणवैयर्थ्यमित्यपास्तम् । विशेषेति । अनवकाशत्वात् सुपं बाधित्वेति भावः । न च श्येनायत इत्यादौ लङादयः सावकाशा इति, अत्र परत्वात् सुबुत्पत्तिर्दुर्वारा । एवं तर्हि भूवादिसूत्रस्य यल्लुङादिविधावुपस्थानं तस्यानवकाशत्वादित्यर्थः । अडागमस्येति । अङ्गभक्त-त्वेपि धातुरेवात्राऽङ्गमिति धातुभक्तत्वादित्युक्तम् । इदं च स्वरूपकथनम् । न ङिसम्बुद्ध्यो-रिति । कथमन्यथा राजेत्यादौ नलोपः । न च कृदन्तत्वात्सिद्धिः, तत्राप्यप्रत्यय इत्यनुवृत्तेरिति भावः । पुत्रीयतीति । अप्रत्यय इति प्रत्ययस्यैव निषेध इत्यभिमानः । प्रत्ययान्तस्य स निषेध इत्यभिप्रायेणाह—अत्राप्रेति । भाष्ये—काण्ड इति । परादिवद्भावेन प्रत्ययान्तत्वमिति भावः । न च पर्युदासे शाब्दफललाभायान्तवत्त्वस्यैव प्रवृत्तेस्तेनाप्रत्ययान्तत्वात्प्रातिपदिकत्वं

१—'अकर्तुम्' पाठा० । † कर्तुः क्यङ् सलोपश्च ३.१.११. ‡ ह्रस्वो नपुंसके प्रातिपदिकस्य १.२.४७.

अप्रत्यय इति शक्यमवक्तुंम्[1]। कस्मान्न भवति काण्डे कुड्य इति ? कृत्तद्धितग्रहणं* नियमार्थं भविष्यति—'कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसञ्ज्ञा भवति, नान्यस्ये'ति ।

**अर्थवत्यनेकपदप्रसङ्गः ॥ १ ॥**

अर्थवति प्रातिपदिकसञ्ज्ञायामनेकस्यापि पदस्य प्रातिपदिकसञ्ज्ञा प्राप्नोति । 'दश दाडिमानि, षडपूपाः, कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत्कुमार्याः स्फैयकृतस्य पिता प्रतिशीन' इति । समुदायोऽत्रानर्थकः ।

**समुदायोऽनर्थक इति चेदवयवार्थवत्त्वात्समुदायार्थवत्त्वं यथा लोके ॥ २ ॥**

प्र०-इति निषिद्धा प्रातिपदिकसञ्ज्ञा । कृत्तद्धितग्रहणमिति । तद्धितग्रहणमत्र नियमार्थम्, कृद्ग्रहणं तु प्रतिषिद्धार्थं—भित्, छिदिति । अत्र ह्यधातुरिति प्रतिषेधप्रसङ्गः । अनेकपदप्रसङ्ग इति । अनेकं पदमस्मिन्नित्यनेकपदः समुदायस्तस्य सञ्ज्ञाप्रसङ्ग इत्यर्थः । अनेकस्यापि पदस्येति । समुदितस्येति बोद्धव्यम् । प्रतिपदं तु नैव सञ्ज्ञा प्राप्नोत्यप्रत्यय इति निषेधात् । समुदायस्य तु निषेधो न प्रवर्तते, 'प्रत्ययग्रहणे यस्मात्स विहित' इति वचनात्, समुदायाच्च प्रत्ययस्याविधानात्—प्रत्ययान्तत्वाभावात् । न विद्यते प्रत्ययो यस्मिन्सोऽयमप्रत्यय इत्यप्याश्रयितुं न युज्यते, बहुपटव इत्यस्यापि समुदायस्य निषेधप्रसङ्गात् । स्वरे दोषप्रसङ्गात् । समुदायोऽत्रानर्थक इति । पदार्थानां समन्वयाऽभावात् । अवयवार्थवत्त्वादिति । अवयवधर्माणां च समुदाये व्यपदेशात् ।

उ०-स्यादेव, तथा च ह्रस्वः स्यादिति वाच्यम् । भाष्यकृता वक्ष्यमाणत्वात् । अत्र हीति । न च कृद्ग्रहणस्य प्रतिषेधबाधनार्थत्वे तद्धितग्रहणनियमात्कारकशब्दे प्रातिपदिकत्वानापत्तिः, कृद्ग्रहणं तु मध्येपवादन्यायेनाऽधातुरितिप्रतिषेधस्यैव बाधकः स्यादिति वाच्यम् । बाध्यसामान्यचिन्ताश्रयणादित्यभिमानः । वस्तुतो 'धातोः प्रत्ययान्तस्य च चेत्कृत्तद्धितान्तस्यैवे'-तिनियमे भाष्यतात्पर्यं तेनाऽधातुग्रहणमपि प्रत्याख्यातम् । क्विबाद्यन्तस्यापि प्रत्ययान्तत्वात् प्रत्ययान्तस्येत्येव भाष्ये उक्तम् । न चास्यापत्यमिरित्यादौ प्रत्ययत्वप्रयुक्तनिषेधबाधनार्थं तद्धितस्यैव सञ्ज्ञाविधानमस्त्विति वाच्यम् । तस्य निषेधे फलाभावात् । न च हरिष्वित्यादौ सोः प्रातिपदिकत्वापत्तिः, एवं चौत्सर्गिकैकवचनापत्तिः, सात्पदाद्योरिति षत्वनिषेधापत्तिश्चेति वाच्यम् । औत्सर्गिकस्यापि विना गमकमप्रवृत्तेः । बहुव्रीहावनेकस्यापि पदस्येति भाष्यानुपपत्तेराह—समुदितस्येति । अत एवाऽनेकग्रहणं चरितार्थम् । बहुव्रीह्याश्रयणस्य फलं दर्शयति—प्रतिपदं त्विति । प्रत्ययान्तत्वाभावादिति । सञ्ज्ञाविधावितिनिषेधस्तु नात्र, यत्र प्रत्ययस्य सञ्ज्ञा तत्रैव तन्निषेधप्रवृत्तेरिति भावः । स्वरे दोषेति । अनुपदमेव स्फुटीभविष्यत्येतत् । समन्वयेति । स एव हि वाक्यशक्यः । अवयवधर्माणामिति । यथा ग्रामो

१—'अकर्तुम्' पाठा० । * कृत्तद्धितसमासाश्च १. २. ४६.

समुदायोऽनर्थक इति चेदवयवार्थवत्त्वात्समुदायार्थवत्त्वम् । अवयवैरर्थवद्भिः समुदाया अप्यर्थवन्तो भवन्ति, 'यथा लोके' । तद्यथा—लोके 'आढ्यमिदं नगरं गोमदिदं नगर'मित्युच्यते । न च सर्वे तत्राढ्या भवन्ति, सर्वे वा गोमन्तः ।

'यथा लोके' इत्युच्यते, लोके चावयवा एवार्थवन्तो न समुदायाः । आतश्चावयवा एवार्थवन्तो न समुदायाः,—यस्य हि तद् द्रव्यं भवति स तेन कार्यं करोति । यस्य च ता गावो भवन्ति स तासां क्षीरं घृतं चोपभुङ्क्ते, अन्यैरेतद् द्रष्टुमप्यशक्यम् । का तर्हीयं वाचोयुक्तिराढ्यमिदं नगरं गोमदिदं नगरमिति ? एषैषा वाचोयुक्तिः,—इह तावदाढ्यमिदं नगरमित्यकारो मत्वर्थीयः—आढ्या अस्मिन्सन्ति तदिदमाढ्यमिति । गोमदिदं नगरमिति,—मत्वन्तान्मत्वर्थीयो लुप्यते । एवमपि—

वाक्यप्रतिषेधोऽर्थवत्त्वात् ॥ ३ ॥

वाक्यस्य प्रातिपदिकसञ्ज्ञायाः प्रतिषेधो वक्तव्यः । देवदत्त गामभ्याज

प्र०-सति च प्रातिपदिकत्वे सुब्लुक्प्रसङ्गः । एषैषेति । एषा या वाचोयुक्तिः सैषा एतत्प्रमाणेत्यर्थः । अकारो मत्वर्थीय इति । ततश्च नावयवधर्मेण समुदाये व्यपदेशः । किं तर्हि ? दण्ड्यादिवद्यौगिक इत्यर्थः । मत्वन्तादिति । मत्वन्तान्न मतुप्सम्भवति, 'सरूपः प्रत्ययो नेष्ट' इति वचनात् । तस्मादेकगोपूर्वादिति ठञो भाष्यकारवचनप्रामाण्याल्लोपः । अत इति च तत्र निवृत्तं गौत्रिकादिसिद्ध्यर्थं, गवां समूहो गोत्रा, सास्मिन्नस्तीति गौत्रिकम् । अथवा 'मत्वन्तान्मत्वर्थीयो लुप्यत' इत्यनेनावयवधर्मस्य समुदाये उपचारमाह । इह तु मुख्येऽर्थवत्त्वे सम्भवत्युपचरितस्याश्रयो न युक्तः । अर्थवद्वाक्यमिदानीं दर्शयति—एवमपीति । अर्थवद्धीति । पदार्थानां समन्वयाऽवगमात् ।

उ०-दग्ध इत्यादौ । वीप्साया निष्प्रयोजनत्वादाह—एषा येति । नैवात्र वीप्सेति भावः । मतुब्नेति । इदमेव ध्वनयितुं भाष्ये मत्वर्थीय इत्युक्तं, मतुबिति नोक्तम् । लुग्विधायकाऽभावादाह—भाष्यकारेति । नन्वत इत्यनुवृत्तेरस्माट्ठन् दुर्लभोऽत आह—अत इतीति । गोत्रेत्यत्रेनिन्नकव्यचश्चेति त्रः । एकपूर्वसाहचर्याद् गोपूर्वस्यापि समासस्यैव तत्र ग्रहणमिति मते आह—आदीति । आदिना गोशकटिप्रकृतिकगौशकटिकस्य ग्रहणम् । अथवेति । गम्यमानार्थस्य निवृत्तिरेव चादिलोप इति वल्लोपशब्देनोक्तेति भावः । परे त्वेषा व्याख्या न भाष्यस्वरससिद्धा, अवयवार्थवत्त्वेन समुदायार्थवत्त्वभावं प्रक्रम्यैतदुक्तेः तस्मादर्शआद्यचस्तत्प्रामाण्याद्गुणवचनेभ्य इति मत्वर्थीयलोप इति सारम् । ग्रामो दग्ध इत्यादावप्यर्शआद्यजेव, अवयवे वा समुदायरूपारोप इति भाष्यतात्पर्यम् । भाष्येऽर्थवद्ध्येतद्वाक्यमिति

१-'सन्ति' पा० ।

शुक्लां, देवदत्त गामभ्याज कृष्णामिति । किं कारणम् ? 'अर्थवत्त्वात्' । अर्थवद्ध्येतद्वाक्यं भवति । न वै पदार्थादन्यस्यार्थस्योपलब्धिर्भवति वाक्ये ।

**पदार्थादन्यस्यानुपलब्धिरिति चेत् पदार्थाभिसम्बन्धस्योपलब्धिः ।४।**

पदार्थादन्यस्यानुपलब्धिरिति चेदेवमुच्यते—पदार्थाभिसम्बन्धस्योपलब्धिर्भवति वाक्ये । इह 'देवदत्त' इत्युक्ते कर्ता निर्दिष्टः, कर्म क्रियागुणौ चानिर्दिष्टौ । गामित्युक्ते कर्म निर्दिष्टम्, कर्ता क्रियागुणौ चानिर्दिष्टौ । अभ्याजेत्युक्ते क्रिया निर्दिष्टा, कर्तृकर्मणी गुणश्चानिर्दिष्टः । शुक्लामित्युक्ते गुणो निर्दिष्टः, कर्तृकर्मणी क्रिया चानिर्दिष्टा । इहेदानीं देवदत्त गामभ्याज शुक्लामित्युक्ते सर्वं निर्दिष्टम्—देवदत्त एव कर्ता नान्यः । गौरेव कर्म नान्यत् । अभ्याजैव क्रिया नान्या । शुक्लामेव न कृष्णामिति । एतेषां पदानां सामान्ये वर्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थः ।

---

प्र०—न वै पदार्थादिति । पदानि स्वं स्वमर्थं प्रतिपादयन्ति वाक्यम् । पदार्था एव स्वाकाङ्क्षायोग्यतासन्निधिवशात्परस्परसंसृष्टा वाक्यार्थ इत्यर्थः । न तु वाक्यं वाक्यार्थो वा पृथगस्तीति भावः । पदार्थाभिसम्बन्धस्येति । ध्वनिव्यङ्ग्यं नित्यं वाक्यं

---

उ०—पाठः । नन्वन्वयरूपोऽर्थः पदार्थातिरिक्त उपलभ्यतेऽत आह—पदानीति । पदार्था एवेत्यनेन संसर्गबोधे पदानां व्यापारो नास्तीति दर्शयति । एवं च पदार्थैरेवाकाङ्क्षादिभिः संसर्गस्य गम्यमानत्वान्न तत्र वाक्यशक्तिर्वाक्यस्यातिरिक्तस्याभावाच्च । तदाह—नतु वाक्यमिति । वाक्यार्थो वेति । संसर्गस्य पदार्थबोध्यत्वादिति भावः । ननु पदातिरिक्तवाक्याभावात्कस्य पदार्थाभिसम्बन्धो वाच्यः स्यादत आह—ध्वनिव्यङ्ग्यमिति । अनेन स्थिरत्वं तस्य दर्शितम् । विशिष्टस्यार्थस्येति । विशेषणत्वादिविशिष्टस्येत्यर्थः । पदार्थानां संसर्गबोधकत्वे दोषमाह—अन्यथेति । न च शब्दप्रयोज्यत्वाच्छाब्दत्वम्, प्रत्यक्षदृष्टधूमबोध्यवह्नेरपि प्रत्यक्षत्वापत्तेः, श्रुतधूमशब्दोपस्थितधूमार्थबोध्यवह्नेरपि शाब्दत्वापत्तेश्च । यदि तु पदसमभिव्याहाररूपाकाङ्क्षा तत्कारणत्वज्ञानं च शाब्दबोधे कारणमिति शाब्दत्वं, तदा पदानां पदार्थेष्वपि शक्तिर्न सिध्येत् । तदुक्तम्—'अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्' इति । यदि बोधजनकतयाऽसम्बद्धे वक्तुमशक्यतया पदार्थैः पदानां शक्तिरूपसम्बन्धकल्पनं तदा समभिव्याहारे संसर्गबोधकारणताया अपि असम्बद्धे वक्तुमशक्यतया तेन तादात्म्यसम्बन्धस्य वाक्ये आवश्यकत्वात् । तादात्म्यमेव च शक्तिरिति तत्त्वम् । पदार्थातिरिक्तः कश्चिद्वाक्यार्थोऽस्तीति वक्तुमुपक्रमते—भाष्ये इहेत्यादि । ननु कर्तृत्वस्य क्रियानिरूपितत्वात् क्रियायाश्चाऽसन्निधानात् तत्त्वाभावेन कर्तेत्यनुपपन्नमत आह—कर्तृमात्रमिति । प्रधानीभूतधात्वर्थमात्राश्रय इत्यर्थः । एवं कर्मशब्देन धात्वर्थफलमात्राश्रयः । अनिर्दिष्टा-

## तस्मात् प्रतिषेधः ॥ ५ ॥

तस्मात्प्रतिषेधो वक्तव्यः । न वक्तव्यः ।

## अर्थवत्समुदायानां समासग्रहणं नियमार्थम् ॥ ६ ॥

अर्थवत्समुदायानां समासग्रहणं नियमार्थं भविष्यति । 'समास एवार्थवतां समुदायानां प्रातिपदिकसञ्ज्ञो भवति नान्य' इति ।

यदि नियमः क्रियते प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसञ्ज्ञा न प्राप्नोति—बहुपटवः† उच्चकैर्नीचकैरिति‡ । किं पुनरत्र प्रातिपदिकसञ्ज्ञया प्रार्थ्यते ? प्रातिपदिकादिति स्वाद्युत्पत्तिर्यथा स्यादिति* । नैष दोषः । यथैवात्राप्रातिपदिकत्वात्सुबुत्पत्तिर्न भवति, एवं लुगपि× न भविष्यति । तत्र यैवासावन्तर्वर्तिनी विभक्तिस्तस्या एव श्रवणं भविष्यति । नैवं शक्यम् । स्वरे दोषः

प्र०–विशिष्टस्यार्थस्य पदार्थसंसर्गरूपस्य वाचकम् । अन्यथा ह्यशाब्दो वाक्यार्थः स्यात् । कर्ता निर्दिष्ट इति । सम्बोधनविषयनियतक्रियं कर्तृमात्रमित्यर्थः । यद्विशेषेऽवस्थानमिति । पदार्थसंसर्गरूपे वाक्यार्थ इत्यर्थः । अत एव वाक्यमेव मुख्यः शब्दो, वाक्यार्थ एव मुख्यः शब्दार्थः । सादृश्यात्त्वन्वयव्यतिरेकौ कल्पितौ लाघवार्थमाश्रित्य पदपदार्थव्यवस्थापनं क्रियते । प्रतिवाक्यं व्युत्पत्त्यसम्भवाच्छाब्दव्यवहाराऽ-

उ०–विति । पूर्वत्र विभक्तिविपरिणामेनान्वयः । ईदृशप्रकारोपि भाष्यप्रामाण्याद्युक्त एव । तृतीयस्थलेऽनिर्दिष्ट इत्येव पाठः । देवदत्त एव कर्त्ता नान्यः इति । अनेनैतद्दर्शयति—यत्किञ्चित्कारकस्य क्रियाया वोच्चारणे सर्वक्रियाणां च योग्यानां सर्वकारकाणां च योग्यानामाक्षेपो भवति । एवं च सर्वत्र वाक्यमेव बोधकं, तत्तदुपादानं तु नियमार्थेति । गामेव नान्यदिति । गामिति शब्दवाच्यमेव कर्म नान्यदित्यादिक्रमेणार्थः । भाष्ये 'सामान्ये—सामान्यतः क्रियाकर्तृत्वादिविशिष्टे । विशेषे—विशेषणविशेष्यभावापन्ने । तदाह—संसर्गरूप इत्यादि । विशेषणविशेष्यभावरूपसंसर्गेत्यर्थः । स एव वाक्यशक्य इति निरूपितं मंजूषायाम् । अत एवेति । तेनैव लौकिकवैदिकव्यवहारादित्यर्थः । नन्वेवं पदार्थव्यवहारोऽसङ्गतः स्यादत आह—सादृश्यादिति । लाघवार्थं कल्पितावन्वयव्यतिरेकावाश्रित्य सादृश्यात्पदपदार्थव्यवस्थेत्यन्वयः । यथा वर्णेष्वारोपिता उदात्तादयो व्यञ्जकध्वनिधर्मा व्यवहारे हेतवः । एवमिहापि काल्पनिकः पदपदार्थविभागस्तथेति भावः । ननु तादृशकल्पना व्यर्थेत्यत आह—प्रतिवाक्यमिति । ननु बह्वादीनां स्वार्थिकत्वेनार्थवत्त्वं भेत्यर्थं त्वत्समुदायत्वमस्मिन् कथमत आह—द्योत्येनेति । ननु तन्मध्यपतितन्यायेन 'अकजक्षम्वतः सर्वनामाव्ययविधौ' इति येन विधि-

† विभाषा सुपो बहुच् पुरस्तात्तु ५. ३. ६८. ‡ अव्ययसर्वनाम्नामकच् प्राक् टेः ५. ३. ७१.
* ङ्याप्प्रातिपदिकात्, स्वौजसमौट्० ४. १. १; २. × सुपो धातुप्रातिपदिकयोः २. ४. ७१.

स्यात्—बहुपट्व इत्येवं स्वरः स्यात्। बहुपँटव इति चेष्यते। पठिष्यति ह्याचार्यः—'चितः सप्रकृतेर्बह्वकजर्थ'मिति+। तस्यां पुनर्लुप्तायां यान्या विभक्तिरुत्पद्यते तस्याः प्रकृत्यनेकदेशत्वादन्तोदात्तत्वं न भविष्यति।

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसञ्ज्ञेति। यदयम् 'अप्रत्यय' इति प्रतिषेधं शास्ति। स च तदन्तप्रतिषेधः। स तर्हि ज्ञापकार्थः प्रत्ययप्रतिषेधो वक्तव्यः। ननु चायं प्राप्त्यर्थोपि वक्तव्यः। नार्थः प्राप्त्यर्थेन। कृत्तद्धितग्रहणं नियमार्थं भविष्यति—'कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसञ्ज्ञा भविष्यति, नान्यस्य प्रत्ययान्तस्ये'ति। स एषोऽ-

प्र०-भावप्रसङ्गात्। बहुपटव इति। द्योत्येनार्थेनाऽर्थवान् प्रत्ययः। प्रकृतिस्तु वाच्येनेत्यर्थवत्समुदायोऽयम्भवति। उच्चकैरिति। तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति यदा नाश्रीयते, नापि 'अकच्च्अव्ययतः' इति, तदायं दोषः। तदा हि सुबन्तस्याऽकचि कृते अव्ययादिति सुब्लुगभावात्सुपो धातुप्रातिपदिकयोरिति लुगिष्यते, स च न प्राप्नोति। किं पुनरत्रेति। उच्चकैरित्याद्यन्यथा सिध्यतीति प्रश्नः। इतरो 'बहुपटव' इति न सिध्यतीति मन्यमान आह—प्रातिपदिकादिति। स्वर इति। बहुपटव इति वकाराकारस्योदात्तत्वं प्राप्नोति, टकाराकारस्य चेष्यते। प्रकृत्यनेकदेशत्वादिति। नह्यसौ प्रकृतेरेकदेश इत्यर्थः। अप्रत्यय इति प्रतिषेधं शास्तीत्युक्ते कश्चन ब्रूयाद्बहुपटव इत्यत्राऽप्रत्यय इति निषेधः प्राप्नोतीत्यत आह—स च तदन्तप्रतिषेध इति। 'प्रत्ययग्रहणे यस्मात्स विहित' इति तदन्तविधिः। सञ्ज्ञाविधौ च प्रत्ययग्रहणे तदन्तविधिर्निवारितः। 'अप्रत्यय' इत्ययं तु प्रतिषेधविधिः। पटुशब्दाच्चाऽत्र जसुत्पन्नो न बहुपटुशब्दादिति बहुपटव इत्येतदप्रत्ययान्तमेव। अथवा 'अप्रत्यय' इति बहुव्रीह्याश्रयणात् प्रत्ययादेरपि बहुपटव इत्यस्य निषेधः प्राप्नोतीत्याह—स चेति। 'अप्रत्यय' इति तत्पुरुष आश्रीयते, तस्य स्वपदार्थप्रधानत्वेनान्तरङ्गत्वादिति भावः। प्राप्त्यर्थ

उ०-रिति सूत्रस्थवचनेन चाव्ययत्वात् लुक् सिद्ध इति किमत्र प्रातिपदिकत्वेनात आह—तन्मध्येति। तदा हीति। तन्मध्यपतित इत्यादिन्यायाऽभावे इत्यर्थः। अन्तरङ्गत्वाल्लुक्त्वाच्च पूर्वमेवाकचोऽव्ययादिति सुब्लुक्कुतो नेति चिन्त्यम्। बहुपटव उच्चकैर्नीचकैरिति वाक्ये बहुपटव इत्युदाहरणम्। किं पुनरिति प्रश्नाशयस्तु 'यथैवे'त्यादिना वक्ष्यमाण इत्यन्ये। अन्यथा सिध्यतीति। तन्मध्यपतितादिन्यायेनेति भावः। टकाराकारस्येति। प्रातिपदिकत्वेऽसति अन्तरङ्गानपीति न्यायेन लुकि कृते टुशब्दोकारस्यैव स्वरप्रवृत्तिरिति भावः। नह्यसाविति। समुदायादुत्पत्तेरिति भावः। अप्रत्यय इति निषेधः प्राप्नोतीति। जसमाश्रित्येति भावः। प्रतिषेधेति। पर्युदासेऽपि प्रत्ययस्य सञ्ज्ञित्वाऽभावान्न दोष इति भावः।

+६. १. १६३ वा० १.

नन्यार्थः प्रत्ययप्रतिषेधो वक्तव्यः । प्रकृतिप्रत्ययसमुदायस्य वा प्रातिपदिकसञ्ज्ञा वक्तव्या ।

उभयं न वक्तव्यम् । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः ? यथाजातीयकानां समासः । कथं जातीयकानां समासः ? सुबन्तानाम् ।

सुप्तिङ्समुदायस्य तर्हि प्रातिपदिकसञ्ज्ञा प्राप्नोति । सुप्तिङ्समुदायस्यापि प्रातिपदिकसञ्ज्ञाऽऽरभ्यते—'जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाती'ति† । तन्नियमार्थं भविष्यति—'एतस्यैव सुप्तिङ्समुदायस्य प्रातिपदिकसञ्ज्ञा भवति, नान्यस्ये'ति ।

प्र०—इति । प्रतिषेधप्राप्त्यर्थ इत्यर्थः । स एषोऽनन्यार्थ इति । ज्ञापनार्थ एवेत्यर्थः । सुबन्तानामिति । एतच्चोपलक्षणं, भेदसंसर्गद्वारकार्थवत्त्वयुक्तानाम् । यस्मात्सुबन्तानामपि समासो दृश्यते—अश्वक्रीतीत्यादौ, 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्ते'रिति वचनात् । देवदत्तो ग्रामं गत इत्यादेः सुबन्तसमुदायस्यैव वाक्यस्य नियमेन निवृत्तिः स्यादित्यभिप्रायेणाह—सुप्तिङ्समुदायस्येति । जहि कर्मणेति । ननु समाससञ्ज्ञेयं समासान्तोदात्तार्था । नैष दोषः, समासत्वादेव प्राति-

उ०—बहुव्रीहीति । न विद्यते प्रत्ययो यस्मिन्निती त्यर्थः । भेदसंसर्गेति । वाक्ये पदार्थयोर्विभागेनापि प्रयोगे सतीतरसंसर्गाकाङ्क्षा भेदसंसर्गः । स द्वारभूतो यस्य विशिष्टार्थवत्त्वस्य तद्युक्तानामित्यर्थः । समासेऽपि वाक्यीयेनैव तेन विशिष्टार्थवत्त्वम् । नहि प्रकृतिप्रत्यययोर्विभागः, परश्चेति वचनादिति भावः । एवं च समुदायघटका भागाः स्वातन्त्र्येणापि प्रयोगार्हा अर्थवन्तो गृह्यन्त इति तात्पर्यम् । उपलक्षणत्वेन व्याख्याने बीजमाह—यस्मादिति । अश्वक्रीतीति । सुबन्तेन समासे त्वन्तरङ्गत्वाट्टापि ङीबेव न स्यादित्यर्थः । सुबन्तानामित्यस्योपलक्षणत्वमजानानश्चोदयतीत्याह—देवदत्त इति । ननु सुप्तिङ्समुदायस्य प्रातिपदिकसञ्ज्ञेत्ययुक्तं, तेनान्तोदात्तस्वरस्यापि सिद्ध्यर्थं समाससञ्ज्ञाया एव विधानादिति शङ्कते—नन्विति । समासत्वादेवेति । समासमूलकार्थवत्त्वादेव प्रातिपदिकत्वमिति सुप्तिङ्समुदायस्यापि समासतुल्यजातीयताप्रतिपादनाय जहि कर्मणेत्यतदुपन्यस्तमित्यर्थः । एवं च भाष्ये प्रातिपदिकसञ्ज्ञारभ्यत इत्यस्य तन्मूलभूता समाससञ्ज्ञारभ्यत इत्यर्थ इति तात्पर्यम् । तिङन्तस्याऽसत्त्ववाचित्वेन सङ्ख्याकारकाद्यभावाद्विभक्त्यनुपपत्तेः प्रातिपदिकत्वस्य फलाभावोऽत आह—ततश्चेति । समासस्येति सूत्रं तु परमसर्वं इत्यादौ स्वाङ्गशिटामित्यादेः प्राप्तस्य बाधाय स्यादिति तात्पर्यम् । तुल्यजातीयानामिति । तत्त्वं च प्रयोगार्हस्वतन्त्रार्थवत्समुदायत्वेनेत्याहुः । वार्तिककृतैवेणायमेवार्थ उपलक्ष्यत इति बोध्यम् । प्रकृतिभागस्यार्थवत्त्वे किं केवलस्य प्रयोग आपाद्यते उत तत्र प्रमाणं नास्तीत्युच्यत इति विकल्पे, नाद्य इत्याह—अन्यथेति । द्वितीये आह—

† ३. १. ७२ गणसूत्रम् ।

तिङ्समुदायस्य तर्हि प्रातिपदिकसञ्ज्ञा प्राप्नोति । तिङ्समुदायस्यापि प्रातिपदिकसञ्ज्ञाऽऽरभ्यते—'आख्यातमाख्यातेन क्रियासातत्ये' इति† । तन्नियमार्थं भविष्यति—'एतस्यैव तिङ्समुदायस्य प्रातिपदिकसञ्ज्ञा भवति, नान्यस्ये'ति ।

**अर्थवत्ता नोपपद्यते केवलेनाऽवचनात् ॥ ७ ॥**

अर्थवत्ता नोपपद्यते वृक्षशब्दस्य । किं कारणम् ? 'केवलेनावचनात्' । न केवलेन वृक्षशब्देनार्थो गम्यते । केन तर्हि ? सप्रत्ययकेन ।

**न वा प्रत्ययेन नित्यसम्बन्धात् केवलस्याऽप्रयोगः ॥ ८ ॥**

न वैष दोषः । किं कारणम् ? 'प्रत्ययनेन नित्यसम्बन्धात्' नित्यसम्बन्धावेतावर्थौ प्रकृतिः प्रत्यय इति । प्रत्ययेन नित्यसम्बन्धात् केवलस्य प्रयोगो न भविष्यति ।

अन्यद्भवान्पृष्टोऽन्यदाचष्टे । आम्रान् पृष्टः कोविदारानाचष्टे । 'अर्थवत्ता नोपपद्यते केवलेनावचना'दिति भवानस्माभिश्चोदितः केवलस्याऽप्रयोगे हेतुमाह । एवं च किल नाम कृत्वा चोद्यते समुदायस्यार्थे प्रयोगादवयवानामप्रसिद्धिरिति ।

**सिद्धं त्वन्वयव्यतिरेकाभ्याम् ॥ ९ ॥**

प्र०—पदिकत्वमिति तत्तुल्यजातीयताप्रतिपादनार्थमेतदुपन्यस्तम् । तिङ्समुदायस्येति । 'पश्य धावती'त्येवमादेः । ततश्च प्रातिपदिकान्तोदात्तत्वप्रसङ्गः । आख्यातमिति । ततश्च समासेन तुल्यजातीयानां सर्वेषां वाक्यानां नियमान्निवृत्तिः सिद्धेत्यर्थः । अर्थवत्तेति । अर्थवत्ता सञ्ज्ञानिमित्तत्वेनेहोपात्ता, सा च वाक्यस्यैव पदस्य वा केवलस्य लोके प्रयुज्यमानस्योपपद्यते, न तु प्रकृतिभागस्य केवलस्य प्रयोगाभावाद्वर्णवदव्यवहार्यत्वात् । नवेति । अन्यथासिद्धः केवलस्याऽप्रयोगः 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय' इति नियमात् । अर्थवत्ता त्वन्वयव्यतिरेकाभ्यामस्त्येवेति भावः । अन्वयव्यतिरेकाभ्यामिति । अन्वयोनुगमः । सति शब्देऽर्थाव-

उ०—अर्थवत्ता त्विति । भाष्ये—नित्यसम्बन्धाविति । मायेश्वरवदिति भावः । अवयवानामप्रसिद्धिरिति । अवयवमात्रादर्थगत्यभावेनावयवानामर्थवत्त्वे हेतोरप्रसिद्धिरित्यर्थः । लोके केवलप्रकृत्यादेरप्रयोगेपि तान्त्रिककल्पितावन्वयव्यतिरेकौ दर्शयति—इहेत्यादिना । एवं कल्पितान्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययविभागं तयोरर्थवत्त्वं च परिकल्प्य शास्त्रव्याख्यानमिति

† २. १. ७२. गणसूत्रम् ।

सिद्धमेतत् । कथम् ? अन्वयाद् व्यतिरेकाच्च । कोसावन्वयो व्यतिरेको वा ? इह 'वृक्ष' इत्युक्ते कश्चिच्छब्दः श्रूयते वृक्षशब्दोऽकारान्तः सकारश्च प्रत्ययः । अर्थोऽपि कश्चिद् गम्यते मूलस्कन्धफलपलाशवान्, एकत्वं च । वृक्षावित्युक्ते कश्चिच्छब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी । सकारो हीयते, औकार उपजायते, वृक्षशब्द अकारान्तोऽन्वयी । अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी । एकत्वं हीयते द्वित्वमुपजायते मूलस्कन्धफलपलाशवानन्वयी । ते मन्यामहे—यः शब्दो हीयते तस्यासावर्थो यो हीयते, यः शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते, यः शब्दोऽन्वयी तस्यासावर्थो योऽर्थोऽन्वयीति ।

विषम उपन्यासः । बहवो हि शब्दा एकार्था भवन्ति । तद्यथा—इन्द्रः शक्रः पुरुहूतः पुरन्दरः । कन्दुः कोष्ठः कुसूल इति । एकश्च शब्दो बह्वर्थः । तद्यथा—अक्षाः पादा माषा इति । अतः किम् ? न साधीयोऽर्थवत्ता सिद्धा भवति । न ब्रूमः—अर्थवत्ता न सिध्यतीति । वर्णिता अर्थवत्तान्वयव्यतिरेकाभ्यामेव । तत्र कुत एतदयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति । न पुनः प्रकृतिरेवोभावर्थौ ब्रूयात् । प्रत्यय एव वा ? सामान्यशब्दा एत एवं स्युः । सामान्य-

---

प्र०-गमः । व्यतिरेकः—शब्दाभावे तदर्थानवगमः । विषम इति । यद्येकः शब्द एकस्मिन्नर्थे नियतः स्यात् तत एतद्युज्यते वक्तुम्, यतस्त्वनियमः ततः प्रकृतेरेव सर्वे अर्थाः स्युः । यथा दधि मध्वग्निचिदिति । प्रत्ययस्तु क्वचिद्द्योतकः । प्रत्ययस्यैव वा सर्वेऽर्थाः स्युः—इयानधुनेति यथा । प्रकृतिस्त्वर्थाभिधाने साहायकमात्रं कुर्यात् ।

---

उ०-भावः । अत एव पूर्वप्रश्नः—कोसाविति । लोकसिद्धत्वे हि प्रश्नासङ्गतिरिति बोध्यम् । अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्यययोरर्थवत्त्वोपपादनस्यानैकान्तिकत्वमिह भाष्योक्तं वैषम्यं, तथाहि ताभ्यां नार्थसिद्धिः । अध्यागच्छतीत्यादौ निपातेषु व्यभिचारात् । तत्सत्त्वेऽपि तदर्थाऽप्रतीतेः । तद्व्यतिरेकेऽप्यागच्छतीत्येतन्मात्रादर्थप्रतीतेश्च । एवं च प्रकृतिप्रत्ययान्यतरस्यैव सर्वार्थतास्तु, अन्यतरस्य साधुत्वमात्रार्थकत्वमस्तु । 'अन्यायोऽनेकार्थत्व'मिति त्वप्रयोजकम्, अक्षादिषु दर्शनाद्बहुपर्यायदर्शनादन्यायोनेकशब्दत्वमितिवदित्याशयेन प्रकृतिप्रत्यययोरर्थवत्ताया अनैयत्यं दर्शयति—यद्येक इति । यतस्त्विति । एवं चाक्षादिशब्दे तस्मिन्शब्दे सत्येव तदर्थाप्रतीतेरर्थान्तरप्रतीतेः, पर्यायस्थले तस्मिन् शब्देऽसत्यपि तदर्थप्रतीतेश्चैदृशावन्वयव्यतिरेकावनिर्णायकाविति भावः । यदि प्रकृतिरेव सङ्ख्यावाचिका तर्हि क्वापि विभक्तिर्न प्रयुज्येतेरयत आह—प्रत्ययस्त्विति । 'इदम इश्' । यस्येति लोपे इयान् । अधुनेति । इदमोऽधुना प्रत्यय

शब्दाश्च नान्तरेण विशेषं प्रकरणं वा विशेषेष्ववतिष्ठन्ते। यतस्तु खलु नियोगतो वृक्ष इत्युक्ते स्वभावतः कस्मिंश्चिदर्थे प्रतीतिरुपजायते। अतो मन्यामहे—नेमे सामान्यशब्दा इति। न चेत्सामान्यशब्दाः, प्रकृतिः प्रकृत्यर्थे वर्तते, प्रत्ययः प्रत्ययार्थे।

किं पुनरिमे वर्णा अर्थवन्तः, आहोस्विदनर्थकाः?

**वर्णस्यार्थवदनर्थकत्वे उक्तम् ॥ १० ॥**

किमुक्तम्? 'अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः संघातार्थवत्त्वाच्च। संघातस्यैकार्थ्यात् सुबभावो वर्णात्।' 'अनर्थकास्तु प्रतिवर्णमर्था-

---

प्र०-अतः किं न साधीय इति। प्रकृतिः सर्वानर्थानभिदधाति, द्योतिकास्तु विभक्तय इति सिद्धैवाऽर्थवत्ता। प्रत्यय एवेति। ततश्च प्रकृतेरर्थवत्ता न सिध्यतीति तदवस्थो दोष इत्यर्थः। सामान्यशब्दा इति। प्रकृतिश्चेत्सर्वानर्थानभिदध्याद् वृक्ष इत्युक्ते सर्वा सङ्ख्या प्रतीयेत, प्रत्ययो वा सर्वस्य प्रातिपदिकस्याऽर्थं प्रत्याययेदित्यर्थः। यतस्तु

---

उ०-इति पक्षे इदम्। शङ्कितुराशयं तद्वचसा ज्ञातुं पृच्छति—भाष्ये—अतः किमिति। उक्तेन बहवः शब्दा इत्यादिना ग्रन्थेन किं साधितं त्वयेति भावः। इतरः स्वाशयमाह—न साधीय इति। तदेवाह—न पुनरिति। अन्यतरद्व्यर्थं तकमिति भावः। तद्व्याचष्टे—प्रकृतिरित्यादिना। सिद्धैवेति। किन्तु विपरीतं प्राप्नोतीति भावः। तदाह—ततश्चेति। एवं च प्रकृतेरर्थवत्त्वाऽभावात्सञ्ज्ञा न स्यादिति भावः। परिहरति—सामान्यशब्दा इति। एवं सत्येते सामान्यशब्दाः स्युस्तत्त्वं चैषां न दृश्यत इति भावः। तदुपपादयति—प्रकृतिश्चेदित्यादिना। वृक्ष इत्युक्ते इत्यस्य प्रातिपदिकप्रयोगमात्रे तात्पर्यम्। सामान्यशब्दाः कीदृशा इत्यत आह—भाष्ये—सामान्यशब्दाश्चेति। चोऽप्यर्थे। विशेषं—विशेषबोधकपदान्तरसमभिव्याहारम्। एवं च प्रकरणादिसापेक्षतयाऽर्थप्रत्यायकत्वं सामान्यशब्दत्वमिति भावः। एते तु नैवमित्याह—यतस्त्विति। त्वदीत्या हि प्रकृतिः स्वार्थं प्रत्ययार्थसामान्यं चाभिदधाति, तत्र विना प्रकरणादिकं केवलस्वार्थस्य बोधः कथमपि न स्यात्। दृश्यते तु सः, सङ्ख्यादेश्च न सामान्यरूपेणापि बोधः। एवं प्रत्ययमात्रान्न कदापि प्रकृत्यर्थबोधः। प्रकरणाद्यसत्त्वेपि च स्वार्थोपस्थितिः शाब्दवासनावताम्। अतो नैषामुभयार्थवाचकत्वरूपंसामान्यशब्दत्वम्। ततः किमित्याह—न चेदित्यादि। प्रत्ययार्थे तद्द्योत्यार्थे। 'पञ्चकं प्रातिपदिकार्थं' इति मुख्यपक्षे तस्य द्योतकत्वात्। वर्णवारणायाऽर्थवद्ग्रहणमित्युक्तम्। तत्र वर्णानामानर्थक्यं दृढीकर्तुं पृच्छति—भाष्ये—किं पुनरिति। उक्तमिति। 'हयवरट्'सूत्रे इति शेषः। अनर्थगतेरिति। अर्थानवगतेरित्यर्थः। संघातार्थवत्त्वाच्च वर्णानामर्थवत्त्वम्, अन्यथानर्थकावयवक-

नुपलब्धेर्वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनादि’ति+ ।

तत्रेदमपरिहृतम्—‘संघातार्थवत्त्वाच्चे’ति । तस्य परिहारः—

**संघातार्थवत्त्वाच्चेति चेद् दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः ॥११॥**

संघातार्थवत्त्वाच्चेति चेद् दृश्यते हि पुनरतदर्थेन गुणेन गुणिनोऽर्थभावः । तद्यथा—एकस्तन्तुस्त्वक्त्राणेऽसमर्थस्तत्समुदायश्च कम्बलः समर्थः । एकश्च तण्डुलः क्षुत्प्रतिघातेऽसमर्थः, तत्समुदायश्च वर्द्धितकं समर्थम् । एकश्च बल्वजो× बन्धनेऽसमर्थः, तत्समुदायश्च रज्जुः समर्था भवति ।

विषम उपन्यासः । भवति हि तत्र या च यावती चाऽर्थमात्रा । भवति हि कश्चित्प्रत्येकस्तन्तुस्त्वक्त्राणे समर्थः, एकश्च तण्डुलः क्षुत्प्रतिघाते समर्थः, एकश्च बल्वजो बन्धने समर्थः । इमे पुनर्वर्णा अत्यन्तमेवाऽनर्थकाः ।

यथा तर्हि रथाङ्गानि विहृतानि प्रत्येकं व्रजिक्रियां प्रत्यसमर्थानि भवन्ति तत्समुदायश्च रथः समर्थः, एवमेषां वर्णानां समुदाया अर्थवन्तः, अवयवा अनर्थका इति ।

प्र०-खल्विति । प्रकरणादिना विनैवेति भावः । अतदर्थेनेति । अतत्प्रयोजनेनेत्यर्थः । गुणेनेति । अवयवेन । स ह्यवयविन उपकारकत्वाद् गुणः । अवयवी तु—गुणी । अर्थभावः—प्रयोजनोत्पत्तिः । बल्वजः—तृणविशेषः× । या च यावती चेत्ययं समुदायः—काचिदित्यस्याऽर्थे वर्तते । विहृतानीति । विक्षिप्तानीत्यर्थः । अनर्थकस्येति ।

उ०-समुदायोऽप्यर्थवान् न स्यादित्यर्थः । नन्वर्थवत्त्वे प्रत्येकं सुप्स्यादत आह—संघातस्येति । ‘एकाज्द्विर्वचन’न्यायेन न प्रत्येकं विभक्तिरिति भावः । अर्थशब्दस्याऽविधेयपरत्वे दृष्टान्ताऽसङ्गतिरत आह—अतत्प्रयोजनेति । यथा तत्राऽतत्प्रयोजनकानां समुदायस्तत्प्रयोजनस्तथेहाऽनर्थकानां समुदायोऽर्थवानिति भावः । भाष्ये या च यावती चार्थमात्रेति । काचित्प्रयोजननिष्पत्तिरित्यर्थः । तदुपपादयति—भवति हि कश्चिदिति । विक्षिप्तानीति । विहरतिरिह पृथक्करणे वर्तत इति भावः । ‘अनर्थकस्ये’ति विशेषणकृत्यमाह—निपातानामिति । ननु पदादित्यधिकृत्य विधीयमानस्य निघातस्य पदविधित्वात्समर्थपरिभाषोपस्थितेः प्रकृते सामर्थ्याऽभावात्तदप्राप्तिरत आह—अर्थवदनर्थकयोरिति । सामर्थ्ये—व्यपेक्षालक्षणे । सामर्थ्यादिति । पदत्वसम्पादकप्रातिपदिकसञ्ज्ञाविधानसामर्थ्यादित्यर्थः । एके इति । अत्राऽरुचिस्तु समर्थसूत्रे एकार्थीभावस्यैव ग्रहणेन निघातविधौ तदनुपस्थितिः । तदपवादस्य

+ द्रष्टव्य ५. वा० ९-१५. १—‘अत्यन्तायैव’ इति कीलहार्नपाठः । × बल्वजा रज्ज्ववयवाः । यैः सम्मिलितैः रज्जुः सम्पद्यत इति भाष्याशयः । ‘पूंजा’ इति लोके प्रसिद्धः ।

## निपातस्यानर्थकस्य प्रातिपदिकत्वम् ॥ १२ ॥

निपातस्यानर्थकस्य प्रातिपदिकसञ्ज्ञा वक्तव्या । खञ्जति निखञ्जति । लम्बते प्रलम्बते ।

किं न पुनरत्र प्रातिपदिकसञ्ज्ञया प्रार्थ्यते ? 'प्रातिपदिका'दिति स्वाद्युत्पत्तिः† 'सुबन्तं पद'मिति पदसञ्ज्ञा‡ 'पदस्य' 'पदात्' [ ८. १. १६; १७ ] इति निघातो यथा स्यात्* ।

नैतदस्ति प्रयोजनम् । सत्यामपि प्रातिपदिकसञ्ज्ञायां स्वाद्युत्पत्तिर्न प्राप्नोति । किं कारणम् ? नहि प्रातिपदिकसञ्ज्ञायामेव स्वाद्युत्पत्तिः प्रतिबद्धा । किं तर्हि ? एकत्वादिष्वप्यर्थेषु स्वादयो विधीयन्ते+ । न चैषामेकत्वादयः सन्ति । नैष दोषः । अविशेषेणोत्पद्यन्ते । उत्पन्नानां नियमः क्रियते ।

---

प्र०–निपातानां द्योतकत्वादभिधेयार्थाऽभावेपि द्योत्यार्थसद्भावाद्येषामर्थवत्त्वं तेषां सिध्यत्येव सञ्ज्ञा । यस्य तु द्योत्योऽप्यर्थो नास्ति तदर्थं वचनम् । निघातो यथा स्यादिति । अर्थवदनर्थकयोरसत्यपि सामर्थ्ये सञ्ज्ञाविधानसामर्थ्यान्निघातो भवतीत्येके । समानवाक्यता निमित्तो निघातो न सामर्थ्यनिमित्तः, सा चेहास्ति, 'आख्यातं साव्ययकारकविशेषणं वाक्य'मिति परिभाषणाद्वाक्यस्येत्यपरे । नहीति । स्वादिविधिवाक्यस्य सङ्ख्याविधिवाक्येनैकत्वात् । अविशेषेणेति । नानावाक्यताश्रयणात् । नियमश्चाऽर्थानां

---

उ०–'समानवाक्ये निघाते'त्यस्य सत्त्वं चेति । तदाह—समानेति । अख्यातमिति । अत्र वाक्यलक्षणेऽर्थवत्त्वं न निविष्टमिति 'निखञ्जती'त्यादेरपि वाक्यत्वं बोध्यम् । 'एकतिङ् वाक्य'मिति वक्तुं युक्तम् । नानावाक्येति । स्वौजसित्यादेर्द्व्येकयोरित्यादेश्चेत्यर्थः । 'अव्ययादाप्सुप' इति लिङ्गाद्वाक्यभेदोऽप्यभिमत इति भावः । ननु प्रत्ययनियमे दोष एवेत्यत आह—नियमश्चार्थानामिति । एकत्वे एकवचनमेवेति नियमो, न त्वेकत्व एवैकवचनमिति भावः । एकवाक्यतापक्षेप्यौत्सर्गिकत्वात्सर्वविभक्त्येकवचनमित्यन्यत्रोक्तम् । सञ्ज्ञाविधानमिति । तयोस्तद्विधानं च केवलं गत्युपसर्गसञ्ज्ञाबाधनार्थमेवेति भावः । अनेन च ज्ञापकेन वार्तिकं प्रत्याख्यायते, विभक्त्युत्पत्तिस्तूक्तरीत्यैवेति बोध्यम् । नत्विति । तथा च प्रयोगो व्यर्थः स्यादिति भावः । एनेन ज्ञापकं शिथिलमिति ध्वनयति । धात्वर्थानुवादकस्वरूपस्यापि योगस्य ग्रहीतुं शक्यत्वादिति बोध्यम् । ध्वनितं चेदमधिपरी इति सूत्रे भाष्ये । अन्तवद्भाव इति । तस्य हि पर्युदासे शाब्दकार्यलाभ इति तस्यैव प्रवृत्तिर्न स्वादिवत्त्वस्येति भावः ।

---

† ङ्याप्प्रातिपदिकात्; स्वौजसमौट्० ४. १. १; २. ‡ सुप्तिङन्तं पदम् १. ४. १४. * तिङ्ङतिङः ८. १. २८. + बहुषु बहुवचनम्; द्व्येकयोर्द्विवचनैकवचने १. ४. २१; २२.

११

अथवा प्रकृतानर्थानपेक्ष्य नियमः। के च प्रकृताः ? एकत्वादयः। 'एकस्मिन्नेवार्थ एकवचनं, न द्वयोर्न बहुषु'। 'द्वयोरेवार्थयोर्द्विवचनं' नैकस्मिन्न बहुषु'। 'बहुष्वेवार्थेषु बहुवचनं, नैकस्मिन्न द्वयो'रिति।

अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'अनर्थकानामप्येतेषां भवत्यर्थवत्कृत'मिति, यदयम् 'अधिपरी अनर्थकौ' [ १. ४. ९३ ] इत्यनर्थकयोर्गत्युपसर्गसञ्ज्ञाबाधिकां कर्मप्रवचनीयसञ्ज्ञां शास्ति।

किं पुनरयं पर्युदासो यदन्यत्प्रत्ययादिति, अहोस्वित्प्रसज्याऽयं प्रतिषेधः प्रत्ययो नेति ? कश्चात्र विशेषः ?

**अप्रत्यय इति चेत्तिबेकादेशे प्रतिषेधोऽन्तवत्त्वात् ॥ १३ ॥**

अप्रत्यय इति चेत्तिबेकादेशे प्रतिषेधो वक्तव्यः। काण्डे कुड्ये। किं कारणम् ? 'अन्तवत्त्वात्'। तिबतिपोरेकादेशोऽतिपोऽन्तवत्स्यात्। 'अस्त्य-

प्र०–न प्रत्ययानामित्यनर्थकेभ्योपि ते भवन्ति। अथवेति। प्रत्ययनियमेऽपि दोषाऽभाव इत्यर्थः। अधिपरी इति। क्रियायोगे गत्युपसर्गसञ्ज्ञयोर्विधानादनर्थकयोः क्रियायोगाऽभावात्प्राप्तिरेव नास्तीति संज्ञाविधानं यथोक्तस्याऽर्थस्य ज्ञापकं सम्पद्यते। आनर्थक्यं च निपातस्य धातुनिपातयोः साधारणार्थतयाऽधिकद्योत्याऽर्थाऽभावादुच्यते, न तु सर्वात्मनाथाऽभावात्। तिबेकादेश इति। तिपस्तिशब्दादारभ्य सुपः पकारेण प्रत्याहारः। अन्तवत्त्वादिति। पूर्वस्य प्रत्ययसदृशस्य प्रातिपदिकसञ्ज्ञाकार्यमिति पूर्वं प्रत्यन्त-

उ०–भाष्ये—अस्त्यन्यत्तिप इति। 'अतिप्प्रातिपदिक'मिति न्यासाश्रयेणेदम्। एवं चोत्तरत्र तद्धितग्रहणं न कार्यमिति लाघवम्। 'पञ्चनावप्रिय' इत्यत्र 'पञ्चनावे'त्यस्य प्रातिपदिकत्वेऽपि न क्षतिः, टजन्तस्योपसर्जनत्वेन ङीपोऽप्राप्तेः, सुबपि समासे सङ्ख्याभावान्न, प्रकृते सङ्ख्याया उक्तत्वाच्च। वस्तुतः प्रशस्ताऽर्थवत्त्वाभावात्प्रातिपदिकत्वाऽप्राप्तिरेव। एतेन 'टाप्स्या'दित्युक्तिः परास्ता। 'काण्डे' इत्यत्र च प्रातिपदिकत्वे ह्रस्वापत्तिर्दोष इति बोध्यम्। 'एवमोजायत इत्यत्रापि ह्रस्वापत्तिः। अत एव तिब्ग्रहणं चरितार्थम्। परकार्ये इति। आदिवत्त्वस्य हि प्रतिषेधरूपं शाब्दं फलमिति भावः। न चादिवद्भावेन 'ऊ' इत्यस्य प्रत्ययत्वेपि यतो विहितस्तदादित्वाभावात् कथं निषेधः, पूर्वान्तवद्भावेन तु तदादित्वं दुर्लभम्, उभयत आश्रयणे तन्निषेधादिति वाच्यम्। धान्ते 'समुदाये दृष्टाः शब्दा' इति न्यायेनैकदेशविकृतन्यायेन च ऊङ्प्रकृतित्वारोपादक्षतेः। भाष्ये द्वे हीति। तत्रावयवस्य सिद्धा, समुदायस्य प्रार्थ्यमानेति भावः। तत्रान्तरङ्गत्वादिति। प्रथमप्रवृत्तिकत्वमत्रान्तरङ्गत्वम्, उपदेशप्राप्तायाः समुदायनिष्ठाया एव हि प्रत्ययान्तत्वेन निषेध इति बोध्यम्। भाष्ये—अन्तवद्भावादिति। एकदेशविकृतन्यायस्याप्युपलक्षणम्। न चैवं 'काण्डे' इत्यत्र दोषः, अग्रे भाष्य एव वक्ष्य-

न्यत्ति' इति कृत्वा प्रातिपदिकसञ्ज्ञा प्राप्नोति† । अस्तु तर्हि प्रसज्यप्रतिषेधः—'प्रत्ययो ने'ति ।

**न प्रत्यय इति चेदूङेकादेशे प्रतिषेध आदिवत्त्वात् ॥ १४ ॥**

'न प्रत्यय' इति चेदूङेकादेशे प्रतिषेधः प्राप्नोति । ब्रह्मबन्धूः* । किं कारणम् ? 'आदिवत्त्वात्' प्रत्ययाऽप्रत्यययोरेकादेशः प्रत्ययस्यादिवत्स्यात् । तत्र 'प्रत्ययो ने'ति प्रतिषेधः प्राप्नोति¹ ।

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'उत्पद्यन्ते ऊङन्तात्स्वादय' इति, यदयं 'नोङ्धात्वोः' [ ६. १. १७५ ] इति विभक्तिस्वरस्य प्रतिषेधं शास्ति ।

अथवा द्वे ह्यत्र प्रातिपदिकसञ्ज्ञे—अवयवस्यापि, समुदायस्यापि । तत्रावयवस्य या प्रातिपदिकसञ्ज्ञा तयाऽन्तवद्भावात्स्वाद्युत्पत्तिर्भविष्यति ।

प्र०—वद्भावः । आदिवत्त्वादिति । परकार्ये प्रतिषेधे कर्तव्ये परं प्रत्येकादेशस्यादिवद्भावः । यदयमिति । अथवा 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मिति स्वादय उत्पद्यन्ते । द्वे इति । तत्राऽन्तरङ्गत्वात्प्रत्ययोत्पत्तेः प्रागेव ब्रह्मबन्धुशब्दस्य प्रवृत्ता प्रातिपदिकसञ्ज्ञेत्यूङेकादेशस्य पूर्वं प्रत्यन्तवद्भावादस्यैव प्रातिपदिकत्वमिति न कश्चिद्दोषः । राजेति । तत्र नलोपो न स्यात् । अत्राप्यन्तरङ्गत्वात् पूर्वमेव प्रवृत्ता

उ०—माणत्वात् । अत्रापीति । अत्रेदं चिन्त्यम्—नाऽयं दोषः कार्यकालपक्षे, व्यवस्थितयोः पक्षयोरेकेन लक्ष्ये सिद्धे पक्षान्तरेण दोषशङ्काया अनौचित्यात् । ध्वनितं चेदं प्रगृह्यसञ्ज्ञा प्रकरणे भाष्ये । अत एव पर्युदासपक्षे नायं दोषः शङ्कितोऽत्र भाष्ये, तस्माद्यथोद्देशेपि न सिध्यतीति भाष्याशयः । न च कैयटोक्तयुक्त्या सिध्यतीति वाच्यम् । लुगादिनेव प्रतिषेधेन जातनिवृत्तिरपीति भाष्याशयात् । 'भुक्तवन्तं प्रती'ति न्यायस्याऽपि लुगादिशास्त्र इवाऽत्रापि त्याग इति भावः । अत एव ज्ञापकेन परिहरति—नैष इति । यदि त्वनेन ज्ञापनेन जातनिवृत्त्यभाव एवाऽन्वाख्यायते, लुगादिनाऽप्यनुत्पत्तिरेवोच्यते, अवयवलोपशास्त्रैरपि तत्तदवयवरहितस्यैव तत्तद्विषये प्रत्ययत्वादि बोध्यते इत्युच्यते तदास्त्वित्याहुः । ननु द्वे इति । समासग्रहणं विध्यर्थमिति शङ्काशयः । सुराजन्शब्दे न 'पूजना'दिति समासान्तनिषेधः । एवं तर्हीति । प्रत्याख्याने तु तद्धितनियमांशे बाध्यसामान्यचिन्ताऽऽश्रयणीयेति भावः । पर्युदासेऽपि ज्ञापकाश्रयणमावश्यकम् । न च स्वाश्रयाऽप्रत्ययान्तत्वात्सिद्धिः, अतिदिश्यमानविरुद्धस्वाश्रयकार्याऽभावस्यातिदेशस्वभावसिद्धत्वात् । अत एव 'तण्डुला'नित्यादेर्न प्राति-

† ह्रस्वो नपुंसके प्रातिपदिकस्य १. २. ४७. * ऊङुतः ४. १. ६६. १—"किं पुनरत्र प्रातिपदिकसञ्ज्ञया प्रार्थ्यते ? प्रातिपदिकादितिस्वाद्युत्पत्तिर्यथा स्यात् ।" इत्यधिकः पाठः क्वचित् ।

## सुब्लोपे च प्रत्ययलक्षणत्वात् ॥ १५ ॥

सुब्लोपे च प्रत्ययलक्षणेन प्रतिषेधः प्राप्नोति । राजा तक्षा‡ । प्रत्ययलक्षणेन 'प्रत्ययो ने'ति प्रतिषेधः प्राप्नोति ।

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—न' प्रत्ययलक्षणेन 'प्रतिषेधो भवती'ति,यदयं—'न ङिसम्बुद्ध्योः' [ ८. २. ८ ] इति प्रतिषेधं शास्ति ।

अथवा पुनरस्तु पर्युदासः । ननु चोक्तम् 'अप्रत्यय इति चेत्तिबेकादेशे प्रतिषेधोऽन्तवत्त्वा'दिति । प्रसज्यप्रतिषेधेऽप्येष दोषः । द्वे ह्यत्र प्रातिपदिकसंज्ञे, अवयवस्यापि समुदायस्यापि । गृह्यते च प्रातिपदिकाप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन । तस्मादुभाभ्यामपि वक्तव्यं स्याद्—'ह्रस्वो नपुंसके

प्र०—प्रातिपदिकसञ्ज्ञा बहिरङ्गेण प्रतिषेधेन न शक्यते निवर्तयितुमिति परिहारोऽस्ति । न ङिसम्बुद्ध्योरिति । ननु 'हे सुराज'न्निति समासप्रातिपदिकसंज्ञार्थः प्रतिषेधः स्यात् । न चोत्तरप्राप्तेरप्रत्यय इति प्रतिषेधः, 'मध्येपवादा' इति न्यायात् । एवं तर्हि समासेऽप्यप्रत्यय इति वर्तते । अन्यथा सुराजाऽतिराजेत्यादौ विध्यर्थतायां सम्भवन्त्यां नियमार्थं समासग्रहणं न स्यात् । यत्तस्येति । विभक्त्यन्तं च शक्तिप्रधानं सङ्ख्या॰

उ०—पदिकत्वमिति न नलोपस्तत्र । इदं चासिद्धवत्सूत्रभाष्यकैयटयोः स्पष्टम् । सिद्धान्ते तु समासांऽशे तदनुवृत्तेः फलं चिन्त्यम् । भाष्ये गृह्यते चेति । अन्तवत्त्वेनेति भावः । सङ्ख्या॰ प्रधानं चेति । 'काण्डे तिष्ठत' इत्यादौ । तत्र च सङ्ख्याया एव स्वाश्रयसम्बन्धेनान्वय इति भावः । तत्र सङ्ख्यायाः प्राधान्यं चिन्त्यं, नहि तद्विशेष्यको बोधोऽनुभवसिद्धः । शक्तेः प्राधान्यं च सम्बन्धघटकतया बोध्यम् । प्रथमान्तस्यापि 'वारिणी तिष्ठत' इत्यादौ क्रिया॰ कारकभावेनैवान्वयाद्वारिकर्तृका स्थितिरित्यर्थेन सम्बन्धघटकशक्तेरेव प्राधान्यमिति बोध्यम् । न च तयोरिति । तदर्थशक्तिसङ्ख्ययोरित्यर्थः । यस्य ह्रस्वस्तस्य साक्षाद्यदा नपुंसकत्वं तदा ह्रस्वः, यस्य त्ववयवद्वारकं तस्य मा भूदित्येतदर्थं तस्येत्युक्तेरिति भावः । भाष्ये—किं च नपुंसके इति । नपुंसकलिङ्गवदर्थे किमित्यर्थः । यस्येति । यदर्थस्येत्यर्थः । कस्येति । किंशब्दार्थ॰ स्येत्यर्थः । 'प्रातिपदिकस्ये'त्यस्य सत्त्वप्रधानस्येत्यर्थः । एवं च प्रत्ययान्तपर्युदासो निषेधो वेत्युभयमपि व्यर्थम् । तत्फलं हि तत्र ह्रस्वव्यावृत्तिरेव, तस्यामन्यथासिद्धायां तद्व्यर्थमेवेति भावः । फलान्तरं तु नास्त्येव, औत्सर्गिकैकवचनस्येष्टसिद्ध्यर्थं काचित्कत्वेन तदर्थस्य सङ्ख्याकर्मार्थयोगेन च सुबनापत्तेः । न च प्रत्ययान्तस्य प्रातिपदिकत्वे तदवयवसुपो लुगापत्तिः, विधिवैयर्थ्यापत्तेः । तस्माद्धातुसाहचर्याद्विभक्त्यतिरिक्तशब्दघटितप्रातिपदिकावयवस्यैव तेन लुगिति न दोषः । नापि फिट्स्वरप्राप्तिः, तत्तत्स्वराणां विशेषविहितानां बाधकत्वात्, प्रकृतिप्रत्ययविभागशून्येष्वेव फिट्स्वरप्रवृत्तेश्च । नापि 'पचेर'न्नित्यादौ नलोपप्राप्तिः, रन्तादेशस्यैव

‡ हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ६. १. ६८. ( नलोपः प्रातिपदिकान्तस्य ८. २. ७ )

यत्तस्ये'ति । किं च नपुंसके ? नपुंसकं यस्य गुणः । कस्य च नपुंसकं गुणः ? प्रातिपदिकस्य ॥४५॥

## कृत्तद्धितसमासाश्च ॥ १ । २ । ४६ ॥

समासग्रहणं किमर्थम् ?

### समासग्रहण उक्तम् ॥ १ ॥

किमुक्तम् ? अर्थवत्समुदायानां समासग्रहणं नियमार्थ'मिति† ॥४६॥

## ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ १ । २ । ४७ ॥

प्रातिपदिकग्रहणं किमर्थम् ?

---

प्र०—प्रधानं च, न च, तयोर्लिङ्गयोगः । न वाऽन्तवद्भावेनाऽर्थः शक्योऽतिदेष्टुमिति न भवति ह्रस्वः । अथवा नपुंसकत्वं प्रातिपदिकार्थस्यैव सम्भवतीति प्रातिपदिकग्रहणं मुख्यप्रातिपदिकपरिग्रहार्थमित्यन्तवद्भावेन यत्प्रातिपदिकं तस्य ह्रस्वाऽभावः । अत्र च सूत्रे यदव्युत्पन्नमर्थवत्तदुदाहरणम् । व्युत्पत्तौ तु कृदन्तत्वादेव सिध्यतीति पृथगस्याऽऽरम्भोऽनर्थकः स्यात् । अव्युत्पत्तिपक्षस्य चेदमेव सूत्रं ज्ञापकमित्याहुः ॥४५॥

ह्रस्वो नपुंसके । प्रातिपदिकग्रहणमिति । नपुंसकलिङ्गं द्रव्यस्यैव सम्भवति । द्रव्यवाचित्वं तु प्रातिपदिकस्यैव, न तु सुबन्तस्य, शक्तिप्रधानत्वात्, नापि तिङन्तस्य,

---

उ०—कर्तुं युक्तत्वात् । अन्यथा पर्युदासे ह्रस्ववारणेऽपि कार्यान्तराणामवारणादस्तु पर्युदास इति भाष्यासङ्गतेरिति दिक् । यथान्यासेऽप्याह—अथवेति । वस्तुतो यथान्यासेऽपि नपुंसकलिङ्गवदर्थे विशेष्यतया वर्तमानस्येत्यर्थः । न चेदं तथेति अयं प्रयासो व्यर्थ एवेति दिक् । 'यत्तस्ये'त्यनेनायमेवार्थो बोध्यत इति बोध्यम् । आहुरिति । अत्राऽरुचिबीजं 'बहुपटव' इत्याद्यर्थं व्युत्पत्तिपक्षेऽपि सूत्रमावश्यकमिति । इदं च बहुज्विधायके कैयटे स्पष्टम् । अव्युत्पत्तिपक्षज्ञापकं त्वतः कृकमिकंसेति सूत्रे कंसग्रहणमिति बोध्यम् । अस्यापि ज्ञापकत्वमॢदृ-सूत्रे उपपादितम् ॥४५॥

कृतद्धित । अर्थवत्समुदायानामिति । लोकेऽर्थबोधकतया पृथक्प्रयुज्यमानानां यः समुदाय इत्यर्थः ॥४६॥

ह्रस्वो नपुंसके । शक्तिप्रधानत्वादिति । तिङभिहितकर्तृशक्तिबोधकत्वेन प्रथमाया अपि शक्तिप्रधानत्वमित्याशयः । द्वयोरपीति । 'समुदायेने'ति शेषः । काण्डस्य विशेषणतया प्रविष्टत्वादिति भावः । साधनेति । साधनगतां सङ्ख्यामाख्यातं तदर्थः क्रिया यथोपादत्ते तदुपादानेन यथा सङ्ख्यावती तथा तद्गतलिङ्गोपादानेन लिङ्गवत्यपि स्यादित्यर्थः । कारक-

---

† १. २. ४५. वा० ६.

**नपुंसकह्रस्वत्वे प्रातिपदिकग्रहणं तिङ्निवृत्त्यर्थम् ॥ १ ॥**

नपुंसकह्रस्वत्वे प्रातिपदिकग्रहणं क्रियते 'तिङ्निवृत्त्यर्थम्' तिबन्तस्य ह्रस्वत्वं मा भूत्—काण्डे कुड्ये । रमते ब्राह्मणकुलमिति ।

**अव्ययप्रतिषेधः ॥ २ ॥**

अव्ययानां प्रतिषेधो वक्तव्यः । इह मा भूत्—दोषा ब्राह्मणकुलम् । दिवा ब्राह्मणकुलमिति ।

स तर्हि वक्तव्यः ? न वक्तव्यः । नात्राऽव्ययं नपुंसके वर्तते । किं तर्हि ? अधिकरणमत्राऽव्ययं नपुंसकस्य ।

इह तर्हि प्राप्नोति—काण्डीभूतं वृषलकुलम्, कुड्यीभूतं वृषलकुलमिति ।

प्र०-क्रियाप्रधानत्वादिति प्रश्नः । काण्डे इति । द्वयोरपि शक्तिशक्तिमतोरभिधानादस्ति नपुंसकार्थवृत्तित्वं सुबन्तस्यापीति भावः । रमते ब्राह्मणकुलमिति । यथैव साधनाश्रयां संख्यामाख्यातमुपादत्ते तथा तल्लिङ्गमपि । अव्ययप्रतिषेध इति । यथोपवर्णित-न्यायेनाऽव्ययस्यापि लिङ्गयोगात्प्राप्तिः । दोषा ब्राह्मणकुलमिति । 'दोषा'सहचरित-त्वाद् ब्राह्मणकुलमेव 'दोषा'शब्देनोच्यते इति ह्रस्वप्रसङ्गः । नात्राव्ययमिति । 'दोषा'-शब्दो रात्रावित्यत्रार्थे वर्तते, दिवाशब्दोऽप्यहनीत्यत्रेति ब्राह्मणकुलसाधनानां क्रिया-णामधिकरणं कालो भवन्ब्राह्मणकुलस्याधिकरणं भवति,—दोषा दृश्यते, चरत्य-धीते वेति, आधेयव्यवधानेनाधिकरणस्य क्रियाधारणात् । काण्डीभूतमिति । प्रकृति-विकारयोरभेदविवक्षायां च्विप्रत्ययः । द्वयोरप्यत्र तयोर्नपुंसकत्वाद् ध्रस्वप्रसङ्गः । कृते

उ०-गता सङ्ख्या आरोपेण क्रियायामेव बोध्यते तिङादिभिरिति स्पष्टं 'ङ्याप्प्रातिपदिका'दिति सूत्रे भाष्यकैयटयोः । अलिङ्गाऽसङ्ख्यस्याऽव्ययत्वादाह—यथेति । तिङन्तविषयोपवर्णितेत्यर्थः । यथा तत्र साधनत्वसम्बन्धेन तद्धर्मग्रहणं तथाऽत्र सामानाधिकरण्यात्स्यादिति भावः । वैयधिकरण्येन 'दोषा'शब्दे नपुंसकत्वाभिव्यक्त्यभावादाह—दोषासहेति । 'दोषा'शब्दो लाक्षणिक इत्यभिमानः । इत्यत्रार्थे इति । शब्दशक्तिस्वभावादिति भावः । ननु कारकं क्रियाया, न द्रव्यस्येति कथं नपुंसकस्याधिकरणमित्युक्तिरत आह—ब्राह्मणकुलसाधनाना-मिति । तत्रोपपत्तिमाह—आधेयेति । बहिरङ्गत्वादिति । अर्थधर्मनपुंसकत्वाश्रयत्वा-दित्यर्थः । एवं च पूर्वं दीर्घे ततो ह्रस्वे 'लक्ष्ये लक्षणस्ये'तिन्यायेन पुनर्दीर्घाऽप्रसङ्गः इति भावः । वस्तुतः समत्वेपि परत्वात् च्वाविति दीर्घे ततो ह्रस्वे 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरप्रवृत्तिरिति बोध्यम् । असत्त्वेति । क्वचिल्लिङ्गवता सामानाधिकरण्येऽपि तस्य लिङ्गवत्तया स्वार्थबोधकत्वाऽभाव इति भावः । किञ्चिदित्यादि । नैतावता द्विविधमेवाऽव्ययमिति भ्रमितव्यम् । उभयातिरिक्तस्यापि चाऽव्ययस्य सत्त्वात् । हिरुगादेः क्रियाप्रधानत्वं क्रिया-

## न वा लिङ्गाऽभावात् ॥ ३ ॥

न वा वक्तव्यम् । किं कारणम् ? 'लिङ्गाभावात्' । अलिङ्गमव्ययम् ।

किं न पुनरयमव्ययस्यैव परिहार आहोस्वित्तिवन्तस्यापि परिहारः ? 'तिवन्तस्यापी'त्याह । कथम् ? अव्ययं हि किञ्चिद्विभक्त्यर्थप्रधानं किञ्चित्क्रियाप्रधानम् । उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम्, हिरुक् पृथगिति क्रियाप्रधानम् । तिवन्तं चापि किञ्चिद्विभक्त्यर्थप्रधानं, किञ्चित्क्रियाप्रधानम् । काण्डे कुड्ये इति विभक्त्यर्थप्रधानं, रमते ब्राह्मणकुलमिति क्रियाप्रधानम् । न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति ।

अवश्यं चैतदेवं विज्ञेयम् । क्रियमाणेऽपि हि प्रातिपदिकग्रहण इह प्रसज्येत—काण्डे कुड्ये । द्वे ह्यत्र प्रातिपदिकसञ्ज्ञे, अवयवस्यापि समुदायस्यापि । गृह्यते च प्रातिपदिकाऽप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन ।

---

प्र०-ह्रस्वत्वे 'च्वौ चे'ति दीर्घो भविष्यतीति चेत्, ह्रस्वस्य बहिरङ्गत्वाद्दीर्घे कर्तव्येऽसिद्धत्वाद्दीर्घाप्रसङ्गः । एवं 'रमते' इत्यत्रापिह्रस्वत्वे टेरेत्वस्याऽप्रसङ्गः । न वेति । असत्त्ववाचित्वादव्ययस्य न तेन लिङ्गं प्रतिपाद्यत इत्यर्थः । न चैतयोरिति । आख्यातस्य शक्त्याश्रयद्रव्यसङ्ख्याप्रतिपादने सामर्थ्यं, न तु तल्लिङ्गप्रतिपादने, विचित्रत्वाद्भावशक्तीनाम् । 'काण्डे तिष्ठत' इत्यत्रापि संख्यायाः प्राधान्यान्नपुंसकत्वाऽयोगः । अवश्यमिति । यद्यत्रयवधर्मेण समुदायो व्यपदिश्यते इत्यर्थः । यत्तस्येति । साक्षात्तस्यैव यदा नपुंसकत्वं तदा ह्रस्वः । यस्य त्ववयवद्वारकं, तस्य मा भूत् ।

---

उ०—मात्रविशेषणत्वेन । 'काण्डीभूत'मित्यत्राप्येतदेव । स्वभावाच्च तादृशस्य लिङ्गाद्ययोगः । न चैतयोरिति । 'प्रायेणे'ति शेषः । तत्राव्ययार्थस्य 'काण्डे' इत्यादेश्चोभयाऽयोगः 'रमते' इत्यादेर्लिङ्गायोग इति बोध्यम् । अन्यथा 'हतशायिकाः शय्यन्त' इत्यादौ, 'पचतिरूप'मित्यादौ च ताभ्यां योगेन भाष्याऽसङ्गतिः स्यात् । भावशक्तीति । पदार्थशक्तीत्यर्थः । 'विचित्रत्वा'दित्यनेनेदं सूचयति 'पचतिकल्प'मित्यादौ भवत्येव, 'पचतकी'त्यादौ च नेति । काण्डे तिष्ठत इति । प्रथमायाः प्रातिपदिकार्थे विधानाद्विभक्त्यर्थाऽप्रधानत्वेनाऽस्त्येव लिङ्गयोग इति स्यादेव ह्रस्वत्वमित्यभिमानः । समाधत्ते—सङ्ख्याया इति । विभक्त्या सङ्ख्याया लिङ्गवत्त्वेनाऽप्रतिपादानं, भावशक्तेर्वैचित्र्यादिति भावः । अत्र 'सङ्ख्याया' इति शक्तेरुपलक्षणं, सङ्ख्यायाः प्राधान्यासम्भवात् । प्रथमास्थलेपि यथा शक्तिरस्ति तथोक्तम् । भाष्ये—अवश्यं चैतदेवमिति । एतत् तिबन्तमलिङ्गमित्यवश्यं स्वीकार्यमित्यर्थः । समुदायस्याप्युक्तं

तस्मादुभाभ्यामिति वक्तव्यं स्यात्—'ह्रस्वो नपुंसके यत्तस्ये'ति । किं च नपुंसके ? नपुंसकं यस्य गुणः । कस्य च नपुंसकं गुणः ? प्रातिपदिकस्य ।

यञेकादेशदीर्घैत्त्वेषु प्रतिषेधः ॥ ४ ॥

यञेकादेशदीर्घैत्त्वेषु प्रतिषेधो वक्तव्यः । युगवरत्राय युगवरत्रार्थम् युगवरत्रेभ्यः ।

यञेकादेशदीर्घैत्त्वेषु बहिरङ्गलक्षणत्वात्सिद्धम् ॥ ५ ॥

बहिरङ्गा एते विधयः* । अन्तरङ्गं ह्रस्वत्वम् । 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥४७॥

गोस्त्रियोरुपसर्जनस्य ॥ १ । २ । ४८ ॥

उपसर्जनह्रस्वत्वे च ॥ १ ॥

प्र०—अथवा तस्यैवाऽनुपजातव्यतिरेकस्येत्यर्थः । विभक्त्यन्तं चोपजातव्यतिरेकमिति ह्रस्वाऽभावः । सूत्रकारेण तु प्रातिपदिकग्रहणं मुख्यप्रातिपदिकपरिग्रहार्थं कृतं, प्रातिपदिकस्यैव नपुंसके वृत्तिसम्भवात् । तेनाऽन्तवद्भावादतिदिष्टप्रातिपदिकत्वस्य ह्रस्वाऽभावः । युगवरत्रायेति । दीर्घे कृते पुनर्ह्रस्वः, पुनर्दीर्घ इति चक्रकप्रसङ्गः ॥४७॥

गोस्त्रियोरुपसर्जनस्य । कृन्निवृत्त्यर्थमिति । धातुस्त्रिया अपि कृदन्तत्वाद्—

उ०—प्रातिपदिकत्वमुपपादयति—गृह्यते च प्रातिपदिकेत्यादिना । अवयवधर्मेणेति । अवयवभूतप्रकृत्यर्थधर्मेणेत्यर्थः । समुदायः—प्रत्ययान्तः । यद्यवयवधर्मेण समुदायस्य व्यपदेशस्तदा प्रातिपदिकग्रहणे क्रियमाणेप्येतदवश्यं वाच्यमिति भाष्यार्थ इति भावः । भाष्ये—उभाभ्यामपि वक्तव्यमिति । एवमर्थकतया सूत्रं व्याख्येयमित्यर्थः । अवयवद्वारा समुदायस्यापि नपुंसके वृत्तिसम्भवात्कथमनेन परिहारोऽत आह—साक्षादिति । तस्यैव—तज्जन्यबोधविशेष्यस्य । अनुपजातव्यतिरेकस्य—अनुपजातसम्बन्धस्य । अनुपजातेतराकाङ्क्षस्येति यावत् । अनेन सत्त्वप्रधानत्वमुपलक्षितम् । सूत्रकारेण त्विति । अवयवद्वारकमपि नपुंसकवृत्तित्वं गृह्यत इति तदाशयः । अत्र यद्वक्तव्यं तदुक्तम् । यदर्थस्य शास्त्रे नपुंसकं गुणः प्रसिद्धस्तस्य नपुंसके वर्तमानस्य ह्रस्व इति भाष्यार्थः । चक्रकप्रसङ्ग इति । लक्ष्ये लक्षणस्येति न्यायमनालोच्येदम् । भाष्ये—अन्तरङ्गं ह्रस्वत्वमिति । एवं च ह्रस्वत्वे कृते दीर्घप्रवृत्तेर्लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तिरित्यर्थः ॥४७॥

गोस्त्रियो । भाष्यवार्तिकयोर्विभज्य कथनाऽकथने हेतुमाह—धात्विति । ननु स्वरि—

* अकः सवर्णे दीर्घः ६. १. १०१; सुपि च ७. ३. १०२; बहुवचने झल्येत् ७. ३. १०३.

१—इदं वार्तिकं तद्भाष्यं च पूर्वसूत्रभाष्यान्ते मुद्रितं क्वचिद् दृश्यते ।

उपसर्जनह्रस्वत्वे च । किम् ? यञेकादेशदीर्घैत्त्वेषु प्रतिषेधो वक्तव्यः । अतिखट्वाय अतिखट्वार्थम् अतिखट्वेभ्यः ।

उपसर्जनह्रस्वत्वे च । किम् ? बहिरङ्गलक्षणत्वात् सिद्धमित्येव । बहिरङ्गा एते विधयः, अन्तरङ्गं ह्रस्वत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ।

**गोटाङ्ग्रहणं कृन्निवृत्त्यर्थम् ॥ २ ॥**

गोटाङ्ग्रहणं कर्तव्यम् । किमिदं 'टा'ङिति ? प्रत्याहारग्रहणम् । क्व सन्निविष्टानां प्रत्याहारः ? टापः प्रभृत्याष्यङो ङकारात्† किं प्रयोजनम् ? 'कृन्निवृत्त्यर्थम्' कृत्स्त्रिया धातुस्त्रियाश्च ह्रस्वत्वं मा भूदिति । अतितन्त्रीः अतिश्रीः अतिलक्ष्मीरिति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । स्त्रीग्रहणं स्वरयिष्यते । तत्र स्वरितेनाधिकारगतिर्भवति‡ । स्त्रियाम् [ ४. १. ३ ] इत्येवं प्रकृत्य ये विहितास्तेषां ग्रहणं विज्ञास्यते । स्वरितेनाधिकारगतिर्भवतीति न दोषो भवति ।

प्र०–देनाऽनिर्देशः । भाष्यकारस्तु तदेव विभज्य व्याचष्टे—कृत्स्त्रिया धातुस्त्रियाश्चेति । स्वरितेनेति । 'स्वरितेनाधिकार' इति योगोऽनेकधा व्याख्यातः । ततश्च 'यत्र स्वरितत्वं प्रतिज्ञायते तत्र तदधिकारो गृह्यते' इत्ययमपि तस्याऽर्थः । स्त्रियां क्तिन्नित्येतत्प्रकरण-विहितानां तु ह्रस्वभावित्वाऽभावादग्रहणम् । अस्त्रीप्रत्ययेनेत्येवं तदिति । ननु 'ष्यङः सम्प्रसारण'मित्यत्रातिकारीषगन्ध्यपुत्र इत्यत्र सम्प्रसारणाऽभावार्थमनुपसर्जनस्त्री-प्रत्ययविषयस्तदादिनियमप्रतिषेधः प्रदर्शित इत्युपसर्जनत्वादिह नियमेन भाव्यम् । नैष

उ०–तत्त्वे उत्तरत्रानुवृत्तिरेव स्यान्न तु तदधिकारस्थलाभोऽत आह—स्वरितेनेति । ह्रस्वभावि-त्वाभावादिति । न चाऽतिमतेरित्यादौ सम्भवः, गुणस्य बहिरङ्गत्वेनाऽसिद्धत्वात् । किं च तद्ग्रहणेऽन्तरङ्गत्वात्पूर्वमेव ह्रस्वे ततो गुणे 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनस्तत्प्रवृत्तौ फलाभाव इति भावः । भाष्ये—अस्त्रीप्रत्ययेनेति । एवं च स्त्रीप्रत्यये तदादिनियमाभावाद्-ध्रस्वसिद्धिरित्यर्थः । अतिकारीषेति । कारीषगन्ध्यामतिक्रान्तस्य पुत्र इति विग्रहः । अनुपसर्जनेति । एवं च ष्यङः—अतिक्रान्तार्थं प्रत्युपसर्जनत्वात्तदादिनियमेन पुत्रोत्तर-पदकतत्पुरुषे ष्यङन्तस्यापूर्वपदत्वान्न सम्प्रसारणमित्यर्थः । उपसर्जनत्वादिहेति । वस्तु-तश्चिन्त्यमेतत् । प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वं प्राथ्यंते तदर्थं प्रत्यनुपसर्जनत्वेन

† अजाद्यतष्टाप्—अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ४. १. ४—७८. १–'स्वर्यते' पाठा० ।

‡ स्वरितेनाधिकारः १. ३. ११.

यद्येवं प्रत्ययग्रहणमिदं भवति । तत्र 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'तीह न प्राप्नोति—अतिराजकुमारिः, अतिसेनानीकुमारिरिति । अस्त्रीप्रत्ययेने'त्येवं तत् ।

**ईयसो बहुव्रीहौ पुंवद्वचनम् ॥ ३ ॥**

ईयसो बहुव्रीहौ पुंवद्भावो वक्तव्यः । बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी, विद्यमानश्रेयसी ।

**पूर्वपदस्य च प्रतिषेधो गोसमासनिवृत्त्यर्थम् ॥ ४ ॥**

पूर्वपदस्य च प्रतिषेधो वक्तव्यः । किं प्रयोजनम् ? 'गोसमासनिवृत्त्यर्थम्' । गोनिवृत्त्यर्थं, समासनिवृत्त्यर्थं च । गोनिवृत्त्यर्थं तावत्—गोकुलम् गोक्षीरम् गोपालक इति ।

---

प्र०—दोषः । क्वचिदुपसर्जनेऽपि तदादिनियमो न भविष्यति, 'हल्ङ्याब्भ्य' इत्यत्र दीर्घग्रहणात् । अन्यथा निष्कौशाम्बिरतिखट्व इत्यादावुपसर्जनत्वादङ्याबन्तत्वात्सुलोपो न भविष्यतीति किं दीर्घग्रहणेन ? कथं तर्ह्यनुपसर्जनादित्यत्र 'कौम्भकारेयो न सिद्ध्यती'त्युक्तं, यावता कारशब्दादपि ङीपि कृते तदादिनियमाऽभावात् कुम्भकारीशब्दाड्ढग्भविष्यति । नैष दोषः । तदादिनियमाऽभावे कारीशब्दादपि कदाचिड्ढक् स्यात् । पुंवद्वचनमिति । यथा पुंविषये ईकारः श्रूयते, न तु ह्रस्वत्वं प्रतिपद्यते, तथेयसोऽपि पर इत्यर्थः । गोकुलमिति । 'प्रथमानिर्दिष्ट मिति गोशब्दस्योपसर्जनत्वम् ।

---

उ०—तदादिनियमाऽप्रवृत्तौ दोषाऽभावात् । कि दीर्घेति । हल्ङ्यादिसूत्रे 'हल्ङ्याब्भ्य' इत्यस्य परविशेषणत्वेनावयवङ्यन्तात्परत्वेन ङ्यन्तान्तात्परत्वेन च 'निष्कौशाम्बि' रित्यादौ सोर्लोपवारणार्थत्वाद्दीर्घग्रहणस्येदमपि चिन्त्यम् । विहितविशेषणे तु या सेत्यादावव्याप्तिः, कर्त्रीत्याद्यव्याप्तिश्च । भत्वादिविधौ विषयसप्तमी तु 'तस्मिन्नि'ति शास्त्रबाधापत्त्या गमकाऽभावेन चायुक्तेति दिक् । कारीशब्दादपीति । तथा च 'कुम्भ'शब्दे आदिवृद्धिर्न स्यादपीति भावः । ननु पुंवदतिदेशो स्त्रीप्रत्ययस्यापि निवृत्तिः स्यादत आह—यथेति । ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य पुंवत्—पुंसि यथा ययीरित्यादावीकारस्य श्रवणं तथा तत्र स्त्रीप्रत्ययभूतस्यापीत्येवं वचनव्यक्त्येति भावः । अत एवात्रैवेदं कृतम्, अन्यथा पुंवद्भावप्रकरण एव पठेत् । 'ईयसश्चे'तिप्रतिषेधान्न कप् । नपुंसकह्रस्वत्वं तु भवत्येव, अत्र पाठात् । न च 'नेत्येव सिद्धे पुंवद्वचनं व्यर्थं', वार्तिकाक्षरेषु लाघवगौरवविचाराऽभावादित्याहुः । अन्ये तु तस्याप्यभावं मन्यन्ते । अत एवोत्तरवार्तिके नपुंसकह्रस्वत्वस्यापि निषेध इति भ्रमव्यावृत्तये 'गोसमासनिवृत्त्यर्थं'मित्युक्तम् । अत एव च विग्रहे 'स' इत्यादि न प्रयुक्तमित्याहुः । तत्र समासपदं ङ्यन्तसमासपरम् । प्रथमेति 'षष्ठी'ति प्रथमानिर्दिष्टत्वादित्यर्थः । शास्त्रीयमिहोपसर्जनं न तु केवललौकिकमेवेति भावः । प्रत्ययलक्षणेनाऽप्रत्यय इति निषेधाऽप्रवृत्तेर्गोशब्दस्य

समासनिवृत्त्यर्थम्—राजकुमारीपुत्रः सेनानीकुमारीपुत्र इति। किमुच्यते समासनिवृत्त्यर्थमिति, न पुनरसमासोपि किञ्चित्पूर्वपदं यदर्थः प्रतिषेधः स्यात्? 'स्त्र्यन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवती'त्युच्यते। न चान्तरेण समासं स्त्र्यन्तं प्रातिपदिकमुपसर्जनमस्ति। ननु चेदमस्ति खट्वापादः मालापाद इति। एकादेशे कृतेऽन्तादिवद्भावात्प्राप्नोति। 'उभयत आश्रयणे[1] नान्तादिवत्'।

गोनिवृत्त्यर्थेन तावन्नार्थः। 'गोन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवती'त्युच्यते, न चैतद्गोन्तम्। ननु चैतदपि व्यपदेशिवद्भावेन गोन्तम्। 'व्यपदेशिवद्भावोऽप्रातिपदिकेन।

प्र०—राजकुमारीपुत्र इति। 'राजकुमारी'शब्दः समासप्रातिपदिकम्। इह तु 'कुमारीपुत्र' इति कुमारीशब्दस्य प्रत्ययान्तत्वात् प्रातिपदिकत्वाऽभावः। उभयत इति। प्रातिपदिकं स्त्रीप्रत्ययश्चेहाश्रीयते। तत्र यदि प्रातिपदिकस्यान्तवत्तदा स्त्रीप्रत्ययः परो नास्ति। अथ स्त्रीप्रत्ययस्यादिवत्तदा प्रातिपदिकत्वाऽभावः। गोन्तस्येति। उपसर्जनग्रहणेन गोस्त्रियौ विशेष्येते, पश्चात्ताभ्यां प्रादिपदिकमिति तदन्तविधिः। 'ग्रहणवते'-त्येतच्च प्रत्ययविधिविषयत्वादिह नोपतिष्ठते। व्यपदेशिवद्भाव इति। ननु 'रोण्या

उ०—प्रातिपदिकत्वमस्त्येव। राजकुमारीशब्द इति। नन्वस्याऽनुपसर्जनत्वात्तदादिनियमाभावेन प्रत्ययान्तत्वात् कथं प्रातिपदिकत्वम्। न च समासत्वात्, समासग्रहणस्य नियमार्थत्वभङ्गापत्तेस्तत्राप्यप्रत्यय इत्यनुवृत्तेरुक्तत्वेन तेनापि दुर्लभत्वाच्चेति चेन्न स्त्रीप्रत्ययविशेषस्य सामान्यस्य वा ग्रहणाऽभावेन तदप्रवृत्तेः। भाष्ये—किमुच्यत इति। गोस्त्रिनिवृत्त्यर्थमित्येव वक्तुं युक्तमिति भावः। न पुनरिति। असमासोऽपि किञ्चित्पूर्वपदं स्त्र्यन्तं नेति काका प्रश्नः। भाष्ये—न चान्तरेणेति। तदाशयमाह—इह त्विति। एतच्चाऽप्रत्यय इति सूत्रन्यासे। 'अति'विति न्यासे तु 'कुमारी'त्यस्यापि तत्त्वमस्त्वेति तत्रापि दोषः। भाष्ये—उभयत इति। 'ऐणेय'सिद्धये 'स्त्रीभ्यो ढ'गित्यत्र 'प्रातिपदिका'दित्यसम्बन्धाद् गाङ्गेये न दोषः। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्ये'ति परिभाषामनाश्रित्येदं, तथाहि प्रातिपदिकत्वतद्व्याप्यधर्माणां स्त्रीप्रत्ययविशिष्टे बोधनमिति 'बहुव्रीहेरूधस' इत्यत्र भाष्ये स्पष्टम्। वक्ष्यमाणसमाधानेन सर्वसमाधानादेकदेश्युक्तावत्र नात्यादृतं भगवतेति बोध्यम्। ननु 'चित्रगु'रित्यादौ गोन्तस्य प्रातिपदिकस्योपसर्जनत्वाभावाद्ध्रस्वाऽप्राप्तिरत आह—उपसर्जनेति। श्रुतत्वादिति भावः। गोस्त्रियाविति। गोस्त्रीप्रत्ययान्तावित्यर्थः। ननु सूत्रस्येति। वस्तुतः सूत्रशेषत्वेपि न क्षतिः। येन विधिरसमासेनिष्कादिभ्य इति सूत्रभाष्ययोरस्याः प्रत्ययविधिविषयतायाः, सूत्रोपात्ता-

१—'आश्रये' इति कीलहार्नपाठः।

समासनिवृत्त्यर्थेन चापि नार्थः। 'स्त्र्यन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवती'त्युच्यते, 'प्रधानमुपसर्जन'मिति च सम्बन्धिशब्दावेतौ। तत्र सम्बन्धादेतद् गन्तव्यं 'यं प्रति यदप्रधानं तस्य चेत्सोऽन्तो भवती'ति। अवश्यं चैतदेवं विज्ञेयम्। उच्यमानेऽपि हि प्रतिषेध इह प्रसज्येत—पञ्च कुमार्यः प्रिया अस्य—पञ्चकुमारीप्रियः, दशकुमारीप्रिय इति।

## कपि च ॥ ५ ॥

कपि च प्रतिषेधो वक्तव्यः। बहुकुमारीकः, बहुवृषलीकः[†]।

## द्वन्द्वे च ॥ ६ ॥

प्र०—अण् तस्य चे'त्यत्र 'तस्य चेति सर्वस्य शेष' इति व्याख्यानात् 'स्वं रूप'मित्यस्यानुवृत्त्यनुज्ञानात् 'गोकुल'मिति ह्रस्वः प्राप्नोत्येव। नैष दोषः। 'स्वं रूप'मिति तत्र नानुवर्तते। तथा चाद्यन्तवत्सूत्रे 'येन विधिस्तदन्तत्वे' इति प्रयोजनमुक्तम्। 'तस्य चे'त्येतत्तु तत्रत्यवार्तिकस्य शेषो न तु सूत्रस्य। 'अगोपुत्र' इत्यत्रापि न भवति, अत्र ह्यन्यत्प्रातिपदिकं गोन्तम्, अन्यत्प्रति गोशब्दस्योपसर्जनत्वम्। पञ्चकुमारीप्रिय इति। त्रिपदे बहुव्रीहौ कृते द्वयोः पदयोर्द्विगुसमास इति पञ्चकुमारीशब्दः पूर्वपदं न भवति। कपि चेति। अन्तरङ्गत्वाद्ध्रस्वः प्राप्नोति, ततः कबिति भावः। 'कपी'ति च

उ०—क्तादिशब्दविषयतायाश्च बोधितत्वेनाऽस्य भाष्यस्यैकदेशयुक्तित्वावश्यकत्वाद् वक्ष्यमाणसमाधानेनास्यापि परिहारः। तच्च गोशब्दांशेप्यावश्यकमिति ध्वनयन्नाह—अगोपुत्र इति। 'नञस्तत्पुरुषा'दिति समासान्तनिषेधः। भाष्ये—प्रधानमुपसर्जनमिति। अत्र सूत्रे सम्भवस्त्वाल्लौकिकार्थसमानाधिकरणशास्त्रीयस्यैव ग्रहणमिति भावः। केवललौकिकस्य ग्रहणे तु गार्गी चासौ वृन्दारिका चेति गार्ग्यवृन्दारिकेत्यादौ वृन्दारिकाशब्दस्य गुणशब्दत्वादप्रधानत्वादुत्तरपदत्वात्तदन्तस्य समासप्रातिपदिकत्वाच्च ह्रस्वप्रसङ्ग इति दिक्। यं प्रतीत्यादि। यदर्थं प्रति यदर्थस्याऽप्रधानत्वं तद्बोधकस्य चेत्तद्बोधको गोशब्दादिरन्तो भवतीत्यर्थं इति कैयटानुसारिणः। परे तु 'प्रथमानिर्दिष्ट'मिति सूत्रोक्तरीत्या येन शब्देन समासविधौ यत्प्रथमानिर्दिष्टं तस्य तं प्रत्यप्रधानत्वेनोपसर्जनत्वात् प्रत्यासत्त्या तत्समासप्रातिपदिकान्त्यस्यैव ह्रस्व इति भाष्यार्थः। अत एव 'यं प्रति य'दिति भिन्नलिङ्गनिर्देश इत्याहुः। वार्तिकेन यथा न सिध्यति तथोपपादयति—त्रिपदे इति। द्विगुसमास इति। अत एव तस्य समुदायस्य प्रातिपदिकत्वम्। कपि कृते स्त्रीप्रत्ययान्तत्वाऽभावादाह—अन्तरङ्गत्वादिति। कपः प्राक् प्राप्तो ह्रस्वः 'कपि चे'ति वार्तिकेन कथं निवर्त्योऽत आह—कपीति चेति। द्वन्द्वस्योभयपदार्थप्रधानत्वेनाऽनुपसर्जनत्वादाह—समासार्थ इति। उद्भूतावयवभेदसमूहः समासार्थस्त-

[†] नद्यृतश्च ५. ४. १५३.

द्वन्द्वे च प्रतिषेधो वक्तव्यः । कुक्कुटमयूर्यौ ।

उक्तं वा ॥ ७ ॥

किमुक्तम् ? कपि तावदुक्तं—'न कपि' [ ७. ४. १४ ] इति प्रतिषेध इति । नैतदस्त्युक्तम् । 'केऽणः' [ ७. ४. १३ ] इति या ह्रस्वप्राप्तिस्तस्याः प्रतिषेधः । कुत एतत् ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते या च यावती च ह्रस्वप्राप्तिस्तस्याः सर्वस्याः प्रतिषेध इति, इहापि तस्य प्रतिषेधः प्रसज्येत—प्रियं ग्रामणि‡ ब्राह्मणकुलमस्य प्रियग्रामणिकः, प्रियसेनानिकः ।

इदं तर्ह्युक्तम्—'कपि कृते अनन्त्यत्वाद्ध्रस्वत्वं न भविष्यति' । इदमिह सम्प्रधार्यम्—कप् क्रियतां ह्रस्वत्वमिति, किमत्र कर्तव्यम् ? परत्वात् कप् । अन्तरङ्गं ह्रस्वत्वम् । अन्तरङ्गतरः कप् । ननु चायं कप् समासान्त इत्युच्यते ।

प्र०–विषयसप्तमी । कुक्कुटमयूर्याविति । समासार्थे अवयवार्थस्याऽप्राधान्यादनेकमित्यस्यानुवृत्त्या प्रथमानिर्दिष्टत्वाच्च मयूरीशब्दस्योपसर्जनत्वम् । अनन्त्यत्वादिति । 'समासान्त' इति वचनात् कवेव समासस्यान्त इति स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवति । परत्वात्कविति । सावकाशश्च कप्,—'बहुयवागूक' इत्यादौ । अन्तरङ्गमिति । उपसर्जनस्त्रीप्रत्ययान्तप्रातिपदिकमात्रापेक्षत्वात् । कप्तु समासविशेषं बहुव्रीहिं नद्युत्तरपदमपेक्षत इति बहिरङ्गः । अन्तरङ्गतर इति । पराभ्युपगमापेक्षया प्रकर्ष-

उ०–अवयवावप्रधानमित्यर्थः । नन्वेवमपि शास्त्रीयोपसर्जनत्वाऽभावात्कथं प्राप्तिरत आह—प्रथमेति । परे त्वत्रैकविभक्तीत्युपसर्जनत्वम्, समासापेक्षया च तत्र नियतविभक्तिकत्वं, द्वन्द्वश्च प्रथमान्तानामेव, न परिनिष्ठितविभक्त्या । वाक्ये प्रत्येकमेव कर्मत्वकरणत्वाद्यवगत्या, समासे च समुदाये एव तदगवत्या समाससमानार्थत्वाऽभावेन तस्य वाक्यत्वासम्भवात् । अत एव 'यदग्नये च प्रजापतये चे'त्यादौ वाक्ये प्रत्येकमेव देवतात्वम्, अग्नीषोमावित्यादौ समासे च समुदितस्यैवेति व्यवस्था सिध्यति । ध्वनितं चेदं 'न ङिसम्बुद्ध्योरि'ति सूत्रे भाष्ये इति तत्रैव निरूपयिष्याम इत्याहुः । प्रियं ग्रामणि इति । तस्य नपुंसकत्वप्रदर्शनाय ब्राह्मणकुलमित्यस्योपन्यासः । अत्र नपुंसकह्रस्वत्वस्यापि निषेधः स्यादित्यर्थः । 'प्रकल्प्य चापवादविषय'मिति न्यायेन पूर्वमपि ह्रस्वो न स्यादिति तात्पर्यम् । समासान्त इतीति । कब-

‡ ह्रस्वो नपुंसके प्रातिपदिकस्य १. २. ४७.

तादर्थ्यात्ताच्छब्द्यं भविष्यति । येषां पदानां समासो न तावत्तेषामन्यद्भवति कपं तावत् प्रतीक्षते ।

द्वन्द्वेऽप्युक्तम् । किमुक्तम् ? 'परवल्लिङ्गमिति शब्दशब्दार्था'विति+ । तत्रौपदेशिकस्य ह्रस्वत्वम्, आतिदेशिकस्य श्रवणं भविष्यति ॥४८॥

---

प्र०—प्रत्ययः । तादर्थ्यादिति । ततश्चावयवापेक्षत्वात्कपः, समुदायापेक्षो ह्रस्वो बहिरङ्गः । द्वन्द्वेऽप्युक्तमिति । परिहारान्तरमप्यत्रास्ति—'अवयवार्थावेव परस्परसहितौ द्वन्द्वार्थ इति प्राधान्यादुपसर्जनत्वाऽभाव इति ॥४८॥

---

उ०—न्तरङ्गतर इति वक्ष्यमाणोऽभिप्रायः । बहुयवागूक इति । 'यवागू' शब्दो दीर्घान्त इत्यूङन्त इत्यस्याऽप्राप्तेः समासेन कप्रत्ययान्त इति भावः । विशेषापेक्षस्याऽबहिरङ्गत्वेप्याह—नद्युत्तरपदमिति । ननु द्वयोः स्पर्धमानयोरेकस्य बहिरङ्गत्वे तदपेक्षमन्यस्यान्तरङ्गत्वमिति प्रकर्षाभावादातिशयिकोऽयुक्तोऽत आह—परेति । यदि भवान् ह्रस्वत्वमन्तरङ्गं मन्यते, तदा ततोप्यन्तरङ्गतरः कबित्यर्थः । ततश्चावयवापेक्षत्वादिति । समासशब्देन तदर्थमुत्तरपदं लक्ष्यत इति भाव इति कश्चित् । वस्तुतस्तु समासार्थं विग्रहवाक्यं लक्ष्यत इति भाष्याशयः, तथैवाऽन्यत्र दृष्टत्वात् । 'येषां पदानां समासो न तावत्तेषामन्यद्भवती'ति वाक्यशेषस्वारस्याच्च, एवं चान्तरङ्गतरत्वं स्पष्टमेव । कैयटेऽपि—अवयवापेक्षत्वादित्यस्यावयवगतप्रातिपदिसञ्ज्ञापेक्षत्वादित्यर्थः । समासान्तविधायकानां च तत्तत्समासार्थविग्रहवाक्यान्तावयवः शरदादिप्रातिपदिकात्परः प्रत्यय इत्यर्थ इति भावः । 'समुदायापेक्ष' इत्यस्य च समुदायगतप्रातिपदिकत्वापेक्ष इत्यर्थः । एवं च समाससञ्ज्ञापेक्षसमुदायगतप्रातिपदिकत्वात्पूर्वमेव समासान्त इत्यन्तरङ्गतर इति भावः । 'अन्त' इति सूत्रस्थभाष्यात्समासावयवत्वस्यैव प्रतीतेः । न तावत्तेषामिति । कपः प्रथममित्यर्थः । अन्यत्—समासशास्त्रम् । कपं तावदिति । तच्छास्त्रवैयर्थ्यभया तद्भवनकालं प्रतीक्षत इत्यर्थः । अन्यथा समासशास्त्रस्य कबनपेक्षत्वेन तत्प्रतीक्षोक्तेरसङ्गतिः । एवं च कपा समकालं तत्पूर्वभागस्य समाससञ्ज्ञा, कपस्तद्वाक्यान्तावयवत्वेन समासप्रातिपदिकावयवत्वाभावात्स्त्रीप्रत्ययस्य तदन्तत्वाभाव इति भावः । प्राधान्यादिति । इदं 'परवल्लिङ्गं' 'चार्थे द्वन्द्व' इति सूत्रभाष्यविरोधाद् 'द्वन्द्वे च प्रतिषेध' इति वार्तिकविरोधाच्च चिन्त्यम् । तस्माद्वचनारम्भ एव ज्यायान् । ध्वनितं चेदमन्वर्थत्वमुक्त्वा 'द्वन्द्वे चे'ति निषेधं वदता, दूषयिष्यमाणसमाधानोक्त्या च भगवतेति बोध्यम् । मूलोक्त'शब्दशब्दार्था'विति परिहारस्तु परमयुवतिरित्यादौ तिप्रत्ययद्वयापत्त्या तत्रैव भाष्ये दूषित इति दिक् ॥४८॥

---

+ २.४, २६ वा० ६.

## लुक्तद्धितलुकि ॥ १ । २ । ४९ ॥

### तद्धितलुक्यवन्त्यादीनां प्रतिषेधः ॥ १ ॥

तद्धितलुक्यवन्त्यादीनां प्रतिषेधो वक्तव्यः । अवन्ती कुन्ती कुरूः† ।

### तद्धितलुक्यवन्त्यादीनामप्रतिषेधोऽलुक्परत्वात् ॥ २ ॥

तद्धितलुक्यवन्त्यादीनामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । लुक्कस्मान्न भवति ? 'अलुक्परत्वात्' । 'लुकी'त्युच्यते, न चाऽत्र लुकं पश्यामः ।

'लुकी'ति नैषा परसप्तमी शक्या विज्ञातुम्, नहि लुका पौर्वापर्यमस्ति । का तर्हि ? सत्सप्तमी । लुकि सतीति । सत्सप्तमी चेत् प्राप्नोति ।

एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति । किम् ? 'उपसर्जनस्येति वर्तते‡' इति । न च जातिरुपसर्जनम् ॥४९॥

प्र०— लुक्तद्धित । अवन्त्यादीनामिति । 'अवन्ती'त्यत्र भवत्यवन्तिशब्द उपसर्जनं, स्त्रीप्रत्ययश्चास्ति, लुक् च तद्धितस्य कृत इत्यस्ति लुक्प्राप्तिः । अलुक्परत्वादिति । यत्र स्त्रीप्रत्ययान्तात्परस्य तद्धितस्य लुक्तत्र लुका भाव्यम्, अत्र तु कृते लुकि स्त्रीप्रत्ययः कृतः । नहीति । लुको नीरूपत्वात् । बुद्धिपरिकल्पितं तु लुकः परत्वमाश्रित्य वार्तिककृतोक्त'मलुक्परत्वा'दिति । न च जातिरिति । उपसर्जनग्रहणेन स्त्रीप्रत्ययो विशेष्यते । अप्रधानं चेहोपसर्जनं गृह्यते, न शास्त्रीयम्, असम्भवात् । 'अवन्ती'त्यत्र चापत्य-

उ०— लुक्तद्धित । ननूपसर्जनस्येत्यत्र वर्तते, तत्रावन्तिकुन्तिभ्यां 'वृद्धे'दिति ञ्यङः, कुरोः 'कुरुनादिभ्य' इति ण्यस्य च तद्राजस्य 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्चे'ति लुकि, 'इतोऽमनुष्ये'ति 'ऊङुत' इति च ङीपूङोः कृतयोः ऽयपत्यवृत्तिस्त्रीप्रत्ययान्तस्यानुपसर्जनत्वात्तद्धितलुगनन्तरं स्त्रीप्रत्ययोत्पत्तेस्तत्परत्वाऽभावाच्च कथं लुक्प्राप्तिरत आह—अवन्तीत्यत्रेति । उपसर्जनसम्बन्धिस्त्रीप्रत्ययस्य लुगित्यर्थः, तद्धितलुकीति च सत्सप्तमीत्याशयेन चोद्यमिति भावः । नास्ति लुक्परो यस्मात्स्त्रीप्रत्ययात्तस्यालुक्परत्वादित्यस्यार्थः । कृते इति । एवं च न तत्परत्वं ङ्यादेरिति भावः । कथं तर्हि वार्तिककृता 'अलुक्परत्वा'दित्युक्तं, तत्राह—बुद्धीति । उपसर्जनसम्बन्धिन इत्यर्थात् । 'न च जातिरुपसर्जन'मित्ययुक्तमत आह—उपसर्जनेति । सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति भावः । इह—लुग्विधायके । स्त्रीत्वयुक्ताऽप्राधान्येनेति । एवं च प्रधानजातिगतस्त्रीत्वाऽभिधायी प्रत्ययो नोपसर्जनमिति भावः । स्वयं लुगभावे हेत्वन्तरमाह—अप्रातिपदिकत्वाच्चात्र ह्रस्वाभाव इति । अत्र—अवन्तीत्यादौ । 'ह्रस्व पदेन ह्रस्वप्रयोजको लुगुच्यते, ङीलुकि हि अवन्तिरिति ह्रस्वमवतिष्ठत

† वृद्धेत्कोसलाजादाञ्ञ्यङ्; कुरुनादिभ्यो ण्यः; स्त्रियामवन्तिकुन्तिकुरुभ्यश्च; इतो मनुष्यजातेः; ऊङुतः ४. १. १७१; १७२, १७६; ६५; ६६; ‡ गोस्त्रियोरुपसर्जनस्य १. २. ४८,

## इद् गोण्याः ॥ १ । २ । ५० ॥

**इद्गोण्यां नेति वक्तव्यम् ।**

'गोण्या ने'त्येव सिद्धम् । नार्थ इत्त्वेन । का रूपसिद्धिः ? पञ्चगोणिर्दशगोणिः† ।

**ह्रस्वता हि विधीयते ।**

ह्रस्वत्वमत्र विधीयते 'गोस्त्रियोरुपसर्जनस्य' [ १. २. ४८ ] इति ।

**इति वा वचने तावत् ।**

'इ'दिति वोच्येत, नेति वा, को न्वत्र विशेषः ?

**मात्रार्थं वा कृतं भवेत् ॥ १ ॥**

अथवा मात्रार्थमिदं वक्तव्यम् । गोणीमात्रमिदं गोणिः‡ । अपर आह—

प्र०—लक्षणा जातिः स्त्रीत्वयुक्ता प्राधान्येनाभिधीयत इत्यर्थः । अप्रातिपदिकत्वाच्चाऽत्र ह्रस्वाऽभावः । 'आमलक'मित्यादौ तु तद्धितान्तत्वात्प्रातिपदिकसञ्ज्ञा । लिङ्गविशिष्टस्यैवेहोपादानाल्लिङ्गविशिष्टपरिभाषाया उपस्थानाऽभावः । कुरूरित्यत्रापि 'उभयत आश्रयणे नान्तादिव'दित्यप्रातिपदिकत्वम् ॥४९॥

इद् गोण्याः । इति वावचन इति । 'इती'ति सप्तमी । इच्छब्दे्प्युच्यमाने गौरवाऽभाव इत्यर्थः । गोणिरिति । यदा मात्रचो लुक् क्रियते तदा लुकि प्रतिषिद्धे सिद्ध्यत्येव ह्रस्वत्वम् । तस्मात्प्रथमाविधाने परिमाणग्रहणस्य प्रयोजनम्—तद्धित-

उ०—इति तत्प्रयोजकता लुको बोध्या । तद्धितलुकि स्त्रीप्रत्ययान्तप्रातिपदिकावयवस्य प्रत्यासत्त्या स्त्रीप्रत्ययस्य लुगिति सूत्रार्थः । प्रकृते च न तत्त्वं, तद्धितान्तात्स्त्रीप्रत्ययोत्पत्तेरिति भावः । 'गोस्त्रियो'रिति ह्रस्वस्य तु नात्र प्राप्तिस्तत्र शास्त्रीयोपसर्जनस्य ग्रहात् । यथा चैतत्तथोपपादितम् । क्वचित्तु 'लुगभाव' इत्येव पाठः ।

नन्वेवं कथमामलकमित्यादौ लुगत आह—आमलेति । तद्धितान्तत्वादिति । मयटो लुकि प्रत्ययलक्षणेनेति भावः । ननु लिङ्गविशिष्टपरिभाषया प्रातिपदिकग्रहणानुवृत्ताव-प्यवन्तीत्यत्र दोषोऽत आह—लिङ्गेति । लिङ्गविशिष्टस्योपादानेपि तत्परिभाषाप्रवृत्तौ बाधकाऽभावेन भाष्योक्तसमाधिरेव युक्त इति बोध्यम् ॥४९॥

इद्गोण्याः । पञ्चभिर्गोणीभिः क्रीत इति द्विगौ क्रीतार्थठको लुकि लुक्तद्धितेति लुगपवादभूतमिदं सूत्रम् । तत्रानेन लुको निषेधे 'एकविभक्ती'त्युपसर्जनत्वाद्ध्रस्वेन सिद्धे इद्ग्रहणं व्यर्थमिति चोद्यम् । समाधत्ते भाष्ये—इति वा वचने तावदिति । इच्छब्दोक्तौ नशब्दोक्तौ च तावदेव, न तु मात्राप्यधिकेति तदर्थः । लुकि—स्त्रीप्रत्ययलुकि । सिध्यत्येव

१—श्लोकवार्तिकम् । † तेन क्रीतम्; अध्यर्धपूर्वद्विगोर्लुगसंज्ञायामपि ५. १. ३७; २८;
‡ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५. २. ३७.

## गोण्या इत्वं प्रकरणात्

अशिष्यं गोण्या इत्वम् । किं कारणम् ? 'प्रकरणात्' । प्रकृतं ह्रस्वत्वम् । 'ह्रस्व' इति वर्तते+ । न तु सूच्याः ।

## सूच्याद्यर्थमथापि वा ॥

सूच्याद्यर्थमिदं द्रष्टव्यम् । पञ्चसूचिः दशसूचिः ।

इद्गोण्या नेति वक्तव्यं ह्रस्वता हि विधीयते ।
इति वा वचने तावन्मात्रार्थं वा कृतं भवेत् ॥ १ ॥

प्र०-अन्तरेणापि यदा परिमाणशब्दः परिमेये वर्तते तदापि प्रथमा यथा स्यादिति । एवं चानुपसर्जनत्वादभेदोपचारेण प्रमेयवृत्तित्वादप्राप्तो ह्रस्व इतीत्वं विधीयते । सर्वत्र तर्हि गोण्या इत्वप्रसङ्गः । एवं तर्ह्युपसर्जनस्येति वर्तते, न तु तद्धितलुकीति । तेन यत्र स्वार्थोपसर्जनमर्थान्तरं प्रत्याय्यते तत्रेत्वविधिः । ह्रस्वत्वं तु न स्यात्, अप्रातिपदिकत्वात् । अशिष्यमिति । 'गोस्त्रियो'रित्यस्याऽनन्तरं 'गोण्या' इति लुगपवादह्रस्वार्थं वक्तव्यम् । न तु सूच्या इति । 'इत्वं प्राप्नोती'ति शेषः । क्वचित्तु 'ननु सूच्या' इति

उ०-ह्रस्वत्वमिति । 'गोवश्कयणी'त्यादौ ह्रस्ववारणाय शास्त्रीयोपसर्जनस्य तत्र ग्रहाच्चिन्त्यमिदम् । भाष्यं तु यथाश्रुतं रमणीयमेव । तदापि प्रथमेति । प्रस्थादिभ्यः परिच्छेदकवाचिभ्यः प्रमेयविवक्षायां प्रथमां बाधित्वा तद्धितः प्राप्नोति, तदविवक्षायां प्रातिपदिकार्थत्वादेव सिध्यतीति व्यर्थं तदित्याशङ्क्य 'तद्धिमन्तरेणापि यदा परिमाणे'त्यादि 'प्रातिपदिकार्थ'सूत्रे वक्ष्यतीति भावः । न चानुपसर्जनत्वादित्वमपि न प्राप्नोति, तस्येहाऽसम्बन्धादिति भावः । अभेदोपचारेणेति । गोण्येव व्रीहय इत्याहार्यबुद्ध्या गोणीशब्दस्य प्रमेयवृत्तितया लाक्षणिकत्वेनाऽनुपसर्जनत्वमित्यर्थः । तत्र शङ्कते—सर्वत्र तर्हीति । तेन यत्रेति । लाक्षणिकस्याप्युपसर्जनत्वं मन्यते । एवं हि गोणीसदृशे लक्षणायामपि ह्रस्वापत्तेश्चिन्त्योयं कैयटः । तर्हि ह्रस्वत्वेनैव सिद्धे व्यर्थं इद्विधिः स्यादत आह—ह्रस्वत्वं त्विति । अप्रातिपदिकत्वादिति । गोणीशब्दस्य ङ्यन्तत्वादिति भावः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहादप्रातिपदिकत्वादिति चिन्त्यम् । ननु लुका विच्छिन्नत्वात्कथं ह्रस्वानुवृत्तिरत आह—गोस्त्रियोरिति । लुगपवादेत्यनेनोपसर्जनस्येत्यनुवृत्तिं दर्शयति । तत्रेत्वमिष्यते इति । 'तच्च न सिध्यती'ति शेषः । इद्ग्रहणे यथा सिध्यति तदाह—योगेति । 'इ'दित्येको योगो लुगपवादार्थः । 'गोण्या' इति द्वितीयस्तस्याऽसार्वत्रिकत्वायेति नातिप्रसङ्ग इति भावः । नन्वस्य लुगपवादत्वे यत्र प्रमेयलक्षणया गोणीशब्दप्रयोगस्तत्र लुगभावादित्वमपि न स्यादत आह—गोण्या इति ।

+ ह्रस्वो नपुंसके प्रातिपदिकस्य १. २. ४७.

गोण्या इत्त्वं प्रकरणात्सूच्याद्यर्थमथापि वा ॥

**लुपि युक्तवद्व्यक्तिवचने ॥ १ । २ । ५१ ॥**

व्यक्तिवचने इति किमर्थम् ? शिरीषाणामदूरभवो ग्रामः शिरीषाः† । तस्य ग्रामस्य वनं शिरीषवनम् । किं च स्यात् ? 'विभाषौषधिवनस्पतिभ्यः' [ ८. ४. ६ ] इति णत्वं प्रसज्येत ।

अपर आह—कटुबदर्या अदूरभवो ग्रामः कटुबदरी । षष्ठी युक्तवद्भावेन मा भूदिति ।

---

प्र०—पाठः । तत्रेत्त्वमिष्यत इत्यध्याहारः । इद्ग्रहणे सति योगविभागो लभ्यते । गोणिरिति तु मात्रचो लोपेन सिद्ध्यति ॥५०॥

लुपि । प्रकृत्यर्थसम्बन्धिन्यौ लिङ्गसङ्ख्ये प्रत्ययार्थे अतिदिश्येते । शिरीषा इति । वरणादित्वादणो लुप् ग्रामवाचित्वाद्वनस्पतिवाचित्वाऽभावाण्णत्वाऽभावः । 'फली वनस्पतिर्ज्ञेय' इत्ययं भेदो णत्वविधौ नाश्रित इति फलाऽभावेपि शिरीषस्यास्ति वनस्पतित्वम् । षष्ठीति । प्रकृत्यर्थगतस्य व्यतिरेकस्य प्रत्ययार्थेऽतिदेशात्षष्ठीप्रसङ्गः । षष्ठ्यपीति । वचनशब्देन ह्येकवचनादयः प्रत्यया उच्यन्ते । तत्र वाक्यावस्थायां षष्ठीदर्शनात्तस्या एवाऽत्रातिदेशः प्राप्नोति । नेदमिति । एकवचनादिसञ्ज्ञाविधानकाले अनुनिष्पादी वचनशब्दोपि सञ्ज्ञात्वेन नियुक्त इति प्रत्ययः पारिभाषिकं

---

उ०—लोपेनेति । लुकेत्यर्थः । एवं च कैयटस्य पूर्वापरविरोधोऽपि द्रष्टव्यः । अत्र पक्षे लक्षणायां गोणी इति दीर्घान्तस्यैवेष्टत्वादित्याहुः ॥५०॥

लुपि यु । पदार्थानवगमे तद्व्याख्यातुमवगन्तुं न शक्यतेऽतः सूत्रार्थमाह—प्रकृतीति । युक्तशब्देन प्रकृत्यर्थ उच्यते, स हि प्रत्ययार्थेन युक्तो भवति । प्रकृतौ यादृशं लिङ्गसङ्ख्याप्रयुक्तं कार्यं तत्प्रत्ययार्थप्रतिपादिकायां तत्रातिदिश्यत इति तात्पर्यम् । व्यक्तिः—लिङ्गं, वचनं-सङ्ख्या । नन्वपुष्पः फलवान् वनस्पतिस्तथा च शिरीषस्य कथं वनस्पतित्वं यद्ग्रामेऽतिदिश्येतेत्यत आह—फलीति । अस्याऽपुष्प इत्यादिः । 'फलाभावेपी'त्यस्याऽपुष्पफलाभावेपीत्यर्थः । यद्वा शिरीषाणां फलत्वाऽभावं मन्यते । एवं च वनस्पतिशब्देन वृक्ष एवोच्यत इति भावः । षष्ठ्याः प्रकृत्यर्थधर्मत्वाऽभावात्कथमतिदेशोऽत आह—प्रकृत्यर्थेति । व्यतिरेकस्य—सम्बन्धस्य । षष्ठ्या एव प्रसङ्गे हेतुमाह—तत्रेति । युक्तशब्देन प्रकृतिस्तद्लिङ्गमेकवचनादिप्रत्ययाश्च लुकि सति भवन्तीति सूत्रार्थः । अर्थशब्दयोरभेदाच्च लिङ्गस्य प्रकृतिनिष्ठत्वम् । एवं चोपस्थितत्वात्तस्या एवातिदेशः प्राप्नोतीति भावः । ननु वचनमिति पारिभाषिकसञ्ज्ञाऽभावान्नेदमित्यसङ्गतमत आह—एकवचनादीति । अनुनिष्पादीति । नान्तरीयक

---

† अदूरभवश्च; वरणादिभ्यश्च ४. २. ७०; ८२.

अथ 'व्यक्तिवचने' इत्यप्युच्यमाने कस्मादेवात्र न भवति, षष्ठ्यपि हि वचनम् ? नेदं पारिभाषिकस्य वचनस्य ग्रहणम् । किं तर्हि ? अन्वर्थग्रहणम्—उच्यते वचनमिति । एवमपि षष्ठी प्राप्नोति । षष्ठ्यपि ह्युच्यते । लुपोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यमुक्तार्थानामप्रयोग इति । आतिदेशिकी तर्हि प्राप्नोति । एवं तर्हि—

प्रागपि वृत्तेर्युक्तं वृत्तं चापीह यावता युक्तम् ।
वक्तुश्च कामचारः प्राग्वृत्तेर्लिङ्गसंख्येये ॥

प्रागपि वृत्तेर्युक्तं वनस्पतिभिर्नगरम् । वृत्तश्चापि युक्तं वनस्पतिभिर्नगरम् । वृत्ते च युक्तवद्भावो विधीयते । कामचारश्च प्रयोक्तुः—प्राग्वृत्तेर्ये लिङ्गसंख्येते

प्र०-वचनमुच्यते । अन्वर्थग्रहणमिति । सङ्ख्यालक्षणोऽर्थोऽतिदिश्यत इत्यर्थः । षष्ठ्यपि ह्युच्यत इति । सङ्ख्यातिदेशे तद्वचनेन शब्देन प्रवर्तितव्यम्, षष्ठ्यपि सङ्ख्यायाः प्रतिपादिकेति भावः । षष्ठीशब्देन च षष्ठ्यर्थः सङ्ख्यालक्षणोऽभिधीयते । अथवा षष्ठ्यप्युच्यते सङ्ख्याप्रतिपादनार्थमित्यर्थः । लुपोक्तत्वादिति । लुप्सहचरितेन शब्देनोक्तत्वादित्यर्थः । 'अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न' इति कृत्वा व्यतिरेकाऽभावः इत्यर्थः । आतिदेशिकीति । सङ्ख्यायामतिदिष्टायां तद्वाची शब्दः प्रयोक्तव्यः, वाक्ये च षष्ठी दृश्यते इति तस्या एव प्रसङ्गः । प्रागपीति । प्रत्ययार्थेन प्रकृतिवाच्यं वस्तु सम्बद्धं वाक्यावस्थायां वृत्त्यवस्थायां चेत्यर्थः । वक्तुश्चेति । चशब्दो भिन्नक्रमः प्राग्वृत्तेरित्यस्यानन्तरं द्रष्टव्यः । ततश्चायमर्थः—प्राग्वृत्तेर्ये लिङ्गसङ्ख्ये,

उ०-इत्यर्थः । भाष्ये—अन्वर्थेति । लौकिकः सङ्ख्यारूपोऽर्थो वचनशब्देनोच्यत इति भावः । अन्वर्थत्वमत्र लोकप्रसिद्धार्थत्वम् । नन्वेवं 'षष्ठ्युयच्यत' इत्यनुपपन्नमत आह—षष्ठीशब्देन चेति । ननु लुपो भावस्य कथमभिधायकत्वं, किं च लुपाऽदूरभवार्थोक्तावपि षष्ठ्यर्थस्य कथमुक्तिरत आह—लुप्सहचरितेनेति । तेन हि स्वसम्बन्ध्यदूरभव उच्यत इति भावः । तदाह—अभिहित इति । व्यतिरेकाभाव इति । भेदानबन्धनसम्बन्धत्वाऽभाव इत्यर्थः । शेषत्वाभाव इति यावत् । कारकप्रातिपदिकार्थव्यतिरेको हि शेषः । षष्ठ्यतिदेशाभावेनातिदेशिकीत्ययुक्तमत आह—सङ्ख्यायामिति । चेत्यर्थ इति । इयांस्तु विशेषः—वाक्ये भिन्नोपस्थितिविषयतया, वृत्तौ चैकोपस्थितविषयतयेति । उत्तरार्धे पक्षान्तराऽप्रतीतेः 'कामचार'इत्ययुक्तमत आह—चशब्द इति । तथा च तेन पक्षान्तरद्योतनमस्तीति भावः । भाष्ये उक्तश्लोकस्य व्याख्यानं 'प्रागपि वृत्तेर्युक्तं वनस्पतिभि'रित्यादि । कामचारविषये एकतरपक्षग्रहणे विनिगमकाऽभावोत आह—प्रत्यासत्त्येति । तदुक्तं भाष्ये 'वृत्ते च युक्तवद्भावो विधीयत' इति । वृत्तिप्राक्कालावच्छिन्नार्थनिष्ठलिङ्गसङ्ख्ययोरतिदेश, उत वृत्तिकालावच्छिन्नयोरिति संशयः । तत्राद्ये सङ्ख्यायाः प्रषष्ठीतिपाद्यसम्बन्धवदर्थनिष्ठत्वात्तादृशयोरेवातिदेशो षष्ठी

अतिदेष्टुम्, वृत्तस्य वा ये लिङ्गसंख्ये ते । यावता कामचारः, वृत्तस्य ये लिङ्गसंख्ये ते अतिदेक्ष्येते, न प्राग्वृत्तेर्ये× ।

किमर्थं पुनरिदमुच्यते ?

**अन्यत्राभिधेयस्य व्यक्तिवचनभावाल्लुपि युक्तवदनुदेशः ॥१॥**

अन्यत्राभिधेयवल्लिङ्गवचनानि भवन्ति । कान्यत्र ? लुकि । लवणः सूपः । लवणा यवागूः । लवणं शाकमिति+ । अन्यत्राभिधेयवद्व्यक्तिवचनानि भवन्ति लुकि । इहाप्यभिधेयवल्लिङ्गवचनानि प्राप्नुवन्ति । इष्यन्ते चाभिधानवत्स्युरिति । तच्चान्तरेण यत्नं न सिध्यतीति लुपि युक्तवदनुदेशः । एवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत् । किं तर्हीति ।

प्र०—'च' शब्दात् वृत्तस्य ये, ते अतिदेष्टुं कामचारः । वृत्तस्येति । प्रत्यासत्त्येति भावः । वृत्तावुपसर्जनस्यापि क्वचित्सङ्ख्याविशेषावगतिर्भवति । यथा तावकीनो मामकीन इत्यादेशात्सङ्ख्याभेदाऽवगमः । तथेह प्रत्ययार्थे अतिदिष्टसङ्ख्यावगमात्प्रकृत्यर्थे तदवसायः । यथा आदेशेऽप्रथमासामानाधिकरण्यदर्शनाल्लटि तदवगतिः । तत्र च वृत्तावुपसर्जनं प्रधानार्थमभिधत्त इति व्यतिरेकाऽभावात् सङ्ख्यामात्रप्रतिबद्धा प्रातिपदिकार्थमात्रे प्रथमैव भवति । क्वचिदधिको ग्रन्थः पठ्यते—'अथवा प्राग्वृत्तेर्यै लिङ्गसंख्ये त आतिदेक्ष्येते । षष्ठी कस्मान्न भवति ? सामान्यातिदेशे विशेषानतिदेश' इति × । तत्रायमर्थः—वाक्यावस्थायां प्रकृत्यर्थस्य ये लिङ्गसङ्ख्ये, ते अतिदिश्येते, षष्ठी तु व्यतिरेकनिबन्धना । न चेह प्रत्ययार्थस्य व्यतिरेकोऽस्ति । न च व्यतिरेकसहिता सङ्ख्या अतिदिश्यते । सङ्ख्यामात्रातिदेशे सम्बन्धसहितसङ्ख्यातिदेशाऽभावात् ।

उ०—स्यादिति चोद्यम् । द्वितीयमादायोत्तरम् । तत्र प्रातिपदिकप्रतिपाद्यसम्बन्धवदर्थनिष्ठत्वात् तादृशयोरेवातिदेशे प्रातिपदिकार्थमात्रत्वात्प्रथमैव । अतिदेशस्य वृत्तिनिष्ठत्वात्तद्गतयोरेवातिदेशे एकनिष्ठत्वं प्रत्यासत्तिरिति बोध्यम् । ननु वृत्तावुपसर्जनार्थस्य सङ्ख्याभेदानवगतेः कथं तत्कालावच्छिन्नतदतिदेशोऽत आह—वृत्तावुपेति । आदेशात्—'तवकममकावेकवचने' इति विहितात् । तत्र चेतनत्वादिनैकस्यवोपस्थितिर्न त्वेकत्वेनेति तत्त्वम् । तथेहेति । 'शिरीषा ग्राम' इति बहुवचनात्तत्प्रकृत्यापि शिरीषत्वेनानेकोपस्थितिर्न तु बहुत्वेनेति तत्त्वम् । अन्यथातिदेशाऽप्राप्त्या तदनुपपत्तिरिति भावः । ननु सङ्ख्यातिदेशेऽपि तन्निबन्धना षष्ठी कस्मान्नेष्यत आह—वृत्तावुपसर्जनमिति । व्यतिरेकाभावादिति । तदतिदेशस्तु न, मानाभावादिति भावः । अथवा प्राग्वृत्तेरिति । इदमयुक्तं, प्रत्यासत्तिबाधापत्तेरित्याहुः ।

× क्वचिदधिकं पठ्यते—"प्राग्वृत्तेर्यै लिङ्गसङ्ख्ये ते अतिदेक्ष्येते । षष्ठी कस्मान्न भवति ? सामान्यातिदेशे विशेषानतिदेश" इति । + संसृष्टे; लवणाल्लुक् ४. ४. २२; २४.

**लुपोऽदर्शनसञ्ज्ञित्वादर्थगतिर्नोपपद्यते ॥ २ ॥**

लुब्नामेयमदर्शनस्य सञ्ज्ञा क्रियते† । न चाऽदर्शनस्य लिङ्गसंख्ये शक्येते अतिदेष्टुम् । लुपोऽदर्शनसञ्ज्ञित्वादर्थगतिर्नोपपद्यते ।

**न वाऽदर्शनस्याऽशक्यत्वादर्थगतिः साहचर्यात् ॥ ३ ॥**

न वैष दोषः । किं कारणम् ? 'अदर्शनस्याऽशक्यत्वात्' । अदर्शनस्य लिङ्गसंख्ये अशक्ये अतिदेष्टुमिति कृत्वाऽदर्शनसहचरितो योऽर्थस्तस्य गतिर्भविष्यति साहचर्यात् ।

**योगाऽभावाच्चान्यस्य ॥ ४ ॥**

प्र०–किमर्थमिति । अन्तरेणाप्यतिदेशं लिङ्गसङ्ख्ये सिद्धे, यथाऽऽपो दारा इत्यादाविति प्रश्नः । अन्यत्रेति । अभेदं लिङ्गसङ्ख्ययोराश्रित्य वार्तिककारेण पठितम् । भाष्यकारस्तु वाचकभेदनिबन्धनभेदावसायेन वर्तिना व्याचष्टे—अभिधेयवदिति । अभिधानवदिति । अभिधानशब्देनोपसर्जनमभिधीयते । तेन हि प्रधानार्थोऽभिधीयते । तस्य चार्थद्वारको लिङ्गसङ्ख्यायोगः । न वाऽदर्शनस्येति । अभावरूपत्वादिति भावः ।

उ०–ननु तद्धितार्थस्यैकत्वादेकवचननिवृत्तयेऽवश्याश्रयणीयोऽतिदेशोत आह—अन्तरेणापीति । भाष्यवार्तिकयोर्वर्तिप्रयोगाऽप्रयोगयोर्बीजमाह—अभेदमिति । लिङ्गसङ्ख्ययोरिति । विशेष्यमात्रगतलिङ्गसङ्ख्ययोर्विशिष्टगतलिङ्गसङ्ख्ययोश्चेत्यर्थः । पठितमिति । 'अभिधेयस्य व्यक्ती'ति पठितमित्यर्थः । वतिनेति । विशेष्यमात्रवाचके यल्लिङ्गसङ्ख्याप्रयुक्तं कार्यं दृश्यते तद्वदेवान्यत्र विशिष्टवाचकेपि दृश्यते, तथा प्रकृतेपि स्यात्तद्वारणार्थं सूत्रमिति भावः । अभिधेयम्—विशेष्यम् । अभिधानशब्दस्य वाचकपर्यायत्वादभिधानवदित्ययुक्तमत आह—उपसर्जनमिति । तत्र योगं दर्शयति—तेन हीति । प्रधानार्थः—तदास्कन्दितस्वार्थः । तस्य चेति । 'त्रिलिङ्गोऽयं शब्द' इत्यादिप्रयोगदर्शनादिति भावः । भाष्ये—लुपोऽदर्शनसञ्ज्ञित्वादिति । लुपः—लुप्शब्दस्य । ननु 'लुपी'त्यनेन प्रत्ययार्थो वाच्य इत्यत आह—अदर्शनसञ्ज्ञित्वादिति । बहुव्रीहिः । न वाऽदर्शनस्येति । लुबर्थोऽदर्शनस्येत्यर्थः । अशक्यत्वे हेतुमाह—अभावेति । स्वरूपसदभावे शब्दाऽवाच्येऽतिदेशोऽशक्य इति भावः । साहचर्यादिति । लुप्शब्देन लुपो यः स्थानी प्रत्ययस्तदर्थो लक्ष्यते । तद्युक्तार्थस्य लिङ्गसङ्ख्ये लुप्स्थानिप्रत्ययार्थेऽतिदिश्येते इति तात्पर्यम् । 'युक्तः सम्बद्ध' इति प्रकृत्यर्थ इत्युच्यते । तत्र केन युक्त इत्याकाङ्क्षायामुपस्थितत्वाल्लुबर्थस्यैव सम्बन्धः स्यात् । न च तदर्थोऽदर्शनेन कस्यचिद्योग इति युक्तपदार्थाप्रसिद्धिरतोपि तत्स्थानिप्रत्ययार्थलाभ इत्यर्थकं भाष्ये—योगाभावाच्चेति । नन्वेवमप्युद्भूतद्व्यवयवसमूहस्यैव द्वन्द्वार्थत्वेन द्विवचनमेव स्यादिति

† प्रत्ययस्य लुक्श्लुलुपः १. १. ६१.

अन्यस्या[1]ऽदर्शनेन च योगो नास्तीति कृत्वाऽदर्शनसहचरितो योऽर्थस्तस्य गतिर्भविष्यति, साहचर्यात् ।

## समास उत्तरपदस्य बहुवचनस्य लुपः ॥ ५ ॥

समास उत्तरपदस्य बहुवचनस्य लुपो युक्तवद्भावो वक्तव्यः । मधुरा-पञ्चालाः† । किं प्रयोजनम् ? 'नियमार्थम्' 'समास उत्तरपदस्यैव' । क्व मा भूत् ? पञ्चालमधुरे इति ॥५१॥

## विशेषणानां चाऽजातेः ॥ १ । २ । ५२ ॥

कथमिदं विज्ञायते—जातिर्यद्विशेषणमिति, आहोस्विज्जातेर्यानि विशेषणानीति ? किं चातः ? यदि विज्ञायते—जातिर्यद्विशेषणमिति । सिद्धम्—पञ्चाला जनपद इति । 'सुभिक्षः सम्पन्नपानीयो बहुमाल्यफल' इति न सिद्ध्यति । अथ विज्ञायते—'जातेर्यानि विशेषणानी'ति । सिद्धम्—'सुभिक्षः सम्पन्नपानीयोबहुमाल्यफल' इति । 'पञ्चाला जनपद' इति न सिद्ध्यति ।

---

प्र०—योगाऽभावादिति । अदर्शनेन प्रकृत्यर्थो न युक्त इत्यर्थः । मधुरा पञ्चाला इति । वर्तिपदार्था एवापेक्षितपरस्परा द्वन्द्वार्थ इति सिद्धे नियमः क्रियते । अत एव मधुरा गोदा इति भवति, न तु मधुरा गोदाविति । द्वन्द्वेपि गोदार्थस्य द्वित्वानतिक्रमात् ॥५१॥

विशेष । कथमिति । किं सामानाधिकरण्येन सम्बन्धः—'विशेषणानां युक्तवद्व्यक्तिवचने, जातिस्तु यदा विशेषणं तदा ने'ति । अथ वैयधिकरण्येन—'जाते॰

---

उ०—बहुवचनसिद्ध्यर्थोऽतिदेशः स्यादत आह—वर्तिपदेति । 'मधुरा पञ्चाला' इति भाष्ये उदाहृतत्वादिह समासशब्देनेतरेतरद्वन्द्व एवाऽभिधीयते । उत्तरसङ्ख्यया पूर्वसङ्ख्याबाधादतिदिष्टसङ्ख्यामादाय बहुवचनम् । लुबन्तस्य पूर्वपदत्वेत्वतिदेशाभावाद्द्विवचनमेवेति भावः । अत एव—वर्तिपदार्थप्राधान्यादेव । 'समासे बहुवचनान्तप्रकृतिकलुबन्तार्थे चेदतिदेशस्तदोत्तरपदस्यैवे'ति वार्त्तिकार्थो 'न तूत्तरपदस्य चेद्बहुवचनान्तस्यै वे'त्यर्थं इति भावः । बहुवचनग्रहणं स्वबहुवचनान्तलुबन्तपूर्वपदस्य नियमेन व्यावृत्तिर्मा भूदिति, तेन गोदमधुरा इति भवति, न तु गोदमधुरे इतीत्याहुः ॥५१॥

विशेषणानां चा । परिच्छेदकमत्र विशेषणम् । नञा समस्ताया जातिविशेषणतामित्यनेन कथमन्वयोऽत आह—असमर्थेति । एवं च नञ इवोत्तरपदार्थस्याप्यन्यत्रान्वयो न दोषायेति भावः । पूर्वसूत्रेण प्रकृत्यर्थगतलिङ्गसङ्ख्ययोर्लुबर्थेऽतिदेशात्तद्विशेषणानामपि सिद्ध एवातिदेशः । लुबर्थविशेषणानां स्वविशेष्यगतलिङ्गवचनयोरौचितत्वात् । सूत्रं तु जातिप्रति-

---

१—'अभ्यस्ये'ति क्वचिन्न । † जनपदे लुप् ४. २. ८१.

एवं तर्हि नैवं विज्ञायते—'जातिर्यद्विशेषण'मिति, नापि—जातेर्यानि विशेषणानी'ति । कथं तर्हि ? विशेषणानां युक्तवद्भावो भवति, 'आ जातेः', आजातिप्रयोगात् ।

[ अथ ] किमर्थं पुनरिदमुच्यते ?

**विशेषणानां वचनं जातिनिवृत्त्यर्थम् ॥ १ ॥**

जातिनिवृत्त्यर्थोऽयमारम्भः । किमुच्यते जातिनिवृत्त्यर्थ इति, न पुनर्विशेषणानामपि युक्तवद्भावो यथा स्यादिति ?

**समानाधिकरणत्वात्सिद्धम् ॥ २ ॥**

समानाधिकरणत्वाद्विशेषणानां युक्तवद्भावो भविष्यति ।

यद्येवं नार्थोऽनेन । लुपोऽन्यत्रापि जातेर्युक्तवद्भावो न भवति । क्वान्यत्र ? बदरी सूक्ष्मकण्टका मधुरा वृक्ष इति । किं पुनः कारणमन्यत्रापि जातेर्युक्त-

प्र०—र्यानि विशेषणानि तेषां ने'ति ? अजातेरिति चाऽसमर्थसमासः, भवतिना नञः सम्बन्धात् । उभयथा चाऽव्याप्तिः प्रतिषेधस्येति प्रश्नः । आजातिप्रयोगादिति । सूत्रे आङः प्रश्लेषो, न तु नञः । अत्रायमर्थः—तावद्युक्तवद्भावो भवति यावज्जातिर्न प्रक्रान्ता । यदा तु जातिः प्रक्रम्यते विशेषणत्वेन विशेष्यत्वेन वा, तदा युक्तवद्भावो न भवतीति । बदरी सूक्ष्मकण्टकेति । मधुरादीनां विशेषणानां बदर्युपनिपाते

उ०—षेधार्थम् । तत्र सन्देह इति तात्पर्यम् । भाष्ये—सुभिक्ष इत्यादि न सिध्यतीति । तेषां जनपदविशेषणत्वेपि तद्भावा। लुबन्तविशेषणत्वस्यापि बहुवचनमेव स्यात्, ईदृशविशेषणेषु विध्यर्थमेव 'विशेषणाना'मित्यंशः स्यादित्याशयः । यदा तु जातिः प्रक्रम्यते इति । अत एव 'पञ्चालाः सुभिक्षा जनपद' इति 'पञ्चाला जनपदः सुभिक्ष' इत्येव च भवति, जातौ प्रक्रान्तायां यद्विशेषणमुपनिपतितं तज्जातिमेव साक्षाद्विशिनष्टीति भावः । 'विशेषणाना'मित्यनेनापि साक्षाल्लुबर्थविशेषणमेवोचितमिति तात्पर्यम् । जातिगुणसमभिव्याहारे जातेर्विशेष्यत्वनियमादाह—विशेष्यत्वेन वेति । शङ्कते भाष्ये—[ अथ किमर्थं पुनरिदमिति । 'विशेषणाना'मित्येतदित्यर्थः । उत्तरयति—जातिनिवृत्त्यर्थ इति । विशेषणानामिति । सुभिक्षादीनामित्यर्थः । समानाधिकरणत्वादिति । अर्थस्य युक्तवद्भावे तदर्थाऽभिन्ने अनियतलिङ्गसङ्ख्ये सर्वत्र सिद्धमिति तात्पर्यम् । अन्यत्रापिजातेर्युक्तवद्भावो नेति । विशेष्यलिङ्गादिग्राहिता नेत्यर्थः । वृक्षोपनिपाते त्विति । 'बदरी वृक्षो मधुर' इति यथा । एवं प्रकृतेपि

१—इदं क्वचिन्न ।

वद्भावो न भवति ? आविष्टलिङ्गा जातीर्यल्लिङ्गमुपादाय प्रवर्त्तते, उत्पत्तिप्रभृत्या विनाशान्न तल्लिङ्गं जहाति ।

न तर्हीदानीमयं योगो वक्तव्यः ? वक्तव्यश्च । किं प्रयोजनम् ? इदं तत्र तत्रोच्यते—'गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ती'ति, तदनेन क्रियते ।

**हरीतक्यादिषु व्यक्तिः ॥ ३ ॥**

हरीतक्यादिषु व्यक्तिर्भवति युक्तवद्भावेन । हरीतक्याः फलानि हरीतक्यः× फलानि ।

---

प्र०—तल्लिङ्गसङ्ख्यायोगः । वृत्तोपनिपाते तु वृत्ताश्रयलिङ्गसङ्ख्यायोगः । आविष्टलिङ्गेति । आविष्टं लिङ्गं यया साऽऽविष्टलिङ्गा । नियतलिङ्गेत्यर्थः । सर्वत्र सर्वेषां लिङ्गानां सद्भावेपि केनचिच्छब्देन किञ्चिल्लिङ्गं प्रत्याय्यत इति शब्दविशेषापेक्षयाऽऽविष्टलिङ्गत्वमुच्यते । उत्पत्तिप्रभृत्या विनाशादिति । जातेरुत्पत्तिविनाशाऽयोगात् शब्दव्यवहारगतावुत्पत्तिविनाशौ गृह्येते । तेनाऽऽसंसारं यावच्छाब्दो व्यवहारस्तावज्जातेर्नियतलिङ्गत्वमित्यर्थः । गुणवचनानामिति । पदसंस्कारपक्षे वाचनिकमेतत् । पदे हि पदान्तरनिरपेक्षे संस्क्रियमाणे नपुंसकं, लिङ्गसर्वनामप्राप्तमेकत्वं च वस्त्वन्तरनिरपेक्षत्वात्सन्निहितमिति 'शुक्लं पटा' इति प्राप्ते भाविनो बहिरङ्गस्याश्रयस्य सम्बन्धिन्यौ लिङ्गसंख्ये अनेन प्रतिपाद्येते । विशेषणानाम्—गुणवचनानामित्यर्थः । युक्तवद्व्यक्तिवचने । आश्रयवल्लिङ्गसङ्ख्ये इत्यर्थः । यदा तु वाक्यसंस्कारस्तदाऽयमनुवाद एव । आश्रयविशेषस्य पूर्वमेव प्रक्रमे विशेषणानामपि तन्निष्ठत्वात्, तद्गतयोर्लिङ्गसङ्ख्ययोः सिद्धत्वात् । यदा तु जातिर्विशेषणं तदा न भवति युक्तवद्भावः । हरीतक्यादिष्विति । नियमार्थमेतम् । तेन वचनमभिधेयाश्रयं भवति ।

---

उ०—रूपद्वये सिद्धे व्यर्थं सूत्रमिति भावः । पृच्छति—किं पुनरिति । उत्तरयति—आविष्टेति । ननु जातेर्लिङ्गाश्रयत्वाल्लिङ्गाविष्टा जातिरिति वक्तव्ये विपरीतोच्चारणमयुक्तमत आह—आविष्टमिति । विशिष्य गृहीतमित्यर्थः । एवं व्युत्पत्तौ जातेर्नियतलिङ्गोपादानत्वेन तत्त्वं प्रतीयत इत्याह—नियतेति । यद्यपि जातिशब्दा अनियतलिङ्गा अपि दृश्यन्ते तथापि प्रकृताभिप्रायमेतत् । ननु सर्वत्र सर्वलिङ्गसत्त्वात्कथं नियतलिङ्गत्वमत आह—सर्वत्रेति । शब्दव्यवहारगताविति । व्यक्तिगतेति नोक्तं, व्यक्तेरपि कस्याश्चिन्नित्यत्वात् । अत एव शब्दगतेति नोक्तम् । 'जाति'रित्युपलक्षणं नियतलिङ्गशब्दमात्रार्थस्य । भाविन इति । भाविबुद्धिविषयस्येत्यर्थः । गुणवचनानामिति । जातिक्रियादिभिन्नानामित्यर्थः । तेन 'शक्यं

---

× अनुदात्तादेश्च; हरीतक्यादिभ्यश्च ४. ३. १४०; १६७.

## खलतिकादिषु वचनम् ॥ ४ ॥

खलतिकादिषु वचनं भवति युक्तवद्भावेन । खलतिकस्य पर्वतस्याऽदूरभवानि वनानि खलतिकं† वनानि ।

## मनुष्यलुपि प्रतिषेधः ॥ ५ ॥

मनुष्यलुपि प्रतिषेधो वक्तव्यः । चञ्चा अभिरूपः । वध्रिका दर्शनीयः‡ ॥५२॥

## तदशिष्यं सञ्ज्ञाप्रमाणत्वात् ॥ १ । २ । ५३ ॥

प्र०—खलतिकमिति । खलतिको नाम पर्वतस्तस्यादूरभवानि वनानिति लिङ्गमभिधेयाश्रयमेव भवति । मनुष्यलुपीति । विशेषणानामयं प्रतिषेधः । तेन चञ्चाऽभिरूप इत्यभिधेयाश्रये लिङ्गसङ्ख्ये भवतः । तृणमयः पुरुषः—चञ्चा । तत्सदृशो मनुष्यश्चञ्चा । 'सञ्ज्ञाया'मिति विहितस्य कनो 'लुम्मनुष्य' इति लुप् ॥५२॥

तदशिष्यम् । किं या एता इति । प्रत्यासत्तिन्यायाश्रयेण प्रश्नः । नेत्याहेति । प्रत्यासत्तेः सामर्थ्यं बलवत् । नहि टिघुभादिसञ्ज्ञानां प्रमाणत्वं युक्तवद्भावशास्त्रस्याऽशिष्यत्वे हेतुरुपपद्यते, सम्बन्धाऽभावात् । सञ्ज्ञानमिति । अवगमः, सम्प्रत्यय इत्यर्थः । तत्र यथाऽऽपो दाराः सिकता वर्षा इत्युक्ते लिङ्गसङ्ख्याविशे-

उ०—विशेषतो लिङ्गादिकमित्यर्थः । अयं—भाष्यकृत्कृतः सूत्रार्थः । तन्निष्ठत्वादिति । तन्निष्ठत्वेन ग्रहादित्यर्थः । यदा तु जातिरिति । यथा 'बदरी वृक्ष' इत्यादाविति भावः । मनुष्यलुपीत्यस्य युक्तवद्भावप्रतिषेधत्वे चञ्चेत्यसङ्गतमित्यत आह—विशेषणानामिति । लुबन्तस्य तु भवत्येवेति । भावः । अभिधेयाश्रये इति । विशेष्यगतं यद्युक्तवद्भावेन लिङ्गं विशेषणे प्राप्तं तस्याऽप्यनुपस्थितत्वान्निषेध इति विशेष्यभूतार्थगतं पुँल्लिङ्गमत्र भवतीति भावः । एतेन 'मनुष्यलुपी'त्यनेन विशेषणानां विशेष्यगतलिङ्गादिनिषेध इत्यभिरूप इत्यत्र भाष्यकारवचनादेव पुंस्त्वमिति बोध्यमित्यपास्तम् ॥५२॥

तदशिष्यं । तत्—युक्तवद्भावशास्त्रम् । भाष्ये—कृत्रिमा इति । शास्त्रतो बोधितसंकेता इत्यर्थः । कृत्रिमसञ्ज्ञाग्रहणे हेतुमाह—प्रत्यासत्तीति । सामर्थ्यमिति । प्रकरणालिङ्गं बलवदित्यर्थः । अवगम इति । भावेऽजन्तो यौगिकः । सञ्ज्ञाशब्द इत्यर्थः । प्रतीतिच क्षुदुपहन्तु'मित्याद्युपपन्नम्, गुणाऽभेदेन गुणोपसर्जनगुणिबोधकानामाश्रयत आश्रयप्रामाण्यमवश्याश्रयणीयमित्याह—तत्र यथेति । प्रमाणमिति । वचनमन्तरेणापीत्यर्थः । 'लुब्योगाप्रख्यानात्' 'योगप्रमाणे च तदभावेऽदर्शनं स्या'दित्यनयोस्तात्पर्यं, दृष्टान्तदार्ष्टान्तिकयो रूढयौगिकत्वरूपवैषम्यपरिहारं चाह—न चेति । एवं च लिङ्गप्रकरणं, 'जात्याख्याया'-मित्यादि संख्याप्रकरणं च पूर्वाचार्यानुरोधेन कृतमिति ध्वनितं सूत्रकृता । सर्वं चेदं 'कालोप-

† अदूरभवश्च; वरणादिभ्यश्च ४. २. ७०; ८२. ‡ सञ्ज्ञायां च; लुम्मनुष्ये ५. ३. ९७; ९८.

किं या एताः कृत्रिमाष्टिघुभादिसञ्ज्ञास्तत्प्रामाण्यादशिष्यम्? 'ने'त्याह। सञ्ज्ञानं सञ्ज्ञा ॥५३॥

**जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ॥ १ । २ । ५८ ॥**

इदमयुक्तं वर्तते। किमत्रायुक्तम्? बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम्। तद्यदेकवचने शासितव्ये बहुवचनं शिष्यत एतदयुक्तम्। बहुष्वेकवचनमिति नाम वक्तव्यम्। अत उत्तरं पठति—

**जात्याख्यायां सामान्याभिधानादैकार्थ्यम् ॥ १ ॥**

जात्याख्यायां सामान्यभिधानादैकार्थ्यं भविष्यति। यत्तद्व्रीहौ व्रीहित्वं यवे यवत्वं गार्ग्ये गार्ग्यत्वं तदेकम्, तच्च विवक्षितम्, तस्यैकत्वादेकवचनमेव प्राप्नोति। इष्यते च बहुवचनं स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति—

प्र०-षावगतिरुत्पद्यमाना प्रमाणम्, एवं 'पञ्चाला' 'वरणा' इत्यादावपि। न च पञ्चालादयो यौगिका, अपि तु जनपदादीनामेता सञ्ज्ञाः, अतो योगानवगमात् तद्धितो नोत्पद्यते इति लुबपि न वक्तव्यः। तत्र सर्वेषां लिङ्गानां सर्वत्र भावात् केनचिच्छब्देन प्रत्याय्यमानं वस्तु कस्यचिल्लिङ्गस्य व्यञ्जकमिति दारादिषु नियतलिङ्गता सिद्धा। बहुत्वमप्यवयवगतं शक्तिगतं चान्यत्र समारोप्यत इति सङ्ख्यायोगोऽपि सिद्धः। एका सिकतेत्याद्यपि शिष्टप्रयोगदर्शनात्सिध्यति ॥५३॥

जात्या। 'जातिरुपलक्षणम्, द्रव्यं तु शब्दार्थ' इति दर्शनाश्रयेणाह—इदमयुक्तमिति। बहुष्वेकवचनमिति। अत्र पक्षे जातेरुपलक्षणत्वेनाख्या जात्याख्येति

उ०-सर्जने चे'ति चेन सङ्गृहीतम्। योगानवगमादिति। सम्प्रति विनापि क्षत्रिययोगं जनपदे पञ्चालशब्दव्यवहारदर्शनादित्यर्थः। तत्र सर्वेषामिति। उपचयाऽपचयादिरूपस्य तस्य केवलान्वयित्वादिति भावः। वस्तु—द्रव्यम्। 'लिङ्गसंख्याकारकाश्रयत्वं हि द्रव्यत्व'मिति तदेव द्रव्यस्यानुपपत्तिपरिहाराय लिङ्गव्यञ्जकं, शब्दस्तु करणमिति भावः। एवं च दारपदार्थस्य स्त्रीत्वेपि शब्देनोपचयलक्षणं पुंस्त्वमेव व्यज्यते। तस्य सर्वेषां सर्वत्र सत्त्वादिति तात्पर्यम्। एका सिकतेति। अयं प्रयोगो ह्यवरट्सूत्रे भाष्ये। एवमन्येपि अबादिशब्दविषयेपि शिष्टप्रयुक्ताः साधव इति ध्वनयन्नाह—अपीति ॥५३॥

जात्याख्यायाम्। जातिवादिनो मते जातेरेकत्वाद्बहुवचनार्थं मावश्यकमितीदमयुक्तमित्यसङ्गतमत आह—द्रव्यं त्विति। जातेरुपलक्षणत्वं तु शक्यतावच्छेदकतया बोध्यम्। प्रकारान्तरमपि मञ्जूषायां द्रष्टव्यम्। जात्याख्यायां बहुष्वेकवचनमित्यसङ्गतमत आह—अत्र पक्ष इति। क्रियादिप्रवृत्तिनिमित्तकाश्च तद्व्यावर्त्या इति भावः। द्रव्यवादे उत्तरा-

जात्याख्यायामेकस्मिन् बहुवचनम् । एवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत् । किं तर्हीति ।

**तत्रैकवचनादेश उक्तम् ॥ २ ॥**

किमुक्तम् ? व्रीहिभ्य आगत इत्यत्र 'घेर्ङिति' [ ७. ३. १११ ] इति गुणः प्राप्नोतीति† । नैष दोषः ।

**अर्थातिदेशात्सिद्धम् ॥ ३ ॥**

अर्थातिदेशोयम् । नेदं परिभाषिकस्य वचनस्य ग्रहणम् । किं तर्हि ? अन्वर्थग्रहणम्—उच्यते वचनम्, बहूनामर्थानां वचनं बहुवचनमिति । यावद्ब्रूयादेकोऽर्थो बहुवद्भवतीति, तावदेकस्मिन् बहुवचनमिति ।

प्र०—व्याख्यानम् । जातिपदार्थपक्षाश्रयेणोत्तरमाह—जात्याख्यायामिति । गार्ग्ये गार्ग्यत्वमिति । गोत्रस्यापि जातित्वाभ्युपगमादेतदुक्तम् । बहुषु गर्गेषु गार्ग्यत्वस्याभिन्नस्याऽभावात् । एकस्मिंस्तु पिण्डे अवस्थाभेदानुगता डित्थत्वादिका जातिर्जात्याख्यायामिति वचनसामर्थ्यान्न गृह्यते । जातिपदार्थवादिमते इह सर्वे शब्दा जात्यर्थाभिधायिन इति सामर्थ्याद्भिन्नपिण्डविषया जातिराश्रीयते । बहूनामिति । बहूनामर्थानां बहुत्वमेवोच्यते इत्येकस्मिन्नर्थे बहुत्वमनेनातिदिश्यत इति बहुत्वाद्बहुवचनं भवतीति नास्ति स्थान्यादेशभावः । एवं 'तिष्यपुनर्वस्वो'रित्यत्रापि द्विवचनबहुवचनशब्दाभ्यां

उ०—सङ्गतेराह—जातिपदार्थेति । 'जात्याख्यायामेकस्मि'न्निति यदैकार्थं तद्युक्तं सामान्याभिधानादिति योजना वार्तिकस्य । अत्र पक्षे वाहदोहाद्यन्वयो विशेषणीभूतव्यक्तिद्वारकपरम्परया जातावेवेति भावः । अभ्युपगमत्वे हेतुमाह—बहुष्विति । 'अभिन्नस्याऽभावा'दिति पाठः । अत एवाभ्युपगमवादोऽयमिति तात्पर्यम् । क्वचित्त्वभिन्नस्य भावादिति पाठः । तदा जात्यङ्गीकारे प्रमाणदर्शनमिदम्, अन्यथा गर्गनिष्ठजनकतानिरूपितजन्यत्वस्य प्रतिव्यक्तिभेदाद्गार्ग्यं इत्यनुगताकारप्रतीतिर्न स्यादिति भावः । नन्वेवं परिमाणभेदाद्द्रव्यभेदेन डित्थत्वादिनामपि जातिशब्दत्वेन तथापि बहुवचनं स्यादत आह—एकस्मिन्निति । सामर्थ्यमेव दर्शयति—जातिपदार्थेति । सर्वे शब्दा इति । उक्तयुक्त्या पाचकादयोऽपि । भाष्ये—तच्च विवक्षितमिति । 'प्राधान्येने'ति शेषः । भाष्ये व्रीहिभ्य इति । सूत्रे 'एकस्मि'न्नित्येकशब्देनैकवचनं गृह्यते भीमा भीमसेन इतिवत् । सप्तमी च षष्ठ्यर्थे इति भावः । सप्तम्युपात्तार्थातिदेश एवेत्युत्तरम् । बहूनामर्थानां वचनं भूयसादिबहुवचनमपि भवतीत्यत आह—बहूनामिति । कर्मणि ल्युट् । बहूनामर्थानां सम्बन्धि यदुच्यते तद्बहुवचनम् । तच्चोपस्थितत्वाद्बहुत्वमेव । तदाह—बहुत्वमेवोच्यत इति । एकत्वरूपेऽर्थे शास्त्रीयो बहुत्वरूपार्थस्य

† जात्याख्यायां वचनातिदेशे स्थानिवद्भावप्रतिषेधः १. १. ५६ वा० १५.

## संख्याप्रयोगे प्रतिषेधः ॥ ४ ॥

संख्याप्रयोगे प्रतिषेधो वक्तव्यः । एको व्रीहिः सम्पन्नः सुभिक्षं करोति । एको यवः सम्पन्नः सुभिक्षं करोति ।

## अस्मदो नामयुवप्रत्यययोश्च ॥ ५ ॥

अस्मदो नामप्रयोगे युवप्रत्ययप्रयोगे च प्रतिषेधो वक्तव्यः । नामप्रयोगे,—अहं देवदत्तो ब्रवीमि । अहं यज्ञदत्तो ब्रवीमि । युवप्रत्ययप्रयोगे—अहं गार्ग्यायणो ब्रवीमि । अहं वात्स्यायनो ब्रवीमि ।

युवग्रहणेन नार्थः—'अस्मदो नामप्रत्ययप्रयोगे ने'त्येव । इदमपि सिद्धं भवति—अहं गार्ग्यो ब्रवीमि । अहं वात्स्यो ब्रवीमि ।

अपर आह—अस्मदः सविशेषणस्य प्रयोगे नेत्येव । इदमपि सिद्धं भवति—अहं पटुर्ब्रवीमि । अहं पण्डितो ब्रवीमि ।

## अशिष्यं वा बहुवत्पृथक्त्वाभिधानात् ॥ ६ ॥

अशिष्यो वा बहुवद्भावः । किं कारणम् ? 'पृथक्त्वाभिधानात्' पृथक्त्वेन हि द्रव्याण्यभिधीयन्ते । बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम् । किमुच्यते—'पृथक्त्वाभिधाना'दिति । यावता इदानीमेवोक्तम्—'जात्याख्यायां सामान्याभिधानादैकार्थ्य'मिति ।

## जातिशब्देन हि द्रव्याभिधानम् ॥ ७ ॥

प्र०—द्वित्वबहुत्वयोरभिधानादर्थातिदेशात्स्थान्यादेशभावाऽभावः । संख्याप्रयोग इति । एकस्यैव बहुत्वातिदेशः क्रियमाण एकशब्दस्य प्रयोगेपि प्राप्नोतीति प्रतिषेध उच्यते । उभयपदार्थपक्षाश्रयेण प्रत्याख्यातुमाह—अशिष्यमिति । तत्र कदाचिज्जातेः प्राधान्यं कदाचिद्द्रव्यस्येति यथेष्टं प्रयोग उपपद्यते ॥५८॥

उ०—तादात्म्येनाहार्यारोप इति तात्पर्यम् । अत एव तद्विशेषणानामपि सिध्यति । एवमिति । अन्यथा तत्रापि 'तिष्यपुनर्वसू' इत्यत्र 'जसि चे'ति गुणः स्यादिति भावः । एकशब्दप्रयोगविरोधाद्बहुवचनाऽप्राप्तेराह—एकस्यैवेति । जातेरेकत्वावगतावेवातिदेशप्रवृत्तेरिति भावः । भाष्ये प्रसङ्गादस्मदो द्वयोश्चेत्यस्य प्रतिषेधमाह—अस्मदो नामेति ।

ननु द्रव्यपदार्थाश्रयेण प्रत्याख्याने 'व्रीहिः सम्पन्न' इति प्रयोगो न स्यादत आह—उभयेति । कदाचिद्द्रव्यं प्रधानं कदाचिज्जातिः प्रधानमित्यर्थः । भाष्ये पृथक्त्वेनेति । भेदेनेत्यर्थः । भाष्ये—जातिशब्देनेति । जातिशब्दत्वाभिमतेनेत्यर्थः । निष्कृष्टजात्यभिधायक-

जातिशब्देन हि द्रव्यमप्यभिधीयते, जातिरपि । कथं पुनर्ज्ञायते जातिशब्देन द्रव्यमप्यभिधीयत इति ? एवं हि कश्चिन्महति गोमण्डले गोपालकमासीनं पृच्छति—'अस्त्यत्र काञ्चिद्गां पश्यसी'ति स पश्यति—'पश्यति चायं गाः', पृच्छति च—'काञ्चिदत्र गां पश्यसी'ति । नूनमस्य द्रव्यं विवक्षित'मिति । तद्यदा द्रव्याभिधानं तदा बहुवचनं भविष्यति, यदा सामान्याभिधानं तदैकवचनं भविष्यति ॥५८॥

## अस्मदो द्वयोश्च ॥ १ । २ । ५९ ॥

अयमपि योगः शक्योऽवक्तुम् । कथम्—अहं ब्रवीमि आवां ब्रूमः वयं ब्रूमः ? इमानीन्द्रियाणि कदाचित्स्वातन्त्र्येण विवक्षितानि भवन्ति । तद्यथा—इदं मे अक्षि सुष्ठु पश्यति, अयं मे कर्णः सुष्ठु शृणोतीति । कदाचित्पारतन्त्र्येण विवक्षितानि भवन्ति—अनेनाक्ष्णा सुष्ठु पश्यामि, अनेन कर्णेन सुष्ठु शृणो-

---

प्र०— अस्मदो । तद्यदेति । एकेन्द्रियप्रवृत्तौ चेतरेन्द्रियान्तराणामौदासीन्येन संविधातृत्वात् कर्तृत्वविवक्षेति 'वयं पश्याम' इत्यादि सिद्धम् । शरीर इवेन्द्रियेष्वप्यहङ्कारोत्पादाद्वयमित्यनेनेन्द्रियाणामभिधानात् । पारतन्त्र्यविवक्षायां त्विन्द्रियाणामहं

---

उ०—गोत्वादिशब्दे तु नायं विधिरिष्ट इति भावः । तदाह—द्रव्यमपीति । 'प्राधान्येने'ति शेषः । तदाह—तत्र कदाचिदिति । जातिप्रकारकव्यक्तिविशेष्यक एव शक्तिग्रहः 'गौर्गोपदवाच्य' इति जातिव्यक्त्युभयविषयकबोधे कारणम् । अत एव जातिविशेष्यकशक्तिग्रहविषयाद्गोत्वपदान्न कदापि व्यक्तिबोधः । जातिव्यक्त्योरन्यतरस्य विशेष्यतायां च पुरुषेच्छैव नियामिका । तात्पर्यग्राहकं चैकवचनबहुवचनादि । एतदेवाभिप्रेत्य जातिप्राधान्ये द्वन्द्वे एकवद्भावो, व्यक्तिप्राधान्ये तु नेति व्यवहार इति भावः । तत्र जातौ व्यक्तेः प्रकारताऽभेदेनेति न वाहाद्यन्वयानुपपत्तिः । गोत्वपदजन्यगोत्वबोधे तु भेदेनेति न गोत्वं वाहयेत्यादिप्रयोगः । व्यक्तिद्वारकोऽन्वय इत्यस्याप्ययमेवार्थ इति बोध्यम् । भाष्ये—महति गोमण्डल इति । अतिनिबिडगोमण्डलेऽविविक्ततया दृष्ट इत्थमुक्तिः । तत्र जातेरेव शब्दार्थत्वे जातेर्दृष्टत्वात् प्रश्नानुपपत्तिरित्यर्थः ॥५८॥

अस्मदो द्व । नन्विन्द्रियाणां स्वातन्त्र्येपि एकेन्द्रियसाध्यक्रियायामिन्द्रियान्तराणां कर्तृत्वाऽभावाद्बहुवचनमनुपपन्नमत आह—एकेन्द्रियेति । स्वविषयौदासीन्यं संविधातृत्वे हेतुः । संविधातृत्वं—सहकारित्वम् । नन्वेवमस्मदः प्रयोगोऽनुपपन्नोऽत आह—शरीर इवेति । अहङ्कारः—अहन्त्वप्रतीतिः—,अहं काण इत्यादिः । पारतन्त्र्येति । तथा च करणत्वेन विवक्षितत्वात्संविधातृत्वलक्षणकर्तृत्वं नास्तीत्यर्थः । उच्चारयित्रात्मन अहङ्कारास्पदात्मनो वा एकत्वादावामित्यनुपपन्नमत आह एकशेषेति । त्यदादीनां यत्परं तच्छिष्यत इति भावः । अस्मदोऽर्थद्वयाभिधानादित्यत्राऽस्मद इति शेषत्वविवक्षया षष्ठी । सम्प्रत्ययेति । व्यवहारे-

मीति । तद्यदा स्वातन्त्र्येण विवक्षा तदा बहुवचनं भविष्यति । यदा पारतन्त्र्येण तदैकवचनद्विवचने भविष्यतः ॥५९॥

**फल्गुनीप्रोष्ठपदानां च नक्षत्रे ॥ १ । २ । ६० ॥**

अयमपि योगः शक्योऽवक्तुम् । कथम्—उदिते पूर्वे फल्गुन्यौ, उदिताः पूर्वाः फल्गुन्यः । उदिते पूर्वे प्रोष्ठपदे, उदिताः पूर्वाः प्रोष्ठपदाः ? फल्गुनीसमीपगते चन्द्रमसि फल्गुनीशब्दो वर्तते । बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम् । यदा तयोरेवाभिधानं तदा द्विवचनं भविष्यति ॥६०॥

**छन्दसि पुनर्वस्वोरेकवचनम् ॥ १ । २ । ६१ ॥ विशाखयोश्च ॥६२॥**

इमावपि योगौ शक्यावक्तुम् । कथम् ?

**पुनर्वसुविशाखयोः सुपां सुलुक्पूर्वसवर्णेति सिद्धम् ॥ १ ॥**

पुनर्वसुविशाखयो 'सुपां सुलुक्पूर्वसवर्ण' [ ७. १. ३९ ] इत्येव सिद्धम् ॥६१; ६२॥

**तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥१।२।६३॥**

---

प्र०—ब्रवीमि इत्येकवचनं सिद्धम् । युष्मदस्मदोश्चैकशेषेऽस्मदोर्थद्वयाभिधानाद्द्विवचनमिति नार्थो योगेन । सम्प्रत्ययप्रामाण्याच्च युष्मदि गुरौ पक्षे बहुवचनं सिद्धम् ॥५९॥

फल्गुनी । बहवस्तेर्था इति । अमावास्यायामप्यादित्यमण्डलं प्रविष्टेन चन्द्रेण नक्षत्राणां योगोस्त्येवेति तदापि बहुवचनमर्द्धर्चाः छत्रिन्यायेन इत्यादिन्यायेन सिद्धम् । एकस्यां तु तारायां फल्गुनीशब्दो न वर्तत इति एकवचनाऽभावः । सर्वत्र लौकिकः प्रयोगः प्रामाण्येनाश्रीयत इत्यनवस्था न भवति ॥६०॥

तिष्य । नक्षत्र इति किमर्थमिति । 'तिष्यपुनर्वसवो माणवका' इत्यत्र गौणार्थ-

---

उ०—स्यर्थः । एवं च युष्मदि गुरावेकेषामिति । क्वचिद्दृत्तावुच्यमानमसङ्गतमिति भावः । अत एवाचार्याः कथयन्तीत्यादि सङ्गच्छते । इत्थमेव डित्थाः कथयन्तीत्याद्युपपत्तिर्बोध्या । एतदर्थं च प्रत्याख्यानप्रकारस्यावश्यकत्वात्सूत्रं प्रत्याख्यातमिति भावः ॥५९॥

फल्गुनी । अमायां चन्द्रस्य नक्षत्वात्कथं बहुवचनमित्यत आह—अमेति । ननु चन्द्रस्य फल्गुन्यादिपदवाच्यत्वाऽभावात् कथं तमादाय फल्गुन्य इत्यादिप्रयोगोऽत आह—अर्धर्चा इति । तद्रूपारोपात्तच्छब्दप्रवृत्तिरिति भावः । नन्वेवमेकर्क्षविवक्षायामेकवचनमपि स्यादत आह—एकस्यामिति । नन्वेवं नक्षत्रान्तरेपि चन्द्रसम्बन्धविवक्षायां द्विवचनादि स्यादत आह—सर्वत्रेति । अनवस्था—अतिप्रसङ्गः ॥६०॥

तिष्यपुन । ननु माणवकवाचिद्वन्द्वनिवृत्त्यर्थं सदुत आह—तिष्येति । तिष्येपीति ।

तिष्यपुनर्वस्वोरिति किमर्थम् ? कृत्तिकारोहिरायः। नक्षत्र इति किमर्थम् ? तिष्यश्च माणवकः, पुनर्वसू च माणवकौ×, तिष्यपुनर्वसवः।

अथ नक्षत्र इति वर्तमाने† पुनर्नक्षत्रग्रहणं किमर्थम् ? अयं तिष्यपुनर्वसुशब्दोऽस्त्येव ज्योतिषि वर्तते। अस्ति च कालवाची। तद्यथा बह्वस्तिष्यपुनर्वसवोऽतिक्रान्ताः, कतरेण तिष्येण गत इति। तद्यो ज्योतिषि वर्तते तस्येदं ग्रहणम्।

अथवा 'नक्षत्रे' इति वर्तमाने पुनर्नक्षत्रग्रहणस्यैतत्प्रयोजनम्—'विदेशस्थमपि तिष्यपुनर्वस्वोः कार्यं तदपि नक्षत्रस्यैव यथा स्यात्'। 'तिष्यपुष्ययोर्नक्षत्राऽणि यलोपो वक्तव्यः'+ इति नक्षत्रग्रहणं न कर्तव्यं भवति।

---

प्र०—स्वान्न भविष्यतीति प्रश्नः। उत्तरवादिनस्त्वयमभिप्रायः, तिष्येण युक्तः कालस्तिष्यः, तिष्ये जातो माणवक इति यौगिकत्वान्नास्ति गौणार्थत्वम्। ज्योतिषि वर्तत इति। नन्वेकेनैव नक्षत्रग्रहणेन कालमाणवकयोर्निवृत्तिः सिद्धा, तत्र किं द्वितीयेन नक्षत्रग्रहणेन। नैतदस्ति। अन्तरङ्गः कालः, बहिरङ्गस्तु माणवक इत्यन्तरङ्गस्यैव कालस्यैकेन नक्षत्रग्रहणेन निवृत्तिः स्यात्। यथाऽकर्मकश्रुत्याऽन्तरङ्गं द्रव्यकर्म निषिध्यते न कालकर्मेति मासमास्यते देवदत्ते नेत्यत्रापि भावे लकारः सिद्धो भवति। द्वितीयेन तु नक्षत्रग्रहणेन बहिरङ्गोऽपि माणवको निवर्त्यते।

ननु नक्षत्रद्वन्द्वे इत्युक्ते अर्थाद्द्वयोरपि कालमाणवकयोर्निवृत्तिः सिद्धैवेत्याह—अथवेति। तिष्यपुनर्वस्वोरिति योगविभागः क्रियते, नक्षत्र इति चानुवर्तते। तेन यत्किञ्चित्तिष्यपुनर्वस्वोः कार्यं तन्नक्षत्रवृत्त्योरेव भवतीत्यर्थः यलोपे कृतमेव नक्षत्रग्रहणमित्यभिप्रायेण आह—अथवेति। स्वरूपग्रहणे प्राप्तेऽर्थग्रहणार्थं द्वितीयं नक्षत्रग्रहणम्। पुनर्नक्षत्रग्रहणे सत्यर्थस्यैवाऽयमनपेक्षितोपात्तशब्दस्यातिदेश इति पर्याया-

---

उ०—'नक्षत्रेण युक्तः काल' इत्यणो 'लुबविशेष' इति लुपि जाते सन्धिवेलाद्यणः स्वातितिष्यपुनर्वस्विति लुक्। यौगिकत्वादिति। लोपेनाप्यवशिष्टस्य तदर्थान्तर्भावेण शक्तिरेव बोध्यते। अत एव लुबादिप्रत्याख्यानं सूत्रकृतोक्तमिति भावः। अन्तरङ्ग इति। कालार्थतद्धितान्तान्माणवकार्थतद्धितोत्पत्तिरिति कालमाणवकयोरन्तरङ्गबहिरङ्गतेति भावः। यथेति। द्रव्यकर्मणाक्रियास्वरूपपरिपूरणं, कालकर्मणा स्वगतायाः क्रियायाः कालसम्बन्धपूरण-

---

× नक्षत्रेण युक्तः कालः; लुबविशेषे; सन्धिवेला०; श्रविष्ठाफल्गुन्यनु० ४. २. ३; ४; ४. ३. १६; ३४,

† फल्गुनीप्रोष्ठपदानां च नक्षत्रे १. २. ६०. + ६. ४. १४९ वा० ७,

अथवा 'नक्षत्रे' इति वर्त्तमाने पुनर्नक्षत्रग्रहणस्यैतत्प्रयोजनं—'तिष्य-पुनर्वसुपर्यायवाचिनामपि यथा स्यात्' पुष्यपुनर्वसू, सिध्यपुनर्वसू।

अथ द्वन्द्व इति किमर्थम्? यस्तिष्यस्तौ पुनर्वसू येषां त इमे तिष्य-पुनर्वसव उन्मुग्धाः।

बहुवचनस्येति किमर्थम्? उदितं तिष्यपुनर्वसु। कथं चात्रैकवचनम्? जातिद्वन्द्व एकवद्भवतीति। 'अप्राणिना'मिति प्रतिषेधः† । एवं तर्हि सिद्धे

प्र०—णामपि ग्रहणसिद्धिः। तिष्यपुनर्वसव उन्मुग्धा इति। केचिदाहुः पुरुषा अन्य-पदार्थः। नक्षत्राणां तु बहुव्रीहिरिति द्विवचनप्रसङ्गः। अन्ये त्वाहुः—नक्षत्रवृत्तेः समासस्य ग्रहणे पुरुषाणामन्यपदार्थत्वे प्रसङ्ग एव नास्तीति। अवयवेन विग्रहः समुदायः समासार्थ इति तिष्यादय एव विपर्यासविषया बहुव्रीहिणोच्यन्त इत्यस्ति प्रसङ्गः। जातिद्वन्द्व इति। कथमनयोर्जातिशब्दत्वम्, यावता जातिप्रदेशेषु भिन्नाधारा जातिर्गृह्यते, न त्ववस्थाभेदकल्पितभेदैकवस्तुविषया। एवं तर्हि प्रतिमन्वन्तरे भिन्नानि

उ०—मिति तयोरन्तरङ्गबहिरङ्गता बोध्या। नन्विति। अकर्मकग्रहणेन श्रुत्यैव साक्षात्कर्मणि व्यावर्त्यमाने युक्ता पूर्वपक्षात्सम्बन्धसत्त्वेनान्तरङ्गस्यैव व्यावृत्तिर्नत्वेवं प्रकृते। अस्य हि स्वार्थसमर्पणद्वाराऽन्यव्यावर्तकत्वेनाऽविशेषादुभयव्यावर्तकत्वसम्भवादिति भावः। अत्रत्यस्या-ऽङ्गाधिकारस्थेन कथं सम्बन्धोऽत आह—तिष्येति। नक्षत्रस्याऽण् नक्षत्राऽण्, ततः सप्तम्यां नक्षत्राऽणीति। निर्देशः। यलोप इति। तच्च पुष्यविशेषणार्थमावश्यकमेवेति भावः। पुनर्नक्षत्रेति। 'तिष्यपुनर्वस्वोः शब्दयोरभिधेये नक्षत्रे वर्तमानानां नक्षत्रशब्दानां द्वन्द्व' इति सूत्रार्थ इति भावः। अर्थस्यैवेति। तदर्थसम्बन्धिनो बहुत्वस्य द्वित्वातिदेश इत्यर्थः। समासस्येति। 'कृत्तद्धिते'ति सूत्राद्विपरिणतविभक्तिकं समासग्रहणमनुवर्त्यैत्यर्थः। 'नास्तीती'त्यन्तेन पूर्वमतदूषणम्। अथ भाष्यं व्याचष्टे—अवयवेनेत्यादिना। अवयवार्थकेन वर्तिपदार्थस्य बोधनमित्यर्थस्तदाह—समुदाय इति। उद्भूतावयवभेद इत्यर्थः। विपर्यास-विषया इति। 'यस्तिष्य' इत्युपलक्षणं, यौ पुनर्वसू च तिष्यो येषामित्यर्थस्यापीति भावः। विपर्यासो—भ्रमः। 'उन्मुग्धा' इत्यस्य च विपर्यासेन दृश्यमाना इत्यर्थः। अविविक्तता-वचनान्मुहेः कर्तरि क्तेऽविवक्षा इत्यर्थादिति भावः। भाष्ये—कथञ्चात्रेति। प्राण्यङ्गादीनामेव समाहारद्वन्द्व इति नियम इति भावः। एवं तर्हीति। 'द्वन्द्वश्चे'त्यादिषु—एषां समाहार एवेति नियमबोधनद्वारा तद्व्यतिरिक्तसर्वद्वन्द्वस्यानेनोभयरूपता बोध्यत इत्यर्थस्तदाह—अप्राणीति। न्यायसिद्धार्थद्योतकत्वेन सर्वशब्दस्य संकुचद्वृत्तितैव युक्तेति भावः। तद्वचन-

† जातिरप्राणिनाम् २. ४. ६.

सति यद्बहुवचनग्रहणं करोति, तज्ज्ञापयत्याचार्यः—'सर्वो द्वन्द्वो विभाषयैकवद्भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? बाभ्रवशालङ्कायनम् बाभ्रवशालङ्कायना इत्येतत्सिद्धं भवति ।

अथवा नात्र भवन्तः प्राणिनः, प्राणा एवात्र भवन्तः ॥६३॥

इति श्रीभगवत्पतञ्जलिविरिचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥१।२।२॥

---

प्र०—नक्षत्राणीति दर्शने भिन्नाधारा जातिः सम्भवतीति न कश्चिद्दोषः। सर्वो द्वन्द्व इति। अप्राणिजातिद्वन्द्वो नित्यमेकवद्भवति, प्राणिद्वन्द्वस्तु विकल्पेन। न्यायसिद्धश्चाऽर्थो बहुवचनग्रहणेन लिङ्गेन सूच्यते। एकवद्भावप्रकरणं हि विषयविभागार्थमारब्धम्—'प्राण्यङ्गादीनां समाहार एव, न तु प्राण्यङ्गादीनामेव समाहार' इति। इतरस्तत्प्रकरणानुपात्तानां समाहारेतरेतरयोगयोर्द्वन्द्वः सिद्ध एव। अथवेति। नह्येतेषु लोके प्राणिव्यवहारः प्रसिद्ध इति भावः। प्राणा एवेति। तदधीनस्थितित्वात्प्राणिनामेव एव प्राणा उच्यन्त ॥६३॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥२॥

---

उ०—यत्त्वाह—न्यायेति। एकवद्भावप्रकरणवैयर्थ्यमुद्धरन् न्यायमेव दर्शयति—एकेति। विषयविभागः—विषयनियमः। न तु विधेयद्वन्द्वनियमार्थमिति भावः। नन्विति। अन्यथाऽत्र बहुवचनग्रहणवैयर्थ्यापत्तिरिति भावः। सिद्ध एवेति। 'चार्थे' इत्यनेनेत्यर्थः। नह्येतेष्विति। 'आपोमयः प्राण' इति श्रुतेरद्भिर्विना ग्लायमानप्राणा एव लोके प्राणिन इत्युच्यन्ते, इदमेव पूज्यत्वं भाष्येऽत्रभवच्छब्देनाच्यत इति भावः। लोके 'प्राण' इति व्यवहारस्याप्यभावादाह—तदधीनेति। एवं च तथा नियमेऽपि न क्षतिरिति भावः। केचित्तु शिष्टानुरोधेन 'द्वन्द्वश्चे'त्यादिषु समाहार एवेति नियमः। एवं चात्रापि पक्षे 'जातिरप्राणिना'मिति नित्यैकवद्भावे बहुवचनाऽभावात्सूत्रमनर्थकं सदुक्तार्थज्ञापकम्। ज्ञाप्यकोटौ सर्वशब्देनैकवद्भावविषयो जातिद्वन्द्व एव गृह्यते। द्वन्द्वश्चेत्यादीनामन्येषां तु नित्यत्वमेव। अत एवैकवद्भावप्रकरणं पूर्वत्र नित्यार्थमुत्तरत्र व्यभिचारार्थमिति 'विभाषावृक्षे'ति सूत्रस्थभाष्येण न विरोधः। अत एव 'मृदङ्गशंखतूणवा' इत्यादि सङ्गच्छते। यद्वा जातिप्राधान्य एकवचनं, व्यक्तिप्राधान्ये च बहुवचनमित्युभयमप्यत्र। अत्रैवार्थे इदं ज्ञापकमित्याहुः ॥६३॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्याऽध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥२॥

## सरूपाणामेकशेष एकविभक्तौ ॥ १ । २ । ६४ ॥

रूपग्रहणं किमर्थम् ? 'समानानामेकशेष एकविभक्ता'वितीयत्युच्यमाने यत्रैव सर्वं समानं शब्दोऽर्थश्च, तत्रैव स्यात्—वृक्षाः प्लक्षा इति । इह न स्यादक्षाः पादा माषा इति । रूपग्रहणे पुनः क्रियमाणे न दोषो भवति । रूपं निमित्तत्वेनाश्रीयते । श्रुतौ च रूपग्रहणम् ।

अथैकग्रहणं किमर्थम् ? 'सरूपाणां शेष एकविभक्ता'वितीयत्युच्यमाने द्विबह्वोरपि शेषः प्रसज्येत । एकग्रहणे पुनः क्रियमाणे न दोषो भवति ।

---

प्र०- सरूपाणां । रूपग्रहणमिति । रूपस्याऽन्तरङ्गत्वादुपदेशानपेक्षणाच्च तत्कृतमेव समानत्वं ग्रहीष्यते । प्रतिपत्तिलाघवं च समानानामित्युच्यमाने भवति । रूढशब्दत्वात्समानशब्दस्य तुल्यार्थत्वावगमात् । 'सरूपाणा'मिति पुनरुच्यमाने पदद्वयार्थावगमपूर्वकान्यपदार्थावगमात् प्रतिपत्तिगौरवं भवतीति प्रश्नः । शब्दोर्थश्चेति । 'स्वं रूप'मित्यत्र रूपग्रहणेन ज्ञापितम्—'व्याकरणे रूपवदर्थोप्यङ्गीक्रियत' इति । ततश्चार्थरूपाभ्यां समानत्वं गृह्येतेत्यर्थः । शब्दानुशासनप्रस्तावाच्च शब्दसम्बन्धिरूपं गृह्यते, न तु चक्षुर्ग्राह्यमित्याह—श्रुतौ चेति । श्रोत्रोपलब्धावित्यर्थः । अथवा श्रोत्रेन्द्रियं श्रुतिरुच्यते । एकग्रहणमिति । शेषणं शेष इति भावसाधनपक्षे प्राथम्यादेकस्यैव शेषो भविष्यति । शिष्यत इति 'शेष' इति कर्मसाधनपक्षेप्येकत्वसङ्ख्याया विवक्षितत्वादेक एवावशिष्यत इति प्रश्नः । द्विबह्वोरिति । द्वित्वबहुत्वविषयस्याऽनेकस्य शब्दस्येत्यर्थः । तत्र भावसाधनपक्षे व्यक्तिन्यायाश्रयणेनैकस्यापि शेषः स्यात् । कर्मसाधन-

---

उ०- सरूपाणाम् । नन्वर्थकृतमपि साम्यं गृह्येतेति प्रश्नानुपपत्तिरत आह—रूपस्येति । अन्तरङ्गत्वं—शब्दार्थप्रतीतेः पूर्वं नियमेन प्रतीयमानत्वम् । अर्थो हि तद्विपरीतत्वाद्बहिरङ्गः, तथानुकरणदशायामप्रतीतेर्हेयश्च । शब्दस्य तु ज्ञानमात्रे मानात्स कुत्रापि न हेयः । उपदेशः—सम्बन्धग्रहः । पर्यायाऽप्रतिपाद्यमानत्वम्—असाधारणत्वम् । ननु समानानामित्युक्तेपि वर्णकृतलाघवाभावोऽत आह—प्रतिपत्तीति । यद्यपि सह मानेनेति योगस्तत्रापि तथापि प्रवीणादिवद्रूढ एवायमिति भावः । तदाह—रूढशब्दत्वादिति । सरूपशब्दस्तु 'ज्योतिर्जनपदे'ति समानस्य सभावविधानादवयवार्थानुसन्धानद्वारेणैव सादृश्यं प्रतिपादयतीति तात्पर्यम् । ज्ञापितमिति । शब्दार्थविषये क्वचिदुक्तन्यायाप्रवृत्तेर्ज्ञापनादित्यर्थः । श्रोत्रेन्द्रियस्य करणत्वेप्याधारत्वाऽसंभवादाह—श्रोत्रोपेति । भावसाधनः 'श्रुति'शब्द इति भावः । अथवेति । श्रुत्यवच्छेदेनेत्यर्थः । करणसाधनः स इति भावः । आद्ये ग्रहणं विषयता, द्वितीये तु प्रतीतिरिति विवेकः । प्राधान्येन श्रोत्रेन्द्रियग्राह्यं वस्त्वत्र रूपशब्देनोच्यत इति तात्पर्यम् । शेषणमिति । अत्रेतरनिवृत्तिविशिष्टमवस्थानं विधेयम् । तच्चैकस्य द्वयोरित्याद्याकाङ्क्षायां प्राथम्यादेकस्यैव भविष्यतीत्यर्थः । कर्मसाधनेति । तत्र हि सरूपाणां

अथ शेषग्रहणं किमर्थम् ? 'सरूपाणामेक एकविभक्ता'वितीयत्युच्यमाने आदेशोऽयं विज्ञायेत। तत्र को दोषः ? अश्वश्चाऽश्वश्चाश्वौ। आन्तर्यतो द्व्युदात्तवतः स्थानिनो द्व्युदात्तवानादेशः प्रसज्येत। लोप्यलोपिता च न प्रकल्पेत। तत्र को दोषः ? गर्गा वत्सा बिदा उर्वाः। यञ्यो बहुष्वञ्यो बहुष्वित्युच्यमानो

---

प्र०—पक्षेपि संस्कार्यत्वात् प्राधान्यात्सङ्ख्याया अविवक्षा स्यात्। यथा 'ग्रहं सम्मार्ष्टी'ति भावः। शेषग्रहणमिति। 'सरूपाणामेकः साधुर्भवती'ति वाक्यशेषोऽध्याहरिष्यत इति भावः। आदेशोऽयमिति। 'षष्ठी स्थानेयोगे'ति नियमात। तत्र को दोष इति। अन्तरतम एक आदेशः प्रवर्तिष्यत इति भावः। इतरस्तु स्वरे दोषमाह—अश्वश्चाश्वश्चेति। द्व्युदात्तवत इति। द्वावुदात्तवन्तावश्वशब्दौ यस्य समुदायस्य स द्व्युदात्तवान् समुदायः। आदेशोपि द्वावुदात्तवन्तावुदात्तगुणयुक्तावकारौ यस्येति द्व्युदात्तवानुच्यते। एतच्चोपलक्षणं तेन द्व्यनुदात्तवतो द्व्यनुदात्तवानादेशः प्राप्नोति। लोप्यलोपितेति। लोपनीयस्य लोपित्वं लोपसम्बन्धो न प्राप्नोतीत्यर्थः। गर्गा इति। प्रकृतिरर्थाऽभेदादेकैव। यञ्प्रत्ययास्तु बहवः। यञाकृतेश्च एकत्वाद्व्यवधानाऽभावादनेकस्यापि प्रत्ययस्य परत्वं न विरुध्यते। तत्र गर्ग य य य इति स्थिते यदा गर्गशब्दं मुक्त्वा प्रत्यया-

---

उ०—सम्बन्धी शिष्यत इत्यर्थः। तत्राक्षिप्तसम्बन्धिपदे आक्षेपकसामानाधिकरण्यायैकवचनान्ते एकत्वविवक्षेति भावः। संख्येयार्थकत्वे द्विवचनानुपपत्तिः, संख्यार्थत्वेऽर्थासङ्गतिरत आह—द्वित्वेति। 'द्विबह्वो'रिति विषयसप्तमीति भावः। 'शेष'शब्दोऽत्र सोपयुक्तादन्यस्मिन्, असम्भवात्। तदाह—तत्र भावेति। व्याप्तीति। अत्र शास्त्रे 'आद्युदात्तश्चे'त्यादिग्रहणेन, 'ग्रामीश्वरा दिति रेफोच्चारणेन च प्राथम्यन्यायापेक्षया व्याप्तिन्यायस्य प्राबल्यबोधनात्। एवं चेतरनिवृत्तिमदवस्थानं तदर्थः। तत्र यद्यपि स्थितेः सिद्धत्वान्निवृत्तावेवार्थतो विधेयता, तथापि शब्दतस्तन्नैव विधेयत्वाद्व्याप्तिन्यायेन द्विबहूनामेवावस्थानं स्यादेकस्य निवृत्तिरिति भावः। संस्कार्यत्वादिति। शिष्यमाणत्वविधानेन शेषपदार्थाक्षिप्तस्य संस्क्रियमाणत्वादिति भावः। सरूपाणामिति। षष्ठ्या विधेयबोधकशेषपदेन सामानाधिकरण्याऽन्वययोग्यः सम्बन्धी आक्षिप्यते, स चैकवचनान्त एव यद्यपि, तथापि तस्य विधेयेन शिष्यमाणत्वेन संस्क्रियमाणत्वेनानुवाद्यत्वादेकत्वाऽविवक्षेति तात्पर्यम्। 'सरूपाणा'मिति लक्ष्यानुसारतो व्याख्यानमाश्रित्यैषा निर्धारणे षष्ठी, साध्वनुशासनत्वाच्च साधुरित्याद्यध्याहारः। एवं च तेषां मध्ये एकस्य साधुत्वेऽपरस्याऽसाधुत्वेनार्थान्निवृत्तिरिति भावः। षष्ठीति। 'निर्दिश्यमानस्यादेशा' इत्यर्थमावश्यकस्य व्याख्यानापेक्षगौरवपरिहाराय नियमार्थत्वमप्यङ्गीकार्यमिति निर्धारणषष्ठी न युक्तेति भावः। अन्तरतम इति। 'शब्दतोऽर्थतश्चे'त्यादिः। तमग्रहणादिति भावः। द्व्युदात्तशब्दस्य बहुव्रीहित्वे मतुब्न स्यात्, उक्तार्थत्वात्, कर्मधारयात्तु मत्वर्थीयो नेष्ट इत्यत आह—द्वाविति। अत्रोदात्तशब्दो धर्मिपरः। आदेशस्यापि तथात्वे एकशेषानर्थक्यमत आह—आदेशोपीति। अत्रोदात्तशब्दो धर्मपर इति भावः। विधीयमानानेकोदात्तस्यो'श्चे

लुङ्न प्राप्नोति† । मा भूदेवम् । यञन्तं यद्बहुषु, अञन्तं यद्बहुष्विवत्येवं भविष्यति । नैवं शक्यम्, इह हि दोषः स्यात् काश्यपप्रतिकृतयः काश्यपा इति‡ ।

एकविभक्ताविति किमर्थम् ? पयः पयो जरयति, वासो वासश्छादयति, ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहीति ।

प्र०—नामैवैको यशब्द आदेशः क्रियते तदा तस्य बह्वर्थत्वाल्लुक् सिध्यति । यदा तु विरूपाणामपि समानार्थानामेकशेषवदेक आदेशः सप्रकृतिकः क्रियते तत्र गर्ग य इत्यस्याऽन्ययोश्च 'य'शब्दयोर्गर्गयशब्द आदेशः । तत्र यशब्दान्तस्य बहुषु वृत्तिः, न तु प्रत्ययमात्रस्येति भावः । यञन्तं यद्बहुष्विति । आदेशपक्षेपि वचनसामर्थ्यात् सारूप्यादबुद्ध्युत्पादायञन्तमेतदित्याश्रीयते । काश्यपा इति । काश्यप इवायं तत्प्रतिकृतिरितीवे प्रतिकृताविति विहितस्य कनो 'जीवकार्थे चाऽपण्ये' इति लुक् । ततः काश्यपश्च काश्यपश्च काश्यपश्चेति प्रतिकृतिप्रचयविवक्षायामेकः काश्यपशब्दः प्रयुज्यते । स च बह्वर्थोऽञन्तश्चेति लुक्प्रसङ्गः । 'लौकिकस्य गोत्रस्य तत्र ग्रहण'मिति परिहार उत्तरत्र वक्ष्यते इतीह नोक्तः । पय इति । उत्तरत्रा'र्धविप्रतिषेधा'दिति प्रत्या-

उ०—वनस्पत्यादिषु युगप'दित्यादौ समावेशदर्शनादिति तात्पर्यम् । तेनेति । पर्यायेणेति भावः । नन्वक्षशब्दे श्रूयमाणोदात्तानुदात्तयोरनुग्रहायाऽन्तरतमपरिभाषयोभयस्वरक एवादेशो भविष्यतीति चेन्न; तेनैव रूपेण सादृश्यग्रहणमित्यत्र नियामकाऽभावेन पर्यायस्य दुर्वारत्वात् । यत्तु इश्च इश्चेत्येकशेषे एक आदेशोऽरूपत्वाद्हस्वस्य स्यात् । सूत्रं त्वनेकाल्षु चरितार्थं, ततः सवर्णदीर्घे 'दीर्घा'दिति पूर्वसवर्णदीर्घनिषेधे यणि याविति स्यादित्याहुः । तन्न, 'सरूपाणा'-मिति बहुवचनेन प्रत्येकं स्थानित्वबोधनेन रमागमन्यायेन सर्वनिवृत्तेरदोषात् । लोप्यलोपि-पदयोः पौनरुक्त्यमाशङ्क्याह—लोपनीयस्येति । 'लोप्य'पदमृहलोरितिण्यदन्तम् । सम्बन्ध इति । कृत्तद्धितसमासेभ्यो भावप्रत्ययस्य सम्बन्धाभिधायकत्वादिति भावः । एकैवेति । गर्गस्यापत्यानीति विवक्षणादिति भावः । बहव इति । अपत्यानां बहुत्वात् । नन्वेकस्याः प्रकृतेः कथं बहवः परेऽत आह—यच्चाकृतेश्चेति । यद्यपि जातेरेकैकव्यक्तिव्यङ्ग्यत्वं, व्यक्तिद्वारकमेव परत्वं च, तथाप्यव्यवहितव्यक्तिद्वारकं सर्वगतजातेः परत्वमित्यभिमानः । व्यक्ति-पक्षेपि विजातीयव्यक्तिव्यवधानमेव व्यावर्त्यते, न सजातीयतः व्यवधानमित्यन्ये । प्रत्ययानामेवेति । समानाकारत्वादिति भावः । इदं चिन्त्यम्, एकविभक्तावित्युक्त्या तत्प्रकृतित्वाऽ-योग्यानां केवलप्रत्ययानामेकशेषाऽप्राप्तेः । गर्गसहितानामेव हि तत्प्रकृतिता विरूपाणामिति । अन्त्य'य'शब्दयोरपि गर्गापत्यत्वेनैव बोधकत्वात्समानार्थत्वं बोध्यम् । 'व'दित्युक्तिस्तु सम्प्रति-पक्षविषयाभिप्रायेण । नन्वादिश्यमानगर्गयशब्दान्तर्गतयशब्दस्यान्यत्वेन कथं यञन्तत्वादीत्यत

† यञञोश्च २. ४. ६४. ‡ अनुष्यानन्तर्ये बिदादिभ्योऽञ्; इव प्रतिकृतौ; जीवकार्थे चाऽपण्ये ४. १. १०४; ५. ३. ९६; ९९.

किमर्थं पुनरिदमुच्यते ?

**प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् ॥ १ ॥**

प्रत्यर्थं शब्दा अभिनिविशन्ते । किमिदं प्रत्यर्थमिति ? अर्थमर्थं प्रति प्रत्यर्थम् । 'प्रत्यर्थं शब्दनिवेशात्', एतस्मात्कारणान्नैकेन शब्देनानेकस्यार्थस्याभिधानं प्राप्नोति । तत्र को दोषः ?

---

प्र०-ख्यानं करिष्यते । किमर्थं पुनरिति । जातिः शब्दार्थः । तस्याश्चैकत्वादनेकशब्दाऽप्रयोगः । आश्रयगतसङ्ख्याप्रतिपादनाय च द्विवचनबहुवचने भविष्यत इति प्रश्नः । 'द्रव्यं पदार्थ' 'उपलक्षणं त्वाकृति'रिति दर्शने सूत्रमारब्धव्यमित्याह—प्रत्यर्थमिति । यावन्ति द्रव्याणि विशिष्टगुणक्रियाविषयतया विवक्षितानि तावता शब्दानामेकैकार्थोपक्षयाणां प्रयोगे प्राप्ते एकशेषारम्भ इत्यर्थः । किमिदमिति । यदि हेतुरहितं दृष्टान्तमाश्रित्य विरूपाऽनेकशब्दप्रयोगदर्शनात्सरूपैकशेष आरभ्यते, तदा सरूपैव शब्द-

---

उ०-आह—आदेशपक्षेपीति । वचनसामर्थ्यादिति । लुग्वचनसामर्थ्यादित्यर्थः । यञ्बुद्धीति । एतेनावयवस्याऽप्रत्ययत्वाल्लुगसम्भव इति परास्तम् । लौकिकस्य गोत्रस्येति । प्रवराध्यायप्रसिद्धस्येत्यर्थः । यस्कादिभ्य इत्यतो गोत्रे इत्यनुवृत्त्या गोत्रबहुत्वे वर्तमानस्य यञन्तस्य लुगिति व्याख्यानात् । इदं च प्रतिकृतिबहुत्वे वर्तते, न तु गोत्रबहुत्वे इत्यदोष इति भावः । लौकिकस्येति—सिद्धान्तस्वरूपकथनम् । एकग्रहणविषयः प्रश्न इत्यभिप्रायेणोत्तरयति भाष्ये—पय इति । भिन्नविभक्तिव्यावृत्त्यर्थमेकग्रहणमिति भावः । ननु सूत्राऽभावे सरूपाणां द्वन्द्वापत्तिरत आह—जातिरिति । द्रव्यमिति । तत्र हि 'प्रत्यर्थं शब्दनिवेश' इतिन्यायात्तत्तद्व्यक्तिप्रतिपादनाय नानाशब्दप्रयोगः प्राप्नोतीत्यर्थः । उपलक्षणं त्विति । 'यो रक्तवासाः स देवदत्त' इत्यादौ रक्तवासस्त्ववदित्यर्थः । अन्यथाऽऽनन्त्यात्तत्र शक्तिग्रहो न स्यात् । केवला व्यक्तिरेव शब्दार्थः । जातेः शक्तिग्रहे प्रकारत्वेपि न तत्र शक्यतावच्छेदकता, नापि शक्यता । शुद्धव्यक्तेरेव च शब्दाद्भानम् । शब्दस्यैव बोधे प्रकारतया न निर्विकल्पकत्वं तस्य । तत्पक्षे चाऽनुगतधर्माऽभानान्न तेनानुगतानेकव्यक्तिबोधसम्भव इति सूत्रमिति भावः । विशिष्टगुणक्रियाविषयतयेति । तदाश्रयत्वेनोपलक्षितानीत्यर्थः । अपरे तु 'किमर्थ'मिति प्रश्नभाष्यस्य तन्त्रेणैव सिद्धिरित्याशयः । तन्त्रकारणं च शब्दानां तुल्यरूपता, यथाऽ'क्षा भज्यन्ता भक्ष्यन्तां दीव्यन्ता'मिति । प्रत्यर्थमिति । 'अक्षा दीव्यन्ताम्' 'अक्षा भज्यन्ताम्' 'अक्षा भज्यन्ता'मित्यादौ वाक्ये प्रत्यर्थंशब्दनिवेशस्यापि दर्शनात्कदाचित्तादृशप्रयोगे सहविवक्षायां प्राप्तस्य निवृत्त्यर्थं सूत्रमावश्यकमित्याशयः । किमिदं प्रत्यर्थमिति । अर्थावर्थौ प्रतीत्यादेरपि तदर्थस्य सम्भवात्प्रश्नः । 'एकवचनान्तेन विग्रह' इत्युत्तरम् । नैकेनेति । नैकेनैवेत्यर्थः । अनेकशब्दत्वमिति । अनेकशब्दत्वमेवेत्यर्थः । एकेनापीति । अपिना वाक्यसङ्ग्रहः । शास्त्रेण सहविवक्षाविषयशास्त्रीयद्वन्द्वस्यैव वारणादिति भावः । किमिदमिति । 'अक्षा' इत्यादावेवाऽप्रत्यर्थं शब्दनिवेशस्यापि दृष्टत्वेन विरूपविषयेपि

## तत्रानेकार्थाभिधानेऽनेकशब्दत्वम् ॥ २ ॥

तत्रानेकार्थाभिधानेऽनेकशब्दत्वं प्राप्नोति । इष्यते चैकेनाप्यनेकस्याभिधानं स्यादिति । तच्चाऽन्तरेण यत्नं न सिध्यति । तस्मादेकशेषः । एवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत् । किं तर्हीति ।

किमिदं 'प्रत्यर्थं शब्दा अभिनिविशन्त' इत्येतं दृष्टान्तमास्थाय सरूपाणामेकशेष आरभ्यते, न पुनरप्रत्यर्थं शब्दा अभिनिविशन्त इत्येतं दृष्टान्तमास्थाय विरूपाणामनेकशेष आरभ्यते ? तत्रैतत्स्यात्—लघीयसी सरूपनिवृत्तिः, गरीयसी विरूपप्रतिपत्तिरिति । तच्च न । लघीयसी विरूपप्रतिपत्तिः । किं कारणम् ? यत्र हि बहूनां सरूपाणामेकः शिष्यते तत्राऽवरतो द्वयोः सरूपयोर्निवृत्ति-

प्र०—प्रयोगदर्शनाद्विरूपानेकशेषः किमिति नारभ्यत इति प्रश्नः । प्रयोगात्तु शब्दशक्तावनुगम्यमानायां न किञ्चिदारब्धव्यम् । द्रव्यपदार्थपक्षेपि । स्वभावादेकः शब्दोऽनेकमर्थं द्व्यादिवन् प्रत्याययिष्यति । अन्यथा एकशेषारम्भेपि कथं प्रत्यायकः स्यात् । नहि स्वतोऽसती शक्तिराचार्येण कर्तुं शक्यते । मन्दबुद्धिव्युत्पादनार्थं च यथास्थितप्रयोगानुसरणे कोऽनुरोधः सरूपैकशेषारम्भे न पुनर्विरूपानेकशेषारम्भे । लाघवायैकशेषारम्भश्चेत्तन्न । लघीयसी विरूपप्रतिपत्तिः । तत्र हि प्रवृत्तिविषया बुद्धिरेकरूपैव भवति ।

उ०—लाघवायैकशब्दप्रयोग एव प्राप्तेऽनेकशब्दप्रयोगाय विरूपाणामनेकशेष एव कुतो नारभ्यत इत्यर्थं इत्याहुः । हेतुरहितमिति । 'प्रत्यर्थं'मित्यादिस्तु न हेतुः, अपक्षवृत्तित्वादिति भावः । अत एव भाष्ये 'दृष्टान्तमास्थाये'त्युक्तम् । विरूपानेकशेष इति । नन्वनेकशेष इत्यस्याऽनेकस्य शेष इत्यर्थो वा, एकशेषो नेत्यर्थो वा, एकशेषभिन्नो भवतीत्यर्थो वा । नाद्यः । त्रिषु प्रतिपाद्येषु द्वयोः प्रयोगापत्तेः । शेषशब्दस्वारस्येनैकनिवृत्तेरावश्यकत्वात् । न द्वितीयः । एकशेषाऽप्राप्त्याऽसम्भवादिति चेन्न, तृतीयेऽदोषात् । तत्रापि भिन्नशब्देन द्वन्द्व एव, न तु वाक्यं, 'वृद्धो यूने'त्यादौ प्रसिद्धैकशेषस्य 'पुष्पवन्ता'वितिन्यायेन सहविवक्षाविषयस्यैव सत्त्वेन तद्भिन्नस्य सहविवक्षाविषयस्य शास्त्रीयस्यैव ग्रहीतुमुचितत्वात् । तन्नेदं वचनं न घटपटावित्यादिविषयम्, अप्रत्यर्थशब्दनिवेशे शब्दानां तुल्यरूपताया बीजत्वेन तदभावेन तस्याऽप्राप्तेः, किन्तु जननीपरिच्छेदकर्त्र्यादिवाचकमात्रादिशब्दविषयं, तयोरौजसादौ वैरूप्यात् । अत्रापि विभक्तावित्यावश्यकम् । अन्यथा हरितवर्णविशिष्टस्त्री-हरिणस्त्रीवाचकयोर्हरिणीशब्दयोस्तद्धिते वैरूप्येणानेकशेषापत्तेः । विभक्तिसामानाधिकरण्येन च वैरूप्यान्वयोऽन्यथाऽसम्भवात् । तन्नेदं न विधायकं, 'चार्थे द्वन्द्व' इत्यनेनैव सिद्धेः, किन्तु नियमार्थं, तेन लोकसिद्धसहविवक्षाविषयतन्त्रस्यावृत्तिस्तथा विरूपाणामेव द्वन्द्व इति च नियमः । अन्यथैकशेषारम्भेणाऽस्य समफलक-

१—कीलहार्नमते वार्तिकमिदम् ।

वक्तव्या स्यात्। एवमप्येतस्मिन् सति किञ्चिदाचार्यः सुकरतरकं मन्यते। सुकरतरकं चैकशेषारम्भं मन्यते।

किं पुनरयमेकविभक्तावेकशेषो भवति ? एवं भवितुमर्हति।

**एकविभक्ताविति चेन्नाऽभावाद्विभक्तेः ॥ ३ ॥**

---

प्र०—एकशेषे तु प्रवृत्तिनिवृत्तिविषयेति प्रतिपत्तिगौरवप्रसङ्गः। अवरतो द्वयोरिति। यदा त्रयाणामेकः शिष्यते तदा द्वयोर्निवृत्तिर्वक्तव्या व्याख्येयेत्यर्थः। शेषशब्दस्य निवृत्तिविशिष्टावस्थानवाचित्वात्। यदा तु द्वयोरेकशेषस्तदैकस्य निवृत्तिः। चतुष्प्रभृतीनां त्वेकशेषे त्रिप्रभृतीनां निवृत्तिरिति प्रवृत्तिनिवृत्तिलक्षणविषयभेदाद्बुद्धिगौरवापत्तिरित्यर्थः। सुकरतरकञ्चेति। एवं हि प्रकरणमभिन्नरूपं भवति, 'वृद्धो यूने'त्यादिभिः सूत्रैरेकशेषस्य विधानात्। अनेकशेषारम्भे त्विह पृथक्प्रस्थानतया गौरवं स्यादित्यर्थः। किं पुनरिति। किमयमेकशब्दः सङ्ख्यावाची, तुल्यतावाची वेति प्रश्नः। एवं भवितुमिति। सङ्ख्यावाचित्वेनैकशब्दस्य प्रसिद्धतरत्वात्। नाभावादिति। 'ङ्याप्प्रातिपदिका'दित्यत्रैकवचनान्तानामेव द्वन्द्वः क्रियते। वतिपदार्थानां सर्वत्र सङ्ख्याभेदावगमे प्रमाणाऽभावात्। गुणे च संख्या विवक्ष्यते, यथा 'पशुना यजेत'ति। एवं चैकैकस्मात् प्रातिपदिकात् स्वादिभिरुत्पत्तव्यं, न तु समुदायात्। यत्र तु कचिद्गुणेऽप संख्या न विवक्ष्यते यथा 'कतुरीप्सिततम'मिति द्वयोर्बहूनां वेप्सिततमस्य कर्मसञ्ज्ञा

---

उ०—स्वाऽभावापत्तिः। तन्न्यासे हि स 'येन नाप्राप्ति'न्यायेन द्वन्द्वबाधक इति, सरूपाणां द्वन्द्वाऽभावस्येष्टत्वात्। अनेकशेषपदेन वाऽऽवृत्त्या विरूपाणां तन्त्रन्यायसिद्धलौकिकशेषाऽभावोपि बोध्यते। न चास्यार्थस्यैकशेषारम्भे कथं सिद्धिः ? आवृत्त्या सरूपाणामेवैकशेष इति नियमस्याप्यङ्गीकारादिति बोध्यम्। ननु विरूपाणां विभिन्नार्थानां नैकस्यानेकार्थाभिधानशक्तिमत्त्वमित्येकशब्दाऽप्रयोगान्नाऽनेकशेष आरम्भणीयोऽत आह—प्रयोगात्त्विति। 'व्युत्पादनार्थं वे'ति पाठे वाशब्दश्चार्थे। क्वचिच्चेत्येव पाठः। प्रयोगानुसरणे इति। प्रयोगाणां शास्त्रेणानुसरणे अन्वाख्याने इत्यर्थः। लाघवायेति। सुशब्दोपदेशेनाऽपशब्दनिवृत्तिवदेकशेषारम्भेणानेकशेषनिवृत्तेः सिद्धत्वादिति भावः। यदा तु द्वयोरिति। सरूपौ च सरूपाश्चेत्येकशेषेण निर्देशादिति भावः। एवं चावरतो द्वयोरिति भाष्यं यत्र बहूनामेकशेषस्तद्विषयमेवेति तात्पर्यम्। नन्वेकशेषारम्भस्य गुरुत्वेन सुकरत्वमेव नास्ति, कुतः सुकरतरकत्वमित्यत आह—एवं हीति। पृथक्प्रस्थानतया—पृथक्प्रकरणतया। 'वृद्धो यूने' त्याद्यर्थं चैकशेषोऽवश्यं वाच्य इति भावः। सङ्ख्येति। तेनैकदिगितिवत्समानवाचित्वे पृथक् सर्वेभ्य उत्पन्नाया विभक्तेर्निमित्तत्वलाभाद्वार्तिकोत्थानं भज्येत। एवं चैकशेषविषयसरूपसमुदायादेकत्वसङ्ख्याविशिष्टविभक्तौ परत एकशेष इत्यर्थः। किमिति प्रश्न इति भावः। प्रष्टुराशयं विज्ञातुमाहेतरो भाष्ये—एवमित्यादि। प्रष्टा स्वाशयमाह—एकेत्यादि। सङ्ख्याभेदावगमे। द्वित्वाद्यवगमे

एकविभक्ताविति चेतन्न । किं कारणम् ? 'अभावाद्विभक्तेः' । नहि समुदायात्परा विभक्तिरस्ति । किं कारणम् ? अप्रातिपदिकत्वात् । ननु चा'र्थवत् प्रातिपदिक'मिति† प्रातिपदिकसञ्ज्ञा भविष्यति । नियमान्न प्राप्नोति— 'अर्थवत्समुदायानां समासग्रहणं नियमार्थ'मिति‡ ।

यदि पुनः पृथक्सर्वेषां विभक्तिपराणामेकशेष उच्येत ?

**पृथक्सर्वेषामिति चेदेकशेषे पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वात् ॥४॥**

पृथक्सर्वेषामिति चेदेकशेषे पृथग्विभक्त्युपब्धिः प्राप्नोति । किमुच्यते 'एकशेषे पृथग्विभक्त्युपलब्धि'रिति, यावता समयः कृतो 'न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्यय' इति । तदाश्रयत्वात् प्राप्नोति । यत्र हि प्रकृतिनिमित्ता प्रत्ययनिवृत्तिस्तत्राऽप्रत्ययिकायाः प्रकृतेः प्रयोगो भवति—अग्नि-

प्र०–प्रवर्तते, तत्र नान्तरीयकं सङ्ख्याया उपादानमिति लक्ष्यसिद्ध्यर्थमाश्रीयते । ननु चेति । अवयवार्थातिरेकेण परस्परापेक्षायां सत्यां समुदायार्थोपजानात् सरूपसमुदायाभिनिवेशिन्येका प्रातिपदिकसञ्ज्ञाऽस्ति तया सरूपसमुदाय एकं प्रातिपदिकमिति स्वाद्युत्पत्तिरविरुद्धा । अर्थवत्समुदायानामिति, अविशेषेण नियमो न तु सुबन्तानामेवेति मन्यते । इदानीं तुल्यपर्यायमेकशब्दमाश्रित्याह—यदि पुनरिति । पृथक् सर्वेषामिति । 'वृक्ष स् वृक्ष-स् वृक्ष'सिति स्थिते विभक्तौ परतो यानि सरूपाणि

उ०–इत्यर्थः । एवमपि प्रातिपदिकादित्येकत्वस्य विवक्षायां न मानमत आह—गुणे चेति । संस्कार्यत्वादिति भावः । यथा कर्तुरिति । कर्तुरित्यत्रेति भावः । लक्ष्यसिद्ध्यर्थमिति । एवं च 'पशुने'त्यादिदृष्टान्तदानमभ्युच्चयः, विधेयगता सङ्ख्या विवक्षिता नानुवाद्यगतेत्येव मीमांसकमर्यादेति भावः । वस्तुतस्तु समुदायस्य प्रातिपदिकत्वाभावादिति भाष्ये उक्तं प्रातिपदिकत्वपर्याप्त्यधिकरणात्प्रत्यय इति हि सूत्रार्थः । नहि प्रातिपदिकसमुदाये प्रातिपदिकत्वम्, यथा जनपदसमुदाये न जनपदत्वमिति कैयटोक्तार्थोपयोगश्चिन्त्यः । परस्परापेक्षायां । 'कार्यविशेष' इति शेषः । समुदायार्थः—समूहरूपः । समुदाय इति । समुदायोपीत्यर्थः । ननु सुबन्तानामिति । भेदसंसर्गद्वारकार्थवतामुपलक्षणमिदम् । तुल्येति । यथैकदिगित्यादौ प्रसिद्धतरार्थानुपपत्तौ प्रसिद्धार्थपरिग्रहो न्याय्य इति भावः । तुल्यत्वं भेदाधिष्ठानं, तेन पृथक्, सर्वेभ्यः शब्दतोर्थतश्च तुल्यायां विभक्तौ परत एकशेष इति तात्पर्यम् । अर्थतश्चेत्युक्तेः प्रथमाद्वितीयाद्विवचनान्तानां नैकशेषः । विनिगमनाविरहादर्थत-

† अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १. २. ४५. ‡ १. २. ४५. वा० ६.

चित्सोमसुदिति यथा× । यत्र च प्रत्ययनिमित्ता प्रकृतिनिवृत्तिस्तत्राऽप्रकृतिकस्य प्रत्ययस्य प्रयोगो भवति—अधुना इयानिति यथा+ । अस्तु । संयोगान्तलोपेन सिद्धम्† । कुतो नु खल्वेतत्—परयोर्वृक्षशब्दयोर्निवृत्तिर्भविष्यति, न पुनः पूर्वयोरिति ? तत्रैतत्स्यात्पूर्वनिवृत्तावपि सत्यां संयोगादिलोपेन सिद्धमिति‡ । न सिध्यति । तत्राऽवरतो द्वयोस्सकारयोः श्रवणं प्रसज्येत । यत्र च संयोगान्तलोपो नास्ति, तत्र च न सिध्यति । क्व च संयोगान्तलोपो नास्ति ? द्विवचनबहुवचनयोः ।

---

प्र०–तेषामेकशेष उच्यमाने विभक्तिनिमित्तत्वात् प्रकृतिनिवृत्तेः केवलानां विभक्तीनां प्रयोगप्रसङ्ग इत्यर्थः । संयोगान्तलोपेनेति । 'वृक्ष—स् स् स्' इति स्थिते संयोगान्तलोपो भविष्यति । ननु संयोगान्तस्य पदस्य लोप उच्यते, तत्र पूर्वपदं सकारान्तं, द्वौ सकारौ, द्वे पदे इति पदत्रयं सम्पद्यत इति कुतो लोपः । संयोगान्तलोपस्य चापवादः संयोगादिलोपस्तेन भाव्यम् । 'पूर्वत्रासिद्ध'मिति वचनाद्धल्ङ्याब्दिलोपेनैव च भाव्यम् । अत्र व्याचक्षते—संयोगस्य योऽन्तः सकारस्तस्य लोपः, स च 'हल्ङ्याब्भ्य' इत्यनेनेति । संयोगादिलोपेनेति । अत्राप्येकस्य पदस्य संयोगस्यादिर्नास्तीति हल्ङ्यादिलोपमेव संयोगादिलोपं प्रतिपन्नाः । संयोगश्चासौ प्रत्येकं हलां संयोगसञ्ज्ञेति पक्षाश्रये, आदिश्च वृक्षशब्दापेक्षया, तस्य लोपो हल्ङ्याब्भ्य इत्यनेनेत्यर्थः । अवरत इति । 'स् वृक्ष स्' इति प्राप्नोति । दुष्टत्वप्रतिपादनपरं चैतत्, न पुनः कदाचित् त्रयाणां श्रवणप्रतिपादनार्थम् । द्विवचनबहुवचनयोरिति । ये स्वभावत एव द्विवचनबहुवचनान्ताः

---

उ०–इत्येतस्य लाभस्तदाह—वृक्षसित्यादि । केवलानामिति । 'निवृत्तप्रकृतीना'मित्यादिः । भाष्ये—तदाश्रयत्वादिति । बहुव्रीहेस्त्वः । विभक्त्याश्रयत्वात्तत्प्रकृत्येकशेषस्येत्यर्थः । न केवलेत्यस्य चानुत्पन्नप्रत्यया प्रकृतिः, प्रकृतेरनुत्पन्नश्च प्रत्ययो न प्रयोक्तव्य इति तात्पर्यमिति भावः । अधुनेति । यदेदमोऽधुना प्रत्यय इशो लोपश्च तदेदम्, 'निमित्तापाय'परिभाषा नास्त्येवेत्यन्यत्र प्रपञ्चितम् । संयोगान्तेति । एवं च निवर्तमानवृक्षशब्दसम्बन्धिविभक्तिश्रवणप्रसङ्गरूपो दोषो वारित इति भावः । नन्विति । 'संयोगान्तस्य पदस्ये'ति पाठः । 'संयोगान्तस्य पदान्तस्ये'ति तु व्याख्यानमसङ्गतमेव, ध्वसोरितिसूत्रे 'द्विशकारको निर्देश' इति भाष्यविरोधात् । संयोगसञ्ज्ञासूत्रेऽन्तपदसामर्थ्येन द्विवचनान्तेन समास इति ध्वनतया भाष्यकृता प्रयोजनान्तराऽभावस्य ध्वनितत्वेन तादृशेऽर्थे मानाऽभावाच्च । दोषान्तरमप्याह—संयोगान्तलोपस्य चेति । हल्ङ्याब्भ्य इति च । न च तत्र सुतिसीतिप्रत्ययैः

---

× हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ६. १. ६८. + अधुना; इदम इश्; यस्येति च; किमिदम्भ्यां वो घः; इदं किमोरीश्की; यस्येति च ५. ३. १७; ३; ६. ४. १४८; ५. २. ४०; ६. ३. ९०; ६. ४. १४८. † संयोगान्तस्य लोपः ८. २. २३. ‡ स्कोः संयोगाद्योरन्ते च ८. २. २९.

यदि पुनः समास एकशेष उच्येत । किं कृतं भवति ? कश्चिद्वचनलोपः परिहृतो भवति ।

तत्तर्हि समासग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्' [ १. २. ६३ ] इति ।

**समास इति चेत्स्वरसमासान्तेषु दोषः ॥ ५ ॥**

समास इति चेत्स्वरसमासान्तेषु दोषो भवति । स्वर—अश्वश्चाश्वश्च अश्वौ । समासान्तोदात्तत्वे† कृत एकशेषः प्राप्नोति । इदमिह सम्प्रधार्यम्—

प्र०–प्रयुज्यन्ते गोदौ दाराः सिकता इत्यादय, तत्र द्विवचनबहुवचनेषु परत एकशेषे सति द्विवचनबहुवचनानां श्रवणप्रसङ्गः । कृतैकशेषाणां वा पुनरेकशेषे क्रियमाणे द्विवचनबहुवचनश्रवणप्रसङ्गः । कश्चिद्वचनलोप इति । यस्त्वया कश्चिद्वचनलोप उक्तः स परिहृतः । अथवा सुपां परिहृतो न तिङामित्यर्थः । स्वरसमासान्तेष्विति । समासे कृते समासान्तोदात्तत्वे च यदि पूर्वशेषस्तदा सर्वानुदात्तत्वं प्राप्नोति । अथ परशेषस्तदाऽश्वशब्दस्याऽन्तोदात्तत्वप्रसङ्गः । परत्वादिति । ननु नाऽप्राप्ते समासान्तोदात्तत्वे आरभ्यमाण एकशेषस्तस्य बाधकः । नैतदस्ति । निरवकाशो हि बाधको भवति । कृते च समासान्तोदात्तत्वे एकशेषस्य प्रवर्त्तनाद्विरोधाऽभावाच्च नास्त्युत्सर्गापवादभावः ।

उ०–प्रकृतस्याक्षेपात्तस्याप्यप्राप्तिः, तदाक्षेपे मानाभावात्, फलाभावाच्चेत्यभिप्रायः । केचित्त्वाष्टमिकपदद्विर्वचने भाष्यकृता वक्ष्यमाणया रीत्या पचसि पचसीत्यादेः समुदायस्य पदत्ववदिहापि वृक्षस्सूस् इति समुदायस्य पदत्वं, वृक्षशब्दे तत्त्वप्रत्यभिज्ञानादन्त्यसकारे सुत्वाच्च ईदृशे विषये संयोगादिलोपसंयोगान्तलोपयोरविशेषेण भाष्ये संयोगान्तलोप उक्तः । हल्ङ्यादिलोपस्तु हलन्तप्रकृतेः पर इत्यर्थान्नेत्याशयः । 'प्रत्येकं संयोगसञ्ज्ञे'ति पक्षे झलपरसंयोगादित्वेन संयोगादिलोपो भाष्योक्तः साधुरेव । तत्र सूत्रे 'सङ्गी'त्यनाश्रित्य चेदम् । प्रकारान्तरेणास्य दूषयिष्यमाणत्वाच्च तदनाश्रयणं, तस्य प्रत्याख्यानाच्चेत्याहुः । नन्वेकशेषं विना कथं द्विवचनादेः सम्भवोऽत आह—स्वभावत इति । कृतैकशेषाणां वेति । इदं च हलन्ताभिप्रायं, तत्र हि हल्ङ्यादिलोपे प्रत्ययलक्षणेन विभक्तिपरतयैकशेषे द्विवचनादौ पुनरेकशेष इत्यर्थः । भाष्ये—यदि पुनः समासेति । 'द्वन्द्वे' इत्यनुवर्त्य तत्र कृते इति व्याख्यानात्तस्य निमित्ततया नाऽसौ द्वन्द्वबाधकः । द्वन्द्वे कृते एकविभक्तौ परतः सरूपाणामेकशेष इत्यर्थः । अत्र पक्षे सङ्ख्यावाच्येवैकशब्दः । समासान्तर्गतसर्ववचनलोपात्कश्चिदित्ययुक्तमत आह—यस्त्वयेति । यस्त्वया वचनलोपाऽसिद्धिरूपः कश्चिद्दोष उक्तः स परिहृत इत्यर्थ इति

† समासस्य ६. १. २२३.

समासान्तोदात्तत्वं क्रियतामेकशेष—इति, किमत्र कर्तव्यम् ? परत्वात्समासान्तोदात्तत्वम्। समासान्तोदात्तत्वे च दोषो भवति। स्वर।

समासान्त—ऋक् च ऋक् च ऋचौ। समासान्ते‡ कृतेऽसारूप्यादेकशेषो न प्राप्नोति। इदमिह सम्प्रधार्यम्—समासान्तः क्रियतामेकशेष इति किमत्र कर्तव्यम् ? परत्वात्समासान्तः। समासान्ते च दोषो भवति।

**अङ्गाश्रये चैकशेषवचनम् ॥ ६ ॥**

अङ्गाश्रये च कार्य एकशेषो वक्तव्यः। स्वसा च स्वसारौ च स्वसारः। अङ्गाश्रये× कृतेऽसारूप्यादेकशेषो न प्राप्नोति। इदमिह सम्प्रधार्यमङ्गाश्रयं क्रियतामेकशेष इति किमत्र कर्तव्यम् ? परत्वादङ्गाश्रयम्।

---

प्र०- ऋक्चेति। 'ऋच् ऋच् अ' इति स्थिते अन्तर्वर्तिन्या विभक्तेर्लुका लुप्तत्वात्प्रत्ययलक्षणप्रतिषेधाच्च नास्त्येकविभक्तिपरतेति एकशेषनिमित्तं समुदायाद्विभक्तिरुत्पाद्या। तस्यां च नास्ति सारूप्यम्। एको हि ऋक्शब्दः, अपर ऋचशब्दः। 'समासान्तः समासस्यैवावयवो नोत्तरपदस्ये'ति चेत्तर्हि तनैव व्यवधानात् समासविभक्तेरेकशेषो न स्यात्। समासार्थस्योत्तरपदस्याऽन्ताः समासान्ता इत्यपि भाष्यकारस्य दर्शनमिति ऋगृचशब्दयोर्वैरूप्यमाश्रित्य भाष्यकृता दोष उद्भावितः। अङ्गाश्रये चेति। 'च'शब्दादनङ्गाश्रयेऽपि। यथा नौश्च नावौ चेति। स्वसा च स्वसारौ चेति। किमर्थमेकमेकवचनान्तं, द्वितीयं तु द्विवचनान्तमिति चेत्, सर्वथा वैरूप्यप्रतिपादनाय। तथा हि—

---

उ०—भावः। अत्राध्याहारगौरवमाशङ्क्याह—अथवेति। समासान्तोदात्तत्वे च कृते इति। विभक्तिसापेक्षैकशेषापेक्षयान्तरङ्गत्वादिति भावः। प्रसङ्ग इति। दृश्यते स्वाद्युदात्तत्वमिति भावः, अश्वशब्दस्य क्वनन्तत्वात। 'परत्वा'दित्यस्योत्कृष्टत्वात्पूर्वंकालप्राप्तत्वादित्यर्थः। एकशेषस्तु समासाद्विभक्त्युत्पत्त्युत्तरमिति भावः। एवमग्रेऽपि। एवं चापवादत्वाशङ्का चिन्त्यैव। ब्राह्मणेभ्यो दधीत्यादावविरोधेऽपि दधिदानतः पूर्वं परत्र वा सावकाशत्वेऽपि बाधकत्वदर्शनात् समाधिरपि चिन्त्यः। भाष्ये—असारूप्यादिति। समासान्तप्राग्भागस्य विभक्तिपरत्वाऽभावः, तद्विशिष्टस्य तु न सरूपत्वम्। एकशेषो न स्यादिति। किं चैकशेषे सत्यपि ऋचावित्यस्याऽसिद्धिरेव, 'ऋचे' इत्येवमापत्तेः। ऋगृचशब्दयोरेकशेषे तु पक्षे तत्सिद्धिरस्तीति बोध्यम्। उत्तरपदस्यान्ता इति। अयं पक्षस्तु निर्मूल एवेति पञ्चमषष्ठयोर्वक्ष्यामः। 'गोस्त्रियो'रित्यत्रोक्तं च। भाष्यकारस्य मतमिति। एवं विधं भाष्यं न दृश्यते इति चिन्त्यमिदम्, न चेदं भाष्यमेव तथा, अन्यथैकस्यार्थवत्त्वेनापरस्यानर्थकत्वेन कथमेकशेष इति वाच्यम्, द्वन्द्वावयवानामर्थवतामेवैकशेष इत्यर्थे मानाऽभावात्। विशिष्टरूपोपादानविषयायां अर्थवत्परि-

---

‡ ऋक्पूरब्धूः पथामानक्षे ५.४.७४. × ऋतो ङिसर्वनाम०; अप्तृन्तृ च्० ७.३.११०;६.४.११.

## तिङ्समासे तिङ्समासवचनम् ॥ ७ ॥

तिङ्समासे तिङ्समासो वक्तव्यः ।

एकं तिङ्ग्रहणमनर्थकम् । 'समासे तिङ्समास' इत्येव सिद्धम्[1] । नानर्थकम् । तिङ्समासे प्रकृते+ तिङ्समासो वक्तव्यः ।

## तिङ्विधिप्रतिषेधश्च ॥ ८ ॥

तिङ् च कश्चिद्विधेयः, कश्चित्प्रतिषेध्यः । पचति च पचति च पचतः । तश्शब्दो विधेयः, तिशब्दः प्रतिषेध्यः ।

यदि पुनरसमास एकशेष उच्येत ?

## असमासे वचनलोपः ॥ ९ ॥

प्र०–यद्यन्तर्वर्तिन्यां विभक्तौ लुप्तायामपि वचनसामर्थ्यात् प्रत्ययलक्षणमाश्रीयते तदात्र वैरूप्यम् । अथापि समासविभक्त्यैव विभक्तिपरत्वं तथापि वैरूप्यम् । तिङ्समास इति । समास एकशेषे विधीयमाने तिङ्समासेऽप्येकशेषो वक्तव्यः । स च तिङ्समासो वक्तव्य इत्यर्थः । एकमिति । विनापि तेनार्थस्याऽवगमात् । प्रकृत इति । आख्यातमाख्यातेनेत्यत्र 'द्वन्द्वश्च सरूपाणा'मिति वक्तव्यम् । यदि पुनरिति । दोषान्तराभिधानाय पुनरुपन्यासः । तदर्थमिति । पूर्वं दोषमात्रमुपन्यस्तं—केवलाया विभक्तेः श्रवणं

उ०–भाषाया इहाऽप्राप्तेः । सर्वथेति । समासविभक्तावन्तर्वर्तिविभक्तौ चेत्यर्थः । तदेवाह—यद्यन्तरिति । तच्च विग्रहप्रदर्शनेन स्पष्टमेवोक्तम् । वचनसामर्थ्यादिति । लुका लुप्तत्वादिति भावः । अथापीति । द्वन्द्वे सुब्लुक्यौत्तरपदिकानङि ततो विभक्तावृतो ङीति । गुणेऽप्तृन्निति दीर्घे च परत्वात्कृत इति भावः । एकवचनान्तेन विग्रहे तु समासविभक्तावेव वैरूप्यमन्तर्वर्तिन्यां तु नेति तात्पर्यम् । समास एकशेषे इति । प्रत्यर्थंशब्दनिवेशे एकपचा एका क्रियोच्यते, एकेन च तिपैकः कर्तेत्यनेकक्रियाकर्तृविवक्षायामनेकतिङन्तप्रसङ्गे एकशेष इष्यते, स च तेषां समासाऽभावान्न प्राप्नोतीति सरूपतिङन्तानामपि द्वन्द्वो वाच्य इत्यर्थः । भाष्ययोस्तिङोर्लोपेऽपि समासस्याऽधातुत्वात्ततस्तिङोऽप्राप्तेराहभाष्ये—तिङ्विधिरिति । सुब्ग्रहणात्तिङो लुगप्राप्तेराह—प्रतिषेधश्चेति । प्रतिषेधोऽत्र लोपः । उपलक्षणमिदं, पादौ पादा इत्यादावेकवचनावस्यापि प्रसङ्ग इत्यपि बोध्यम् । पुनरुपन्यास इति । द्वितीयपक्षस्येति शेषः । भाष्ये—उत्पततैव—तत्पक्षदूषणमुपक्रमतैव । 'पृथग् विभक्त्युपलब्धिस्तदाश्रयत्वा'दित्यनेन चोदिताः स्म इत्यर्थः । दूषणान्तरं वक्तुमुक्तानुवाद इत्याह—द्विवचनेत्यादि । वक्ष्यतीति । 'वार्तिक'कृदिति शेषः । तदर्थं—तदवतारणार्थम् । पुनश्चोद्यत इति । 'अस०

[1]–इदं क्वचिन्न । + आख्यातमाख्यातेन क्रियासातत्ये २. १. ७२. गणसूत्रम् ।

यद्यसमासे वचनलोपो वक्तव्यः। ननु चोत्पततैव वचनलोपं चोदिताः स्मः। द्विवचनबहुवचनविधिं द्वन्द्वप्रतिषेधं च वक्ष्यति, तदर्थं पुनश्चोद्यते।

### द्विवचनबहुवचनविधिः ॥ १० ॥

द्विवचनबहुवचनानि विधेयानि। वृक्षश्च वृक्षश्च वृक्षौ। वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति।

### द्वन्द्वप्रतिषेधश्च ॥ ११ ॥

द्वन्द्वस्य च प्रतिषेधो वक्तव्यः। वृक्षश्च वृक्षश्च वृक्षौ, वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति। 'चार्थे द्वन्द्वः' [ २. २. २९ ] इति द्वन्द्वः प्राप्नोति। नैष दोषः। अनवकाश एकशेषो द्वन्द्वं बाधिष्यते। सावकाश एकशेषः। कोऽवकाशः? तिङन्तान्यवकाशः।

यदि पुनः पृथक्सर्वेषां विभक्त्यन्तानामेकशेष उच्येत? किं कृतं भवति? कश्चिद्वचनलोपः परिहृतो भवति।

### विभक्त्यन्तानामेकशेषे।

प्र०—प्राप्नोतीति। इदानीं तु तत्प्रतिविधानाय वचने क्रियमाणे गौरवमापद्यत इत्येतत्प्रतिपाद्यते। तिङन्तान्यवकाश इति। कारकभेदात् क्रियाभेदादनेकतिङन्तप्रसङ्गे एकशेषो विधेयः। ततश्च परत्वात्सरूपाणामेकशेषं बाधित्वा द्वन्द्वः प्राप्नोति। 'सकृद्गतौ विप्रतिषेध' इति पुनरेकशेषो न प्राप्नोति। सत्यपि वा पुनःप्रसङ्गविज्ञाने स्वरसमासान्तेषु दोष एव। यदि पुनरिति। सप्तमीनिर्देशे प्रकृतिमात्रनिवृत्तौ प्रत्ययश्रवणप्रसङ्गः। षष्ठीनिर्देशे तु विभक्त्यन्तानां निवृत्त्या भाव्यमिति नास्ति केवलविभक्तिश्रवणप्रसङ्गः'। कश्चिदिति। शिष्यमाणस्य त्वेकवचनश्रवणप्रसङ्ग एव। एकविभक्त्य-

उ०—मासे वचनलोपः' इत्येतदित्यर्थः। वक्ष्यतीति यदुक्तं, तदाह—द्विवचनेति। केवलं सोः श्रवणमेव न दोषोऽपि तु द्विवचनाद्यसिद्धिरपि। वचनाद्विभक्तिलोपे कृतेपि प्रत्ययलक्षणेनाऽप्रत्यय इति निषेधात्प्रातिपदिकत्वाऽभावेन द्विवचनाद्यनापत्तेस्तदर्थं वचनारम्भे गौरवं च। 'न ङिसंबुद्ध्यो'रिति ज्ञापकं च नलोपविषयमेवेत्यर्थः। भाष्ये ज्ञापकस्य सामान्यापेक्षत्वेपि दोषमाह—द्वन्द्वप्रतिषेधश्चेति। द्वन्द्वस्य वैकल्पिकत्वात्तदभावेऽस्य सार्थक्यं मन्यते। अनवकाश इति। सहविवक्षायां व्यपेक्षाऽभावे ह्येकशेषस्तत्र च द्वन्द्वस्य नित्यता। विशेषणविशेष्यभावानापन्नस्यानेकस्य युगपदेकपदार्थसम्बन्धबोधनेच्छा सहविवक्षेति भावः। कारकभेदादिति। नहि तत्र द्वन्द्वप्राप्तिः सुबन्तानां तद्विधानात्, इदमवकाशमात्रं न त्वत्रैकशेषेणेष्टसिद्धिः। भाष्ये—यदि पुनरिति। चतुर्थः पक्षः। षष्ठ्यर्थे सप्तमीति भावः। तदाह—षष्ठीनिर्देशे त्विति। षष्ठ्यर्थकत्वेन निर्देशे त्वित्यर्थः। भाष्ये—एकविभक्त्यन्तानामिति

विभक्त्यन्तानामेकशेषे विभक्त्यन्तानामेव तु निवृत्तिर्भवति ।

**एकविभक्त्यन्तानामिति तु पृथग्विभक्तिप्रतिषेधार्थम् ॥ १२ ॥**

'एकविभक्त्यन्ताना'मिति तु वक्तव्यम् । किं प्रयोजनम् ? पृथग्विभक्तिप्रतिषेधार्थम्' । पृथग्विभक्त्यन्तानां मा भूत् । ब्राह्मणाभ्यां च कृतम् ब्राह्मणाभ्यां च देहि ।

**न वाऽर्थविप्रतिषेधाद्युगपद्वचनाऽभावः ॥ १३ ॥**

न वैष दोषः । किं कारणम् ? 'अर्थविप्रतिषेधात्' । विप्रतिषिद्धावेतावर्थौ कर्ता सम्प्रदानमित्यशक्यौ युगपन्निर्देष्टुम् । तयोर्विप्रतिषिद्धत्वाद्युगपद्वचनं न भविष्यति ।

**अनेकार्थाश्रयश्च पुनरेकशेषः ॥ १४ ॥**

अनेकमर्थं सम्प्रत्याययिष्यामीत्येकशेष आरभ्यते ।

**तस्मान्नैकशब्दत्वम् ॥ १५ ॥**

तस्मादेकशब्दत्वं न भविष्यति । अयं तर्हि दोषः 'कश्चिद्वचनलोपो द्विवचनबहुवचनविधिर्द्वन्द्वप्रतिषेधश्चे'ति ।

---

प्र०–न्तानामिति । सप्तमीनिर्देशमपास्य षष्ठीनिर्देशः कर्तव्य इत्यर्थः । किं प्रयोजनमिति । एकग्रहणस्य प्रयोजनप्रश्नः । षष्ठीनिर्देशस्य तु प्रयोजनमुक्तमेव—'कश्चिद्वचनलोपः परिहृत' इति । न वेति । 'एकविभक्त्यन्ताना'मिति न वक्तव्यमेव, प्रयोजनाऽभावात् । ततश्चाऽनुत्पन्नायामेव विभक्तौ प्रातिपदिकानामेकशेषे कृते शिष्यमाणस्य निवर्तमानार्थाभिधानाद् द्विवचनबहुवचनसिद्धिः । विप्रतिषिद्धावेताविति । चतुर्थ्यन्तस्य शेषे 'ब्राह्मणेभ्य' इत्युक्ते च कर्तृत्वं न प्रतीयते । तृतीयान्तस्य शेषे 'ब्राह्मणै'रित्युक्ते सम्प्रदानत्वं न गम्यते । यश्च शब्दोऽनेकार्थप्रत्यायनाय प्रभवति स शिष्यते नान्यः । अयं तर्हीति ।

---

उ०–त्विति । एकग्रहणं कर्तव्यं भवतीत्यर्थः । प्रयोजनप्रश्ने तस्यैवोत्तरदानात् । न वेति, प्रत्याख्यानमप्येकग्रहणस्यैव । एकविभक्त्यन्तानामिति न वक्तव्यमेवेति । नवेति प्रतीकेऽस्यार्थस्योपयोगश्चिन्त्यः । 'यदि पुनः प्रातिपदिकाना'मिति प्रतीके त्विदं वक्तुं युक्तम् । अयं तर्हि दोष इत्यग्रिमभाष्यस्वारस्येन तावत्पर्यन्तं विभक्त्यन्तानामेकशेष इति पक्षानुवृत्तेरेव लाभेन तथा व्याख्यानस्यानौचित्याच्च । विप्रतिषिद्धावेताविति । कर्तृसम्प्रदानयोरर्थयोर्विरोधेन युगपदेकरूपेणैकत्रान्वयाऽभावेन सहविवक्षाऽभावादेकशेषाऽप्राप्तेरेकत्वेन विभक्तिर्न विशेष्येत्यर्थः । कैयटोक्तं 'ब्राह्मणेभ्य इत्युक्ते' इत्यादि तु वचनलोपवचनविधिकरणेप्येकग्रहणवैयर्थ्योपपादकमिति बोध्यम् । भाष्ये—अनेकमर्थमित्यस्य 'युगपदेकरूपेणे'त्यादिः । अयं तर्हीति ।

यदि पुनः प्रातिपदिकानामेकशेष उच्येत ? किं कृतं भवति ? वचनलोपः परिहृतो भवति ।

**प्रातिपदिकानामेकशेष मातृमात्रोः प्रतिषेधः सरूपत्वात् ॥१६॥**

प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः । माता च जनयित्री, मातरौ च धान्यस्य मातृमातरः । किं कारणम् ? 'सरूपत्वात्' । सरूपाणि ह्येतानि प्रातिपदिकानि ।

किमुच्यते 'प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्य' इति, न पुनर्यस्यापि विभक्त्यन्तानामेकशेषस्तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यः स्यात् । तस्यापि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि, मातृभ्यां च मातृभ्यां चेति ? अथ मतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमेवैकशेषेणेति, प्रातिपदिकानामेवैकशेषे दोषो भवति । एवं च कृत्वा चोद्यते ।

प्र०–'एकविभक्त्यन्ताना'मिति तु क्रियमाणे प्रत्युत दोषः । कश्चिदिति । शिष्यमाणस्यैकवचनस्य लोपो वक्तव्यः । यदि पुनरिति । एकविभक्ताविति न क्रियते 'ह्रस्वो नपुंसक' इत्यतः प्रातिपदिकग्रहणमनुवर्त्यानुत्पन्नायामेव विभक्तौ सरूपाणां प्रातिपदिकानामेकशेषः क्रियते । तिङन्तेषु कथम् ? उच्यते । लावस्थायामेव पच् ल् पच् ल् इति स्थिते कृदन्तत्वात् प्रातिपदिकत्वे सत्येकशेषः । मातृमात्रोरिति । कथमयं निर्देशो यावतैकशेषेण भाव्यम् । एकशेषे सति विवक्षितार्थानवगमात्तदभावः । अयं ह्यत्रार्थो विवक्षितः, जननीवाचिनः परिच्छेत्तृवाचिनश्च मातृशब्दस्यैकशेषप्रतिषेधो वक्तव्य इति । एष चाऽर्थो मात्रोरित्युक्ते न गम्यते । अथ मतमेतदिति । अर्थविप्रतिषेधादत्रैक-

उ०–प्रतीके 'एकविभक्त्यन्तानामिति क्रियमाणे प्रत्युत दोष' इति व्याख्यानं भाष्याक्षरस्वरसविरुद्धम् । उक्तदोषाऽभावेप्ययं दोष इति ह्यर्थस्तदक्षरमर्यादया लभ्यते । द्विवचनेति । शिष्टस्य विभक्त्यन्ततयाऽप्रातिपदिकत्वेन द्विवचनाद्यप्राप्तेः सापि वाच्येत्यर्थः ।

द्वितीयपक्षाद्विशेषं दर्शयितुमाह—एकेति । प्रातिपदिकानामिति । अनुवृत्तस्य बहुवचनेन विपरिणाम इत्यर्थः । यद्यपि विभक्त्युत्पत्तेः—पूर्वं सरूपाणामेकशेष इत्यर्थे भाष्यतात्पर्येण प्रातिपदिकग्रहणानुवृत्तेः फलं चिन्त्यन्तथापि 'हरितहरिणे'त्याद्यभ्रमवार्त्तिकोत्थानाय तथोक्तम् । कृदन्तत्वादिति । अतिङिति प्रतिषेधस्तु तिङ एव स्थानिवत्त्वप्राप्तकृत्त्वस्येत्यभिमानः । भाष्ये—मातृमात्रोरिति । प्रातिपदिकयोरनयोः सारूप्यादिति भावः । इदं पात्रादीनामुपलक्षणम् । यावतैकशेषेणेति । जनन्यादिवाचकयोर्निषेधेऽपि शब्दपरयोर्निषेधे मानाऽभाव इत्यर्थः । तदभाव इति । विवक्षितार्थावगमायैकशेषो न कृत इति भावः ।

**हरितहरिणश्येतश्येनरोहितरोहिणानां स्त्रियामुपसंख्यानम् ॥१७॥**

हरितहरिणश्येतश्येनरोहितरोहिणानां स्त्रियामुपसंख्यानं कर्तव्यम् । हरितस्य स्त्री हरिणी, हरिणस्यापि हरिणी, हरिणी च हरिणी च हरिण्यौ । श्येतस्य स्त्री श्येनी, श्येनस्यापि श्येनी, श्येनी च श्येनी च श्येन्यौ । रोहितस्य स्त्री रोहिणी, रोहिणस्यापि रोहिणी, रोहिणी च रोहिणी च रोहिण्यौ ।

**न वा पदस्याऽर्थे प्रयोगात् ॥ १८ ॥**

प्र०-शेषो न भवति । कृते त्वेकशेषे ताभिरित्यनुप्रयोगे पुमर्थो न प्रतीयते, तैरिति चोक्ते स्त्र्यर्थानवगतिः । अभ्युपगम्यवादेन त्वेतदुच्यते 'विभक्त्यन्तानां सारूप्य' इति । प्रातिपदिकावस्थायां सर्वदा सारूप्यात् सर्वत्रैकशेषः स्यात्, विभक्त्यन्तानां तु सरूपाणामेकशेषे यत्रैव तृतीयादौ विभक्तौ सारूप्यं तत्रैवैकशेषो, न प्रथमाद्वितीययोरित्यर्थः । हरितेति । एषां प्रातिपदिकावस्थायां वैरूप्यमित्येकशेषो न प्राप्नोति । विभक्तौ तु सारूप्यसद्भावात् सिद्ध्यत्येकशेषः । हरितस्य स्त्रीति । नाऽनेन पुंयोगः प्रतिपाद्यते । तत्र हि ङीषा भाव्यं—हरितीति । किं तर्हि ? अयमर्थः—हरितशब्दस्य हरिणी, सा च स्त्री । न वेति । प्रातिपदिकग्रहणं विच्छिन्नत्वादिह नानुवर्तते । सारूप्यं चेहाश्रीयते । न च प्रातिपदिकानि लोके प्रयुज्यन्ते । किं तर्हि ? पदान्येव । शास्त्रेपि

उ०-एवमेव 'यत्तदेतेभ्य' इत्यादौ कोशेषु दैकशेषाऽकरणम् । 'मत'शब्दसूचिताऽस्वरसं स्पष्टयति—अर्थेति । स्त्र्यर्थानवगतिरिति । प्रकरणादिना प्रतीतिसम्भवाच्चिन्त्यमेतत् । एवं च विभक्त्यन्तानामेकशेषे तृतीयान्तादीनामेकशेषो भवत्येव, प्रथमाद्वितीययोस्तु नेति मते दोषाऽभावात्, एकविभक्ताविति पदरहितप्रातिपदिकैकशेषपक्षे एवैष दोष इत्यर्थो भाष्यस्य । विभक्तिपदाऽभावे सरूपाणामेवैकशेष इत्येवं नियमेन प्राप्ते । प्रतिषेधेन सहविवक्षाविषयैकशेषस्य निषेधे तद्विषये द्वन्द्वः पक्षे वाक्यं च सिध्यति । असहविवक्षाविषयतन्त्रं तु भवत्येव । 'मातृभ्यां कृतं देही'ति च, 'अक्षा भज्यन्ता'मित्यादिवत् । 'अथ मत'मित्येतेनाऽरुचिर्बोधिता । तद्बीजं तु—सूत्रव्याख्यानरक्षभेदेन लक्ष्यभेदाऽनौचित्यमिति । तस्माद्विभक्त्यन्तानामेकशेषेपि मातृमात्रोः प्रतिषेधो वक्तव्य एवेति गूढतात्पर्यम् । तद्ध्वनयन्नाह—एवं च कृत्वेति । एवमङ्गीकृत्य प्रातिपदिकानामेकशेषे एव प्रतिषेधश्चोद्यत इत्यर्थः । वस्तुतो विभक्त्यन्तानामेकशेषेपि तद्वक्तव्यमित्यर्थः । अस्य मतस्य भाष्याभिप्रेतत्वे तु 'विरूपाणामनेकशेष' इत्यादि प्रागुक्तभाष्यविरोध इति दिक् । तद्ध्वनयन्नाह—अभ्युपगम्यवादेन त्विति । सर्वदेति । सर्वत्रेत्यर्थकम् । अत्रैव पक्षे दूषणान्तरमाह—हरितेति । लिङ्गविशिष्टपरिभाषामनाश्रित्येदम् । सा च स्त्रीति । एवं च वर्णादनुदात्तादिति ङीब्नकारौ । ननु लौकिके प्रयोगे सरूपत्वेप्येषां प्रातिपदिकत्वाऽभावात्कथमेकशेषसिद्धिरत आह—प्रातिपदिकग्रहणमिति । तदनुवृत्तौ लौकिके प्रयोगे सरूपाणामित्युक्तेऽप्यन्तरङ्गत्वादेकशेषप्रवृत्तिविभक्त्युत्पत्तेः पूर्व-

न वैष दोषः । किं कारणम् ? 'पदस्यार्थे प्रयोगात्' पदमर्थे प्रयुज्यते । विभक्त्यन्तं च पदम् । रूपं चेहाश्रीयते । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे सरूपाण्येतानि ।

अपर आह—न वा पदस्याऽर्थे प्रयोगात् । न वैष पक्ष एवास्ति 'प्रातिपदिकानामेकशेष' इति । किं कारणम् ? 'पदस्यार्थे प्रयोगात्' । पदमर्थे प्रयुज्यते, विभक्त्यन्तं च पदम् । रूपं चेहाश्रीयते । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे प्रातिपदिकानां प्रयोगो नास्ति ।

अथानेन पक्षेणार्थः 'स्यात्प्रातिपदिकानामेकशेष' इति । बाढमर्थः । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? एतेनैवाभिहितं सूत्रेण 'सरूपाणामेकशेष एकविभक्ता'विति । कथम् ? विभक्तिः सारूप्येणाश्रीयते । अनै-

प्र०—प्रकृत्याद्युपदेशेनानुमेयत्वात्प्रातिपदिकानां प्रयोगाऽभावः । तेन पदावस्थायां मातृमातार इति वैरूप्यादेकशेषाऽभावः । हरिण्यावित्यादौ तु भवतीति दोषप्रतिविधानं कृतम् । अपर आहेति । पक्षासम्भवप्रतिपादनार्थमिदमुक्तमित्यर्थः । इदानीं भाष्यकार एनं पक्षं समर्थयितुमाह—अथानेनेति । विभक्तिः सारूप्येणेति । एकविभक्तिर्नैकशेषनिमित्तत्वेनेहोपात्ता, किं तर्हि ?, सारूप्योपलक्षणार्था, एकविभक्तौ लौकिके प्रयोगे यानि सरूपाणि दृष्टानि तेषामेकशेषः । स चाऽनैमित्तिकत्वाद्विभक्तिं नापेक्षते । भाष्ये प्रातिपदिकग्रहणस्योपलक्षणार्थत्वान्ङ्याबन्तादीनामपि हरिण्यादीनामेकशेषो भवति । 'स्वरभिन्नाना'मिति वचनान्ङीबन्तस्य हरिणीशब्दस्य शेषः । ये त्वाहुर्हरितहरिणयोर्वैकशेषे कृते उभयवाचित्वेप्यन्यतरस्य वर्णवाचित्वं जातिवाचित्वं

उ०—मेवेति सुप्प्रकृतीनामेवैकशेषसिद्धिरिति भावः । लौकिकप्रयोगश्च येषामेकशेषस्तत्प्रकृतिकविभक्त्यन्त एव, प्रत्यासत्तेः । एतेन हरिणीशब्दस्यापि तत्प्रकृतिकतद्धितघटितप्रयोगे वैरूप्यमस्त्येवेति परास्तम् । नन्वन्यत्र 'तरप्तमपौ घ' इत्यादौ लौकिकाऽसम्भवे शास्त्रीयग्रहणस्योक्तत्वादत्रापि तथैवास्त्वित्यत आह—शास्त्रेऽपीति । लौकिकतादृशप्रयोगत्वावच्छेदेन च सारूप्यं विवक्षितं, तदाह—तेनेत्यादि । पक्षासम्भवेति । लौकिके प्रयोगे सरूपाणामित्युक्ते प्रातिपदिकैकशेषस्योक्तिसम्भव एव न, किन्तु विभक्त्यन्तानामेकशेष इति पक्षस्यैवापत्तिरिति भावः । अथानेनेति । यद्यनेन पक्षेण प्रयोजनं स्यात् 'तदा सोपि समर्थयितुं शक्यः' इति शेषः । पर आह—बाढमर्थ इति । स एवाह—किं वक्तव्यमिति । 'प्रातिपदिकानामेकशेष' इति सूत्रं कर्त्तव्यं चेत्यर्थः । सारूप्येणेति । तेन स्वोपलक्षकतया विभक्तिराश्रीयत इति भावः । ये त्वाहुरिति । प्रातिपदिकग्रहणं नोपलक्षणमिति भावः ।

मितिक एकशेषः । एकविभक्तौ ( लौकिके प्रयोगे ) यानि सरूपाणि तेषामेक-शेषो भवति । क्व ? यत्र वा तत्र वेति ।

अथानेन पक्षेणार्थः स्याद्विभक्त्यन्तानामेकशेष इति ? बाढमर्थः । किं वक्तव्यमेतत् ? नहि । कथमनुच्यमानं गंस्यते ? एतदप्येतेनैवाभिहितं सूत्रेण 'सरूपाणामेकशेष एकविभक्ता'विति । कथम् ? नेदं पारिभाषिक्या विभक्ते-र्ग्रहणम्[†] । किं तर्हि ? अन्वर्थग्रहणम्—विभागो विभक्तिरिति । एकविभागे यानि सरूपाणि तेषामेकशेषो भवतीति ।

ननु चोक्तम्—'कश्चिद्वचनलोपो द्विवचनबहुवचनविधिर्द्वन्द्वप्रतिषेधश्चे'ति । नैष दोषः । यत्तावदुच्यते—'कश्चिद्वचनलोपो द्विवचनबहुवचनविधि'रिति ।

प्र०—वाश्रित्य स्त्रीप्रत्ययः क्रियत इति, तेषां पक्षे स्वरभेदप्रसङ्गः । मातृमात्रोस्तु क्वचित्सा-रूप्येप्यर्थविप्रतिषेधादेकशेषाऽभावः । यत्र वेति । अनेनाऽनैमित्तिकत्वमेव प्रतिपाद्यते । विभाग इति । कर्मादिकारकमिह 'विभक्ति'शब्देनोच्यते । तेन हि प्रातिपदिकार्थो विभागेनाऽवस्थाप्यते । तत्रैकस्मिंश्चित्कारके विवक्षिते तन्निमित्तया विभक्त्या भाव्य-मित्येकविभक्त्यन्तानां सरूपाणामेकशेषः सिध्यति । कश्चिदिति । अवस्थितस्य वचनस्य लोपो वक्तव्यः । तस्मिन्नपि कृते प्रत्ययलक्षणेन प्रत्ययान्तत्वात् प्रातिपदिकसञ्ज्ञाया अभावाद् द्विवचनबहुवचने न सिध्यत इति ते अपि वक्तव्ये । 'न ङिसम्बुद्ध्यो'-

उ०—हरितहरिणयोरिति । 'विभक्तौ यानि सरूपाणि दृष्टानि तदवयवप्रातिपदिकाना'मित्यर्थ इति भावः । अन्यतरस्येति । शिष्टस्याऽन्यतरस्योभयवाचित्वेनेत्यर्थः । जातिवाचित्वं चेति । चकारघटितः पाठः । क्वचित्सारूप्ये इति । वस्तुतस्तु विभक्तित्वावच्छेदेन सारूप्यविवक्षणान्न मातृमात्रादौ दोष इति बोध्यम् । एकशब्दस्वारस्येनैवकारापकर्षणेन चैकस्यामपि विभक्तौ यानि विरूपाणि नेत्यर्थादिति दिक् । 'एक'ग्रहणफलं तु चिन्त्यमेव । अत एव 'पृथक् सर्वेषां विभक्त्यन्तानामेकशेष' इति पक्षे 'एकग्रहणं पृथग्विभक्तिप्रतिषेधार्थ'मित्युक्तं, तेन हि तदतिरिक्तपक्षेषु तद्वैयर्थ्यं ध्वनितम् । तत्पक्षेपि 'न वार्थविप्रतिषेधा'दिति तत्प्रत्याख्यातमेव । अत्रापि 'विभक्तिः सारूप्येणाश्रीयत' इत्येवोक्तं न त्वेकविभक्तिरिति । न चैवं नृणां नृणा-मित्यादावेकशेषानापत्तिः, दीर्घस्य वैकल्पिकत्वेन सारूप्यनियमाऽभावादिति वाच्यम् । 'विरूपाणामपि समानार्थाना'मिति सिद्धेः । यत्त्वेकग्रहणसामर्थ्येन यद्विभक्तिविषये एकशेष-स्तस्यामेव सारूप्यमित्यर्थात्तृतीयादौ मातृमात्रोरेकशेषसिद्धिरिति । तन्न । वार्तिकारम्भे सर्वत्र प्रतिषेधेन पक्षयोः फलभेदापत्तेरित्यलम् । भाष्ये—किं वक्तव्यमिति । एकविभक्ती-नामिति षष्ठ्यन्तं वक्तव्यं किमित्यर्थः । तेन हीति । बाहुलकात्करणसाधनः कारकशक्तिवाची

१—अयं पाठः क्वचिन्न । † विभक्तिश्च १. ४. १०४.

सहविवक्षायामेकशेषः । युगपद्विवक्षायामेकशेषेण भवितव्यम् । न तर्हीदानीमिदं भवति—वृक्षश्च वृक्षश्च वृक्षौ, वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इति ? नैतत्सहविवक्षायां भवति । अथापि निदर्शयितुं बुद्धिरेवं निदर्शयितव्यम्—वृक्षौ च वृक्षौ च वृक्षौ, वृक्षाश्च वृक्षाश्च वृक्षाश्च वृक्षा इति ।

यदप्युच्यते—'द्वन्द्वप्रतिषेधश्च वक्तव्य' इति । नैष दोषः । अनवकाश एकशेषो द्वन्द्वं बाधिष्यते । ननु चोक्तम्—'सावकाश एकशेषः । कोऽवकाशः ? तिङन्तान्यवकाशः' इति । न तिङन्तान्येकशेषारम्भं प्रयोजयन्ति ? किं कारणम् ? यथाजातीयकानां द्वितीयस्य पदस्य प्रयोगे सामर्थ्यमस्ति तथाजातीयकानामेकशेषः । न च तिङन्तानां द्वितीयस्य पदस्य प्रयोगे सामर्थ्यमस्ति । किं कारणम् ? एका हि क्रिया । एकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्—'उक्तार्थानामप्रयोग' इति । यदि तर्ह्येका क्रिया, द्विवचनबहुवच-

प्र०—रिति तु ज्ञापकं नलोपविषयमेव । अथाप्यविशेषेण लुप्तप्रत्ययस्य प्रातिपदिकसञ्ज्ञायां ज्ञापकम्, एवमप्येकार्थत्वाच्छिष्यमाणस्य द्विवचनबहुवचनाऽसिद्धिरेव । सहविवक्षायामिति । एवं चैकैकस्यानेकार्थाभिधानाद् द्विवचनबहुवचनान्तानामेवैकशेषः । न तर्हीति । नित्येनैकशेषेण भवितव्यमिति वाक्यं न प्राप्नोतीत्यर्थः । इतरो भिन्नार्थत्वादेकशेषवृत्त्या वाक्यं न बाध्यत इत्याह—नैतदिति । प्रत्येकमत्र विवक्षेत्यर्थः । बालास्तु प्रक्रियावाक्येनैव व्युत्पाद्यन्त इत्याह—अथापीति । यथाजातीयकानामिति । द्रव्यवाचिनामित्यर्थः । एका हीति । आख्यातवाच्या क्रिया

उ०—विभक्तिशब्द आश्रीयत इति भावः । विवक्षित इति । अनेन सूत्रेपि विषयसप्तमीति दर्शितम् । कारकशक्तेः शब्दात्परत्वाऽसम्भवादिति बोध्यम् । लुप्तप्रत्ययस्येति—बहुव्रीहिः । एकार्थत्वाच्छिष्यमाणस्येति । न च 'शिष्यमाणं लुप्यमानार्थाभिधायी'ति न्यायविरोधः, प्रत्येकपर्याप्तैकत्वविशिष्टानामेव 'शिष्यमाण'शब्दबोध्यतया द्वित्वादिविशिष्टार्थाऽप्रतीत्या द्विवचनाद्यसिद्धिरिति भावः । एवं चैकैकस्येति । युगपदधिकरणवचनताश्रयेणेति भावः । सर्वेषामर्थानां सर्वैः शब्दैर्युगपद्बोधनेच्छा हि सहविवक्षेति तात्पर्यम् । भिन्नार्थत्वादिति । सर्वेषामर्थानां सर्वैः शब्दैः साहित्येनार्थप्रतिपादनविवक्षाऽभावादिति भावः । इत्याहेति । इत्याशयेनाहेत्यर्थः । 'अथापि निदर्शयितु'मित्यनेन वक्ष्यमाणस्याऽसाधुत्वं बोधितम् । यथा चाऽलौकिकविग्रहवाक्येनाऽसाधुनाऽपि समाससञ्ज्ञाप्राप्त्यवस्थानिदर्शनं तथाऽनेनापीत्यर्थः । द्रव्यवाचिनामिति । सत्त्ववाचिनामित्यर्थः । ननु कर्त्रादिभेदात् क्रियाभेदावगमेनैका क्रियेत्यनुपपन्नमत आह—आख्यातेति । शब्दशक्तिस्वभावादिति भावः । सर्वैव—सर्वापि । निवृत्तभेदा—स्वतो द्वित्वादिसङ्ख्यारहिता । भेदस्य—तत्सहचरितद्वित्वादेः । स्वगतमेकत्वं तु प्रतीयत इत्येकवचनमिति भावः । प्रकर्षाभ्यावृत्त्यादयस्त्विति । अभ्यावृत्तिरत्र गणनम् ।

नानि न सिध्यन्ति—पचतः पचन्ति । नैतानि क्रियापेक्षाणि । किं तर्हि ? साधनापेक्षाणि ।

अथवा पुनरस्तु 'एकविभक्ता'विति ? ननु चोक्तम्—'एकविभक्ताविति चेन्नाऽभावाद्विभक्ते'रिति । नैष दोषः । परिहृतमेतत्—'अर्थवत्प्रातिपदिकमिति प्रातिपदिकसञ्ज्ञा भविष्यती'ति । ननु चोक्तम्—'नियमान्न प्राप्नोति, अर्थवत्समुदायानां समासग्रहणं नियमार्थ'मिति । नैष दोषः । तुल्यजातीयस्य

प्र०—सर्वैव निवृत्तभेदा प्रतीयते । 'भवद्भिरास्यत' इत्यादौ वस्तुस्थित्या कर्तृभेदाद्भेदेपि तिङन्ताद्भेदस्याऽनवगमात् । प्रकर्षाभ्यावृत्त्यादयस्तु भेदनिबन्धना आश्रयप्रकर्षाभ्यावृत्त्यादिभेदनिमित्ता नैकत्वं क्रियाया विघ्नन्ति । नैतानीति । कर्तृकर्मसमवेतसंख्याभिधायिनी द्विवचनबहुवचने इत्यर्थः ।

ननु कर्तृकर्मणोर्लविधानादनेकस्मिन् कारके अनेकेनैव लकारेणोत्पत्तव्यम् । भवत्वनेको लकारः, लकारजातेरव्यवधानात् । लस्येत्यत्र 'ल'जात्याश्रयणादनेकस्यापि लस्य स्थाने अर्थत आन्तर्याद् द्विवचनबहुवचने भविष्यत इत्यदोषः । तुल्यजातीयस्येति । अवयवानां समुदायार्थतन्त्रत्वात्समुदायविभक्त्यैवावयवार्थस्य संख्यावगमात् पृथगवयवेभ्यो विभक्तिर्नोत्पद्यते । विरूपसमुदाये तु सुबन्तानां द्वन्द्ववचनेनाऽयं न्यायो

उ०—आश्रयाभ्यावृत्तीति । आश्रयप्रकर्षात् प्रकर्षः, अभ्यावृत्तिर्जन्म, तद्गणनमेव क्रियागणनमिति भावः । एकत्वं न विघ्नन्तीति । द्वित्वादिप्रतीतौ हि उत्तरया पूर्वसङ्ख्याबाधनात्तद्धिहतिः स्यादिति भावः । कर्तृकर्मेति । अस्यारोपितत्यादिः । भाष्ये साधनशब्देन तिङन्ताभिधेयकर्तृकर्मगतसङ्ख्याविशेष उच्यते, तदपेक्षाणि—तदारोपापेक्षाणि । एवं चैकस्मिन्नेव तदारोपान्न पदभेदप्रसङ्ग इति नैकशेषस्याऽत्र विषय इति भावः । अनेकेनैवेति । 'वर्तमाने ल'डित्यत्र सङ्ख्याविवक्षणेपि धातुभेदेन वाक्योपप्लववत् । कर्तृरूपार्थभेदेनापि वाक्योपप्लवादनेकप्रसङ्गो दुर्वारः । अत एवाऽग्रे एकप्रकृतेरनेकयजुत्पत्तिं भाष्यकृद्वक्ष्यति । जात्याश्रयणादिति । जात्याश्रयानेकव्यक्त्याश्रयणादित्यर्थः । अर्थत आन्तर्यादिति । द्व्यर्थस्य लद्वयस्य द्विवचनं, बह्वर्थस्य लसमुदायस्य बहुवचनमिति भावः । केचित्त्वनेकलकारोत्पत्तौ न मानम्, कर्त्रर्थत्वारोपवदेकस्मिन्ननेकार्थत्वस्याप्यारोपादित्याहुः । एवं चानवकाशत्वादेकशेषो द्वन्द्वबाधक इति स्थितम् । भाष्ये—अथवा पुनरित्यादिना समुदायादेकविभक्ताविति पक्षः समर्थ्यते । समुदायविभक्त्यैवेति । अवयवारभ्यत्वात्समुदायसङ्ख्यायाः समुदायगतसङ्ख्याभिधायिसमुदायविभक्त्यैवावयवार्थेपि तत्सङ्ख्याप्रतीतेर्गतार्थत्वान्नाऽवयवेभ्यः पृथग् विभक्तिप्रसङ्ग इति भावः । अवयवानां पदत्वादिरूपोपकारस्य समुदायविभक्त्याऽसम्भवाच्चिन्त्यमिदम् । किं च विशेष्यविभक्त्या विशेषणीयसङ्ख्यादीनामुक्तावपि विशेषणाद्यथा साधुत्वाय विभक्तिः क्रियते तथात्रापि दुर्वारेति । तस्मात्प्रत्येकगतसङ्ख्याया अविवक्षणान्न प्रत्येकं

नियमः । कश्च तुल्यजातीयः ? यथाजातीयकानां समासः । कथञ्जातीयकानां समासः ? सुबन्तानाम् ।

सर्वत्राऽपत्यादिषूपसंख्यानम् ॥ १६ ॥

सर्वेषु पक्षेष्वपत्यादिषूपसंख्यानं कर्तव्यम् ? भिक्षाणां समूहो भैक्षमिति† ।

प्र०—बाध्यते इत्यवयवेभ्य एव विभक्त्युत्पत्तिः । सुबन्तानामिति । यद्यपि गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्ते'रित्युच्यते तथापि पूर्वपदं तत्र सुबन्तमेवेति सोऽपि तदपेक्षया सुबन्तानामेव समासः । अन्यथा नलोपादीनि पदकार्याणि पूर्वपदे न स्युः । उत्तरपदमेव तु तत्राऽसुबन्तम् । इह राजन् राजन् औ इति स्थिते परत्वान्नित्यत्वाच्चोपधाया दीर्घे कृते वैरूप्यादेकशेषो न प्राप्नोति । उच्यते—'विरूपाणामपि समानार्थाना'मिति भविष्यति, अन्तरङ्गत्वाद्वा । दीर्घत्वं हि नान्तरङ्गम् । उपधां विभक्तिविशेषमसम्बुद्धिसर्वनामस्थानमपेक्षत इति बहिरङ्गम् । सर्वत्रेति । षट्पक्षा इहोपक्षिप्ताः—[1]पृथग्विभक्तौ परत एकशेषः, [2]एकवचनान्तानां वा, [3]समासाद्वैकस्यां विभक्तौ परतः, [4]सरूपसमुदायाद्वा विहितायामेकविभक्तौ परतः, [5]प्रातिपदिकानां वा, [6]सहविवक्षायां वा प्रत्येकं द्विवचनबहुवचनान्तानामिति । तत्र पश्चिमं पक्षत्रयमङ्गीकृतम् । तत्र भिक्षा भिक्षा भिक्षा आम् अ इति स्थिते सर्वविधिभ्यो लुग्विधेर्बलवत्त्वाल्लुकि कृते विभक्त्यभावादेकविभक्तौ परतो विधीयमान एकशेषो न प्राप्नोति, प्रत्यय-

उ०—सुबुत्पत्तिः । समुदायगतबहुत्वसङ्ख्याया एव विवक्षणेन तद्बोधकसमुदायादेव विभक्तिः, तावताप्यपदं न प्रयुञ्जीतेति निषेधातिक्रमाऽभावादिति भाष्यार्थः । प्रत्येकसङ्ख्याविवक्षाऽभावे सति बहुत्ववत्त्वेन विवक्षणात् पृथक् प्रयोगार्हत्वमप्येषां नेति भेदसंसर्गद्वारकमर्थवत्त्वमस्य नेति न नियमेन व्यावृत्तिरिति तात्पर्यम् । तत्र सरूपसमुदायादेकविभक्तावेकशेषपक्षे दोषमुपपादयति—तत्र भिक्षेति । पदस्य विभज्यान्वाख्यानपक्षे इदम् । आबन्तसमुदायस्य चाऽप्रत्ययान्तत्वात्प्रातिपदिकत्वमिति भावः । 'स्त्रीप्रत्यये चानुपसर्जने'ति तु स्त्रीप्रत्ययत्वेन तद्व्याप्यधर्मेण वा स्त्रीप्रत्ययग्रहणे इति तात्पर्यम् । तदा सुबन्तसमुदायादिति । तस्य सुबन्तत्वपर्याप्त्यधिकरणत्वाऽभावादिति भावः । एवं च भाष्ये 'सर्वत्र' शब्देन पक्षद्वयमेव ग्राह्यमिति तात्पर्यम् । वस्तुतस्तु तदवयवादेकस्मात्तस्य दुर्वारत्वेन तत्र कृते परत्वादादिवृद्धौ वैरूप्यात्तत्पक्षेप्येकशेषो न प्राप्नोति । न च विनिगमनाविरहेण प्रत्येकमुत्पत्तावणूत्रयापत्तिः, तावतापि भ भ भैक्षमित्यस्याप्यापत्त्या नियतभैक्षासिद्धेस्तदवस्थत्वात् । किं च 'प्रातिपदिकानां चैकशेषे सिद्धमिति भाष्ये न्यूनता, प्रत्येकं द्विवचनाद्यन्तानामेकशेष इति पक्षेपि त्वदुक्तरीत्या दोषाऽभावात् । युगपदधिकरणवचनतायां दुःखत्वदुरुपपादत्वयोर्द्वितीये भाष्ये वक्ष्यमाणतया तत्पक्षस्योक्तिसम्भवाऽभावाच्च । समर्थग्रहणेन तु न विभक्तिनिमित्तकार्यस्य पूर्वं प्रवृत्तिः । विश्वौह आगतं विश्ववाड्रूप्यमित्यादे'र्विभाषा पूर्वाह्णे'ति सूत्रभाष्यस्थस्याऽसङ्गत्यापत्तेरित्याहुः । प्राति-

† भिक्षादिभ्योऽण् ४. २. ३८.

'सर्वत्रे'त्युच्यते प्रातिपदिकानां चैकशेषे सिद्धम्। अपत्यादिष्वित्युच्यते बहवश्चापत्यादयः। गर्गस्यापत्यं बहवो गर्गाः‡। एका प्रकृतिर्बहवश्च यञः। असारूप्यादेकशेषो न प्राप्नोति। ननु च यथैव बहवो यञः, एवं प्रकृतयोपि बह्व्यः स्युः। नैवं शक्यम्। इह हि दोषः स्यात्—गर्गा वत्सा बिदा उर्वा

---

प्र०—लक्षणं च नास्ति, न लुमताङ्गस्येति प्रतिषेधात्। प्रातिपदिकैकशेषपक्षे समर्थं यद् ङ्याप्प्रातिपदिकं तस्मात्तद्धिता इत्याबन्तादणि कृते परत्वादादिवृद्धौ कृतायां वैरूप्या-देकशेषाऽप्रसङ्गः। यदा तु सहविवक्षायां विभक्त्यन्तानामेकशेषः सुबन्ताच्च तद्धित इत्ययं पक्षस्तदा सुबन्तसमुदायात्तद्धिताऽभावात्पूर्वमेकशेषः, पश्चात्तद्धित इति न कश्चिद्दोषः। प्रातिपादकानां चेति। अनैमित्तिकत्वादन्तरङ्गत्वात्पूर्वमेकशेषः पश्चाद्-वृद्धिः। अथवा तद्धित एव पश्चादुत्पद्यत इति भावः। बहवश्च यञ इति। प्रत्यर्थं शब्दनिवेशाद्बहुष्वपत्येषु बहवो यञ उत्पाद्याः। तत्र गर्ग य य य इति स्थिते समुदायस्य तद्धितान्तत्वात् प्रातिपदिकत्वात्तत एका विभक्तिस्तत्र प्रथमस्य यशब्दस्य प्रकृति-सन्निपातकृतं वैरूप्यमित्येकशेषो न प्राप्नोति। ननु प्रकृतिं विहाय यशब्दानां सारूप्यादेकशेषो विधास्यते। नैतदस्ति। विभक्त्युत्पत्तावभ्यन्तरीकृता प्रकृतिर्विभक्ति-लक्षितसारूप्याश्रये एकशेषे कथं हातुं शक्यते। न च यञां प्रकृत्यर्थानपेक्षः समु-दायार्थस्तत्कथं प्रकृतिर्वर्ज्येत। यदापि सहविवक्षायां विभक्त्यन्तानामेकशेष इति पक्षस्तदा गर्ग य अस् य अस् य अस् इति स्थिते पूर्वस्य 'य अस्' शब्दस्य प्रकृति-सन्निपाताद्वैरूप्यम्, प्रातिपदिकैकशेषपक्षेपि तथैव वैरूप्यमित्येकशेषो न प्राप्नोति। एवं प्रकृतयापीति। एकैकस्यापत्यस्य प्रकृत्यर्थेन योगात् प्रधानभेदे च गुणाभ्यावृत्त्या

---

उ०—पदिकैकशेषपक्षे मातृमात्रादौ यथा नैकशेषस्तथोक्तमेव। भाष्ये—सिद्धमिति। सुबन्ता-त्तद्धितोत्पत्त्या तत्पक्षे एकशेषस्यान्तरङ्गत्वात्। एवं च 'सर्वत्रे'त्यसङ्गतमिति भावः। इदानीं तस्य सार्थक्यं दर्शयितुमपत्यार्थ एव पक्षत्रयेपि दूषणमाह—अपत्यादिष्विति। एका प्रकृतिरिति। अर्थाभेदादभिन्नैवेत्यर्थः। तद्धितान्तत्वादिति। अन्त्ययशब्दस्यापि गर्गा-द्विहितत्वेन समुदायस्य तदादितदन्तत्वादिति भावः। प्रकृतिसन्निपातेति। तत्र प्रथमस्य सान्निध्यात्सन्निपातोऽन्ययोस्तु व्यवहितत्वान्नास्तीति वैरूप्यमिति भावः। अभ्यन्तरीति। गर्गशब्दविशिष्टयशब्दद्वयस्य प्रातिपदिकत्वे तदर्थगतसङ्ख्याभिधायितया प्रवृत्ता विभक्तिः सारूप्योपलक्षणतायां प्रकृतिं न त्यजतीत्यर्थः। न च यञामिति। यञ्समुदायस्येत्यर्थः। समुदायार्थः—अपत्यसमुदायरूपोर्थः। अपत्याद्यर्थस्य ससम्बन्धिकत्वादिति भावः। तदा गर्ग येति प्रत्येकं तद्धितान्तत्वात्सहविवक्षायां बह्वर्थत्वाच्च प्रत्येकं बहुवचनमिति भावः। प्रधानभेदे च गुणाभ्यावृत्त्येति। प्रातिपदिकोद्देशेन तद्विधानाद् प्रातिपदिकार्थस्य तत्र

---

‡ गर्गादिभ्यो यञ्; यञञोश्च ४. १. १०५; २. ४. ६४.

इति । अन्यो बहुषु यञ्यो बहुष्वित्युच्यमानो लुङ्न प्राप्नोति । मा भूदेवम् । अञन्तं यद् बहुषु, यञन्तं यद् बहुष्वित्येवं भविष्यति । ननु चोक्तम्—'नैवं शक्यमिह हि दोषः स्यात्—काश्यपप्रतिकृतयः काश्यपा' इति । नैष दोषः । लौकिकस्य तत्र† गोत्रस्य ग्रहणम्, न चैतल्लौकिकं गोत्रम् ।

अथवा पुनरस्त्वेका प्रकृतिर्बह्वश्च यञः ? ननु चोक्तम्—सारूप्यादेकशेषो न प्राप्नोतीति ।

**सिद्धं तु समानार्थानामेकशेषवचनात् ॥ २० ॥**

सिद्धमेतत् । कथम् ? समानार्थानामेकशेषो भवतीति वक्तव्यम् । यदि समानार्थानामेकशेष उच्यते, कथमक्षाः पादा माषा इति ?

**नानार्थानामपि सरूपाणाम् ॥ २१ ॥**

प्र०—गार्ग्यशब्दानामेवैकशेषः क्रियत इत्यर्थः । अञ् यो बहुष्विति । यदा यञामेवैकशेषः क्रियते, तदा शिष्यमाणो यशब्दो बहुषु वर्तत इति लुक् सिध्यति । गार्ग्यशब्दानां त्वेकशेषे यशब्दो बहुषु न वर्तते, किं तर्हि, यशब्दान्त इति लुङ् न सिध्यति । यञन्तं यदिति । तेनैव चेत् कृतं बहुत्वमित्यपि तदन्तेनेति व्याख्यायते । काश्यपा इति । एकस्मिन् कश्यपापत्येऽञि कृते तत्प्रतिकृतिबहुत्वे काश्यपशब्दानामेकशेषे कृते अञन्तं बहुषु वर्तत इति लुक्प्रसङ्गः । लौकिकस्येति । अपत्यस्येत्यर्थः । न चैतदिति । प्रतिकृतिवृत्तित्वान्नैतदञन्तमपत्यवाचि । एका प्रकृतिरिति । प्रकृत्यर्थस्यैकत्वात् तेन च बहूनामप्यपत्यानां सम्बन्धसम्भवात् । सिद्धं त्विति । सत्यपि प्रकृतिसन्निपातकृते एकस्य

उ०—विशेषणत्वाद् गुणता । किं चैकस्मादनेकेषां परत्वाऽसम्भव इति भावः । अन्यो बहुष्विति भाष्ये । तेनैवेत्यनुवृत्त्या प्रत्ययस्यैव बहुषु वृत्तेर्लुगभ्युपगम इति भावः । यदा यञामेवेति । उक्तरीत्याऽस्योपपत्तिश्चिन्त्या । लुक्शास्त्रवैयर्थ्यापादनमेवात्र भाष्यकृत्तात्पर्यविषयीभूतम् । अपत्यवाचीति । यद्यपि प्रतिकृतिवृत्त्येतद्गोत्रमेव नेति लौकिकस्येति विशेषणं व्यर्थं तथापि सिद्धान्तस्वरूपप्रदर्शनमेतत् । यद्वा तत्सदृशत्वात्तत्रापि गोत्रत्वाभिमानः । प्रवराध्यायप्रसिद्धं हि तत्र गोत्रशब्देन गृहीतमित्युत्तरम् । सम्बन्धसम्भवादिति । प्रधानानुरोधेन गुणावृत्तिन्यायस्तु यत्र गुणावृत्तिं विना प्रधानोत्पत्तेर्न निर्वाहस्तव्यत्तव्यानीयरादौ तद्विषय इति भावः । इह तु यञ कृतेरेकत्वाद्बहूनामपि परत्वसंभवाद् गुणावृत्तिर्नापेक्ष्येति तात्पर्यम् । समानार्थत्वमिति । नन्वेवं कदाचिद्यशब्दमात्रस्य शेषप्रसङ्गः, तथा सति प्रकृत्यर्थविशिष्टप्रत्ययार्थानवगतिप्रसङ्गात् । नावावनड्वाहावित्यादावप्यत्र पक्षेऽनेनैवैकशेषसिद्धिः । अपरः 'सरूपाणा'मित्यस्य स्थाने 'समानार्थाना'मिति मत्वाऽव्यासिमाह भाष्ये—यदीति । 'नाना-

† यञञोश्च २. ४. ६४.

नानार्थानामपि सरूपाणामेकशेषो वक्तव्यः ।

**एकार्थानामपि विरूपाणाम् ॥ २२ ॥**

एकार्थानामपि विरूपाणामेकशेषो वक्तव्यः । वक्रदण्डश्च कुटिलदण्डश्च—वक्रदण्डौ, कुटिलदण्डाविति वा ।

**स्वरभिन्नानां यस्योत्तरस्वरविधिः ॥ २३ ॥**

स्वरभिन्नानां यस्योत्तरस्वरविधिस्तस्यैकशेषो वक्तव्यः । अक्षश्च अक्षश्च अक्षौ* । मीमांसकश्च मीमांसकश्च मीमांसकौ† ।

इह कस्मान्न भवति—एकश्च एकश्च द्वौ च द्वौ चेति ?

**संख्याया अर्थाऽसंप्रत्ययादन्यपदार्थत्वाच्चानेकशेषः ॥ २४ ॥**

संख्याया अर्थाऽसंप्रत्ययादेकशेषो न भविष्यति । नह्येकावित्यनेनार्थो गम्यते । अन्यपदार्थत्वाच्च संख्याया एकशेषो न भविष्यति एकश्चैकश्चेत्यस्य द्वावित्यर्थः । द्वौ च द्वौ चेत्यस्य चत्वार इत्यर्थः ।

प्र०—वैरूप्ये सर्वेषां प्रकृत्यर्थविशिष्टापत्याभिधायित्वात् समानार्थत्वमस्ति । वक्रदण्डश्च कुटिलदण्डश्चेति । द्वन्द्वनिवृत्त्यर्थमेतद्वक्तव्यं, तेनैवाऽन्यो बहुष्वित्यपि पक्षे आश्रीयमाणे इष्टं सिध्यति । यदा त्वञन्तं यद्बहुष्वित्याश्रीयते तदाऽव्यविकन्यायाश्रयणाद् वक्रदण्डश्च कुटिलदण्डश्चेति वाक्यमेव भवति, न तु द्वन्द्व इति न वक्तव्यो विरूपाणामेकार्थानामेकशेषः । स्वरभिन्नामिति । स्वरेण भिन्नानामित्यर्थः । अक्षश्चेति । एकोऽक्षशब्दोऽशेर्देवन इति सप्रत्ययान्तत्वादन्तोदात्तः, द्वितीयस्तु घञन्तत्वादाद्युदात्तः, तस्यैव शेषो भवति । एको मीमांसकशब्दो ण्वुलन्तत्वान्मध्योदात्तः, परस्तु मीमांसामधीते इति क्रमादिभ्यो वुन्नित्याद्युदात्तस्तस्य शेषः । एकश्चेति । द्वन्द्वोऽप्यत्रानभिधानान्न भवति । अर्थासंप्रत्ययादिति । यत्रैकः शब्दोऽनेकमर्थमभिधातुं शक्नोति तत्रैकशेषो नान्यत्र । प्रयुक्तानामन्वाख्यानात् । एकाविति चोक्तेऽसहायादि-

उ०-र्थानामपी'ति सूत्रमपि क्रियत इति भावः । तेनैवाऽन्यो बहुष्विति । तेनैव—'विरूपाणामपी'तिवचनेन । वस्तुतोऽनेन 'गर्ग—य'शब्दस्य शेष इति तस्यैव लुप्यमानार्थाभिधायित्वमित्यत्रापि पक्षेऽञन्तं यद्बहुष्वित्यर्थेनैव लुगिति केचित् । अव्यविकेति । मन्दबुद्ध्यनुग्रहाय तु कार्यमेव वार्तिकं, सूत्रजालवत् । ननु बहुव्रीहौ निष्ठान्तत्वाद्भिन्नस्य पूर्वनिपातः स्यादत आह—स्वरेणेति । 'साधनं कृते'ति समासः । घञन्तत्वादिति । 'अक्षू व्याप्तौ'विति

* आद्युदात्तश्च ३. १. ३; ञ्नित्यादिर्नित्यम् ६. १. १९७. † लिति; ञ्नित्यादि० ६. १. १९३. १९७.

नैतौ स्तः परिहारौ। यत्तावदुच्यते—'संख्याया अर्थासंप्रत्यया'दिति। अर्थासंप्रत्ययेपि हि सत्येकशेषो भवति। तद्यथा—गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ‡। न चोच्यते वृद्धयुवानाविति, भवति चैकशेषः। यदप्युच्यते—'अन्यपदार्थत्वाच्चे'ति। अन्यपदार्थेप्येकशेषो भवति। तद्यथा—विंशतिश्च विंशतिश्च विंशती इति। तयोश्चत्वारिंशदित्यर्थः।

एवं तर्हि नेमौ पृथक्परिहारौ। एकपरिहारोऽयं 'संख्याया अर्थाऽसंप्रत्यया-दन्यपदार्थत्वाच्चे'ति। यत्र ह्यर्थाऽसंप्रत्यय एव वा, अन्यपदार्थतैव वा, भवति तत्रैकशेषो 'गार्ग्यौ' 'विंशती' इति यथा।

अथवा नेम एकशेषशब्दाः। यदि तर्हि नेम एकशेषशब्दाः समुदायशब्दा-स्तर्हि भवन्ति। तत्र को दोषः? एकवचनं प्राप्नोति। एकार्था हि समुदाया भवन्ति। तद्यथा—यूथम् शतम् वनमिति।

प्र०-गम्यते न तु द्वावित्यर्थः। अन्यपदार्थत्वाच्चेति। असंदिग्धेन पदान्तरेणाऽयमर्थः प्रत्याय्यत इत्यर्थः। गार्ग्याविति। गार्ग्यश्च गार्ग्यश्चेत्यस्याप्यर्थस्य सम्भवात् संदेहादर्थाऽसम्प्रत्ययः। उत्तरकालं तु प्रकरणादिवशात् संदेहनिवृत्तिः। ननु 'वृद्धो यूने'ति वचनात् संदेहेऽप्येकशेषः स्यात्, अस्य तु निःसन्देहविषयसम्भवात्कथं संदिग्धविषये प्रवृत्तिः? नैतदस्ति। अक्षादिष्वपि संदेहविषयेष्वस्य प्रवृत्तिदर्शनात्। एवं तर्हीति। अर्थाऽसम्प्रत्यये सत्यन्यपदार्थत्वादित्ययं हेत्वर्थः। यदि तर्हीति। प्रत्यर्थं शब्दनिवेशादेकशेषे सति एकस्यानेकार्थत्वं सम्भवति। यदा तु समुदायवाचित्वं द्व्यादीनामभ्युपगम्यते तदा वनादिवदेकवचनप्रसङ्गः। यत्तु वनानीति बहुवचनं, तत्स-मुदायप्रचयविवक्षायां न त्ववयवभेदविवक्षायाम्। समुदाया इति। समुदायवाचिन

उ०-भ्वादिप्रकृतिके'स्यादिः। अनभिधानस्यावश्याश्रयणीयतां दर्शयति—द्वन्द्वोपीति। संख्या-शब्देष्वैकादिष्वेकशेषमापादयतोऽयं भावः—द्विचतुःशब्दादिभ्योऽनेकार्थाभिधानं घटादिशब्देभ्य इव न स्यादित्यवश्यमेकशेषेणानेकार्थत्वं वक्तव्यमित्येकादिशब्दानामपि तत्प्रसङ्ग इति। भाष्ये—अर्थो गम्यत इति। द्वित्वरूपार्थ इत्यर्थः। द्वावित्यर्थ इति। तस्य च द्वौशब्दो वाचक इति भावः। संदेहादिति। निश्चयात्मकप्रतीत्यभावोऽसंप्रत्यय इत्यर्थः। न चोच्यते वृद्धयुवानावित्यनेन संदेहबीजं दर्शितम्। एवं तर्हि नेमावित्यादिभाष्यस्य वाचक-शब्दान्तरसत्ताविशिष्टार्थाऽसंप्रत्ययेनैकाद्यादशतामेकशेषाऽभाव इत्यत्र तात्पर्यम्। विंशत्यादीनां तु भवत्येवेति दिक्। इदानीं तद्ध्वयस्यममिप्रेतं द्विशब्दादिरूपं दृष्टान्तं खण्डयति—अथवा नेम इति। द्वावित्यादय इत्यर्थः। तेषामेकशेषशब्दत्वे हि तद्दृष्टान्तेनात्रैकशेषापादनम्, न

‡ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः १. २. ६५.

सन्तु तर्ह्येकशेषशब्दाः। किंकृतं सारूप्यम्? अन्योन्यकृतं सारूप्यम्? सन्ति पुनः केचिदन्येपि शब्दा येषामन्योऽन्यकृतो भावः? 'सन्ती'त्याह। तद्यथा—माता पिता भ्रातेति।

विषम उपन्यासः। सकृदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्तन्ते। इह पुनरेकेनाप्यपाये न भवति 'चत्वार' इति।

अन्यदिदानीमेतदुच्यते—'सकृदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्तन्ते' इति। यत्तु भवानस्मांश्चोदयति—'सन्ति पुनः केचिदन्येऽपि शब्दा येषा-

प्र०—इत्यर्थः। किं कृतमिति। एकश्चैकश्चेति विग्रहे कथं द्विशब्दः प्रवर्तेत इति प्रश्नः। अन्योन्यकृतमिति। परस्परापेक्षया द्वित्वोत्पत्तौ सत्यां प्रक्रियावाक्यमिदं भवति—द्वौ च द्वौ चेति। तत्रैको द्विशब्दः शिष्यते। मातेति। यथा सुतजन्मनः प्रागलब्धं मातृव्यपदेशं स्त्री पश्चाल्लभते, एवं सङ्ख्येयान्तरापेक्षायां सत्यां पूर्वमप्रवृत्तो द्विशब्दः पश्चात् प्रवर्तेत इत्यर्थः। अपायेष्वपीति। पुत्रविनाशेऽपि पितृव्यपदेशो न निवर्तते, पितृविनाशे पुत्रव्यपदेशः। चतुर्णां त्वेकाऽपाये नास्ति चतुःशब्दस्य प्रवृत्तिः। अन्यदिदानीमिति। अवश्यं साधर्म्ये सति वैधर्म्येण भाव्यम्। अन्यथा तत्त्वमेव स्यान्न तु साधर्म्यम्। यत्र साधर्म्यं तत्र वैधर्म्योद्भावने न कश्चिदपि हेतुः स्यादित्यर्थः। मात्रादयश्च शब्दाः सम्बन्ध्यन्तरापेक्षयैकस्मिन्नाश्रये वर्तन्त इति सम्बन्ध्यन्तरविनाशेपि आश्रयसद्भावाद्युक्तं यत्प्रवर्तन्ते। द्व्यादयस्तु समुदायनिवेशिन एकापाये तत्समुदायाऽभावात्कथं प्रवर्तेरन्।

उ०—त्वेते तथेति भावः। यदा त्विति। एकशेषं विनैवेत्यर्थः। ननु समुदायो नामार्थः, न च तस्यार्थोऽस्तीत्यत आह—समुदायवाचिन इति। प्रश्न इति। एकश्चैकश्चेति विग्रहे शिष्यमाणद्विशब्देन किं सादृश्यमित्यर्थः। परस्परेति। एकशब्दयोः सहविवक्षायां शिष्यमाणैकशब्दस्य तदर्थाभिधानाऽसामर्थ्यात् परस्परापेक्षयैकैकत्रार्थे द्वित्वोत्पत्तौ तदभिधानसमर्थशब्दप्रवृत्तिः, तदलौकिकं च द्वौ च द्वौ चेत्यादीति भावः। अन्योन्यापेक्षाकृतद्वित्वेन प्रत्येकं द्विशब्दप्रवृत्त्या सारूप्यमिति भाष्याक्षरार्थः। अत एवाग्रेऽन्योन्यकृतभावविषय एव प्रश्नः। अन्योन्यकृत इत्यस्य परस्परकृत इत्यर्थः। भावः—प्रवृत्तिनिमित्तम्। मातृपुत्रादिशब्दाश्च परस्परकृतमातृत्वपुत्रत्वादिनिबन्धनास्तदाह—यथेति। पुत्रविनाशेपीति। ननु पुत्रस्य बुद्धिस्थत्वेन तन्नाशेपि पितृव्यवहारोस्त्येव, 'भाविपुत्रस्य पिते'ति व्यवहारवत्। प्रकृतेप्येकस्य बुद्धिस्थत्वे तदपायेपि चतुरादिव्यवहार इति किं वैषम्यम्?, पुत्रस्याबुद्धिस्थत्वे तु तत्सत्त्वेपि न पितृव्यवहार इति चेन्न। 'नष्टस्य पिते'ति व्यवहारवन्नष्टंबुद्धिस्थं पदार्थमादायैकस्य विद्यमानत्वे 'द्वौ स्त' इत्यादिव्यवहाराऽभाव इति वैषम्यमित्याशयात्। नास्ति चतुःशब्दस्येति। एवं च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः। नन्वेवं परिहारे दृष्टान्तदार्ष्टान्तिकभावः क्वापि न स्यादित्याह—अन्यदिदानीमिति। तद्व्याचष्टे—अवश्यमिति। एवं चेदृशे विषये वैधर्म्योद्भावनमकिंचित्करमिति भावः। साधर्म्ये सत्यप्युक्तवैधर्म्ये बीजमाह—मात्रादय इति।

मन्योन्यकृतो भावः' इति, तत्रैतेऽस्माभिरुपन्यस्ताः । तत्रैतद्भवानाह—'सकृदेते शब्दाः प्रवृत्ता अपायेष्वपि वर्तन्ते' इति । एतच्च वार्तम् ।

'एकैको नोद्यन्तुं भारं शक्नोति यत्कथं तत्र ।
एकैकः कर्ता स्यात्सर्वे वा स्युः कथं युक्तम् ॥ १ ॥
कारणमुद्यमनं चैन्नोद्यच्छति चान्तरेण तत्तुल्यम् ।
तस्मात्पृथक् पृथक् ते कर्तारः सव्यपेक्षास्तु ॥ २ ॥

---

प्र०—एतच्च वार्तमिति । एतद्युक्तम्—यदाश्रयसन्निधानादेकाऽपायेपि मात्रादयस्तदपेक्षाः प्रवर्तन्त इत्यर्थः । इदानीमेतद्वैधर्म्यरहितं द्वितीयं दृष्टान्तं वक्ति—एकैक इति । यथोद्यन्तॄणां परस्परसन्निधिकृतं कर्तृत्वमेकैकापाये च निवर्तते तथा द्व्यादिव्यपदेशोऽपीत्यर्थः । कथं तत्रेति । 'न्याय्य'मित्यध्याहारः । एकैक इति । परस्परनिरपेक्ष इत्यर्थः । कारणमुद्यमनं चेदिति । कर्तृत्वप्रतीतावित्यर्थः । कार्यकल्पितत्वाच्छक्तीनामेवमुक्तम् । तत्तुल्यमिति । तेनोद्यन्त्रा तुल्यं द्वितीयमुद्यन्तारमन्तरेणेत्यर्थः । अथवा—तत्तुल्यमिति । द्व्यादिशब्देष्वप्येतत्तुल्यमित्यर्थः ।

प्रथमेति । एकस्मिन् पुरुषे क्रियाया एकत्वान्नास्त्येकशेषः, पुरुषभेदेन तु प्रत्यक्त्वपराग्भावादिभेदे विरोधात् क्रियाया अनेकत्वादेकशेषो वक्तव्यः । कृते चैकशेषे प्रकरणादिवशादर्थविशेषावसायः । यदा तु 'युष्मदस्मदी एवानेकार्थाभिधानसमर्थे'

---

उ०—आश्रयसद्भावादिति । सद्भावोऽत्र बुद्धिकृतस्तेन 'मृता माते'त्याद्युपपत्तिः । समुदायेति । इतरसाहित्यविशिष्टद्रव्यनिवेशिन इत्यर्थः । वार्तमित्यस्याऽसारमित्यर्थ इत्यन्ये । भाष्ये यदित्यस्य—यन्नेत्यर्थः । सर्वे । परस्परसापेक्षा इत्यर्थः । ननूद्यमनस्यैव कर्तृत्वप्रतीतौ कारणत्वात्तस्य च प्रत्येकवृत्तित्वादेकैक इत्येव युक्तं, तत्राह—कारणमुद्यमनं चेदिति । स्वतुल्यद्वितीयसहायं विनाप्युद्यमनं स्यान्न च तथा दृश्यते, तस्मात्परस्परसापेक्षं पृथक् पृथक्कर्तृत्वमित्यर्थः । एवं च तत्र यथाऽन्योन्यकृतेनोद्यमनकर्तृत्वरूपार्थेन प्रत्येकस्मिंस्तेन सह उद्यच्छतीतिशब्दस्तथान्योन्यसव्यपेक्षद्वित्वेनैकैकस्मिन्नपि द्विशब्दप्रवृत्तिरिति सिद्धमेकशेषशब्दत्वम् । द्वौ च द्वौ चेतिविग्रहः, द्वित्ववैशिष्ट्येन बोधाच्च प्रत्येकं द्विवचनं, प्रयोगे त्वेकशेषेणैव प्रयोगान्न कदाप्येकबोधो द्वावित्यतः । एवं चैको न द्वावित्याद्युपपन्नम् । द्वौ नैकस्त्रयो न द्वावित्येवंविधव्यवहारादुत्तरसंख्यायाः पूर्वसंख्याबाधकत्वमिति तत्त्वम् । अथवेति । अत्र पक्षे 'तत्तुल्य'मिति 'सव्यपेक्षास्त्वि'त्युत्तरं योज्यम् । नोद्यच्छति चान्तरेणेत्यत्र 'स्वसमकक्षं सहाय'मिति शेषो बोध्यः । वस्तुतो द्व्यादीनामेकशेषशब्दत्वाऽभावेपि नियमत उद्भूतावयवभेदसमुदायविवक्षणेन न कदाचिदपि द्व्यादिभ्य एकवचनम् । अयं वा नेम इति भाष्यस्यायमेवार्थः । एकशेषेणाप्ययमेवार्थः सूचित इति बोध्यम् । भाष्ये—प्रथमेति ।

**प्रथममध्यमोत्तमानामेकशेषोऽसरूपत्वात् ॥ २५ ॥**

प्रथममध्यमोत्तमानामेकशेषो वक्तव्यः। पचति च पचसि च पचथः। पचसि च पचामि च पचावः। पचति च पचसि च पचामि च पचामः। किं पुनः कारणं न सिध्यति ? 'असरूपत्वात्'।

**द्विवचनबहुवचनाऽप्रसिद्धिश्चैकार्थत्वात् ॥ २६ ॥**

द्विवचनबहुवचनयोश्चाऽप्रसिद्धिः। किं कारणम् ? 'एकार्थत्वात्'। एकोऽयमवशिष्यते तेनानेन तदर्थेन भवितव्यम्। किमर्थेन ? यदर्थ एकः। किमर्थश्चैकः ? एक एकार्थः।

**नैकार्थ्यम् ॥ २७ ॥**

नायमेकार्थः। किं तर्हि ? द्व्यर्थो बह्वर्थश्च।

**नैकार्थ्यमिति चेदारम्भानर्थक्यम् ॥ २८ ॥**

नैकार्थ्यमिति चेदेकशेषारम्भोऽनर्थकः स्यात् ॥ इह हि शब्दस्य स्वाभाविकी वाऽनेकार्थता स्याद्वाचनिकी वा। तद्यदि तावत्स्वाभाविकी—

**अशिष्य एकशेष एकेनोक्तत्वात् ॥ २९ ॥**

अशिष्य एकशेषः। किं कारणम् ? एकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्—'उक्तार्थानामप्रयोग' इति।

---

प्र०–इति पक्षः, अत्रापि च निवृत्तभेदाया एव क्रियाया आख्यातेनाभिधानं तदैकशेषो न वक्तव्यः। द्विवचनेति। प्रत्यर्थं शब्दनिवेशे एकैकः शब्द एकैकार्थाभिधायीति सह-विवक्षायां निवृत्तेषु शब्दान्तरेषु शिष्यमाणेन शब्देन स्वस्मिन्नेवैकत्रार्थे अवस्थेयमिति भावः। सर्वेषु पक्षेष्वयं दोषः—प्रातिपदिकैकशेषे द्विवचनबहुवचनानुत्पत्तिप्रसङ्गः, विभक्त्यन्तानां विभक्तौ वा परत एकशेषेऽर्थाभावाद् द्विवचनबहुवचनयोर्निवृत्ति-

---

उ०–प्रथमेन मध्यमः, प्रथमादिनोत्तम इति वक्तव्यमित्यर्थः। पुरुषे—प्रथमाद्यन्यतमे। एकत्वादिति। भेदावगमे हेतोरभावादित्यर्थः। प्रत्यक्त्वम्—अहंकारास्पदचैतन्यम्। पराक्त्वम्—तदास्पदचेतनत्वम्। आदिना प्रत्यक्षत्वपरोक्षत्वे। प्रकरणादीति। गार्ग्यो-वित्यत्र वृद्धयूनोरिवेति भावः। यदा त्विति। 'त्यदादीना'त्येकशेषारम्भादिति भावः। आख्यातेनाभिधानमिति। 'प्रथमत' इति शेषः। पश्चाद्द्वित्वादिप्रत्ययः समभिव्याहारा-

---

१—भाष्यमित्यन्ये।

अथ वाचनिकी, तद्वक्तव्यम्—'एकोयमवशिष्यते, स च द्व्यर्थो भवति बह्वर्थश्चे'ति। न वक्तव्यम्। सिद्धमेकशेष इत्येव। कथं पुनरेकोयमवशिष्यत इत्यनेन द्व्यर्थता बह्वर्थता वा शक्या लब्धुम्? तच्चैकशेषकृतम्। नह्यन्तरेण तद्वाचिनः शब्दस्य प्रयोगं तस्यार्थस्य गतिर्भवति। पश्यामश्च पुनरन्तरेणापि तद्वाचिनः शब्दस्य प्रयोगं तस्यार्थस्य गतिर्भवतीति। अग्निचित्सोमसुदिति यथा। ते मन्यामहे—लोपकृतमेतत्—'येनात्राऽन्तरेणापि तद्वाचिनः शब्दस्य प्रयोगं तस्यार्थस्य गतिर्भवती'ति। एवमिहाप्येकशेषकृतमेतत्—येनात्रैकोऽयमवशिष्यत इत्यनेन द्व्यर्थता बह्वर्थता वा भवति।

उच्येत तर्हि न तु गम्येत। यो हि गामश्व इति ब्रूयादश्वं वा गौरिति, न जातुचित्संप्रत्ययः स्यात्। तेनानेकार्थाभिधाने यत्नं कुर्वताऽवश्यं लोकः

प्र०—प्रसङ्गः। अथ स्वभावतः शिष्यमाणोऽनेकार्थः किमेकशेषेण। वाचनिकी वेति। यद्यपि सर्वमेव स्वाभाविकं तथापि यत्र प्रयोगविप्रयोगौ दृश्येते तत्र विप्रयोगनिवारणाय यदुच्यते तद्वाचनिकमभिधीयते। स च द्व्यर्थ इति। 'सरूपाणामेकशेषोऽनेकार्थश्चैकविभक्तौ' इति वक्तव्यमित्यर्थः। सिद्धमिति। एकशेषारम्भसामर्थ्यादयमर्थोऽवगम्यते—शिष्यमाणः शब्दोऽनेकार्थाभिधायीति। एकेन ह्यनेकार्थाभिधानायैकशेषः क्रियते। एकार्थाभिधाने त्वनेकशब्दाऽप्रसङ्गादनर्थक एकशेषः स्यादित्यर्थः। इतर एतत्सामर्थ्यमजानन्नाह—कथमिति। तच्चैकशेषकृतमिति। एकशेषविधानेनैतत्प्रतिप्रादितमित्यर्थः। लोपकृतमिति। लोपद्वारेणैतत्संगृहीतमित्यर्थः। अनेनेति। एकशेषविधानेन। उच्येतेति। वचनादनेकार्थकार्याणि प्रवर्तन्तां, यथा जात्याख्यायामेकस्मिन्निति, न त्वेकार्थः शब्द एकशेषविधानेनाऽनेकार्थः सम्पद्यत इत्यर्थः। गामश्व-

उ०—दिति भावः। एवं चेदं वचनमवैयाकरणतार्किकस्येति तात्पर्यम्। स्वरूपव्याक्रिययैव चास्य प्रत्याख्यातप्रायत्वाद् द्विवचनाद्यसिद्धेश्च नास्य विशिष्य प्रत्याख्यानं भाष्ये इति बोध्यम्। असरूपत्वादिति। असमानशब्दत्वादसमानार्थत्वाच्चेत्यर्थः। 'द्विवचने'त्यादिग्रन्थस्तु वृक्षावित्याद्यभिप्रायकः सूत्रं प्रत्याख्यातुम्। निवृत्तिप्रसङ्ग इति। जातनिवृत्तौ मानाऽभावात्तत्सत्त्वेपि तदर्थाऽभावेन तदबोधप्रसङ्ग इति वक्तुं युक्तम्। यद्यपीति। शब्दार्थसम्बन्धस्य नित्यत्वादिति भावः। विप्रयोगः। द्वन्द्वरूपः। एतत्प्रतिपादितमिति। भाष्ये—कृतमिति करोतिरेकशेषविधानसामर्थ्यलब्धप्रतिपादने वर्त्तते, तेन शब्दार्थसंबन्धनित्यत्वेपि न क्षतिरिति भावः। लोपस्याऽभावात्मकत्वात्तत्कृतत्वमर्थावगतेरनुपपन्नमत आह—लोपद्वारेणेति। एवं च शिष्यमाणस्य लुप्यमानार्थबोधकत्वमनुभवसिद्धमिति भावः। भाष्ये—बह्वर्थता वा भवतीति। वा चार्थे। क्वचित् चेत्येव पाठः। विद्यमानैव बोध्यते इत्यर्थः। एतदजानान इतरः शङ्कते—उच्येत तर्हीति। तद्व्याचष्टे—वचनादिति। शास्त्रस्य शास्त्रीयकार्यार्थत्वादिति

पृष्ठतोऽनुगन्तव्यः 'केष्वर्थेषु लौकिकाः कान् शब्दान्प्रयुञ्जते' इति। लोके चैकस्मिन् 'वृक्ष' इति प्रयुञ्जते, द्वयो 'वृक्षा'विति, बहुषु 'वृक्षा' इति। यदि तर्हि लोकोऽवश्यं शब्देषु प्रमाणं, किमर्थमेकशेष आरभ्यते ? अथ किमर्थं लोप आरभ्यते ? प्रत्ययलक्षणमाचार्यः प्रार्थयमानो लोपमारभते, एकशेषारम्भे पुनरस्य न किंचित्प्रयोजनमस्ति।

ननु चोक्तं 'प्रत्यर्थं शब्दनिवेशान्नैकेनाऽनेकस्याभिधान'मिति। यदि चैकेन शब्देनानेकस्याऽर्थस्याभिधानं स्यान्न प्रत्यर्थं शब्दनिवेशः कृतः स्यात्।

**प्रत्यर्थं शब्दनिवेशादेकेनानेकस्याऽभिधानादप्रत्यर्थमिति चेत्तदपि प्रत्यर्थमेव ॥ ३० ॥**

प्रत्यर्थं शब्दनिवेशादेकेनानेकस्याभिधानादप्रत्यर्थमिति चेदेवमुच्यते, यद्प्येकेनानेकस्याभिधानं भवति तदपि प्रत्यर्थमेव। यदपि ह्यर्थावर्थौ प्रति तदपि प्रत्यर्थमेव। यदपि ह्यर्थानर्थान्प्रति तदपि प्रत्यर्थमेव। 'यावतामभिधानं तावतां प्रयोगो न्याय्यः'। 'यावतामर्थानामभिधानं भवति तावतां शब्दानां प्रयोग इत्येष पक्षो न्याय्यः।

प्र०—इति। अश्वधर्मसमारोपः केवलं प्रतीयते, न तु तात्त्विकमश्वत्वमित्यर्थः। यदि तर्हीति। यदि च लोकः प्रमाणमित्यर्थः। 'उच्येत तर्ही'त्यतः प्रभृति सर्वो ग्रन्थ एकशेषप्रत्याख्यानवादिनः।

तदपि प्रत्यर्थमेवेति। अर्थो ह्यभिधेयमुच्यते। यश्च द्व्यर्थः शब्दो नाऽसौ द्व्यर्थतां जहाति, बह्वर्थश्च बह्वर्थतां, रोदसी दारा इति यथेत्यर्थः। यावतामिति। वृत्तश्च

उ०—भावः। संप्रत्ययः स्यादिति भाष्ये। अश्वत्वादिप्रमा स्यादित्यर्थः। 'तर्हि' शब्दस्य चाऽर्थतया व्याख्याने मानं दर्शयति—सर्वो ग्रन्थ इति। भाष्ये—अथ किमर्थं लोप इति। अग्निचिदित्यतो लोकत एव कर्त्रर्थप्रतीतिसिद्धेरिति भावः। प्रत्ययलक्षणमिति। अनेन लोपेनाऽनुत्पत्तेरेवाऽन्वाख्यानमित्युक्तम्। न प्रत्यर्थमिति। ततश्च वृक्षश्च वृक्षश्चेति वाक्यं न स्यादिति भावः। इतराऽभिमतमनूद्य दूषयति—प्रत्यर्थमित्यादि। प्रत्यर्थं शब्दनिवेशादेकेनानेकाभिधानाऽभावादेकशेष आरब्धव्योऽन्यथाऽप्रत्यर्थं स्यात्। एकेनाऽनेकस्याभिधाने प्रत्यर्थशब्दप्रयोगो न स्यादिति चेदित्यर्थः। यद्प्येकेनेति। अपिनैतत्सूचयति—'नैकेनैकस्याभिधानं वयं निराकुर्मः, किं तु सहविवक्षायामेकेनानेकाभिधानमपि स्वीकुर्मस्तेन वाक्यसिद्धिः। एकशेषारम्भश्च न कार्यः, द्वन्द्वस्य तु प्रयोगाऽदर्शनान्न तन्निवृत्त्यर्थोऽपि स' इति। तदपीति। स्वीयस्वीयाऽर्थात्याग एव प्रत्यर्थत्वमिति भावः। आरम्भवाद्याह—यावतामिति। एष एव

**'यावतामभिधानं तावतां प्रयोगो न्याय्य' इति चेदेकेनाप्यनेकस्याऽभिधानम् ॥ ३१ ॥**

'यावतामभिधानं तावतां प्रयोगो न्यांय्य' इति चेदेवमुच्यते । एषोपि न्याय्य एव—'यद्प्येकेनानेकस्याभिधानं भवति'।

यदि तर्ह्येकेनाऽनेकस्याभिधानं भवति—प्लक्षन्यग्रोधौ, 'एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः ।' एकेनोक्तत्वात्तस्याऽर्थस्यापरस्य प्रयोगेण न भवितव्यम् । किं कारणम् ? 'उक्तार्थानामप्रयोग' इति ।

**एकेनोक्तत्वादपरस्य प्रयोगोनुपपन्न इति चेदनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः ॥ ३२ ॥**

'एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न' इति चेदनुक्तः प्लक्षेण न्यग्रोधार्थ इति कृत्वा न्यग्रोधशब्दः प्रयुज्यते । कथमनुक्तो यदिदानीमेवोक्तमेकेनाप्यनेकस्याऽभिधानं भवतीति ? सरूपाणामेकेनाप्यनेकस्याभिधानं भवति न विरूपाणाम् ।

प्र०–वृत्तश्चेति दर्शनादनारब्ध एकशेषे अनेकार्थतैकस्य न स्यात् । एकेनापीति । सहविवक्षायामेक एव शब्द उद्भूतावयवभेदं समुदायमभिधत्त इत्यर्थः । प्लक्षन्यग्रोधाविति । अत्रापि सहविवक्षायां समुदायार्थप्रादुर्भावादेकेनैव समुदायस्य प्रतिपादनाद् द्वितीयस्य प्रयोगो न प्राप्नोतीत्यर्थः । अनुक्तत्वादिति । प्लक्षावित्युक्ते प्लक्षस्य प्लक्षान्तरेण सहत्वं गम्यते न तु न्यग्रोधेनेत्यर्थः । उभयदर्शनाच्चेति । सरूपस्य विरूपस्य चैकस्याऽनेकार्थाभिधायित्वदर्शनादित्यर्थः । द्यावेति । 'द्यो'शब्देन द्यावापृथिव्योरभिधानात्ततः परस्यौकारस्य सुपां सुलुगित्याकारः, गोतो णिदित्योकारान्तग्रहणाण्णित्वाद्वृद्धिरावादेशश्च । 'पृथिवी' इति द्विवचनान्तं, वा छन्दसीति पूर्वसवर्णदीर्घः । पृथिवीशब्देनाऽत्र दिवस्पृथिव्योरभिधानम् । विरूपाणामिति । प्रकरणादिवशाद्यत्रार्थविशेषावसायस्तत्र प्रवृत्तिनिमित्तभेदेपि विरूपोऽनेकार्थाभिधायी दृश्यते, तत्र सरूपः कथं न स्याद्यत्रैकं प्रवृत्तिनिमित्तमित्यर्थः । तदेवं द्रव्याभिधानपक्षेपि प्रत्याख्यात एकशेषः ।

उ०–न्याय्य इत्यर्थः । न्याय्यत्वं कुत इत्यत आह—वृत्तश्चेति । एकस्य न स्यादिति । 'प्रयोगे' इति शेषः । प्रत्याख्यानवादी आह—यद्प्येकेनेति । वृक्षावित्यादिदर्शनादिति भावः । सहेति । समुदायार्थप्रादुर्भावादिति भावः । द्विवचनाद्युत्पत्त्यर्थमाह—उद्भूतेति । आरम्भवाद्याह—यदीति । एकेनैवेति । युगपदधिकरणवचनतारीत्येत्यर्थः । प्लक्षान्तरेणेति । सजातीयत्वाञ्झटिति बुद्धिस्थेनेत्यर्थः । भाष्ये—एकेनापीति । अपिनाऽनेकेनापि । प्रत्याख्यानवाद्येव युक्त्यन्तरमाह—उभयदर्शनाच्चेति । उभयोरप्येकेनानेकार्थाभिधानदर्शनादित्यर्थः ।

किं पुनः कारणं सरूपाणामेकेनाप्यनेकस्याभिधानं भवति, न पुनर्विरूपाणाम् ?

**अभिधानं पुनः स्वाभाविकम् ॥ ३३ ॥**

स्वाभाविकमभिधानम् ।

**उभयदर्शनाच्च ॥ ३४ ॥**

उभयं खल्वपि दृश्यते । विरूपाणामप्येकेनानेकस्याभिधानं भवति । तद्यथा—'द्यावा॑ ह॒ क्षामा॑'† । 'द्यावा॑ चिदस्मै पृथि॒वी न॑मेते॒'‡ इति । विरूपाणां किल नामैकेनाऽनेकस्याभिधानं स्यात्किं पुनः सरूपाणाम् ।

**आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः ॥ ३५ ॥**

आकृत्यभिधानाद्वैकं शब्दं विभक्तौ वाजप्यायन आचार्यो न्याय्यं मन्यते । एकाऽऽकृतिः, सा चाभिधीयत इति । कथं पुनर्ज्ञायते—'एकाऽऽकृतिः सा चाभिधीयते' इति ।

**प्रख्याऽविशेषात् ॥ ३६ ॥**

नहि गौरित्युक्ते विशेषः प्रख्यायते—शुक्ला नीला कपिला कपोतिकेति ।

---

प्र०–अनेकार्थप्रक्रमे अनेकार्थे एक एव वृत्तशब्दः प्रयुज्यते, न तु द्वन्द्वः, अनभिधानात् । इदानीमाकृतिपक्षाश्रयेण प्रत्याख्यानं करोति—आकृत्यभिधानादिति । जातिः शब्दार्थः, तस्या एकत्वादनेकशब्दप्रयोगप्रसङ्ग एव नास्ति किमेकशेषेणेत्यर्थः । कथं पुनरिति । द्रव्यातिरेकेणाकृतेरनुपलम्भादभावं मन्यमानस्य प्रश्नः । प्रख्याविशेषादिति । प्रख्या-बुद्धिः, तस्या अविशेषादेकरूपत्वात्तद्विषयस्याप्यैक्यं प्रतीयते । गुणप्रमाणादि-भिन्नेष्वपि गोपिण्डेषु गौर्गौरित्येकाकारप्रत्ययोदयादवश्यमेकेनालम्बनेन सामान्येन भाव्यमिति जातिसद्भाव, एकत्वं चावसीयते । गौरित्युक्त इति । 'गो'रित्येतेन शब्दे-

---

उ०–तद्व्याचष्टे—सरूपस्य चेति । द्विवचनान्तमिति । अत एव पदकाले 'पृथिवी इति'-इति प्रगृह्यत्वम् । ननु द्यावेत्यादाविव क्षमावित्यादावपि विजातीयानेकार्थाभिधानं स्यादिति चेन्न । स्वभावेन वारणात् । यत्रैकं प्रवृत्तिनिमित्तमिति । तत्र शक्यतावच्छेदकप्रकारक-बोधाङ्गीकारे तदनुगतीकृतानेकव्यक्तिबोधो न्याय्य एवैकस्माद् द्रव्यपदार्थवादेपि । 'शुद्धव्यक्ति-बोध' इति वादिनां मतेपि प्रवृत्तिनिमित्तोपलक्षितानेकव्यक्तौ शक्तिग्रहात्तात्पर्यग्राहकसत्त्वे एकस्मादप्यनेकशुद्धव्यक्तिबोध इति सर्वथा द्रव्यपक्षेपि सूत्रं प्रत्याख्यातम् । इदमेव तन्त्रं—यदेकस्य युगपदनेकार्थबोधकत्वम् । तदाह—प्रत्याख्यात इति । इदं च प्रत्याख्यानमर्थस्यान्य-

---

† ऋग्वेदे १०. १२. १. ‡ ऋग्वेदे २. १२. १३,

यद्यपि तावत्प्रख्याऽविशेषाज्ज्ञायते—'एकाऽऽकृति'रिति, कुतस्त्वेतत्—साऽभिधीयत इति ?

**अव्यपवर्गगतेश्च ॥ ३७ ॥**

अव्यपवर्गगतेश्च मन्यामह 'आकृतिरभिधीयत' इति। नहि गौरित्युक्ते व्यपवर्गो गम्यते—शुक्ला नीला कपिला कपोतिकेति।

**ज्ञायते चैकोपदिष्टम् ॥ ३८ ॥**

ज्ञायते खल्वप्येकोपदिष्टम्। गौरस्य कदाचिदुपदिष्टो भवति। स तमन्यस्मिन्देशेऽन्यस्मिन्कालेऽन्यस्यां च वयोऽवस्थायां दृष्ट्वा जानाति—'अयं गौ'रिति।

---

प्र०-नोक्ते प्रत्यायिते सामान्यलक्षणेऽर्थविशेषानवधारणादैक्यं सामान्यस्याऽवसीयत इत्यर्थः। कुतस्त्वेतदिति। भवतु सामान्यमेकं, तस्य तु वाहदोहादिकायामर्थक्रियायामयोग्यत्वात्, द्रव्यस्यैव योग्यत्वादभिधानं न्याय्यमिति मत्वा प्रश्नः। अव्यपवर्गगतेश्चेति। अव्यपवर्गोऽभेदः—अविच्छेदः, अविशेषस्तस्य गतिः प्रतीतिरित्यर्थः। जातौ चाभिधीयमानायां द्रव्यद्वारका वाहदोहादय उपपद्यन्ते, जातितद्वतोश्चाभेदोपचाराद् गौः शुक्ल इति सामानाधिकरण्यादिव्यवहारोऽप्युपपद्यते। अथ 'प्रख्याविशेषादव्यपवर्गगतेश्चे'ति किमर्थमुभयोरुपादानम्, एकेनापि हेतुनैकत्वाभिधानयोः सिद्धत्वात्। नैष दोषः। अनभिधीयमानाऽपि जातिः संनिधिमात्रेण प्रख्याऽविशेषे निमित्तं भवतीति प्रख्याऽविशेषेण प्रत्यभिज्ञाप्रत्ययरूपेणैकत्वमेव प्रतिपादितं नाभिधानम्। तथा वनमिति सर्वविशेषाभ्यन्तरीकरणेनाव्यपवर्गगतावपि प्रख्याया अविशेषो नास्ति, भिन्नवृक्षालम्बनत्वाद्वनमिति प्रत्ययस्य। एकोपदिष्टमिति।

---

उ०—प्रमाणत्वादित्यनेन सूत्रकृताऽपि दर्शितप्रायमेव। नन्वेवमपि द्वन्द्वो दुर्वारोऽत आह—नत्विति। सहविवक्षायामेकजातीयार्थानेकशब्दप्रयोगादर्शनेन तदसाधुत्वप्रतिपादनार्थं सूत्रमिति भावः। एकाऽऽकृतिरिति भाष्यस्य—'अस्ती'ति शेषः। शब्दार्थः—शब्दजप्रतीतिविशेष्यः। बुद्धिरिति। प्रमात्मिकेत्यर्थः। ननु व्यक्त्यैक्ये स्यादेव प्रतीत्येकरूपतेत्यत आह—गुणेति। आलम्बनेनेति। विषयेणेत्यर्थः। प्रत्यायित इति। 'अनेकशोऽपी'त्यादिः। विशेषानवधारणादिति। 'आश्रयभेदेपी'त्यादिः। अविच्छेदं व्याचष्टे—अविशेष इति। तस्य गतिरिति। विशेषाऽनवगतेः पूर्वं सामान्यस्य शब्दतोऽवगतिरित्यर्थः। अयं भावः—गुणादिभिन्नेष्वनुस्यूतैकाकारप्रतीत्या जातिसिद्धौ तत्र शक्तिग्रहः। शब्दात्तस्या बोधश्च। व्यक्तीनां त्वानन्त्यात्तासु न शक्तिग्रहो, नापि शुद्धानां तासां बोधः, तासां विशेषरूपत्वेन विशेषावगतिप्रसङ्गात्। यथाकृतिरूपादिकं शाब्दबोधे भासते सामान्येन, तथा विशेषोऽपि भासेत। जातेः शक्यत्वे तु तदाश्रयत्वेनाक्षेपादिना सामान्याकृतिरूपादेरेव ग्रहण-

कः पुनरस्य विशेषः 'प्रख्याऽविशेषा'दित्यतः ? तस्यैवोपोद्बलकमेतत्—'प्रख्याविशेषाज्ज्ञायते चैकोपदिष्ट'मिति ।

**धर्मशास्त्रं च तथा ॥ ३९ ॥**

एवं च कृत्वा धर्मशास्त्रं प्रवृत्तं, 'ब्राह्मणो न हन्तव्यः' 'सुरा न पेये'ति ब्राह्मणमात्रं न हन्यते, सुरामा ' च न पीयते । यदि द्रव्यं पदार्थः स्यादेकं ब्राह्मणमहत्वैकां च सुरामपीत्वाऽन्यत्र कामचारः स्यात् ।

कः पुनरस्य विशेषोऽव्यपवर्गगतेश्चेत्यतः ? तस्यैवोपोद्बलकमेतत्—'अव्यपवर्गगतेश्च, धर्मशास्त्रं च तथे'ति ।

---

प्र०—एकस्मिन्नुपदिष्टं 'गौरयं त्वया पदा न स्प्रष्टव्य' इत्यादि वस्तु । अथवैकमुपदिष्टं यस्य तदेकोपदिष्टं सकृदुपदिष्टं गोत्वादि, सर्वत्र ज्ञायत इत्यर्थः । उपोद्बलकामिति । उद्गतं बलं—प्रत्यक्षं, तत्पूर्वकत्वादनुमानस्य । उद्बलस्य समीपमनुमानमित्यर्थः । 'प्रख्याविशेषा'दित्यनेन प्रत्यक्षं जात्यालम्बनं प्रमाणमुपन्यस्तम् । ततो विप्रतिपन्नप्रतिपादनायाऽनुमानमिह जातिसद्भावे 'ज्ञायते चैकोपदिष्ट'मित्यनेनोक्तम्, देशकालावस्थापिण्डान्तरेष्वबाधितप्रत्यभिज्ञाप्रत्ययोदयाऽन्यथाऽनुपपत्त्या सामान्यसद्भावोऽनुमीयते इत्यर्थः । अथवा बलमुद्दीपयत्युपोद्बलकमुपबृंहकमुच्यते । धर्मशास्त्रं च तथेति । अनेनैतद्दर्शयति, न सादृश्यैकार्थक्रियाकारित्वादिनिमित्ता भ्रान्ता प्रत्यभिज्ञा सर्वत्रेति ग्राह्यं, किं तर्हि ?, अभिन्नविषयनिमित्ता स्मृतिकाराणामप्यविगीतप्रमाणभावस्मृतोपनिबद्धवचनानां जात्याश्रयेण सर्वव्यवहारप्रवर्तनादित्यर्थः । एकं ब्राह्मणमिति । एकस्यैव द्रव्यस्य ब्राह्मणशब्दवाच्यत्वादिति भावः । तस्येति । अव्यपवर्गगतिरभ्रान्ता,

---

उ०—मिति न दोषः । प्रथमतो बालस्य यद्यपि विशेषव्यक्तावेव शक्तिग्रहस्तथाप्यावापोद्वापन्यायेन व्यक्त्यन्तरे आनयनादि दृष्ट्वा पूर्वजातशक्तिग्रहस्य जात्याश्रयमात्रे व्यवस्थितिरिति तत्त्वम् । वाहादिक्रिया तर्हि कथमत आह—द्रव्यद्वारका इति । आश्रये करणमेव जातौ तत्करणमिति भावः । अन्वयबोधे तु बाधज्ञानस्याऽप्रतिबन्धकत्वान्न तदनुपपत्तिः, जातीत्यादिप्रयासो वृथेति कश्चित् । सन्निधिमात्रेण—शक्तिग्रहे व्यक्तावुपलक्षणतामात्रेण । प्रत्यभिज्ञाप्रत्ययरूपेण—प्रत्यभिज्ञाविषयेण प्रत्ययेन । 'तदुच्चारितगोशब्दाद्यादृशः प्रत्ययस्तादृश एवैतदुच्चारितादित्येवं प्रत्यभिज्ञाविषयता, सा चैकाकारतां विनाऽनुपपन्नेति । द्वितीयेनाभिधाने सिद्धेऽप्येकत्वं न सिध्यतीत्याह—तथा वनमिति । अविशेष इति । एकरूपत्वमित्यर्थः । वनशब्देन कदाचिदाम्रसमुदायस्य, कदाचित् पलाशसमुदायस्य, कदाचित्खदिरसमुदायस्य कदाचिदाम्रादिसमुदायस्य प्रतीतेरिति तात्पर्यम् । तदाह—भिन्नवृत्तेति । एकत्वे युक्त्यन्तरमाह—ज्ञायते चैकेति । आद्यव्याख्यानेऽध्याहारभयाद्भाष्याऽस्वारस्याच्चाह—अथवेति । उपदिष्टमिति । भावे क्त इत्यर्थः । भाष्ये—कः पुनरिति । अनेनापि

## अस्ति चैकमनेकाधिकरणस्थं युगपत् ॥ ४० ॥

अस्ति खल्वप्येकमनेकाधिकरणस्थं युगपदुपलभ्यते । किम् ? आदित्यः । तद्यथा—एक आदित्योऽनेकाधिकरणस्थो युगपदुपलभ्यते ।

विषम उपन्यासः । नैको द्रष्टाऽऽदित्यमनेकाधिकरणस्थं युगपदुपलभते । एवं तर्हि—

## इतीन्द्रवद्विषयः ॥ ४१ ॥

तद्यथा एक इन्द्रोऽनेकस्मिन् क्रतुशत आहूतो युगपत्सर्वत्र भवति । एवमाकृतिरपि युगपत्सर्वत्र भविष्यति ॥ अवश्यं चैतदेवं विज्ञेयम्—'एकमनेकाधिकरणस्थं युगपदुपलभ्यत' इति ।

## नैकमनेकाधिकरणस्थं युगपदिति चेत्तथैकशेषे ॥ ४२ ॥

यो हि मन्यते—'नैकमनेकाधिकरणस्थं युगपदुपलभ्यत' इति, एकशेषे तस्य दोषः स्यात् । एकशेषेऽपि नैको वृक्षशब्दोऽनेकमर्थं युगपदभिदधीत ।

अवश्यं चैतदेवं विज्ञेयमाकृतिरभिधीयत इति ।

---

प्र०—स्मृतिकाराणामपि तत्रैवव्यवहारदर्शनादित्यर्थः । नन्वेकमनेकस्थं कथं भवति, नहि देवदत्तो युगपन्मथुरायां स्रुघ्ने च भवतीत्यत आह—अस्ति चेति । अवयवी यद्यप्यनेकावयवस्थस्तथापि तत्सद्भावे विवादान्नासौ दृष्टान्तत्वेनोपात्तः । इतीन्द्रवद्विषय इति । 'एकस्याप्यनेक' इति वाक्यशेषः । शब्दप्रादुर्भावेऽव्ययीभावे कृते वतिः प्रत्ययः । सर्वत्रेति । सर्वेषु यागेषु द्रव्यवदङ्गतां प्रतिपद्यत इत्यर्थः । एकशेषेऽपीति ।

---

उ०—प्रख्याऽविशेषस्यैवोपपादनादिति भावः । प्रत्यक्षमिति । प्रत्यक्षशब्देन शाब्दमप्यत्रोच्यते । तत इति । तत्रेत्यर्थः । विप्रतिपन्नेति । देहात्मप्रत्ययवद्भ्रान्तत्वशङ्कयेति भावः । प्रयोगस्तु 'विमतप्रत्ययो जातिविषयो, देशादिभेदेऽप्यबाधितैकाकारप्रत्ययत्वात् संमतव'दिति । अवस्थेति । अवस्थाकृतभेदोपपादनेन च न व्यक्त्यैक्यं विषय इति सूचितम् । प्रत्यभिज्ञाप्रत्ययेति । तद्विषयप्रत्ययेत्यर्थः । उपबृंहकमिति । भ्रान्तत्वाशङ्कानिवर्तनेन प्रमात्वनिर्वाहकस्तर्क इत्यर्थः । न सादृश्येति । सादृश्यरूपैकक्रियाकारित्वादिनिमित्तकभ्रमरूपा नेत्यर्थः । अविगीतः प्रमाणभावः—प्रमाणत्वं यस्य स्मृतस्य—स्मरणस्य पदार्थविषयकस्य तेनोपनिबद्धानि वचनानि यैस्तेषामित्यर्थः । द्रव्यस्य शब्दार्थत्वे ह्येकब्राह्मणवधनिषेधाद्येव प्रतीयेत । एकः क इति चेत् ? यो यस्य तद्वाक्यश्रवणकाले बुद्धिस्थः स इति गृहाण । जातेः पदार्थत्वे तु न दोष इति तात्पर्यम् । अन्यत्र कामचार इति । 'सर्वेषा'मिति शेषः । एकेनैकस्याऽहनने जातः शास्त्रार्थ इत्यन्यब्राह्मणविषये सर्वेषां कामचारः स्यादित्यर्थः । नन्वेकमिति । जातिरूपमित्यर्थः । तद्भावे विवादादिति । 'बौद्धादीना'मिति शेषः । किं सामस्त्येन प्रत्यवयवमवयवी नोपलभ्यत इति वैषम्यादपि स न दृष्टान्तित इति भावः । साकाङ्क्षत्वाद् वाक्य-

**द्रव्याभिधाने ह्याकृत्यसंप्रत्ययः ॥ ४३ ॥**

द्रव्याभिधाने सत्याकृतेरसंप्रत्ययः स्यात् ॥ तत्र को दोषः ?

**तत्राऽसर्वद्रव्यगतिः ॥ ४४ ॥**

तत्राऽसर्वद्रव्यगतिः प्राप्नोति । असर्वद्रव्यगतौ को दोषः ? 'गौरनुबन्ध्योऽजोऽग्नीषोमीयः' इति । एकः शास्त्रोक्तं कुर्वीत, अपरोऽशास्त्रोक्तम् । अशास्त्रोक्ते च क्रियमाणे विगुणं कर्म भवति, विगुणे च कर्मणि फलाऽनवाप्तिः ।

ननु च यस्याप्याकृतिः पदार्थस्तस्यापि, यद्यनवयवेन चोद्यते न चानुष्ठीयते विगुणं कर्म भवति, विगुणे च कर्मणि फलाऽनवाप्तिः । 'एकाऽऽकृति'-रिति च प्रतिज्ञा हीयेत । यच्चास्य पक्षस्योपादाने प्रयोजनम्—'एकशेषो न

---

प्र०-यद्येकस्याऽनेकसम्बन्धो नाभ्युपगम्यते तदैकः शब्दोऽनेकमर्थं सम्बन्धाऽभावान्न प्रत्याययेदित्यर्थः । उक्तमेवाऽर्थं समर्थयितुमाह—द्रव्याभिधाने हीति । श्रुतिस्मृतिविहितानां सर्वव्यवहाराणामप्रवृत्तिः स्यादित्यर्थः । ननु चेति । सर्वविषया चेदाकृतिश्चोद्यते तदा सर्वव्यक्तिविषयमनुष्ठानं विना वैगुण्यमेव स्यादित्यर्थः । अथाऽनुष्ठानसिद्ध्यर्थमेकद्रव्यविषयमेव कर्म क्रियते तत्राप्युच्यते—एकाकृतिरिति चेति । 'च'-

---

उ०-स्याह—एकस्यापीति । 'एकस्याप्यनेक' इति पाठः । एकस्यापीन्द्रशब्दस्य यथाऽनेको यागोऽङ्गित्वेन विषय एकबोधज्ञानविषयश्च, एकदेशावच्छिन्नानेकयागेषु तथा दर्शनसंभवात्तथैकस्या अपि जातेरनेको विषय आश्रयतयेत्यर्थः । 'अनेकस्य' इति पाठे एकोऽपि यथा इन्द्रशब्दोऽनेकयागस्थ एकस्यापि बोद्धुर्विषयस्तथा जातिरपीत्यर्थः । अव्ययीभावे इति । इन्द्रस्य प्रादुर्भाव इत्यर्थः । सर्वेष्विति । प्रादुर्भावविषयेन्द्रशब्दरूपा तद्बोध्या वा एका देवता ब्रीह्यादिद्रव्यवत्सर्वयागेष्वङ्गतां युगपत्प्रतिपद्यत इत्यर्थः । भाष्येपि इन्द्रः—इन्द्रशब्दः । आहूतः—प्रादुर्भूतः । युगपत्सर्वत्राङ्गं भवतीत्यर्थः । यदीति । अनेकाधिकरणस्थपदेनाऽनेकसंबन्धो विवक्षित इत्यर्थः । एवं चैकः शब्दो यथाऽनेकत्रार्थे एकेन युगपद् गृह्यते तथा जातिरपीत्यर्थः । भाष्ये—अपरोऽशास्त्रोक्तमिति । एकः शब्दः प्रत्यर्थनिवेशित्वादेकं द्रव्यं गोरूपं बोधयेत्, तस्य केनचिदालम्भे कृते परैस्तेन वा गवान्तरालम्भेऽशास्त्रार्थः स्यात् । एवं 'न ब्राह्मण'मित्यादावप्येकस्य ब्राह्मणस्याऽवधो विषयस्तत्राऽन्यविषये सर्वेषां कामचारेण प्रवृत्तावपि न प्रायश्चित्तं स्यादिति बोध्यम् । सर्वपुरुषान् प्रत्येकव्यक्तेरेव बोधनमित्यभिमानः । अथानुष्ठानेति । अयं भावः—जातेः साक्षादनुबन्धनाद्यसम्भवाद्व्यक्तिद्वारा तदाच्यं, तत्राऽनुष्ठानसिद्ध्यर्थमेकप्रयोगे एकव्यक्तिद्वारकमेव तदाश्रीयते । तत्राकृतेरेकत्वे विनिगमनाविरहात्सर्वव्यक्तिद्वारकमेव तदाश्रीयेत । आकृतेरनेकत्वे तु प्रतिज्ञाहानिरिति । पूर्वोऽरुच्याऽस्याऽवतारणाच्चशब्दोऽनुपपन्नोऽत आह—तुशब्दस्यार्थे इति । भाष्ये—अनवयवेनेति । जात्याश्रया व्यक्तिविशेषा 'अवयवा' इत्युच्यन्ते । अनवयवेन । व्यक्तिविशेषानालम्बनेनेत्यर्थः । नन्वा-

वक्तव्य' इति, स चेदानीं वक्तव्यो भवति। एवं तर्ह्यनवयवेन चोद्यते, प्रत्येकं च परिसमाप्यते, यथाऽऽदित्यः। ननु च यस्यापि द्रव्यं पदार्थस्तस्याप्यनवयवेन चोद्यते, प्रत्येकं च परिसमाप्यते। एकशेषस्त्वया वक्तव्यः। त्वयाऽपि तर्हि द्विवचनबहुवचनानि साध्यानि।

**चोदनायां चैकस्योपाधिवृत्तेः ॥ ४५ ॥**

चोदनायां चैकस्योपाधिवृत्तेर्मन्यामहे—'आकृतिरभिधीयत' इति।

---

प्र०—शब्दस्तुशब्दस्याऽर्थे, वक्ष्यमाणार्थाऽपेक्षया समुच्चये वा। स चेदानीमिति। एकत्वे जातेरेकशब्दप्रवृत्तेः सिद्धत्वादेकशेषारम्भः प्रत्याख्यायते। अनेकत्वे त्वारब्धव्य एवैकशेष इत्यर्थः।

एवं तर्हीति। सर्वाभिर्व्यक्तिभिः संबन्धस्य तुल्यत्वात्सर्वत्रैवाऽभिन्नबुद्ध्युत्पादनात्प्रत्येकं परिसमाप्तत्वादेकस्मिन्नभिः द्रव्ये तत्कर्म क्रियमाणं जातौ कृतमेव भवतीत्यर्थः। यथादित्य इति। प्रतिदेशं यथा सर्वात्मनाऽऽदित्य उपलभ्यते तथा जातिरपीत्यर्थः। ननु चेति। द्रव्येऽपि पदार्थे जातेरनभिधेयाया उपलक्षणत्वेनाश्रयणात् परित्यक्तभेदं द्रव्यमात्रं विशिष्टजातियुक्तं शब्देनोच्यते। प्रत्येकं च परिसमाप्यत इति। 'शास्त्र'मित्यध्याहारः। अथवा जातिरुपलक्षणभूता प्रत्येकं परिसमाप्यत इति व्याख्येयम्। एकशेषस्त्वयेति। जात्युपलक्षितस्य द्रव्यस्य शब्देनाभिधाने सत्यभिधेयानेकत्वेनाऽनेकशब्दत्वप्रसङ्गादित्यर्थः। त्वयापीति। जातेरेकत्वाद् द्वित्वबहुत्वनिबन्धनानि द्विवचनबहुवचनानि न सिध्यन्तीति भावः। एवं भाष्यकारेण पक्षयोः साम्यं दर्शितम्। वाक्यकारस्तु जातिपक्षाश्रयणस्य प्रयोजनानि समुच्चयेनाऽऽचष्टे—चोदनायां चैकस्येति। सामान्यस्य—आग्नेयादेः। उपाधिवृत्तेरिति। अष्टाकपालत्वादिरुपाधिः, तस्य वृत्तिः—प्रवृत्तिः। एतदुक्तं भवति—'यदि आग्नेयादिशब्देन सामान्यमभिधीयते तदा तेनाऽशेषद्रव्याणामाक्षेपात्प्रतिद्रव्यमष्टाकपालत्वमुपाधिर्युज्यते। द्रव्ये तु पदार्थे एके-

---

उ०—अयभेदात्तन्नेदोऽत आह—सर्वाभिरिति। भेदकाऽभावान्न भेद इति भावः। प्रत्यक्षाविरोधाद्ग्राहकमानविरोधाच्च भेदाऽनुमानमसङ्गतमिति भावः। नन्वादित्यस्य प्रत्येकं समाप्त्यभावेन दृष्टान्ताऽसङ्गतिं मत्वाह—प्रतिदेशमिति। अनभिधेयाया इति। शक्यतावच्छेदकमशक्यमेवेत्यर्थः। यद्वा प्राधान्येनाऽनभिधेयाया इत्यर्थः। परित्यक्तभेदमिति। परित्यक्ताऽवान्तरभेदभित्यर्थः। ननु द्रव्यस्य प्रत्येकं समाप्तेः प्रकृतेऽनुपयोगोऽत आह—शास्त्रमिति। शब्देनाभिधाने इति। प्राधान्येनेत्यर्थः। नन्वेवं 'चोदनायां चैकस्ये'ति चोऽनुपपन्न इत्यत आह—वाक्यकार इति। प्रयोजनानि। प्रयोजनान्तराणि। समुच्चयेनेति। 'द्रव्याभिधाने ह्याकृत्यसंप्रत्ययः' इत्यनेन समुच्चय इति बोध्यम्। एकस्याग्नेयादेर्य उपाधिरष्टाकपालत्वादिस्तस्य पुनः पुनः प्रवृत्तेरिति वार्तिकार्थः। समासश्चार्षत्वात्। एकस्येति व्याचष्टे—सामान्यस्येत्यादि। 'अष्टाकपालत्वादी'त्यादिपदेन निर्वापः। अत एव भाष्ये स एव दर्शितः—'एकं

'आग्नेयमष्टाकपालं निर्वपेत्' एकं निरुप्य द्वितीयस्तृतीयश्च निरुप्यते। यदि च द्रव्यं पदार्थः स्यादेकं निरुप्य द्वितीयस्य तृतीयस्य च निर्वपणं न प्रकल्पेत।

कः पुनरेतयोर्जातिचोदनयोर्विशेषः ? एका निर्वृत्तेन, अपरा निर्वर्त्येन।

**द्रव्याभिधानं व्याडिः ॥ ४६ ॥**

द्रव्याभिधानं व्याडिराचार्यो न्याय्यं मन्यते—'द्रव्यमभिधीयत' इति।

**तथा च लिङ्गवचनसिद्धिः ॥ ४७ ॥**

एवं च कृत्वा लिङ्गवचनानि सिद्धानि भवन्ति। ब्राह्मणी ब्राह्मणः ब्राह्मणौ ब्राह्मणा इति।

**चोदनासु च तस्यारम्भात् ॥ ४८ ॥**

चोदनासु च तस्यारम्भान्मन्यामहे—'द्रव्यमभिधीयत' इति। 'गौरनु-

---

प्र०—नैव यजमानेन सकृदेवाऽष्टाकपालः पुरोडाशो निरुप्येत, नाऽन्येन नाप्यन्यदेत्यर्थः। कः पुनरिति। 'गौरनुबन्ध्यः' इति, 'आग्नेयमष्टाकपाल'मिति चानयोरित्यर्थः। एका निर्वृत्तेनेति। निष्पन्नो हि पशुर्यागसाधनायोपादीयते। अपरा निर्वर्त्येनेति। आग्नेयोऽष्टाकपालश्चोदनयैवोत्पाद्यते न तु चोदनायाः पूर्वं निष्पन्न इत्यर्थः। तत्र निर्वृत्ते भेदाऽग्रहणाद् द्रव्यान्तरेऽपि प्रवृत्तिः स्यान्न तु निर्वर्त्ये, सादृश्याऽग्रहणादित्यवश्याश्रयणीया जातिः। द्रव्याभिधानमिति। जातेर्वृत्तिविकल्पाऽक्षमत्वेनाऽभावं मन्यमानो व्याडिर्द्रव्यमेव शब्देनाऽभिधीयत इति मन्यते।

---

उ०—निरुप्ये'त्यादिना। प्रवृत्तिरिति। पुनः पुनर्वृत्तिरित्यर्थः। उत्पाद्यत इति। उत्पाद्यत्वेन बोध्यत इत्यर्थः। ननु प्रकारभेदेऽपि द्वितीयोपन्यासे किं बीजमत आह—तत्रेति। 'रूपसामान्याद्वा सिद्ध'मिति अइउणितिसूत्रस्थभाष्यरीत्या निष्पन्ने। 'इदमभिधेयं' 'नेद'मिति विवेकाऽग्रहादित्यर्थः। ननु तत्राप्युक्तरीत्यैव प्रवृत्तिः स्यादत आह—सादृश्येति। तस्य ससंबन्धिकत्वेन प्रतियोग्यन्तरानुपस्थितेरिति भावः। ननु व्यक्तिशक्तावानन्त्यव्यभिचारयोः सत्त्वाज्जातौ शक्तिरित्याशङ्क्य जातिरेव नास्तीत्याह—वृत्तिविकल्पेति। जातिर्न तावद् द्रव्येषु व्यासज्यवृत्तिः, एकाश्रयनाशेऽप्रतीत्यापत्तेः। किं च 'गामालभेते'त्यादिनोदनासु सर्वद्रव्यालम्भापत्तिः। प्रत्येकसमाप्तौ तु द्रव्यान्तरे तदनापत्तिः, तत्रापि सत्त्वे 'एकाकृति'रिति प्रतिज्ञाहानिरित्यर्थः। 'तत्तत्संस्थानाद्युपलक्षितमधिष्ठानचैतन्यमेव द्रव्य'मिति नाऽनन्त्यव्यभिचाराविति तात्पर्यम्। भाष्ये चोदनास्विति। प्रवर्तकवाक्येषु, तस्य—द्रव्यस्य आरम्भणात्। इदमुपलक्षणम्—आरम्भणालम्भनादिकरणादित्यर्थः। तत्रारम्भणं—क्रयो, बन्धनं वा।

बन्ध्योऽजोग्नीषोमीय' इति। आकृतौ चोदितायां द्रव्य आरम्भणालम्भन-प्रोक्षणविशसनादीनि क्रियन्ते।

**न चैकमनेकाधिकरणस्थं युगपत् ॥ ४९ ॥**

न खल्वेप्येकमनेकाधिकरणस्थं युगपदुपलभ्यते। नह्येको देवदत्तो युगपत्स्रुघ्ने भवति मथुरायां च।

**विनाशे प्रादुर्भावे च सर्वं तथा स्यात् ॥ ५० ॥**

किम्? विनश्येच्च प्रादुःष्याच्च। 'श्वा मृतः' इति, श्वा नाम लोके न प्रचरेत्। 'गौर्जातः' इति, सर्वं गोभूतमनवकाशं स्यात्।

प्र०- आकृतौ चोदितायामिति। आकृतिवादिपक्षे शब्देनाकृतिश्चोद्यते, द्रव्ये तु कार्यं प्रवर्त्तते, अयुक्तं चैतत्, नह्यन्यस्य चोदनेऽन्यस्य कार्ये क्रियमाणे यथोक्तं कृतं भवति। तस्माद् द्रव्यमेव शब्देनोच्यत इति न्याय्यम्। न चैकमिति। न च हेतुरहितेनादित्यदृष्टान्तेन साध्यसिद्धिर्भवति, देवदत्तदृष्टान्तेन विपर्ययस्यापि साधनात्। श्वा मृत इति। अभिव्यञ्जकविनाशे जातेस्तिरोभावात्पिण्डान्तरे श्वेति प्रत्ययो न स्यात्, शतप्रत्यय इवैकाऽपाय इत्यर्थः। यद्वा आश्रयाऽपाये आश्रितस्याप्यपायोऽवयवापाये अवयविन इवेति जातेर्विनाशप्रसङ्ग इत्यर्थः। गौर्जात इति। जातेन गोपिण्डेन गोत्वमभिव्यक्तव्यं, तच्च सर्वाश्रयवर्तीति एकगोपिण्डप्रत्यक्षत्वे सर्वगोपिण्डप्रत्यक्षत्वप्रसङ्गः। अनवकाशमिति। पदार्थान्तरप्रत्ययस्याऽवकाशाऽभावात्। अथवा सर्ववस्तुव्यापि गोत्वमेष्टव्यम्। अन्यथा—

उ०-जातिवादे दूषणमाह भाष्ये— आकृतौ चोदितायामिति। कार्यसंबन्धित्वेन चोदितायामित्यर्थः। तच्छेपपूरणेन व्याचष्टे—अयुक्तमित्यादिना। तत्रैव दूषणान्तरं—नचैकमिति। विपर्ययस्यापीति। सत्प्रतिपक्षसंभवादित्यर्थः। एवं चानेकद्रव्यगतैका जातिरभ्युपगन्तुमेव न शक्यत इति भावः। ननु जातेर्नित्यत्वात्कथं नाशादि। किं चैकनाशेपि व्यक्त्यन्तरेणाऽभिव्यक्तजात्या श्वा प्रचरेदेवेत्यत आह—अभिव्यञ्जकेति। 'व्यासज्यवृत्तिर्जातिः सर्वव्यक्तिभिः संभूयाऽभिव्यज्यते' इति मते इदं दूषणम्। जातेर्नाशश्च तिरोभाव एवेत्यर्थः। एवं च 'श्वा नाम लोके न संचरे'[1]दिति भाष्यस्य,—व्यक्त्यन्तरे श्वप्रत्ययविषयो—न सञ्चरेत्—न स्यादित्यर्थः। एवं विनाशपदं व्यक्तिषु ध्वंसपरं, 'तथे'ति परामृष्टमाकृतौ तिरोधानपरमित्ययुक्तमिति मत्वाह—यद्वेति। आवियको धर्मविशेषो जातिरिति भावः। जातेनेति। व्यासज्यसर्वाश्रयवृत्ति गोत्वं सर्वाश्रयज्ञानैरभिव्यङ्क्तव्यमन्यथा गोत्वज्ञानमेव न स्यादित्यर्थः। अस्तु तर्हि तत्प्रत्यक्षत्वाय तदाश्रयसर्वस्य प्रत्यक्षत्वमत आह भाष्ये—अनवकाशमिति। अर्थान्तरप्रत्ययावकाशरहितं गोभूतं गोत्वप्रत्यक्षाय गोरूपं वस्तु सर्वं प्रत्यक्षं स्यात्। गोव्यक्तीनामनन्तत्वादनवकाशत्वमित्यर्थः। न विद्यतेऽवकाशो यस्मादिति बहुव्रीहि-

१—'सञ्चरे'दित्युद्द्योतपाठः।

**अस्ति च वैरूप्यम् ॥ ५१ ॥**

अस्ति खल्वपि वैरूप्यं—'गौश्च गौश्च', खण्डो मुण्ड इति ।

**तथा च विग्रहः ॥ ५२ ॥**

एवं च कृत्वा विग्रह उपपन्नो भवति—गौश्च गौश्चेति ।

**व्यर्थेषु च मुक्तसंशयम् ॥ ५३ ॥**

व्यर्थेषु च मुक्तसंशयं भवति । आकृतावपि पदार्थ एकशेषो वक्तव्यः । अक्षाः पादा माषा इति ।

---

प्र०- 'नायाति न च तत्रासीदस्ति पश्चान्न चांशवत् ।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥'

[ इति दोषापत्तिः । ततश्च— ]

'व्यक्त्यैवैकत्र सा व्यक्ता ऽभेदात्सर्वत्रगा यदि ।
जातिर्दृश्येत सर्वत्र'—

इति, सर्वेषु पदार्थेषु गोप्रत्ययप्रसङ्गः । अस्ति च वैरूप्यमिति । तस्माद् द्रव्यमेवास्तु, न तु सामान्यम् । नह्येकस्य भेदाऽभेदौ विरुद्धावुपपद्येते इत्यर्थः । एकार्थक्रियाकारित्वादिनिमित्तस्तु प्रत्यभिज्ञाप्रत्ययः । गौ[ श्चगौ ]श्चेति । भेदाधिष्ठानः समुच्चयः सामान्यस्यैकत्वाऽभिधेयत्वयोने स्यादित्यर्थः । आकृतावपीति । यदर्थमाकृतिपक्षपरिग्रहस्तदेव न सिध्यति, नहि शकटाक्षदेवनाक्षादिष्वेकाकृतिसद्भावः ।

---

उ०-रिति तात्पर्यम् । अत्र पक्षेऽध्याहारक्लेशात्पक्षात्पक्षान्तरमाह—अथवेति । नायातीति । उत्पन्ने गवि व्यक्त्यन्तरादायातीति न शक्यं वक्तुं, तस्य निष्क्रियत्वात् । 'न याती'ति पाठे—उत्पन्नव्यक्तिं व्यक्त्यन्तरादागत्य न प्राप्नोतीत्यर्थः । न च तत्रासीदिति । प्रागाश्रयाऽभावादित्यर्थः । तत्रैव हेतुमाह—अस्ति पश्चादिति । यतः पश्चादेवाऽस्ति अतः पूर्वं नाऽसीदित्यर्थः । एतेन 'मा यासीन्मा च भूत्तत्र गोत्व'मिति परास्तम् । ननु सक्रियत्वमङ्गीकृत्यांऽशेनागमनमस्त्वत आह—न चांशवदिति । निरवयवत्वेनांऽशाऽभावादित्यर्थः । ननु पूर्वमाधारं त्यक्त्वाऽत्रैवायातीत्यत आह—जहातीति । पूर्वत्रापि प्रतीतेरिति भावः । तस्मात्सर्वगैकेति वाच्यं, ततश्च कयाचिद्व्यक्त्यैव व्यक्ता साऽभेदात्सर्वगेति वाच्यम् । ततश्च सर्वत्र दृश्येत । तदाह—सर्वेष्विति । अत्र पक्षे—गोभूतमभिव्यक्तगोत्वेन व्याप्तं तुल्यव्यक्तित्वेन जात्यन्तरावकाशरहितं सर्वं स्यादिति भाष्यार्थः । जातिसङ्करप्रसङ्गश्चेत्यपि बोध्यम् । नहीति । एवं च तत्तच्छब्दप्रतिपाद्ये एकस्मिन्विरुद्धधर्मोपपत्तेरभावाद् द्रव्यमेव पदार्थ इति भावः । भाष्ये—गौश्च गौश्चेत्यनेनाभिप्रेतं वैरूप्यमुपपादयति—भेदेति । एवं खण्डो गौर्मुण्डो गौरिति च न स्यादिति भावः । प्रत्यभिज्ञाप्रत्ययः—तद्विषयः । भाष्ये—अस्ति च वैरूप्यमिति वाक्यस्थ'च'शब्दं व्याचष्टे—तथा च विग्रह इति । एकार्थत्वे पर्यायाणामिव सहप्रयोगो न स्यादिति भावः । भाष्ये—व्यर्थेष्विति । विजातीयाऽनेकार्थसरूपशब्देष्वित्यर्थः । मुक्तसंशयमिति । 'एकशेषाङ्गीकरण'मिति शेषः । जात्यभावो व्याडिमते उक्तस्तं निरस्यति—आकृति-

## लिङ्गवचनसिद्धिर्गुणस्याऽनित्यत्वात् ॥ ५४ ॥

लिङ्गवचनानि सिद्धानि भवन्ति । कुतः ? 'गुणस्यानित्यत्वात्' । अनित्या गुणा अपायिन उपायिनश्च । किं य एते शुक्लादयः ? 'ने'त्याह । स्त्रीपुंनपुंसकानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च । कदाचिदाकृतिरेकत्वेन युज्यते, कदाचिद् द्वित्वेन, कदाचिद् बहुत्वेन, कदाचित्स्त्रीत्वेन, कदाचित्पुंस्त्वेन, कदाचिन्नपुंसकत्वेन ।

भवेल्लिङ्गपरिहार उपपन्नः, वचनपरिहारस्तु नोपपद्यते । यदि हि कदाचिदाकृतिरेकत्वेन युज्यते कदाचिद्द्वित्वेन कदाचिद् बहुत्वेन 'एकाऽऽकृति'रिति प्रतिज्ञा हीयेत, यच्चास्य पक्षस्योपादाने प्रयोजनमुक्तम् 'एकशेषो न वक्तव्यः' इति, स चेदानीं वक्तव्यो भवति । एवं तर्हि—लिङ्गवचनसिद्धिर्गुणविवक्षाऽनित्यत्वात् । लिङ्गवचनानि सिद्धानि भवन्ति । कुतः ? 'गुणविवक्षाया

प्र०— इदानीमाकृतिवादी दोषान्परिहर्त्तुमाह—लिङ्गेति । आकृतिसद्भावः पूर्वमेव प्रत्यक्षानुमानागमप्रवृत्तिभिः प्रतिपादितः, सर्वगतत्वेऽपि पदार्थानां विचित्रशक्तियोगात्कश्चित् पदार्थः कांचिदेवाकृतिमभिव्यनक्ति न तु सर्वां सर्वः । गुणाश्चाऽत्र द्वित्वस्त्रीत्वादयो विवक्षिताः । तैश्चाकृतेरेकार्थसमवायलक्षणः संबन्ध इत्याकृतावपि पदार्थे लिङ्गसङ्ख्यासिद्धिरित्यर्थः । अनित्या इति । कदाचित्स्त्रीत्वयुक्तेन पिण्डेनाऽऽकृतिर्व्यज्यते, कदाचित्पुंस्त्वयुक्तेन । कदाचिदेकाधारस्था प्रतिपाद्यते, कदाचिनेकाधारस्थेत्यर्थः । किं य एत इति । ते हि गुणत्वेन प्रसिद्धाः, न च तदनित्यत्वं लिङ्गवचनसिद्धौ हेतुरुपपद्यत इति प्रश्नः । प्रकरणादर्थनिश्चय इत्याह—नेत्याहेति । वचनपरिहारस्त्विति । लिङ्गपरिहारे न किंचिद् दुष्यति, वचनपरिहारे त्वभिधीयमाने 'एकाकृति'रिति प्रतिज्ञाहानिः, द्वित्वबहुत्वसंबन्धस्याऽप्यभ्युपगमात् । द्विवचनबहुवचनवदनेकशब्दत्वमपि प्राप्नोतीत्येकशेषोऽपि वक्तव्य इत्यर्थः । गुणविवक्षाऽनित्यत्वादिति । स्वत आकृतेरेकत्वं, द्रव्यगतद्वित्वबहुत्वविवक्षायां तु द्विवचनबहुवचने भवतः । आश्रयधर्मैराश्रितानां

उ०—सद्भाव इति । 'अथवे'त्यादिना व्याख्यातं 'सर्वं गोभूत'मित्यादिदोषं परिहरति—सर्वगतत्वेपीति । सङ्करोपि न, परस्परपरिहारेण भिन्नवस्तुनिष्ठानामेवैकत्र स्थितेः सङ्करत्वात्, न स गोत्वादीनामिति भावः । आद्यव्याख्यारीत्या दोषस्तु जातेः प्रत्येकं परिसमाप्त्यङ्गीकारेण सूद्धरः एकैकव्यक्तिव्यङ्ग्यत्वाच्च न 'विनाशे'त्यादिदोषः । न तु सर्वामिति । यथात्मनां व्यापकत्वेपि क्वचिच्छरीरे कश्चिदेवात्मास्फुरिति न सर्वः सर्वत्र तद्वदित्यर्थः । एकार्थसमवायेति । तेन च निमित्तेन जातौ लिङ्गसङ्ख्यारोप इत्यर्थः । भाष्ये—गुणस्येति । जातावेकवचनम् । अनित्या इति । अनियता इत्यर्थः । अपायित्वोपायित्वाभ्यामनियतत्वमेव भाष्ये दर्शितम् ।

अनित्यत्वात्'। अनित्या गुणविवक्षा। कदाचिदाकृतिरेकत्वेन विवक्षिता भवति, कदाचिद्द्वित्वेन, कदाचिद् बहुत्वेन, कदाचित्स्त्रीत्वेन, कदाचित्पुंस्त्वेन, कदाचिन्नपुंसकत्वेन।

भवेल्लिङ्गपरिहार उपपन्नः, वचनपरिहारस्तु नोपपद्यते। यदि कदाचिदाकृतिरेकत्वेन विवक्षिता भवति कदाचिद्द्वित्वेन कदाचिद् बहुत्वेन, 'एकाऽऽकृति'-रिति च प्रतिज्ञा हीयेत, यच्चास्य पक्षस्योपादाने प्रयोजनमुक्तम्—'एकशेषो न वक्तव्य' इति, स चेदानीं वक्तव्यो भवति।

लिङ्गपरिहारश्चापि नोपपद्यते। किं कारणम्? आविष्टलिङ्गा जातिर्यल्लिङ्ग-मुपादाय प्रवर्त्तत उत्पत्तिप्रभृत्याविनाशात्तल्लिङ्गं न जहाति। तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यं कश्चित्स्वकृतान्त आस्थेयः। कोऽसौ स्वकृतान्तः?

प्र०—व्यपदेशः। यथा 'संपन्नो यवो' 'विनष्टो यव' इति संपत्तिविनाशाभ्यां द्रव्यगताभ्यां जातिर्व्यपदिश्यते, तथा लिङ्गसङ्ख्याभ्यामपीत्यर्थः। भवेदिति। अभ्युपगमे विरोधाऽभावात्। वचनपरिहारस्त्वभ्युपगमं विरुणद्धि। द्वित्वबहुत्वयोगाभ्युपगमेनैकत्वहानाद-नेकशब्दत्वप्रसङ्गाच्चेत्यर्थः। लिङ्गपरिहारश्चापीति। 'विशेषणानां चाजाते'रित्यत्रोक्त-'माविष्टलिङ्गा जाति'रिति। ततश्चैकमेवाश्रयगतं लिङ्गमुपादत्ते सर्वदा जातिः। यथा ग्राम्यपशुजातयः संघे स्त्रीत्वमेवोपाददते—'गाव इमा' इति, अन्यास्तु पुंस्त्वमेव, 'ब्राह्मणा इमे' इति यथेत्यर्थः। तस्मादिति। सिद्धान्तवादी युक्तं पक्षमाश्रयति। लौकिकमिति। स्तनकेशादिसंबन्ध इत्यर्थः। तस्मिन्नाश्रीयमाणे लिङ्गान्तरेण सम्बन्धो

उ०— बहुवचनवदिति। आश्रयगतसङ्ख्यावदाश्रयबोधे दृष्टानेकशब्दत्वमपि प्राप्नोतीत्य-भिमानः। जातिर्व्यपदिश्यत इति। 'यव' इत्येकवचनेन तत्र जातिप्राधान्याऽवगमादिति भावः। एवं चाऽऽरोपितद्वित्वादिना न प्रतिज्ञाहान्यादीति तात्पर्यम्। अभ्युपगममिति। 'गौण्य-प्युत्तरा सङ्ख्या पूर्वां सङ्ख्यां बाधत' इति भावः। आविष्टलिङ्गेति। स्वाश्रयेऽनेकलिङ्गसत्त्वेऽपि स्वयं यत्किंचिदेकमेवोपादत्ते। तथा चाऽनेकलिङ्गत्वाऽसिद्धिरिति भावः। उक्तमेवाऽर्थं दृष्टान्तेनाह—ततश्चेति। न चैवं लिङ्गस्याऽसिद्धिः, कुतः?, ब्राह्मणीशब्दवाच्यया जात्या आश्रयगतं स्त्रीत्वमेवोपादीयते, ब्राह्मणशब्दवाच्यया पुंस्त्वमेवेति व्यवस्थासंभवादिति वाच्यम्। ब्राह्मणी पदार्थः, इयं ब्राह्मणव्यक्तिरिदं ब्राह्मणवस्तु, ब्राह्मणी दारा इत्यादिव्यवहारानुपपत्ते-रित्याशयःत्। सिद्धान्तवादीति। आकृतिवादीत्यर्थः। स्तनकेशादीति। केशो—भगम्। लिङ्गान्तरेणेति। 'ब्राह्मणी दारा' इत्यादौ द्रव्यद्वारा जातेर्लिङ्गान्तरेण योगो न स्यात्। तटस्त-टीत्यादौ च कस्यापि लिङ्गस्य योगो न स्यादिति भावः। शब्दविशेषाऽपेक्षया तु जातेराविष्ट-लिङ्गत्वोक्तिरिति तात्पर्यम्। भाष्ये—कृतान्तः—सिद्धान्तः। किमिति। संस्त्यानप्रसव-

## संस्त्यानप्रसवौ लिङ्गम् ।

संस्त्यानप्रसवौ लिङ्गमास्थेयौ । किमिदं संस्त्यानप्रसवाविति ?

**संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप्प्रसवे पुमान् ।**

ननु च लोकेपि स्त्यायतेरेव स्त्री, सूतेश्च पुमान् ? अधिकरणसाधना लोके स्त्री—स्त्यायत्यस्यां गर्भ इति । कर्तृसाधनश्च पुमान्—सूते पुमानिति । इह पुनरुभयं भावसाधनं—स्त्यानं प्रवृत्तिश्च । कस्य पुनः स्त्यानं स्त्री, प्रवृत्तिर्वा पुमान् ? गुणानाम् । केषाम् ? शब्दस्पर्शरूपरसगन्धानाम् । सर्वाश्च पुनर्मूर्तय एवमात्मिकाः—संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः । यत्राल्पीयांसो गुणास्तत्राऽवरतस्त्रयः—शब्दः स्पर्शो रूपमिति । रसगन्धौ न सर्वत्र । प्रवृत्तिः खल्वपि नित्या । नहीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, वर्द्धते यावदनेन वर्द्धितव्यमपचयेन वा युज्यते । तच्चोभयं सर्वत्र । यद्युभयं सर्वत्र, कुतो व्यवस्था ? विवक्षातः । संस्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्, उभयोरप्यविवक्षायां नपुंसकम् । तत्र 'लिङ्गवचनसिद्धिर्गुणविवक्षाऽनित्यत्वा'-दिति लिङ्गपरिहार उपपन्नः ।

---

प्र०—न स्यात् । तस्मात्स्वसिद्धान्तव्यवस्थाश्रीयते । गुणानां सत्त्वरजस्तमःपरिणामरूपाणां शब्दादीनां वृद्धिह्रासमध्यस्थाऽवस्थाः शब्दैकगोचरा लिङ्गत्वेन परिगृह्यन्ते । आत्म-

---

उ०—शब्दयोः कोऽर्थ इति प्रश्नः । उत्तरं—संस्त्यान इति । संस्त्यानेऽभिधेये स्त्यायतेर्ड्रट्प्रत्ययान्तः स्त्रीशब्द इत्यर्थः । सूतेः सप्—सकारस्य पकार इत्यर्थः । प्रसवेऽभिधेये पुमानिति शब्दः । गर्भः—शुक्रं, स्त्यायति—शोणितेन संघीभवतीत्यर्थः । सूते—शुक्रं त्यजति, योनिरूपे आधारे । स्त्यानम्—अपचयः । प्रवृत्तिर्वृद्धिः । शब्देत्यादि । इदमुपलक्षणं सत्त्वादिकार्यमात्रस्येति बोध्यम् । उपलक्षणत्वं ध्वनयन्नुक्तयोर्व्याप्तिमाह—सर्वाश्चेति । मूर्तयः—पदार्थाः । 'एवमात्मिका' इत्यस्य विवरणं—संस्त्यानेत्यादि गन्धवत्य इत्यन्तम् । पृथिव्यपेक्षयाऽप्सु अल्पे, अप्पृथिवीभ्यां तेजसि अल्पे, इत्यल्पीयांसः । त्रय इत्युपलक्षणं वायौ रूपाऽभावात्, आकाशे स्पर्शस्याऽप्यभावाच्च । वस्तुतस्तेजोबन्नरूपाणां सर्वमूर्तीनां त्रिवृत्करणमात्राभिप्रायेणेदमुक्तम् । वाय्वाकाशशब्दवाच्ययोर्लिङ्गव्यवहारस्तु ईश्वर इव स्वकार्यतेजोऽबन्नगतोपचयारोपेणेति बोध्यम् । प्रवृत्तिः खल्वपीति । परिणाम इत्यर्थः । प्रतिक्षणपरिणामित्वाद्वस्तूनाम् । नहीति । अस्याऽवतिष्ठत इत्यनेनान्वयः । 'किं तु परिणमत एवे'ति शेषः । तच्चोभयमिति । वृद्ध्यपचयरूपमित्यर्थः । सर्वत्रेति । पदार्थ इत्यर्थः । सर्वदेत्यपि बोध्यम् । कैयटे—गुणानामिति, शब्दादीनामित्युपलक्षणं सत्त्वकार्यमात्रस्य । अन्यथा शब्दे लिङ्ग-

वचनपरिहारस्तु नोपपद्यते । वचनपरिहारश्चाप्युपपन्नः । इदं तावदयं प्रष्टव्यः—'अथ यस्य द्रव्यं पदार्थः कथं तस्य एकवचनद्विवचनबहुवचनानि भवन्ती'ति ? एवं स वक्ष्यति—'एकस्मिन्नेकवचनं, द्वयोर्द्विवचनं, बहुषु बहुवचन'-मिति । यदि तस्यापि वाचनिकानि न स्वाभाविकान्यहमप्येवं वक्ष्यामि—'एकस्मिन्नेकवचनं द्वयोर्द्विवचनं बहुषु बहुवचन'मिति । नह्याकृतिपदार्थिकस्य द्रव्यं न पदार्थो, द्रव्यपदार्थिकस्य वाऽऽकृतिर्न पदार्थः । उभयोरुभयं पदार्थः । कस्यचित्तु किंचित्प्रधानभूतं किंचिद् गुणभूतम् । आकृतिपदार्थिकस्याकृतिः प्रधानभूता, द्रव्यं गुणभूतम् । द्रव्यपदार्थिकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता ।

गुणवचनवद्वा ॥ ५५ ॥

गुणवचनवद्वा लिङ्गवचनानि भविष्यन्ति । तद्यथा—गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति—शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः शुक्लौ कम्बलौ, शुक्लाः कम्बला इति । यदसौ द्रव्यं श्रितो भवति

---

प्र०-नत्स्वपरिणामिरूपत्वादप्रवृत्तिधर्मत्वेप्यन्यप्रवृत्त्यनुयायित्वाल्लिङ्गयोगः । वाचनिकानीति । संकीर्णप्रयोगोपलम्भादसङ्करार्थो यथा द्रव्यपदार्थिकस्य वाचनिको वचननियमस्तथाऽऽकृतिवादिनोपि । स ह्येवं व्याचष्टे—एकाश्रयसंबन्धविवक्षायामाकृतेरेकवचनं, यथा पशुना यजेतेति । अनेकाश्रयसंबन्धविवक्षायां द्विवचनबहुवचने । ननु द्रव्यस्याऽनभिधेयत्वात्कथं तत्कृत आकृतेर्वचनोपकार इत्याह—नहीति । तत्र यथा पचति पचतः पचन्तीति क्रियाप्राधान्येपि साधनसंख्याकृतो वचनभेद एवमाकृतिप्राधान्येऽपि द्रव्यसंख्याकृत इत्यदोषः । यदसाविति । जातितद्वतोरभेदाध्यवसायाद् द्रव्यात्मा जातिः

---

उ०-व्यवहारो न स्यात् । तासां लिङ्गत्वे प्रमाणं दर्शयति—शब्दैकेति । शब्दजन्यबोधविषया इत्यर्थः । अप्रवृत्तिधर्मत्वेपि—स्वतो लिङ्गरहितत्वेपि । अन्यप्रवृत्त्यनुयायित्वादिति । परिणामवदन्यतादात्म्याध्यासेन तत्परिणामानुयायित्वादित्यर्थः । एवं च प्रवृत्तिपरिणामविशेषरूपजातेः स्वत एव लिङ्गयोग इति तात्पर्यम् । भाष्ये— कथं तस्येति । 'असङ्करेणे'ति शेषः । ननु शब्दनित्यतायां 'वाचनिकानी'त्ययुक्तमत आह— संकीर्णेति । 'गोदौ' 'पञ्चाला' इत्यादावेकत्रापि द्विवचनादिदर्शनेन साङ्कर्यमिति भावः । व्याचष्टे इति । 'द्व्येकयो'रित्यादिसूत्राणीति भावः । अभिधेयत्वेप्युपसर्जनत्वात्कथं तत्कृत उपकारोऽत आह—तत्र यथेति । भाष्ये—द्रव्यं गुणभूतमिति । अस्योपपत्तिरुक्ता 'जात्याख्याया'मितिसूत्रे । साधनसङ्ख्याकृत इति । साधनसङ्ख्यारोपकृत इत्यर्थः । इत्यदोष इति । एवं च लिङ्गयोगः स्वत एव, सङ्ख्यायोगस्त्वारोपेण । 'एका आकृति'रिति प्रतिज्ञा चाऽनारोपितसङ्ख्याभिप्राया । नाप्येकशेषारम्भः, अनेकशब्दप्रयोगे मानाऽभावादिति तात्पर्यम् । अत्र भाष्ये द्रव्यपदार्थवादे आकृते-

गुणस्तस्य यल्लिङ्गं वचनं च तद् गुणस्यापि भवति। एवमिहापि यदसौ द्रव्यं श्रिताऽऽकृतिस्तस्य यल्लिङ्गं वचनं च तदाकृतेरपि भविष्यति।

**अधिकरणगतिः साहचर्यात् ॥ ५६ ॥**

आकृतावारम्भणादीनां संभवो नास्तीति कृत्वाऽऽकृतिसहचरिते द्रव्य आरम्भणादीनि भविष्यन्ति।

**न चैकमनेकाधिकरणस्थं युगपदित्यादित्यवद्विषयः ॥ ५७ ॥**

न खल्वप्येकमनेकाधिकरणस्थं युगपदुपलभ्यत इत्यादित्यवद्विषयो भविष्यति। तद्यथा—एक आदित्योऽनेकाधिकरणस्थो युगपदुपलभ्यते।

विषम उपन्यासः। नैको द्रष्टाऽनेकाधिकरणस्थमादित्यं युगपदुपलभते।

एवं तर्हि—'इतीन्द्रवद्विषयः'। तद्यथैक इन्द्रोऽनेकस्मिन्क्रतुशत आहूतो युगपत्सर्वत्र भवत्येवमाकृतिर्युगपत्सर्वत्र भवेदिति।

**अविनाशोऽनाश्रितत्वात् ॥ ५८ ॥**

---

प्र०-प्रतीयमाना तद्गतलिङ्गसङ्ख्याग्राहिणीत्यर्थः। 'चोदनासु च तस्यारम्भा'दिति यदुक्तं तत्परिहारार्थमाह—अधिकरणगतिरिति। 'यथा'ऽग्निरानीयता'मित्युक्ते केवलस्याग्नेरानयनाऽसंभवान्नान्तरीयकत्वादचोदितमपि पात्रमानीयते, एतदेवाग्नेरानयनं यत्पात्रस्थस्य, तथा आकृतावारम्भणादीनि चोद्यमानानि सामर्थ्यात्साहचर्याद् द्रव्यमभिनिविशन्ते। सर्व एवाकृतेः क्रियायोगोऽन्तर्भावितद्रव्याया एवेति द्रव्य-

---

उ०—विशेषणत्वोक्त्या तज्जात्यनुगतीकृतानेकव्यक्तिबोधस्यैकस्मादेव शब्दात्सम्भवेन नानाशब्दप्रयोगाऽप्राप्त्या तत्पक्षेऽप्येकशेषो न कार्य इति सूचितम्। जातिवादे व्यक्तिर्द्रव्यवादे जातिः शक्यतातच्छेदिकेति च सूचितम्। ननु 'गुणवचनाना'मित्यादिवचनात्तत्रास्तु तथा, इह त्वजातिरिति निषेधात्कथं तत्प्रवृत्तिरत आह—जातितद्वतोरिति। न त्वत्र तद्वचनप्राप्तिः। अत एव 'गुणवचनव'दिति भाष्य उक्तमिति भावः। यद्यपि जातेराश्रयतो न लिङ्गादीति 'विशेषणानां चे'त्यत्रोक्तम्, तथापि विशेष्यगतलिङ्गादिनिषेधः सः। तत्राश्रयपदेन विशेष्यग्रहणात्। इह त्वाश्रयपदेनाऽऽधारो गृह्यत इति न विरोध इति भावः। अत्र चाऽभेद एव बीजं, 'यो यदभेदमापन्नः स स्वाऽभिन्नाश्रयगतलिङ्गवचनादिग्राही'ति नियमात्। इयांस्तु विशेषः शुक्लादिशब्दवाच्यगुणानां गुणिना भेदाऽभेदविवक्षे, शब्दवाच्यजातेस्त्वभेदविवक्षैवेति। परे तु तयोरभेदमादाय ग्रन्थयोजने तदभेदादेवारम्भणादीन्यपि तत्र भविष्यन्तीत्यधिकरणगतिरित्युत्तरग्रन्थानुत्थानमतो गुणवचनानां विशेष्यगतलिङ्गादिग्राहित्ववज्जातेराश्रयगत-

---

१—'भविष्यति' कीलहार्नपाठः।

द्रव्यविनाशे आकृतेरविनाशः । कुतः ? 'अनाश्रितत्वात्' । अनाश्रिताऽऽकृतिर्द्रव्यम् ।

किमुच्यते 'अनाश्रितत्वा'दिति, यदिदानीमेवोक्तम्—'अधिकरणगतिः साहचर्या'दिति ?

एवं तर्हि—'अविनाशोऽनैकात्म्यात्' । द्रव्यविनाशे आकृतेरविनाशः । कुतः ? 'अनैकात्म्यात्' । अनेक आत्माऽऽकृतेर्द्रव्यस्य च । तद्यथा—वृक्षस्थोऽवतानो वृक्षे छिन्नेऽपि न विनश्यति ।

---

प्र०—द्वारकः संपद्यते । अनाश्रितत्वादिति । यथा गुणानां द्रव्याधीनस्थितित्वादाश्रितत्वं, नैवमाकृतेः । अन्यथापि प्रत्ययाभिधानयोराकृतिनिमित्तयोर्भावान्नित्यत्वं तस्या इत्यर्थः । इतरः सम्बन्धमात्रमाश्रितत्वं मत्वा पृच्छति—किमुच्यत इति । अनैकात्म्यादिति । पूर्वोक्त एवाऽर्थो विशिष्याऽनेन प्रतिपाद्यते । नित्या आकृतिरेका सर्वत्रगा, तद्विपरीतं द्रव्यमिति भेदाद् द्रव्यविनाशेपि न जातेर्विनाशः । गुणानां तु द्रव्याधीनस्थित्युत्पत्तित्वादाश्रयनाशेऽवश्यं नाश इति न तैर्व्यभिचारः । वृक्षस्थोऽवतान इति । यथा वृक्षस्योपरि द्राक्षादिलताऽवतानः स्थितो न वृक्षविनाशमनु विनश्यति तथा जाति-

---

उ०—लिङ्गादिग्राहित्वं स्वभावादित्येतद्भाष्यार्थमाहुः । भाष्ये—आकृताविति । 'प्रधानभूताया'मित्यादि । आकृतिरेव तज्जन्यबोधे प्रधानं, क्रिया तु पात्रे इव द्रव्य इति भावः । शाब्दबोधे तु न बाधज्ञानं प्रतिबन्धकमिति न तदनुपपत्तिः । सर्व एवेति । 'गौरानीयता'मित्यादिरपीत्यर्थः । भाष्ये—आरम्भणं—क्रयः । आलम्भनं स्पर्शः । आकृतिसहचरिते इति । आकृत्याश्रये इत्यर्थः । इतीन्द्रवदिति । स्वभावाद्धेतुरहितदृष्टान्तेनाप्यनेकवृत्तित्वं जातेरभ्युपगम्यत इत्यर्थः । नन्वनेकव्यक्तिवृत्तीति सामान्यलक्षणविरुद्धमेतदत आह—यथेति । द्रव्याधीनस्थितिकत्वमाश्रितत्वं विवक्षितमित्यर्थः । अन्यथापीति । कर्णशष्कुल्यनधीनस्थितिकस्याप्याकाशस्य तदवच्छिन्नतया श्रोत्ररूपत्ववद् द्रव्यमनाश्रितस्यापि महासामान्यस्य नित्यस्य गवादिद्रव्यपरिच्छिन्नतया गोत्वादिरूपतेत्यर्थः । 'अन्यत्रापी'ति क्वचित् पाठः । तत्र व्यक्त्यन्तर इत्यर्थः । प्रत्ययो—ज्ञानम् । अभिधानं—शब्दः । पूर्वोक्त एवेति । अनाश्रितत्वादित्येष एवेत्यर्थः । भेदादिति । नित्यमेकमनेकव्यक्तिवृत्ति सामान्यम्, तद्विपरीतं द्रव्यमिति भेद इत्यर्थः । अनैकात्म्यादित्यस्य भिन्नस्वभावत्वादित्यर्थ इति भावः । ननु विग्रहसत्त्वे द्वन्द्वापत्तिरत उक्तं—समुच्चयोपपत्त्येति । तत्र तु सहविवक्षाऽभावान्न द्वन्द्व इति भावः । सहविवक्षायां तु न तथा प्रयोगोऽनभिधानादिति बोध्यम् । द्रव्यगतलिङ्गादिग्राहित्ववत्तद्गतभेदग्राहित्वमपि तस्या इति बोध्यम् । भिन्नास्विति । आश्रयभेदात्कर्मभेदाच्चेत्यर्थः । तदेवेति । समवेतसमवायेनेत्यर्थः ।

**वैरूप्यविग्रहौ द्रव्यभेदात् ॥ ५९ ॥**

वैरूप्यविग्रहावपि द्रव्यभेदाद्भविष्यतः ।

**व्यर्थेषु च सामान्यात्सिद्धम् ॥ ६० ॥**

विभिन्नार्थेषु च सामान्यात्सिद्धं सर्वम् । अश्नोतेरक्षः, पद्यतेः पादः, मिमीतेर्माषः । तत्र क्रियासामान्यात्सिद्धम् ।

अपरस्त्वाह—पुराकल्प एतदासीत्षोडश माषाः कार्षापणं, षोडश पलाश्च[1] माषशम्बत्यः । तत्र सङ्ख्यासामान्यात्सिद्धम् ॥६४॥

प्र०—रपीत्यर्थः । वैरूप्यविग्रहाविति । द्रव्याणां स्वगतभेदप्रतिबद्धौ वैरूप्यग्रहावित्यर्थः । तत्र द्रव्यगतभेदोपचारादेकस्यामप्याकृतौ समुच्चयोपपत्त्या विग्रहो न विरुध्यते । क्रियासामान्यादिति । भिन्नासु क्रियासु अभिन्नप्रत्ययाभिधाननिमित्तं यत्सामान्यं तदेव द्रव्येष्वपि तन्निमित्तं भवति । यथा 'पाचक' इत्याश्रयान्तरगतमपि हि सामान्यं समवेतसमवायाद् द्रव्ये उपकरोति । यथा गैरिकादिगतं लौहित्यं संयुक्तसमवायात्पटे लौहित्यप्रत्ययमादधाति । पुराकल्प इति । पुरा कल्पे प्रसिद्धोऽर्थः संप्रति निमित्ताऽभावेपि तथैव व्यपदिश्यते । माषशंवट्य इति । तत्र षोडशभागत्वेन माषः प्रसिद्धस्तथैव कार्षापणे माषः [ षोडशभाग इति ] षोडशभागत्वं नाम सामान्यमुपादत्ते माषशब्द इति सिद्धमेकशब्दत्वम् । संख्यासामान्यादिति । संख्यैव सामान्यम्, अभिन्नप्रत्ययहेतुत्वात् । ननु षोडशसंख्या षोडशसु पदार्थेषु व्यासज्य स्थिता न त्वेकस्मिन्षोडशे । एवं तर्हि षोडशसंख्यापूरणत्वं नाम यत्सामान्यं तत्संख्यामूलत्वात्संख्यासामान्यमुच्यत इत्यदोषः । अथ 'डित्था' इति भिन्नेषु संज्ञिष्वेकाकृत्ययोगात्कथमेकशब्दवाच्यत्वम् ? । उच्यते—भिन्नडित्थशब्दगतं डित्थशब्दत्वं नाम यथा शब्देष्वभिन्न-

उ०—आश्रयान्तरगतं—पाकक्रियागतम् । सामान्यं—पाकत्वादि । परम्परयोपकर्तृत्वे दृष्टान्तमाह—यथेति । एवं च व्याप्यादिगतसामान्यस्य परम्परया द्रव्ये सत्त्वेन तत्तज्जातिविशिष्टस्य द्रव्यस्य वाच्यत्वमिति भावः । न चैवं नानाऽर्थोच्छेदः, नानाजातीनां संबन्धघटकत्वेन नानार्थत्वोपपत्तेः । तत्तत्क्रियारूपसामान्यसमनियतस्याक्षत्वादेर्जातिरूपस्याऽक्षपदार्थत्रयसाधारणस्यापि शक्यतावच्छेदकत्वशक्यत्वान्यतराङ्गीकारात्सिद्धमिति भाष्यार्थमन्ये । सूत्रारम्भेऽपीदमावश्यकम्, एकरूपेणैव सर्वार्थबोधादिति भाव इति बोध्यम् । नन्विदानीन्तनमाषस्य षोडशभागवत्वाऽभावात्कथं सङ्ख्यासामान्यमत आह—पुरेति । व्यपदिश्यते इति । आरोपादिति भावः । माषशम्बत्यां—माषः षोडशभागपलरूपः । कार्षापणे माषः—पञ्चगुञ्जामितः षोडशो भागः, तयोः षोडशभागत्वेन सामान्येन सर्वेषु माषत्वव्यवहारः । इदानीं त्वष्टगुञ्जमितमाषे षोडशत्वमारोप्य तथा प्रयोग इति भावः । ननु सङ्ख्यागतं सामान्यं सङ्ख्याशब्दप्रवृत्तावेव कारणमत आह—सङ्ख्यैवेति । तत्सङ्ख्येति । सङ्ख्यामूलकत्वादित्यर्थः ।

१—'फलाश्चे'ति पाठान्तरम् ।

## वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥ १ । २ । ६५ ॥

इह कस्मान्न भवति—अजश्च बर्करश्च, अश्वश्च किशोरश्च, उष्ट्रश्च करभश्चेति ? 'तल्लक्षणश्चेदेव विशेषः' इत्युच्यते न चात्र तल्लक्षण एव विशेषः। तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः ॥६५॥

---

प्र०-प्रत्ययाभिधानहेतुस्तथा 'सोऽय'मिति शब्दार्थयोरभेदाध्यवसायादध्यस्तडित्थशब्देषु संज्ञिष्वपि सम्बन्धिसंबन्धादभिन्नप्रत्ययाभिधाननिमित्तमिति सिद्धमेकशब्दवाच्यत्वम्। तथा तावित्येताविति च परोक्षत्वप्रत्यक्षत्वादिकं सामान्यमाश्रयणीयम्। गोत्वाऽश्वत्वे सामान्ये इति व्यावृत्तेष्वनुवृत्तप्रत्ययहेतु सामान्यानामपि सामान्यमाश्रयितव्यम्। अथवा 'निःसामान्यानि सामान्यानी'ति तैर्थिक दर्शनं न वैयाकरणैर्नियोगत आस्थेयम्। कार्योन्नीयमांना हि तेषां पदार्था इति सामान्येष्वपि सामान्यमस्ति। 'अभावाश्चत्वार' इत्यत्रापि निरुपाख्यत्वं सामान्यं कल्पनीयम्। तदेवं सर्वत्राकृतिसद्भावात्सिद्धमेकशब्दत्वम् ॥६४॥

वृद्धो। इह कस्मादिति। उभयगतिरिह शास्त्रे सम्भवतीति मत्वा प्रश्नः। अथवा वृद्धशब्द इहि शास्त्रेऽपत्यविशेषे न परिभाषित इति स तावद्वयोवाची गृह्यते। तत्साहचर्याच्च युवशब्दोऽपि तथैवेति प्रश्नः। अजोष्ट्राऽश्वशब्दानां जातिशब्दत्वेऽप्यत्र शब्दान्तरसन्निधानाद् वृद्धावस्थाभिधायित्वं द्रष्टव्यम्। अन्यथा सामान्यविशेषशब्दानां द्वन्द्वो न स्यात्। सामान्यशब्देन सर्वविशेषाणामाक्षेपाद्विशेषैः सह समुच्चयाऽभावात्। वक्ष्यमाणं मनसि कृत्वाह—तल्लक्षणश्चेदिति। इतरोऽगृहीताभिप्राय आह—तल्लक्षण इति। परिहारस्तूत्तरत्र वक्ष्यते ॥६५॥

---

उ०-अभिन्नप्रत्ययः—एकाकारप्रत्ययः। अभिधानं—शब्दप्रयोगः। परोक्षत्वेति। इदं बुद्धिविषयतावच्छेदकावच्छिन्नत्वादीनामुपलक्षणम्। तैर्थिका[1]—वैशेषिकादयः। निरुपाख्यत्वं—विशिष्य निर्वक्तुमशक्यत्वम्। तत्समनियतो जातिविशेषोऽभावत्वमेव सर्वत्रेत्यन्ये ॥६४॥

वृद्धो यूना। अजबर्करादीनां वृद्धयुवसंज्ञकत्वाऽभावादाह—उभयेति। अथवेति। स्वशास्त्रीयवृद्धसंज्ञकं तु न गृह्यते, व्याख्यानादिति बोध्यम्। सामान्यविशेषवाचिनां सहविवक्षाऽभावाद् द्वन्द्वाऽभावेन तदपवादैकशेषस्याऽप्यप्राप्तेराह—अजोष्ट्रेति। यद्यपि करभकिशोरशब्दौ शावकवचनौ तथापि भाष्यप्रामाण्यात्तरुणवचनौ बोध्यौ। बर्करस्तरुणोऽजः। समुच्चायाऽभावादिति। सहविवक्षाऽभावादित्यर्थः। वक्ष्यमाणम्—'यत्रोर्ध्वं प्रकृते'-रित्यादि। उत्तरत्र—'भ्रातृपुत्रा'वित्यत्र ॥६५॥

---

१—तार्किकाः पा०।

## स्त्री पुंवच्च ॥ १ । २ । ६६ ॥

इदं सर्वेष्वेव स्त्रीग्रहणेषु विचार्यते—'स्त्रीग्रहणेषु स्त्रीप्रत्ययग्रहणं वा स्यात्, स्त्र्यर्थग्रहणं वा, स्त्रीशब्दग्रहणं वे'ति । किं चातः ? यदि प्रत्ययग्रहणं वा, शब्दग्रहणं वा, 'गार्गी च गार्ग्यायणौ च गर्गाः' केन यशब्दो न श्रूयेत । 'अस्त्रिया'मिति हि लुगुच्यते† । इह च गार्गी च गार्ग्यायणौ च गर्गान्पश्य 'तस्माच्छसो नः पुंसि' [ ६. १. १०३ ] इति नत्वं च प्राप्नोति ।

अथाऽर्थग्रहणं न दोषो भवति । यथा न दोषस्तथास्तु ।

इह कस्मान्न भवति—अजा च बर्करश्च, वडवा च किशोरश्च, उष्ट्री च करभश्चेति ? 'तल्लक्षणश्चेदेव विशेष' इत्युच्यते न चाऽत्र तल्लक्षण एव विशेषः । तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः ॥६६॥

---

प्र०- स्त्री पुंवच्च । इदमिति । यदा स्त्रीशब्दस्य स्वरितत्वं प्रतिज्ञायते—तदा स्त्र्यधिकारविहितटाबादिप्रत्ययग्रहणम् । ततश्चाऽयमर्थः—'पुंवत्स्त्रीप्रत्ययो न भवती'त्यभावातिदेशः क्रियते । स्वरितत्वाऽभावे तु शब्दग्रहणमर्थग्रहणं वा । तत्र शब्दग्रहणपक्षे स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवतीति स्त्रीत्वमनिवृत्तमेव । अर्थग्रहणपक्षे तु पुमर्थातिदेशे तदर्थप्रतिबद्धानां कार्याणां सिद्धिः । तत्राऽर्थस्य प्राधान्याददुष्टत्वाच्चाऽर्थपक्ष एवाश्रीयते । अस्त्रियामितीति । यदाऽयं प्रसज्यप्रतिषेधस्तदा दोषः । पर्युदासे तु 'शिष्यमाणः शब्दो निवर्त्यमानार्थाऽभिधायी'त्यस्ति स्त्रीसदृशोऽर्थ इति लुक्सिध्यति । गर्गान्पश्येति । स्त्रीत्वस्याऽनिवृत्तत्वान्नाऽयं पुंबहुत्वे शसुत्पन्न इति नत्वं न सिध्यति ॥६६॥

---

उ०- स्त्री पुंवच्च । टाबादीति । क्तिनादीनां तु न ग्रहणं, 'वृद्धो यूने'त्यधिकारात् । अत्र पक्षे पुंवदिति । सामर्थ्यादभावाऽतिदेशः । शब्देति । स्त्र्यर्थवृत्तिशब्देत्यर्थः । वृद्धेति विशेषणसामर्थ्यात्स्वरूपग्रहणं नेति भावः । दोष इति । 'यञञोश्चे'त्यत्राऽस्त्रियामित्यनुवृत्तेः । पर्युदासेत्विति । 'सर्वं वाक्यं सावधारण'मितिन्यायेनाऽस्त्रियामेव वर्तमानस्येत्यर्थात्पर्युदासेऽपि दोष इत्यन्ये । पुंबहुत्वे इति । पुंमात्रगतबहुत्वे इत्यर्थः ॥६६॥

---

† यञञोश्च २. ४. ६४.

## पुमान् स्त्रिया ॥ १ । २ । ६७ ॥

इह कस्मान्न भवति—हंसश्च वरटा च, कच्छपश्च डुली च, ऋश्यश्च रोहिच्चेति ? 'तल्लक्षणश्चेदेव विशेष' इत्युच्यते न चाऽत्र तल्लक्षण एव विशेषः । तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः ॥६७॥

## भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ १ । २ । ६८ ॥

किमर्थमिदमुच्यते, न 'पुमान् स्त्रिये'त्येव सिद्धम् ? न सिध्यति । 'तल्लक्षणश्चे देव विशेष' इत्युच्यते, न चात्र तल्लक्षण एव विशेषः । तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेदः ।

एवं तर्हि सिद्धे सति यदिमं योगं शास्ति तज्ज्ञापयत्याचार्यो 'यत्रोर्ध्वं प्रकृतेस्तल्लक्षण एव विशेषस्तत्रैकशेषो भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? हंसश्च वरटा च, कच्छपश्च डुली च, ऋश्यश्च रोहिच्चेति, अत्रैकशेषो न भवति ।

पूर्वयोर्योगयोर्भूयान्परिहारः—यावद् ब्रूयाद् गोत्रं यूनेति तावद्वृद्धो यूनेति । पूर्वसूत्रे गोत्रस्य 'वृद्ध'मिति संज्ञा क्रियते ।

प्र०— भ्रातृपुत्रौ । यत्समानायामिति । एकापत्यत्वं नाम समानाकृतिरस्ति । ऊर्ध्वमिति । यत्रैका प्रत्ययप्रकृतिरन्यत्तु वैरूप्यं तत्रैकशेष इत्यर्थः । 'त्यदादीनि सर्वैर्नित्य'मित्येतद्वर्जयित्वा सर्वत्र 'सरूपाणा'मित्यस्यानुवृत्त्याश्रयणाद्यथोक्तार्थलाभः । अत्रैवाऽर्थे एतत्सूत्रं लिङ्गम् । पदान्तरगम्येपि तल्लक्षणविशेषे 'पुमान्स्त्रिये'त्येकशेषो भवति । यथा 'गौश्चायं गौश्चेयमित्येतौ गावौ चरत' इति । वरटा चेति । वरटा हंसी । पूर्वसूत्र इति । पूर्वाचार्यकृते व्याकरणे 'अपत्यमन्तर्हितं वृद्ध'मिति पौत्रप्रभृतेरपत्यस्य वृद्धसंज्ञा कृता । 'वृद्धो यूने'त्यत्र च कृत्रिमस्य 'जीवति तु वंश्ये युवे'त्यस्य ग्रहणं,

उ०— भ्रातृपुत्रौ । यत्रैकेति । समानेत्यर्थः । अन्यत्त्विति । अन्यकृतमित्यर्थः, 'वैरूप्य'मिति वा स्वार्थे ष्यञ् । इत्येतद्वर्जयित्वेति । 'भ्रातृपुत्रौ' 'पिता मात्रा' 'श्वशुरः श्वश्र्वा' इत्येतेषां ज्ञापकत्वान्नपुंसकेनेत्यत्र तदनुवृत्तेश्च 'त्यदादीनी'त्यस्यैव वर्जनमुक्तं तत्र हि सर्वग्रहणसामर्थ्यात्तन्निवृत्तिरिति भावः । ननु स्त्रीगोव्यक्तिपुंगोव्यक्तिवाचकयोर्गौश्च गौश्चेत्येकशेषानापत्तिः, तल्लक्षणविशेषाऽभावादत आह—पदान्तरगम्येपीति । तल्लक्षणविशेषे इति । स्त्रीत्वपुंस्त्वरूपविशेषे इत्यर्थः । एतौ गावाविति । तल्लक्षण इत्यस्य—तद्रूप इत्येवार्थः । 'ऊर्ध्वं'मित्यादेश्च प्रकृत्यतिरिक्तशब्दकृत एव चेत्तद्रूपो विशेष इत्यर्थः । सूत्रेप्येवेत्यस्य 'प्रकृत्यतिरिक्तकृत' इत्यादिः । 'प्रकृत्यतिरिक्तकृत एव तद्रूपो विशेषश्चे'दित्यन्वयः । तद्रूप इत्यस्य

वचनाः 'पचादय' इति ? यदेषां[1] भवतिना सामानाधिकरण्यं—भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीदिति ।

कः पुनर्भावः ? भवतेः स्वपदार्थो भवनं भाव इति । यदि भवतेः स्वपदार्थो भवनं भावो, विप्रतिषिद्धानां धातुसंज्ञा न प्राप्नोति—भेदः छेदः ।

---

प्र०—भावरूपार्थोऽभिधायित्वात् । भवति पचतीति । आत्मभरणवचनो भवतिः । तच्चात्मभरणं—विरुद्धैकार्थसमवायैः पाचकत्वादिभिरविरुद्धैकार्थसमवायम् । यथा 'शुक्लं रूप'मिति शुक्ले गुणे शुक्लत्वं, रूपत्वं चाऽस्तीति शुक्लादयो रूपवचनाः । एवं पचादयो भाववचना इत्यर्थः ।

कः पुनरिति । यदि क्रियैव भावस्तदा पदान्तरोपादानमनर्थकमथान्यस्तदाऽव्याप्तिरिति प्रश्नः । स्वपदार्थ इति । स्वग्रहणमुपचरितार्थनिवृत्त्यर्थं गौणोऽपि पदार्थो भवति, न तु स्वो, व्यभिचारात् । पदग्रहणं प्रकरणाद्यनपेक्षत्वप्रतिपादनार्थम् । भवनं भाव इति विग्रहः कर्तृसाधननिवृत्त्यर्थः । भेद इति । विनाशो द्विःछेदश्च

---

उ०—र्थोऽस्य भावशब्देन विवक्षित इत्याशयेन पृच्छति भाष्ये—कथं पुनरित्ति । ननु भवतिपचत्योर्नैकार्थबोधकत्वरूपं सामानाधिकरण्यं, भावः सत्ता, विक्लित्त्यनुकूलव्यापारश्च पाक इति तयोरत्यन्तवैलक्षण्यादत आह—आत्मभरणेति । आत्मभरणं चाऽऽषष्ठाद्भावविकारादनुस्यूतं 'स'दिति प्रत्ययवेद्यं रूपम्, तच्च केवलान्वयित्वात्पदार्थमात्रसमानाधिकरणम् । एवं चाश्रये पचिक्रियाबोधे तत्समानाधिकरणात्मभरणस्यापि तत्र सत्त्वेन तद्वाचकत्वं पचादीनाम् । यथा शुक्ले गुणे रूपत्वसत्तामात्रेण रूपवचनत्वं शुक्लादीनाम् । तदुक्तम्– पाचकत्वादिभिरिति । आदिना—गन्तृत्वादि । 'पाकत्वादिभि'रिति पाठान्तरम् । अत्रादिना—गमनत्वादि । विरुद्धेति । 'परस्पर'मित्यादिः । एवं च 'पचति भवती'त्यादेर्यत्कर्तृका पचिक्रिया तत्कर्तृका सत्तेति बोधः । एवं च भवत्यर्थपचत्यर्थयोरेकाऽधिकरणप्रवृत्तित्वमेव भवतिपचत्योः सामानाधिकरण्यमिति भावः ।

ननूक्तेन सामानाधिकरण्येन भावपदार्थस्याप्युक्तप्रायत्वात्कः पुनरिति प्रश्नोऽनुपपन्नोऽत आह—यदीति । 'भवतेरर्थ' इत्येतावता सिद्धे 'स्वपदे'ति व्यर्थमत आह—स्वेति । न च धातूनामनेकार्थत्वाद्धातुर्न क्वापि लाक्षणिक इति वाच्यम्, अनुपपत्तिप्रतिसन्धानापूर्वकप्रतीतिविषयार्थमादायैवाऽनेकार्थत्वस्वीकारात् । यस्त्वनुपपत्तिप्रतिसंधानपूर्वकप्रतीति विषयो यथा भूधातोर्गमनादिस्तत्र लक्षणैवेत्याशयात् । क्रियावाचकत्वं च क्रियाबोधकत्वमेवेति बोध्यम् । प्रकरणादीति । तेन तत्सापेक्षप्रतीतिकपराभवाद्यर्थनिरासः । भवनलक्षणभावस्य सत्तारूपत्वात्सत्तायाश्च केवलान्वयित्वेन सर्वसमानाधिकरणतया भाववचन इति लक्षणं न क्वाप्यव्याप्तमित्युत्तरभाष्यतात्पर्यम् । नन्ववयवविभागानुकूलव्यापारवाचिनां भिदादीनां कथमभाववचनतेत्यत

---

१—'यदेतेषाम्' पा० ।

अन्यो हि भावोऽन्योऽभावः । आतश्चान्यो भावोऽन्योऽभाव इति, यो हि यस्य भावमिच्छति स न तस्याऽभावं, यस्य चाऽभावं न तस्य भावम् ।

पचादीनां च धातुसंज्ञा न प्राप्नोति । यथा हि भवता क्रियावचने धातौ करोतिना पचादीनां सामानाधिकरण्यं निदर्शितं, न तथा भाववचने धातौ निदर्श्यते । करोतिः पचादीनां सर्वान्कालान्सर्वान्पुरुषान्सर्वाणि वचनान्यनुवर्त्तते; भवतिः पुनर्वर्तमानकालं चैकत्वं च ।

प्र०-घटरज्ज्वादेः, स च भावविरोधीति भावः । सर्वान् पुरुषानिति । किं करोषि ? पचामि, किं करोमि ? पचेत्यादौ विपरीताऽपि पुरुषानुवृत्तिः सर्वग्रहणेन विवक्षिता । भवतिः पुनरिति । नहि भवति भविष्यति पक्ष्यत्यभूदपाक्षीद्भवतः पचतो भवन्ति

उ०-आह—विनाश इति । तत्र घटादेर्नाशो भेदपदेन, रज्ज्वादेः स च्छेदपदेनेति शब्दशक्तिस्वभावादवगन्तव्यम् । विनाशकाले सत्ताया अभावान्न तेन तस्याः सामानाधिकरण्यमिति भावः । दोषान्तरमाह—पचादीनां चेति भाष्ये । क्रियावचने धाताविति । 'क्रियावचनो धातु'रिति ल र्णनिरूपणावसरे यथा निदर्शितं न तथा 'भाववचनो धातु'रिति लक्षणावसरे पचादीनां भवतिना निदर्श्यत इत्यर्थः । तथाहि न सामान्यविशेषभावेन पचादेर्भवतिना सामानाधिकरण्यं, किं करोति ? पचति, किमकार्षीत् ? अपाक्षीत्, किं करिष्यति ? पक्ष्यति' 'किं कुरुतः ? पचत' इति वत् क भवति ? पचति, किं भविष्यति ? पक्ष्यती'त्यादेरप्यापत्तेः । यतस्तु न प्रश्नोत्तरभावेन सामानाधिकरण्यं, यतश्च पचतौ भिन्नभिन्नवचनाद्यन्तेपि भवतेरेकरूपत्वमतः पच्यर्थो भवतेः कर्तैव, पचति यत्तद्भवतीति वाक्यार्थात् । करोतिः—कृधात्वर्थः । भवतिः—भूधात्वर्थः । धात्वर्थनिर्देशेपि 'यजतिषु ये यजामहं करोती'तिवत् श्तिप् । वर्तमानकालं चैकत्वं चेति । प्रश्नविषयत्वं विना चेत्यपि बोध्यम् । 'भवतिरेकत्वमनुवर्त्तते' इत्युक्त्या क्रियायां सङ्ख्यान्वयं दर्शयति । एवं 'पचादीनां सर्वाणि वचनानी'त्यनेनाऽपि । तत्र वचनं—सङ्ख्या । न चैवं 'पक्ष्यति भवती'ति कथं प्रयोगो, भविष्यत्पाके वर्त्तमानसत्ताश्रयत्वाऽसंभवादिति वाच्यं, भूतभविष्यतोरपि सूक्ष्मावस्थामालम्ब्य सत्ताया वर्त्तमानत्वाऽक्षतेरिति भावः । करोतेः पचादिसर्वपुरुषानुवर्त्तकत्वं 'किं करोषि' 'पचामी'त्यादौ व्यभिचरितमत आह—किं करोषीति । करोतेः सामान्यविशेषभावेन पचादिष्वनुवृत्तिर्द्वेधा, पचादिसमानपुरुषान्ता, अनुकूलतद्विपरीतपुरुषान्ता चेति । द्विविधाऽपि सा सर्वपदेन संगृहीतेत्यर्थः । नहि भवतीति । ननु यः पक्ष्यति स भविष्यतीत्यभिप्रायेण 'भविष्यति पक्ष्यती'ति प्रयोगः कथं नेति चेन्न, आख्यातस्य क्रियाप्रधानत्वात् । उक्तं सामानाधिकरण्यमपि न भाववाचकतासाधकम्, यथा शुक्लादीनां रूपवाचकत्वेपि न रूपत्ववाचकता, तद्वत् । एवं पाकत्वेन सत्तायाः सामानाधिकरण्येन पचेः सद्वाचकत्वेपि न सत्तावाचकत्वमिति बोध्यम् । किं चोक्तोऽर्थोपि न, पचतीत्यनेनैव तत्कर्तृत्वं वर्तमानसत्त्वाऽवगत्या भवतीत्यस्याऽनुपयोगात्, तद्वक्ष्यति भाष्ये—पचादयः क्रिया इत्यादि । कथं संबन्ध इति । किंसंबन्धमूलिकेयं

का तर्हीयं वाचोयुक्तिः—भवति पचति, भवति पक्ष्यति, भवत्यपाक्षी-दिति ? एषैषा वाचोयुक्तिः—'पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ती'ति। यद्यपि तावदत्रैतच्छक्यते वक्तुं—यत्रान्या चान्या च क्रिया, यत्र खलु सैव क्रिया तत्र कथं—भवेदपि भवेत्' 'स्यादपि स्या'दिति। अत्राप्यन्यत्वमस्ति। कुतः ? कालभेदात्साधनभेदाच्च। एकस्यात्र भवतेर्भवतिः साधनं सर्वकालश्च प्रत्ययः। अपरस्य बाह्यं साधनं वर्त्तमानकालश्च प्रत्ययः।

प्र०—पचन्तीति। का तर्हीति। कथं सम्बन्ध इति प्रश्नः। एषैषेति। या एषा त्वया पृष्टा सैषा वर्ण्यमानस्वरूपेत्यर्थः। पचादय इति। साध्यसाधनभावः सम्बन्धो न तु सामान्यविशेषभाव इत्यर्थः। नन्वन्यत्रोक्तं 'तिङभिहितो भावः क्रियया समवायं न गच्छतीति, नहि भवति—पठति पचती'ति। ततश्च तेनैतद्विरुध्येत। तत्राहुः—कर्तृ-कर्मभावेन क्रिया आख्यातवाच्यक्रियया सम्बध्यत एव,—भवति पचति, पश्य मृगो धावतीति। करणादिभावेन तु न सम्बध्यते, तथा प्रयोगाऽदर्शनात्। भवेदपि भवेदिति। एकस्याः क्रियाया आत्मापेक्षः साध्यसाधनभावो विरुद्ध इति भावः। कालभेदादिति। स्वाभाविकमन्यत्वं कालसाधनभेदेन व्यज्यते। एकस्येति। 'अपि

उ०—वाचोयुक्तिः—वाक्प्रयोगोयमिति भाष्यार्थ इति भावः। एषैषेति द्विरुक्तिः कथमत आह—यैषेति। साध्यसाधनभावः—क्रियाकारकभावः। तथा प्रयोगाऽदर्शनादिति। 'ज्योतिष्टो-मेन यजेते'त्यादावपि 'ज्योतिष्टोमेने'त्यस्यैव करणत्वेनान्वयो न तु धात्वर्थस्येति मतं मंजूषायां विधिवादे निरूपितम्। यद्वा तस्य करणत्वेन न धात्वन्तराऽर्थेन्वय इति भावः। यत्कर्तृका पचिक्रिया तत्कर्तृका सत्तेति बोधे तु 'पक्ष्यन्तिभवन्ती'त्यादेरप्यापत्तिरिति बोध्यम्। यत्र खल्विति—भाष्ये। एकस्या एव कर्तृत्वं तन्निरूपकत्वं च न युक्तमिति भावः। भवेदपि भवेदिति। अपि भवेदिति यत्तद्भवत्वित्यर्थः। [भाष्ये—स्यादपि स्यादिति। अत्र 'सर्पिष' इत्यध्याहारेण पदार्थद्योतकत्वादपेः कर्मप्रवचनीयत्वेन षत्वाऽभावः।] नन्वन्यत्वस्य कालभेद-जन्यत्वाऽभावादनुपपन्नमेतदत आह—स्वाभाविकमिति। तज्ज्ञानहेतुत्वे तद्धेतुत्वोपचार इति भावः। ननु 'भवेदपि भवे'दित्यस्य देवदत्तस्य सत्ता सम्भाविता इति यत्तद्भवेद्भवत्वित्यर्थः। लिङाऽपिना च संभावना प्रतिपाद्यते। अपरोक्षे लिङ् प्रार्थने। एवं च तयोः कालांशे उदा-सीनत्वाद्वर्त्तमानकाल इत्ययुक्तमत आह—अपि भवेदिति। 'सत्ता वर्त्तमाने'त्यस्य 'सम्भाविते'ति शेषः। यद्यप्युदासीनः काले लिङ्तथापि क्रियाया नियमेन कालाकाङ्क्ष-सत्त्वात्प्रकरणादिवशेन तत्तत्कालविशिष्टक्रियावगतिः। अत एव माङि लुङादेः सर्वलकारा-पवादत्वव्यवहारः। एवं च 'नहि भूतभाविनोस्तादृशी प्रीतिर्यादृशी वर्तमान' इति न्यायेन सम्भावनालिङन्तप्रतिपाद्यस्य वर्त्तमानत्वसिद्धिः। तदाह—तथाभूता हीति। भवेदित्यस्याः सत्ताया इति। प्रार्थनालिङन्तार्थाया इत्यर्थः। सम्भावनाविषयवर्त्तमानसत्ताकर्तृका प्रार्थ्यमाना सत्तेति बोधः। नन्वेवमपि प्रार्थनालिङन्तार्थस्य कथं सर्वकालत्वं, प्रार्थनाया भविष्यद्विषयतया

यावताऽत्राप्यन्यत्वमस्ति, पचादयश्च क्रिया भवतिक्रियायाः कर्त्र्यो भवन्तीति, अस्त्वयं कर्तृसाधनः—भवतीति भाव इति। किं कृतं भवति? विप्रतिषिद्धानां धातुसंज्ञा सिद्धा भवति। भवेद्विप्रतिषिद्धानां धातुसंज्ञा सिद्धा स्यात्, प्रातिपदिकानामपि तु प्राप्नोति वृक्षः प्लक्ष इति। किं कारणम्? एतान्यपि हि भवन्ति।

एवं तर्हि कर्मसाधनो भविष्यति—भाव्यते यः स भाव इति। क्रिया चैव हि भाव्यते स्वभावसिद्धं तु द्रव्यम्। एवमपि भवेत्केषांचिन्न स्याद्यानि न

प्र०—भवे'दित्यत्र यो भवतिस्तस्यारोग्यादिविशिष्टदेवदत्तादिकर्तृका सत्ता वर्तमानाऽर्थः। तथाभूता हि सत्ता प्रार्थ्यत इति वर्तमानकालः प्रत्ययः। सा तु सत्ता 'भवे'दित्यस्याः सत्तायाः कर्तृत्वेन निर्दिष्टेति भेदोऽस्त्येव। अस्त्वयमिति। भेदादयोऽपि भवन्तीति तद्वचनानां सिध्यति धातुसंज्ञा। एतान्यपीति। एतत्प्रतिपाद्यानि वस्तूनीत्यर्थः। भाव्यते यः स भाव इति। तेन साध्यमानार्थवाचिनां धातुसंज्ञेत्यर्थः। स्वभावसिद्धमिति। शब्दशक्त्यनुसारेणैतदुच्यते। कृतता-क्रियमाणता-कर्तव्यतायुक्तान्यपि द्रव्याणि सिद्धरूपाण्येव प्रातिपदिकेनाऽभिधीयन्ते। शब्दान्तरेण तु तेषामवस्थान्तरं प्रतिपाद्यते।

उ०—तद्विषयसत्तायां भविष्यत्त्वप्रतीतेरिति चेन्न। 'शान्तो रोग' इति प्रश्ने पुनरनुत्पत्तिध्वननायैकेन 'शमिष्यती'त्युक्ते, संवादायापरेण 'शाम्यती'त्युक्तेऽनौत्सुक्याय शाम्यत्विति प्रयोगदर्शनेन प्रार्थनाविषये सर्वकालत्वाऽभिमानात्। तदेवमत्र लक्षणे भिदादिष्वव्याप्तिर्भवतिसामानाधिकरण्याऽभावात्पचादावव्याप्तिश्चेति दूषणद्वयं स्थितम्। 'कर्त्र्यो भवन्ती'त्यस्या'ऽनुपपन्नं भाववचनो धातुरिति लक्षण'मिति शेषः। भवतिसामानाधिकरण्याऽभावेन भाववचनत्वाऽभावादिति भावः। अथ तदुद्धरति—अस्त्विति। 'विप्रतिषिद्धाना'मित्युपलक्षणं—पचादीनामपि। भेदादयोपीति। जन्मवाची भवतिः। तेन ध्वंसस्यापि जायमानत्वान्नाऽव्याप्तिरिति भावः। अन्योन्याऽभावोऽपि तत्तद्वस्तुजन्मना जन्य एवेति तद्वाचकभेदशब्दसिद्धिर्बोध्या। एतानीति नपुंसकमयुक्तमुपक्रान्तानां पुंस्त्वादत आह—एतदिति। ननु कर्मसाधनेपि वृक्षादिषु दोषोऽपरिहृत एवेत्यत आह—तेन साध्यमानेति। साध्यावस्थावपन्नाऽर्थवाचिनामित्यर्थः। कृतता—घटमकार्षीदित्यादौ। क्रियमाणता,—घटं करोतीत्यादौ। कर्तव्यता,—घटं करिष्यतीत्यादौ। सिद्धरूपाण्येवेति। स्वभावेन—शब्दशक्तिस्वभावेन, सिद्धं—सूक्ष्मरूपेण सिद्धावस्थमेव द्रव्यं—शब्दवाच्यमिति भाष्याक्षरार्थः। अत एव तस्य क्रियाकाङ्क्षा। यद्यपि क्रियापि तथा, तथापि सा शब्दशक्तिस्वभावाद् स्थूलरूपेण साध्यतयैव प्रतीयत इति बोध्यम्।

१–कचिन्न।

भाव्यन्ते, ये त्वेते संबन्धिशब्दास्तेषां प्राप्नोति—माता पिता भ्रातेति । सर्वथा वयं प्रातिपदिकपर्युदासान्न मुच्यामहे ।

पठिष्यति ह्याचार्यो 'भूवादिपाठः प्रातिपदिकाणपयत्यादिनिवृत्त्यर्थ' इति । यावता पठिष्यति—'पचादयश्च क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ती'ति, अस्त्वयं कर्तृसाधनः, भवतीति भाव इति । किं वक्तव्यमेतत् ? नहि । कथमनुच्यमानं गंस्यते ? एतेनैवाभिहितं सूत्रेण 'भूवादयो धातवः' इति । कथम् ? नेदमादिग्रहणम् । वदेरयमौणादिक इन्कर्तृसाधनः—'भुवं वदन्तीति भूवादय' इति ।

प्र०—मातेति । मातृत्वं पुत्रजन्मना भाव्यते । सर्वथेति । पाठाश्रये समानशब्दानां प्रसङ्गः, कर्तृसाधने भावशब्दे वृत्तादीनां प्रसङ्गः, कर्मसाधने मात्रादीनामित्यर्थः । इदानीं समाधानमाह—पठिष्यतीति । पठितानामेव भाववचनानां धातुसंज्ञा, नान्येषामित्यर्थः । अस्त्वयमिति । भवतीति भूरिति कर्तरि क्विबस्ति न तु कर्मणि । अर्थस्त्वभिन्न एव । यो हि भवति स एव भाव्यते नाऽन्यः । नेदमिति । वृद्धिशब्दस्य मङ्गलार्थस्य प्रयुक्तत्वाद्वकारो मङ्गलार्थो नोपयुज्यते । भुवमिति । जायमानार्थं येऽभिदधति ते धातव इत्यर्थः । भवतिरत्र जन्मवाची गृह्यते, न तु सत्तावाचीति सिद्धार्थाऽभिधायिनां संज्ञा न भवति ।

उ०— मातृत्वमिति । मात्रादिशब्दा जनकस्त्रीत्वादौ शक्ता । जनकत्वस्य च जन्यनिरूपितत्वमित्यभिमानः । भाष्ये 'पठिष्यति ही'त्यस्य हिशब्दात् पूर्वोक्तशङ्कोपपादकत्वभ्रमं वारयति—इदानीमिति । सामान्यशब्दाऽतिप्रसङ्गवारणायाह—भाववचनानामिति । 'कर्त्र्यो भवन्ती'-त्यतोऽस्त्वयं कर्तृसाधनो भवतीति भाव इति, न कश्चिद्दोष इत्यर्थो भाष्यस्य । सूत्राक्षरैरस्य संग्रहं दर्शयति—भूरिति कर्त्तरीति । अर्थस्त्वभिन्न एवेति । एवं च कर्तृसाधनकर्मसाधनयोरविशेषः फले दोषवारणमपि समम्, न्यायप्राप्तश्च कर्तृसाधन इति स एवाऽस्त्वित्याशयः । भाष्ये—किं वक्तव्यमिति । 'भाववचना भूवादयो धातव' इति किं वक्तव्यमित्यर्थः । औणादिक इति । बाहुलकादिति भावः । वृद्धिशब्दस्येति । मध्यमङ्गलस्य 'शिवशमरिष्टस्ये'-त्यादिभिरेव सिद्धत्वेनेदं नाऽतीवोपयुज्यत इति भावः । जायमानमिति । तत्त्वेन प्रतीयमानमित्यर्थः ।

१—'आणबबत्यादि' पा० ।

## भाववचने [ धातौ ] तदर्थप्रत्ययप्रतिषेधः ॥ ८ ॥

भाववचने धातौ तदर्थस्य प्रत्ययस्य प्रतिषेधो वक्तव्यः । शिश्ये इति । किं च स्यात् ? अशितीत्यात्त्वं प्रसज्येत† । तद्धि धातोर्विहितम्‡ ।

## इतरेतराश्रयं च प्रत्यये भाववचनत्वं तस्माच्च प्रत्ययः ॥ ९ ॥

इतरेतराश्रयं च भवति । केतरेतराश्रयता ? 'प्रत्यये भाववचनत्वं तस्माच्च प्रत्ययः' । उत्पन्ने हि प्रत्यये भाववचनत्वं गम्यते, स च तावद्भाववचनादुत्पाद्यः । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ।

## सिद्धं तु नित्यशब्दत्वादनाश्रित्य भाववचनत्वं प्रत्ययः ॥ १० ॥

सिद्धमेतत् । कथम् ? [ 'नित्यशब्दत्वात्' । ] नित्याः शब्दाः । नित्येषु च शब्देष्वनाश्रित्य भाववचनत्वं प्रत्यय उत्पद्यते ।

प्र०- शिश्ये इति । भावार्थाऽभिधायित्वात्प्रत्ययस्य धातुसंज्ञाप्रसङ्गादात्वं प्राप्नोति । तद्ध्यनैमित्तिकं, शिति तु प्रतिषिध्यते । एकारोच्चारणं तु यदा कर्तृकर्मणोर्लकारस्तदर्थम् । पाठस्तु न तावदस्य मनसि वर्तते । इतरेतराश्रयं चेति । प्राक्शास्त्रव्यापारात् समुदाय एव नास्ति, कुतोऽन्वयव्यतिरेकाभ्यामर्थस्य प्रविभागः । तस्मिंश्चाऽसति भाववचनत्वाऽपरिज्ञानाद्धातुत्वं न व्यवतिष्ठत इत्यर्थः ।

सिद्धं त्विति । व्यवस्थिता एव पचत्यादयः समुदायाः संसृष्टार्थाधायिनः केवलमुत्प्रेक्ष्योत्प्रेक्ष्य प्रक्रियायामर्थविभागः शब्दविभागश्चाऽपोद्ध्रियते इत्यर्थः । अनाश्रि-

उ०- एवं वदता तेन प्रातिपदिकनिवृत्त्यर्थं पाठो नाऽऽश्रितः । वृक्षादीनां तत्त्वेनाऽभानादेव व्यावृत्तिसिद्धेरिति मन्वानः शङ्कते भाष्ये—भाववचन इत्यादि । प्रत्ययस्येति । प्रत्ययान्तस्य तूपदेशाऽभावाद्धातुत्वेऽप्यात्वाऽप्राप्तेरिति भावः । अशितीति पर्युदासेनाऽशितः परत्वाऽभावादात्वाऽप्राप्तिरत आह—तद्धीति । भाष्ये—तद्धि धातोरिति । 'आदेश' इत्यत्र धातोरिति संबध्यत इति वार्तिककृतोऽभिमान इति भावः । भाष्यकारस्तूपदेशग्रहणबलेन तत्र धातोरित्यस्याऽसंबन्धं वक्ष्यति । अत्र तु नाऽऽत्वं शिति नेति निषेधेन शित्प्रत्ययपरत्वयोग्य एवैजन्त आत्वप्रवृत्तेरिति बोध्यम् । 'यं विधिं प्रती'ति न्यायेनैकारोच्चारणसामर्थ्यादात्वं न स्यादत आह—एकारोच्चारणं त्विति ।

व्यवस्थिता इति । साधुत्वाऽन्वाख्यानमात्रे शास्त्रव्यापारात् प्रागुक्तप्रणाली सर्वापि सिद्धैवेति नाऽन्योन्याश्रय इति भावः । संसृष्टार्थाभिधायिन इति । संसृष्टोपस्थापका

१—क्वचिन्न । † आदेच उपदेशेऽशिति ६. १. ४५. ‡ ६. १. ४५ वा० ८ ।

## प्रथमभावग्रहणं च ॥ ११ ॥

प्रथमभावग्रहणं च कर्तव्यम् । प्रथमं यो भावमाहेति । कुतः पुनः प्राथम्यम्, किं शब्दत आहोस्विदर्थतः ? किं चातः ? यदि शब्दतः, सनादीनां धातुसंज्ञा न प्राप्नोति—'पुत्रीयति' 'वस्त्रीयती'ति । अथाऽर्थतः, सिद्धा सनादीनां धातुसंज्ञा, स एव तु दोषो 'भाववचने तदर्थप्रत्ययप्रतिषेध' इति । एवं तर्हि नापि शब्दतो नाप्यर्थतः । किं तर्हि ? अभिधानतः । सुमध्यमेऽभिधाने यः प्रथमं भावमाह ।

प्र०—त्येति । पारमार्थिकं नाश्रीयते, परिकल्पितं त्वाश्रीयत एव । तत्त्वतो हि शब्दान्तराण्येवाऽर्थान्तरेषु प्रयुज्यन्ते ।

प्रथमभावग्रहणं चेति । तदर्थप्रत्ययपरिहारोऽयम् । प्राथम्यस्याऽऽपेक्षिकत्वात्पृच्छति—कुत इति । पुत्रीयतीति । नाऽत्र प्रथममुच्चार्यमाणः पुत्रशब्दो भावमाह । 'सनाद्यन्ता धातव' इत्यस्य प्रत्याख्यानेऽयं दोषः । सिद्धेति । प्रथम आद्यो भावोऽप्रथमेनाऽपि क्यचाऽभिधीयते न तु द्वितीयः । 'शिश्ये' इत्यत्र तु प्राप्नोति, स्वार्थिकेन प्रत्ययेन प्रथम एव भावोऽभिधीयते न तु द्वितीयः । अभिधानत इति । अन्येनाऽनभिहितं भावं य आह स धातुः । 'शिश्ये' इत्यत्र तु प्रकृत्यभिहितं भावं प्रत्यय आहेति न तस्य धातुसंज्ञाप्रवृत्तिः । यथा 'प्रथममयं राजानं पश्यती'त्यस्यायमर्थो यदन्येनादृष्टं पश्यतीति, तथेहापि प्राथम्यमभिधानक्रियापेक्षमाश्रीयते—'अन्येभ्यो भावाभिधायिभ्यो यः प्रथमं भावमाहे'ति । सुमध्यम इति । द्वौ शब्दार्थपक्षौ, दुष्टत्वात्परित्यज्योपादीयमानमभिधानं मध्यममिति व्यपदिश्यते । तदेव निर्दोषत्वाच्छोभनत्वेन विशेष्यते । चिकीर्षतीत्यत्र करोत्यर्थोपसर्जनामिच्छामन्येनाऽभिहितां

उ०—इत्यर्थः । धातुसंज्ञार्थं भाववचनत्वस्याश्रितत्वादनाश्रित्येत्यनुपपन्नमत आह—पारमार्थिकमिति । तस्य व्यवहारेण समुदायवृत्तित्वादिति भावः । वार्तिककृताऽनाश्रित्येत्युक्तेरिति तात्पर्यम् । परिकल्पितं त्विति । भाष्यकृता पूर्वमन्वयव्यतिरेकाभ्यां धातुरेव क्रियावाचीत्युक्तेरिति भावः ।

चश्रवणाद्दोषसमुच्चय इति भ्रमं प्राप्तं वारयति—तदर्थेति । वार्तिककृता धातोरित्यस्यास्वे संबन्धाभ्युपगमात्तदुक्तोऽयं परिहार इत्यर्थः । ननु स्वभावादेव धातूनां प्रथमं भाववाचित्वे 'कुत' इति हेतुप्रश्नोऽसङ्गत इत्यत आह—प्राथम्यस्येति । अवधिविषयः प्रश्न इति भावः । प्रथमश्चासौ भाववचनश्चेति विग्रहे प्रथममुच्चार्यमाणः सन् भावमाहेत्यर्थे शब्दतः प्राथम्यम्, 'प्रथमस्य भावस्य वचन' इति विग्रहेऽर्थतः, द्वयोर्मध्ये 'प्रथमं पूर्वकालं भाववचन' इति विग्रहे विस्पष्टपटुवत्समासेऽभिधानतः स्वयं प्रथमोऽप्रथमो वा प्रथमम्, प्रथमं वा

१—'नैवार्थतो नापि शब्दतः' ।

इह य एव भाववचने धातौ दोषास्त एव क्रियावचनेऽपि । तत्र त एव परिहाराः । तत्रेदमपरिहृतम्—'अस्तिभवतिविद्यतीनां धातुत्वमिति । तस्य परिहारः । कां पुनः क्रियां भवान्मत्वाह—'अस्तिभवतिविद्यतीनां धातुसंज्ञा न

प्र०—सम्प्रत्यय आहेति प्रवर्त्तते धातुसंज्ञा । अत्र पक्षे यथा शिश्य इति प्रत्ययस्य धातुसंज्ञा न भवति तथा स्वार्थिकानामायादीनामपि न प्राप्नोति—गोपायति कामयते इति । तदर्थं 'सनाद्यन्ता धातव' इति पठितव्यमेव । इहेति । तदर्थप्रत्ययप्रतिषेध इतरेतराश्रयं च, प्रथमभावग्रहणं च, सिद्धं तु नित्यशब्दत्वादिति च । केवलं प्रथमभावग्रहणमपनीय प्रथमक्रियाग्रहणं चेति क्रियाग्रहणं कर्तव्यम् । तत्रेदमिति । 'किं करोती'ति प्रश्नेऽस्त्यादिभिः प्रतिवचनाऽभावादक्रियावचनत्वमेषां मन्यते । यच्चाप्युक्त'मिह सर्वेषु साधनेषु सन्निहितेषु कदाचित्पचतीत्येतद्भवति कदाचिन्ने'ति तदस्त्यादिषु नास्ति । नह्यस्तीति कदाचिद्भवति, अपि तु सर्वदेति पाकादिभिर्वैधर्म्यम् । यथा च 'पचतितरा'मिति प्रकर्षो

उ०—भावमन्येभ्यः पूर्वमाहेत्यर्थादिति बोध्यम् । नाऽत्रेति । यद्यपि तिङपेक्षया क्यजपि प्रथमस्तथापि तस्य गौणं प्राथम्यमिति भावः । न च क्यजन्तस्य तिङपेक्षया मुख्यमेव प्राथम्यम् । पुत्र इच्छा आश्रय इत्यर्थत्रयाऽवभासेन खण्डत्रयस्यैव करणादिति तत्त्वम् । ननु 'सनाद्यन्ता' इति तस्य धातुत्वं सिद्धमत आह—सनाद्यन्ता इति । 'भाववचना' इति लक्षणे सनाद्यन्तानामप्यनेनैव धातुत्वसिद्धौ तत्सूत्रमेव प्रत्याख्येयमिति भावः । क्यचेति । लक्षणे भाववचनस्तदन्तश्च गृह्यते इति तदन्तस्य धातुत्वसिद्धिरिति भावः । प्रथममयं राजानमिति । प्रथममयमेव राजानमित्यर्थः । नन्वस्य पक्षस्याऽन्त्यत्वान्मध्यम इत्ययुक्तमत आह—द्वाविति । उभयाऽस्पृष्टे'मध्यस्थ' इति व्यवहारात् प्रागुक्तदोषद्वयाऽस्पर्शेनायं मध्यम इति भावः । इच्छामन्येनेति । एवं प्रतीषिपतीत्यादावपि प्रकृत्यर्थातिरिक्तां तद्विषयामिच्छामन्येनाऽनभिहितामेव सन्नाहेति बोध्यम् । अयादीनामिति । तदन्तानामित्यर्थः । क्रियावचनपक्षे प्रथमभावपदस्याऽनन्वयात्त एव परिहारा इत्यसङ्गतमत आह—तदर्थेत्यादि । भिदादीनामपि विभागफलकव्यापारवाचित्वात्क्रियावाचित्वमस्त्येव । अभावोऽपि सूक्ष्मावस्थसत्तैवेत्यभाववाचिनामपि भाववचनत्वम्, अभावस्याऽलीकत्वाभ्युपगमादिति बोध्यम् । भाष्ये—तत्रेदमिति । तत्र 'क्रियावचनो धातु'रिति लक्षणे क्रियावचनत्वाऽभावादप्राप्तं धातुत्वमस्त्यादीनामिति भावः । कुतोऽक्रियात्वं तेषामत आह—किं करोतीति । नह्यस्तीति । साधनसन्निधानेऽस्तीति कदाचिद्भवतीति न, अपि तु सर्वदा भवत्येवेत्यन्वयः । क्रियास्वरूपं शङ्कितैव वाचयितुं पृच्छति भाष्ये—कां पुनरिति । तदाशयं स्वयमेवोन्नीयाह—किं यदिति । एवं हि भुजिकारकस्येवाऽस्तिकारकस्यापि क्रियात्वमस्तु का क्षतिरिति भावः । ननु भुङ्क्ते इति यस्सा क्रियेत्यन्वये धात्वर्थक्रियावाद एवोपक्षिप्तः स्यादिति 'न ब्रूम' इत्यादिग्रन्थाऽसङ्गतिः, 'देवदत्त इति यस्सा क्रिये'त्याद्यन्वये यत्तदोः प्रधानपरामर्शित्वहानिरत आह—यत्तदिति ।

प्राप्नोती'ति । किं यत्तद्देवदत्तः कंसपात्र्यां पाणिनौदनं भुङ्क्त इति ? न ब्रूमः 'कारकाणि क्रिये'ति । किं तर्हि ? कारकाणां प्रवृत्तिविशेषः क्रिया । अन्यथा च कारकाणि शुष्कौदने प्रवर्तन्ते, अन्यथा च मांसौदने । यद्येवं सिद्धाऽस्ति-भवतिविद्यतीनां धातुसंज्ञा । अन्यथा हि कारकाण्यस्तौ प्रवर्तन्तेऽन्यथा हि म्रियतौ ।

'षड्भावविकारा' इति ह स्माह भगवान् वार्ष्यायणिः । 'जायतेऽस्ति

---

प्र०–भवति नैवमस्तितरामिति । किं यत्तदिति । यत्तच्छब्दाभ्यां कारकवैचित्र्यं निदर्श्यते । प्रवृत्तिविशेष इति । सर्वा प्रवृत्तिः प्रवृत्त्यन्तराद्भिद्यते इत्यस्त्येव सर्वस्याः क्रियात्वम् । अन्यथेति । शुष्कौदने मन्दप्रयत्नः प्रवर्त्तते, मांसौदने तु संवेगेन । यथा च भोजनक्रियाणां परस्परवैलक्षण्यात्प्रवृत्तिविशेषत्वं नैवमस्त्यादीनाम् । यद्येवमिति । अत्रापि प्रवृत्त्यन्तरापेक्षयाऽस्त्येव प्रवृत्तिविशेषरूपत्वमित्यर्थः । अन्यथेति । अस्तावा-त्मभरणरूपा प्रवृत्तिर्म्रियतौ तत्त्यागरूपा । उत्पत्तिप्रभृत्या विनाशाच्च सत्तानुषङ्गादस्तीति प्रत्ययस्य सन्निहितेषु साधनेषूत्पत्तिरवश्यं भाविनीति कादाचित्कत्वाऽभावः । प्रकर्ष-प्रत्ययोऽपि दृश्यते 'विद्यतेतरामिह धान्य'मिति । अत्रैवार्थे आगममाह— षड्भावविकारा इति । भावस्य क्रियायाः षट्प्रकारा इत्यर्थः । तेषु चाऽस्तिः

---

उ०–क्रियांशस्य प्राधान्येपि न तात्पर्यविषयता, सर्वनाम्नां गुणपरामर्शकता च दृष्टाऽतस्त-त्तद्व्यापाराविष्टकारकाण्येव ताभ्यां परामृश्यन्त इत्यर्थः । 'कारकवैचित्र्य'मित्यस्य विचित्राणि कारकाणीत्यर्थः । स्वार्थे ष्यञिति बोध्यम् । वैचित्र्यं च तत्तद्व्यापाराविष्टत्वमेव । भाष्ये शङ्किताऽऽह—न ब्रूम इत्यादि । प्रवृत्तिविशेष इति । स चाऽस्त्याद्यर्थे नास्तीति भावः । एतच्चोपलक्षणं प्रतिवचनादीनामिति तान्युक्तवानुपाध्यायः । ननु प्रवृत्तिविशेषस्य क्रियात्वे प्रवर्त्तत इत्यत्र क्रियात्वऽनापत्तिरत आह—सर्वेति । पच्याद्यपेक्षया साऽपि विशेष एवेति भावः । शङ्कित्राशयमुपसंहरति—यथा चेति । एवं चाऽस्त्यादौ धातुत्वाऽसिद्धिरिति भावः ।

सिद्धान्त्याह भाष्ये—यद्येवमिति । अन्यथा हीति । कारककर्तृकाऽस्तौ वाच्यत्वेन स्थिता प्रवृत्तिरन्यथेत्यक्षरार्थः, तदेवाह—आत्मभरणरूपेति । स्थूलरूपधारणानुकूलव्यापार-रूपेत्यर्थः । म्रियतौ तत्त्यागानुकूलव्यापाररूपेति भावः । एवं च म्रियत्यपेक्षया प्रवृत्ति-विशेषरूपताऽस्त्येवाऽस्त्यर्थस्येति तात्पर्यम् । पूर्वोक्तदूषणत्रयेऽन्त्यद्वयमुद्धरति—उत्पत्तीत्यादि । कादाचित्कत्वाऽभाव इति । अयं चात्मभरणलक्षणसत्तावाचिन्येव । तदपि कर्तृरूपे वस्तुनि विद्यमाने एव, वस्तुकादाचित्कताप्रयुक्ता तु साऽस्त्येव । अत एव भूतभविष्यत्प्रयोगाः सङ्गच्छन्ते । उत्पत्तिरूपसत्तावाचिनि तु कादाचित्कताऽप्यस्त्येव । 'विद्यतेतरा'मित्यपि कारक-गतप्रकर्षारोपेणैव बोध्यम् । भाष्येऽस्त्यादीनां क्रियावाचकत्वे युक्त्यन्तरमाह—षड्भावे-

विपरिणमते वर्द्धतेऽपक्षीयते विनश्यती'ति । सर्वथा 'स्थित' इत्यत्र धातुसंज्ञा न प्राप्नोति । बाह्यो ह्येतेभ्यस्तिष्ठतिः । एवं तर्हि क्रियायाः क्रिया निवर्त्तिका भवति, द्रव्यं द्रव्यस्य निवर्तकम् । एवं हि कश्चित्कंचित्पृच्छति—'किमवस्थो देवदत्तस्य व्याधि'रिति ? स आह—'वर्द्धते' इति । अपर आह—'अपक्षीयते' इति । अपर आह—'स्थित' इति । 'स्थित' इत्युक्ते वर्द्धतेश्चाऽपक्षीयतेश्च निवृत्तिर्भवति ।

अथवा नान्तरेण क्रियां भूतभविष्यद्वर्त्तमानाः काला व्यज्यन्ते । अस्त्यादिभिश्चाऽपि भूतभविष्यद्वर्तमानकाला व्यज्यन्ते ।

प्र०-पठित इति तस्यापि क्रियात्वमित्यर्थः । अथवा—भावस्य सत्ताया एते प्रकाराः । सत्तैवाऽनेकक्रियात्मिका साधनसम्बन्धादवसीयमानसाध्यरूपा जन्मादिरूपतयाऽवभासते । एते च भावविकारा निरुक्ते निपुणं [1]व्याख्याताः । इह तु प्रकृताऽनुपयोगान्न व्याख्यायन्ते । सर्वथेति । भावविकारपरिसङ्ख्यानस्याऽव्यापकत्वमित्यर्थः । एवं तर्हीति । अनुमानेन स्थानस्य क्रियात्वं प्रतिपादयति । अन्यथा 'स्थित' इत्युक्ते वृद्धिक्षयनिवृत्तिर्न प्रतीयेत । अथवेति । क्रियान्तरधर्मसमन्वयेनाऽस्त्यादीनां क्रियात्वं प्रतिपाद्यते । 'घट' इत्युक्ते कालविशेषावगतिर्नास्ति । अस्ति अभूद्भविष्यतीति कालविशेषाऽवगमात् साध्यमानस्य चाऽर्थस्य कालेन योगात्क्रियात्वाऽवसायः ।

उ०-त्यादि । क्रियाया इति । 'भावो लीला क्रिया चेष्टे'ति कोशादिति भावः । 'विकार'शब्दः प्रकारवाची । अथवेति । उत्पत्तिविनाशयोरपि सूक्ष्मरूपेण वस्तुनो भावात्तेषामपि सत्तात्मकत्वमिति बोध्यम् । भावस्य सत्ताया ब्रह्मसत्ताया एते विकाराः क्रियाप्रकारा मायावशात्त इव भासमाना इति वार्ष्यायण्युक्तेरर्थः । सत्तैवेत्यादि । ब्रह्मसत्तैवाऽनेकक्रियात्मिका—अनेकक्रियाविवर्त्तात्मिका साधनैः कारकैः संबन्धादवसीयमानसाध्यस्वरूपा जन्मादिरूपतया भासत इत्यर्थः । एतच्च [1]निरुक्तभाष्ये स्पष्टम् । भावविकारेति । एवं चाऽव्याप्तिदूषितं परिगणनं कथमस्त्यंशे प्रमाणं भवेदिति भावः । अनुमानेनेति । 'षड्भावविकारेष्वभावादक्रियात्वमेव मन्यमानं प्रती'त्यादिः । अन्यथेति । एवं च स्थितेरप्यस्तितायामन्तर्भावान्न परिगणनाऽव्याप्तिरिति भावः । तिष्ठतेरेव क्रियात्वे युक्त्यन्तरमिति भ्रमं वारयति—क्रियान्तरेति । एतन्मूलिकैव 'क्रियाभेदाय कालस्त्वि'ति वाक्यपदीयोक्तिः । कालस्य क्रियामात्रपरिच्छेदकत्वादिति भावः । ननु यद्यस्त्यादेः क्रियावाचित्वं तर्हि किं करोतीति पृष्टेऽस्तीत्याद्युत्तरं कुतो नेत्यतो भाष्ये—अथवा नान्यदिति । अत्राऽथवेति 'यत' इत्यर्थे । प्रश्नासम्भवादिति । निर्ज्ञातत्वेन सत्ताविषयप्रश्नाऽसम्भवादित्यर्थः । ननु क्रियाभावयोरेकार्थतया कथमिह भेदे-

१–कैयटकृता काचिन्निरुक्तव्याख्याऽऽसीदित्यनेन प्रतीयते ।

अथवा नाऽन्यत्पृष्टे नाऽन्यदाख्येयम् । तेन न भविष्यति—'किं करोति—अस्ती'ति ।

अथ यद्येव 'क्रियावचनो धातु'रित्येष पक्षोऽथापि 'भाववचनो धातु'रिति, किं गतमेतदियता सूत्रेण, आहोस्वदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्तव्यम् ? 'गत'मित्याह । कथम् ? अयमादिशब्दोऽस्त्येव व्यवस्थायां वर्तते, तद्यथा—देवदत्तादीन्समुपविष्टानाह 'देवदत्तादय आनीयन्ता'मिति । त उत्थाप्याऽऽनीयन्ते । अस्ति प्रकारे वर्तते, तद्यथा—'देवदत्तादय आढ्या अभिरूपा दर्शनीयाः पक्षवन्तः' । देवदत्तप्रकारा इति गम्यते । प्रत्येकं चाऽऽदिशब्दः परिसमाप्यते—भ्वादय इति च वादय इति च । तद्यदा तावत् 'क्रियावचनो धातु'रित्येष पक्षस्तदा 'भू' इत्यत्र य आदिशब्दः स व्यवस्थायां वर्तते, 'वा' इत्यत्र य आदिशब्दः स प्रकारे, 'भू'इत्येवमादयो 'वा' इत्येवंप्रकारा इति । यदा तु 'भाववचनो धातु'रित्येष पक्षस्तदा 'वा'इत्यत्र य आदिशब्दः स व्यवस्थायाम्, 'भू' इत्यत्र य आदिशब्दः स प्रकारे, 'वा'इत्येवमादयो 'भू' इत्येवंप्रकारा इति ।

यदि तर्हि लक्षणं क्रियते, नेदानीं पाठः कर्तव्यः । कर्तव्यश्च । किं प्रयोजनम् ?

प्र०—अथवेति । निर्ज्ञातायां सत्तायां किं करोतीति प्रश्नाऽसम्भवादस्तीति प्रतिवचनाऽभावो न तु क्रियात्वाऽभावादित्यर्थः । यदा तु प्रत्यासन्नविनाशशङ्कया 'देवदत्तः किं करोती'ति प्रश्नः तदा'ऽस्ति ताव'दिति प्रतिवचनं भवत्येव ।

अथ यद्येवेति । परिस्पन्दाऽपरिस्पन्दरूपतया क्रियाभावयोर्भेदेनोपन्यासः । तदा वेत्यत्रेति । अदादीनामादौ 'वा गतिगन्धनयो'रिति पठितव्यम् । अदादिगणोऽपि गणानामादौ । तेन सर्वे धातुपाठसन्निविष्टा गृहीता भवन्ति । यदि तर्हीति । 'क्रियावचनो धातु'रिति वा, 'भाववचनो धातु'रिति वा लक्षणं क्रियतां नाऽर्थः पाठेनेत्यर्थः ।

उ०—नोपादानमत आह—परिस्पन्देति । आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः । सादृश्यं चान्याऽनभिहितसाध्यत्वस्थापन्नाऽर्थवाचित्वेनेति नाऽव्याप्तिः । तत्र वाप्रभृतयो भूप्रकारा इत्यर्थे वाधातोः प्राचीनानां न स्यादित्यत आह—अदादीनामिति । 'अदिप्रभृतिभ्य' इत्यस्य स्थाने 'वाप्रभृतिभ्य' इत्येव पठनीयम् । 'अदिप्रभृतिभ्य' इत्यत्र बहुव्रीहितत्पुरुषयोरेकशेषो वा बोध्यः । ननु व्यवस्थावाच्यादिशब्दान्तर्भावेण पाठस्यापि लक्षणेनाऽपेक्षणीयत्वान्नेदानी-मित्ययुक्तमत आह—क्रियावचन इति । व्यवस्थावाच्यादिशब्दस्य प्रयोजनप्रश्न इत्यर्थः ।

## भूवादिपाठः प्रातिपदिकाणपंयत्यादिनिवृत्त्यर्थः ॥ १२ ॥

भूवादिपाठः कर्तव्यः । किं प्रयोजनम् ? 'प्रातिपदिकाणपंयत्यादिनिवृत्त्यर्थः' । प्रातिपदिकनिवृत्त्यर्थं, आणपंयत्यादिनिवृत्त्यर्थश्च । के पुनराणपंयत्यादयः ? आणपंयति वट्टति वड्ढतीति ।

## स्वरानुबन्धज्ञापनाय च ॥ १३ ॥

स्वरानुबन्धज्ञापनाय च पाठः कर्तव्यः । स्वराननुबन्धांश्च ज्ञास्यामीति । नह्यन्तरेण पाठं स्वरा अनुबन्धा वा शक्या विज्ञातुम् ।

ये त्वेते न्याय्यविकरणा उदात्ता अननुबन्धकाः पठ्यन्त एतेषां पाठः शक्योऽकर्तुम् । एतेषामप्यवश्यमाणपंयत्यादिनिवृत्त्यर्थः पाठः कर्तव्यः । न कर्तव्यः । शिष्टप्रयोगादाणपंयत्यादीनां निवृत्तिर्भविष्यति । स चावश्यं शिष्ट-

---

प्र०- भूवादिपाठ इति । यथा 'भोक्तुं पाक' इति क्रियाश्रयाणि तुमुनादीनि भवन्ति तथा धातुसंज्ञाऽपि स्यादिति पाकादीनां शयितव्यादीनां च प्रातिपादिकानां पाठेनाऽसौ निवर्त्यते । तथा हिरुक्पृथगित्यादीनां च क्रियाप्रधानानामव्ययानाम् । एतेषामपीति । तेषामपाठे निवृत्तिराणवयत्यादिवत्स्यात्तस्मादाणवयत्यादिष्वेषां निवृत्तिर्यथा स्यात्तन्मध्ये मा प्रक्षिपन्नित्येवमर्थस्तेषामपि पाठः कर्तव्य इत्यर्थः । शिष्टप्रयोगादिति । प्रयुक्ताना-

---

उ०- ननु भावक्रियापदयोः साध्यावस्थापन्नार्थाभिधायित्वात् प्रातिपदिकेषु कथमतिप्रसङ्गोऽत आह—यथेति । भोक्तुं भुक्त्वेत्यादि प्रातिपदिकं व्यावर्त्यं बोध्यम् । 'पाक'पदेन सिद्धावस्थस्य भानाद्भोक्तुं पाक इति प्रयोगोऽपि चिन्त्य इ'त्युपपदमति'ङितिसूत्रे वक्ष्यते । फलं तु पाकादिशब्दे इवात्रापि । हिरुगिति । क्रियान्तराकाङ्क्षादर्शनेनैषां क्रियावाचित्वं चिन्त्यम् । अत एव 'तद्धितश्चाऽसर्वविभक्ति'रितिसूत्रे क्रियामात्रविशेषणत्वात् क्रियाप्रधानत्वमेषां स्वयमुक्तम् । 'शिश्ये' इत्यादिव्यावृत्तिस्त्वन्यानभिहितक्रियावाचकत्वेन सादृश्यग्रहणाद्बोध्या । वस्तुत एषां धातुत्वे फलाऽभावः । न च प्रातिपदिकत्वाऽभावः फलम् । कृदन्तत्वेन तदभावस्य वक्तुमशक्यत्वात् । उभयोः सत्त्वेऽपि लिडित्यादाविव परत्वात्सुपामेवोत्पत्तिसिद्धेः । वार्तिके प्रातिपदिकग्रहणं तु प्रौढ्यैव । अतएव तदुदाहरणाऽनुक्तिर्भाष्ये ।

ननु तेषां संज्ञार्थः पाठः कर्तव्य इति वक्तव्ये आणवयत्यादिनिवृत्त्यर्थं इत्यसङ्गतमत आह—तेषामिति । पाठाऽभावे हि तेऽपि आणवयत्यादिवद्बहिर्भवेयुरिति आणवयत्यादिभ्यो निवृत्त्यर्थो भेदार्थं इति भाष्यार्थं इति भावः । प्रयुक्तानामिति । प्रयुक्तानां च संप्रत्ययदृश्य-

---

१—'णवय' इति पा० ।

प्रयोग उपास्यो येऽपि पठ्यन्ते तेषामपि विपर्यासनिवृत्त्यर्थः । लोके हि कृष्यर्थे कंसिं प्रयुञ्जते, दृश्यर्थे च दिसिम् ॥१॥

## उपदेशेऽजनुनासिक इत् ॥ १ । ३ । २ ॥

उपदेश इति किमर्थम् ? 'अभ्र आँ* अपः†' । उद्देशे योऽनुनासिकस्तस्य मा भूदिति ।

कः पुनरुद्देशोपदेशयोर्विशेषः ? प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशः । प्रत्यक्षं तावदाख्यानमुपदेशः । तद्यथा—अगोज्ञाय कश्चिद् गां सक्थनि कर्णे वा गृहीत्वोपदिशति—'अयं गौ'रिति । स प्रत्यक्षमाख्यातमाह—'उपदिष्टो मे गौ'रिति । गुणैः प्रापणमुद्देशः । तद्यथा, कश्चित्कंचिदाह—'देवदत्तं मे भवानुद्दिशतु' इति । स इहस्थः पाटलिपुत्रस्थं देवदत्तमुद्दिशति—

प्र०-मिदमन्वाख्यानं न चाणवयत्यादयः शिष्टैः प्रयुज्यन्ते इति नास्ति तेषां शास्त्रेणानुविधानमिति भावः । एतेनैव न्यायेन प्रातिपदिकनिवृत्त्यर्थोऽपि पाठो नोपयुज्यते । नहि पाकादयः शब्दा धातुविहितप्रत्ययपरा लोके प्रयुज्यन्ते ॥१॥

उपदेशेऽजनु । उद्देशोपदेशशब्दयोरुपसर्गभेदेऽपि अभिन्नार्थत्वं प्रक्रमते, उपक्रमते इत्येतयोरिव मन्यमानः पृच्छति—उपदेश इति किमर्थमिति । अभ्र आँ अप इति । अयं नोपदिष्टः, किं तर्हि, 'आऽङोनुनासिकश्छन्दसी'ति लक्षणेनान्तरतम आङः स्थाने विहितः । यदि तु 'आङ आँ छन्दसी'त्यवक्ष्यत्तदाऽभविष्यदेषोऽप्युपदेशेऽनुनासिकः । प्रत्यक्षमाख्यानमिति । इन्द्रियगोचरार्थस्य यदाख्यानं स उपदेश इत्यर्थः ।

उ०-मानपाठानामपि भविष्यतीत्यपि बोध्यम् । नन्वेवमपि प्रातिपदिकनिवृत्त्यर्थः पाठः स्यादत आह—एतेनेति । इदमुपलक्षणम् । स्वरानुबन्धकार्यमपि शिष्टप्रयोगादेवेति बोध्यम् । ननु शिष्टप्रयोगालम्बनेन प्रत्याख्याने शास्त्रवैफल्यमत आह—भाष्ये—स चावश्यमिति । एवं चाकृतिगणेष्विव तदुपासनावश्यकत्वे किं पाठेनेति भावः । ननु तद्वदेव निदर्शनार्थः कतिपयपाठोऽप्यावश्यक इति चेत् । अस्तु, अत्यन्तावश्यकता नेत्येव भाष्यतात्पर्यादिति दिक् ॥१॥

उपदेशेऽज । ननूपसर्गभेदेऽर्थभेदस्यावश्यकत्वात्प्रश्नानुपपत्तिरत आह—उद्देशेति । उभावपि धात्वर्थानुवादकाववेति भावः । येन 'निष्ठे'त्यादिविहितानां संग्रह आङश्च व्यावृत्तिः स विशेषः क इति प्रश्नार्थं इत्यन्ये ।

नन्वाङोऽनुनेत्यप्युपदेश एवेत्यत आह—अयमिति । उच्चारणेन बोधनाऽभावादि-

२—'किसिं' पा० । * आङोऽनुनासिकश्छन्दसि ६. १. १२६. † ऋग्वेदे ५. ४८. १.

'अङ्गदी कुण्डली किरीटी व्यूढोरस्को वृत्तबाहुर्लोहिताक्षस्तुङ्गनासो विचित्राभरण ईदृशो देवदत्तः' इति । स गुणैः प्राप्यमाणमाह—'उद्दिष्टो मे देवदत्तः' इति ।

**इत्संज्ञायां सर्वप्रसङ्गोऽविशेषात् ॥ १ ॥**

इत्संज्ञायां सर्वप्रसङ्गः । सर्वस्याऽनुनासिकस्येत्संज्ञा प्राप्नोति । अस्यापि प्राप्नोति—अभ्र आँ अपः । किं कारणम् ? 'अविशेषात्' । नहि कश्चिद्विशेष उपादीयते—'एवंजातीयकस्यानुनासिकस्येत्संज्ञा भवती'ति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ।

किमुच्यते—'अनुपादीयमाने विशेष' इति, कथं न नामोपादीयते यदोपदेश इत्युच्यते ? लक्षणेन ह्युपदेशः । सङ्कीर्णावुद्देशोपदेशौ । प्रत्यक्षमाख्यानमुद्देशो गुणैश्च प्रापणमुपदेशः । प्रत्यक्षं तावदाख्यानमुद्देशः । तद्यथा,

प्र०—प्रसिद्धधर्मोपादानेन (तु) यत्प्रतिपादनं स उद्देशः । 'प्रत्यक्षमाख्यात'मिति क्वचित्पाठः । तत्राख्यानमाख्यातमिति भावे क्तो विज्ञेयः । ईदृश इति । एतैः शब्दैः यादृशो बुद्धावर्थः प्रतिभासते तादृशो बाह्य इत्यर्थः ।

लक्षणेनेति । लक्ष्यतेऽनेनेति लक्षणं गुणस्तेनाप्युपदेशो भवतीत्यर्थः । इषेत्वकमधीष्वेति । इषेत्वकमित्येतत्पूर्वेण संबध्यते 'स तस्मायाचष्टे इषेत्वक'मिति । इषेत्वाशब्दो यस्मिन्ननुवाकेऽस्ति तमाचष्ट इत्यर्थः । 'गोषदादिभ्यो वुन्नि'ति वुन्प्रत्ययः ।

उ०—त्यर्थः । ननु नाऽस्योद्देशत्वमपि, 'अङ्गदी'त्यादिवद्बहुभिर्गुणैः प्रापणं हि तत्, नेह तथा, अनुनासिकत्वेनैव प्रापणादत आह—अन्तरतम इति । तथा च कण्ठ्यत्वदीर्घत्वादिभिरपि प्रापणान्न दोषः । 'गुणै'रित्यत्र बहुत्वमविवक्षितमिति तत्त्वम् । आख्याने प्रत्यक्षत्वमविशिष्टमत आह—इन्द्रियेति । यद्यप्यनुनासिकत्वमपीन्द्रियग्राह्यं तथाप्यनुनासिकशब्दप्रतिपाद्यतावेलाया-मिन्द्रियाऽगोचरमिति भावः ।

प्रसिद्धेति । प्रत्येकं साधारणेत्यादि बोध्यम् । भाष्ये—आख्यातमाहेति । कथित-मित्यर्थः । एकव्यक्तौ भेदाऽभावादीदृश इत्यङ्गतमत आह—एतैरिति । बाह्य इति । लोके दृश्यमान इत्यर्थः । एतेन बौद्धार्थस्यैव शाब्दबोधे भानमिति दर्शितम् । भाष्ये—इत्संज्ञायामिति । उक्तविशेषस्य निष्ठाद्यसंग्रहेणाऽत्राश्रयणमशक्यमिति भावः । ननु हस्तदक्षिणत्वादिकं नेतरभेदाऽनुमापकं लक्षणमत आह—गुणस्तेनापीति । भाष्ये हिरप्यर्थे इति भावः । क्वचित्तु 'लक्षणेनापि ही'ति पाठः । बहुत्वं चाऽविवक्षितमेव । प्रकृतसूत्रे चाऽस्यापि ग्रहणम्, अत एव 'निष्ठे'त्यादिभिः संज्ञया विहितप्रत्ययावयवानामित्संज्ञासिद्धि-रिति भावः । अत एवाऽत्रैतत्कथनं सफलम् । आदेच इत्यादौ तु व्याख्यानात्प्रत्यक्षमाख्यात-मुपदेश इत्यस्यैव ग्रहणमिति बोध्यम् । उपदेश इति । अज्ञातज्ञापनं भवतीत्यर्थः ।

कश्चित्कंचिदाह—'अनुवाकं मे भवानुद्दिशतु' इति । स तस्मायाचष्टे 'इषेत्वकमधीष्व', 'शंनोदेवीयमधीष्वे'ति । स प्रत्यक्षमाख्यातमाह—'उद्दिष्टो मेऽनुवाकस्तमध्येष्ये' इति । गुणैश्च प्रापणमुपदेशः । तद्यथा, कश्चित्कंचिदाह—'ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशतु' इति । स तस्मायाचष्टे—अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्योऽमुष्मिन्हस्तवामः' इति । स गुणैः प्राप्यमाणमाह—'उपदिष्टो मे पन्थाः' इति । एवमेतौ सङ्कीर्णावुद्देशोपदेशौ । एवं तर्हीत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति । ननु च लोप एवेत्कार्यं स्यात् । अकार्यं लोपः । इह हि शब्दस्य द्व्यर्थ उपदेशः । कार्यार्थो वा भवत्युपदेशः श्रवणार्थो वा । कार्यं चेह नास्ति । कार्ये चाऽसति यदि श्रवणमपि न स्यादुपदेशोऽनर्थकः स्यात् ।

इदमस्तीत्कार्यम्—'अभ्र आँ अटितः' अनन्तरलक्षणायां सत्यामित्संज्ञायाम् 'आदितश्च' [ ७. २. १६ ] इतीट्प्रतिषेधः प्रसज्येत ।

## सिद्धं तूपदेशनेऽनुनासिकवचनात् ॥ २ ॥

सिद्धमेतत् । कथम् ? उपदेशने योऽनुनासिकः स इत्संज्ञो भवतीति वक्तव्यम् । किं पुनरुपदेशनम् ? शास्त्रम् । सिध्यति । सूत्रं तर्हि भिद्यते ।

---

प्र०–किमर्थमाचष्ट इत्याह—अधीष्वेति । 'अध्ययनार्थमाचष्ट इत्यर्थः । अकार्यं लोप इति । यदि लोपोऽभिमतोऽभविष्यदाङो लोपश्छन्दसीत्येवाऽवक्ष्यदित्यर्थः । अनन्तरलक्षणायामिति । यदा अनेकान्ता अनुबन्धास्तदा अनन्तर इत्संज्ञकः कार्यस्य विशेषको भवतीति धातोरादित्त्वादिट्प्रतिषेधप्रसङ्गः ।

---

उ०–'आचष्टे' इत्यस्य कर्माकाङ्क्षत्वादाह—पूर्वेणेति । अध्ययनार्थमिति । इतिर्हेतौ । फलं च हेतुरिति भावः । 'इषेत्वकमधीष्वेत्यादिवाक्यमाचष्टे' इत्यन्वय इत्यन्ये । नन्वित्कार्ये तदकार्यत्ववादोऽयुक्तोऽत आह—यदीति । अभिमतकार्यत्वाऽभावपरोऽकार्यशब्द इत्यर्थः । नन्वित्संज्ञाया आनन्तर्यनिमित्तकत्वाऽभावेनानन्तरलक्षणायामित्यसङ्गतमत आह—यदेति । 'अनन्तरलक्षणाया'मित्यस्याऽनन्तरलक्षणकार्यायामित्यर्थः । 'शि'दित्यादावनन्तरादिषु वृत्त्यभावेऽपि सौत्रत्वाद् वृत्तिरिति भावः । ननु तत्रेत्त्वे 'आङ इ'दित्येवाऽवक्ष्यदिति चेन्न । विधानसामर्थ्याल्लोपो मा भूत्संज्ञा तु स्यादेवेति भाष्याशयः । एवं चाऽत्रोपदेशग्रहणं प्रत्याख्यातम् । 'अनुबन्धा एकान्ता' इत्यस्यैव न्याय्यताया वक्ष्यमाणत्वात् ।

अभ्र आँ इत्यस्यापि शास्त्रे विहिताऽनुनासिकत्वादाह—शास्त्रे च उच्चारित इति । 'उच्चारित' इत्यध्याहार इति भावः । भाष्ये—शास्त्रमिति । तच्च धात्वादिरूपं बोध्यम् । 'आदेच उपदेश' इत्यादाविव भावसाधनस्याऽऽद्योच्चारणरूपार्थकस्य ग्रहणे तु 'लृटः सद्वा' 'निष्ठे'तिविहितशत्राद्यवयवस्येत्संज्ञानापत्तिः । यथा कथंचिद्बोधनस्योपदेशत्वे त्वभ्र आमित्यादौ

यथान्यासमेवास्तु । ननु चोक्तम्—'इत्संज्ञायां सर्वप्रसङ्गोऽविशेषा'दिति । नैष दोषः । 'उपदेश' इति घञयं करणसाधनः । न सिध्यति । परत्वाल्ल्युट् प्राप्नोति† । न ब्रूमो'ऽकर्तरि च कारके संज्ञायाम्' [ ३. ३. १९ ] इति । किं तर्हि ? हलश्च [ ३. ३. १२१ ] इति । तत्रापि 'संज्ञाया'मिति वर्त्तते‡, न चैषा संज्ञा । प्रायवचनादसंज्ञायामपि भविष्यति‡ । प्रायवचनात्संज्ञायामेव स्याद्वा न वा, नह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणम् । यदि नोपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणं, 'कल्याण्यादीनामिनङ्; 'कुलटाया वा' [ ४. १. १२६; १२७ ] इनङ्विभाषा न प्राप्नोति । इनङेवाऽत्र प्रधानम् । विहितः प्रत्ययः प्रकृतश्चानुवर्तते× । इह तर्हि—वाकिनादीनां

प्र०- उपदेशन इति । तेन शास्त्रे य उच्चारितोऽनुनासिकः स इत्संज्ञक इत्यर्थः । परत्वादिति । परत्वेन बाधकत्वं लक्ष्यते । तेनाऽनवकाशत्वाल्ल्युट् प्राप्नोतीत्यर्थः । हलश्चेति । अयं तु ल्युटो बाधको घञ् । प्रायवचनादिति । 'हलश्चे'त्यत्र संज्ञायां प्रायेणेति चानुवर्तते । संज्ञया च प्रायग्रहणमभिसंबध्यते, प्रायेण संज्ञायां घञ्भवति, कचिदसंज्ञायामपीत्यर्थः । संज्ञायामेवेति । प्रत्ययस्य विधेयत्वात्प्राधान्यात्प्रायग्रहणं प्रत्ययेनैव संबध्यते, न तु गुणेन संज्ञयेत्यर्थः । उपाधिविशेषणयोश्च वाच्यत्वाऽवाच्यत्वाभ्यां विशेषः । तथाहि 'दृतिहरि'रिति प्रत्ययेन पशुः कर्ताऽभिधीयते इति पशुरुपाधिः । 'गार्गिकया श्लाघत' इति श्लाघा वुञा नाऽभिधीयत इति विशेषणमुच्यते । इनङ् विभाषेति । प्रत्ययस्य च विधेयतया प्राधान्यात्तादर्थ्येन प्रकृतेर्गुणत्वात्तदादेशस्येनङोऽपि गुणत्वादुपाधित्वमित्यर्थः । इनङेवात्रेति । अपूर्वोपदेशात्तस्यैव प्राधान्य-

उ०-दोष इति भावः । तदाह—घञयं करणेति । उत्सर्गापवादयोर्विप्रतिषेधाऽयोगादाह—परत्वेनेति । पशुः कर्त्ताभिधीयते इति । यद्यपि कर्तृत्वेनैव कर्त्ता प्रत्ययार्थस्तथाऽपि तत्त्वेनापि पशुरेवाभिधीयत इति स उपाधिरित्यर्थः । श्लाघेति । 'गोत्रचरणाद्भावे वुञ् स चेत्—श्लाघादिभिरन्वितः स्या'दिति सूत्रार्थात् श्लाघादिकं न प्रत्ययेन स्पृश्यत इति भावः । नन्विनङोऽपि विधेयतया प्राधान्यात्कथं गुणत्वमत आह—प्रत्ययस्येति । आर्थिकं गुणत्वमस्तीत्यभिमानः । ननु प्रत्ययस्याऽविधेयत्वाद् गुणत्वमित्ययुक्तम् । अनुवाद्यत्वस्य प्राधान्यनियतत्वाद्विधेयत्वस्य गुणत्वनियतत्वादिति मीमांसकाशङ्कां परिहरति—अपूर्वेति । न मीमांसकसंमते प्राधान्यगुणत्वे भगवतोऽभिमते, किं तु शास्त्रसंरम्भगोचरत्वतदगोचरत्वे एवेति भावः । ननु 'वाकिनादीना'मित्यतश्चकारानुवृत्त्या तद्वदेवाऽनेन प्रत्ययस्यापि विधेयत्वमेवेत्यत आह—उदीचामिति । नाऽत्र चोऽनुवर्तत इति भावः । ननु 'गुणः कृतात्मसंस्कार' इतिन्यायेन गुणस्यापि विशेषणसंबन्धदर्शनादाह—गुणप्रधानसन्निधौ यत्रेति । तद्भिन्नविषयः

† करणाधिकरणयोश्च ३.३.११७. ‡ पुंसि संज्ञायां घः प्रायेण ३.३.११८. × स्त्रीभ्यो ढक् ४.१.१२०.

कुक्च; 'पुत्रान्तादन्यतरस्याम्' [ ४. १. १५८; १५९ ] इति कुग्विभाषा न प्राप्नोति। अत्रापि कुगेव प्रधानम्। विहितः प्रत्ययः प्रकृतश्चानुवर्तते+। एवं न चेदमकृतं भवति--'नोपाधेरुपाधिर्भवति विशेषणस्य वा विशेषण'मिति, न च कश्चिद्दोषो भवति। एवं च कृत्वा घञ्न प्राप्नोति।

एवं तर्हि 'कृत्यल्युटो बहुलम्' [ ३. ३. ११३ ] इत्येवमत्र घञ्भविष्यति ॥२॥

## हलन्त्यम् ॥ १ । ३ । ३ ॥

### हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वात् ॥ १ ॥

हलन्त्ये सर्वप्रसङ्गः। सर्वस्य हल इत्संज्ञा प्राप्नोति। किं कारणम्? 'सर्वान्त्यत्वात्'। सर्वो हि हल् तं तमवधिं प्रत्यन्त्यो भवति।

### सिद्धं तु व्यवसिताऽन्त्यत्वात् ॥ २ ॥

प्र०-मित्यर्थः। ढक्तु 'स्त्रीभ्यो ढ'गित्येव सिद्धः। तदनुवादेनैनङ् विधीयते। कुगेवेति। 'उदीचां वृद्धादगोत्रा'दित्यनेन फिञ्विहितस्तदनुवादेन कुको विधानात्। न चेदमकृतमिति। आश्रितमेवेत्यर्थः। गुणप्रधानसन्निधौ यत्र प्रधानमर्थिविशेषणेन भवति तत्र तस्यैव विशेषणं न्याय्यं न तु गुणस्य। एवं च कृत्वेति। एवं स्थित्वेत्यर्थः। तेन घञेव न्यायवशात्संज्ञायां प्रायेण तिष्ठति, स एवात्र न प्राप्नोतीति समानकर्तृकत्वात् क्त्वाप्रत्यय उपपद्यते। एवं तर्हीति। बहुलग्रहणादसंज्ञायामपि घञ् भविष्यतीत्यर्थः॥२॥

हलन्त्यम्। अन्तेऽवसाने भवमन्त्यम्। सर्वो हि हलिति। सर्वस्य हलोऽवसानेन सम्बन्धात्। अन्त्यग्रहणं त्वादिनिवृत्त्यर्थं स्यात्। सिद्धं त्विति। व्यवसिताः

उ०-स न्याय इति भावः। ननु कृत्वेति कृञर्थो विचारस्तत्र पुरुषः कर्ता, प्राप्तौ घञित्यसमानकर्तृकत्वात्क्त्वा न प्राप्नोतीत्यत आह—एवं स्थित्वेति ॥२॥

हलन्त्यम्। अन्तशब्दो नाऽन्तावयववाची, तद्धितवैयर्थ्यापत्तेः। नाऽपि समीपपरः, अतिप्रसङ्गादत आह—अवसाने इति। ननु यदुच्चार्य विरम्यते तत्त्वमन्त्यत्वम्, न च तन्मध्यगतस्येति कथं सर्वप्रसङ्गोऽत आह—सर्वस्येति। सर्वमपि वर्णमुच्चार्य विरम्यत एव। स्पष्टं चेदं 'परः सन्निकर्षः' इति सूत्रे भाष्ये। न च ततः परमुच्चारणाऽभावोऽप्यपेक्षित इति भावः। भाष्ये 'सर्वो हि हलन्त्यो भवती'त्येव पाठः। 'तं तमवधिं प्रती'ति पाठे तत्तद्वर्णोच्चारणानन्तरभाविविरामरूपमवधिं प्रतीत्यर्थः। 'तं तमवधीकृत्ये'ति पाठान्तरम्। नन्वेवमन्त्यग्रहणं व्यर्थमत आह—आदिनिवृत्त्यर्थमिति। उपक्रमाऽभावलक्षकं तदिति भावः। न

+ उदीचां वृद्धादगोत्रात् ४. १. १५७.

सिद्धमेतत् । कथम् ? 'व्यवसितान्त्यत्वात्' । व्यवसिताऽन्त्यो हलित्संज्ञो भवतीति वक्तव्यम् । के पुनर्व्यवसिताः ? धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वा'दिति । नैष दोषः । आहाऽयं—'हलन्त्यमित्संज्ञं भवती'ति सर्वश्च हल् तं तमवधिं प्रत्यन्त्यो भवति, तत्र प्रकर्षगतिर्विज्ञास्यते—'साधीयो योऽन्त्य' इति । कश्च साधीयः ? व्यवसितानां योऽन्त्यः ।

अथवा सापेक्षोऽयं निर्देशः क्रियते । न चान्यत्किंचिदपेक्ष्यमस्ति, तेन व्यवसितानेवापेक्षिष्यामहे ।

**लकारस्यानुबन्धाऽज्ञापितत्वाद्धल्ग्रहणाऽप्रसिद्धिः ॥ ३ ॥**

लकारस्यानुबन्धत्वेनाऽज्ञापितत्वाद्धल्ग्रहणस्याऽप्रसिद्धिः । 'हलन्त्यमित्संज्ञं भवती'त्युच्यते, लकारस्यैव तावदित्संज्ञा न प्राप्नोति† ।

प्र०—परिच्छिन्ना ये समुदाया धातुत्वप्रत्ययत्वादिना धर्मेण, तेषां योऽन्त्य इत्यर्थः । अवयवास्तु समुदायतन्त्रत्वान्नान्तरीयकोपदेशत्वाद्धातुत्वादिना न परिच्छिन्नाः । तत्र प्रकर्षगतिरिति । आदिनिवृत्त्यर्थत्वादन्त्यशब्दस्य कथं प्रकर्षगतिः । उच्यते—आदेरप्युच्चारणानन्तरमवसानसम्बन्धादन्त्यत्वमनिवार्यमिति नास्ति तन्निवृत्तिरिति सामर्थ्यात्प्रकर्ष आश्रीयते,—व्यवसितानां योन्त्य इति । आदिमध्यानां च काल्पनिकमन्त्यत्वं, सर्वान्त्यस्य तु नित्यमेवेति तस्यैव युक्तं ग्रहणम् । अथवेति । पूर्वं समुदायावयवसन्निधौ समुदायापेक्षमाश्रयितुं युक्तमिति परिहृतम् । इदानीं तु समुदायार्थत्वादुपदेशस्यावयवानामसत्त्वात्तदपेक्षणं दूरोत्सारितमिति मत्वा परिह्रियते ।

उ०—च पूर्वसूत्रे उपदेशशब्दस्य धात्वादिशास्त्रपरतया तस्यैव प्रकृतेऽनुवृत्त्या यत्किंचित्समुदायाऽन्त्यवारणेन शङ्कैवाऽनुपपन्नेति वाच्यम् । तस्य स्वरितत्वाऽभाव इत्याशयात् । 'व्यवसित'पदस्य निश्चितपरत्वभ्रमं वारयति—व्यवसिता इति । शास्त्रकृता परिच्छिन्नत्वेन बोधिता इत्यर्थः । धात्वित्यादि । 'वक्ष्यमाणे'त्यादिः । अवयवानां धातुत्वाऽभावे युक्तिमाह—अवयवा इति । समुदायतन्त्रत्वात् । समुदायस्तन्त्रं प्रयोजनं येषां तत्त्वात् । भाष्ये—धातुप्रातिपदिकेति । 'अइउण्' 'नदट्' इत्यादौ णटादीनामित्संज्ञाक्रमबोधकत्वेन, स्वरूपबोधकत्वेन च प्रातिपदिकत्वात् । श्रोत्रियनादेरपि तत्त्वादेव । निपातोदाहरणमाङादि । सामर्थ्यादिति । लक्षणां विनैवोपपत्तावुपक्रमाऽभावलक्षकत्वमेव दोष इति भावः । काल्पनिकमिति । सर्वान्त्यस्य हि

१–'यो व्यवसितान्त्यः' । २–'व्यवसितमेव' । † आदिरन्त्येन सहेता १. १. ७१.

## सिद्धं तु लकारनिर्देशात् ॥ ४ ॥

सिद्धमेतत्। कथम्? लकारनिर्देशः कर्तव्यः। हलन्त्यमित्संज्ञं भवति लकारश्चेति वक्तव्यम्।

## एकशेषनिर्देशाद्वा ॥ ५ ॥

अथवैकशेषनिर्देशोयम्। 'हल्च हल्च हल्, हलन्त्यमित्संज्ञं भवति'।

अथवा लकारस्यैवेदं गुणभूतस्य ग्रहणं, तत्रोपदेशेऽजनुनासिक इत् [ १. ३. २ ] इतीत्संज्ञा भविष्यति।

प्र०— लकारस्येति। इतरेतराश्रयं मन्यते। 'शषसर् ह्'लित्यत्र लकारस्य सत्यामित्संज्ञायां हलिति प्रत्याहारः, सति च प्रत्याहारे 'ल'ण्णित्यत्र लकारस्य हल्त्वात्तस्यैव शषसर् हलित्यत्रान्ते निर्दिष्टत्वादित्संज्ञेति प्रत्याहाराश्रयेत्संज्ञा, तदाश्रयश्च प्रत्याहारः। लकारश्चेति। पूर्वं लकारस्येत्संज्ञा विधेया, तेन हलिति प्रत्याहार उपपद्यते। तत्र हल् च ल् चेति समाहारद्वन्द्वं कृत्वा 'संयोगान्तस्य लोप' इति लकारो लुप्यते। हल् चेति। हस्य ल् हलित्येकः षष्ठीतत्पुरुषः। द्वितीयः प्रत्याहारः। 'नपुंसकमनपुंसकेने'ति चैकशेषः। एकस्य पुँल्लिङ्गत्वादितरस्य नपुंसकत्वात्। अथवेति। शषसर् हलित्यत्र

उ०—मुख्यं तत्, 'यस्मात्परो नास्ती'त्यादिलक्षणाक्रान्तत्वादिति भावः। अवयवानामसत्त्वादिति। तत्प्रतीतिस्तु भ्रम एव, तन्मूलक एव च समुदायव्यवहार इति भावः।

ननु हलामित्संज्ञाविधाने लकारे तदप्राप्तिः कथमत आह—इतरेतरेति। भाष्ये 'हलन्त्य'मित्युत्तरं 'लश्चे'ति वाक्यान्तरकरणात्तदर्थबोधात्पूर्वं कथं तस्य बोधोऽत आह—पूर्वमिति। पाठक्रमादार्थक्रमो बलीयानिति भावः। इतरेतरयोगे द्विवचनापत्तेराह—समाहारे इति। एवं च भाष्ये 'कर्त्तव्य'पदं व्याख्येयपरमिति भावः। वस्तुतो भाष्ये कर्त्तव्यपदं यथाश्रुतमेव। कैयटस्तु चिन्त्यः। यणः प्रतिषेधारम्भेण झल्ग्रहणाऽपकर्षेण च संयोगान्तलोपाऽप्राप्तेः। वक्तॄणां सहबोधाऽसंभवेन नाज्झलाविति सूत्रोक्तवाक्याऽपरिसमाप्तिन्यायेन भाविसंज्ञया पूर्वमाचार्याणामव्यवहारेण च सहविवक्षाऽभावाद् द्वन्द्वाऽप्राप्तेश्चेति बोध्यम्। अत एव भाष्ये'निर्देशः कर्त्तव्य' इत्युक्तम्। निर्देश उच्चारणम्। न तु 'लुप्तनिर्दिष्ट' इत्युक्तम्। एतेन हलन्त्यं 'ल' इति प्रश्लेपः। सौत्रश्च तस्य लोप इत्यपास्तम्। सौत्रत्वाल्लोपं कृत्वा व्याख्यानमाश्रयणीयमिति गौरवेण भाष्यकृद्वक्ष्यमाणरीत्यैव प्रत्याख्यानस्य न्याय्यत्वात्।

हस्य लिति। संबन्धसामान्यषष्ठ्या समासे पर्यवसानगत्या सामीप्यलाभ इति भावः। इतरस्येति। प्रकृतेऽन्त्यपदसमानाधिकरण्यादिति भावः। वस्तुत इदं चिन्त्यम्। एवमर्थस्येष्टत्वे तत्पुरुषेऽन्त्यपदाऽसम्बन्धेन 'हलित्संज्ञं, हलन्त्यं चेत्संज्ञ'मिति वदेत्, पूर्ववत्। तस्माद्वाक्यद्वयमप्यन्त्यपदघटितम्। द्वन्द्वान्ते श्रूयमाणस्यैव प्रत्येकं संबन्धात्। तयोश्च तन्त्रेणोच्चारणं भाष्य इति हल्सूत्राऽन्त्यमन्त्यं च हलिदित्येव भाष्यार्थः। एकशेषशब्देन च भाष्ये

अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'भवति लकारस्येत्संज्ञे'ति यदयं णलं लितं करोति ।

प्रातिपदिकप्रतिषेधोऽकृत्तद्धिते ॥ ६ ॥

अकृत्तद्धितान्तस्य प्रातिपदिकस्य प्रतिषेधो वक्तव्यः । उदश्वित् शकृदिति । अकृत्तद्धितान्तस्येति किमर्थम् ? कुम्भकारः नगरकारः औपगवः कापटव इति* ।

इदर्थाऽभावात्सिद्धम् ॥ ७ ॥

इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ।

प्र०-'हलन्त्य'मित्यत्र च लृकारस्यैकादेशो लपरत्वं च क्रियते । नन्वेवमपीतरेतराश्रयमेव, लृकारस्य सत्यामित्संज्ञायां हलिति प्रत्याहारः, सति च प्रत्याहारे 'ऐऔ'जिति चकारस्येत्संज्ञा, तस्यां सत्यामजिति प्रत्याहारः, 'अ'जिति प्रत्याहारे सति लृकारस्येत्संज्ञा । एवन्तर्हि 'लृदितः' इति ज्ञापकाल्लृकारस्येत्सञ्ज्ञाकार्यं भविष्यतीति नास्तीतरेतराश्रयत्वमिति भगवतो भाष्यकारस्याऽभिप्रायः । अथवेति । णलो लकारः स्वरार्थः कृतः । असत्यां चेत्संज्ञायां कुतः स्वरः श्रवणार्थस्तु णलो लकारो न भवति, हल्ङ्याबिति सूत्रे हल्ग्रहणाण्णल्व्यावृत्त्यर्थात् । तत्र हि बिभेदेति णल्व्यावृत्त्यर्थं हल्ग्रहणं कृतम् । लकारस्य च श्रवणेऽपृक्तत्वाऽभावाल्लोपस्याऽप्राप्तिरिति किं हल्ग्रहणेन ।

प्रातिपदिकप्रतिषेध इति । यदा 'मञ्जकादिनिवृत्त्यर्थः प्रातिपदिकानामुपदेशः कर्तव्य' इति पक्षस्तदायं प्रतिषेधः । अन्यथोपदेशाऽभावात्प्राप्त्यभावादनर्थकः प्रतिषेधः स्यात् । कुम्भकार इति । अपवादविषयपरिहारेणेत्संज्ञायाः प्रवर्त्तनात्पूर्वं प्राति-

उ०-तन्त्रं लक्ष्यते । अन्यथा सहविवक्षाऽभावादेकशेषः शास्त्रीयो न स्यादिति बोध्यम् । भाष्ये एकदेश्याह—अथवेत्यादि । ज्ञापकेन लृकारस्येत्त्वे 'उपदेश' इतिसूत्रोल्लेखोऽसङ्गत इत्यत आह—लृकारस्येत्संज्ञाकार्यमिति । अच्पदघटितसूत्रस्य कार्यभूतेत्संज्ञेत्यर्थः । हल्ग्रहणादिति । न च डानिवृत्त्यर्थं तत्, सुतिसीतिप्रत्ययैः प्रकृत्याक्षेपेण तद्व्यावृत्तिसिद्धिरित्यभिमानः । वस्तुतस्तद्बेदेत्यादिनिर्देशान्न श्रवणार्थो लकार इति भाष्यतात्पर्यम् । अनयोरेकदेश्युक्तित्वं तु लृकारेत्संज्ञाया अपि हल्पदार्थसिद्धेः प्रागलाभात् । 'लृदित' इति ज्ञापकमपि शिथिलम् । सर्वेषामचामित्संज्ञाकाले तस्यापीत्त्वलाभात् । एवं णलो लित्वस्याऽपि ज्ञापकतोक्तिः, चादीनामित्संज्ञाप्रवृत्तिकाले णलो लस्यापि तत्प्रवृत्त्या ज्ञापकाऽसंभवात् । तस्मादेकशेषनिर्देशाद्वेत्येव समाधानम् ।

मञ्जकादीति । मञ्जकादिस्थाने इत्यर्थः । अयं पक्षः पस्पशाह्निकाऽन्ते भाष्ये । इदं चिन्त्यम् । यद्युपदेशोऽज्ञातज्ञापकमुच्चारणं तर्हि 'ढकि लोप' इत्यनुमितढक उपदेशाऽभावा-

* कर्मण्यण् ३. २. १; प्राग्दीव्यतोऽण् ४. १. ८३; तस्यापत्यम् ४. १. ९२.

इदमस्तीत्कार्यं—'तित्स्वरितम्' [ ६. १. १८५ ] इति स्वरितत्वं यथा स्यात्। नैतदस्ति प्रत्ययग्रहणं तत्र चोदयिष्यति†।

इदं तर्हि राजा तक्षा, ञ्नितीत्याद्युदात्तत्वं यथा स्यात्‡। ञ्नितीत्युच्यते, तत्र व्यपवर्गाऽभावान्न भविष्यति।

इदं तर्हि—'स्वर्'। 'उपोत्तमं रिति' [ ६ १. २१७ ] इत्येष स्वरो यथा स्यात्। स्वरितकरणसामर्थ्यान्न भविष्यति 'न्यङ्स्वरौ स्वरिता'वितिx। इह तर्हि—'अन्तर्'। उत्तमशब्दस्त्रिप्रभृतिषु वर्तते, न चात्र त्रिप्रभृतयः सन्ति।

प्र०–पदिकसंज्ञेति प्रतिषेधे प्राप्तेऽ'कृत्तद्धित' इति प्रतिषेधः क्रियते। प्रत्ययग्रहणमिति। उदश्विच्छकृदिति चैतावव्युत्पन्नौ। शकृदिति शकेर्ऋतिन्निति यद्यपि व्युत्पाद्यते तथाप्युपदेशे तकारोऽन्त्यो न भवतीतीत्संज्ञा न प्रवर्तते। राजा तक्षेति। नन्वव्युपत्तिपक्षेऽप्यनयोरवश्यमाद्युदात्तत्वमेष्टव्यम्। तत्राद्युदात्तस्याद्युदात्तत्वे किं प्रयोजनं येनेत्संज्ञा स्यात्। उच्यते—आमन्त्रितनिघातप्रतिषेधार्थमाद्युदात्तत्वं स्यात्। 'न ङिसंबुद्ध्यो'रिति नलोपस्य प्रतिषेधो, नेत्संज्ञाया इति तत्प्रतिबद्धः स्वरः स्यात्।

व्यपवर्गाऽभावादिति। नित्परो नास्तीति भावः। यदा तु 'सौवर्यः सप्तम्यस्तदन्तसप्तम्य' इति पक्षस्तदाऽपि निदेवायं, न तु निदन्त इति नास्ति स्वरः। अत्र तु पक्षे

उ०–त्कस्येत्संज्ञाऽनापत्तिः। मञ्चकादौ मञ्जकादिभ्रमनिवृत्त्यर्थं तेषामप्यनुवादस्यैव सत्त्वेनोक्तोपदेशाऽभावाच्च, यथाकथंचिद्बोधनस्यैवोपदेशत्वे तदनुवृत्तिर्निष्फला। किं च पूर्वसूत्रे उपदेशशब्दस्य करणसाधनत्वपक्षेऽपठितानामप्येषामुपदेशत्वमस्त्येव 'व्यवसिताऽन्त्यं ह'लिति न्यासं कुर्वता वार्तिककृता तदनुवृत्तेस्त्यक्तत्वाच्च। ननूपदेश एव णकारलोपे पश्चात्प्रातिपदिकत्वमिति कथमत्र निषेधप्रसक्तिरत आह—अपवादेति। ननु शकृति ऋतः प्रत्ययत्वात्तद्ग्रहणेऽपि दोषोऽत आह—उदश्विदिति। उदकेन श्वयत इति व्युत्पत्तावप्यस्य तकारस्य तुका निष्पन्नत्वात्प्रत्ययावयवत्वाऽभावात्तत्राऽव्युत्पन्नत्वकथनफलं चिन्त्यम्। उपदेशे तकारोऽन्त्यो न भवतीति। इदमुक्तरीत्या चिन्त्यम्। भाष्यस्वरसस्त्वव्युत्पन्नत्व एवेति बोध्यम्। किं चोपदेश इत्यनुवृत्तौ 'प्रातिपदिकप्रतिषेध' इति वार्तिकानुत्थानमेव, 'उद्देशश्च प्रातिपदिकानां नोपदेश' इ'त्यादेच' इत्यादिसूत्रभाष्योक्तेः। अत एव पस्पशाह्निकान्ते 'उपदेश' इत्यस्याऽनुवाद इत्येवाऽर्थं एतद्भाष्यैकवाक्यत्वादिति बोध्यम्। ननु संबुद्धौ 'न ङिसंबुद्ध्यो'रिति लोपनिषेधसामर्थ्यादित्वप्रयुक्तनलोपस्याऽप्यभावेन संज्ञाऽपि नेति मन्दाशङ्कायामाह—न ङीति। नित्परो नेति। समुदायाऽर्थत्वादुपशस्य स एव नित्व्यपदेशयोग्य इत्यनिति अवयवो नित्परोऽस्तीति न शङ्क्यम्। न तु निदन्त इति। व्यपदेशिवद्भावस्त्वप्रातिपदिकेनेति निषिद्ध

† तिति प्रत्ययग्रहणम् ६.१.१८५ वा० १. ‡ ञ्नित्यादिर्नित्यम् ६.१.१९७. x फिट्सूत्रपाठे ४। ६.

इह तर्हि—'सनुतर्'। 'उपोत्तमं रिती'त्येष स्वरो यथा स्यात्। अन्तोदात्तनिपातनं करिष्यते, स निपातनस्वरो रित्स्वरस्य बाधको भविष्यति।

एतच्चात्र युक्तम्—यदित्कार्याऽभावादित्संज्ञा न स्यात्, यत्रेत्कार्यं भवति, भवति तत्रेत्संज्ञा। तद्यथा—'आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्' [२. ४. ७०] इति+ ॥३॥

## न विभक्तौ तुस्माः ॥ १ । ३ । ४ ॥

### विभक्तौ तवर्गप्रतिषेधोऽतद्धिते ॥ १ ॥

विभक्तौ तवर्गप्रतिषेधोऽतद्धित इति वक्तव्यम्। इह मा भूत्—'किमोऽत्' [५. ३. १२] 'क्व प्रेप्सन्दीव्यसे' 'क्वार्द्धमासा' इति।

स तर्हि प्रतिषेधो वक्तव्यः? न वक्तव्यः। आचार्यप्रवृत्तिर्ज्ञापयति—'न विभक्तौ तद्धिते प्रतिषेधो भवती'ति, यदयम्—'इदमस्थमुः [५. ३. २४] इति मकारस्येत्संज्ञापरित्राणार्थमुकारमनुबन्धं करोति।

प्र०—'श्रोत्रिय'न्निति यदा वाक्यार्थे पदवचनं तदा स्वरो न सिद्ध्यति। यदा तु छन्दसः श्रोत्रभावो घंश्च प्रत्ययस्तदा निदन्तत्वात्स्वरसिद्धिः। तद्यथागस्त्येति। प्रत्ययस्य लुकि कृते परिशिष्टस्य कुण्डिनजादेशः। तत्र प्रत्ययलक्षणेन तद्धितान्तत्वात्प्रातिपदिकत्वादित्संज्ञानिषेधः स्यात्। न चाऽयं चकारस्तद्धितसंबन्धी यतो'ऽकृत्तद्धित' इति निषेधः स्यात् ॥३॥

न विभक्तौ तुस्माः। इत्संज्ञापरित्राणार्थमिति। इत्संज्ञायाः परित्राणमिति 'साधनं कृते'ति पञ्चमीतत्पुरुषः। शेषविवक्षायां वा षष्ठीसमासः। अनेनोकारेणानु-

उ०—इत्यभिमानः। अत्र त्विति। तथा चेदं भाष्यमेकदेश्युक्तिः, 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधस्तु प्रत्ययविधिविषय इति भावः। प्रत्ययस्येति। प्रतिषेधारम्भेऽस्य चस्येत्त्वं न स्यादिति तन्न कार्यमिति भावः। अत्र हि चित्त्वेनाऽन्तोदात्तत्वमिष्यते, प्रकृतिप्रत्ययान्यतरचित्त्वमादायैव चिदवयवकप्रकृतिप्रत्ययसमुदायस्याऽन्तोदात्ततायास्तेन विधानात् ॥३॥

न विभक्तौ। नन्वित्संज्ञाव्यावर्त्तकोकारस्य कथं तत्परित्राणार्थत्वमत आह—इत्संज्ञाया इति। 'इटो'दित्यादीनां मुखसुखार्थत्वप्रतिज्ञया श्रवणाऽभावस्य बोधितत्वात्तत्प्रतिज्ञयैव तेषु 'न विभक्ता'वित्यस्याऽप्रवृत्तिरिति नाऽतद्धित इत्यसङ्गतम्। इदानीमत्र प्राप्नोतीति भाष्ये। ज्ञापनकाले इत्यर्थः। अत्रत्यमत्रेति व्याचष्टे—इदानीमित्यत्रेति। भाष्ये—तावदिश्भाव इति। प्रत्ययोत्पत्तेः पूर्वं न प्राप्नोतीत्यर्थः। ननु 'प्राग्दिश' इति

+चितः ६. १. १६३. १—'प्रेप्सन्दीप्यसे पां०।

यद्येतज्ज्ञाप्यते 'इदानी'मित्यत्रापि प्राप्नोति* । इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ।

इदमस्तीत्कार्यं—'मिदचोन्त्यात्परः [ १. १. ४७ ] इति । अचामन्त्यात्परो यथा स्यात् । इशभावे कृते† नास्ति विशेषो 'मिदचोऽन्त्यात्परः' इति वा परत्वे, 'प्रत्ययः परः'‡ इति वा । स एव तावदिशभावो न प्राप्नोति । किं कारणम् ? 'प्राग्दिशः प्रत्यये'ष्वित्युच्यते । कः पुनरर्हतीशभावं प्राग्दिशः प्रत्ययेषु वक्तुम् । किं तर्हि ? प्राग्दिशोऽर्थेष्विशभावः, 'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः' [ ५. ३. २ ] प्रत्ययोत्पत्तिः । एवं तर्हि तदोऽप्ययं वक्तव्यः× । ततश्च मिदचोन्त्यात्परत्वेन न सिध्यति । ननु चाऽत्राप्यत्वे कृते+ नास्ति विशेषो 'मिदचोऽन्त्यात्परः' इति वा परत्वे, 'प्रत्ययः परः' इति वा । तद्धयत्वं न प्राप्नोति । किं कारणम् ? विभक्तावित्युच्यते ।

प्र०—मीयते 'येषां'प्राग्दिशो विभक्ति'रिति विभक्तिसंज्ञा तेषां 'न विभक्तौ'वितीत्संज्ञा न निषिध्यते' इति । अत्रेति । इदानीमित्यत्र । अर्थेष्विति । यथेष्टमवधिमत्कल्पनेत्यत्रार्थोवधिमत्त्वेनाश्रीयते । तत्राऽनुत्पन्न एव प्रत्यय इशभावः । ततः प्रत्ययः । यदि तु पूर्वं प्रत्ययः स्यात्तदा मित्त्वादचोऽन्त्यात्परे दानीमि कृते तन्मध्यपतितस्य तद् ग्रहणेन ग्रहणात्सर्वादेश इशि सति'दानीं'विधानमनर्थकमेव स्यात् । तदोऽप्ययमिति । 'तदो दा चे'ति चकारेणाऽनुकर्षणात् । ननु चेति । सप्तम्यां विभक्तावुत्पन्नायामत्वे कृते दानीमिति भावः । तद्धीति । 'प्राग्दिशोऽर्थेष्वि'ति पूर्वमभिधानात्सप्तम्यर्थवृत्तेः

उ०—शब्दस्याऽवधित्वेनोपादानादवधिमानपि शब्द एवेत्याशङ्कयाह—यथेष्टमिति । तस्याऽपि प्रकृतित्वेन सजातीयाऽवधिमदसम्भव इति भावः । अर्थ इति । तत्तत्प्रकृत्यर्थरूपोऽर्थः । ननु प्रत्ययादेशयोर्मध्ये कदाचित्प्रथमं प्रत्ययोत्पत्तावित्कार्यं स्यादित्याशङ्क्य प्रथममादेशोत्पत्तौ विनिगमकमाह—यदि त्विति । भाष्ये 'किं तर्हि ? प्राग्दिशोऽर्थेष्विशभाव' इत्युक्ते 'एवमपि परत्वात्प्रत्यय एव पूर्वमुचित' इत्याशङ्कयोक्तं 'किं सर्वनामबहुभ्योऽद्व्यादिभ्यः प्रत्ययोत्पत्ति'रिति । एवं च द्व्यादिभेदज्ञानसापेक्षत्वेन बहिरङ्गप्रत्ययात्पूर्वमन्तरङ्गत्वादादेश एव । अत्रैवाऽर्थे 'दानीं'ग्रहणमपि ज्ञापकमिति तद्भावं केचित् । वस्तुतोऽयमपाठः । 'इदमो र्हि'लित्यत 'इदम' इत्यनुवर्त्तमाने दानीमो विधानात् । कैयटस्वरसोऽप्येवमेव । अत्वप्रवृत्तिप्राथम्ये विनिगमकमाह—सप्तम्यामिति । 'अन्तरङ्गानपी'तिन्यायमसौ न जानीते इति बोध्यम् । सप्तम्यर्थेति । 'प्राग्दिश' इतिवत्सप्तम्या इत्यप्यर्थपरमेव । प्रातिपदिकाच्च तद्धितोत्पत्तिरिति

* दानीं च ५. ३. १८. † इदम इश् ५. ३. ३. ‡ परश्च ३. १. २. × तदो दा च ५. ३. १९.
\+ त्यदादीनामः ७. २. १०२.

एवं तर्हि यकारान्तो दानीं करिष्यते, किं यकारो न श्रूयते ? लुप्तनिर्दिष्टो यकारः ॥४॥

चुटू ॥ १ । ३ । ७ ॥

चुञ्चुप्चणपोश्चकारप्रतिषेधः ॥ ॥ १ ॥

चुञ्चुप्चणपोश्चकारस्य प्रतिषेधो वक्तव्यः* । केशचुञ्चुः । केशचणः ।

इदर्थाऽभावात्सिद्धम् ॥ २ ॥

इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ॥ इदमस्तीत्कार्यं 'चितोऽन्त उदात्तो भवती'त्यन्तोदात्तत्वं यथा स्यात् । पित्करणमिदानीं किमर्थं स्यात् ?

पित्करणं किमर्थमिति चेत्पर्यायार्थम् ॥ ३ ॥

पित्करणं किमर्थमिति चेत्पर्यायार्थमेतत्स्यात्† । एवं तर्हि यकारादी चुञ्चुप्चणपौ । किं यकारो न श्रूयते ? लुप्तनिर्दिष्टो यकारः ।

प्र०—कालवाचिनो मित्त्वान्मध्ये दानीमा भाष्यमिति तदानीमित्यस्याऽसिद्धिरेवेत्यर्थः । यकारान्त इति । यकारोऽन्त्यत्वमनुभवन्मकारस्याऽन्त्यत्वं प्रतिबध्नाति । यकारस्य च 'संयोगान्तस्य लोप' इति लोपः क्रियते । यद्येवं मकार एवोपदेशेऽन्त्यः श्रूयते इति प्राप्नोत्येव मकारस्येत्संज्ञा । नैतदस्ति 'पूर्वत्राऽसिद्ध'मिति मकारस्येत्संज्ञायां यलोपस्याऽसिद्धत्वादन्त्यत्वाऽभावात् ॥४॥

चुटू । लुप्तनिर्दिष्ट इति । पूर्वं निर्दिष्टः पश्चाल्लुप्त इत्यर्थः । राजदन्तादेराकृतिगणत्वाद्भाष्यकारवचनाद्वा पूर्वकालस्य परनिपातः । अथवा लुप्तोऽयमिति प्रति-

उ०—भावः । अन्तरङ्गानपीति न्यायाच्च । ननु यकारसत्त्वेऽपि दानीमित्यस्य मोऽन्त्य एवेत्यत आह—यकार इति । संयोगान्तस्य लोप इति । चिन्त्यमिदं, यणः प्रतिषेधात् । तस्माच्चशब्दनिमित्तको 'लोपो व्यो'रिति लोप इति वक्तुमुचितम् । उपदेशेऽन्त्य इति । व्यवसितस्याऽन्त्यः श्रूयत इति वक्तुमुचितम् । पूर्वत्रेति । वस्तुतस्तु 'लोपो व्यो'रित्यस्य बहिरङ्गतयाऽसिद्धत्वमित्संज्ञां प्रतीति बोध्यम् । न च यकारे कृतेऽपि मान्तस्य प्रत्ययतया व्यवसिताऽन्त्यत्वेन दुर्वारैवेत्संज्ञेति वाच्यम् । व्यवसितान्त्यशब्देन प्रत्यासत्त्या शास्त्रकृद्व्यवसितान्त्यस्यैव ग्रहणेनाऽदोषात् । तद्व्यवसितश्च यान्त इति बोध्यम् । उत्तरसूत्रस्थस्य 'यकारादी चुञ्चुप्चणपा'विति भाष्यस्य योजनार्थं मदुक्तप्रकार आवश्यक इति बोध्यम् ॥४॥

चुटू । लुप्तस्य निर्देशाऽयोगादाह—पूर्वमिति । इति प्रतिज्ञात इति । निर्दिष्टशब्दः प्रतिज्ञातार्थको, मध्यपदलोपी च समास इति भावः । नन्विवरित इत्यादाविरावितौ यस्येति

* तेन वित्तश्चुञ्चुप्चणपौ ५. २. २६ † अनुदात्तौ सुप्पितौ ३. १. ४.

## इर उपसंख्यानम् ॥ ४ ॥

इर उपसंख्यानं कर्तव्यम् । रुधिर्—अरुधम्, अरौत्सीत्‡ ॥ अवयव-ग्रहणात्सिद्धम् । रेफस्याऽत्र 'हलन्त्यम्' [ १. ३. ३ ] इतीत्सञ्ज्ञा भवि-ष्यति, इकारस्य 'उपदेशेऽजनुनासिकः' [ २ ] इति ।

## अवयवग्रहणादिति चेदिदिद्विधिप्रसङ्गः ॥ ५ ॥

अवयवग्रहणादिति चेदिदिद्विधिरपि प्राप्नोति । भेत्ता छेत्ता । 'इदितो नुम्धातोः [ ७. १. ५८ ] इति नुम्प्राप्नोति ।

यदि पुनरयमिदिद्विधिः कुम्भीधान्यन्यायेन विज्ञायेत । तद्यथा— 'कुम्भीधान्यः श्रोत्रियः' इत्युच्यते । यस्य कुम्भ्यामेव धान्यं स कुम्भीधान्यः । यस्य पुनः कुम्भ्यां चाऽन्यत्र च धान्यं, नाऽसौ कुम्भीधान्यः । नायमिदि-द्विधिः कुम्भीधान्यन्यायेन शक्यो विज्ञातुम् । इह हि दोषः स्यात्—'टुनदि' नन्दथुरिति ।

प्र०—ज्ञातो लुप्तनिर्दिष्टः । इर उपसंख्यानमिति । 'इरितो वे'त्यत्रेरिति समुदायानुकरणम् । इर इद्यस्य सोऽयमिरित् । समुदायस्य चाऽज्झलात्मकत्वादप्राप्तेत्सञ्ज्ञोपसंख्यायते । समुदायस्य चेत्संज्ञासंबन्धेऽवयवाः पारतन्त्र्यादित्संज्ञां न लभन्त इतीदित्त्वाऽभावा-न्नुमभावः । नन्वेवं सति स्वरितेत इत्यात्मनेपदं न प्राप्नोति । नैष दोषः । स्वरितत्व-प्रतिज्ञानसामर्थ्यादवयवगतं स्वरितत्वं समुदाय आरोपयिष्यते । अवयवग्रहणादिति । इराविती यस्य स इरिदित्येवमित्संकत्वेनाऽवयवावेवाश्रीयेते, न तु समुदाय इत्यर्थः ।

यदि पुनरिति । यस्य च कुम्भीस्थादन्यन्निहितं धान्यं नास्ति च कुम्भीधान्यः । यद्यपि नुम्विधावस्य न्यायस्य निमित्तं नास्ति तथापि दोषेणैव तन्न्यायानाश्र-यणमाह—नायमिति । इकार एवेदिति । इदिता धातुर्विशेष्यत इति तदन्त-

उ०—विग्रहाद्धलन्त्यमुपदेशेऽजित्येव सिद्धे इदं व्यर्थमत आह—इरित इति । इराविताविति । लक्ष्याऽनुरोधाद् द्विवचनान्तेनाऽपि विग्रह इति भावः । एवं चाऽऽत्मनेपदार्थं सामर्थ्यं नाश्र-यणीयमिति बोध्यम् । यद्यपीति । दानपात्रतासिद्धये विशेषणकुम्भ्यामन्वितैवकारगर्भसमा-सेनान्ययोगव्यवच्छेदलाभेपि प्रकृते तदाश्रयणे प्रमाणाऽभावादिति भावः । भाष्ये—इकार एवेदिति । तत्पुरुषत्वमेवाऽस्य, न बहुव्रीहित्वमित्येतत्सूचनायैवकारः । अङ्गाधिकारस्थत्वेन प्रत्ययनिमित्तत्वात्तदप्राप्तेराह—अनङ्गस्यापीति । 'अधातो'रित्यपि बोध्यम् । 'न धात्वि'ति-सूत्रस्थभाष्यकैयटरीत्याऽनुबन्धविनिर्मुक्तस्यैव धातुत्वात् । अत एव भाष्ये सूत्रं नोपन्यस्तम् ।

‡ इरितो वा ३. १. ५७.

एवं तर्हि नैवं विज्ञायते—इकार इदस्य सोऽयमिदित्तस्येदित इति । कथं तर्हि ? इकार एवेत् इदित्, इदिदन्तस्येति ॥ अथवा ऋकारस्यैवेदमित्त्वंभूतस्य ग्रहणम्× । तत्रोपदेशेऽजनुनासिक' इतीत्संज्ञा भविष्यति ॥ अथवाऽऽचार्य-प्रवृत्तिर्ज्ञापयति—'नैवंजातीयकानामिदिद्विधिर्भवती'ति यदयमिरितः कांश्चिन्नु-मतुषक्तान्पठति—'उबुन्दिर् निशामने । 'स्कन्दिर् गतिशोषणयोः' ॥ अथवाऽऽ-चार्यप्रवृत्तिर्ज्ञापयति—'इर् शब्दस्येत्संज्ञा भवती'ति यदय'मिरितो वा' [ ३. १. ५७ ] इत्याह ॥ अथवाऽन्त इति वर्तते† ॥७॥

## तस्य लोपः ॥ १ । ३ । ९ ॥

तस्यग्रहणं किमर्थम् ? इत्संज्ञकः प्रतिनिर्दिश्यते । नैतदस्ति प्रयोजनम् । प्रकृतमिदिति वर्तते । क्व प्रकृतम् ? 'उपदेशेऽजनुनासिक इत्' [ १. ३. २ ]

प्र०–विधिः । ऋकारस्येति । 'ऋत इद्धातो'रितीत्त्वे रपरत्वे च भिदिरित्यादिनिर्देशः । अनङ्गस्याऽपि निपातनादित्त्वम् । तत्र च भिदृशब्दे पूर्वमृकारस्येत्संज्ञा । तत इत्त्वर-परत्वे । 'इरितो वे'त्यत्राऽपि ऋ इदस्येति समासे कृते निपातनादित्त्वरपरत्वयोः कृतयोरिरित इति निर्देशः । नुमनुषक्तानिति । नुमा नकारो लक्ष्यते, नकारयुक्ता-नित्यर्थः । न च लोपाऽभावार्थो नकारोपदेश इति वक्तुं शक्यम् । अनकारोपदेशेऽ-पीदित्त्वान्नलोपस्याऽप्रसङ्गात् । तस्मान्नकारोपदेशेनेरितामिदित्कार्याऽभावो ज्ञाप्यते । 'न दृशः' इति क्सादेशनिषेधेनाऽपीरितामिदित्कार्याऽभावो ज्ञायते । अन्यथा दृशे-रिदित्त्वान्नुमि सति इगुपधत्वाऽभावात्प्राप्तिरेव क्सस्य नास्तीति किं तन्निषेधेन । अन्त इति । 'गोः पादान्ते' इत्यतः । तेनाऽन्तेदितां धातूनां नुमागमो, न तु मध्येदिताम् ॥७॥

तस्य लोपः । तस्यग्रहणमिति । अभावो लोपः, स च भावोपाधिरेव प्रतीयते

उ०–इत्संज्ञायाः परत्वादित्त्वे इष्टसिद्धिर्न स्यादत आह—तत्रेति । निर्देशानुपपत्तिकल्पितमित्त्वं बहिरङ्गमिति भावः । निपातनादेवेत्त्वरपरत्वाभ्यां पूर्वं 'तस्य लोप' इत्यपि नेति बोध्यम् । नुमोऽभावादाह—नुमेति । एतज्ज्ञाप्यात्केषां चिद्धातूनामर्थनिर्देशसहितोऽपि पाठ इति ज्ञायते । किं तन्निषेधेनेति । यद्यपि तेनोपदेश इगुपधत्वं विवक्ष्यते इत्यपि ज्ञापनं संभवति, तथापि लक्ष्यानुरोधादिदमेव ज्ञाप्यते इत्यभिमानः ।

गोः पादान्त इति । समानयोगनिर्दिष्टानामेकदेशोपि स्वरितत्वप्रतिज्ञासामर्थ्यादनुवर्तत इति भावः । अन्तपदार्थस्येकारविशेषणत्वेपि सौत्रत्वात्समास इति बोध्यम् । अत्र पृथगित्संज्ञा, 'इदित' इति कर्मधारयात्षष्ठीति युक्तः पक्षः ॥७॥

तस्य लोपः । अभावो लोप इति । दर्शनाऽभावो लोप इत्यर्थः । भावोपाधिरिति ।

१–'मित्त्वभू'पा० । ×. ऋत इद्धातोः ७.१.१००; उरण् रपरः १.१.५१. † गोः पादान्ते ७.१.५७.

इति। तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः। अर्थाद्विभक्तिविपरिणामो भविष्यति। तद्यथा—'उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनम्'। 'देवदत्त'मिति गम्यते। 'देवदत्तस्य गावोऽश्वा हिरण्यं च, आढ्यो वैधवेयः'। देवदत्त इति गम्यते। पुरस्तात्षष्ठीनिर्दिष्टं सदर्थाद् द्वितीयानिर्दिष्टं, प्रथमानिर्दिष्टं च भवति। एवमिहापि पुरस्तात्प्रथमानिर्दिष्टं सदर्थात् षष्ठीनिर्दिष्टं भविष्यति। इदं तर्हि प्रयोजनम्। येऽनेकाल इत्संज्ञास्तेषां लोपः सर्वादेशो यथा स्यात्। अथ क्रियमाणेपि वै[2] तस्यग्रहणे कथमिव लोपः सर्वादेशो लभ्यः? लभ्य इत्याह। कुतः? 'वचनप्रामाण्यात्'। तस्यग्रहणसामर्थ्यात्।

### इतो लोपे णल्क्त्वानिष्ठासूपसंख्यानमित्प्रतिषेधात् ॥ १ ॥

इतो लोपे णल्क्त्वानिष्ठासूपसंख्यानं कर्तव्यम्। णल्—अहं पपच। क्त्वा—देवित्वा सेवित्वा। निष्ठा—शयितः शयितवान्। किं पुनः कारणं न सिद्ध्यति? 'इत्प्रतिषेधात्'। प्रतिषिध्यतेऽत्रेत्संज्ञा। णलुत्तमो णिद्वा भवति। क्त्वा सेण्न किद्भवति। निष्ठा सेण्न किद्भवतीति‡।

प्र०—नाऽन्यथेति प्रकरणादित्संज्ञस्यैव लोपो भविष्यतीति प्रश्नः। विभक्तिविपरिणाम इति। सादृश्यात्तत्त्वाऽध्यवसायाद्विपरिणामव्यवहारः। वाक्यान्तरे तु योग्यविभक्त्यन्तं परमार्थतः शब्दान्तरमेव संनिधीयते। तस्यग्रहणसामर्थ्यादिति। अलोन्त्यस्ये-त्यन्त्यस्य लोपे प्रसक्ते तस्यग्रहणेन समुदायस्य लोपः प्रतिपाद्यते।

उ०—दर्शनस्य सविषयत्वाच्छब्दशास्त्रत्वाच्छब्दरूप एव स विषयः। किं च भावविरोधीत्यभाव-पदस्यार्थः। एवं च भावोपाधिरेव स भावप्रतियोगिक एव स इति भावः। ननु प्रकृतस्या-न्वययोग्यत्वेऽनुषङ्गः, अयोग्यत्वेऽध्याहार एवेति विपरिणामोऽसङ्गतोऽत आह—सादृश्या-दिति। एवं चैकदेशसारूप्येण विपरिणामव्यवहार इति भावः। भाष्ये 'आमन्त्रयस्वे'त्येत-दन्तमेव लौकिकं वाक्यम्। तत्र प्रकृतत्वादेनमिति गम्यत इत्यर्थः। तद्व्याचष्टे—देवदत्तमिति गम्यत इति। 'एन'मित्यस्य सामान्यशब्दत्वाद्विशेषलाभायेदमुक्तम्। वैधेयो—मूर्खः। अलोन्त्यस्येति। 'नानर्थक' इति परिभाषा त्वलोन्त्यात्सूत्रे प्रत्याख्यातैवेति भावः।

१—'विधवाया अपत्यं वैधवेयः' इति पितृशून्यत्वात्स्वच्छन्दचारिता सूच्यते। 'वैधेयो-मूर्खः' इति च नागेशाभिमतः पाठः। २—'च' पा०। ‡ णलुत्तमो वा ७. १. ९१; न क्त्वा सेट्; निष्ठाशीङ्स्विदिमिदिक्ष्विदिधृषः १. २. १८, १९.

## सिद्धं तु णलादीनां ग्रहणप्रतिषेधात् ॥ २ ॥

सिद्धमेतत् । कथम् ? णलादीनां ग्रहणानि प्रतिषिध्यन्ते । णलुत्तमो वा णिद्ग्रहणेन गृह्यते । क्त्वा सेण्न किद्ग्रहणेन गृह्यते । निष्ठा सेण्न किद्ग्रहणेन गृह्यत इति ।

## निर्दिष्टलोपाद्वा ॥ ३ ॥

निर्दिष्टलोपाद्वा सिद्धमेतत् । अथवा निर्दिष्टस्याऽयं लोपः क्रियते तस्मात्सिद्धमेतत् ।

## तत्र तुस्मानां प्रतिषेधः ॥ ४ ॥

तत्र तुस्मानां प्रतिषेधो वक्तव्यः । तस्मात् तस्मिन् । यस्मात् यस्मिन् । वृक्षाः प्लक्षाः । अचिनवम् असुनवम् अकरवम् ।

## न वोच्चारणसामर्थ्यात् ॥ ५ ॥

न वा वक्तव्यः । किं कारणम् ? उच्चारणसामर्थ्यादत्र लोपो न भविष्यति ।

## अनुबन्धलोपे भावाऽभावयोर्विप्रतिषेधादप्रसिद्धिः ॥ ६ ॥

अनुबन्धलोपे भावाऽभावयोर्विरोधादप्रसिद्धिः । न ज्ञायते केनाऽभिप्रायेण प्रसजति, केन निवृत्तिं करोतीति ।

---

प्र०–ग्रहणप्रतिषेधादिति । नैतेषामित्संज्ञा प्रतिषिध्यतेऽपि तु तत्प्रतिबद्धं कार्यमित्यर्थः । निर्दिष्टलोपाद्वेति । 'तस्ये'त्यनेनेत्संज्ञाप्रकरणे निर्दिष्टस्य परामर्शादसत्यामपीत्संज्ञायां लोपो भवतीत्यर्थः । तुस्मानामिति । यद्यसत्यामपीत्संज्ञायां लोपो भवति तदा तुस्मानामपि प्राप्नोति । ते हि 'हलन्त्य'मित्यत्र निर्दिष्टाः ।

नवेति । इत्संज्ञायाः प्रतिषेधादेषामित्कार्यं नास्ति । यदि चाऽनेन लोपः स्यादुपदेशस्तेषामनर्थकः स्यात् । अनुबन्धलोप इति । यथा कश्चिद्वक्ति घटोस्तीति पुनश्च

---

उ०–तस्यग्रहणेनेत्संज्ञकपरामर्शिनाऽश्रुतत्वाद् ग्रहणं कथं प्रतिषिध्यते आह—नैषामिति । णिदादिपदलक्षिततत्कार्याणां प्रतिषेध इति भावः । भाष्ये 'ग्रहणानी'त्यस्य—णिदादिपदैर्ग्रहणप्रयुक्तानि कार्याणीत्यर्थः । अग्रेपि 'णिद्ग्रहणेन गृह्यते—यत्कार्यं तत्कार्यं लभत इत्यादिक्रमेणाऽर्थः । भाष्ये—ग्रहणविकल्पेपि प्रतिषेधोस्तीति 'प्रतिषिध्यन्त' इत्युक्तम् । निर्दिष्टेति । उच्चारितशब्दप्रतिपादितत्वमेवाऽत्र निर्दिष्टत्वं विवक्षितम् । अत एव णादीनां निर्दिष्टत्वमिति भावः । अयं पक्ष एकदेशिनः, सर्वलोपसिद्धेः इत्संज्ञाद्वारा तत्कार्यार्थमुच्चारणमस्त्वित्यत आह—इत्संज्ञाया इति । नन्वनुबन्धाः श्रूयन्ते इति वचनाऽभावात्कथं विरोधोऽत आह—यथेति । अनुमितेन विरोध इति भावः । सामान्यविशेषभावाऽभावात्कथमपवादन्यायोऽत आह—

**सिद्धं त्वपवादन्यायेन ॥ ७ ॥**

सिद्धमेतत् । कथम् ? 'अपवादन्यायेन' ॥ किं पुनरिह तथा यथोत्सर्गापवादौ ?

**भावो हि कार्यार्थोऽनन्यार्थो लोपः ॥ ८ ॥**

'कार्यं करिष्यामी'त्यनुबन्ध आसज्यते, 'कार्यादन्यन्मा भू'दिति लोपः । अथ यस्यानुबन्ध आसज्यते किं स तस्यैकान्तो भवत्याहोस्विदनेकान्तः ?

**एकान्तस्तत्रोपलब्धेः ॥ ९ ॥**

'एकान्त' इत्याह । कुतः ? 'तत्रोपलब्धेः' । तत्रस्थो ह्यसावुपलभ्यते । तद्यथा—वृक्षस्था शाखा वृक्षैकान्तं उपलभ्यते ।

प्र०-वक्ति नास्तीति तथाऽनुबन्धानामुच्चारणाद्भावानुज्ञानं, लोपविधानाच्चाऽभावानुज्ञेति विरोधादप्रामाण्यप्रसङ्गः । सिद्धमिति । यथाऽणं को बाधते तथा कार्ये चरितार्थमुच्चारणात्प्राप्तं भावं लोपोऽनन्यार्थो बाधते । एकान्त इति । एकदेशः । अवयव इत्यर्थः । अनेकान्तस्तूपलक्षणमेव केवलम् । यथा गृहस्य काकः । तत्रोपलभ्यमानस्य रूपद्वयदर्शनाद् वृक्षे शाखाबलाकयोरिवेति प्रश्नः ।

एकान्तस्तत्रोपलब्धेरिति । ननु यदेव संशयनिमित्तं स [ एव ] कथं निश्चयहेतुः । उच्यते—सामर्थ्यादवधारणमाश्रीयते 'तत्रैवोपलब्धे'रिति । अवयवस्तत्रैवोपलभ्यते, अनवयवस्तु तत्र चाऽन्यत्र च । ननु वकारस्य व्रतव्रणवृक्षादिषु बहुषूपलब्धिः,

उ०-यथाऽणमिति । विषयान्तरे चरितार्थमित्यर्थः । कार्ये—इत्वप्रयुक्ते । भाष्ये—कार्यादन्यत्—श्रवणम् । सन्देहबीजं दर्शयति—तत्रोपलभ्यमानस्येति ।

शकुनिभाष्ये इति । 'यदि पुनरिमे वर्णाः शकुनिवत्स्युरान्यभावं तु कालशब्दव्यवाया'दित्यत्रेत्यर्थः । एक एव ककार इति पक्षेपि न दोषः । लोपशास्त्रज्ञानात्पूर्वं यस्तत्रोपलभ्यते एव सोऽवयव इत्यर्थात् । अन्यथा शाखाया अपि छेदनोत्तरमन्यत्रोपलम्भात्तत्रैवोपलम्भाऽभावेनाऽनवयवत्वं स्यात् । एवं चाऽनुपलम्भकयत्नं विनाऽपि तत्राऽन्यत्र चोपलभ्यमानोऽनवयवः, तं विना तत्रोपलभ्यमान एव यः सोऽवयव इति भाष्याशय इत्यन्ये । भाष्ये—तत्रेत्यस्य एकान्तपक्षे इत्यर्थः । अनाकारान्तत्वादित्येतदिति । 'असरूपसर्वादेशे'तिपदे लुप्तसप्तमीके दोषपदाध्याहारेण योज्ये इति भावः । एतेन द्वन्द्वे एकदेशान्वयः कथमित्यपास्तम् । अत एव 'दाप्प्रतिषेध' इति वार्त्तिके एकवचनम् । भाष्ये—दिव औदिति । यद्यप्ययमुच्चारणार्थस्तथापि समभिव्याहृतवर्णोच्चारणे सहायसंपादकतया तस्य चारितार्थ्येन विधेय-

१-'वृक्षैकान्तोपलभ्यते' पा० ।

**तत्राऽसरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वात् १०**

तत्राऽसरूपविधौ दोषो भवति—'कर्मण्यण्' [ ३. २. १ ] 'आतोऽनुपसर्गे कः' [ ३ ] इति कविषयेऽपि प्राप्नोति* ॥ सर्वादेशे च दोषो भवति—दिव[1] औत्सर्वादेशः प्राप्नोति† ॥ दाप्प्रतिषेधे पृथक्त्वनिर्देशः कर्तव्यः—'अदाब्दैपा'विति वक्तव्यम्‡ । किं पुनः कारणं न सिद्ध्यति ? 'अनाकारान्तत्वात्' । ननु चाऽऽत्वे कृते भविष्यति । तद्ध्यात्वं न प्राप्नोति । किं कारणम् ? अनेजन्तत्वात्× ॥ अस्तु तर्ह्यनेकान्तः ।

**अनेकान्ते वृत्तिविशेषः ॥ ११ ॥**

यद्यनेकान्तो वृत्तिविशेषो न सिद्ध्यति । किति णितीति कार्याणि न सिद्ध्यन्ति । किं हि स तस्येद्भवति, येनेत्कृतं स्यात् ॥ एवं तर्ह्यनन्तरः ।

**अनन्तर इति चेत्पूर्वोत्तरयोरित्कृतप्रसङ्गः ॥ १२ ॥**

अनन्तर इति चेत्पूर्वोत्तर[2]योरित्कृतं प्राप्नोति । वुन्छण्+ ।

प्र०—न चाऽसावनवयवः । नैष दोषः । भिन्नसमुदायविषयं वर्णान्तरमेव तदिति शकुनिभाष्ये प्रतिपादितम् । तत्राऽसरूपेति । 'अनाकारान्तत्वा'दित्येतद्दाप्प्रतिषेध इत्यनेनैव सामर्थ्यात्सम्बध्यते । कविषय इति । एकान्तत्वे वैरूप्यात्समावेशप्रसङ्गः । अनेकान्तत्वे तूभावप्यकारावििति सारूप्यादसमावेशः । अनेजन्तत्वादिति । यथा ढौकतेः ककारस्यैकान्तत्वदात्वं न भवत्येवं दैपोपि न प्राप्नोति । उपदेशग्रहणाच्च लुप्तेऽपि पकारे न प्राप्नोति । अस्तु तर्हीति । कार्यलक्षणाय केवलमनुबन्ध उपात्तो न तु तस्याऽवयवः ।

वृत्तिविशेष इति । बहुव्रीहिर्न सिध्यति—अनेकान्ते—क—इद्यस्येति सम्बन्धाऽभावात् । एवं तर्ह्यनन्तर इति । यद्यप्यनन्तरादिषु बहुव्रीहिर्न भवति, तथापीह

उ०-विषये विशिष्टस्यापि विधेयत्वसम्भावनासत्त्वादित्संज्ञालोपयोः प्रवृत्तयोर्बाधे मानाऽभावादुच्चारणार्थानामपीत्त्वमस्त्येव । किं च तदभावे उच्चारितस्य निवृत्तिः कथं स्यादिति भावः । एतेनोच्चारणार्थनामित्संज्ञा नेति नव्योक्तिः परास्ता । 'स्तीर्णे बर्हिषि समिधानेऽग्ना'वित्यादौ ङेरौदिति स्वरित्वाऽभावस्तु छान्दसत्वादिति बोध्यम् । वृत्तेर्वा । न चोच्चारणार्थानामपीत्त्वे'णौ गमि'रित्याद्यादेशानां नुमापत्तिः, भाविधातुत्वमादाय तत्रेका निर्देशेनाऽदोषात् । अत एव सुब्बुत्पत्तिः । अन्यथा 'हनो वध लिङी'तिवत्सा न स्यात् । उच्चारणाऽर्थानामपीत्त्वं च 'च्लेः सिच्' 'वेरवृक्तस्ये'त्यादौ भाष्ये स्पष्टमुक्तम् । अनुवाद्यविषये तूच्चारणार्थवर्णविशिष्टस्य तद्रहिते

* वाऽसरूपोऽस्त्रियाम् ३. १. ९४. १—'दिव औत् । औत्सर्वादेशः' पा० । † दिव औत् ७. १. ८४; अनेकाल्शित् सर्वस्य १. १. ५५. ‡ दाधा घ्वदाप् १. १. २०. × आदेच उपदेशऽशिति ६. १. ४५. २—'पूर्वपरयोः' पा० । + वुञ्छण्कठजिल० ४. २. ८०.

सिद्धं तु व्यवसितपाठात् ॥ १३ ॥

सिद्धमेतत् । कथम् ? व्यवसितपाठः कर्तव्यः । वुञ् छण् ॥ स चावश्यं व्यवसितपाठः कर्तव्यः ।

इतरथा ह्येकान्तेऽपि सन्देहः ॥ १४ ॥

अक्रियमाणे व्यवसितपाठ एकान्तेऽपि सन्देहः स्यात् । तत्र न ज्ञायते किमयं पूर्वस्य भवत्याहोस्वित्परस्येति ॥ सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति, पूर्वस्येति व्याख्यास्यामः ।

वृत्ताद्वा ॥ १५ ॥

वृत्ताद्वा पुनः सिद्धमेतत् । वृद्धिमन्तमाद्युदात्तं दृष्ट्वा ञिदिति व्यवसेयम् । अन्तोदात्तं दृष्ट्वा किदिति* ।

प्र०—वचनसामर्थ्याद्भवति । व्यवसितपाठादिति । व्यवसितानां—विच्छिन्नानां पाठः कर्तव्यः । ततः पूर्वस्यैवाऽसावनन्तरो न तु परस्य, कालव्यवधानात् । व्याख्यानत इति । एकान्तपक्षे एकोऽवयवोद्वयोर्न भवतीति सन्देहे व्याख्यानान्निश्चयः । अनेकान्तत्वे त्वानन्तर्यस्योभयापेक्षस्य विरोधाऽभावाद्व्यवसितपाठ एव कर्तव्यः । वृत्ताद्वेति वृत्तं—प्रयोगः । नन्वाचार्यो भवतु वृत्तज्ञः, शिष्यास्तु कथं प्रतिपद्यन्ते । व्याख्यानाच्चेत्, पूर्वमेवैतदुक्तम् । वृत्ताद्वेत्यनेन किं तदेवोच्यते । नैष दोषः । पूर्वं हेतुरहितं व्याख्यानमुक्तम् । 'वृत्ताद्वे'त्यनेन हेतुरुच्यते । तस्मिन् प्रतिपन्ने साध्यं स्वयमेवाऽ-

उ०—लक्षणा बोध्या । 'न विधौ परः शब्दार्थ' इति विधेयबोधके लक्षणाऽनौचित्यमिति दिक् । उपदेशग्रहणाच्चेति । य'स्त्वादेच' इति सूत्रे भाष्ये—'मीनातिमिनोतिदीङा'मिति सूत्रे एज्ग्रहणानुवृत्तिसामर्थ्यात्परनिमित्तकस्यैव आत्वं नेत्यर्थमाश्रित्योपदेशग्रहणं प्रत्याख्यातम्, तच्च 'मीनातिमिनोती'तिसूत्रस्थभाष्यविरोधादेकदेश्युक्तिः । तत्र ह्यवदातसिद्धये एज्विषये आत्वमिति सिद्धान्तितं, नहि तदोक्तार्थज्ञापकत्वं तस्येति भावः । अनेकान्तत्वे उपदेशानर्थक्यमत आह—कार्यलक्षणायेति । कार्यप्रवृत्तये इत्यर्थः ।

वचनसामर्थ्यादिति । सौत्रत्वादिति भावः । अनन्तरेऽप्यवयवत्वारोपेणेति भाव इत्यन्ये । हलन्त्यसूत्रनिर्णीतधातुत्वादिना परिच्छिन्नत्वरूपव्यवसितत्वस्याऽत्राऽसंभवादाह—विच्छिन्नानामिति । नन्वनेकान्तत्वेऽपि व्याख्यानान्निर्णयोऽत आह—अनेकान्तत्वे त्विति । विरोधाऽभावादिति । एवं च सन्देहाऽभावान्न व्याख्यानप्रवृत्तिरिति भावः । विरुद्धाऽनेककोटिविषयज्ञानस्यैव सन्देहत्वादिति तात्पर्यम् । व्याख्यानाच्चेदिति । व्याख्यातारोऽत्र

* तद्धितेष्वचामादेः; किति च ७.२.११७; ११८. ञ्नित्यादिर्नित्यम्; कितः ६.१.१९७; १६५.

युक्तं पुनर्यद्वृत्तनिमित्तको नामाऽनुबन्धः स्यान्नाऽनुबन्धनिमित्तकेन नाम वृत्तेन भवितव्यम्। वृत्तनिमित्तक एवानुबन्धः। वृत्तज्ञो ह्याचार्योऽनुबन्धानासजति।

उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति, किमत्र न्याय्यम्? 'एकान्ता' इत्येव न्याय्यम्। कुत एतत्? अत्र हि हेतुर्व्यपदिष्टो यच्च नाम सहेतुकं तन्न्याय्यम्। ननु चोक्तं 'तत्राऽसरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वा'दिति। असरूपविधौ तावन्न दोष। आचार्यप्रवृत्तिर्ज्ञापयति—नानुबन्धकृतमसारूप्यं भवती'ति, यदयं 'ददातिदधात्योर्विभाषा' [ ३. १. १३ ] इति विभाषा[1] शं शास्ति॥ यदप्युक्तं—'सर्वादेश' इति। अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति—'नानुबन्धकृतमनेकाल्त्वं भवती'ति, यदयं 'शित्सर्वस्य [ १. १. ५५ ] इत्याह॥ यदप्युक्तं—'दाप्प्रतिषेधे पृथक्त्वनिर्देशः कर्तव्यः' इति। न कर्तव्यः। आचार्यप्रवृत्तिर्ज्ञापयति 'नानुबन्धकृतमनेजन्तत्वं भवती'ति, यदय'मुदीचां माङो व्यतीहारे' [ ३.४.१९ ] इति मेङः सानुबन्धकस्याऽऽत्वभूतस्य ग्रहणं करोति ॥९॥

प्र०—वैति। भाष्यकारेण वा तदुक्तम्, इदं तु वार्तिककारेण। मेङ इति। यद्यप्यनेकान्तपक्षस्यापि ज्ञापकमेतद्व्याख्यातुं युज्यते तथापि हेतुरहितत्वादिहाऽनेकान्तपक्षो भाष्यकृता त्यक्तः। प्रदेशान्तरे त्वनेकान्तपक्षेणाऽपि व्यवहियते—'सिद्धमनुबन्धस्यानेकान्तत्वा'दिति ॥९॥

उ०—प्रत्ययादावीदृशः प्रयोग इति व्याख्यास्यन्ति। तत्र च तत्तत्कार्यं दृष्ट्वा तस्य तस्य तत्तदनुबन्धत्वं निर्णेष्यन्तीत्यर्थः। पूर्वं हेत्वित्यादि। 'अस्यायमवयव'इत्यादिरूपम्। तस्मिन्नित्यादि। वृत्तरूपे हेतौ गुरुमुखादवगते सत्युक्तव्याख्यानविषयसाध्यं स्वयमेव जानातीत्यर्थः। नन्वेवं पूर्वोक्तसमर्थरूपतया पक्षान्तरत्वाऽभावेन 'वा'शब्दाऽसामञ्जस्यमत आह—भाष्येति। वस्तुतस्तु विरम्य पाठे तस्य कर्त्तव्यता, वुञ्छणादिसूत्रे द्वन्द्वानुपपत्तिर्बहुवचनानुपपत्तिश्चेत्यरुचेर्वार्तिककारस्य वृत्ताद्वेति परिहारान्तरम्। तत्रैकान्तपक्षेऽसन्देहाय व्याखयानं शरणमित्युक्तं भाष्यकृतेति न पौनरुक्त्यशङ्केति ध्येयम्।

भाष्ये—एकान्ता इत्येव न्याय्यमिति। अनवयवत्वे णशकानां णादेरित्त्वाऽनापत्तिः, प्रत्ययादित्वाऽभावात्। एवमन्त्यत्वाऽभावादिशादेः शस्येत्वाऽनापत्तिः। अन्त्यादिशब्दयोः परपूर्वसमीपबोधकत्वे लक्षणैव दोषः। किं च दघ्नचश्चस्य वैयर्थ्यापत्तिः। 'वुञ्छकण्ठ'जितिविहितके णित्वप्रयुक्तवृद्ध्यापत्तिश्चेति भावः। हेतुरहितत्वादित्युपलक्षणम्। प्रदेशान्तरेष्विति। एवं च तत्र सैकदेश्युक्तिरिति भावः ॥९॥

[1] १—'विभाषां शास्ति' पा०।

## यथासंख्यमनुदेशः समानाम् ॥ १ । ३ । १० ॥

किमिहोदाहरणम् ? इको यणचि [ ६. १. ७७ ] दध्यत्र मध्वत्र । नैतदस्ति । 'स्थानेऽन्तरतमेनाप्येतत्सिद्धम्'† । कुत आन्तर्यम् ? तालुस्थानस्य तालुस्थान ओष्ठस्थानस्यौष्ठस्थानो भविष्यतीति ।

इदं तर्हि—'तस्थस्थमिपां ताम्तम्तामः' [३.४.१०१] इति । ननु चैतदपि स्थानेऽन्तरतमेनैव सिद्धम् । कुत आन्तर्यम् ? एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थो भविष्यतीति ।

इदं तर्हि—'तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः [ ४. ३. ९४ ] इति ॥ किमर्थम्पुनरिदमुच्यते ।

---

प्र०— यथासंख्यमनु । सङ्ख्यानं गणनमुच्यते । अनुदेशशब्दस्य सम्बन्धिशब्दत्वादुद्देश्याक्षिप्तः । तेनायमर्थः—'समानां समसङ्ख्यानां मध्ये यथागणनमुद्देशिभिः सहानुदेशिनः सम्बध्यन्ते' । इको यणचीति । इक्शब्देन चत्वारः स्थानिनः प्रत्याय्यन्ते, यण्शब्देनापि चत्वार आदेशा इत्यर्थतोऽस्ति सङ्ख्यासाम्यम् । पश्चात्तु यद्यपीकारादिभिर्बहूनां ग्रहणाद्वैषम्यं, तथापि प्रथमतोऽस्त्येव सङ्ख्यासाम्यम् । इदं तर्हीति । नाऽत्र स्थानकृतमान्तर्यमस्ति, नाप्यादेशप्रवृत्तिकालेऽर्थकृतान्तर्यसम्प्रत्ययः, प्रवृत्तानामादेशानां स्थान्यर्थाऽभिधानात् । ननु चेति । नित्यानां शब्दानां प्रयोगादर्थकृतमान्तर्यमस्त्येवेति भावः । किमर्थमिति । पाठक्रमेणैव संबन्धो भविष्यतीति भावः ।

---

उ०— यथासङ्ख्य । सङ्ख्याशब्दस्यैकत्वादिरूढस्य ग्रहणे वाक्यार्थानुपपत्तिरतो यौगिक इति व्याचष्टे—सङ्ख्यानमिति । गणनम् । तत्क्रम इत्यर्थः । सूत्रे—अनुदेशः—पश्चादुच्चार्यमाणसंबन्धः । अत्रोद्देश्यनुदेशिन उच्चार्यमाणा, उच्चार्यमाणशब्दप्रतिपाद्याश्च । उद्देश्यनुद्देशिशब्दौ पूर्वोच्चार्यमाण-पश्चादुच्चार्यमाणपरौ, न तूद्देश्यविधेयपरौ, 'असूयेललाटयो'-रित्यादौ यथासङ्ख्याऽनापत्तेः । समशब्दो न सर्वपर्यायः सुडापत्तेः, किंतु सङ्ख्यासाम्यपरः । नन्विक्शब्देन षट्षष्टेर्यण्शब्देन सप्तानां चोपस्थित्या सङ्ख्यासाम्याऽभावात्कथं यथासङ्ख्यमत आह—इक्शब्देनेति । पश्चात्त्विति । इक्पदोपस्थितेकारादिभिर्गृहीतदीर्घादिघटितवाक्यार्थबोधे इत्यर्थः । वस्तुतस्तेषामनुच्चारितत्वेन न ग्राहकत्वं, किं त्विक्शब्दादिना इक्त्वेन यण्त्वेन चाऽइउणित्यादौ तत्तद्व्यक्तिविशेषणतया गृहीतजातिचतुष्टयोपस्थितिरिति यथासङ्ख्यनिर्वाहः । 'पश्चात्' 'प्रथमत' इत्यादि तु चिन्त्यमेव । न च जातिपक्षे सावर्ण्येन ऋकारऌकारयोः परस्परजात्यतिदेश एव वाच्य इति ऋकारस्य ऌकारापत्तिः । ऋदिऌदिदिति भेदेन तदतिदेशाऽनित्यत्वेनाऽदोषादनभिधानाद्वेति बोध्यम् । भाष्ये—स्थानेन्तरतमेनापीति । स्थानेन्तरतमपदघटितेन सूत्रेणेत्यर्थः । नन्वत्राऽप्यर्थत आन्तर्यादेव

---

† स्थानेऽन्तरतमः १. १. ५०.

**संज्ञासमासनिर्देशात्सर्वप्रसङ्गोऽनुदेशस्य, तत्र यथासंख्यवचनं नियमार्थम् ॥ १ ॥**

संज्ञया समासैश्च निर्देशाः क्रियन्ते । संज्ञया तावत्—'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' [ ३. ४. ८२ ] इति । समासैः—'तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः [ ४. ३. ९४ ] इति । संज्ञासमासनिर्देशादेतस्मात्कारणात् 'सर्वप्रसङ्गः' । सर्वस्योद्देशस्य सर्वोऽनुदेशः प्राप्नोति । इष्यते च समसङ्ख्यं यथा स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति तत्र यथासंख्यवचनं नियमार्थम् । एवमर्थमिदमुच्यते ।

किं पुनः कारणं संज्ञया च समासैश्च निर्देशाः क्रियन्ते ?

**संज्ञासमासनिर्देशः पृथग्विभक्तिसंज्ञ्यनुच्चारणार्थः ॥ २ ॥**

संज्ञया च समासैश्च निर्देशाः क्रियन्ते 'पृथग्विभक्तीः संज्ञिनश्च मोच्चीचर'-मिति ।

---

प्र०- संज्ञासमासनिर्देशादिति । 'परस्मैपदानां णलतु'सित्यत्र संज्ञया सर्वे युगपत्प्रत्याय्यन्ते इति नास्ति पाठक्रमाद्व्यवस्था । लोकेप्यऽ'जाविधनौ देवदत्तयज्ञदत्ता'-विति समासनिर्देशे नास्ति क्रमनियमः । द्वन्द्वेऽनेकावयवात्मकः समुदाय एकेनैव शब्देन प्रत्याय्यत इति कुतः क्रमनियमः स्यात् । किं पुनरिति । तिपो णल्, तसोऽतुसित्यादि कस्मान्न क्रियत इति प्रश्नः । चिदो लटो वेति । पृथग्निर्देशे क्रियमाणे

---

उ०—सिद्धमत आह—नापीति । विशिष्याऽर्थाऽपरिज्ञानादिति भावः । लक्षणशरणानां प्राक् शास्त्रात्प्रयोगाऽज्ञानेनाऽर्थविशेपनिर्णयो दुर्लभोऽत आह—नित्यानामिति । साधुत्वमात्रं शास्त्रैकगम्यं, प्रयोगतदर्थज्ञानं तु प्राक् शास्त्रादप्यस्त्येव पाणिनेः । अन्येषां तु व्याख्यानाद्बोध इति भावः । पाठेति । लोकसिद्धस्थानाख्यप्रमाणेनैव 'शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जये'तिवत्सिद्धिरिति ।

युगपदिति । परस्मैपदत्वेनेत्यर्थः । एवं च क्रमो नास्तीति भावः । यद्यपि संज्ञा प्रत्येकं पर्याप्तेति न संज्ञाकृतं युगपत्प्रत्यायनं, किं त्वेकशेषप्रभावलभ्यं 'तद्ब्राह्मणानामर्घपाद्याचमनीयानी'तिवत् । तत्र ब्राह्मणत्रित्वेपि नार्घादीनां क्रमनियमः, तथापि संज्ञाया नवकसाधारण्यमेव तत्र मूलमिति 'संज्ञानिर्देशा'दित्युक्तम् । एकेनैवेति । अवयवानां समुदायोपसर्जनतया समुदायस्यैव पदान्तरार्थेनाऽन्वयादिति भावः समासेनैकोपस्थितेः पृथगुपस्थित्यभावेन तथाऽन्वयो वक्तुमशक्य इति तत्त्वम् । भाष्ये—सर्वस्योद्देशस्येति । सर्वस्योद्देशिन इत्यर्थः । सर्वोनुदेश इति । सर्वेऽनुदेशिन इत्यर्थः । तिपो णलिति । यद्यप्येषाऽपि 'स्वं रूप'मिति संज्ञा, तथापि संज्ञाशब्दो बहूनां युगपत्प्रत्यायको यः शब्दस्तत्पर इति भावः । प्रतिपत्तीति ।

**प्रकरणे च सर्वसंप्रत्ययार्थः ॥ ३ ॥**

प्रकरणे च सर्वेषां संप्रत्ययो यथा स्यात्—'विदो लटो वा' [३.४.८३] इति ।

किं पुनः शब्दतः साम्ये संख्यातानुदेशो भवत्याहोस्विदर्थतः ? कश्चात्र विशेषः ?

**संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्याऽयवायाव एच इत्यनिर्देशः ॥ ४ ॥**

[ सङ्ख्या[1]साम्यं शब्दतश्चे[1]ण्णलादयः परस्मैपदानां डारौरसः प्रथमस्याऽयवायाव एच इत्यनिर्देशः । ] अगमको निर्देशोऽनिर्देशः । 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' [ ३. ४. ८२ ] इति । णलादयो बहवः, 'परस्मैपदाना'मित्येकः शब्दः, वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥ डारौरसः प्रथमस्य* । डारौरसो बहवः प्रथमस्येत्येकः शब्दः । वैषम्यात्सङ्ख्यातानुदेशो

प्र०–'मसो म' इत्येवानन्तर्यात्सम्बध्येतेत्यर्थः । व्यवहितानामपि स्वरितत्वादनुवृत्तावाश्रीयमाणायां प्रतिपत्तिगौरवप्रसङ्गः । किं पुनरिति । यद्यप्यर्थे शब्दस्य गुणभावादर्थत एव साम्यं न्याय्यं तथापि शब्दधर्मेणाऽप्यर्थस्य व्यपदेशो दृश्यते यथा 'भ्रमर'शब्दस्य द्विरेफत्वाद् द्विरेफो भ्रमरः । तथाद्व्यच्तरं मांसं द्व्यच्तरमस्थि । तस्माच्छब्दतोऽपि साम्यमत्राशङ्कितम् ।

णलादय इति । परस्मैपदशब्देन प्रकृतानामेव नवानां ग्रहणं न तु शतृक्स्वोरित्यर्थतः साम्यमस्ति, न तु शब्दतः । डारौरस इति । यदा डारौरसश्च डारौरसश्चे-

उ०–स्वरितत्वस्य लक्ष्यसिद्ध्युन्नेयतया विना शास्त्रमस्मदादिभिर्दुर्ज्ञेयत्वादिति भावः । संज्ञया समासेन च निर्देशे सति तस्यैवोत्तरसूत्रेऽनुवृत्तेर्न दोष इति तात्पर्यम् । एवं चैतत्सूत्रारम्भसामर्थ्यात्सूत्रान्तरस्थमुपसर्जनावयवकृतं च क्रमं गृहीत्वा यथासंख्यप्रवृत्तिरिति तत्त्वम् । अत्र वदन्ति—यद्यपि समासत उपस्थितिरेकैव, तथाप्येतत्सूत्रारम्भसामर्थ्यात् पृथग्वाक्यकल्पनया बोधान्तरं कल्प्यते । एवं चेदं सूत्रं द्वन्द्वसमासनिर्दिष्टसंबन्धिनोस्तथान्वयेपि द्वन्द्वस्य साधुत्वं बोधयति स्वशास्त्रे, तेन लोके 'आद्यन्तौ वर्णानां विप्रशूद्रा'वित्यादेः साधुत्वं नेति । शब्दधर्मेणापीति । वाच्यवाचकयोरभेदोपचारादिति भावः ।

ननु शब्दतः सङ्ख्यया समानां योऽनुदेशः पश्चादुच्चार्यमाणसंबन्धः स यथासङ्ख्य'मिति सूत्रार्थे 'परस्मैपदाना'मित्यादौ तादृशानां पश्चादुच्चार्यमाणसंबन्ध एव नेति क्व यथासङ्ख्यप्राप्तिरतो व्यत्ययेन पठति—णलादय इति । विधेयताप्रतीतौ तु न पश्चात्त्वं नियामकं,

१–क्वचिन्न । * लुटः प्रथमस्य डारौरसः २. ४. ८५.

न प्राप्नोति ॥ 'एचोऽयवायावः' [ ६. १. ७८ ] अयवायावो बहवः, एच इत्येकः शब्दः । वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति ॥ अस्तु तर्ह्यर्थतः ।

**अर्थतश्चेल्लृलुटोर्नन्द्यरीहणसिन्धुतक्षशिलादिषु दोषः ॥ ५ ॥**

अर्थतश्चेल्लृलुटोर्नन्द्यरीहणसिन्धुतक्षशिलादिषु दोषो भवति ॥ 'स्यतासी लृलुटोः' [ ३. १. ३३ ] स्यतासी द्वौ, लृलुटोरित्यत्र त्रयोऽर्थाः । वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति ॥ 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' [ ३. १. १३४ ] नन्द्यादयो बहवो, ल्युणिन्यचस्त्रयः । वैषम्यात्ससंख्यातानुदेशो न प्राप्नोति ॥ ( 'वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः' [ ४. २. ८० ] ) अरीहणादयो बहवो, वुञादयः सप्तदश । वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥ 'सिन्धुतक्षशिलादिभ्योऽणञौ' [ ४. ३. ९३ ] सिन्धुतक्षशिलादयो बहवोऽणञौ द्वौ, वैषम्यात्संख्यातानुदेशो न प्राप्नोति ।

---

प्र०—त्येकशेषः क्रियते तदाऽर्थतः सङ्ख्यासाम्यमस्ति । अगमक इति । सङ्ख्यासाम्यस्याऽनवबोधक इत्यर्थः । लृलुटोरिति । लृशब्दस्य लृङ्लृटावर्थाविति साम्याऽभावः । यदा तु लृरूपं सामान्यमर्थो लृशब्दस्येति पक्षस्तदाऽस्त्येव साम्यमिति दोषाऽभावः । नन्द्यादिष्वप्यवयवेन विग्रहः, समुदायः समासार्थ इत्याश्रीयमाणे समुदायत्रयापेक्षया साम्यसद्भावाददोषः ।

---

उ०—'लोपो व्यो'रित्यादौ व्यभिचारादिति भावः । ननु शतृक्वसोरिति । व्याख्यानादिति भावः । अन्यथा शतृक्वसुभ्यामेकादशपरस्मैपदशब्दाऽर्था इत्यर्थतः साम्येपि न यथासङ्ख्यं स्यादिति तात्पर्यम् । न तु शब्दत इति । यद्यप्येक एव द्वन्द्वो युगपदेवानेकोपस्थितिजनक इत्यस्ति शब्दतः साम्यं, तथापि प्रत्येकपदशक्तिज्ञानसहकारेणैव स तथेति नास्ति शब्दतः साम्यम् । 'परस्मैपदाना'मित्यत्र त्वेकशेषेऽपि श्रूयमाणैकपदशक्त्यैव नवकोपस्थितिरिति भावः । ननु परस्मैपदात्मनेपदभेदात्प्रथमाः षडित्यर्थपक्षेऽपि न साम्यमत आह—यदेति । भाष्ये—अगमक इति । 'अनिर्देश' इत्यत्र मध्यमपदलोपी समास इति भावः । ननु स्थान्यादेशभावाऽवगतिरस्त्येवेत्यत आह—सङ्ख्येति । सामान्यमिति । लृत्वजातिपरो निर्देशः । अत एव द्विवचनसङ्गतिरिति भावः । समुदाय इति । समुदायत्रयमित्यर्थः । प्रत्ययोत्पत्तिस्तु समुदायस्याऽप्रयोगात्प्रत्यवयवं पर्यवस्यतीति भावः । तद्रूपापन्ना इति । संज्ञाशब्दे स्वरूपस्यैव प्रवृत्तिनिमित्तत्वादेकतङ्शब्दरूषिततया तद्रूपत्वेनैवोपस्थितानां संज्ञेति

---

१—'लुप्तं स्या'दिति गुरुप्रसादः शास्त्री । इहेदं सूत्रं भाष्यपुस्तकेषु न दृश्यते । भाष्यशैल्यनुसारमिहास्य लेखः समुचितः प्रतीयते ।

## आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रहणेषु ॥ ६ ॥

आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रहणेषु च दोषो भवति ॥ आत्मनेपदविधिश्च न सिध्यति—'अनुदात्तङित आत्मनेपदम्' [ १. ३. १२ ] अनुदात्तङितौ द्वौ, 'आत्मनेपद'मित्यस्य द्वावर्थौ[1]। तत्र संख्यातानुदेशः प्राप्नोति ॥ निष्ठा—'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' [ ८. २. ४२ ] इति रेफदकारौ द्वौ, 'निष्ठे'त्यस्य द्वावर्थौ†। तत्र संख्यातानुदेशः प्राप्नोति ॥ सार्वधातुकद्विग्रहणेषु च दोषो भवति—'श्नसोरल्लोपः' [ ६. ४. १११ ] श्नमस्ती द्वौ, 'सार्वधातुक'मित्यस्य द्वावर्थौ‡। तत्र संख्यातानुदेशः प्राप्नोति ।

## एङः पूर्वत्वे प्रतिषेधः ॥ ७ ॥

एङः पूर्वत्वे[2] प्रतिषेधो वक्तव्यः । 'एङः[3] पदान्तादति'; 'ङसिङसोश्च' [ ६. १. १०९; ११० ] ङसिङसौ द्वौ, 'ए'ङित्यस्य द्वावर्थौ×। तत्र संख्यातानुदेशः प्राप्नोति ।

अस्तु तर्हि शब्दतः । ननु चोक्तं 'संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्याऽव्यवायाव एच इत्यनिर्देशः' इति । नैष दोषः । 'स्थानेऽन्तरतमः' [ १. १. ५० ] इत्यनेन व्यवस्था भविष्यति ।

प्र०— आत्मनेपदेति । नन्वात्मनेपदसंज्ञा न तङ्शब्दस्य किं तु तत्प्रत्यायितानां नवानां तादीनामिति नाऽस्त्यर्थतः साम्यम् । नैष दोषः । तङ्रूपापन्नास्तादय आत्मनेपदशब्देन प्रत्याय्यन्त इत्यस्ति साम्यम् । सार्वधातुकद्विग्रहणेष्विति । द्वौ गृह्येते

उ०—संज्ञासूत्रस्थमार्थं साम्यमादाय स्याद्यथासङ्ख्यमिति भावः । क्वचित्तु 'तङ्रूपापन्ना' इत्येव पाठः । ननु यत्र द्वावुपादीयेते श्नमस्ती, सार्वधातुकग्रहणं चास्ति तत्र न स्यादिति वक्तव्येऽगमकोयं निर्देशोऽत आह—द्वाविति । अधिकरणसाधनग्रहणशब्देन द्विशब्दस्य षष्ठीसमासस्ततः पुनः सार्वधातुकपदेन स इति भावः । सार्वधातुकपदेन षष्ठीसमासे षष्ठीप्रयोजकसंबन्धं दर्शयति—सार्वधातुकमपीति ।

अथ शब्दतः साम्ये उक्तदोषोद्धारमाह भाष्ये—अस्तु तर्हीति । एकार्थस्येत्यादि । प्रत्ययत्वादिकमप्युपलक्ष्यतेऽनेनेति बोध्यम् । यद्यपीति । एवं च 'संवृताऽवर्णस्ये'त्ययुक्तमिति

१—'तङाना'विति भावः । तङानावात्मनेपदम् १.४.१००. † क्तक्तवतू निष्ठा १.२.२६. 'क्तक्तवतू' द्वाविति भावः । ‡ तिङ्शित् सार्वधातुकम् ३.४.११३. तिङ् च शिच्चेति द्वौ । २—'पूर्वरूपत्वे' इत्यर्थः । ३—'इ'त्यनुवर्तमाने'इति शेषः । × ए ओ ङ्' प्र० सू० ३ । एकार ओकारश्चेति द्वौ ।

कुत आन्तर्यम् ? एकार्थस्यैकार्थौ द्व्यर्थस्य द्व्यर्थौ, बह्वर्थस्य बह्वर्थः । संवृतावर्णस्य संवृतावर्णौ, विवृताऽवर्णस्य विवृतावर्णाः ।

अतिप्रसङ्गो गुणवृद्धिप्रतिषेधे क्ङिति ॥ ८ ॥

अतिप्रसङ्गो भवति गुणवृद्धिप्रतिषेधे क्ङिति+ । गुणवृद्धी द्वे, क्ङितौ द्वौ* । तत्र संख्यातानुदेशः प्राप्नोति ॥ नैष दोषः । गकारोऽप्यत्र निर्दिश्यते । तद्गकारग्रहणं कर्तव्यम् ? न कर्तव्यम् । क्रियते न्यास एव । ककारे गकारश्चर्त्वभूतो† निर्दिश्यते । गिति किति ङितीति ।

उदि कूले रुजिवहोः‡ ॥ ९ ॥

उदिकूले द्वे, रुजिवहौ द्वौ, तत्र संख्यातानुदेशः प्राप्नोति । नैष दोषः । नोदिरुपपदम् । किं तर्हि ? विशेषणं रुजिवहोः । 'उत्पूर्वाभ्यां रुजिवहिभ्यां कूल उपपद' इति ।

प्र०—येषु तानि द्विग्रहणानि, सार्वधातुकस्य द्विग्रहणानीति । समासः सार्वधातुकमपि तेपु गृह्यत इति तेन विशेष्यन्ते । संवृताऽवर्ण इति । यद्यपि शास्त्रेऽकारस्य विवृतोपदेशः कृतस्तथापि लौकिकप्रयोगापेक्षयैतदुक्तम् । क्ङितौ द्वाविति । क्ङिच्छब्दस्यैकत्वेपि ककारङकारयोर्द्वित्वादस्ति शब्दतः साम्यम् । उदि कूल इति । द्वन्द्वोऽयम् । आगन्तुना चेकारेण निर्देश इति चोद्यम् । 'उदी'ति पञ्चम्याः स्थाने सप्तमी कृता । 'उदः

उ०—भावः । लौकिकेति । केचित्तु 'ए' 'ओ' इत्यनयोः संवृताऽवर्णत्वे मानाऽभावः, ह्रस्वाऽकारव्यतिरिक्तानां विवृतत्वस्यैवाऽइउणसूत्रभाष्ये उक्तत्वात्प्रत्यापत्तिशास्त्रस्याऽवयवे प्रवृत्तौ मानाभावाच्च, शास्त्रदृष्ट्या तस्याऽसिद्धत्वाच्च चिन्त्यमिदमित्याहुः । अन्येत्वेतद्भाष्यप्रामाण्यादेओ इत्यनयोरकारांशे संवृतत्वमेव, इतरांशे एव विवृततरत्वम् । तदुपरागाच्च न संवृतत्वस्य लोके प्रयोगे स्पष्टमवभासः 'ऐ' 'औ' इत्येतयोस्त्वकारांशेऽपि विवृतत्वमेवेत्याहुः । 'अतिप्रसङ्ग'इत्यादिना वक्ष्यमाणदोषाणां साधारणत्वादाद्यदोषः शब्दसाम्यपक्षे नाऽऽरोहतीत्यतस्तं तत्रोपपादयति—क्ङिच्छब्दस्येति । भाष्ये—गकारोपीति । स्थास्नुरित्यत्रेत्वाभावाय क्स्नोर्गित्वावश्यकत्वेन जिष्णुरित्यत्र गुणाऽभावाय तन्निर्देश इति भावः । 'उत्कूले द्वे' इति वाच्ये'उदिकूले' इति इकारसहितः पाठो व्याख्यानभाष्येऽयुक्त इत्यत आह—आगन्तुनेति । वस्तुत 'उदिकूले' इत्यनुकरणम् । इति द्वे शब्दरूपे इत्यर्थ इति न दोषः । सप्तमीविभक्तिसाम्येऽर्थवैरूप्यमनुपपन्नमत आह—उदीतीति । एवं 'रुजिवहो'रित्यपि पञ्चम्याः स्थाने षष्ठीति बोध्यम् । भाष्ये—एवं तर्ह्यकर्त्तरि चेति । विशेषणविशेष्यभावापन्नार्थवाचक-

+ क्ङिति च । १. १. ५. * ककारङकारावित्याभिप्रायः । † खरि च ८. ४. ५५. ‡ ३. २. ३१.

## तच्छीलादिषु धातुत्रिग्रहणेषु ॥ १० ॥

तच्छीलादिषु धातुत्रिग्रहणेषु दोषो भवति। 'विदिभिदिच्छिदेः कुरच्' [ ३. २. १६२ ]। विदिभिदिच्छिदयस्त्रयः, तच्छीलादयस्त्रयः× । तत्र संख्याताऽनुदेशः प्राप्नोति।

## घञादिषु द्विग्रहणेषु ॥ ११ ॥

घञादिषु द्विग्रहणेषु दोषो भवति। 'निरभ्योः पूल्वोः' [ ३. ३. २८ ] निरभी द्वौ, पूल्वौ द्वौ। तत्र संख्यातानुदेशः प्राप्नोति॥ नैष दोषः। इष्यते चाऽत्र संख्यातानुदेशः, निष्पावः अभिलाव इति॥ एवं तर्हि—'अकर्तरि च कारके भावे चे'ति द्वौ+ पूल्वौ द्वौ। तत्र संख्यातानुदेशः प्राप्नोति।

## अवे तृस्त्रोः करणाऽधिकरणयोः ॥ १२ ॥

तृस्त्रौ द्वौ, करणाधिकरणे द्वे* । तत्र संख्यातानुदेशः प्राप्नोति।

## कर्तृकर्मणोश्च भूकृञोः† ॥ १३ ॥

कर्तृकर्मणी द्वे, भूकृञौ द्वौ। तत्र संख्यातानुदेशः प्राप्नोति।

प्र०—पराभ्यां रुजिवहीत्येताभ्या'मिति परिहारः। धातुत्रिग्रहणेष्विति। त्रीणि ग्रहणानि येषां ते त्रिग्रहणा धातवः। त्रिग्रहणा येषु तच्छीलादिषु इति पुनर्बहुव्रीहिः। कर्तृकर्मणोरिति। भवतेरकर्मकत्वात्कर्त्रैवोपपदम्। करोतेस्तूपपदद्वये खलिष्यते। अन्ये

उ०—त्वादकर्त्तरि कारक इत्येकः शब्दो, 'भाव' इत्यपर इति शब्दतः साम्ये एष दोषः। अर्थत साम्यं तु न, कारकाणां बहुत्वादिति बोध्यम्। ननु भवतेरकर्मकत्वात्कर्तर्येव, करोतेस्तु सकर्मकत्वात्कर्मण्येवेति यथासङ्ख्यमिष्टमेवेति भ्रमं वारयति—भवतेरिति। अन्ये त्विति।

"हृतदारतयाऽतिकोपनः शरणं किं रघुपुङ्गवो भवेत्'।
इति रावण! मा कृथा मतिं स किलेशः शरणम्भवो विभुः॥"

इति 'तर्किताऽशरणताकः सुखेन शरणत्वेन प्राप्य' इत्यर्थकमुपपन्नमिति भावः। गोबलीवर्दन्यायेनेति। ब्राह्मणवसिष्ठन्यायस्योपलक्षणं, गोबलीवर्दयोः सामान्यविशेषभावस्यै-कशेषप्रकरणान्ते भाष्ये उक्तत्वात्। तथा पृथग्ब्राह्मणग्रहणे फलमाह—छन्द इति। वस्तुतो गायत्र्यादिछन्दोबद्धेषु मन्त्रेष्वेव छन्दस्त्वमिति बोधयितुं तत्र ब्राह्मणग्रहणं, 'जुष्टार्पिते' इत्यत्र तु छन्दः पदस्य ब्राह्मणे लक्षणेति बोध्यम्। याज्ञवल्क्यानीत्यर्थं तु याज्ञवल्क्यादिभ्यः

× आक्वेस्तच्छील[1]त[2]द्धर्मतत्सा[3]धुकारिषु ३. २. १३४. + अकर्त्तरि च कारके संज्ञायाम्; भावे ३. ३. १९. १८. * अवे तृस्त्रोर्घञ्; करणाधिकरणयोश्च ३. ३. १२०; ११७. † ३. ३. १२७.

**अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि‡ ॥ १४ ॥**

अनवक्लृप्त्यमर्षौ द्वौ, किंवृत्ताऽकिंवृत्ते द्वे । तत्र संख्यातानुदेशः प्राप्नोति ।

**कृभ्वोः क्त्वाणमुलौ ॥ १५ ॥**

कृभ्वौ द्वौ, क्त्वामुलौ द्वौ× । तत्र संख्यातानुदेशः प्राप्नोति ।

**अधीयानविदुषोश्छन्दोब्राह्मणानि ॥ १६ ॥**

छन्दोब्राह्मणानीति द्वे, अधीते वेदेति च द्वौ+ । तत्र संख्यातानुदेशः प्राप्नोति ।

**रोपधेतोः पथिदूतयोः ॥ १७ ॥**

'रोपधेतोः प्राचाम्' [ ४. २. १२३ ] 'तद्गच्छति पथिदूतयोः [ ४. ३. ८५ ] । रोपधेतौ द्वौ, पथिदूतौ द्वौ । तत्र संख्यातानुपदेशः प्राप्नोति ।

**तत्र भवस्तस्य व्याख्यानः क्रतुयज्ञेभ्यश्च ॥ १८ ॥**

तत्र भवस्तस्य व्याख्यानौ द्वौ, क्रतुयज्ञौ द्वौ††, तत्र संख्यातानुदेशः प्राप्नोति ।

**संघादिष्वञ्प्रभृतयः ॥ १९ ॥**

संघादिष्वञ्प्रभृतयः‡‡ संख्यातानुदेशेन न सिध्यन्ति ।

---

प्र०–तु प्राप्त्यर्थस्य भवतेरुपपदद्वये प्रत्ययमिच्छन्ति । छन्दोब्राह्मणानीति । गोबलीवर्दन्यायेन छन्दःशब्देन मन्त्राणां ग्रहणम् । यथा 'जुष्टार्पिते च छन्दसी'ति ब्राह्मणानां ग्रहणं, 'नित्यं मन्त्र' इति मन्त्रग्रहणात् । छन्दोग्रहणेनैव तु ब्राह्मणानां

---

उ०–प्रतिषेधः' इति वचनमेव कृतं भाष्ये । भाष्ये—अधीयानविदुषोरिति । तत्र विद्वत्पर्यायो विदुष्शब्दः । अन्यथा वस्वन्तस्यौस्निरूपितभत्वाऽङ्गत्वाऽभावात्तदसिद्धिरिति बोध्यम् । संघादिष्विति । 'संघाङ्कलक्षणेष्वञ्यञिञाम'णित्यत्र त्रिष्वप्यर्थेषु त्रिभ्यः प्रत्यय इष्यते, तत्र सङ्ख्यातानुदेशेन त्रिष्वप्यर्थेष्वञादयोऽणिविशिष्टा न सिध्यन्तीत्यर्थः । 'वचना'दिति

---

‡ ३.३.१४५. × स्वाङ्गे तस्प्रत्यये कृभ्वोः; अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ३.४.६१;५९. + छन्दोब्राह्मणानि च तद्विषयाणि, तदधीते तद्वेद ४. २. ६६; ५९. †† तत्र भवः; तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः; क्रतुयज्ञेभ्यश्च ४. ३. ५३; ६६; ६८. ‡‡ सङ्घांकलक्षेष्वञ्यञिञामण् ४. ३. १२७.

नैष दोषः । घोषग्रहणमपि तत्र कर्तव्यम् ।

**वेशोयशआदेर्भगाद्यल्खौ ॥ २० ॥**

वेशोयशआदी द्वौ, यल्खौ द्वौ* । तत्र संख्यातानुदेशः प्राप्नोति ।

**ङसिङसोः ख्यत्यात्परस्य ॥ २१ ॥**

ङसिङसौः द्वौ, ख्यत्यौ द्वौ† । तत्र संख्यातानुदेशः प्राप्नोति ।

**न वा समानयोगवचनात् ॥ २२ ॥**

न वैष दोषः । किं कारणम् ? समानयोगवचनात् । समानयोगे संख्यातानुदेशं वक्ष्यामि ।

**तस्य दोषो विदो लटो वा ॥ २३ ॥**

तस्यैतस्य लक्षणस्य दोषो विदो लटो वा [ ३. ४. ८३ ] इति संख्यातानुदेशो न प्राप्नोति ।

**ध्माधेटोः नाडीमुष्टयोश्च ॥ २४ ॥**

ध्माधेटोर्नाडीमुष्टयोश्च‡ संख्यातानुदेशो न प्राप्नोति ।

**खलगोरथात् इनित्रकटयश्च× ॥ २५ ॥**

संख्यातानुदेशो न प्राप्नोति ।

प्र०-ग्रहणे सिद्धे ब्राह्मणविशेषप्रतिपत्त्यर्थं पुनर्ब्राह्मणग्रहणं कृतम् । तेन याज्ञवल्क्यानि ब्राह्मणानीति तद्विषयता न भवति । न वेति । अनुदेश उच्चारणम् । योगान्तरे तु शब्दान्तरस्यानुमानं न तूच्चारणमिति न्यायप्राप्त एवायमर्थः ।

उ०-भाष्यस्य—व्याख्यानादित्यर्थं इत्याह—अनुदेश इति । उच्चारणम् । उच्चारितसंबन्ध इत्यर्थः । वस्तुत उच्चारितस्यैव शब्दस्य बोधकत्वं नाऽनुमितादेरित्यणुदित्सूत्रभाष्योक्तेरनुमानपूर्वकस्योच्चारणाच्छ्रोतुर्बोधः । 'समानयोग' इत्यस्य च—एकयोगे वक्त्रोच्चारितानामित्यर्थं इति वाचनिकमेवेदम् । एतेन 'निरभ्यो', 'अवे तृस्त्रोः' 'स्वाङ्गे तस्प्रत्यये' 'रोपधेतोः' 'क्रतुयज्ञेभ्यः' 'ख्यत्याव्' 'अनवक्लृप्त्यमर्षयो'रित्येतेषु परिहृतो दोषः । समानयोगे द्वयोरुच्चारणाऽभावात् 'छन्दोब्राह्मणानी'त्यत्रापि न दोषः, तत्पदोपस्थापितत्वेऽप्युच्चारणाऽभावात् । अत्र पक्षे 'कर्तृकर्मणोश्च भूकृञोः' 'वेशो यशआदे'रित्यपरिहृते । ते च 'युष्म-

---

* वेशोयशआदेर्भगाद् यल्; ख च ४. ४. १३१; १३२. † ङसिङसोश्च; ख्यत्यात्परस्य ६. १. ११०; ११२. ‡ नासिकास्तनयोर्ध्माधेटोः; नाडीमुष्ट्योश्च ३. २. २९. ३०. × ४. २. ५०; ५१.

सिन्ध्वपकाराभ्यां कन् अणञौ च+ ॥ २६ ॥

संख्यातानुदेशो न प्राप्नोति ।

युष्मदस्मदोश्चादेशाः ॥ २७ ॥

युष्मदस्मदोश्चादेशाः* संख्यातानुदेशेन न सिद्ध्यन्ति ।

तस्माद्यस्मिन्पक्षेऽल्पीयांसो दोषास्तमास्थाय प्रतिविधेयं दोषेषु ।

अथवैवं वक्ष्यामि—'यथासंख्यमनुदेशः समानां स्वरितेन' । ततः 'अधिकारः' । अधिकारश्च भवति स्वरितेनेति । एवमपि स्वरितं दृष्ट्वा सन्देहः स्यात्—'न ज्ञायते किमयं समसंख्यार्थः, आहोस्विदधिकारार्थ' इति ? सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति, समसंख्यार्थ इति व्याख्यास्यामः ॥१०॥

प्र०- विदो लटो वेति। अत्र तु लब्धयथासङ्ख्यानामनुमानाददोषः। युष्मदस्मदोश्चेति। 'बहुवचनस्य वस्नसा'वित्यादिषु योगेष्वनुमीयमानत्वाद्युष्मदस्मदोर्यथासङ्ख्यं न प्राप्नोति। यस्मिन् पक्ष इति। शब्दतः साम्यमेकयोगे चेत्येष पक्ष आश्रयितव्य- इत्याहुः। दोषप्रतिविधानं तु क्वचिदान्तर्याद्व्यवस्था, क्वचिदभिधानाऽनभिधानाभ्यामिति कर्तव्यम्। अथवेति। यत्र स्वरितत्वं प्रतिज्ञायते तत्रैव शब्दतोऽर्थतो वा साम्याश्रयणेन यथासङ्ख्यं, नान्यत्र सत्यपि सङ्ख्यासाम्ये ॥१०॥

उ०–दस्मदोश्चादेशाः' इति चेन भाष्ये संग्राह्यं । भाष्ये—तस्य दोष इति । समानयोगे इत्यस्येत्यर्थः। अत्र तु लब्धेति। इदं चिन्त्यम् । तत्तद्योगे वक्त्रोच्चारितानामेव तथा संबन्ध इति पक्षमुपक्रम्य दोषोक्तेः। भाष्ये—नाडीमुष्ट्योरिति। इदं तृतीयाध्यायस्थभाष्यविरोधादेकदेशिवचनम्। यस्मिन् पक्षे इति। 'समानयोगे' इत्येतत्करणाऽकरणपक्षयोर्मध्ये यत्र पक्षे इत्यर्थः। इत्याहुरिति। अत्राऽरुचिबीजं तूक्तरीत्याऽर्थत इति पक्षेऽपि दोषोद्धारस्य सुकरत्वात्तदनाश्रयणं किमर्थमिति। क्वचिदिति। युष्मदाद्यादेशविषये, 'विदो लट' इत्यत्र च। क्वचिदिति। खलगोसिन्ध्वादौ। अत्र संख्यातानुदेशाऽभावेऽप्यभिधानात् प्रयोगानुसरणात्समासनिर्देशेपि क्रमेणान्वयः। 'कर्तृकर्मणोश्च भू' इत्यत्र 'वेशोयश' इत्यत्र चाऽनभिधानादेतत् सूत्राऽप्रवृत्तिरित्यर्थः । 'एकयोगे' इत्यस्याऽनाश्रयणपक्षे त्वनेकस्थलेऽनभिधानाश्रयणमिति तात्पर्यम्। अस्य दुर्ज्ञेयत्वादाह—अथवेति। ॥१०॥

+ ४. ३. ३२; ३३. * युस्मदस्मदोरन्यतरस्यां खञ् च; तस्मिन्नणि च युष्माकास्माकौ; तवकममकावेकवचने ४।३।१–३। युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ; बहुवचनस्य वस्नसौ; तेमयावेकवचनस्य ८।१।२०–२२।

## स्वरितेनाधिकारः ॥ १ । ३ । ११ ॥

किमर्थमिदमुच्यते ?

**अधिकारः प्रतियोगं तस्याऽनिर्देशार्थः ॥ १ ॥**

अधिकारः क्रियते—प्रतियोगं तस्याऽनिर्देशाऽर्थ इति । किमिदं प्रतियोगमिति ? योगं योगं प्रति प्रतियोगम् । योगे योगे तस्य ग्रहणं मा कार्षमिति ।

किं गतमेतदियता सूत्रेण ? 'गत'मित्याह । कुतः ? 'लोकतः' । तद्यथा—लोके 'अधिकृतोऽसौ ग्रामे' 'अधिकृतोऽसौ नगरे' इत्युच्यते यो यत्र व्यापारं गच्छति । शब्देन चाप्यधिकृतेन कोऽन्यो व्यापारः शक्योऽवगन्तुमन्यदतो योगे योग उपस्थानात् ।

**न वा निर्दिश्यमानाधिकृतत्वाद्यथा लोके ॥ २ ॥**

न वैतत्प्रयोजनमस्ति । किं कारणम् ? 'निर्दिश्यमानाधिकृतत्वाद्यथा लोके' । निर्दिश्यमानमधिकृतं गम्यते । तद्यथा—'देवदत्ताय गौर्दीयतां यज्ञदत्ताय विष्णुमित्राये'ति । गौरिति गम्यते । एवमिहापि 'पदरुजविशस्पृशो घञ्' [ ३. ३. १६ ] 'सृ स्थिरे' [१७] 'भावे' [१८] घञिति गम्यते ।

प्र०- स्वरितेन । स्वरितेनेतीत्थंभूतलक्षणे तृतीया । स्वरितेनाधिकारो लक्ष्यते इत्यर्थः । स्वरितत्वं सूत्रस्थानां केवलमधिकारज्ञानार्थं प्रतिज्ञायते, न तु प्रयोगसमवायी । अधिकारशब्दो भावसाधनः, कर्मसाधनो वा । विनियोगो लोकेऽधिकार उच्यते स एवेह गृह्यते । किमर्थमिति । आकाङ्क्षादिवशात्प्रकृतस्य सम्बन्धो लोक इव भविष्यतीति प्रश्नः । किं गतमिति । किमयमर्थोऽधिकारशब्देन परिगृहीतः, अथ नेति प्रश्नः । शब्देनेति । नहि परिस्पन्दरूपः शब्दस्य व्यापारोऽस्ति । न वेति । वचनरहिताल्लोकव्यवहारादेतत्साध्योऽर्थः सिद्ध इत्यर्थः । यज्ञदत्तायेति । सम्प्रदानविभक्त्या सन्निहिता गोकर्मिका ददातिक्रियापेक्ष्यते । अश्रुतकल्पनायाः श्रुताऽपेक्षणस्य लाघवात् ।

उ०- स्वरितेन । नेयं हेतौ तृतीया, अधिकारस्य स्वरितजन्यत्वाऽभावादत आह—इत्थम्भूतेति । नत्विति । स्वरितोच्चारणस्याऽधिकारज्ञापनेन चारितार्थ्यात्प्रयोगे शास्त्रान्तरप्राप्तस्वरेण बाध्यत इति भावः । न च स्वरितत्वस्याऽधर्मत्वात्समस्सुटीत्यादावग्रेऽनुवर्त्तमानहलः कथं तत्त्वम् । तत्समभिव्याहृताऽचि तत्करणेनाऽदोषात् । स्पष्टं चेदं समस्सुटीत्यत्र कैयटे । इहाधिकारो नोपक्रम इत्याह—अधिकारेति । प्रेरणं तद्विषयीभूतं कार्यं वा लौकिकोऽधिकारः । तत्र शब्दस्य द्विविधं कार्यम्—अर्थबोधः, स्वरूपबोधो वा । तत्रार्थबोधस्य वचननिरपेक्षत्वाद् द्वितीये पर्यवसानेन योगे योगे उपस्थानं फलति । तच्च प्रायउत्तरयोगेषु, क्वचित्पूर्वत्रापि । यथा 'संयोगान्तस्य लोपो' 'झलो झली'त्यादाविति भावः । उक्तार्थे सूत्रस्य

## अन्यनिर्देशस्तु निवर्तकस्तस्मात्परिभाषा ॥ ३ ॥

अन्यनिर्देशस्तु लोके निवर्तको भवति । तद्यथा—'देवदत्ताय गौर्दीयतां यज्ञदत्ताय कम्बलो विष्णुमित्राय चे'ति, कम्बलो गोर्निवर्त्तको भवति । एवमिहाऽप्य'भिविधौ भाव इनुण्' [ ३. ३. ४४ ] घञो निवर्तकः स्यात् । 'तस्मात्परिभाषा' । तस्मात् परिभाषा कर्तव्या ।

## अधिकारपरिमाणाऽज्ञानं तु ॥ ४ ॥

अधिकारपरिमाणाऽज्ञानं तु भवति । न ज्ञायते कियन्तमवधिमधिकारोऽनुवर्तत इति ।

## अधिकारपरिमाणज्ञानार्थं तु ।

अधिकारपरिमाणज्ञानार्थमेव तर्ह्ययं योगो वक्तव्यः । 'अधिकारपरिमाणं ज्ञास्यामी'ति । कथं पुनः—'स्वरितेनाधिकार' इत्येनेनाधिकारपरिमाणं शक्यं विज्ञातुम् ? एवं वक्ष्यामि—'स्वरिते[1]नाऽधिकारः' इति । स्वरितं दृष्ट्वाऽधिकारो न भवतीति । केनेदानीमधिकारो भविष्यति ? लौकिकोऽधिकारः ।

प्र०- घञो निवर्तकः स्यादिति । ततश्चाक्रोशेऽवन्योर्ग्रह इत्यादिष्वनन्तर इनुण् स्यात् । सति सूत्रे घञः स्वरितत्वप्रतिज्ञानादनुवृत्तिर्भवति, न त्विनुणो, विपर्ययात् । अधिकारपरिमाणाऽज्ञानं त्विति । यथा धातोरिति किं प्राग्लादेशेभ्योऽथाध्यायपरिसमाप्तेः, अङ्गाधिकारः प्रागभ्यासविकारेभ्योथाऽऽसप्तमपरिसमाप्तेरिति । स्वरितं दृष्ट्वेति । प्रकृतस्याधिकारनिवृत्तये शब्दान्तरस्य स्वरितत्वं प्रतिज्ञायते । तेन 'विंशतिकात्ख'-

उ०-समर्थत्वात्किंगतमिति प्रश्नोऽयुक्तोऽत आह—किमयमिति । यद्यधिकारशब्देन प्रतियोगमुपस्थानमुच्येत, तदा सूत्रं सफलं स्यात् । तस्य ह्यन्योर्थं इत्याक्षेप इति भावः । नहीति । अर्थबोधरूपो व्यापारस्तु न वचनसाध्य इति भावः । पारिशेष्यादुपस्थानलाभ इति बोध्यम् । वचनेति । तथा च सूत्रमेवाक्षिप्यत इत्यर्थः । संनिहिता गोर्कमिकेति । गौरिति गम्यत इति भाष्यस्य 'गौर्दीयता'मिति गम्यते इत्यर्थः । 'श्रुतापेक्षणस्ये'ति पाठः । श्रुतकल्पनस्येत्यर्थः । 'लाघवा'दित्यस्य 'न्याय्यत्व'मिति शेषः ।

इनुण्विधौ घञो निवृत्तिरिष्टैवेत्यत आह—ततश्चेति । अधिकारपरिमाणशब्देन तत्प्रदेशपरिमाणं विवक्षितमित्याह—यथेति । प्रकृतस्येति । सूत्रे 'स्वरित' इति सत्सप्तमीति भावः । भाष्ये—केनेदानीमिति । सूत्रं त्वधिकारनिवृत्त्यर्थं न तु तद्बोधकमिति भावः । इकारोऽनुबन्ध इति । प्रत्याहारसूत्रस्थक्रमेणेत्यर्थः । ननु द्वयोरल्पयोरयमल्पीयानिति भवति,

१—अस्मिन् पक्षे त्रिपदमिदं सूत्रं भवति 'स्वरिते' 'न' 'अधिकारः' इति ।

## नाधिकार इति चेदुक्तम् ॥ ५ ॥

किमुक्तम् ? 'अन्यनिर्देशस्तु निवर्तकस्तस्मात्परिभाषे'ति ॥ अधिकारार्थमेव तर्ह्ययं योगो वक्तव्यः । ननु चोक्तम्—'अधिकारपरिमाणाज्ञानं त्वि'ति ।

## यावतिथोऽलनुबन्धस्तावतो योगानिति वचनात्सिद्धम् ॥ ६ ॥

यावतिथोऽलनुबध्यते तावतो योगानधिकारोऽनुवर्त्तत इति वक्तव्यम् ।

अथेदानीं यत्राल्पीयांसोऽलो भूयसश्च योगानधिकारोऽनुवर्तते, कथं तत्र कर्तव्यम् ?

## भूयसि प्राग्वचनम् ॥ ७ ॥

भूयसि प्राग्वचनं कर्तव्यम् । 'प्रागमुत' इति वक्तव्यम् ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षण'मिति, प्रागमुत इति व्याख्यास्यामः ।

यद्येवं नार्थोऽनेन । केनेदानीमधिकारो भविष्यति ? लौकिकोऽधिकारः । ननु चोक्तं—'नाधिकार इति चेदुक्तम्' । किमुक्तम् ? अन्यनिर्देशस्तु निवर्तकस्तस्मात्परिभाषा । सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षण'मिति । इनुणघञिति सन्देहे घञिति व्याख्यास्यामः ।

न तर्हीदानीमयं योगो वक्तव्यः ? वक्तव्यश्च । किं प्रयोजनम् ? स्वरितेनाधिकारगतिर्यथा विज्ञायेत । [अधिकारगतिः ।] अधिकं कार्यम् । अधिकः कारः ।

अधिकारगतिः—गोस्त्रियोरुपसर्जनस्य [१.२.४८] इत्यत्र गोटाङ्ग्रहणं

प्र०–इत्यत्र स्वरितत्वदर्शनाद्द्वित्रिपूर्वादित्यस्य निवृत्तिरनुमीयते । यावतिथ इति । 'द्वित्रिपूर्वान्निष्का'दित्यत्र इकारोऽनुबन्धः कर्तव्यः । तेन द्वयोर्योगयोरनुवृत्तिर्भवति । एवमन्यत्रापि वेदितव्यम् । अल्पीयांस इति । कथं पुनर्भिन्नजातीयापेक्षया प्रकर्षप्रत्ययः । परमतापेक्षयाऽल्पे योगा इति चेन्मन्यसे, तन्न अल्पीयांसोऽलः । अथ बहवोऽल इति चेद्भूयांसो योगाः । भूयसीति । 'अङ्गस्य प्राग्द्वे'रित्यादि वक्तव्यम् । तत्तर्हीति । 'यावतिथोऽलिति भूयसि प्राग्वचनं चे'त्यर्थः । घञिति व्याख्यास्याम इति ।

उ०–नैवमत्र, अलामल्पत्वात्, सूत्राणां बहुत्वादिति शङ्कते—कथमिति । भिन्नजातीयत्वं बहुत्वेन सूत्राणां बोध्यम् । परिहरति—परमतेति । 'यावतिथोऽ'लिति वादी 'अल्पे योगा बहवोऽल' इति मन्यते, आक्षेप्ता तु 'अल्पेऽलो बहवो योगा' इति । एवं च मतभेदेनाऽलां योगानां च

१–क्वचिन्न ।

चोदितं तन्न कर्तव्यं भवति। स्त्रीग्रहणं स्वरयिष्यते। स्वरितेनाधिकारगतिर्भवतीति 'स्त्रियाम्' [४.१.३] इत्येवं प्रकृत्य ये प्रत्यया विहितास्तेषां ग्रहणं विज्ञास्यते। तत्र स्वरितेनाधिकारगतिर्भवतीति न दोषो भवति। [अधिकारगतिः।]

अधिकं कार्यम्—अपादानमाचार्यः किं न्याय्यं मन्यते, यत्र प्राप्य निवृत्तिः। तेनेहैव स्यात्—ग्रामादागच्छति नगरादागच्छति। 'सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा' इत्यत्र न स्यात्। स्वरितेनाधिकं कार्यं भवतीत्यत्रापि सिद्धं भवति॥ तथा—अधिकरणमाचार्यः किं न्याय्यं मन्यते, यत्र कृत्स्न आधारात्मा व्याप्तो भवति। तेनेहैव स्यात्—तिलेषु तैलम्, दध्नि सर्पिरिति। गङ्गायां गावः, कूपे गर्गकुलमित्यत्र न स्यात्। स्वरितेनाऽधिकं कार्यं भवतीत्यत्रापि सिद्धं भवति। अधिकं कार्यम्।

अधिकः कारः—पूर्वविप्रतिषेधाश्च न पठितव्या भवन्ति—'गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम्पूर्वविप्रतिसिद्धम्' 'नुमचिरतृज्वद्भावेभ्यो नु'डिति*। नुम्नुटौ स्वरयिष्येते। तत्र स्वरितेनाधिकः कारो भवतीति नुम्नुटौ भविष्यतः।

प्र०—ननु चेनिनुण आनन्तर्यात्संदेहाऽभावः। उच्यते—घञोनुवृत्तिसामर्थ्यं दृष्टम्, इनुणश्चानन्तर्यमिति निमित्तसद्भावादस्ति संदेहः। सांकाश्यकेभ्य इति। बुद्ध्या समीहितैकत्वाः प्रकर्षाश्रयेण पाटलिपुत्रका विभज्यन्ते इति मुख्याऽपायाऽभावादपादानसंज्ञा न स्यात्। 'ध्रुवमपाये' इत्यत्र तु स्वरितत्वे प्रतिज्ञाते सति बुद्धिपरिकल्पिताऽपायाश्रयणेनाऽपि भवति। कृत्स्न आधारात्मेति। सर्वेऽवयवा यत्र व्याप्ता इत्यर्थः। गङ्गायां गाव इति। गङ्गाशब्दोऽत्र नद्यामेव वर्तते न तु तत्समीपदेशे। तस्य

उ०—प्रत्येकमल्पत्वं बहुत्वं च प्राप्तं, तदवलम्ब्याऽत्र प्रकर्षप्रत्यय इत्यर्थः। प्राग्द्वेरिति। 'सर्वस्य द्वे' इति द्विशब्दात्प्रागित्यर्थः। यावतिथ इति। समुदायाभिप्रायं 'तत्तर्ही'त्येकवचनमिति भावः। घञ इति। आनन्तर्यादिनुण्वद्बहुषु सूत्रेषूपस्थिततया संस्कारदार्ढ्याद्घञपि झटित्युपस्थितिक इत्यस्ति सन्देहनिमित्तम्। एवं च व्याख्यानादधिकारनिवृत्तिवदधिकारोऽपि सिद्ध इति सूत्रं व्यर्थमिति भावः। भाष्येऽधिकारगतिरित्येकं फलमुक्त्वा फलान्तरमाह—[अधिकं कार्यमिति।] अधिकः कार इति। अधिकारशब्दोऽधिकव्यापारवाची न्यायप्राप्तादधिकोपि व्यापारो ग्राह्य इति भावः। बुद्ध्येति। बुद्धिकृतौ विभागसंयोगौ ग्राह्याविति भावः। अभिरूपत्वप्रकारैकबुद्ध्युपारोह एव संयोगः। अभिरूपत्वप्रकारेण साङ्काश्यकैरपि संसृज्यमाना बुद्धिरभिरूपतरत्वलक्षणप्रकर्षाश्रयेण साङ्काश्यकाञ्जहातीति बुद्धेर्विश्लेष एव तद्विषयस्यापि विश्लेष इति भावः।

नद्यास्तु तत्सामीप्यादिति। ननु कृत्स्नपदेन व्याप्यवृत्त्याधेयक एव मुख्य आधारो-

१—भविष्यतीति पा०। २—क्वचिन्न। * ७. १. ९५ वा० १०; ११.

## उपान्मन्त्रकरणे ॥ १ । ३ । २५ ॥

### उपाद्देवपूजासङ्गतकरणयोः ॥ १ ॥

उपाद्देवपूजासङ्गतकरणयोरिति वक्तव्यम् । आदित्यमुपतिष्ठते । चन्द्रमसमुपतिष्ठते ॥ सङ्गतकरणे—रथिकानुपतिष्ठते । अश्वारोहानुपतिष्ठते ।

बहूनामप्यचित्तानामेको भवति चित्तवान् ।
पश्य वानरसैन्येऽस्मिन्यदर्कमुपतिष्ठते ॥ १ ॥
'मैवं मंस्थाः सचित्तो'यमेषोऽपि हि यथा वयम् ।
एतदप्यस्य कापेयं यदर्कमुपतिष्ठति ॥ २ ॥

अपर आह—उपाद्देवपूजासङ्गतकरणमित्रकरणपथिष्विति वक्तव्यम् । देवपूजासङ्गतकरणयोरुदाहृतम् ॥ मित्रकरणे—रथिकानुपतिष्ठते, अश्वारोहानुपतिष्ठते ॥ पथि[2]—अयं पन्थाः स्रुघ्नमुपतिष्ठते[3], अयं पन्थाः साकेतमुपतिष्ठते[4] ।

### लिप्सायाम् ॥ २ ॥

वा लिप्सायामिति वक्तव्यम् । भिक्षुको ब्राह्मणकुलमुपतिष्ठते । भिक्षुको ब्राह्मणकुलमुपतिष्ठतीति वा ॥२५॥

प्र०— उपान्मन्त्र । उपाद्देवपूजेति । अमन्त्रकरणार्थमिदम् । अर्कमुपतिष्ठते इति । देवपूजां मत्वाऽऽत्मनेपदं कृतम् । चापलमेतन्न पूजनमिति न कृतमपरत्र । अपर आहेति । सङ्गतकरणमुपश्लेषमात्रं, मित्त्रकरणं त्वनुपश्लिष्टस्यापि मैत्त्रीसम्बन्धः । अयं पन्थाः स्रुघ्नमुपतिष्ठत इति । स्रुघ्नं प्राप्नोतीत्यर्थः । भिक्षुक इति । लिप्सया हेतुभूतया ब्राह्मणकुलपगच्छतीत्यर्थः ॥२५॥

उ०— उपान्मन्त्र । ननु देवपूजाया मन्त्रकरणकत्वात्सूत्रेणैव सिद्धमत आह—अमन्त्रेति । अमन्त्रकरणकेऽर्थे वर्तमानात्स्य इत्यर्थं इति भावः । मैत्त्रीसम्बन्धः—प्रीतिरूपः । ननु पथ्यपि सङ्गतकरणमस्तीति पृथग्ग्रहणं व्यर्थमत आह—प्राप्नोतीति । प्राप्यप्रापकव्यापारपूर्वकसंबन्धो हि तत् । न चेह तदस्ति । यत पथः स्रुघ्नस्य च बुद्धिकल्पितप्राप्तिक्रियापेक्षं कारकत्वं, न तु वस्तुत इति भावः । लिप्सयेति । लिप्साकरणके उपगमने गमेर्वृत्तिरिति भावः ॥२५॥

१—'सङ्गतिकरण' इति पा० । २—'पथिषु' पा० । ३—'स्रुघ्न, जिसे अब सुघ कहते हैं ।....स्रुघ्न नगरी मेरठ सहारनपुर-अम्बाला होकर उत्तर पंजाब आने वाले मार्ग पर थी ।' ( पतञ्जलिकालीन भारत पृ० ११९ ) । ४—'साकेतमयोध्याया'मिति यादवः ।

## उद्विभ्यां तपः ॥ १ । ३ । २७ ॥

अकर्मकादित्येव† । उत्तपति सुवर्णं सुवर्णकारः ।

### स्वाङ्गकर्मकाच्च ॥ १ ॥

स्वाङ्गकर्मकाच्चेति वक्तव्यम् । उत्तपते पाणी, वितपते पाणी । उत्तपते पृष्ठम्, वितपते पृष्ठम् ।

अथोद्विभ्यामित्यत्र किं प्रत्युदाह्रियते ? निष्टप्यत इति । किं पुनः कारणमात्मनेपदमेवोदाह्रियते, न पुनः परस्मैपदं प्रत्युदाहार्यं स्यात् ? तपिरयमकर्मकः । अकर्मकाश्चापि सोपसर्गाः सकर्मका भवन्ति । न चान्तरेण कर्मकर्तारं सकर्मका

प्र०- उद्विभ्याम् । भासने वर्तमानस्तपिरुद्विपूर्वोऽकर्मकः । स्वाङ्गमिहोत्तरत्र च पूर्वसूत्रवत्स्वमङ्गं गृह्यत इतीह न भवति—'देवदत्तो यज्ञदत्तस्य पाणिमुत्तपती'ति ।

अथेति । किमयं विधिः, अथ नियम इत्यभिप्रायेण प्रश्नः । 'उद्विभ्यां तप आत्मनेपदमेव न यगादी'ति नियमोऽनेन क्रियत इत्याह—निष्टप्यत इति । विधिनियमसंभवे विधिर्बलवानिति मत्वाह—किं पुनरिति । विधिर्न संभवतीति मत्वाह—तपिरिति । भासते दीप्यत इत्यत्रार्थेऽकर्मकः । अकर्मकाश्चेति । अनेकार्थत्वाद्धातूनामन्तर्भावितण्यर्थत्वादिति भावः । ततश्च तापने वर्तमानस्तपिः सकर्मकः । पुनः प्रयोजकव्यापाराऽविवक्षायां कर्तुः कर्मवद्भावात्सिद्धमात्मनेपदमिति पुनर्विधानं निय-

उ०- उद्विभ्याम् । 'उत्तपति सुवर्ण'मित्यादिप्रयोगादकर्मकत्वं तपेर्विशेषणं न सम्भवतीत्यत आह—भासने इति । 'उत्तपते वितपते सूर्य इत्युदाहरणम् । भासत इत्यर्थः । स्वमङ्गमिति । न त्वद्रवं मूर्त्तिमदिति भावः । प्रत्युदाहरणविशेषप्रश्ने तात्पर्यमाह—किमयमिति । यदि कर्मकर्तृत्वं विनाऽप्यकर्मकत्वमुत्तपेस्तदा विध्यर्थम् । अथ कर्मकर्तर्येवाऽकर्मकत्वं, ततो नियमार्थमिति भावः । नियमपक्षे यगादिनिवृत्तिः फलमिति यगादिमत्प्रत्युदाहार्यमित्याह—उद्विभ्यामिति । भाष्ये—तपिरयमकर्मक इति । तपिरयमकर्मकः सूत्रे गृहीतोऽकर्मकादित्यधिकारादित्यर्थः । अकर्मकत्वं चास्य कर्मकर्त्तर्येवेति न परस्मैपदं प्रत्युदाहर्तुं शक्यमिति भावः । तदाह—भासत इति । इत्यत्रार्थे शुद्धस्तपिरकर्मकः, उदादिपूर्वस्त्वन्तर्भावितण्यर्थत्वात्सकर्मक एव । तस्य च न कर्मकर्तृत्वं विनाऽकर्मकत्वमिति विधित्वाऽसम्भव इति भावः । अनेकार्थत्वादिति । उद्विरूपोपसर्गस्त्वन्तर्भावितण्यर्थत्वस्यैव द्योतक इति भावः । तपिः सकर्मक इति । उदादिपूर्वकः सकर्मक एवेति भावः । अन्यत्रापीति । उद्विभ्यामन्यत्रापीत्यर्थः । 'अत्रापी'तिपाठे—निष्टप्यत इत्यत्रापीत्यर्थः । इदानीमिति । अकर्मकाणामुपसर्गसंबन्धेपि प्रलम्बत इतिवत्सकर्मत्वनियमाऽभावाद्विधिरेव सिद्धान्त इत्याशयः । 'नदी

† अकर्मकाच्च १. ३. २६.

अकर्मका भवन्ति। यदुच्यते—'न चान्तरेण कर्मकर्तारं सकर्मका अकर्मका भवन्ती'ति, अन्तरेणापि कर्मकर्तारं सकर्मका अकर्मका भवन्ति। तद्यथा—नदी वहतीत्यकर्मकः, भारं वहतीति सकर्मकः। तस्मान्निष्टपतीति प्रत्युदाहार्यम् ॥२७॥

**आङो यमहनः ॥ १ । ३ । २८ ॥**

अकर्मकादित्येव† । आयच्छति रज्जुं कूपात्। आहन्ति वृषलं पादेन।

**स्वाङ्गकर्मकाच्च ॥ १ ॥**

स्वाङ्गकर्मकाच्चेति वक्तव्यम्। आयच्छते पाणी। आहत उदरमिति ॥२८॥

**समो गम्यृच्छिभ्याम् ॥ १ । ३ । २९ ॥**

**समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम् ॥ १ ॥**

समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानं कर्तव्यम्। संवित्ते। संपृच्छते। संस्वरते।

**अर्तिश्रुदृशिभ्यश्च ॥२॥**

अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्। मा समृत। मा समृषाताम्। मा समृषत। अर्ति ॥ श्रु—संशृणुते ॥ दृशि—संपश्यते।

---

प्र०—माय संपद्यत इत्यन्यत्राऽप्यात्मनेपदं भवत्येव। इदानीं विधिपक्षावाद्याह—अन्तरेणापीति। तदेवं ज्वलनवृत्तिस्तपिरकर्मकः। संतापने विलापने च सकर्मकः। कर्मकर्तरि तु 'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थी'ति वचनेन यक्चिणौ प्रतिषिद्धौ ॥२७॥

समो गम्यृ। समो गम्यृच्छिभ्या'मित्येतावत्सूत्रमिति वार्तिकमारब्धम्। उपसर्गादिति। अत्राऽकर्मकादिति न संबध्यते ॥२९॥

---

उ०—वहती'त्यस्य स्यन्दत इत्यर्थः। तदेवमिति। उपसर्गसंबन्धेपीत्यर्थः। एवं च कर्मकर्तारं विनाप्युदाहरणसम्भव इति भावः। तर्किं कर्मकर्तर्युत्तपत इत्यस्माद्यगिष्टः? नेष्टः, प्रकारान्तरेण तद्व्यावृत्तेरित्याशयेनाह—कर्मकर्तरि त्विति। आत्मनेपदविधावकर्मकाद्यक्चिणोः प्रतिषेधेनोपसर्गान्तरसंबन्धे तत्र यक्चिणौ भवत एवेति बोध्यम् ॥२७॥

आङो यमः। भाष्ये—आयच्छतीति। आकर्षतीत्यर्थः ॥२८॥

समो गम्यृ। विद्यादीनामपि सूत्र एव वृत्तिकारैः पाठाद्वार्तिकं व्यर्थमत आह—समो गमिति। प्रामादिकः स पाठ इति भावः। भाष्ये—गमनाष्वित्ति। बहुवचनं प्रयोगबाहुल्या-

---

† अकर्मकाच्च १. १. २९. १—काशिकायां 'प्रच्छिस्वरत्यर्तिश्रुविदि'पाठोऽपाणिनीयः।

**उपसर्गादस्यत्यूह्योर्वावचनम् ॥३॥**

उपसर्गादस्यत्यूह्योर्वेति वक्तव्यम् । निरस्यति निरस्यते । समूहति समूहते ॥२६॥

**आङ उद्गमने ॥ १ । ३ । ४० ॥**

**ज्योतिषामुद्गमने ॥ १ ॥**

ज्योतिरुद्गमन[1] इति वक्तव्यम् । इह मा भूत्—आक्रामति धूमो हर्म्यतं-लादिति ॥४०॥

**व्यक्तवाचां समुच्चारणे ॥ १ । ३ । ४८ ॥**

व्यक्तवाचामिति किमर्थम् ? 'वरतनु संप्रवदन्ति कुक्कुटाः'† ।

प्र०— आङ उद् । ज्योतिषामिति । उद्गमने वर्त्तमानोऽकर्मकः क्रमिः । इह तु 'नभः समाक्रामती'ति न भवत्यात्मनेपदम् । अत्र हि क्रमिर्व्याप्तौ वर्तते न तूद्गमने ॥४०॥

व्यक्तवाचाम् । सर्व एवेति । ये वदत्यर्थस्य कर्तारः । 'वद व्यक्तायां

उ०–भिप्रायेण । भाष्ये—मा समृतेति । अङ्विधौ लुप्तविकरणशास्तिसाहचर्याज्जुहोत्यादेरेव ग्रहणमिति भ्वादेरिदम् । तस्य तु मा समरतेत्यादि । परस्मैपदेष्विति त्वङ्विधौ न संबध्यते, योगविभागसामर्थ्यादिति वृत्तिः । भाष्योदाहरणबलात्संबध्यत एव । योगविभागो वैचित्र्यार्थः । यद्वा वार्तिके श्रुदृशिसाहचर्याद्भ्वादेरेव ग्रहणमितीयर्तेर्नात्मनेपदमित्यन्ये । निरस्यतिसमूहत्योः सकर्मकत्वादाह—अत्रेति ॥२९॥

आङ उद्ग । ननु 'ज्योतिषामुद्गमने'इत्यस्य ज्योतिःसंबन्ध्युद्गमने इत्यर्थः । एवं च 'पक्षी सूर्यमाक्रामती'त्यत्रापि प्रसङ्गः । यद्वा कर्मणि कर्त्तरि वा षष्ठीत्यत्र विनिगमनाविरहात्त-त्रापि प्रवृत्ति । न चोभयप्राप्ताविति कर्मण्येवैषा षष्ठी, तथा सति 'ज्योतिरुद्गमन' इति भाष्यकृत्कृतसमस्तप्रयोगानुपपत्तिरित्युभयोपादान एव तत्प्रवृत्तिरत आह—उद्गमने इति । प्रत्युदाहरणभाष्ये '[2]हर्म्यतला'दित्येव पाठः सांप्रदायिक इति भावः । एवं चोद्गमनमत्रोदय एवेति बोध्यम् ॥४०॥

व्यक्तवाचां । मनुष्यादिवत्तिरश्चां व्यक्तवाक्त्वाऽभावात्सर्वे व्यक्तवाच इत्यसङ्गतमत आह—ये इति । भाष्ये—येषां वाच्यकारादय इति । येषां वाचि वैखरीरूपायामकाराद्यो

१–'ज्योतिषामुद्गमन' पा० ।

२–'तलम्' इति कोलहार्नपाठः । 'हर्म्यतला'दित्येव पाठः साम्प्रदायिक' इति नागेशः ।

† "अयि विजहीहि दृढोपगूहनं, त्यज नवसङ्गमभीरु वल्लभम् । अरुणकरोद्गम एष वर्तते, वरतनु ! सम्प्रवदन्ति कुक्कुटाः ॥" इति छन्दःशास्त्रवृत्तौ ( ८ । ३ ) हलायुधः । पदमञ्जर्यां तु "अ[illegible]नय पादसरोजमङ्कतः, शिथिलय बाहुलतां गलाद्धृताम् । क च वंदनेंशुकमाकुलीकृतम्, वरतनु⋯⋯॥" इति ।

'व्यक्तवाचा'मित्युच्यमानेऽप्यत्र प्राप्नोति । एतेऽपि हि व्यक्तवाचः । अतश्च व्यक्तवाचः कुक्कुटेनोदिते उच्यते—'कुक्कुटो वदती'ति ।

एवं तर्हि 'व्यक्तवाचा'मित्युच्यते । सर्व एव हि व्यक्तवाचस्तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो ये व्यक्तवाच इति । के च साधीयः । येषां वाच्यकारादयो वर्णा व्यज्यन्ते । न चैतेषां वाच्यकारादयो वर्णा व्यज्यन्ते । एतेषामपि वाच्यकारादयो वर्णा व्यज्यन्ते । अतश्च व्यज्यन्त एवं ह्याहुः 'कुक्कुटाः कुक्कु'डिति । नैवं त आहुः । अनुकरणमेतत्तेषाम् ।

अथवा नैवं विज्ञायते—व्यक्ता वाग्येषां त इमे व्यक्तवाच इति । कथं तर्हि ? व्यक्ता वाचि वर्णा येषां त इमे व्यक्तवाच इति ॥४८॥

**अवाद्ग्रः ॥ १ । ३ । ५१ ॥**

**अवाद्ग्रो गिरतेः ॥ १ ॥**

अवाद् ग्र इत्यत्र गिरतेरिति वक्तव्यम् । गृणातेर्मा भूत् ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम्, प्रयोगाऽभावात् । 'अवाद् ग्र' इत्युच्यते, न चाऽवपूर्वस्य गृणातेः प्रयोगोऽस्ति ॥५१॥

**समस्तृतीयायुक्तात् ॥ १ । ३ । ५४ ॥**

तृतीयायुक्तादिति किमर्थम् ? 'उभौ लोकौ संचरसि इमं चामुं च देवल' । तृतीयायुक्तादित्युच्यमानेऽप्यत्र प्राप्नोति । अत्रापि हि तृतीयया योगः ।

---

प्र०–वाचा'ति पाठादिति भावः । अथवेति । विनापि प्रकर्षगत्या व्यधिकरणपदबहुव्रीह्याश्रयणान्मनुष्या एव गृह्यन्ते । व्यक्ता वाचीति । वाचि वर्णा अकारादयो येषां व्यक्तास्तेषामित्यर्थः । शुकसारिकादीनां न सर्ववर्णविषयं स्वाभाविकं व्यक्तवाक्त्वमपितु पुरुषप्रयत्नवशेन कतिपयवर्णविषयमिति तत्रात्मनेपदाऽभावः ॥४८॥

अवाद् ग्रः । न चावपूर्वस्येति । नियतविषयत्वात्केषांचित्क्रियाविशेषणानाम् । यथोर्यादयः कृभ्वस्तिविषया एवेति भावः ॥५१॥

समस्तृ । धातोस्तृतीयायोगाऽसंभवात्तदर्थेन योगे भाव्यमात्मनेपदेन । स च सर्वत्र चरत्यर्थे संभवतीत्यभिप्रायेणाह—तृतीयायुक्तादिति किमर्थमिति । सर्वत्रेति ।

---

उ०–वर्णा व्यज्यन्ते व्यक्ता भवन्तीत्यर्थः । 'कुक्कुटाः कुक्कु'डिति भाष्यस्य 'वदन्ती'ति शेषः । 'एवं जना आहु'रित्यन्वयः । वाचि—शब्दे । 'निष्ठे'ति व्यक्तशब्दस्य पूर्वनिपातः ॥४८॥

अवाद् ग्रः । अनुगृणातीतिवदवगृणातीति प्रयोगं को वारयेदत आह—नियतेति । क्रियाविशेषणानां,—तद्विशेषणार्थद्योतकानाम् ॥५१॥

समस्तृ । तृतीयायोगाऽभावे आत्मनेपदनिवृत्त्या तस्य चारितार्थ्यात्प्रश्नानुपपत्तिमा-

एवं तर्हि तृतीयायुक्तादित्युच्यते सर्वत्र च तृतीयया योगस्तत्र प्रकर्षगतिर्विज्ञास्यते—'साधीयो यत्र तृतीयया योग' इति। क्व च साधीयः? यत्र तृतीयया योगः श्रूयते ॥५४॥

**दाणश्च सा चेच्चतुर्थ्यर्थे ॥ १ । ३ । ५५ ॥**

'सा चेत्तृतीया चतुर्थ्यर्थे' इत्युच्यते, कथं नाम तृतीया चतुर्थ्यर्थे स्यात्? एवं तर्हि—अशिष्टव्यवहारेऽनेन तृतीया च विधीयत आत्मनेपदं च। दास्या संप्रयच्छते, वृषल्या सम्प्रयच्छते। यो हि शिष्टव्यवहारो 'ब्राह्मणीभ्यः संप्रयच्छती'त्येव तत्र भवितव्यम्।

यद्येवं नार्थोऽनेन योगेन। केनेदानीं तृतीया भविष्यति, आत्मनेपदं च?

**सहयुक्ते तृतीया स्याद्व्यतिहारे तङो विधिः।**

---

प्र०—केचित्सर्वक्रियापेक्षमेतदुक्तमिति मन्यन्ते। यथा असिना छिनत्ति। असिस्तैक्ष्ण्येन छिनत्ति, तैक्ष्ण्यमात्मना छिनत्तीति। यत्रापि करणाभिधायि पदं न श्रूयते तत्रापि केनचित्करणेन भाव्यम्, अन्तत एकस्यैव पदार्थस्य भेदविवक्षायामात्मा करणम्। अन्ये तु चरतिक्रियापेक्षमेवमुक्तमित्याहुः। नहि संचरणं करणेन विना संभवति। यत्रेति। तत्र ह्यन्तरङ्गा करणप्रतीतिः। अन्यत्र तु करणस्य परिकल्प्यत्वाद्बहिरङ्गा ॥५४॥

दाणश्च। अशिष्टव्यवहार इति। अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहार-

---

उ०—शङ्कयाह—धातोरिति। तदर्थेन—करणेन। केचिदिति। 'सर्वत्रे'ति सामान्योक्तेरिति तद्भावः। यत्रापीति। अस्ति शेत इत्यादौ। अन्ये त्विति। प्रकरणादिति भावः। अन्तरङ्गत्वं—शैघ्र्यमेव ॥५४॥

दाणश्च। अशिष्टोऽविहितो व्यवहार इत्यर्थे 'दास्यै संयच्छति वास' इत्यत्रापि स्यादत आह—अशिष्टानामिति। अशिष्टशब्दः प्रतिषिद्धकर्त्तृषु रूढ इति भावः। भाष्ये—अनेनेति नास्तीति कैयटस्वरसः। अनेनेति। अशिष्टव्यवहार इति तु कर्तव्यमेव। दास्यै इति। दास्यभिलषितं धूर्त्तः करोति, दासी च धूर्त्ताभिलाषितमिति व्यतीहारसिद्धिः। दानपूर्वकोपभोगे च संप्रयच्छतिरिति भावः। अत्र वदन्ति—'यद्येव'मित्यादिपूर्वपक्षयुक्तिरियुक्तिप्रत्युक्तिस्वारस्येन प्रतीयते। तथा सहोपभुङ्क्ते इत्येतन्मात्रेण व्यतीहाराऽप्रतीतेः। विश्राणनमादाय तु न सः। अन्ययोग्यैकजातीयक्रियाणामन्येन करणं हि सः। तस्यै विश्राण्य तामुपभुङ्क्ते इत्यर्थे कर्मव्यतीहाराऽप्रतीतावप्यशिष्टत्वप्रतीत्या तत्रेष्टात्मनेपदाऽसिद्धेश्च, 'उपपदविभक्ते'रितिन्यायेन विश्राणननिरूपितचतुर्थ्या एवापत्तेश्च, धातोर्व्यतीहारे वृत्तावपि 'कर्त्तरी'तिसूत्रे तद्धात्वर्थकर्तृमात्रे तङो विधानौचित्येन तिङोक्तत्वात्तेनैव न्यायेन प्रथमापत्तेश्च।

'सहयुक्तेऽप्रधाने' [ २. ३. १९ ] इत्येव तृतीया भविष्यति, 'कर्तरि कर्मव्यतिहारे' [ १. ३. १४ ] इत्यात्मनेपदम् ॥५५॥

उपाद्यमः स्वकरणे ॥ १ । ३ । ५६ ॥

इह कस्मान्न भवति—'स्वं शाटकान्तमुपयच्छती'ति ? अस्वं यदा स्वं करोति तदा भवितव्यम्। यद्येवं स्वीकरण इति प्राप्नोति[1]। विचित्रास्तद्धित-वृत्तयः। नाऽतस्तद्धित उत्पद्यते ॥५६॥

नाऽनोर्ज्ञः ॥ १ । ३ । ५८ ॥

अनोर्ज्ञः प्रतिषेधे सकर्मकवचनम् ॥ १ ॥

अनोर्ज्ञः प्रतिषेधे सकर्मकग्रहणं कर्तव्यम्। इह मा भूत्—'औषधस्याऽनुजिज्ञासते' इति।

प्र०—स्तस्मिन्नित्यर्थः। तत्र चेच्छब्दं चाऽर्थे व्याचक्षाणा अनेनैवोभयं संगृहीतमित्याहुः। सहयुक्त इति। दास्यै विश्राण्य तया सहोपभुङ्क्ते इत्ययं वाक्यार्थः ॥५५॥

उपाद्यमः। स्वस्य स्वत्वेन स्थितस्य ग्रहणादिकं करणं स्वकरणं गृह्यते इति मत्वा प्रश्नः—इहेति। अस्वमिति। अन्तरङ्गत्वान्निष्पादनलक्षणोऽत्र करोत्यर्थो गृह्यते। नात इति। च्वेर्विकल्पेन विधानादिति केचिदाहुः। प्रकृतेरविवक्षितत्वात्कार्य-मात्रविवक्षायां नास्ति च्विरित्यपरे ॥५६॥

नाऽनोर्ज्ञः। औषधस्येति। औषधेन प्रवर्तितुमिच्छतीत्यर्थः। न वेत्ति। पूर्वेण

उ०—अत एव क्रियायोगे 'कर्तरी'त्येव तृतीयायां सिद्धायामक्रियायोगार्थं सूत्रमिति 'तेन सहे'तिसूत्रे भाष्यकृद्वक्ष्यतीत्यलम् ॥५५॥

उपाद्यमः। स्वस्य सतः शाटकान्तस्याऽभूतप्रादुर्भावलक्षणकरणाऽयोगात्प्रश्नानुपपत्तिरत आह—स्वस्येति। करणं—क्रिया। ग्रहणादिरूपेत्यर्थः। अन्तरङ्गत्वादिति। निष्पन्नस्य हि ग्रहणं, निष्पत्तिश्च निष्पादनाधीनेत्यन्तरङ्गता। किं चाऽयमर्थः प्रकरणाद्यनपेक्षः, अर्थान्तरे तु तदपेक्षेत्यन्तरङ्गत्वम्। केचिदाहुरिति। तदा हि अस्वं स्वं करोतीतिवाक्येन भवितव्य-मित्यरुचिः। प्रकृतेरिति। 'स्वकरण' इत्यस्य स्वत्ववतो निष्पादने इत्यर्थ इति भावः। च्विस्तु न वास्तवे तथाभवने, किं त्वारोपित एव स्वभावादिति तात्पर्यम्। इदमेव वैचित्र्यम् ॥५६॥

नाऽनोर्ज्ञः। औषधेनेति। 'ज्ञोऽविदर्थस्ये'ति करणे शेषषष्ठीति भावः। भाष्ये—

१—'स्वीकरणमिति' पा०। † अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ५. ४. ५०.

## न वाऽकर्मकस्योत्तरेण विधानात् ॥ २ ॥

न वा कर्तव्यम् । किं कारणम् ? 'अकर्मकस्योत्तरेण विधानात् । अकर्मकाज्जानातेरुत्तरेण योगेनात्मनेपदं विधीयते 'पूर्ववत्सनः' [१.३.६२] इति† ।

## प्रतिषेधः पूर्वस्य च ॥ ३ ॥

पूर्वस्य‡ चाऽयं प्रतिषेधः । स च सकर्मकार्थ आरम्भः । कथं पुनर्ज्ञायते—'पूर्वस्यायं प्रतिषेध' इति ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति । कथं पुनर्ज्ञायते 'सकर्मकार्थ आरम्भ' इति ? अकर्मकाज्जानातेः सन आत्मनेपदवचने प्रयोजनं नास्तीति कृत्वा सकर्मकार्थो विज्ञायते ॥५८॥

## शदेः शितः ॥ १ । ३ । ६० ॥

## शदेः शितः परस्मैपदाश्रयत्वादात्मनेपदाऽभावः ॥ १ ॥

शदेः शितः परस्मैपदाश्रयत्वादात्मनेपदस्याऽभावः । शीयते शीयेते शीयन्ते ।

किं च भोः शदेः शित्परस्मैपदेष्वित्युच्यते ? न खलु 'परस्मैपदेषु' इत्युच्यते, परस्मैपदेषु तु विज्ञायते । कथम् ? 'अनुदात्तङित आत्मनेपदम्'

प्र०—सकर्मकाज्जानातेः सन्नन्तादात्मनेपदं विधीयते । अकर्मकात्तु परत्वा'त्पूर्ववत्सन' इत्यनेन ॥५८॥

शदेः शितः । शदेरिति । शिद्विकरणोत्पत्तेः पूर्वमात्मनेपदनिमित्ताऽभावाच्छेषत्वात्परस्मैपदेन भाव्यम् । तत्र कृते शित्प्रत्यये नाऽनेन विहितं परस्मैपदं निवर्तयितुं शक्यत इत्यप्रतिपादकत्वलक्षणमप्रामाण्यमस्य सूत्रस्य प्राप्तम् । किं च भो इति । सार्वधातुकसंशब्दनेन शितो विधानं, न परस्मैपदसंशब्दनेन । न खल्विति ।

उ०—अकर्मकाज्जानातेरित्यस्य 'सनन्ता'दिति शेषः । पूर्ववत्सन इत्यनेनेति । 'अकर्मकाच्चे'ति सूत्रेण केवलाज्जानातेस्तङ्विधानादिति भावः ॥५८॥

शदेः शितः । शदेः परो यः शित्प्रत्ययस्ततः परस्य लस्य स्थाने आत्मनेपदमेवेति मत्वा वार्तिकाऽवतार इत्याशयेनाह—शिदिति । ननु विकरणात् पूर्वमात्मनेपदनिमित्ताऽभावेपि लादेशवाक्येन सामान्यतः प्राप्तं सार्वधातुकमाश्रित्य सार्वधातुकविषये विधीयमाने विकरणे कृते नियमः स्यादत आह—शेषत्वादिति । 'अनुदात्तङितो' 'भावकर्मणो'रिति सूत्रद्वयापेक्षशेषस्यैव तत्र ग्रहणादित्यर्थः । विकरणेभ्यो नियमस्य बलवत्त्वादिति भावः ।

† अकर्मकाच्च १. ३. ४५. ‡ ज्ञाश्रुस्मृदृशां सनः १. ३. ५७.

'भावकर्मणोरात्मनेपद'मित्येतौ* द्वौ योगावुक्त्वा 'शेषात्कर्त्तरि परस्मैपद'मित्युच्यते× । एवं च न परस्मैपदेषूच्यते परस्मैपदेषु च विज्ञायते ।

कः पुनरर्हत्येतौ योगावुक्त्वा शेषात्कर्तरि परस्मैपदं वक्तुम् । किं तर्हि ? अविशेषेण सर्वमात्मनेपदप्रकरणमनुक्रम्य 'शेषात्कर्तरि परस्मैपद'मित्युच्यते । एवमपि परस्मैपदाश्रयो भवति । कथम् ? इदं तावदयं प्रष्टव्यः—यदीदं नोच्येत किमिह स्यादिति ? 'परस्मैपद'मित्याह । परस्मैपदमिति चेत्परस्मैपदाश्रयो भवति ।

**सिद्धं तु लडादीनामात्मनेपदवचनात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? 'शदेर्लडादीनामात्मनेपदं भवती'ति वक्तव्यम् ।

सिद्ध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं—'शदेः शितः परस्मैपदाश्रयत्वादात्मनेपदाऽभाव' इति । नैष दोषः । 'शित' इति

प्र०—सामर्थ्यादिति भावः । कः पुनरिति । समस्तमेवात्मनेपदप्रकरणं महावाक्यं नियमार्थम् । तत्रानियमेन लादेशेषु कृतेषु शिति विकरणे कृते नियमोऽयं प्रवर्तते—शदेः शित एव, न तु शत्स्यतीत्यादौ [इति भावः] । एवमपीति । यद्यपि तात्पर्यपर्यालोचनेन प्रकरणस्य नियमार्थत्वं तथाप्येकैकसूत्रार्थपर्यालोचनकाले त्ववान्तरव्यापारसंभवाद्विध्यर्थता संभवत्येव । अनारम्भे शेषपदनिक्षेपादारम्भे तत उद्धारात् । लडादीनामिति । आदिशब्दः प्रकारे, येषु शिता भाव्यं त लडादयः । शित्प्रकृतेरिति । योग्यतया शित्प्रकृतित्वमाश्रित्य प्रागेव शिदुत्पत्तेरात्मनेपदं विधीयते । शिद्विषयादिति । शिद्विषयत्वाच्छदिरेव शिच्छब्देनाऽभिधीयते ।

उ०— निवर्त्तयितुं शक्यते इति । 'भुक्तवन्तं प्रती'तिन्यायेनेति भावः । शास्त्रान्तरेण कृतनियमस्य निवृत्तिरशक्या, तेन निवर्तिततदङ्गं प्रतिपत्तिश्चाऽशक्येति तात्पर्यम् । सामर्थ्यादिति । भाष्ये वक्ष्यमाणरीत्येत्यर्थः । यद्येतत्सूत्रद्वयोत्तरं शेषादित्युच्येत तर्हि निविशत इत्यादौ परस्मैपदस्याऽप्यापत्तिरित्याशयेनाह—समस्तमेवेति । एवं च तदपेक्ष एव शेषः शेषादिति सूत्रे । एवं च तस्याऽप्राप्त्या नियमेनैव लादेशा इति भावः । भाष्यात्मनेपदनियमविषयोऽप्यशेष एवेति तात्पर्यम् । एवं च न परस्मैपदाश्रयत्वमिति बोध्यम् । लादेशेषु कृतेष्विति । प्रसक्तेष्वित्यर्थः । विकरणे इति । 'विकरणेभ्यो नियमो बलवा'निति तु 'शित' इत्येतत्सामर्थ्यादेतद्विषये नाश्रीयते इति भावः । नन्वेवं शदेः शेषत्वाऽभावे शत्स्यतीत्यादावपि परस्मैपदनियमो न स्यादत आह—शदेः शित एवेति । तादृशशदिविषय एव नियम इत्यतादृशः

* अनुदात्तङित आत्मनेपदम्; भावकर्मणोः १.३.१२;१३. × शेषात् कर्तरि परस्मैपदम् १.३.७८.

१—क्वचिन्न ।

नैषा पञ्चमी । का तर्हि संबन्धषष्ठी—शितो यः शदिः । कश्च शितः शदिः ? प्रकृतिः । शदेः शित्प्रकृतेरिति ।

अथवाऽऽहाऽयं 'शदेः शितः' इति, न च शदिः शिदस्ति, त एवं विज्ञास्यामः—शदेः 'शिद्विषया'दिति ॥ अथवा यद्यपि तावदेतदन्यत्र भवति 'विकरणेभ्यो नियमो बलीया'निति, इहैतन्नास्ति । विकरणो हीहाश्रीयते 'शित' इति । (आक्षेपवार्तिकम्)

## उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानम् ॥ ३ ॥

उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानं कर्तव्यम् । न्यविशत व्यक्रीणीत[1] । किं पुनः कारणं न सिद्ध्यति ? 'अटा व्यवहितत्वात्' । ननु चायमड्धातुभक्तो धातुग्रहणेन ग्रहीष्यते । न सिध्यति । अङ्गस्य ह्यडुच्यते‡ विकरणान्तं चाङ्गम् । सोऽसौ संघातभक्तो न शक्यो धातुग्रहणेन ग्रहीतुम् ।

प्र०- अथवेति । प्रकरणं नियमार्थम् । तत्र नियमात्पूर्वमात्मनेपदपरस्मैपदान्यनियमेन प्रवृत्तानि तत्रैतत्सूत्रारम्भसामर्थ्यात्पूर्वं विकरणः प्रवर्तते, पश्चाच्छित एव शदेरात्मनेपदमिति नियमः । न्यविशतेति । ननु 'विकरणेभ्यो नियमो बलीया'निति प्रागेव विकरणोत्पत्तेर्नियमेन भाव्यं, ततो नित्यत्वात्पूर्वं विकरणः ततोऽडागम इति

उ०-शेष एवेति भावः । विकरणेभ्यो नियमबलवत्ताऽनाश्रयणमजानानः शङ्कते भाष्ये—एवमपीति । नन्वेतदनुक्तौ महावाक्यस्याऽसमाप्ततया शेषपदार्थाऽनिर्णयेन शेषादित्यस्याऽप्रवृत्तेर्यदीदमित्यादि कथमत आह—यद्यपीति । अयं भावः—'अनुदात्तङितो' 'भावकर्मणो'रित्येतद्द्वयं नियमार्थं, शेषादिति च । तत्र शेषादितिसूत्रे शेषश्च तद्द्वयापेक्ष एव । इतरसूत्राणि तु शेषादिति प्राप्तपरस्मैपदबाधनेनात्मनेपदविधायकानि । तत्र शितः पूर्वमस्याऽप्राप्तेर्बाधकाभावात्परस्मैपदे जाते पश्चाज्जातनिवृत्त्ययोगेनाऽप्रामण्यमस्यापद्यते इति भावः । 'यदीदं नोच्येते'ति भाष्येण बाधकत्वमेषामिति दर्शितम् । अनारम्भे इति । बाधकशास्त्राऽभावेन शेषपक्षनिपातः । एवं च परस्मैपदोत्पत्तिर्निर्बाधैवेति भावः । आरम्भ इति । स्वरूपकथनमिदम् । ततः—शेषपक्षात् । उद्धारात्—बहिर्भावात् । नन्वेवं लुङादिष्वतिप्रसङ्गोऽत आह—आदिशब्द इति । शिदुत्पत्तेः प्राक्शित्प्रकृतित्वमपि कथमत आह—योग्यतयेति । शदिरेवेति । शदेः शित इति सामानाधिकरणे इति भावः । नन्वनुदात्तङितौ भावकर्मणी च विहाय परिशिष्टस्यात्मनेपदवाक्यस्याऽवान्तरव्यापाराऽपेक्षया विधित्वसंभवस्योक्तत्वात्कथमेतदत आह—प्रकरणमिति । प्रवृत्तानि—प्रसक्तानि । नन्वेवमपि शिदुत्पत्तेः प्राक्शेषत्वस्यैव

१—'अटा व्यवहितत्वात्' इत्यधिकं क्वचित् । २—'पूर्वस्य नियमे' पा० ।

† नेर्विशः; परिव्यवेभ्यः क्रियः १. ३. १७; १८. ‡ लुङ्लङ्लृङ्क्ष्वडुदात्तः ६. ४. ७१.

एवं तर्हीदमिह संप्रधार्यम्—अट्क्रियतां विकरण इति, किमत्र कर्तव्यम् ? परत्वादडागमः । नित्या विकरणाः× । कृतेऽप्यटि प्राप्नुवन्त्यकृतेऽपि प्राप्नुवन्ति । अडपि नित्यः । कृतेष्वपि विकरणेषु प्राप्नोत्यकृतेष्वपि प्राप्नोति । अनित्योऽट् । अन्यस्य कृतेषु विकरणेषु प्राप्नोत्यन्यस्याऽकृतेषु । 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति' ।

एवं तर्हीदमिह संप्रधार्यम्—अट्क्रियतां लादेश इति, किमत्र कर्तव्यम् ? परत्वादडागमः । नित्यो लादेशः* । कृतेऽप्यटि प्राप्नोत्यकृतेऽपि प्राप्नोति । नित्यत्वाल्लादेशस्यात्मनेपद एवाऽडागमो भविष्यति ।

**नित्यत्वाल्लादेशस्यात्मनेपदेऽडागम इति चेदटोऽपि नित्यनिमित्तत्वादात्मनेपदाऽभावः ॥ ४ ॥**

नित्यत्वाल्लादेशस्यात्मनेपद एवाऽडागम इति चेदेवमुच्यते—अडपि नित्यनिमित्तः । कृतेपि लादेशे प्राप्नोत्यकृतेपि प्राप्नोति । अटो नित्यनिमित्तत्वादात्मनेपदस्याऽभावः ।

प्र०—किं वार्तिकेन । उच्यते—एतदनाश्रित्यैतदुक्तम् । शब्दान्तरस्येति । विकरणास्तु शब्दान्तरादपि प्राप्नुवन्तो नाऽनित्याः । कृतेप्यटीति । धातुभक्तत्वादटस्तद्ग्रहणेन ग्रहणाद्व्यवधानाऽभावात् । अडागमस्त्वनित्यः । स हि लादेशेषु कृतेषु विकरणैर्नित्यत्वात्प्रतिबध्यते । विकरणेषु कृतेषु शब्दान्तरप्राप्त्याऽनित्यः । नित्यनिमित्तत्वादिति । कृतेऽपि लादेशे स्थानिवद्भावाल्लुङादिव्यपदेशोऽस्तीति प्रदर्शनार्थं निमित्तग्रहणमुपात्तम् ।

उ०—सत्त्वेन विकरणेभ्यो नियमस्य बलवत्त्वात्परस्मैपदनियमो दुर्वारोऽत आह—तत्रैतदिति 'अनुपसर्गाद्वा' 'वृद्भ्यः स्यसनो'रित्येतत्सामर्थ्यान्नियमस्य बलीयस्त्ववदेत्सूत्रसामर्थ्यादेतद्विषये विकरणस्यैव बलवत्त्वं ज्ञाप्यत इत्यर्थः । पूर्वं विकरण इति । सार्वधातुकप्रसक्तिमात्रेणेति भावः । अनाश्रित्येति । कृतोऽपि विकरणो न व्यवधायक इत्येवमपि ज्ञापकस्य नेतुं शक्यत्वात्तदनाश्रयणमिति भावः । एवं लावस्थायामडिति पक्षमात्मनेपदप्रकरणस्य 'तिङ्सा'-दिसूत्रेणैकवाक्यतेतिपक्षं चाऽनाश्रित्येदमित्यपि बोध्यम् । नानित्या इति । अस्य—'इति मन्यते' इति शेषः । तदेवं स्थितमेतत्—विकरणेषु कृतेषु भवन्नड्विकरणान्तभक्तो धातुव्यवधायक इत्युपसङ्ख्यानं कार्यमिति । तत्र भाष्यकृद्विकरणोत्पत्तेः प्राङ्नियमस्याऽटश्च संप्रधारणं करोति—एवं तर्हीति । 'लादेश' इत्यनेन नियमो विवक्षितः । ननु नियमोऽटि कृते न प्राप्नोत्यटा व्यवधानादत आह—धातुभक्तत्वादिति । अटोऽपि कृताऽकृतप्रसङ्गित्वेन

× तुदादिभ्यः शः, क्र्यादिभ्यः श्ना ३. १. ७७; ८१. * तिप्तस्झि····वहिमहिङ् ३. ४. ७८.

## तस्मादुपसंख्यानम्† ॥ ५ ॥

तस्मादुपसंख्यानं कर्तव्यम् ॥ न कर्त्तव्यम् । अन्तरङ्गस्तर्हि लादेशः । नैतद्विवदामहे—'अन्तरङ्गो नाऽन्तरङ्ग' इति । अस्त्वयं नित्यश्चाऽन्तरङ्गश्च । अत्र खलु लादेशो कृते त्रीणि कार्याणि युगपत्प्राप्नुवन्ति—विकरणाः, अडागमो, नियम‡ इति । तद्यदि सर्वतो नियमो लभ्येत, कृतं स्यात् । तत्तु न लभ्यम् । अथाऽपि विकरणात्पूर्वमडित्यड्लभ्येत, एवमपि कृतं स्यात् । तत्तु न

प्र०—यद्यपि लादेशे कृते विकरणेन नित्यत्वादड् बाध्यते तथापि 'यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्' । तत्रोभयोर्नित्ययोः परत्वादट् प्राप्नोति । ननु भवतु परत्वादडागमः, तस्य तु धातुभक्तत्वादव्यवधायकत्वात्सिद्ध्यत्यात्मनेपदम् । नैष दोषः । तत्र ह्यन्तरङ्गत्वाल्लादेशेषु कृतेषु नियमात्पूर्वं नित्यत्वाद्विकरणेषु कृतेषु अडागमो विकरणान्तभक्तत्वाद्धातोर्व्यधायक इति न्यादिभ्यः परे विशयादयो निरन्तरा न संभवन्तीत्यात्मनेपदाऽप्रसङ्ग इत्येवं भाष्ये चोद्यं व्यवस्थाप्यते । अन्तरङ्गस्तर्हीति । लकारमात्राऽपेक्षत्वात् । अडागस्तु लकारविशेषापेक्षत्वाद्बहिरङ्गः । नैतदिति । न लादेशेन सह संप्रधारणा, किन्तु नियमेन सहेति भावः । तत्तु न लभ्यमिति । ननु पूर्वमेव ज्ञापकाद्विकरणेभ्यो नियमस्य बलीयस्त्वं प्रतिपादितं तत्किमुच्यते—तत्तु न लभ्य-

उ०—नित्यत्वमाशङ्क्याह—अडागम इति । अटो विकरणापेक्षया कथमनित्यत्वमत आह—विकरणेष्विति । भाष्ये—आत्मनेपद एवेति । नित्यत्वादटः पूर्वं नियमप्राप्तेरिति भावः । 'अडागमो भविष्यती'ति फलितनिर्देशः । तथा चोपसङ्ख्यानं न कार्यमिति भावः पुनरुपसंख्यानबाधाह—नित्यत्वाल्लादेशस्येत्यादीति चेदिति । 'अडपि नित्य' इति वक्तव्ये निमित्तग्रहणं किमर्थंमत आह—कृतेपीति । अन्यथा लादेशेषु कृतेषु लङादिपरत्वाऽभावादडाद्यभावशङ्का स्यादिति भावः । तस्य धातुभक्तत्वादिति । लादेशेभ्यः परत्वादडागमे विकरणाऽभावात्स धातुभक्त इत्यर्थः । सिध्यतीति । आत्मनेपदनियमः सिध्यतीत्यर्थः । लादेशेषु—तिप्तसिति विहितेषु । नियमात्पूर्वं नित्यत्वादिति । 'बृंहयः स्यसनो'रिति तु विकरणव्यवधानेपि नियमप्रवृत्तिरित्यर्थस्यैव ज्ञापकमिति भावः । आत्मनेपदाऽप्रसङ्ग इति । नियमाऽप्रसङ्ग इत्यर्थः । चोद्यम्—उपसंख्यानम् । 'अटो नित्यनिमित्तत्वा'दित्युत्तरम्—'उभयोर्नित्ययोर्नियमात्परत्वादटि प्राप्ते तं बाधित्वा विकरणे ततोऽटी'ति शेषपूरणेनेति भावः । उभयोर्लाश्रययोः कथमन्तरङ्गत्वबहिरङ्गत्वे अत आह—लकारेति । 'परनिमित्तकत्वादडागमो बहिरङ्ग' इति वक्तुं युक्तं, तस्मिन्निति परिभाषासापेक्षत्वात्तस्य । विशेषापेक्षत्वेपि न बहिरङ्गत्वमिति प्रागुक्तम् । प्रत्याख्यातृसिद्धान्तिनोऽन्तरङ्गस्तर्हीत्युक्तिर्भाष्ये । विधिवाक्यैर्नैषामेकवाक्यताश्रयणान्नियमोऽन्तरङ्ग इत्यर्थः । उपसर्गकार्यं चाऽन्तरङ्गमिति सुट्कादिति सूत्रे भाष्ये स्पष्टम् ।

† इदं भाष्यमेवेत्यन्ये । ‡ नेर्विशः; परिव्यवेभ्यः क्रियः १. ३. १७; १८. १—'पूर्वमिति' क्वचिन्न ।

लभ्यम् । किं कारणम् ? आङ्गात्पूर्वं विकरणा एषितव्यास्तरतस्तरन्तीत्येवमर्थम्× । अडाड्भ्यामप्यन्यदाङ्गं पूर्वमेषितव्यमुपार्च्छदित्येवमर्थम् । तत्र ह्याटि कृत साट्कस्य ऋच्छिभावः+ प्राप्नोति । ननु च ऋच्छिभावे कृते शब्दान्तरस्याऽकृत

प्र०–मिति ? उच्यते—अन्यथापि तज्ज्ञापकं समर्थयितुं शक्यते—कृतोऽपि विकरणो न व्यवधायक इति । यद्येवं नित्य एव नियमः । नैतदस्ति । यत्र केवलो विकरणो व्यवधायकस्तत्र भवतु नित्यो नियमः, यथा निवेक्ष्यते निविशत इति । यत्र तु विकरणे कृतेऽडागमस्तत्राऽटो व्यवधायकत्वान्नियमो न प्राप्नोति । तरत इति । अत्र पूर्वमित्त्वे सति रूपं न सिध्यति । आटि कृत इति । आटश्चेति वृद्धिरेकादेशः प्राप्नोति, ऋच्छिभावश्च । तत्र वर्णमात्राश्रयत्वादेकादेशोऽन्तरङ्गः । नानाश्रयत्वाच्च 'वार्णादाङ्गं बलीय' इति नास्ति । ततश्चैकादेशे कृते तस्यादिवद्भावादृच्छिभावः प्राप्नोति । तत 'आर्च्छ'दिति स्यात्, न त्वार्च्छदिति । ननु चेति । वत्सवत्प्रवृत्त्या कार्यमिह शास्त्रे

उ०– एतदुत्तरग्रन्थस्त्वेकदेशिनोः 'अथवा नेर्—' इत्येतत्पर्यन्तम् । तदाशयश्च पूर्वपक्षमुखेन मयोच्यते—"नन्वन्तरङ्गस्तर्हि लादेश" इत्यत्र लादेशशब्देन नियमो विवक्षितः, उत तिङ्सिति विधिः ? नाद्यः । 'नेर्विश' इत्यादेः पदान्तरापेक्षत्वेन बहिरङ्गत्वात् । तस्माद् द्वितीयो ग्राह्यस्तत्राह—नैतदिति । अयमिति । तिङ्सिति विधिः । न तु तेन सह संप्रधारणेति भावः । केन तर्हि संप्रधारणेत्यत्राह—अत्र खल्विति । लादेशे कृते इति । जातस्यापि लुकेव निवृत्तिः । प्रसक्ते इति वार्थः । सर्वत इति । विकरणादडागमाच्चेत्यर्थः । तत्तु न लभ्यमिति । नियमात्पूर्वं नित्यत्वाद्विकरणप्रवृत्तेरिति भावः । तत्र शङ्कते—ननु पूर्वमेवेति । यत्रेति । तथा च नियमो न नित्य इति भावः । ननु विकरणात्पूर्वमडागमो न लभ्य इत्यर्थकं 'तत्तु न लभ्य'मित्ययुक्तं, विकरणस्याऽपि शब्दान्तरात्प्राप्त्याऽनित्यत्वात् । न च 'शब्दान्तरस्ये'ति वाचनिकं, किं तु न्यायः । यद्व्यक्तिसंबन्धितया पूर्वं प्राप्नोति तद्व्यक्तिसंबन्धित्वेनाऽप्राप्त्या कृताऽकृतप्रसङ्गित्वाऽभाव इति, स च शब्दान्तरात्प्राप्तावपि तुल्य इति विकरणात्पूर्वमटि विकरणोत्तरं ततः पूर्वं वा नियमो भविष्यतीति नाऽर्थ उपसंख्यानेनेत्याशयेन पृच्छति—किं कारणमिति । उपसंख्यानबाधाह—अङ्गादिति । आङ्गप्रवृत्त्युत्तरं विकरणे 'तरत' इत्यत्राऽनिष्टमाह—अत्रेति । अडाटोर्बाधकस्याऽऽङ्गस्य बाधको विकरणः सुतरामडाटोर्बाधक इति कैमुतिकन्यायं वक्तुं भाष्ये—अडाड्भ्यामपीति । ननु 'वार्णादाङ्ग'मित्येकादेशात्पूर्वमृच्छिभावे 'निर्दिश्यमान'परिभाषया न दोषः । किं चाऽऽटः शबन्ताङ्गभक्तत्वेनाऽऽङ्विशिष्टस्याऽर्तित्वाऽभावान्न दोषोऽत आह—आटश्चेति वृद्धिरिति । नानाश्रयत्वादिति । वस्तुतस्तदनाश्रित्येदम् । तस्यादिवद्भावादिति । एवं चातिदेशविषये न 'निर्दिश्यमान'परिभाषाप्रवृत्तिः, शबन्ताङ्गभक्तत्वेऽपि आङ्विशिष्टस्याऽर्तित्वं च सुलभमिति भावः । भाष्योक्तस्योपार्च्छदित्यस्योपसर्गादृतीति वृद्ध्यापि सिद्धिरत आह—न त्वार्च्छदितीति । भाष्ये 'लक्ष्ये लक्षणस्ये'ति न्यायाऽविषयं

× अतः स्वातोः ७ '००. + पाघ्राध्मा....पश्यर्च्छधौसीयशीदाः ७. ३. ७८.

आडिति कृत्वा पुनराड्भविष्यति । पुनर्ऋच्छिभावः पुनराडिति चक्रकमव्यवस्था प्राप्नोति ।

नैष दोषः । यत्तावदुच्यते—'आङ्गात्पूर्वं विकरणा एषितव्याः—'तरतः' 'तरन्ती'त्येवमर्थं'मिति । भवेत्सिद्धं यत्र विकरणा नित्या आङ्गमनित्यं तत्राङ्गात्पूर्वं विकरणाः स्युः, यत्र तु खलूभयं नित्यं परत्वात्तत्राङ्गं तावद्भवति ।

यदप्युच्यते—'अडाड्भ्यामप्यन्यदाङ्गं पूर्वमेषितव्यमुपार्च्छदित्येवमर्थं'मिति । अस्त्वत्राट्, आटिकृते साट्कस्य ऋच्छिभावः, ऋच्छिभावे कृते शब्दान्तरस्याऽकृत आडिति कृत्वा पुनराड् भविष्यति । ननु चोक्तं—'पुनर्ऋच्छिभावः पुनराडिति चक्रकमव्यवस्था प्राप्नोती'ति । नैष दोषः । चक्रकेष्विष्टतो व्यवस्था ।

प्र०–संभवतीति भावः । यत्तावदिति । 'तरत'इत्यत्राऽनित्यमित्त्वं, विकरणस्तु नित्य इति स एव प्रवर्तते । यत्र त्विति । यथा तरतीति । अस्त्वत्राडिति । परत्वादृच्छिना भाव्यम् । अभ्युपगम्यवादे त्वेतदुच्यते—चक्रकेष्विति । व्यवस्थाकारिणा शास्त्रेण भाव्यमित्यव्यवस्थाहेतुः पुनः प्रवृत्तिर्न भविष्यतीत्यर्थः । तदेवं स्थितमेतद'न्तरङ्गत्वाल्लादेशेषु कृतेषु परत्वादडागमः' । न चायं नियमः—'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति', न तु 'शब्दान्तरा'दिति, यतोऽडागमस्याऽनित्यत्वं स्याद्विकरणस्य नित्यत्वम् । कृताऽकृतप्रसङ्गित्वात्तु द्वयोरपि नित्यत्वम् । अङ्गत्वाकृत्याश्रयणाद्वा नास्ति शब्दान्तर-

उ०–बोधयितुं—शब्दान्तरस्येति । नन्वेवमुदवोढामित्यत्र'लक्ष्ये लक्षणस्ये'तिन्यायेन पुनर्वृद्धिवारणं सप्तमे कैयटेन वक्ष्यमाणं विरुध्येत, ततो हि विकारकृतं न शब्दान्तरत्वमिति लभ्यते इति चेन्न, अन्नत्यस्यैकदेशयुक्तित्वेनाऽदोषात् । तदाह—वत्सवदिति । स न्यायोऽनित्य इति भावः । गवि स्थितदुग्धशेषपयसो ग्रहणाय यथा वत्सः प्रवर्त्तते तद्वदिति तात्पर्यम् । क्वचित्तु 'पर्जन्यव'दिति पाठस्तत्रायमर्थः—यथा पर्जन्यः स्वयं पूर्णे कृतेऽपि क्षेत्रे पुनःपुनर्वर्षतीति । भाष्ये—पुनर्ऋच्छिभाव इति । विकारान्यानुपूर्व्यैक्येऽपि यदि पुनराट्, तत एव तुल्यन्यायात्पुनर्ऋच्छिभावोऽपि स्यादित्यभिमानः । यत्र खलूभयमिति । एवं च तुल्यन्यायाद् द्वयोरनित्ययोरपि परत्वादटि सति न दोष इत्युपसङ्ख्यानं न कार्यं, विकरणाटोर्द्वयोरप्यनित्यत्वं तु दर्शितमेव । 'शब्दान्तरप्राप्तस्ये'त्यनाश्रयणे तूभयोर्नित्यत्वं बोध्यम् ।

परत्वादिति । अङिछ्कारे ऋच्छिः साऽवकाशः, आटोऽन्येऽजादयः । अभ्युपगम्यवादेन त्विति । एवं 'लक्ष्ये लक्षणस्ये'तिन्यायानाश्रयणेन चक्रकापादनमपि तथैवेति ध्वनितम् । एकदेशयुक्तित्वं च ध्वनितम् । 'चक्रकेष्विष्टतो व्यवस्थे'ति स्वशास्त्रीयो न्याय इत्याह—व्यवस्थेति । अन्यथा व्याख्यानाऽपर्यवसानं स्यादिति भावः । नन्वत्र न्यायात्सिद्धावप्युपसर्गनियमे न्यायाऽभावादुपसङ्ख्यानमावश्यकमत आह—तदेवमिति । लादेशेषु—तिप-

अथवा 'ने'रिति* नैषा पञ्चमी। का तर्हि ? विशेषणषष्ठी। नेर्यो विशिः। कश्च नेर्विशिः ? विशेष्यः। व्यवहितश्चापि शक्यते विशेषयितुम्।

अथवा निरपि पदं, विशिरपि पदम्। पदविधिश्च समर्थानाम्। व्यवहितेपि सामर्थ्यं भवति ॥६०॥

## पूर्ववत्सनः ॥ १ । ३ । ६२ ॥

किमिदं पूर्वग्रहणं सनपेक्षम्—'प्राक्सनो येभ्य आत्मनेपदमुक्तं तेभ्यः सन्नन्तेभ्योऽपि भवती'ति। आहोस्विद्योगापेक्षम्—'प्रागेतस्माद्योगाद्येभ्यो

---

प्र०—प्राप्तिरटः। नेर्यो विशिरिति। व्यवहितश्चाप्यर्थद्वारेण विशेष्यत्वात्संबन्धी भवतीत्यर्थः। अथवेति। 'नेर्विश' इत्यस्याऽयमर्थः—'निशब्दात्परमात्मनेपदान्तं विश्यवयवपदं साधु भवती'ति। सत्यप्यडागमे नेः पदमन्तरमेवेति दोषाऽभावः। विशिरपीति। विशिशब्देन विश्यवयवः समुदाय उपचारादभिधीयते। पदविधिश्चेति। न्यायप्राप्ताऽर्थानुवादोऽयं, न त्वेतत्प्रकृते उपयुज्यते इत्याहुः ॥६०॥

पूर्ववत्सनः। पूर्वशब्दः संबन्धिशब्दत्वादवधिमपेक्षते। तत्र कोऽत्राऽवधिरभिप्रेत इति पृच्छति—किमिदमिति। येभ्य इति। योगस्थेभ्यो धातुभ्यो विधानाद्योगेभ्यो विहितमित्युच्यते। पक्षद्वयेऽपि 'तेन तुल्य'मिति तृतीयान्ताद्वतिः, न तु पञ्चम्यन्तात्। लक्षणाऽभावात्। 'तुल्यार्थै'रिति विहिता तृतीया सर्वविभक्त्यर्थानन्तर्भावयतीति पञ्चम्यर्थस्याऽत्र ग्रहणमुपपन्नमेव। यथा 'ब्राह्मणवद्वैश्यादधीते' इति

---

उ०—सितिसूत्रेण। परत्वादडागम इति। परत्वाद्विकरणात् पूर्वं तत्र कृते तस्य धातुभक्तत्वादव्यवधायकत्वेन नियमसिद्धिरित्यर्थः। 'न चायं नियम' इति पाठः। तदाह—न त्वित्यादि। 'न्याय' इति पाठेऽयमेव ग्राह्योऽयं नेति न न्यायो न युक्तमित्यर्थः। संबन्धीति। स्वद्योत्याऽर्थनिरूपितविशेष्यतावदर्थवत्त्वं संबन्धो बोध्यः। 'परिव्यवेभ्य' इत्यादावपि षष्ठ्यर्थे पञ्चमी बोध्या, पञ्चमीपक्षेपि वा 'नेः परत्वयोग्यस्ये'त्यादिक्रमेणाऽर्थः। अयमर्थ इति। पदसंस्कारप्रस्तावात्तात्पर्यवृत्त्याऽयं सूत्रार्थ इति भावः। अथ विशिः कथं पदमत आह—विशीति। न्यायेति। नेः सकाशादर्थविशेषं प्राप्तो विशिरित्यर्थे तात्पर्यं दर्शयितुं समर्थानामित्युक्तम्। न त्वत्र तत्परिभाषोपस्थितिः, सुबन्तत्वेन पदत्वेन वा निमित्तकोटावप्रवेशात्। अत एव 'समर्थ'सूत्रे भाष्यकारो वक्ष्यति—'एकार्थीभावः सामर्थ्यं, विभक्तिविधौ च नोपस्थिति'रितीति दिक्। न चात्र पक्षद्वयेऽपि उपसर्गान्तरव्यवधानेऽपि प्रवृत्त्यापत्तिरिति वाच्यम्। तेषामनभिधानात् ॥६०॥

पूर्ववत्सनः। धातुभ्यः परस्य लस्य विधीयमानमात्मनेपदं कथं योगेभ्यः स्यादत आह—योगस्थेभ्य इति। 'मञ्चाः क्रोशन्ती'तिवदिति भावः। भाष्ये 'येभ्य' इति निर्देशात्

---

* नेर्विशः १. ३. १७.

[ योगेभ्य ] आत्मनेपदमुक्तं तेभ्यः सन्नन्तेभ्य आत्मनेपदं भवती'ति। किं चातः ? यदि सनपेक्षं, निमित्तमविशेषितं भवति। 'पूर्ववत्सनः' न ज्ञायते—किमन्ताद्भवितव्यमिति। अथ संयोगापेक्षमुत्तरत्र विधिर्न प्रकल्पेत—बुभुक्षते उपयुयुक्षत इति† ।

यथेच्छसि तथास्तु। अस्तु तावत्सनपेक्षम्। ननु चोक्तं—'निमित्तमविशेषितं भवती'ति। निमित्तं च विशेषितम्। कथम् ? सनमेवात्र निमित्तत्वेनाऽपेक्षिष्यामहे। 'पूर्ववत्सन' आत्मनेपदं भवति। कुतः ? सन इति ।

अथवा पुनरस्तु योगापेक्षम्। ननु चोक्तम्—'उत्तरत्र विधिर्न प्रकल्पेते'ति। विधिश्च प्रक्लृप्तः। कथम् ? उत्तरत्रापि 'पूर्ववत्सन' इत्येवानुवर्तिष्यते।

किमर्थं पुनरिदमुच्यते ?

वतिनिर्देशकार्यात्
भवति

**पूर्ववत्सन इति शदिम्रियत्यर्थम् ॥ १ ॥**

शदिम्रियत्यर्थोऽयमारम्भः‡ । शदिम्रियतिभ्यां सन्नन्ताभ्यात्मनेपदं मा भूदिति ।

प्र०—ब्राह्मणादिव वैश्यादधीत इत्यर्थः। वैश्यापादानकस्याऽध्ययनस्य ब्राह्मणापादानकमध्ययनमुपमानम्। तत्र च ब्राह्मणशब्दो वर्तते। तेन ब्राह्मणेन तुल्यं वैश्यादधीत इति तृतीयान्ताद्वतिः। एवमिहापि पूर्ववदिति द्रष्टव्यम्। किमन्तादिति। ततश्चाऽप्रतिपत्तिः स्यात्। यदि नामात्मनेपदनियमविधानसामर्थ्यादनेन सर्वधातुभ्य आत्मनेपदं भवतीत्येतल्लभ्येत, विषयविभागस्तु न ज्ञायेतेति भावः। सनमेवेति। प्रत्यासत्त्येति भावः। उत्तरत्रापीति। उत्तरेषु योगेषु वाक्यभेदेन 'पूर्ववत्सन' इत्येतत्सम्बध्यते। प्रोपाभ्यां युजेरात्मनेपदं भवति, ततः 'पूर्ववत्सन' इति। किमर्थमिति। विधिनिषेधो-

उ०—पञ्चम्यन्तादिशेरिति भ्रमं वारयति—पदद्वयेपीति। तर्हि पञ्चम्यन्तप्रयोगस्य का गतिरत आह—तुल्यार्थैरिति। नन्वात्मनेपदेन स्वयोग्यप्रकृतेराक्षेपाद्दोषाऽभावोऽत आह—ततश्चेति। तामुपपादयति—यदीति। 'यदि नामात्मनेपदनियमविधानसामर्थ्यात्प्रतिपत्तिः स्यात्तर्ही'ति शेषः। 'तर्ह्यनेने'त्यन्वयः। अनुवृत्तस्यैकवाक्यतया संबन्धे केवलेभ्य आत्मनेपदं न स्यादत आह—वाक्यभेदेनेति। पूर्ववद् ग्रहणानुवृत्तिसामर्थ्यात्। अन्यथा 'सन' इत्येवानुवर्त्तयेदिति

१—क्वचिन्न। † भुजोऽनवने; प्रोपाभ्यां युजेरयज्ञपात्रेषु १. ३. ६६; ६४.
‡ शदेः शितः; म्रियतेर्लुङ्लिङोश्च १. ३. ६०; ६१.

## इतरथा हि ताभ्यां सन्नन्ताभ्यामात्मनेपदप्रतिषेधः ॥ २ ॥

इतरथा ह्यनुच्यमानेऽस्मिञ्शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदस्य प्रतिषेधो वक्तव्यः स्यात् । शिशत्सति मुमूर्षति ।

कथं पुनः 'पूर्ववत्सन' इत्यनेन शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदस्य प्रतिषेधः शक्यो विज्ञातुम् ? वतिनिर्देशोऽयम्, कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा—'उशीनरवन्मद्रेषु यवाः' । सन्ति, न सन्तीति । 'मातृवदस्याः कलाः' । सन्ति, न सन्तीति । एवमिहाऽपि पूर्ववद्भवति, न भवतीति । 'न भवती'त्येवं वाक्यशेषं समर्थयिष्यामहे । यथा पूर्वयोर्योगयोः× सन्नन्ताभ्यामात्मनेपदं न भवति, एवमिहापि शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं न भवतीति ।

यदि तर्हि शदिम्रियत्यर्थोऽयमारम्भो, विधिर्न प्रकल्पते—आसिसिषते शिशयिषते । अथ विध्यर्थः, शदिम्रियतिभ्यां सन्नन्ताभ्यात्मनेपदं प्राप्नोति ।

यथेच्छसि तथास्तु । अस्तु तावत्प्रतिषेधार्थः । ननु चोक्तं 'विधिर्न प्रकल्पत' इति । विधिश्च प्रक्लृप्तः । कथम् ? एतदेव ज्ञापयति—'सन्नन्तादात्मनेपदं भवती'ति, यदयं शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदस्य प्रतिषेधं शास्ति ।

अथवा पुनरस्तु विध्यर्थः । ननु चोक्तं 'शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं प्राप्नोती'ति । नैष दोषः । प्रकृतं 'सनो ने'त्यनुवर्तिष्यते । क

प्र०—भयपक्षसंभवात्प्रश्नः । यथा पूर्वयोरिति । 'नानोर्ज्ञः' 'प्रत्याङ्भ्यां श्रुव' इत्येतयोः । इह च शदिम्रियती अनुवर्तेते इति भावः । यथेच्छसीति । निषेधपक्षेपि निषेधादेव सन्नन्तात् पूर्ववद्विधिरनुमीयते । विधिपक्षे शदिम्रियत्योः सनो नेत्यनुवृत्त्या न भवि-

उ०—भावः । सूत्रस्यावश्यारभ्यत्वात्प्रयोजनप्रश्नोऽनुपपन्नोऽत आह—विधीति । अभिधेयप्रश्नोऽयमिति भावः । भाष्ये—इतरथा हीत्यस्य व्याख्या—अनुच्यमाने इति । शदिम्रियतिपरतयाऽव्याख्यानेऽन्यथा व्याख्यान इति भावः । विधायकतया व्याख्यातेनाऽनेनैव प्राप्तस्य प्रतिषेधो वाच्य इति तात्पर्यम् । ननु पूर्ववदित्युक्त्या 'नानोर्ज्ञः' 'प्रत्याङ्भ्या'मित्येतौ कथं प्रतिपत्तुं शक्याविस्यत्राह—इह चेति । एवं च शदिम्रियत्यपेक्षया पूर्वस्य परिग्रहान्न दोष इति भावः । पूर्ववद्विधिरिति । 'पूर्वव'दिति तु ज्ञापकसिद्धस्याऽसार्वत्रिकत्वाद्दृष्टानुरोधाद्वा लब्धम् ।

× नानोर्ज्ञः; प्रत्याङ्भ्यां श्रुवः १. ३. ५८; ५९. १—'सनन्ता' पा० ।

प्रकृतम् ? 'ज्ञाश्रुस्मृदृशां सनः' [ १. ३. ५७ ]। 'नानोर्ज्ञः' [ ५८ ]। सकर्मकात्सनो न [ 'र्वति ]। 'प्रत्याङ्भ्यां श्रुवः' [५९] सनं न। 'शदेः शितः' [ ६० ] सनो न। 'म्रियतेर्लुङ्लिङश्च' [ ६१ ] सनो नेति। इहेदानीं 'पूर्ववत्सनः' इति, 'सन' इत्यनुवर्तते नेति निवृत्तम्। एवं च कृत्वा सोप्यदोषो भवति, यदुक्तं—'निमित्तमविशेषितं भवती'ति।

नैव वा पुनरत्र शदिम्रियतिभ्यां सन्नन्ताभ्यामात्मनेपदं प्राप्नोति। किं कारणम् ? 'शदेः शित' इत्युच्यते न च शदिरेवात्मनेपदस्य निमित्तम्। किं तर्हि ? शिदपि निमित्तम्। अथापि शदिरेव, शित्परस्तु निमित्तम्। न चायं सन्परः शित्परो भवति। यत्र तर्हि शिन्नाश्रीयते 'म्रियतेर्लुङ्लिङोश्चे'ति ? अत्रापि न म्रियतिरेवात्मनेपदस्य निमित्तम्। किं तर्हि ? लुङ्लिङावपि निमित्तम्। अथापि म्रियतिरेव, लुङ्लिङ्परस्तु निमित्तम्। 'न चायं सन्परो लुङ्लिङ्परो भवति।

किं पुनः पूर्वस्य यदात्मनेपददर्शनं तत्सन्नन्तस्यप्यातिदिश्यते ? एवं भवितुमर्हति।

## पूर्वस्यात्मनेपददर्शनात्सन्नन्तादात्मनेपदभाव इति चेद्गुपादिष्वप्रसिद्धिः ॥ ३ ॥

पूर्वस्यात्मनेपददर्शनात्सन्नन्तादात्मनेपदं भवतीति चेद् गुपादिष्वप्रसिद्धिः।

---

प्र०—ष्यति। एवं च कृत्वेति। द्वितीयस्य सन्ग्रहणस्येहाऽनुवृत्त्येति भावः। न च शदिरेवेति। सामग्र्याः कारणत्वं, न केवलस्य शदेः, सा चेह सामग्री नास्ति, सनः पूर्वस्य शदेः शितोऽभावात्। अथापीति। शिता विशेष्यमाणत्वाच्छदेरेव प्राधान्यात्। यत्र तर्हीति। म्रियतेर्ङित्त्वात् 'पूर्ववत्सन' इति सन्नन्तात्प्राप्नोत्येवेति भावः। अत्रापीति। 'म्रियतेर्लुङ्लिङोश्चे'ति नियमार्थमारब्धमिति भावः। किं पुनरिति। किमयं कार्याति-

---

उ०-द्वितीयस्येति। एवं च सनपेक्षेपि पूर्वत्वे विज्ञायमाने न कश्चिद्दोष इति स एव सिद्धान्तो विधिपक्षश्चेति भावः। सामग्र्या इति। शदेः शितश्च पृथङ्निमित्तत्वमिति भ्रमो न कार्यं इति भावः। शदेः शितोऽभावादिति। शदिप्रकृतिकशितोऽभावादित्यर्थः। पूर्वस्मान्नेदमाह—शितेति। म्रियतिमात्रस्यात्मनेपदनिमित्तत्वाऽभावादाह—म्रियतेरिति। प्राप्नोतीति। 'लुङ्लिङो'रिति शेषः। नियमार्थमिति। ङित्त्वादेव सिद्ध इति भावः। भाष्ये—लुङ्लिङ्पर

---

१—क्वचिन्न। २—'सनन्त' पा०।

गुपादीनां न प्राप्नोति जुगुप्सते मीमांसत इति[†] । न ह्येतेभ्यः प्राक्सन आत्मने-
पदं, नापि परस्मैपदं पश्यामः ।

**सिद्धं तु पूर्वस्य लिङ्गातिदेशात् ॥ ४ ॥**

सिद्धमेतत् । कथम् ? पूर्वस्य यदात्मनेपदलिङ्गं तत्सन्नन्तस्याप्यतिदिश्यते ।

**कृञादिषु तु लिङ्गप्रतिषेधः ॥ ५ ॥**

कृञादिषु तु लिङ्गस्य प्रतिषेधो वक्तव्यः । अनुचिकीर्षति पराचिकीर्षतीति[‡] ।
अस्तु तर्हि—'प्राक्सनो येभ्य आत्मनेपदं दृष्टं तेभ्यः सन्नन्तेभ्योऽपि
भवतीति । ननु चोक्तं 'पूर्वस्यात्मनेपददर्शनात[१]न्नन्तादात्मनेपदभाव इति
चेद् गुपादिष्वप्रसिद्धि'रिति । नैष दोषः । अनुबन्धकरणसामर्थ्याद्भविष्यति ।
अथवाऽवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । तद्यथा—गोः
सक्थनि कर्णे वा कृतं लिङ्गं समुदायस्य विशेषकं भवति ।
यद्यवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति—जुगुप्सयति मीमांस-
यतीत्यत्रापि प्राप्नोति । नैष दोषः । अवयवे कृतं लिङ्गं कस्य समुदायस्य
विशेषकं भवति, यं समुदायं योऽवयवो न व्यभिचरति । सनं च न व्यभि-
चरति, णिचं पुनर्व्यभिचरति । तद्यथा—गोः सक्थनि कर्णे वा कृतं
लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य ।

प्र०—देशो—'यथापूर्वस्मादात्मनेपदं विधीयते तथा सन्नन्तादपी'ति, आहोस्विन्निमि-
त्तातिदेशः—'पूर्वस्य यन्निमित्तं ङित्त्वादि तत्सन्नन्तस्यातिदिश्यते' । निमित्ते चातिदिष्टे
तत्प्रयुक्तत्वादेव कार्यं भवतीति प्रश्नः । नह्येतेभ्य इति । नित्यसन्विषयत्वात् ।
कृञादिष्विति । 'अनुपराभ्यां कृञ' इत्यनेन परस्मैपदमेव विधीयते, न तु ञित्त्वं
निवर्त्यते । पूर्वकार्ये त्वतिदिश्यमाने अत्र दोषाऽभावः । परस्मैपदेनात्मनेपदस्य बाधि-
तत्वात्, पूर्वस्याऽऽत्मनेपदकार्यादर्शनात्सन्नन्तस्याऽप्रसङ्गात् । अनुबन्धेति । तत्सा-
मर्थ्यात्सन्न व्यवधायकः । अथवेति । समुदाये लिङ्गासङ्गस्य उपायोऽवयवे

उ०—इति । म्रियतिपरलुङ्लिङ्रूपस्येत्यर्थे तथा फलतीति भावः । एवं च शांदम्रियतिभ्यां न
भवतीत्यर्थस्य वक्तुमयोग्यतया गुरुभूताऽभावे तात्पर्यं, तन्मूलविधिकल्पनं चेति गौरवभिया
विधित्वमेव युक्तमिति तात्पर्यम् । प्राधान्येन कार्यातिदेशस्यैवौचित्यात्प्रश्नानुपपत्तिरत आह—
किमयमिति । कार्यातिदेशेऽव्याप्तेर्निमित्तातिदेशोऽपि शङ्कित इति भावः । भाष्ये—लिङ्गाति-
देशादिति । पूर्वस्य यल्लिङ्गं ङित्त्वादि तदतिदिश्यत इत्यर्थः । ननु कर्त्रभिप्राये क्रियाफले

१—'सनन्त' पा० । † गुप्तिज्किद्भ्यः सन्; मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ३. १. ५; ६.
‡ स्वरितञितः कर्त्रभिप्राये क्रियाफले; अनुपराभ्यां कृञः १. ३. ७२; ७९.

### प्रत्ययग्रहणं णियगर्थम् ॥ ६ ॥

प्रत्यय[1]ग्रहणं कर्तव्यम् । पूर्ववत्प्रत्ययादिति वक्तव्यम् । किं प्रयोजनम् ? 'णियगर्थम्' । णियगन्तादपि यथा स्यादिति । आकुस्मयते विकुस्मयते हृणीयते महीयत इति× ॥ तत्र को दोषः ?

### तत्र हेतुमण्णिचः प्रतिषेधः ॥ ७ ॥

तत्र हेतुमण्णिचः प्रतिषेधो वक्तव्यः+। आसयति शाययतीति। सूत्रं च भिद्यते।

यथान्यासमेवास्तु । कथमाकुस्मयते विकुस्मयते हृणीयते महीयत इति ? अनुबन्धकरणसामर्थ्याद्भविष्यति[2] ।

अथवाऽवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । तद्यथा—गोः सक्थनि कर्णे वा कृतं लिङ्गं समुदायस्य विशेषकं भवति ।

यद्यावयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति, हृणीययति महीययतीत्यत्रापि प्राप्नोति । अवयवे कृतं लिङ्गं कस्य समुदायस्य विशेषिकं भवति, यं समुदायं योऽवयवो न व्यभिचरति । यकं च न व्यभिचरति, णिचं तु व्यभिचरति । तद्यथा—'गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य ॥६२॥

प्र०-लिङ्गाऽऽसङ्गः । प्रत्ययग्रहणमिति । यद्येवमतिप्रसङ्गः—पणायति पनायतीति । तत्र केचिदाहुः—'पूर्ववण्णियक्सन' इति प्रत्ययविशेषा एव निर्देष्टव्याः । अन्ये त्वाहुः—एवं पाठे वार्तिकं भाष्यं च न व्याख्यातं भवतीति 'हेतुमण्णिचः प्रतिषेधः' इत्यतिप्रसङ्गविषयोपलक्षणार्थं हेतुमण्णिज्ग्रहणम् ॥६२॥

उ०-सर्वथा तङाननिवृत्तयेऽनुपराभ्यामित्यनेन जित्त्वस्यैव बाधोऽत आह—अनुपराभ्यामिति । परस्मैपदनियमेनैवेष्टसिद्धेर्निमित्तनिवर्तनमयुक्तमिति भावः । तत्सामर्थ्यादिति । नित्यसम्भूतत्वान्न किंचित्प्रयोजनसंभव इति भावः । परिभाषाया अबाधेनोपपत्तौ बाधो न न्याय्योऽतः पक्षान्तरमित्याह—समुदायेति । सामर्थ्यात्परिभाषाबाधो वा, सामर्थ्यात्समुदायोपकारकत्वं वेति पक्षयोर्भेदः । वार्तिकं भाष्यं चेति । 'प्रत्ययग्रहण'मिति वार्तिकं, 'पूर्ववत्प्रत्ययादिति वक्तव्य'मिति भाष्यं चाऽसङ्गतं स्यादिति भावः । 'आकुस्मादात्मनेपदिन' इति गणसूत्रात् कुस्म आत्मनेपदी । हृणीङ्महीङौ कण्ड्वादी ङितौ पठितौ । भाष्ये—अनुबन्धकरणसामर्थ्यादिति । आकुस्मादात्मनेपदित्वोक्तिसामर्थ्यादित्यपि बोध्यम् । यद्वा तस्याप्यात्मनेपदलिङ्गवन्तो बोध्या इत्यर्थ इति भावः । इतरस्स्पष्टम् ॥६२॥

---

१–'प्रत्ययस्य' । × सत्यापपाश····चुरादिभ्यो णिच्; कण्ड्वादिभ्यो यक् ३. १. २५; २७.
+हेतुमति च ३. १. २६. २–'अनुबन्धकरणसामर्थ्या'दिति वार्तिकं क्वचिदेव दृश्यते ।

## आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ॥ १ । ३ । ६३ ॥

कृञ्ग्रहणं किमर्थम्? इह मा भूत्—इहामास इहामासतुः ईहामासुः। कथं चात्रास्तेरनुप्रयोगो भवति? प्रत्याहारग्रहणं तत्र* विज्ञायते। कथं पुनर्ज्ञायते तत्र प्रत्याहारग्रहणमिति? इह कृञ्ग्रहणात्। इह कस्मात्प्रत्याहार-ग्रहणं न भवति? इहैव कृञ्ग्रहणात्।

अथेह कस्मान्न भवति—उदुम्भाञ्चकार उदुब्जांचकार? ननु चा'ऽऽम्प्रत्य-यव'दित्युच्यते, न चाऽत्राऽऽम्प्रत्ययादात्मनेपदं पश्यामः। न ब्रूमोऽनेनेति। किं तर्हि? 'स्वरितञितः कर्त्रभिप्राये क्रियाफले† आत्मनेपदं भवती'ति।

नैष दोषः। इदं नियमार्थं भविष्यति—'आम्प्रत्ययवदेवे'ति। यदि नियमार्थम्, विधिर्न प्रकल्पते—ईहांचक्रे ऊहांचक्र इति। विधिश्च प्रक्लृप्तः। कथम्? पूर्ववदिति वर्तते‡। आम्प्रत्ययवत्पूर्ववच्चेति ॥६३॥

प्र०— आम्प्रत्यय। कृञ्ग्रहणमिति। कृञ एवाऽनुप्रयोगो विहितो नान्यस्येति भावः। अथेह कस्मादिति। 'स्वरितञित' इत्यनेनेति भावः। ननु संविधानेऽनेनात्मनेपदं विधीयते। यथा च यात्यादयः संविधाने न वर्तन्ते, तथोब्जादयोऽपि। तदर्थानुपाती च करोतिरप्यत्र विषये संविधाने न वर्तते इत्यात्मनेपदस्याऽप्रसङ्गः। नैष दोषः। संविधान एवाऽत्र विषये यदोब्जादयो वर्तन्ते शब्दशक्तिस्वभाव्यात्तदर्थाभिव्यक्तये तदा करोतिः प्रयुज्यमानः संविधानविषय इति मत्वा चोद्यमुपन्यस्तम्। परिहृतं च पूर्ववद्ग्रहणानु-वृत्त्या वाक्यभेदेन। तत्रैकेन वाक्येन विधिः क्रियते, द्वितीयेन नियमः ॥६३॥

उ०— आम्प्रत्ययवत्। ननु तदभावेऽस्तिभूभ्यामपि स्यादत आह—कृञ एवेति। स्वरि-तेति। कृञो ञित्वादिति भावः। भाष्ये—आम्प्रत्ययादिति। बहुव्रीहिणाऽऽम्प्रत्ययप्रकृते-रित्यर्थः। संविधानं—प्रयोजकव्यापारः। क्रियाफलस्य कर्तृगामित्वं वा। यथेति। वक्ष्यमाण-'स्वरितञित' इत्येतत्प्रत्याख्यानमभिप्रेत्येदम्। उपपादयिष्यते चेदं—'स्वरितञित' इति सूत्रे। न वर्त्तते इति। अनभिधानादिति भावः। सूत्रारम्भरीत्या समाधत्ते—नैष दोष इति। 'तदा तदर्थाभिव्यक्तय' इत्यन्वयः। अनुवृत्तावपि कथमेकेन वाक्येनाऽर्थद्वयावगतिरत आह—वाक्यभेदेनेति। आद्यस्य विधित्वं, द्वितीयस्य 'पूर्ववदेवात्मनेपदं न त्वन्यथे'ति नियमार्थत्व-मित्यर्थः। इहांचक्रे इत्यत्राऽकर्तृगेपि क्रियाफले आत्मनेपदसिद्धिर्विधेः फलं बोध्यम् ॥६३॥

* कृञ् चानुप्रयुज्यते लिटि ३. १. ४०. † १. ३. ७२. ‡ पूर्ववत् सनः १. ३. ६२.

प्रत्याहार कार्यग्रहण

## प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ १ । ३ । ६४ ॥

स्वराद्युपसृष्टादिति वक्तव्यम् । उद्युङ्क्ते अनुयुङ्क्ते ।

अपर आह—स्वराद्यन्तोपसृष्टादिति वक्तव्यम् । प्रयुङ्क्ते नियुङ्क्ते विनियुङ्क्ते ॥६४॥

## समः क्ष्णुवः ॥ १ । ३ । ६५ ॥

किमर्थं विदेशस्थस्य ग्रहणं क्रियते, न समो गमादिष्वेवोच्येत[१]× ।

## समः क्ष्णुवः सकर्मकार्थम् ॥ १ ॥

सकर्मकार्थोऽयमारम्भः । अकर्मकादिति हि तत्रानुवर्तते+ ॥ ६५ ॥

## भुजोऽनवने ॥ १ । ३ । ६६ ॥

अनवनकौटिल्ययोरिति वक्तव्यम् । इहापि यथा स्यात्—प्रभुजति वाससी, निभुजति जानुशिरसी इति ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । यस्य भुजेरवनमनवनं चाऽर्थस्तस्य ग्रहणम् । न चाऽस्य भुजेरवनमनवनं चाऽर्थः ॥६६॥

---

प्र०- प्रोपाभ्याम् । स्वराद्यन्तोपसृष्टादिति । सन्निस्दुरित्येतान्निरस्य सर्वे उपसर्गाः संगृहीताः ॥६४॥

भुजोऽनवने । यस्य भुजेरिति । संसर्गवद्विप्रयोगोऽपि हि विशेषस्मृतिहेतुः । यथा दोग्ध्रीपर्यायो धेनुशब्द उपादीयमानः संसर्गिभिर्विशेषेऽवस्थाप्यते—'सवत्सा धेनुरानीयतां सकिशोरा सकरभा सबर्करे'ति । एवमवत्सा अकिशोरा अकरभा अबर्करेति विशिष्टैव धेनुः प्रतीयते । यस्या येन दृष्टः संसर्गः सैव तद्रहिताऽऽनीयते ॥६६॥

---

उ०- प्रोपाभ्याम् । 'स्वराद्यन्तोपसृष्टा'दित्युक्त्वा प्रविनय उदाहृतास्तत्कथमत आह—सन्निस्दुरिति । स्वरादेः स्वरान्ताच्चेत्यर्थ इति भावः ॥६४॥

भुजो । भाष्ये—निभुजति जानुशिरसी इति । 'प्रतिमाया' इति शेषः । अतः प्राण्यङ्गत्वाऽभावान्नैकवत्त्वम् । अवननिषेधेनाऽभ्यवहारवृत्तेरेवेति कथं लभ्यमत आह—संसर्गवदिति । सबर्करेति । धेनुशब्दस्य धानकर्मत्वमेव प्रवृत्तिनिमित्तं न तु गोत्वसमानाधिकरणमेव तदिति भावः ॥६६॥

---

१—'गमादिष्वित्येवोच्येत' पा० । × समो गम्यृच्छिभ्याम् १. ३. २९. इत्यत्र 'समो गम्यृच्छिक्ष्णुभ्यः' इति सूत्रं कार्यमिति भावः । + समो गम्यृच्छिभ्याम् । १. ३. २९. इत्यत्र ।

## णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने ॥ १ । ३ । ६७ ॥

### णेरात्मनेपदविधानेऽण्यन्तस्य कर्मणस्तत्रोपलब्धिः ॥ १ ॥

णेरात्मनेपदविधानेऽण्यन्तस्य यत्कर्म यदा ण्यन्ते तदेव कर्म भवति तदात्मनेपदं भवतीति वक्तव्यम् ।

प्र०— णेरणौ । एकस्मिन्वाक्ये कर्मान्तरनिवृत्तिरलभ्येति 'णे'रिति वार्तिकारम्भः । एकवाक्यतायां ह्ययमर्थो—'ण्यन्तादात्मनेपदं भवति, अण्यन्तावस्थायां यत्कर्म ण्यन्तावस्थायां यदि स कर्ता भवत्याध्यानादन्यत्रे'ति । भवति च कर्मान्तरसद्भावेऽप्यणौ कर्म णौ कर्ता । भाष्यकारस्तु वाक्यभेदाश्रयेणैतमर्थं साधयति—'णेरात्मनेपदं भवती'त्येकं वाक्यम् । ततो 'ऽणौ यत्कर्म णौ चे'दिति द्वितीयम् । अत्र वाक्ये यत्तदोर्नित्यसंबन्धाद्यच्छब्देन तच्छब्द आक्षिप्यते । धर्मान्तरस्य चाऽनिर्देशात्कर्मत्वमेव संनिधानात्प्रतिनिर्दिश्यते । 'अणौ यत्कर्म णौ चेत्तत्कर्मे'ति प्रतिनिर्देशेन च कर्मान्तरव्यावृत्तिः क्रियते, न त्वणौ कर्मणो णौ कर्मत्वसद्भावः प्रतिपाद्यते, 'स कर्ते'ति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात् । युगपदेकक्रियापेक्षया कर्मत्वकर्तृत्वविरोधादेकस्य । यथेष्टं वाक्यशेषपरिकल्पनादणौ यत्कर्म णौ चेत्तदेव कर्मत्येवकाराध्याहा-

उ०— णेरणौ । अणौ कर्मणः कर्तृत्वस्य सूत्रकृतोक्तत्वात्कर्मान्तरनिवृत्तिपरत्वे वार्तिकतात्पर्यमाह—एकस्मिन्निति । अत एव वार्तिकव्याख्यानभाष्ये 'तदेवे'ति प्रयुक्तम् । यत्त्वेतद्वार्तिकस्थकर्मपदानि क्रियापरत्वेन व्याचक्षते, तन्न, 'कर्त्तरि कर्मव्यतिहारे' इति सूत्रे क्रियाग्रहणं कर्त्तव्य'मिति सूत्रकारं शिक्षयतो वार्तिककारस्य 'कर्मशब्दः क्रियापरः' इत्यर्थाऽज्ञानेन तद्वाक्यस्थकर्मपदानां क्रियापरत्वेन व्याख्यानस्याऽत्यन्तमनौचित्यात् । एवं च सूत्राक्षरैस्तदर्थसाधनपरभाष्यस्थकर्मपदानामपि तथा व्याख्यानमयुक्तमेवेति ध्येयम् । भाष्ये—आरोहन्ति हस्तिनमिति । 'आरोहन्ति हस्तिनं हस्तिपकाः' 'आरोहयमाणो हस्ती'त्यत्रेव 'स्थलमारोहयति मनुष्या'नित्यत्रापि स्यादित्यर्थः । 'मनुष्या हस्तिनमारोहन्ती'त्यण्यन्ताऽवस्था । स्थलमिति चाऽतिरिक्तं कर्मेति भावः । सौकर्यातिशयप्रतिपादनाय प्रेरणावृद्धिवत्तत्प्रतिपादनायैव स्थलनिष्ठन्यग्भवनरूपफलांशवृद्ध्या द्विकर्मकत्वकरणम् । एवं च न्यग्भवनारोहणोभयानुकूलव्यापारो धात्वर्थः । स्थलं न्यग्भावयन्मनुष्यानारोहयतीत्यर्थः । 'स्थल'शब्देन च गजपृष्ठस्थं काष्ठमयमुपवेशनस्थानमुच्यते । 'हस्ती'ति मध्यमणिन्यायेनोभयान्वयि । प्रतिनिर्दिश्यत इति । विधीयते इत्यर्थः । कर्मशब्दश्चाऽत्रोत्तरवाक्यत्वत्कारकपर एवेति भावः । एवमपि कर्मान्तरनिवृत्तिः कथमित्यत आह—स कर्त्तेतीति । कर्तृत्वप्रतिपादनेपि कर्मत्वं किं न स्यादत आह—युगपदिति । न चैकस्यैकदैव व्यापारव्यधिकरणफलाश्रयत्वं, व्यापाराश्रयत्वं च सम्भवतीति भावः । यथेष्टमिति । शास्त्रस्य बहुलक्ष्यसंस्कारकत्वानुरोधेनेत्यर्थः । एतेनाऽणौ द्विकर्मका एवाऽस्योदाहरणमित्यपास्तम् । अण्यन्तावस्थास्थकर्मत्वावच्छेदेन कर्तृत्वप्रतिपादनात् । इदमेव ध्वनयितुं भाष्ये दृष्टान्तव्याजेन सूत्रोदाहरणं दर्शितम् । एवं चाऽकर्मकाणामेतत्सूत्रोदाहरणत्वं फलितं,

## इतरथा हि सर्वप्रसङ्गः ॥ २ ॥

इतरथा हि सर्वत्र प्रसङ्गः स्यात् । इहापि प्रसज्येत—आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान् ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । कस्मान्न भवति—आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानिति ? एवं वक्ष्यामि—'णेः' आत्मनेपदं भवति । ततः 'अणौ यत्कर्म णौ चेत्' । अण्यन्ते यत्कर्म णौ चेदणौ यदि तदेव कर्म भवति । ततः 'स कर्ता' । कर्ता चेत्स भवति णाविति ॥ यद्येवं कर्मकर्ताऽयं भवति तत्र कर्मकर्तृत्वात्सिद्धम्* ।

प्र०–णत्कर्मान्तरनिवृत्तिलाभः । ततः 'स कर्ते'ति तृतीयं वाक्यम्—अणौ कर्मणो णौ कर्तृत्वप्रतिपादनपरम् । एवमेषां वाक्यानामेकवाक्यत्वे महावाक्यं लक्ष्यसंस्कारकं संपद्यते । यद्येवमिति । यथा 'लुनाति केदारं देवदत्तः' 'लूयते केदारः स्वयमेवे'ति केदारः कर्मकर्ता, तथा ण्यन्तेऽपि भवति—'लावयते केदारः स्वयमेवे'ति । कथमिति चेत् ? उच्यते—लुनातिस्तावद् द्विधाभवनोपसर्जने द्विधाभावने वर्तते । 'लुनाति केदारं देवदत्तः' । द्विधाभवन्तं द्विधा भावयतीत्यर्थः । यदा तु केदारस्य सौकर्यातिशयविवक्षायां देवदत्तस्य व्यापारो न विवक्ष्यते तदा द्विधाभवनमात्रे लुनातिर्वर्तते अनेकार्थत्वाद्धातूनाम् । भिन्ना एव वा धातवो भिन्नार्थाः, सारूप्यात्तु तत्त्वाध्यवसायः । तत्र द्विधाभवने केदारस्य कर्तुः 'कर्मवत्कर्मणा तुल्यक्रिय' इति कर्मकार्याण्यतिदिश्यन्ते ।

उ०–तद्ध्वनयन्नाह भाष्ये—यद्येवमिति । कर्मकर्तृत्वात्सिद्धमिति च । नन्विदमनुपपन्नं, समानधातौ कर्मस्थक्रियया तुल्यक्रियाकर्तुः कर्मवद्भावो, न चाऽत्र तथा । तथाहि 'लावयत' इत्यत्र किं लुनातिकर्मणा समानक्रियत्वम्, उत लावयतिकर्मणा ? नाद्यः । ण्यन्ताऽण्यन्तत्वेन धातुभेदात् । नाऽन्त्यः । लुनातेर्णिचि 'लावयति केदारं देवदत्तेन यज्ञदत्त' इत्यत्र केदारस्य प्रकृत्यंशकर्मत्वेन तथैव धातुभेदात् । लवनकर्तुस्तु गत्यादिनियमात्कर्मत्वमेव नेत्यत आह—यथा लुनातीति । दृष्टान्तमुपपादयति—लुनातिस्तावदिति । सौकर्याऽतिशयोऽनायासेन द्विधाभवनाश्रयत्वम् । तच्च कर्तृव्यापारस्येषत्त्वेन, कर्तृव्यापाराऽविवक्षायामप्यनुवर्तकन्येतिवत्तत्र पर्यवसानम् । ईषत्त्वादेव तस्य स्वातन्त्र्येण धात्ववाच्यतेति द्विधाभवनमात्रवृत्तित्वं लुनातेर्बोध्यम् । क्वचित्फलव्यापारयोः शक्तिः, क्वचित्फले इति कथमत आह—अनेकार्थत्वादिति । तदुक्तम्—

> 'एकदेशे समूहे च व्यापाराणां पचादयः ।
> स्वभावतः प्रवर्तन्ते तुल्यरूपसमन्विताः ॥' इति ।

१–स्थल 'हौदा' इति प्रसिद्धम् । * कर्मवत्कर्मणा तुल्यक्रियः ३. १. ८७, भावकर्मणोः १. ३. १३.

## अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः ॥ ३ ॥

अङ्गसंज्ञया भपदसंज्ञयोः× समावेशो न प्राप्नोति । सार्पिष्कः बार्हिष्कः याजुष्कः धानुष्कः+ । बाभ्रव्यः माण्डव्य* इति । अनवकाशे भपदसंज्ञे अङ्गसंज्ञां बाधेयाताम् । 'परवचने हि नियमानुपपत्तेरुभयसंज्ञाऽभावः' । यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वं तस्य भपदसंज्ञे, पराऽङ्गसंज्ञा । कथम् ? एवं स वक्ष्यति—'यस्मात्प्रत्ययविधिस्तदादि सुप्तिङन्तं पदम्' । 'नः क्ये' । 'सिति च' । 'स्वादिष्वसर्वनामस्थाने' । 'यचि भम्' । तस्यान्ते 'प्रत्ययेऽङ्ग'मिति । तत्रारम्भसामर्थ्याच्च भपदसंज्ञे, परङ्कार्यत्वाच्चाऽङ्गसंज्ञा भविष्यति ।

प्र०–ग्रहणं पुनर्न कर्तव्यं भवतीत्यर्थः । सार्पिष्क इति । असत्यामङ्गसंज्ञायामङ्गस्योच्यमाना वृद्धिर्न स्यात् । अङ्गसंज्ञा च 'कर्तव्य'मित्यादिषु सावकाशा यत्र पूर्वस्य भपदसंज्ञे न स्तः । ननु 'तद्धितेष्वचामादेः' 'किति चे'त्यङ्गस्य वृद्धिविधानसामर्थ्यात्समावेशो भविष्यति । नैतदस्ति । वचनादनङ्गस्याऽपि वृद्धिः स्यात् । ततश्च 'देवदत्तो गार्ग्य' इत्यत्राऽपि यञि परतो देवदत्तादेः समुदायस्यादिवृद्धिः प्रसज्येत । यथा डित्यभस्याप्यनुबन्धकरणसामर्थ्यात्कुमुद्वानित्यादौ टिलोपः । परं कार्यत्वमिति । परं कार्यमित्येतदेकदेशस्यानुकरणं 'परंकार्य'शब्दः, तस्य चाऽनुकार्येणार्थेनाऽर्थवत्त्वात्प्राति-

उ०–निष्टे दुर्ज्ञेये इति भावः । देवदत्तो गार्ग्य इति । वाक्यसंस्कारपक्षे इदम् । प्रत्ययग्रहणपरिभाषया वृद्धिवारणं शक्यमिति चिन्त्यम् । कुमुद्वानिति । ड्मतुप् । सिद्धान्तस्त्वित एव ज्ञापकात्समावेश इति ।

परङ्कार्यत्वमित्यत्र सुबन्तसमुदायात्कथं तद्धितः, तदुत्पत्तावपि कथं पूर्वपदे विभक्तिश्रवणमत आह—परंकार्येति । शब्दस्य भावश्चाऽर्थः । स चैकदेशद्वारैतत्सूत्रार्थरूपः । अनुवादेऽर्थविशेषणकशब्दस्वरूपप्रतीतेरिति भावः । तत इति । अनुवर्त्तमानस्याऽपि विधिकोटौ निवेशादिति भावः । अङ्गं सदिति । 'स्वादिषु यदङ्गं तत्पद'मिति व्याख्यानेनाऽनुवाद-

---

× यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्; सुप्तिङन्तं पदम्; यचि भम् १. ४. १३; १४; १८.

+ तदस्य पण्यम्; ( तदर्हति ); इसुसुक्तान्तात् कः; इणः षः; किति च ४. ४. ५१; (५. १. ६३); ७ ३. ५१; ८. ३. ३९; ७. २. ११८;

* मधुबभ्र्वोर्ब्राह्मणकौशिकयोः; ( गर्गादिभ्यो यञ् ) ४. १. १०६; ( १०५ ); ओर्गुणः ६. ४. ४६ ; तद्धितेष्वचामादेः ७. २. ११७.

ननु च यस्याप्येकसंज्ञाधिकारस्तस्यऽप्यङ्गसंज्ञापूर्विके भपदसंज्ञे । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ।

## कर्मधारयत्वे तत्पुरुषग्रहणम् ॥ ४ ॥

कर्मधारयत्वे तत्पुरुषग्रहणं कर्तव्यं—'तत्पुरुषः समानाधिकरणः कर्मधारयः' [ १. २. ४२ ] इति । एकसंज्ञाधिकार इति चोदितम् । अक्रियमाणे [ तत्पुरुषग्रहणे ] ह्यनवकाशा कर्मधारयसञ्ज्ञा तत्पुरुषसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ।

प्र०—पदिकत्वात्तद्धितोत्पत्तिः । अनुवृत्तिः क्रियते इति । ततस्तत्पूर्वकत्वं लभ्यते । अङ्गं सङ्गपदसंज्ञमित्यर्थः । अत्रोत्तरमाह—पर्यायः प्रसज्येतेति । 'एका संज्ञे'ति वचनादङ्गसंज्ञाया नित्ये बाधे प्राप्ते पर्यायार्थानुवृत्तिः स्यात् । एवं नियमो न बाधितो भवति, अनुवृत्तिश्च सफला भवति । ननु 'न पदान्ते'त्यत्र सूत्रे भाष्यकारेणोक्तं 'वेतस्वा'-नित्यस्य सिद्धये 'यथैवान्यानि पदकार्याण्युपप्लवन्ते रुत्वं जश्त्वं च, एवमिदमप्युपप्लोष्यते भसंज्ञा नामे'ति । तत्र च पदं सङ्गसंज्ञं भवतीति विज्ञायते । भसंज्ञायां पदसंज्ञाऽनुवृत्तावपि भसंज्ञया पदसंज्ञाया बाधः पदकार्यनिवृत्तयेऽभ्युपगन्तव्यः । इह त्वङ्गसंज्ञाऽनुवृत्तौ पर्याय उक्त इति विरोधः । नैष दोषः । अङ्गसंज्ञानुऽवृत्तेः प्रयोजनान्तराऽभावात्पर्याय इहोक्तः । पदसंज्ञानुऽवृत्तेस्तु भसंज्ञायां प्रयोजनं—पदकार्यत्वं भसंज्ञाया यथा स्यादिति । ततश्च 'न पदान्ते'ति स्थानिवत्त्वनिषेधादकारलोपस्य 'तसौ मत्वर्थे'इति भसंज्ञायां सत्यां पदत्वप्रयुक्तरुत्वाऽभावे वेतस्वानिति सिद्ध्यति । कथमिति चेत् । उच्यते—भसंज्ञाविधौ पदमिति वर्त्तते । तत्राऽनुवृत्तिसामर्थ्यात्पूर्वं पदसंज्ञा प्रवर्त्तते । तेन पदकार्ये भसंज्ञा भवति, नान्यथा । एतावदेव चाऽनुवृत्तेः प्रयोजनम् । ततः प्रवृत्तया भसंज्ञया पदसंज्ञा बाध्यते, एकासंज्ञेति नियमात् । कर्मधारयत्व इति ।

उ०—सामर्थ्यादङ्गपदत्वयोः समावेश इति भावः । नन्वनुवृत्तिसामर्थ्यात्समावेशोऽत आह—एका संज्ञेति । तदुक्तं भाष्ये 'एका संज्ञेतिवचनादित्यादि । बाध इति । उपसर्गाऽपवादन्यायेनेति भावः । इह त्विति । इहापि तथैव स्यादिति भावः । कथमिति चेदिति । 'पद'मित्यनुवृत्तावप्युभयोर्विधेयतया कथं भसंज्ञा पदकार्यमिति प्रश्नः । उच्यते इति । नाऽनेन पदसंज्ञा विधीयते किं त्वनूद्यते इति भावः । पदसंज्ञा प्रवर्तत इति । तद्बुद्धिः प्रवर्त्तते इत्यर्थः । अनुवादसामर्थ्यादिति भावः । इह त्वेका संज्ञेति नियमाऽबाधाय विधेयतेति विशेष इति बोध्यम् । वस्तुतस्तद्भाष्यमन्यार्थकं न त्वेवमर्थकमिति तत्रैव निरूपितम् । नन्वनया रीत्या 'परंकार्यं'मिति पाठेपि ज्ञापितसंज्ञाबाधस्याऽत्यन्ताऽबाधाय पर्याय एव स्यान्न तु समावेश इति

१—क्वचिन्न ।

यस्य पुनः परंकार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वा तस्य कर्मधारयसंज्ञा, परा तत्पुरुषसंज्ञा । कथम् ? एवं स वक्ष्यति—'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन कर्मधारय' इति* । एवं सर्वं कर्मधारयप्रकरणमनुक्रम्य तस्यान्ते 'श्रितादिभिस्तत्पुरुष' इति† । तत्रारम्भसामर्थ्याच्च कर्मधारयसंज्ञा, परंकार्यत्वाच्च तत्पुरुषसंज्ञा भविष्यति ।

ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि तत्पुरुषसंज्ञापूर्विका कर्मधारयसंज्ञा । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ।

प्र०—एकसंज्ञावादिनं प्रत्युच्यते, त्वया कर्मधारयसंज्ञायामेकसंज्ञाधिकारेऽन्यत्र वा क्रियमाणायां तत्पुरुषग्रहणं कर्तव्यम्, एकसंज्ञाधिकारे संज्ञासमावेशार्थम् । प्रदेशान्तरे तु समासान्तरस्य कर्मधारयसंज्ञानिवृत्त्यर्थम् । मया त्वस्मिन्नेव प्रकरणे कर्मधारयसंज्ञा क्रियते, समावेशश्च सिद्ध्यतीति तत्पुरुषग्रहणं न कर्तव्यं भवतीति लाघवं भवति । तस्यान्ते इति । यद्येवं समानाधिकरणस्य कथं तत्पुरुषसंज्ञा सिद्ध्यति । उच्यते—'पाठक्रमादर्थक्रमो बलीया'निति पूर्वं 'तत्पुरुष' इति कर्तव्यम् । ततो 'द्वितीयाश्रिते'ति । 'तत्पुरुष' इत्यत्र च 'पूर्वकाले'त्यादीनि सूत्राण्यनुवर्त्त्य तत्पुरुषसंज्ञा विधीयते । ननु च यदृशापीति । व्यधिकरणानां तत्पुरुषसंज्ञां विधाय समानाधिकरणस्य तत्पुरुषसंज्ञाऽनुवृत्त्या तत्पूर्विका कर्मधारयसंज्ञा विधायिष्यते इत्यर्थः । समावेशस्य च 'कारकगवी'ति

उ०—चेन्न; अनुमितप्राप्त्यपवादभूतत्वादस्याः प्राप्तेर्ज्ञापितो बाधस्तदितरपर्यंत्रसायीति समावेशसिद्धिरित्याशयात् । ननु बहुव्रीहेः संज्ञानिवृत्तये तत्र तत्पुरुषग्रहणमावश्यकमत आह—एकसंज्ञेति । अन्यत्र वेति । यथान्यासमित्यर्थः । मया त्विति । परंकार्यत्ववादिनेत्यर्थः । ननु समानाधिकरणग्रहणमपि कर्त्तव्यमिति किं तत्पुरुषपदकर्तव्यतैव विशिष्योच्यतेऽत आह भाष्ये—एकसंज्ञाधिकार इति चोदितमिति । यद्यन्यत्र सा संज्ञा, तदोभयं कार्यम्, एकसंज्ञाधिकारे तत्पुरुषप्रकरणे 'नवकेवलाः समानाधिकरणेने'त्युत्तरं करणे त्वधिकारादेव समानाधिकरण इति लभ्यते इति तत्कर्त्तव्यतैव नोदितेति भावः । अनवकाशेति । यथा बाऽनवकाशत्वाद्बहुव्रीहिसंज्ञां बाधते तथा तत्पुरुषसंज्ञामपि बाधेतेत्यर्थः ।

यद्येवमिति । कर्मधारयप्रकरणान्ते 'द्वितीया श्रिते'त्यादि पठनीयं, श्रितादिमपेक्ष्य च तत्पुरुषसंज्ञा कर्त्तव्येति भाष्यार्थं मत्वा शङ्केयम् । यदि तु 'द्वितीया श्रिते'त्यादि कृत्वा कर्म-

* पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन २. १. ४९. १—'श्रितादिस्तत्पु' ।

† द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २. १. २४.

## तत्पुरुषत्वे द्विगुचग्रहणम् ॥ ५ ॥

तत्पुरुषत्वे द्विगुचग्रहणं कर्तव्यम् । 'तत्पुरुषः' [ २. १. २२ ] 'द्विगुश्च' [ २३ ] इति चकारः कर्तव्यः । अक्रियमाणे हि चकारेऽनवकाशा द्विगुसंज्ञा तत्पुरुषसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः ।

यस्य पुनः परंकार्यत्वं नियमाऽनुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वा तस्य द्विगुसंज्ञा परा तत्पुरुषसंज्ञा । कथम् ? एवं स वक्ष्यति— 'तद्धितार्थोत्तरपदसमाहारे च [ २. १. ५१ ] संख्यापूर्वो द्विगुः [ ५२ ] इति । एवं सर्वं द्विगुप्रकरणमनुक्रम्य तस्यान्ते 'श्रितादिभिस्तत्पुरुष' इति । तत्रारम्भसामर्थ्याच्च द्विगुसंज्ञा, परंकार्यत्वाच्च तत्पुरुषसंज्ञा भविष्यति ।

ननु चयस्याप्येकसंज्ञाधिकारस्तस्यापि तत्पुरुषसंज्ञापूर्विका द्विगुसंज्ञा । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ।

प्र०-पुंवद्भावसमासान्तौ प्रयोजनम् । द्विगुचग्रहणमिति । द्विगोः सम्बन्धिनश्चशब्दस्य ग्रहणं कर्तव्यमित्यर्थः । नन्वेकसंज्ञापक्षे 'द्विगुश्चे'ति सर्वमेव सूत्रं कर्तव्यं, तत्र किं

उ०-धारयप्रकरणमनुक्रम्योपपदमतिङिति प्रकरणान्ते 'श्रितादिभिस्तत्पुरुष' इत्युच्यते तदा नेयं शङ्केति ध्येयम् । परं त्वत्र पक्षे श्रितादिभिरित्यस्याधिकस्य करणाद् गौरवं भवतीत्युपाध्यायोक्तमेव सम्यक् । नन्वेवमपि समानाधिकरणस्य तत्पुरुषत्वं न स्यात्, 'तत्पुरुष' इत्यस्योत्तरत्रैव संबन्धादत आह—तत्पुरुष इत्यत्र चेति । तथा च कर्मधारयसंज्ञया तत्पुरुषत्वस्य पर्याये सिद्धे 'परंकार्य'मिति समावेशार्थमिति भावः । अत्र पक्षे बहुव्रीहिसंज्ञाविषयेऽस्याप्रसक्तिरेवेति बोध्यम् ।

ननु द्वितीयाध्यायस्थतत्पुरुषसंज्ञायाः प्रथमे कथमनुवृत्तिरत आह—व्यधिकरणानामिति । द्वितीय एव 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन कर्मधारयः' इत्येवं कर्मधारयसंज्ञा करिष्यत इति भावः । पुंवद्भावेति । 'स्त्रियाः पुंव'दिति तु 'न कोपधायाः' इति निषिद्धमिति भावः । यथान्यासे तत्पुरुषानुवादेन कर्मधारयसंज्ञाया आकाडाराद्बहिः कृतत्वेन समावेशसिद्धिरिति तत्त्वम् ।

ननु द्विगुश्चेति सूत्रपाठाद् द्विगुचेत्यनुपपन्नमत आह—द्विगोरिति । न्यासिन्यायात् 'कडाराः कर्मधारये' इत्यमेवाऽवधिरिति तात्पर्यम् । 'आ द्वन्द्वा'दिति नोक्तम्, 'द्वन्द्वश्च प्राणी'त्यस्याऽवधित्वापत्तौ सम्बुद्ध्यामन्त्रितसंज्ञयोः समावेशाऽनापत्तेः । परस्तादिति । 'सर्वं

१-'चकारग्रहणे' । २-'श्रितादिस्तत्पु' ।

## गतिदिवःकर्महेतुमत्सु चग्रहणम् ॥ ६ ॥

गतिदिवःकर्महेतुमत्सु चग्रहणं कर्तव्यम् ॥ 'उपसर्गाः क्रियायोगे' [ १. ४. ५९ ] 'गतिश्च' [ ६० ] इति चकारः कर्तव्यः । अक्रियमाणे हि चकारेऽनवकाशोपसर्गसंज्ञा गतिसंज्ञां बाधेत । परवचने हि नियमानुपपत्ते- रुभयसंज्ञाभावः ।

यस्य पुनः परङ्कार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वा तस्योपसर्गसंज्ञा, परा गतिसंज्ञा । तत्रारम्भसामर्थ्याच्चोपसर्गसंज्ञा, परंकार्यत्वाच्च गतिसंज्ञा भविष्यति ॥ ननु च यस्याप्येकसंज्ञाधिकारस्तस्याप्यु- पसर्गसंज्ञापूर्विका गतिसंज्ञा । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । एका संज्ञेति वचनान्नास्ति यौगपद्येन संभवः ॥ गतिसंज्ञाप्यनवकाशा सा वचना- द्भविष्यति । साऽवकाशा गतिसंज्ञा । कोऽवकाशः ? ऊर्यादीन्यवकाशः* । प्रादीनां या गतिसंज्ञा साऽनवकाशा । गति ।

प्र०–चशब्द एव चोद्यते । तत्राहुः—'द्विगुश्चे'ति सूत्रं द्वयोरपि पक्षयोर्न कर्तव्यम् । एक- संज्ञापक्षे तु 'सङ्ख्यापूर्वो द्विगुश्चे'ति चशब्दः समावेशार्थः कर्तव्यो न पक्षान्तर इत्येत- द्वार्तिककारस्य विवक्षितम् । भाष्यमप्येवं व्याख्यायते—'तत्पुरुषः' 'द्विगुश्चे'ति चकारः कर्तव्य इति, 'तद्धितार्थे'त्यनेन यः सङ्ख्यापूर्वः समासः स तत्पुरुषो द्विगुश्च भवतीति संज्ञाद्वयं लभत इति यावत् । एतदर्थश्चकारः कर्तव्य इत्यर्थः । अयमेवार्थः परस्तात् प्रकटीभविष्यति । 'तस्यान्त'इत्यादि भाष्यं पूर्ववत्क्रमविपर्ययेण व्याख्येयम् । गतिसंज्ञामिति । ऊर्यादिषु सावकाशामिति भावः । प्रादीनां या गतिसंज्ञेति ।

उ०–द्विगुप्रकरणमनुक्रम्ये'त्यादिग्रन्थेन । अन्ये तु चकाराऽघटितं 'द्विगुश्चे'ति सूत्रं कर्तव्यमिति भाष्यार्थमाहुः । कृतमेवेति न दोष इति तत्त्वम् ।

ननु गत्युपसर्गसंज्ञयोः समानविषयत्वात्कथमुपसर्गत्वस्यैव निरवकाशत्वमत आह— ऊर्यादीति । गतित्वेनैकीकृत्य सावकाशत्वाऽभिमानः । गतिस्वरो—'गतिरनन्तर' इति पूर्वपद- प्रकृतिस्वरः । 'उपसर्गादसमास'इति णत्वम् । 'उपसर्गात्सुनोती'ति षत्वम् । 'दिवः कर्म चे'त्यत्र संज्ञयोः समावेशेन तद्धात्वर्थसाधकतमे शक्तिद्वयसमावेशो बोध्यते । समावेशस्येति । करणत्वादक्षाणां तृतीया । कर्मत्वाच्चाऽकर्मकत्वाऽभावात्परस्मैपदाऽभावः । प्रयोज्येऽकर्मकत्व- प्रयुक्तकर्मत्वनिवृत्तिद्वारा यज्ञदत्ते तृतीया चेति भावः । तृतीयैव चाऽत्र शास्त्रबलाच्छक्तिद्वय- बोधिकेति बोध्यम् ।

* ऊर्यादिच्विडाचश्च १. ४. ६१.

दिवः कर्म—'साधकतमं करणम्' [१.४.४२] 'दिवः कर्म च' [४३] इति चकारः कर्तव्यः। अक्रियमाणे हि चकारेऽनवकाशा कर्मसंज्ञा करणसंज्ञां बाधेत। परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः॥ यस्य पुनः परङ्कार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः। कथम्? पूर्वा तस्य कर्मसंज्ञा, परा करणसंज्ञा। कथम्? एवं स वक्ष्यति—'दिवः साधकतमं कर्म'। ततः 'करणम्'। करणसंज्ञं च भवति साधकतमम्। 'दिव' इति निवृत्तम्। तत्रारम्भसामर्थ्याच्च कर्मसंज्ञा, परङ्कार्यत्वाच्च करणसंज्ञा भविष्यति॥ ननु च यस्याऽप्येकसंज्ञाधिकारस्तस्यापि करणसंज्ञापूर्विका कर्मसंज्ञा। कथम्? अनुवृत्तिः क्रियते। पर्यायः प्रसज्येत। 'एका संज्ञे'ति वचनान्नास्ति यौगपद्येन संभवः। दिवः कर्म।

प्र०—'गतिश्चे'त्यत्राऽसत्यपि चकारे समावेशः सिद्ध्यति। 'गति'रित्यत्र योगे प्रादीनामनुवृत्त्या गतिसंज्ञा विधीयते। तत्र वचनसामर्थ्यात्पर्याये लब्धे सति उपसर्गसंज्ञाऽनुवृत्तिः समावेशाऽर्था भविष्यतीत्यर्थः। समावेशस्य च 'प्रणीतमभिषिक्त'मित्यत्र गतिस्वरो णत्वषत्वे च प्रयोजनम्। दिवः कर्म चेति। समावेशस्य च प्रयोजनम'दैदेवयते देवदत्तो यज्ञदत्तेने'ति। प्रयोज्यकर्तु'र्गतिबुद्धी'ति नियमात्कर्मसंज्ञानिवृत्तिः, 'अणावकर्मका'दिति परस्मैपदाऽभावश्च। यद्येवमक्षान्दीव्यतीति द्वितीया न प्राप्नोति, तृतीयया परत्वाद्बाधितत्वात्, विभक्तिद्वयं चेष्यते, कर्मसंज्ञा च सावकाशाऽकर्मकव्यपदेशव्यावृत्त्यर्थत्वात्, करणसंज्ञाऽपि 'देवना अक्षा' इति ल्युडर्था। अत्राहुः—कार्यकालं संज्ञापरिभाषमिति पक्षोऽत्राश्रीयते। तेन 'कर्मणि द्वितीये'त्यत्र कार्यं यत्कर्मसंज्ञाया उपस्थानं तदनवकाशमिति द्वितीया भविष्यति। 'अक्षाणां देविते'त्यादौ तु कृत्प्रयोगे

उ०— ननु कर्मत्वविधानसामर्थ्याद् द्वितीयेत्यत आह—कर्मसंज्ञा चेति। इदमुपलक्षणं कर्मणि लकारादेरपि। तृतीया त्विति। 'कर्तृकरणयो'रित्यत्राऽस्योपस्थितिस्त्वकृद्योगे चरितार्थेति भावः। न च 'स्तोकंपाक' इत्यादावपि षष्ठी स्यादिति वाच्यम्, कर्तृसाहचर्याद्धात्वर्थकर्मण एव ग्रहणेनाऽदोषात्। न चैवं 'मनसादेव' इत्यादिप्रयोगः कथं, हेतुतृतीयान्तेन पचाद्यजन्तदेवशब्दस्य समासे सिद्धत्वात्। केचित्तु साधकतमगतकर्मत्वशक्तिबोधे'ऽक्षान्दीव्यती'ति प्रयोगे दृढतरं मानं चिन्त्यम्। कार्यकालपक्षेऽपि परत्वात्तृतीयाया बाधे न्याय्ये तदनुपस्थितेरेव न्याय्यत्वात्। किं च तत्र फलाश्रयत्वविवक्षया 'कर्तु'रिति कर्मत्वं, न च तदा करणत्वमिति न दोषः। किं च 'कूङिति चे'तिसूत्रकैयटोक्तरीत्या यथोद्देशेऽपि प्रधानाऽनुरोधेन गुणानां स्वात्मभेदकल्पनस्य तुल्यतया विशिष्य 'कार्यकालपक्षे' इत्युक्तिरनुचिता। किं च 'कार्यकालपक्षेऽयादिभ्यः परैव प्रगृह्यसंज्ञे"त्यदसो मा'दितिसूत्रभाष्योक्तरीत्या'ऽपादान-

हेतुमत्—'स्वतन्त्र कर्ता' [ १. ४. ५४ ] 'तत्प्रयोजको हेतुश्च' [ ५५ ] इति चकारः कर्तव्यः। अक्रियमाणे हि चकारेऽनवकाशा हेतुसंज्ञा कर्तृसंज्ञां बाधेत। परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः॥ यस्य पुनः परङ्कार्यत्वं नियमाऽनुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः। कथम्? पूर्वा तस्य हेतुसंज्ञा, परा कर्तृसंज्ञा। कथम्? एवं स वक्ष्यति—'स्वतन्त्रः प्रयोजको हेतु'रिति। ततः 'कर्ता'। कर्तृसंज्ञश्च भवति स्वतन्त्रः। 'प्रयोजक' इति निवृत्तम्। तत्रारम्भसामर्थ्याच्च हेतुसंज्ञा, परंकार्यत्वाच्च कर्तृसंज्ञा भविष्यति॥ ननु च यस्याप्येकसञ्ज्ञाधिकारस्तस्यापि कर्तृसंज्ञापूर्विका हेतुसंज्ञा। कथम्? अनुवृत्तिः क्रियते। पर्यायः प्रसज्येत। 'एका संज्ञे'ति वचनान्नास्ति यौगपद्येन संभवः।

गुरुलघुसंज्ञे नदीघिसंज्ञे ॥ ७॥

गुरुलघुसंज्ञे नदीघिसंज्ञे बाधेयाताम्*। गार्गीबन्धुः वात्सीबन्धुः†। वैनूम्‡ विविनय्य×। परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः॥ यस्य पुनः

प्र०-षष्ठ्या द्वितीयाऽपवादत्वाद्बाध्यते, तृतीया तु परत्वात्। हेतुमदिति। हेतुसंज्ञा यस्मिन्सूत्रे विद्यते तद्धेतुमत्। तत्र चग्रहणं कर्तव्यम्। समावेशस्य प्रयोजनं 'कारयती'ति हेतुमण्णिच्कर्तरि लकारः। गुरुलघुसंज्ञे इति। यदा घिनदीसंज्ञे वर्णमात्रस्य क्रियेते तदाऽयं दोषः। यदा तु तदन्तस्य, तदा भिन्नविषयत्वात्सिद्धः समावेशः। तस्य तु प्रयोजनं 'वात्सीबन्धु'रित्यत्र 'नदी बन्धुनी'ति पूर्वपदान्तोदात्तत्वं नदीसंज्ञानिबन्धनं भवति। वात्सी३बन्धो इति 'गुरोरनृत' इति प्लुतो गुरुसंज्ञानिबन्धनः। घिलघुसंज्ञासमावेशस्य च प्रयोजनं विश्च ना च विनराविति घिलक्षणः पूर्वनिपातः। विनोर्भावो वैनूमिति 'इगन्ताच्च लघुपूर्वा'दित्यण्। द्वन्द्वमनोज्ञादित्वाद्वुञि प्राप्ते तदभावश्चिन्त्यः। विनरावाचष्टे इति णिचि टिलोपे च कृते विविनय्येति 'ल्यपि लघुपूर्वा'दित्ययादेशः।

उ०-मुत्तराणि गां दोग्धि पय' इत्यत्रत्यभाष्याऽसङ्गतेराकडारस्थसंज्ञानां यथोद्देशत्वमेवेति च तदुक्त्यसङ्गतिरित्याहुः। हेतुमति चेति 'च'ग्रहणमिति भ्रमं वारयति—हेतुसंज्ञेति। निबन्धन इति। ननु 'वात्सीबन्धु'रित्यत्र प्लुताऽप्राप्तेर्भाष्यस्य न्यूनतैवेति चेन्न। प्लुतविधायके दूरादाह्वानं ज्ञापनमात्रोपलक्षणं, न त्वभिमुखीकृत्य ज्ञापनरूपसंबोधनस्य सम्बोधनविभक्तिनियामकस्योपलक्षणम्। एवं 'चाऽऽगच्छतु भवान् गार्गीबन्धुर्वात्सीबन्धु'रिति वाक्यवर्तिन उदाहरणत्वमिति भाष्याशयसत्त्वेनाऽदोषात्। अतिप्रसङ्गस्तु व्यवस्थितविभाषयाऽ-

* यूस्त्र्याख्यौ नदी—दीर्घ च १. ४. ३—१२.

† नदी बन्धुनि ६. २. १०९; गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ८. २. ८६.

‡ द्वन्द्वे घि २. २. ३२; इगन्ताच्च लघुपूर्वात् ५. १. १३१. × ल्यपि लघुपूर्वात् ६. ४. ५६.

परङ्कार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वे तस्य नदीघिसंज्ञे, परे गुरुलघुसंज्ञे । तत्रारम्भसामर्थ्याच्च नदीघिसंज्ञे, परङ्कार्यत्वाच्च गुरुलघुसंज्ञे भविष्यतः ॥ ननु च यस्याप्येकसंज्ञाधिकारस्तस्यापि नदीघिसंज्ञा-पूर्विके गुरुलघुसंज्ञे । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । 'एका संज्ञे'ति वचनान्नास्ति यौगपद्येन संभवः ।

## परस्मैपदसंज्ञां पुरुषसंज्ञा ॥ ८ ॥

परस्मैपदसंज्ञां पुरुषसंज्ञा बाधेत+ । परवचने हि नियमानुपपत्तेरुभय-संज्ञाभावः ॥ यस्य पुनः परङ्कार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वा तस्य पुरुषसंज्ञा परा परस्मैपदसंज्ञा । कथम् ? एवं स वक्ष्यति—'तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमा' इति । एवं सर्वपुरुषनियम-मनुक्रम्य तस्याऽन्ते 'लः परस्मैपद'मिति । तत्रारम्भसामर्थ्याच्च पुरुषसंज्ञा, परङ्कार्यत्वाच्च परस्मैपदसंज्ञा भविष्यति ॥ ननु च यस्याऽप्येकसंज्ञाधिकारस्त-स्यापि परस्मैपदसंज्ञापूर्विका पुरुषसंज्ञा । कथम् ? अनुवृत्तिः क्रियते । पर्यायः प्रसज्येत । 'एका संज्ञे'ति वचनान्नास्ति यौगपद्येन संभवः ।

---

प्र०—नदीघिसंज्ञापूर्विके इति । ननु विशेषविषये नदीघिसंज्ञे, गुरुलघुसंज्ञे तु सामान्य-विषये, ते कथं नदीघिसंज्ञापूर्विके युज्येते । एवं मन्यते—वाक्यभेदेन सम्बन्धः करि-ष्यते । 'ह्रस्वमक्षरं लघुसंज्ञं भवति । ततो [ घि । ] घिसंज्ञं च लघुसंज्ञमिति । एवं 'दीर्घं गुरुसंज्ञम्' । ततो [नदी ।] नदीसंज्ञं च गुरुसंज्ञमिति । पर्याय इति । नदीघि-संज्ञाभ्यां गुरुलघुसंज्ञयोर्नित्ये बाधे प्राप्ते तयोरनुवृत्तिः पर्यायार्थैव स्यादित्यर्थः । परस्मैपदसंज्ञमिति । ततश्च 'क्रामती'त्यादौ दीर्घत्वं न स्यात्, शतर्यैव तु स्यात् । ननु च 'सिचि वृद्धि'रिति ज्ञापकात्समावेशो भविष्यति । नैतदस्ति । अस्माद्वचनादस्मिन्कार्ये

---

उ०—नभिधानेन वा परिहरणीय इत्याहुः । चिन्त्य इति । अत्रेयं चिन्ता—अस्मादेव भाष्य-प्रयोगात्तस्याऽनित्यत्वं, तेनोक्तप्रयोगसिद्धिरित्याहुः । ततो घिसंज्ञं चेति । तथा च नदीघि-संज्ञाविषये ते सञ्ज्ञे नदीघिसंज्ञापूर्विके इति भाष्यार्थं इति भावः । पर्यायार्थैवेति । एवं ह्येका संज्ञेति नियमो न बाधित इति भावः । तदन्तस्य घिनदीसंज्ञे इति सिद्धान्तः । ननु चेति । तत्र शत्रादिपरसिचोऽभावात्तिङ्परस्मैपदमेव गृह्यत इति भावः । पर्याय इति । एकसंज्ञाधिकाराऽबाधायेति भावः । वस्तुत इष्टानुरोधादूर्णोतेर्विभाषाग्रहणाच्च समावेश-ज्ञापकत्वमेवाऽस्येत्येका संज्ञेति पाठेऽपि न दोषः । इदानीं परङ्कार्यत्वपक्षे दोषानाह भाष्ये—पर-

---

+लः परस्मैपदम्; तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १. ४. ९९; १०१.

परस्मैपदसंज्ञाप्यनवकाशा सा वचनाद्भविष्यति । साऽवकाशा परस्मैपदसंज्ञा । कोऽवकाशः ? शतृक्कसू अवकाशः* ।

परवचने सिति पदं भम् ॥ ६ ॥

परवचने सिति पदं भसंज्ञमपि प्राप्नोति† । 'अयं ते योनिर्ऋत्वियः‡ । प्रजां विन्दाम ऋत्वियम्' । आरम्भसामर्थ्याच्च पदसंज्ञा, परकार्यत्वाच्च भसंज्ञा प्राप्नोति ।

गतिबुद्ध्यादीनां ण्यन्तानां कर्म कर्तृसंज्ञम् ॥ १० ॥

गतिबुद्ध्यादीनां ण्यन्तानां कर्म कर्तृसंज्ञमपि प्राप्नोति× । आरम्भसामर्थ्याच्च कर्मसंज्ञा, परकार्यत्वाच्च कर्तृसंज्ञा प्राप्नोति ।

प्र०-पर्यायः स्यान्न समावेशः । ततश्च पाक्षिकी वृद्धिः स्यात् । परस्मैपदसंज्ञाऽपीति । ततश्च पर्याये लब्धेऽनुवृत्तिः समावेशार्था भविष्यतीति भावः । ऋत्विय इति । भसंज्ञायां सत्या'मोर्गुण'इतिगुणः स्यात्पदसंज्ञा त्ववग्रहाऽर्था स्यात् । गतिबुद्ध्यादीनामिति । एकसंज्ञाऽधिकारे गत्यादिसूत्रं कर्मसंज्ञायां सिद्धायां नियमार्थम् । तथा हि— प्रयोज्यः स्वव्यापारे स्वतन्त्रः प्रयोजकव्यापारेण 'बाध्यत' इति संज्ञाद्वयप्रसङ्गे एकसंज्ञा-

उ०-वचन इति । ऋत्विये 'तदस्य प्राप्त'मित्यधिकारे 'ऋतोर'णिति वर्तमाने 'छन्दसि घ'सिति घस् । पदसंज्ञा त्विति । गुणेऽवादेशे 'लोपः शाकल्यस्ये'त्यर्थमपि सेति बोध्यम् । नियमार्थमिति । यद्यपि परकार्यत्वपक्षेपि गत्यादिसूत्रं नियमार्थं, तथाप्यत्र पक्षे इष्टसिद्धिरिति भावः । ननु परत्वात्कर्तृत्वे प्राप्ते कर्मसंज्ञाविध्यर्थमेव गत्यादिसूत्रं स्यात्कथं नियमार्थत्वमित्यत आह— तथा हीति । प्राधान्यादिति । शब्दशास्त्रत्वाच्छाब्दं प्राधान्यमन्तरङ्गत्वादिभ्यो बलवत् । लोकेऽप्यन्तरङ्गकार्यात्प्रधानकार्यस्य बलवत्त्वं दृष्टं मन्त्रिराजस्थले इति भावः । अविरोधादिति । पूर्वेणाऽपवादेन निवर्तितस्य परकार्यस्य प्रवर्तकेनाऽनेन निरवकाशपूर्वकार्यस्य निवर्तयितुमशक्यतयैकसंज्ञानियमराहित्येन च विरोधाऽभावादित्यर्थः । गत्यर्थादीनामेवेति । 'एषां कर्मसंज्ञैवे'ति नियमस्तु न, 'प्राक्कडारा'दिति शास्त्रबाधापत्तेः । आरम्भसामर्थ्याच्चेति भाष्ये । 'हेतुमति चे'ति सूत्रे भाष्ये 'गति'सूत्रस्य नियमत्वोक्त्या 'कर्तु'रित्यत्र ण्यन्तधातुविषयत्वावश्यकत्वेनाऽण्यन्तधातुविषयस्य 'कर्तुरीप्सिततम'मित्यस्याऽऽरम्भसामर्थ्यादित्यर्थः । यत्त्वेतद्भाष्यबलाद् गत्यादिसूत्रं विध्यर्थम् । परत्वाऽन्तरङ्गत्वोपजीव्यत्वैः कर्तृत्वप्राप्तेः । एवं च

* लटः शतृशानचावप्रथमासमानाधिकरणे; क्वसुश्च ३. २. १२४; १०७.

† सिति च; यचि भम् १. ४. १६; १८.

‡ ऋक्० ३. २९. १०. छन्दसि घस् ५. १. १०६. (ओर्गुणः ६. ४. १४६)

× गतिबुद्ध...कर्ता स णौ; स्वतन्त्रः कर्ता १. ४. ५२; ५४.

१—'बाध्यते' इति सर्वत्र मुद्रितपाठो दृश्यते ।

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'न कर्म संज्ञायां कर्तृसंज्ञा भवती'ति, यदयं 'हृक्रोरन्यतरस्याम्' [१.४.५३] इत्यन्तरस्याङ्ग्रहणं करोति ।

**शेषवचनं च घिसञ्ज्ञानिवृत्त्यर्थम् ॥ ११ ॥**

शेषग्रहणं[1] च कर्तव्यम्—'शेषो घ्यसखि' [१.४.७] इति । किं प्रयोजनम् ? 'घिसंज्ञानिवृत्त्यर्थम्' । नदीसंज्ञायां घिसंज्ञा मा भूदिति । शकट्यै पद्धत्यै बुद्ध्यै धेन्वै* । इतरथा हि परकार्यत्वाच्च घिसंज्ञा, आरम्भसामर्थ्याच्च 'ङिति ह्रस्वश्च' [१.४.६] इति नदीसंज्ञा ।

---

प्र०–धिकारादन्यतरया भाव्यम् । तत्र प्रत्ययार्थस्य प्राधान्यात्तत्प्रयुक्तया कर्मसंज्ञया प्रवर्त्यम् । गुणप्रधानसंनिधौ प्रधानस्य प्रयोजकत्वे संभवति पृथग्गुणास्तद्विरुद्धं स्वकार्यं न प्रयुञ्जते । ततश्च सिद्धायां प्रयोज्यस्य कर्मसंज्ञायां 'गत्यर्थादीनामेवाऽण्यन्तानां कर्ता ण्यन्तानां कर्मसंज्ञो भवति नान्येषा'मिति नियमः क्रियते । तेन 'पाचयत्योदनं देवदत्तो यज्ञदत्तेने'ति कर्मसंज्ञा न भवति । प्रधानप्रयुक्तकर्मसंज्ञाऽभावे च गुणक्रियानिमित्ता कर्तृसंज्ञा प्रवर्तते । यदा तु 'परंकार्य'मिति पाठस्तदाऽविरोधात्सर्वत्र संज्ञाद्वयप्रसङ्गे गत्यर्थादीनामेवेति नियमेन ण्यन्तधात्वन्तरप्रयोज्यात्कर्मसंज्ञा व्यावर्त्यते । गत्यर्थादिप्रयोज्यस्य तु संज्ञाद्वयप्रसङ्ग इत्यर्थः । यदयमिति । यदि तु गत्यर्थादिप्रयोज्यस्य संज्ञाद्वयं प्रावर्त्स्यत्तत्रैव सूत्रे हृक्रावकरिष्येतां नाऽकरिष्यतान्यतरस्याङ्ग्रहणमित्यर्थः । शकट्यै इति । शकटिशब्दान्ङे प्रत्यये कृते परत्वान्नदीसंज्ञानिमित्ते आटि कृते तस्य

---

उ०–पाचयत्यादौ न दोषः । परत्वारम्भसामर्थ्यादित्यस्य गत्यादिसूत्रारम्भसामर्थ्यादित्यर्थ इति, तन्न । प्रधानानुरोधिनः सर्वतो बलवत्त्वात् । किं चाऽत्र पाठे विध्यर्थत्वं दुरुपपादमुभयोरप्यविरोधात्प्राप्तेरिति दिक् । यदीति । ननु समावेशस्य सिद्धत्वेऽपि पक्षे कर्तृत्वमात्ररूपपर्यायार्थं तदस्तु । न च संज्ञयोः समावेशेपि तत्कार्यविभक्त्योर्यौगपद्याऽयोगात्कार्यान्तरस्य चाऽभावात् पर्यायः फलतीति वाच्यम् । समावेशेऽस्य कर्मभिन्नत्वाऽभावेनोभयप्राप्ताविति निषेधाऽप्रवृत्तौ नित्यं षष्ठी । पर्याये तु कर्तृत्वे निषिद्धेऽपि कर्मत्वे तदभावात्पक्षे भाव्यं षष्ठ्येति विशेषादिति चेन्न, हृक्रुविषयेऽनभिधानेन तादृशप्रयोगस्यैवाऽभाव इति भाष्याशयात् ।

हृक्राविति । हृकरावित्युचितम् । यद्वा सूत्रगतकृतयणादेशरेफान्तकृशब्दानुकरणं त्तरपदो द्वन्द्वोऽयं द्विवचनान्त इति बोध्यम् । ननूपपादितरीत्या संज्ञासमावेशसम्भव इत्यत आह—अयं भाव इति । तत्र घिलक्षणे इति । गुणेन नदीत्वनिमित्तविनाशेन युगपत्तयोरसंभवेन नदीसंज्ञाऽपेक्षया परत्वादिति भावः । असिद्धत्वाच्चेति । पूर्वविद्धभावा'दचः परस्मि'न्नित्यस्याऽप्यभाव इति बोध्यम् । तस्मादिति । इष्टानुरोधादेवमेव कल्प्यते न त्वलिव-

---

१–'शेषवचनं' पा० । * आण् नद्याः; (घेर्ङिति) ७. ३. ११२; (१११)

**न वाऽसंभवात् ॥ १२ ॥**

न वा कर्तव्यम् । नदीसंज्ञायां घिसंज्ञा कस्मान्न भवति ? 'असंभवात्' । कोऽसावसंभवः ?

**ह्रस्वलक्षणा हि नदीसंज्ञा घिसंज्ञायां च गुणः ॥ १३ ॥**

ह्रस्वलक्षणा हि नदीसंज्ञा, घिसंज्ञायां च गुणेन भवितव्यम्† ।

**तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञाऽभावः ॥ १४ ॥**

तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञा न भविष्यति । किं कारणम् ? आश्रयाऽभावात् ।

**आश्रयाभावान्नदीसंज्ञायां घिसंज्ञानिवृत्तिरिति चेद्यणादेशाऽभावः ॥ १५ ॥**

आश्रयाऽभावान्नदीसंज्ञां घिसंज्ञानिवृत्तिरिति चेदेवमुच्यते, यणादेशोऽपि न प्राप्नोति ॥ नैष दोषः ।

**नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञाभावः ॥ १६ ॥**

नद्याश्रयो यणादेशः । यदा नदीसंज्ञया घिसंज्ञा बाधिता तत उत्तरकालं यणादेशेन भवितव्यम् । नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञा भविष्यति ।

प्र०–ङिद्ग्रहणत्वाद् 'घेर्ङिती'ति गुणः प्राप्नोति । न वाऽसंभवादिति । अयं भावः—यद्यत्र घिसंज्ञा प्रवर्तेत तदान्तरङ्गत्वात्पूर्वमेव तस्याः प्रवृत्तिः स्यात् । नदीसंज्ञा तु ङित्प्रत्ययापेक्षा बहिरङ्गा । तत्र घिलक्षणे गुणे कृते ह्रस्वाऽभावादल्विधित्वाच्च स्थानिवत्त्वाऽभावान्नदीसंज्ञा नैव प्रवर्तेतेति नदीसंज्ञाविधानं ह्रस्वस्याऽनर्थकमेव स्यात् । तस्मान्नदीसंज्ञाविधानसामर्थ्यादत्र घिसंज्ञा न भवतीति । नद्याश्रयत्वादिति । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नाऽसौ बाध्यत इति भावः ।

उ०–धावपि स्थानिवत्त्वादीति भावः । भाष्ये—आश्रयाभावादिति । नदीत्वस्याश्रयभूतह्रस्वाभावादित्यर्थः ।

यस्य त्विति । नदीत्वाऽभावे घित्वाऽनिवृत्तेर्गुणेन यणो बाधाद्यणो निमित्तं नदीत्वमिति भावः । माऽस्तु शेषवचनं घिसंज्ञानिवृत्त्यर्थम्, बहुव्रीहिप्रतिषेधार्थं तु कर्तव्यमेवेत्याह

† घेर्ङिति ७. ३. १११. १–इदं भाष्यमेवेति केचित् । २–क्वचिदिदं वार्तिकत्वेन पठ्यते ।

## बहुव्रीह्यर्थं तु ॥ १७ ॥

बहुव्रीहिप्रतिषेधार्थं तु शेषग्रहणं कर्तव्यं—'शेषो बहुव्रीहिः' [२.२.२३] इति ।

किं प्रयोजनम् ?

## प्रयोजनमव्ययीभावोपमानद्विगुकृल्लोपेषु ॥ १८ ॥

अव्ययीभावे—उन्मत्तगङ्गम् लोहितगङ्गम्† । उपमाने—शस्त्रीश्यामा कुमुदश्येनी× । द्विगु—पञ्चगवम् दशगवम्+ । कृल्लोपे—निष्कौशाम्बिः निर्वाराणसिः‡ ।

प्र०—उन्मत्तगङ्गमिति । अत्र बहुव्रीहिसंज्ञायां सत्यां पूर्वपदप्रकृतिस्वरः पाक्षिकश्च कप्समासान्तः प्राप्नोति । शस्त्रीश्यामेति । यदा श्यामाशब्दः शस्त्र्यामेव उपमाने वर्तते, उपमेयं तु समासवाच्यं, तदाऽन्यपदार्थवृत्तित्वाद्बहुव्रीहिसंज्ञाप्रसङ्गात्तन्निबन्धनः पाक्षिककप्प्रसङ्गः । स्वरस्तु 'तत्पुरुषे तुल्यार्थे'ति विधीयते इति तत्र नाऽस्ति विशेषः । पञ्चगवमिति । यदा समाहारो भावरूपो वाच्यस्तदाऽन्यपदार्थसद्भावः । समाह्रियमाणार्थत्वे तु तदभावः । बहुव्रीहिसंज्ञायां सत्यां तन्निबन्धनस्वरप्रसङ्गः । कपस्त्वशेषत्वात्प्रसङ्गाऽभावः । नन्वत्र टचश्चित्करणाद्बहुव्रीहिस्वरो न भविष्यति । एवं तर्ह्युदाहरणदिगियम् । इदं चात्रोदाहरणं 'पञ्चपात्र'मिति । निष्कौशाम्बिरिति । क्रान्तस्या-

उ०—भाष्ये—बहुव्रीह्यर्थं त्विति । अत्रेति । उन्मत्तेतिक्तान्तस्य पूर्वनिपातस्तु बहुव्रीहित्वाऽभावेऽप्युसर्जनत्वेन तं विना संज्ञाया अप्रतीतेश्चाऽऽर्थिक इति भावः । नित्यनपुंसकत्वं तु संज्ञयोः समावेशेन सिद्धम् । पाक्षिकः कबिति । 'शेषा'दिति कपो 'न संज्ञाया'मिति निषेधाच्चिन्त्यम् । शेषग्रहणे तु नदीपदघटितसमुदायस्यान्यपदार्थे विद्यमानस्य समासोक्तेः शेषत्वाऽभावान्न बहुव्रीहिरिति बोध्यम् । ननु समानाधिकरणसमासोऽयम्, अत एव 'मृगचपले'त्यादौ पुंस्त्वम् । तत्काऽन्यपदार्थप्रतीतिरत आह—यदेति । अयमपि पक्षस्तत्सूत्रभाष्ये स्पष्टः । भावरूप इति । विशेष्यभूत इत्यर्थः । समाह्रियमाणेति । 'समाहारे चे'त्यत्र कर्मसाधनः समाहारशब्द इति भावः । अशेषत्वादिति । 'शेषा'दितिसूत्रे समासान्ताऽपेक्षया शेष इत्यभिमानेनेदम् । 'अनन्तरबहुव्रीह्यधिकारापेक्षं शेषत्व'मिति भाष्यसंमतपक्षे तु तस्यापि प्रसङ्ग इति चिन्त्यम् । टचश्चित्करणादिति । अस्या अन्यत्र राजगवीत्यादौ चारितार्थ्यादिदं चिन्त्यमिति कश्चित् । पञ्चपात्रमिति । अत्र शेषत्वात्कपोऽप्यापत्तिः । एतानि प्रयोजनानि

† अन्यपदार्थे च संज्ञायाम् २. १. २१; ( बहुव्रीहौ प्रकृत्या पूर्वपदम्; शेषाद्विभाषा ६. २. १; ५. ४. १५४ )

× उपमानानि सामान्यवचनैः २. १. ५५; ( शेषाद्विभाषा; नद्यृतश्च ५. ४. १५४; १५३ )

+ तद्धितार्थोत्तरपदसमाहारे च; संख्यापूर्वो द्विगुः २.१.५१;५२. (बहुव्रीहौ प्रकृत्या पूर्वपदम् ६.२.१)

‡ प्रादयः क्तार्थे २. २. १८ वा० ४; ( नद्यृतश्च ५. ४. १५३ )

**तत्र शेषवचनाद्दोषः संख्यासमानाधिकरणनञ्समासेषु बहुव्रीहिप्रतिषेधः ॥ १६ ॥**

तत्र शेषवचनाद्दोषो भवति। सङ्ख्यासमानाधिकरणनञ्समासेषु बहुव्रीहेः प्रतिषेधः प्राप्नोति। सङ्ख्या—द्वीरावतीको देशः, त्रीरावतीको देशः*। समानाधिकरणे—वीरपुरुषको ग्रामः†। नञ्समासे—अब्राह्मणको देशः, अवृषलको देशः‡।

**कुल्लोपे च शेषवचनात्प्रादिभिर्न बहुव्रीहिः ॥ २० ॥**

कुल्लोपे च शेषवचनात्प्रादिभिर्बहुव्रीहिर्न प्राप्नोति। प्रपतितपर्णः प्रपर्णकः। प्रपतितपलाशः प्रपलाशक इति×। अथैकसंज्ञाधिकारे कथं सिद्ध्यति ? 'एक-

प्र०—न्यपदार्थस्य समासवाच्यत्वे बहुव्रीहिसंज्ञायां तन्निबन्धनो नदीलक्षणः कप्प्रसङ्गः। यदा तु पूर्वपदमेव क्रान्ताद्यर्थवृत्ति तदान्यपदार्थाऽभावः। क्रियमाणेपि शेषग्रहणे दोषान्तरप्रसङ्गमाह—तत्रेति। एकसंज्ञावादी तु शेषग्रहणं न करोति। अनवकाशाभिरव्ययीभावादिसंज्ञाभिर्बहुव्रीहिसंज्ञाबाधस्य सिद्धत्वात्। द्वीरावतीकादिषु तु परत्वाद्बहुव्रीहिर्भविष्यति। द्वीरावतीक इति। 'नदीभिश्चे'त्यव्ययीभावः प्राप्नोति। तस्य त्ववकाशः—पञ्चनदमित्यादि, यदा समाह्रियमाणोऽर्थो वाच्यः। प्रपतितपर्णः प्रपर्णक इति।

उ०-शेषग्रहणस्य पदतः शेषार्थकत्वपक्षे। त्रिकतः शेषे त्वन्त्यं द्वयं शेषग्रहणे कृते सिध्यति। आद्यन्तु प्रयोजनद्वयं त्रिकतः शेषे शेषग्रहणे कृतेपि न सिध्यतीति बोध्यम्। समासवाच्यत्वे इति। समास एव क्रान्ताद्यर्थप्रतीतेः 'यदागमे ही'तिन्यायेनैकार्थीभावबलात्समासस्यैव सोऽर्थ इति भावः। यदा त्विति। एकार्थीभावस्तु पञ्चम्यर्थान्तर्भावेणेति तद्भावः। क्रियमाणेपीति। तत्करणमेव प्रथमो दोषः। कृते दोषान्तरमपीति भावः। सङ्ख्यासमानाधिकरणनञ्समासोक्तेः शेषत्वाऽभावात्तत्र बहुव्रीह्यप्राप्तिरिति बोध्यम्। शेषग्रहणं न करोतीति। पदतः शेषार्थं न करोति, त्रिकतः शेषार्थं तु करिष्यतीत्यर्थः। परत्वादिति। नञ्समासादयोऽन्यपदार्थाऽविवक्षायां चरितार्थाः। अव्ययीभावोऽपि समाह्रियमाणार्थत्वे चरितार्थः, बहुव्रीहिरप्यन्यत्र चरितार्थः। न च समानाधिकरणतत्पुरुषविषये बहुव्रीहिः क्व चरितार्थः, व्यधिकरणे चरितार्थ इत्यभिमानात्। यद्वा तस्य तद्बाधकत्वमनवकाशत्वेनैव। परत्वं च बाधकत्वोपलक्षणम्। भाष्ये—'विप्रतिषेधा'दित्यपि तथैव बोध्यम्। प्राप्नोतीति। तथा चाऽनयोः पदयोर्न शेषत्वमिति बहुव्रीह्यप्राप्तिः। ननु द्वीरावतीकेऽनवकाशत्वा'न्नदीभि'श्चेत्यनेनैव भाव्यम्। एवं च कथमत्र बहुव्रीहिः, किमर्थं वा निषेधोऽत आह—तस्य त्ववकाश इति।

* नदीभिश्च २. १. २०. † पूर्वापरप्रथम····वीराश्च २. १. ५८.
‡ नञ् २. २. ६. × प्रादयः क्तार्थे २. २. १८ वा० ४। १-इदं वार्तिकमनेन क्वचित्पठ्यते।

संज्ञाधिकारे विप्रतिषेधाद् बहुव्रीहिः'। एकसंज्ञाधिकारे विप्रतिषेधाद् बहुव्रीहिर्भविष्यति।

**एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिरिति चेत् क्तार्थे प्रतिषेधः ॥२१॥**

एकसंज्ञाधिकारे विप्रतिषेधाद् बहुव्रीहिरिति चेत्क्तार्थे प्रतिषेधो वक्तव्यः। निष्कौशाम्बिः निर्वाराणसिः॥ तत्पुरुषोऽत्र बाधको भविष्यति।

**तत्पुरुष इति चेदन्यत्र क्तार्थात्प्रतिषेधः ॥ २२ ॥**

तत्पुरुष इति चेदन्यत्र क्तार्थात्प्रतिषेधो वक्तव्यः। प्रपतितपर्णः प्रपर्णकः। प्रपतितपलाशः प्रपलाशक इति।

**सिद्धं तु प्रादीनां क्तार्थे तत्पुरुषवचनात् ॥ २३ ॥**

सिद्धमेतत्। कथम्? प्रादीनां क्तार्थे तत्पुरुषो भवतीति वक्तव्यम्।

कानि पुनस्य योगस्य प्रयोजनानि?

---

प्र०—'प्रपर्णक' इत्युदाहरणम्। क्तलोपप्रदर्शनार्थं तु 'प्रपतितपर्ण' इत्युक्तम्। यथा 'निष्कौशाम्बि'रिति तत्पुरुषसंज्ञा भवति एवं प्रपर्णक इत्यत्रापि स्यादित्यर्थः। तत्पुरुषोऽत्रेति। परिगणनं मनसि कृत्वाह। इतरो विशेषमप्रतिपद्याह—तत्पुरुष इतीति। सिद्धं त्विति। क्तोऽर्थो यत्र समासार्थस्तत्र तत्पुषसंज्ञा। 'प्रपर्णक' इत्यत्र तु क्तोऽर्थः पर्णविशेषणं, समासार्थस्त्वन्य एवेति बहुव्रीहिर्भवति।

कानि पुनरिति। अस्मिन्प्रकरणे पठितानां संज्ञानां यासां समावेशो नेष्यते ताः प्रयोजनम्। प्रकरणान्तरविहिता अप्यनिष्यमाणसमावेशा उपसङ्ख्यातव्यत्वेन

---

उ०—ननु तत्रापि समाहारस्याऽन्यपदार्थस्य सत्त्वात्कथमवकाशोऽत आह—यदेति। एवं सति पञ्चानां नदीनां समाहार इत्यर्थे परत्वाद्बहुव्रीहिः प्राप्नोति, सोपि शेषग्रहणादेव वारणीयः परंकार्यत्वमिति पाठे इति दिक्। वस्तुतः 'समाहारे चायमिष्यत' इत्युक्तेर्भावसाधनत्वाच्च समाहारशब्दस्य समाहाररूपेऽन्यपदार्थेऽयमपवाद इति मत्वा द्वीरावतीके शेषग्रहणाद्भाष्ये दोष उक्तः। सङ्ख्येत्यनुवर्तमाने 'नदीभिश्चे'त्यत्रैषां पदानां ग्रहणेनाऽशेषत्वात्। प्रपतितपर्णे 'प्रादयो गताद्यर्थे'इत्यस्याऽप्रवृत्तेराह—प्रपर्णक इति। भाष्ये—क्तार्थे प्रतिषेध इत्यस्य—क्तार्थे वाच्ये बहुव्रीहिप्रतिषेधो वक्तव्य इत्यर्थः। ननु कुगतीतिसूत्रविहितः समासोपि सुपुरुष इत्यादौ सावकाशोऽत आह—परिगणनमिति। 'प्रादयो गताद्यर्थे'-इत्यादीन्यपि परिगणनद्वारा स्वतन्त्रविधायकान्येव, न तु तत्प्रपञ्चभूतान्येवेति भावः। ननु क्तार्थे विशेष्ये तत्पुरुषः, तद्भिन्ने बहुव्रीहिरिति भिन्नविषयत्वात्तत्पुरुष इति चेत्याद्यनुपपन्नमत आह—इतर इति। 'प्रादयो गताद्यर्थे' इति परिगणनरूपं विशेषमज्ञात्वेत्यर्थः। तथा च तत्र तत्पुरुषप्रतिषेधो वक्तव्य इत्याशयः। वस्तुतस्तत्र शेषग्रहणमुभयोरप्यावश्यकं 'शेषाद्विभाषे'ति

## प्रयोजनं ह्रस्वसंज्ञां दीर्घप्लुतौ ॥ २४ ॥

ह्रस्वसंज्ञां दीर्घप्लुतसंज्ञे बाधेते* ।

## तिङ्सार्वधातुकं लिङ्लिटोरार्धधातुकम् ॥ २५ ॥

तिङ्सार्वधातुकसंज्ञां लिङ्लिटोरार्धधातुकसंज्ञा बाधते† ।

## अपत्यं वृद्धं युवा ॥ २६ ॥

अपत्यं वृद्धं युवसंज्ञा बाधते‡ ।

प्र०–प्रयोजनानि भवन्तीति प्रश्नपूर्वकं दर्शयितुमाह—ह्रस्वसंज्ञामिति । 'उकालोऽज्झ्रस्व-संज्ञ' इत्युक्तम् । उकारश्चाऽणत्वाद् द्विमात्रत्रिमात्रयोर्ग्राहक इति तयोरपि ह्रस्वसंज्ञा प्राप्ता दीर्घप्लुतसंज्ञाभ्यां बाध्यते । स च बाधस्तत्रैव सूत्रे विस्तरेण प्रतिपादितः । तिङ्सार्व-धातुकमिति । लिङ्लिटोश्च सार्वधातुकसंज्ञायां सत्यां तन्निबन्धनाः शबादयः प्राप्नु-वन्ति । आर्द्धधातुकसंज्ञा तु तन्निबन्धनेडाद्यर्था 'छन्दस्युभयथे'ति तु तिङामार्द्धधातुक-संज्ञार्थं शेषस्यापि सार्वधातुकसंज्ञार्थं स्यादित्यज्ञापकमसमावेशस्य । अपत्यं वृद्धमिति । अत्र समावेशे सति शालङ्केः पैलस्य च यूनश्छात्रा इति विवक्षिते 'गोत्रेऽलुगची'ति फक्फिञोरलुक्प्रसज्येत । 'फक्फिञोरन्यतरस्या'मित्ययं तु लुग्वकल्प आनन्तर्याद्यूनि

उ०–सूत्रे शेषाधिकारस्स्थादित्यर्थलाभाय, त्रिकतश्च शेषः । तेन 'परं कार्य'मिति पाठे सङ्ख्या-समानाधिकरणनञ्समासकृल्लोपेषु दोषः परिहार्यः । एवं च तद्दोषोक्तिरेकदेश्युक्तिः । 'उन्मत्त-गङ्ग'मित्यत्र तु दोषः स्थित एवेति 'परं कार्य'मिति पाठो दूषितो भगवता, ऋत्विये दोषाच्चेति बोध्यम् । नन्वेतदवधिप्रविष्टसंज्ञासु फलसत्त्वात्प्रश्नानुपपत्तिरत आह—अस्मिन्निति । स च बाध इति । तत्परत्वसमानार्थकालग्रहणेन प्रतिपादित इति भावः । ननु समावेशे 'छन्द-स्युभयथे'ति व्यर्थं स्यादत आह—छन्दसीति । तिङां—लडाद्यादेशानाम् । शेष-स्यापि—तव्यादेः । वस्तुतोऽत्र 'लङः शाकटायनस्यैवे'त्यत एवकारानुवृत्तेर्न समावेशः । एवं 'लिङाशिषी'त्यत्रापि । भाष्ये—वृद्धं—गोत्रम् । अत्र समावेश इति । शलङ्कोर्गोत्रापत्यं बाह्वादीञ्, शलङ्कोः शलङ्कादेशश्च । ततो यूनि 'यञिञोश्चे'ति फक् । 'पैलादिभ्यश्चे'ति लुक् । पीलाशब्दात् 'पीलाया वे'तिगोत्रेऽण् । ततो यू'न्यणो द्व्यच' इति फिञ् । तस्य पूर्वेण लुक् । न च 'गोत्रेऽलुगची'त्यनेनाऽलुक्यपि 'यूनि लु'गिति परो लुग्भविष्यतीति वाच्यम् । ततोऽपि परस्य 'फक्फिञोरन्यतरस्या'मित्यस्य प्रवृत्त्या पक्षे प्रत्ययश्रवणप्रसङ्गादिति भावः । सिद्धान्ते तु विकल्पो नेष्यत एवेत्याह—फक्फिञोरिति । अन्तरङ्गत्वात्पैलादिलुकाऽपहारेण सिद्धान्ते यूनि लुगप्राप्तेरिति भावः । 'गोत्रेऽलुगची'त्यत्र'भूम्नि प्राप्तस्य लुकोऽलु'गिति भाष्योक्तेरत्र दोष-

* ऊकालोऽज्झ्रस्वदीर्घप्लुतः १. २. २७.

† तिङ्शित् सार्वधातुकम्; लिट् च; लिङाशिषि ३. ४. ११३; ११५; ११६.

‡ अपत्यं पौत्रप्रभृति गोत्रम्; जीवति तु वंश्ये युवा ४. १. १६२; १६३.

## घिं नदी ॥ २७ ॥

घिसंज्ञां नदीसंज्ञा बाधते× ।

## लघु गुरु ॥ २८ ॥

लघुसंज्ञां गुरुसंज्ञा बाधते+ ।

## पदं भम् ॥ २९ ॥

पदसंज्ञां भसंज्ञा बाधते† ।

## अपादानमुत्तराणि१ धनुषा विध्यति कंसपात्र्यां भुङ्क्ते गां दोग्धि धनुर्विध्यतीति ॥ ३० ॥

अपादानसंज्ञामुत्तराणि कारकाणि बाधन्ते । क्व? धनुषा विध्यति, कंसपात्र्यां भुङ्क्ते, गां दोग्धि, धनुर्विध्यति ॥ 'धनुषा विध्यती'त्यपाययुक्तत्वाच्च 'ध्रुवमपायेऽपादानम्' [ १. ४. २४ ] इत्यपादानसंज्ञा प्राप्नोति, 'साधकतमं करणम्' [ ४२ ] इति च करणसंज्ञा । करणसञ्ज्ञा परा, सा भवति ॥ 'कंसपात्र्यां भुङ्क्त' इत्यत्रापाययुक्तत्वाच्च 'ध्रुवमपायेऽपादान'मित्यपादानसंज्ञा प्राप्नोति, 'आधारोऽधिकरणम्' [ ४५ ] इति चाऽधिकरणसंज्ञा । अधिकरण-

प्र०-लुगित्येतमेव लुकं बाधते न तु 'पैलादिभ्यश्चे'त्येतमपि । घिं नदीति । 'शकट्यै'इत्यत्र घिलक्षणगुणाऽभावः । लघ्विति । 'अततक्ष'दित्यादौ सन्वद्भावाऽभाव । धनुषा विध्यतीति । अपायविवक्षया विना धनुषो व्यधेः साधकतमत्वाऽभावात्संज्ञाद्वय-

उ०-श्चिन्त्यः । तस्मादौपगवस्य गोत्रस्यापत्यमौपगविरित्यादा'वेको गोत्र' इति नियमादिञ् न स्यादिति फलं बोध्यम् । तुशब्दस्यैवकारार्थत्वादिहाऽसमावेशो बोध्यः । शकट्यै इति । यद्यपि नदीसंज्ञाविधानसामर्थ्याद्घित्वं नेति प्रागुपपादितं तथापि समावेशस्याऽनिष्टतामात्रेणोदाहरणत्वमुक्तमिति बोध्यम् । नन्वत्र धनुषः करणत्वेनाऽपादानत्वप्रसक्तिरेव नेत्यत आह—अपायेति । धनुर्निर्गतशरकरणकवेधे धनुषः साक्षात्करणत्वाऽसम्भवादवश्यं निर्गमनपूर्वके वेधे विध्यतिं वर्त्तयित्वा तद्घटकनिर्गमनस्याऽवधिभावेनैव निर्वर्त्तकं धनुर्वेधे परम्परया करणमित्यवश्यं वाच्यमित्यस्त्युभयोः प्राप्तिरितिं भावः । कंसपात्र्यामित्यादेरपि कंसपात्रीतो निर्गतमन्नं भुङ्क्ते इत्याद्यर्थः । ईदृशस्थले धनुःकंसपात्र्यादेर्द्वैधान्वय इति बोध्यम् । न च कार्यकालपक्षे संज्ञाशास्त्राणां विधिप्रदेशेष्वेव वाक्यार्थेन विपरीतं परत्वं, पञ्चमीप्रदेशोपस्थितापादानसंज्ञा-

× शेषो घ्यसखि; यू स्त्र्याख्यौ नदी १. ४. ७; ३. + ह्रस्वं लघु; संयोगे गुरु १. ४. १०; ११.
† सुप्तिङन्तं पदम्; यचि भम् १.४.१४;१८. १—क्वचित्तु "अपादानमुत्तराणि" इत्येव वार्तिकम् ।

संज्ञा परा, सा भवति ॥ 'गां दोग्धी'त्यत्रापाययुक्तत्वाच्चाऽपादानसंज्ञा प्राप्नोति, 'कर्त्तुरीप्सिततमं कर्म' [ ४९ ] इति च कर्मसंज्ञा । कर्मसञ्ज्ञा परा, सा भवति ॥ 'धनुर्विध्यती'त्यत्राऽपाययुक्तत्वाच्चापादानसंज्ञा प्राप्नोति, 'स्वतन्त्रः कर्ता [ ५४ ] इति च कर्तृसंज्ञा । कर्तृसंज्ञा परा, सा भवति ।

**क्रुधद्रुहोरुपसृष्टयोः कर्म संप्रदानम् ॥ ३१ ॥**

क्रुधद्रुहोरुपसृष्टयोः कर्मसंज्ञा संप्रदानसज्ञां बाधते* ।

**करणं पराणि साध्वसिश्छिनत्तीति[1] ॥ ३२ ॥**

करणसंज्ञां† पराणि कारकाणि बाधन्ते । क्व ? 'धनुर्विध्यति', 'असिश्छिनत्ती'ति ।

**अधिकरणं कर्म गेहं प्रविशति[2] ॥ ३३ ॥**

अधिकरणसंज्ञां कर्मसंज्ञा बाध्यते‡ । क्व ? 'गेहं प्रविशती'ति ।

**अधिकरणं कर्ता स्थाली पचति[3] ॥ ३४ ॥**

अधिकरणसंज्ञां कर्तृसंज्ञा बाधते× । क्व ? 'स्थाली पचती'ति ।

**अध्युपसृष्टं कर्म ॥ ३५ ॥**

अध्युपसृष्टं कर्माऽधिकरणसंज्ञां बाधते+ ।

**गत्युपसर्गसंज्ञे कर्मप्रवचनीयसंज्ञा ॥ ३६ ॥**

गत्युपसर्गसंज्ञे कर्मप्रवचनीयसंज्ञा बाधते** ।

---

प्र०—प्रसङ्गे परत्वात्करणसंज्ञा भवति । गत्युपसर्गसंज्ञे इति । तेन सुसिक्तमित्यादौ षत्वं न भवति, 'सूपमानात् क्त' इति गतिसंज्ञकसुशब्दाश्रयमन्तोदात्तत्वं च । पूर्वपदप्रकृति-

उ०—यास्तृतीयाविध्युपस्थितकरणसंज्ञायाः परत्वात् । एव'मल्लोपोऽन'इत्याद्येकवाक्यतापन्नभसंज्ञया नलोपाद्येकवाक्यतापन्नपदसंज्ञायाः परत्वादसिद्धत्वाच्च बाधो न स्यादिति वाच्यम् । एतदधिकारस्थसंज्ञाविषये यथोद्देशपक्षस्यैवाऽङ्गीकारेणाऽदोषात् । भाष्ये—गां दोग्धीति ।

---

* क्रुधद्रुहोरुपसृष्टयोः कर्म; क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः १. ४. ३८; ३७.

१—"करणं पराणि" "करणं पराणि धनुर्विध्यति असिश्छनत्तीति" च केचित्पठन्ति ।

† साधकतमं करणम् १. ४. ४२. २—क्वचित्तु "अधिकरणं कर्म" इत्येव वार्तिकम् ।

‡ आधारोऽधिकरणम्; कर्तुरीप्सिततमं कर्म १ ४.४५;४९. ३—"अधिकरणं कर्ता" इत्येव क्वचित् ।

× आधारोऽधिकरणम्; स्वतन्त्रः कर्ता १. ४. ४५; ५४.

+ अधिशीङ्स्थासां कर्म; आधारोऽधिकरणम् १. ४. ४६; ४५.

** उपसर्गाः क्रियायोगे; गतिश्च; कर्मप्रवचनीयाः १. ४. ५९; ६०; ८३.

## परस्मैपदमात्मनेपदम् ॥ ३७ ॥

परस्मैपदसंज्ञामात्मनेपदसंज्ञा बाधते† ।

## समाससंज्ञाश्च ॥ ३८ ॥

समाससंज्ञाश्च या याः परा अनवकाशाश्च, तास्ताः पूर्वाः सावकाशाश्च बाधन्ते ।

## अर्थवत्प्रातिपदिकम् ॥ ३९ ॥

अर्थवत्प्रातिपदिकसंज्ञं भवति ।

---

प्र०—स्वर एव तु भवति । परस्मैपदसंज्ञामिति । तेना'ऽच्योष्टाऽक्रमत'इत्यादौ वृद्धिदीर्घाद्यभावः। समाससंज्ञाश्चेति । तेन 'लोहितगङ्ग'मित्यव्ययीभाव एव । 'द्वीरावतीक' इति

---

उ०—दुहेर्विभागानुकूलव्यापारानुकूलव्यापारार्थकत्वे कर्तृव्यापारजन्यफलाश्रयत्वात्कर्तुरित्यस्य प्राप्तिः । विभागनिरूपिताऽवधित्वविवक्षणाच्चाऽपादानत्वप्राप्तिः । न च पयःसंनिधौ गौर्नेप्सिततमा, कारकान्तरापेक्षयैव प्रकर्षस्य विवक्षितत्वात्, नतु स्वकक्षायामेव, कर्मान्तरापेक्षयापि । अत एवाऽश्वेन पथा दीपिकया गच्छतीत्यनेककरणयोगः । 'अकथितं चे'त्येतत्त्वपादानत्वाद्यविवक्षायामेवेति न तेन विप्रतिषेध इति दिक् । धनुर्विध्यतीत्यत्र धनुर्निर्गतशरकरणकवेधो धनुष्कर्तृक इति, धनुष्करणको धनुर्वृत्तिश्च व्यापार इति वा बोधः । स्वव्यापारे स्वस्यापि करणत्वविवक्षासम्भवात् । एवमसिश्छिनत्तीत्यादौ ।

भाष्ये—गेहं प्रविशतीति । 'गेहे प्रविशति' 'ग्रामे आगत' इत्यादि त्वसाध्वेवेति बोध्यम् । केचित्तु यदा तेषां संयोगसमानाधिकरणो व्यापारोऽर्थस्तदा कर्मत्वाऽप्राप्तेस्तत्साधुत्वं बोध्यम् । यदा तु व्यधिकरणो व्यापारोऽर्थस्तदोभयविवक्षायां भाष्योदाहरणोपपत्तिर्बोध्येत्याहुः । तत्तु हृद्युभ्यां चेत्यलुग्विधायवार्त्तिकस्थभाष्यविरुद्धम् । तत्र हि हृदिस्पृगित्यादौ द्वितीयार्थे चैषा सप्तमी द्रष्टव्येत्युक्तम् । 'गेहं प्रविशती'त्यादौ गेहाधिकरणको गेहकर्मको व्यापार इति बोधः । अत्राऽधिकरणत्वकर्मत्वयोर्नियतत्वम् । परत्वं नेति । 'उपसर्गात्सुनोतीत्यनेने'ति शेषः । प्रकृतिस्वरः,—'तत्पुरुषे तुल्यार्थे'त्यनेन । वृद्धिः,—'सिचि वृद्धि'रिति । दीर्घः,—'क्रमः परस्मैपदे'ष्विति । क्रमत इति । 'वृत्तिसर्गे'त्यात्मनेपदम् । अव्ययीभावः—अनवकाशत्वात् । बहुव्रीहिः—परत्वात् । समास इति सामान्यसंज्ञां 'सह सुपे'त्यत्र चरितार्थामव्ययीभावादिविशेषसंज्ञा न बाधन्ते समाससंज्ञाऽनुवादेन तासां विधानात् । अत एव 'समासान्ता'इत्यधिकारे'ऽव्ययीभावे शरत्प्रभृतिभ्य' इत्यादिविधानं सङ्गच्छते । एकेति । एवं चोभयोर्निरवकाशत्वान्न बाध्यबाधकभाव इति भावः । नन्वेवमपि पर्यायः स्यादत आह—चकारेति । समाविशतीति । पर्यायस्तु न, 'अव्ययादाप्सुप' इति ज्ञापकात् । संज्ञान्तर-

---

† लः परस्मैपदम्; तङानावात्मनेपदम् १. ४. ९९; १००.

गुणवचनं च ॥४०॥

गुणवचनसंज्ञं च भवत्यर्थवत् ।

समासकृत्तद्धिताऽव्ययसर्वनामाऽसर्वलिङ्गा जातिः ॥४१॥

समास—समाससंज्ञा च वक्तव्या । कृत्—कृत्संज्ञा च वक्तव्या । तद्धित—तद्धितसंज्ञा च वक्तव्या । अव्यय—अव्ययसंज्ञा च वक्तव्या । सर्वनाम—सर्वनामसंज्ञा च वक्तव्या । सर्वलिङ्गा जातिरित्येतच्च वक्तव्यम् ।

संख्या ॥ ४२ ॥

सङ्ख्यासंज्ञा च वक्तव्या ।

प्र०—बहुव्रीहिरेव भवति । गुणवचनं चेति । एकविषयत्वाच्चकारकरणाच्च गुणवचनप्रातिपदिकसंज्ञयोः समावेशो भवति । उत्तरासु च संज्ञासु 'प्रातिपदिक'मित्यनुवर्तनात्ताभिः प्रातिपदिकसंज्ञा समाविशति । गुणवचनसंज्ञा तु ताभिर्बाध्यते । तस्याश्च व्यञ्विधिः प्रयोजनम् । ब्राह्मणादिग्रहणं तु समासादिसंज्ञाविषयार्थं प्राणभृज्जात्यादिलक्षणप्रत्ययबाधनार्थं युवाद्यसमावेशार्थं च ।

सर्वलिङ्गा जातिरिति । 'लिङ्गानां च न सर्वभा'गिति लक्षणलक्षितां जातिमाश्रयति । चित्रगुत्वं, कारकत्वं, औपगवत्वं, उच्चैस्त्वं, सर्वत्वं, गोत्वं, बहुत्वं, पञ्चत्वं,

उ०—विनिर्मुक्तस्थलाऽभावेनाऽनुवृत्तिं विनैव पर्यायसिद्धिश्चेति भावः । गुणवचनसंज्ञा त्विति । एवं चाऽत्र शास्त्रे—'गुणवचन'शब्देन जातिसंज्ञाऽव्ययकृदन्ततद्धितान्तसमस्तसर्वनामसंख्याशब्दातिरिक्तः शब्दो गृह्यत इति बोध्यम् । अत एव 'द्वारवतीत्व'मित्यत्र न पुंवद्भाव इति बोध्यम् । अत्र कृत्तद्धितसंज्ञे तदन्तस्य बोध्ये, प्रातिपदिकसंज्ञासमानाधिकरणत्वात् । न च गुणिपरशुक्लादीनां गुणवचनत्वानापत्तिस्तत्र मतुब्लोपादिति वाच्यं, श्रूयमाणतद्धितान्तस्यैव तत्संज्ञाविधानेनाऽदोषात् । गुणगुणिनोरभेदविवक्षायां तथात्वाऽभावेनाऽक्षतेश्च । मतुब्लोपस्तु भेदविवक्षायां शुक्लवानित्यादेरसाधुत्वाय । तदा मतुपोऽनभिधानमाश्रित्य तु प्रत्याख्यानमिति बोध्यम् । रूपादयो जातिशब्दाः, असर्वलिङ्गत्वात् । व्यञ्विधिरिति । 'वोतो गुणवचनात्' 'त्वतलोर्गुणवचनस्ये'त्यादेरप्युपलक्षणमेतत् । ननु प्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञकत्वे ब्राह्मणादिग्रहणं व्यर्थमत आह—ब्राह्मणादीति । अन्यथा ब्राह्मणगणपत्यादिभ्यः ष्यञ्न स्यात्, प्राणभृज्जातिलक्षणो ब्राह्मणशब्दे, वयोवचनलक्षणो बालशब्दे । निपुणादयो युवादयः । आश्रयतीति । न लोकप्रसिद्धामित्यर्थः । एकशब्दे सङ्ख्यासञ्ज्ञया, राजपुरुषे समाससञ्ज्ञया बाधमाशङ्क्याह—ऐक्यमिति । राजपौरुष्यमिति । अनुशतिकादित्वादुभयपदवृद्धिः । भाष्ये—किमर्थमिति । 'गुणवचनं चे'त्यारभ्य'एकद्रव्योपनिवेशिनी सञ्ज्ञे'त्यन्तं वचनजातं किमर्थमित्यर्थः । वैयर्थ्यमेवोपपादयति—यथान्यास एवेति ।

ङ्ग च ॥ ४३ ॥

ङसंज्ञा च वक्तव्या ॥ का पुनर्ङसंज्ञा ? षट्संज्ञा ।

एकद्रव्योपनिवेशिनी संज्ञा ॥ ४४ ॥

'एकद्रव्योपनिवेशिनी संज्ञे'त्येतच्च वक्तव्यम् । किमर्थमिदमुच्यते, यथान्यास एव भूयिष्ठाः संज्ञाः क्रियन्ते ?

सन्ति चैवाऽत्र काश्चिदपूर्वाः संज्ञाः । अपि चैतेनानुपूर्व्येण संनिविष्टानां बाधनं यथा स्यात् । गुणवचनसंज्ञायाश्चैताभि [संज्ञाभि]र्बाधनं यथा स्यादिति ॥१॥

विप्रतिषेधे परं कार्यम् ॥ १ । ४ । २ ॥

'विप्रतिषेध' इति कोऽयं शब्दः ? विप्रतिपूर्वात्सिधेः कर्तव्यतिहारे घञ् । इतरेतरप्रतिषेधो विप्रतिषेधः । अन्योऽन्यप्रतिषेधो विप्रतिषेधः ।

क्व पुनर्विप्रतिषेधः ?

प्र०-डित्थत्वमिति गुणवचनसंज्ञायाः समासादिसंज्ञाभिर्बाधनात्ष्यञ्न भवति । ऐक्यं राजपौरुष्यमित्यादौ तु ब्राह्मणादित्वात्ष्यञ् ॥१॥

विप्रतिषेधे । आचार्यवचनानां सर्वेषां प्रामाण्याभ्युपगमाल्लौकिकार्थस्य विरोधवाचिनो विप्रतिषेधशब्दस्येह ग्रहणं न सम्भवतीति मत्वा पृच्छति—विप्रतिषेध इति कोऽयं शब्द इति । इतरस्तु लौकिकाऽर्थप्रवृत्तिरेवोपात्तो, न ह्यस्याऽत्रान्योऽर्थः परिभाषित इति मत्वाह—विप्रतिपूर्वादिति । 'कर्मव्यतिहार' इति सिधेर्विशेषणम् । व्यतिहारविशिष्टक्रियावचनात्सेधतेर्भावे घञित्यर्थः । इतरेतरप्रतिषेधोऽन्योन्यप्रतिषेध

उ०- समाधत्ते—सन्ति चैवात्रेति । अपूर्वा इति । 'कृत्सञ्ज्ञा' तद्धितसञ्ज्ञा 'असर्वलिङ्गा जाति'रिति 'एकद्रव्योपनिवेशिनी'त्येताः, तदर्थमेतद्वचनजातमित्यर्थः । समाध्यन्तरमाह—अपि चेति । संनिविष्टानामिति निर्धारणषष्ठी । तत्र सञ्ज्ञासञ्ज्ञया जातिसञ्ज्ञाया बाधाड्डित्थेत्यादौ टाबेव । तथा तया सर्वनामसञ्ज्ञाया बाधात्सर्वायेत्यादौ न स्मै । एवं सञ्ज्ञासञ्ज्ञया सर्वप्राचीनसञ्ज्ञाबाध इत्याद्यूह्यम् । पुनः समाध्यन्तरमाह—गुणवचनसंज्ञायाश्चेति । एवं चैतदतिरिक्तशब्दत्वं शास्त्रे गुणवचनशब्दत्वमित्यर्थादुक्तमिति दिक् ॥१॥

विप्रतिषेधे । शब्दस्वरूपे सन्देहाऽभावादर्थस्य विरोधस्य प्रसिद्धत्वात्कोऽयमिति प्रश्नानुपपत्तिरत आह—आचार्येति । विरोधार्थकत्वे परस्परव्याघातादुभयोर्विरुद्धयोः शास्त्रयोरप्रामाण्यं स्यादित्यर्थः । सर्वेषामिति । अनेन शास्त्रेण पराभ्यनुज्ञानात्तस्य प्रामाण्येऽप्यन्यस्याऽप्रामाण्येन सर्वेषां तत्त्वं भग्नमिति भावः । इतर इति । अप्रामाण्यं त्वग्रे परिहरिष्यत इति

१–कचिन्न ।

**द्वौ प्रसङ्गावन्यार्थावेकस्मिन्स विप्रतिषेधः ॥ १ ॥**

द्वौ प्रसङ्गौ यदाऽन्यार्थौ भवत एकस्मिंश्च युगपत्प्राप्नुतः स विप्रतिषेधः । क्व पुनरन्यार्थौ क्व चैकस्मिन्युगपत्प्राप्नुतः ? वृक्षाभ्यां वृक्षेष्वित्यन्यार्थौ, वृक्षेभ्य इत्यत्र युगपत्प्राप्नुतः* ॥ किं च स्यात् ?

**एकस्मिन्युगपदसंभवात्पूर्वपरप्राप्तेरुभयप्रसङ्गः ॥ २ ॥**

एकस्मिन्युगपदसंभवात्पूर्वस्याश्च परस्याश्च प्राप्तेरुभयप्रसङ्गः ॥ इदं विप्रतिषिद्धं यदुच्यते—'एकस्मिन्युगपदसंभवात्पूर्वपरप्राप्तेरुभयप्रसङ्ग' इति । कथं

प्र०-इति । स एवार्थः पर्यायाभ्यां प्रदर्श्यते । यद्वा पर्यायाऽप्रतिपत्ती शब्दद्वयेन प्रदर्श्येते । विरोधं पूर्वोक्तेन न्यायेनाऽसम्भावयन्पुनः पृच्छति—क्व पुनरिति । द्वौ प्रसङ्गाविति । सर्वस्याचार्यवचनस्य प्रामाण्येऽपि लब्धावकाशयोर्वचनयोरेकस्मिन्विषये विरुद्धकार्यद्वयसमर्पणादस्त्येव विरोधः । प्रसज्येते इति प्रसङ्गौ—विधी ।

अन्यार्थाविति । अन्यत्र सावकाशौ । स विप्रतिषेध इति । युगपद्याऽसौ प्राप्तिः सा विरोधनिमित्तत्वादभेदोपचाराद्विप्रतिषेधशब्देनोक्ता । किं च स्यादिति । यदीदं नारभ्येतेति भावः । इतरो व्यक्तिपदाऽर्थाश्रयेण पर्यायप्रसङ्गमाह—एकस्मिन्निति ।

उ०-भावः । कर्मव्यतिहारे घञो विधानाऽभावादाह—सिधेरिति । सेधतेरिति । परस्परं प्रतिकूलं गमनमित्यर्थबोधने तस्यैव समर्थत्वादिति भावः । पौनरुक्त्यं परिहरति—स एवार्थ इति । कस्यचित्कश्चित्प्रसिद्ध इति पर्यायोपादानमिति भावः । अस्याऽगतिकगतित्वेनाह—यद्वेति । प्रतिषेधशब्द एकत्र पाक्षिकप्रतिषेधपरः, परत्राऽऽत्यन्तिकप्रतिषेधपर इति भावः । एवं च सकृद्गति—पुनःप्रसङ्गपक्षयोः सिद्धये पर्यायाऽप्रतिपत्तिफलस्य कादाचित्कप्रवृत्तिप्रतिबन्धस्य, सर्वथा तत्प्रतिबन्धस्य च प्रतिषेधशब्दार्थत्वेन लोकसिद्धविरोधार्थकतैव फलितेति ध्येयम् । पूर्वोक्तेन—अप्रामाण्यापत्तिरूपेण । ननु 'प्राप्नुत' इति क्रिया न 'स'शब्देन परामर्शयोग्या, सर्वनामपरामर्शाऽयोग्यत्वस्यैव तस्यामसत्त्वस्य 'वति'सूत्रे कैयटेन वक्ष्यमाणत्वात् । कर्तृपरामर्शस्तु न, तस्य गुणत्वात्, द्विवचनापत्तेश्चाऽत आह—युगपदिति । आख्यातोपात्तक्रियायाः परामर्शाऽभावेऽप्यध्याहृतप्राप्त्यादिपदोपात्तायाः परामर्शे न दोषः । लिङ्गं तु प्रतिनिर्देश्याऽभिप्रायेणेति बोध्यम् । ननु सा न विप्रतिषेधोऽत आह—विरोधनिमित्तत्वादिति । विरोधफलबाधनिमित्तत्वादित्यर्थः । नन्वनेन परस्य प्रतिपादनात्कथमयं प्रश्नोऽत आह—यदीदमिति । तदनारम्भेऽन्यत्र सावकाशयोः सामर्थ्याऽभावेन कथं पर्यायप्राप्तिरत आह—इतरो व्यक्तीति । पर्यायेति । एवं च पाक्षिकबाधो विसेधफलमिति भावः । भाष्ये—एकस्मिन्नित्यस्य 'लक्ष्ये' इति शेषः । असंभवादित्यस्य 'कार्ययो'रिति शेषः । पूर्वपरप्राप्ते-

* सुपि च; बहुवचने झल्येत् ७. ३. १०२; १०३.

ह्येकस्मिंश्च नाम युगपदसंभवः स्यात्पूर्वस्याश्च परस्याश्च प्राप्तेरुभयप्रसङ्गश्च स्यात् ? नैतद्विप्रतिसिद्धम् । यदुच्यते—'एकस्मिन्युगपदसंभवा'दिति, कार्ययोर्युगपदसंभवः, शास्त्रयोरुभयप्रसङ्गः ।

## तृजादिभिस्तुल्यम् ॥ ३ ॥

तृजादिभिस्तुल्यं पर्यायः प्राप्नोति । तद्यथा,—तृजादयः† पर्यायेण भवन्ति । किं पुनः कारणं तृजादयः पर्यायेण भवन्ति ?

## अनवयवप्रसङ्गात्प्रतिपदं विधेश्च ॥ ४ ॥

अनवयवेन प्रसज्यन्ते, प्रतिपदं च विधीयन्ते ।

प्र०—अनवयवप्रसङ्गादिति । सर्वव्यक्त्युद्देशेन शास्त्रस्य प्रवर्त्तनादित्यर्थः ।
प्रतिपदं विधेश्चेति । अनेनोत्सर्गापवादवैधर्म्यं दर्शयति । नह्युत्सर्गः प्रतिपदं विधीयते । तत्र पर्यायप्रसङ्गे नियमार्थमिदं—'परमेव भवति न पूर्व'मिति । एतत्सूत्रारम्भाच्च पूर्वस्य लक्षणस्य तत्रानारम्भोऽनुमीयते । तदुच्यते 'सकृद्गतौ विप्रतिषेधे

उ०—रिति । पूर्वस्य परस्य च योगस्य प्राप्तेरित्यर्थः । वचनद्वयप्रामाण्यादिति यावत् । भगवता तु धर्मधर्मिणोरभेदमाश्रित्य प्राप्तिशब्देन पूर्वपरशब्दयोः सामानाधिकरण्यमाश्रितम् । उभयप्रसङ्ग इति । 'पर्यायेणे'ति शेषः । सूत्रयोरेवाऽसम्भवप्राप्ती उक्ते इति मत्वा पृच्छति—इदं विप्रतिषिद्धमिति । शास्त्रयोरुभयप्रसङ्ग इति । पर्यायेण शास्त्रयोः प्राप्तेरुभयप्रसङ्ग इत्यर्थः । ननु शास्त्रप्रसङ्गोऽपि कार्यार्थ एवेति कार्ययोर्युगपदसम्भवे कथं शास्त्रयोः प्रसङ्गोऽत आह—तृजादिभिरिति । एवं च युगपदसम्भवः पर्यायेणोभयप्रसङ्ग इति तात्पर्यम् । सर्वव्यक्त्युद्देशेनेति । ण्वुल्तृजचां धातुमात्राद्विधानेन विनिगमकाऽभावादिति भावः । नन्वनवयवेन प्रसक्तस्यापि सामान्यशास्त्रस्य विशेषेणात्यन्तिकबाधदर्शनादिदमप्रयोजकमत आह—अनेनेति । 'प्रतिपदं विधेश्चे'त्यस्य 'बाधकाऽभावा'दिति शेषः । उत्सर्गस्य सामान्यविषयत्वमपवादस्य विशेषविषयत्वमिति तद्व्यक्तिविषयविशेषशास्त्रेण सामान्यशास्त्रस्य तद्विषयकत्वं बाध्यते, तृजादौ तु नैवमित्युभयोरपि प्रतिव्यक्ति प्रवृत्तिः । एवं प्रकृतेऽपि दीर्घैत्वशास्त्रयोः कस्यापि व्यक्तिविशेषविषयकत्वाऽभावेनोभयोरपि स्वस्वविषयसर्वव्यक्तिविषयतयोपप्लवेन पर्यायप्रसङ्ग इति भावः । नन्वेवं तद्विषयकपूर्वलक्षणस्याऽप्रमाणत्वं स्यादत आह—एतत्सूत्रेति । एतच्छास्त्रबलेन पूर्वस्य तद्व्यतिरिक्तव्यक्तिविषयतैव कल्प्यत इति भावः । ननु तुल्यबलत्वेनैव पर्याय उपपादितस्तत्कथं तेनैवाऽप्रतिपत्त्चिरापाद्यतेऽत आह—इदानीमिति । जातिपक्षे तज्जातेरेवोद्देश्यत्वेन तज्जात्युपरक्तव्यक्तौ क्वचित्कार्यान्वयेपि शास्त्रस्य चारितार्थ्यमिति

† ण्वुल्तृचौ ३. १. १३३.

**अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात् ॥ ५ ॥**

अप्रतिपत्तिर्वा पुनरुभयोः शास्त्रयोः स्यात् । किं कारणम् ? 'तुल्यबलत्वात्' । तुल्यबले ह्युभे शास्त्रे । तद्यथा,—द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति । यदा [तु] तमुभौ युगपत्प्रेषयतो नाना दिक्षु च कार्ये भवतस्तद्वा यद्यसावविरोधार्थी भवति तत उभयोर्न करोति । किं पुनः कारणमुभयोर्न करोति ? 'यौगपद्याऽसंभवात्' । नास्ति यौगपद्येन संभवः ।

**तत्र[१] प्रतिपत्त्यर्थं वचनम् ॥ ६ ॥**

तत्र प्रतिपत्त्यर्थमिदं वक्तव्यम् ।

**तव्यदादीनां त्वप्रसिद्धिः ॥ ७ ॥**

तव्यदादीनां* तु कार्यस्याऽप्रसिद्धिः । नहि किंचित्तव्यदादिषु नियमकारि शास्त्रमारभ्यते येन तव्यदादयः स्युः । यश्च भवता हेतुर्व्यपदिष्टो'ऽप्रतिपत्तिर्वोभयोस्तुल्यबलत्वा'दिति, तुल्यः स तव्यदादिषु ।

नैष दोषः । अनवकाशास्तव्यदादयः, उच्यन्ते च, ते वचनाद्भविष्यन्ति ।

प्र०-यद्बाधितं तद्बाधितमेवे'ति । इदानीं जातिपक्षाश्रयेणाह—अप्रतिपत्तिर्वेति । अत्र पक्षे विध्यर्थमिदं 'परं भवती'ति । तस्मिन्कृते यदि पूर्वस्य प्राप्तिनिमित्तमस्ति ततस्तदपि प्रवर्तेत । त दुच्यते—'पुनः प्रसङ्गविज्ञानात्सिद्ध'मिति । तव्यदादीनां तु कार्यस्येति । परत्वादेः, साधुत्वस्य चेत्यर्थः । एकवाक्योपात्तत्वादनवकाशत्वाच्च नाऽस्त्येषां परत्वेन

उ०-भावः । ततस्तदपीति । अप्रवृत्तौ मानाऽभावादिति भावः । 'वृक्षेभ्य' इत्यादावेत्वे निमित्ताभावाद्दीर्घस्याऽप्रवृत्तिरित्यन्यत् । भाष्ये—तद्यथेति । तत्र—यथैकः प्रेष्य उभयोर्न करोति, तथा प्रकृते उदाहरणरूपा व्यक्तिरुभयोरपि कार्यं नाश्रयिष्यतीत्यर्थः । वचने त्वन्यत्र चरितार्थे । यथा तत्र प्रेष्यौ परस्पराऽविरुद्धकार्यकरणेन चरितार्थस्वामिनाविति भावः । 'प्रतिपत्त्यर्थ'मित्यस्य विध्यर्थमित्यर्थः । ननु तव्यदानीन्येव कार्याणि, किं तेषामपि कार्यं नामेत्यत आह—परत्वेति । एकवाक्येति । शास्त्रगतमेव पौर्वापर्यं गृह्यत इति भावः । कार्यगतपौर्वापर्याश्रयणेऽप्याह—अनवकाशत्वाच्चेति । धातुत्वजात्याक्रान्तव्यक्तौ क्व प्रवर्तते क्व नेत्यत्र विनिगमकाऽभावादिति भावः । ननु तव्यदादीत्यादिपदेन तृजादीनामपि ग्रहणात्कथं साङ्कर्यमत आह—आदीति । ननु पर्यायेणोत्पत्तिरेव प्रकारस्तस्य तृजादावपि सत्त्वेन कथं भेदोऽत

१-इदं वार्तिकत्वेन क्वचित् पठ्यते । २-इदं भाष्यमित्यन्ये । * तव्यत्तव्यानीयरः ३. १. ९६.

यश्च भवता हेतुर्व्यपदिष्टः—'तृजादिभिस्तुल्यं पर्यायः प्राप्नोती'ति तुल्यः स तव्यदादिषु ।

एतावदिह सूत्रं 'विप्रतिषेधे पर'मिति । पठिष्यति ह्याचार्य—'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवे'ति† । पुनश्च पठिष्यति—'पुनः प्रसङ्गविज्ञानात्सिद्ध'मिति‡ ।

किं पुनरियता सूत्रेणोभयं लभ्यम् ? लभ्यमित्याह । कथम् ? इह भवता द्वौ हेतू व्यपदिष्टौ—'तृजादिभिस्तुल्यं पर्यायः प्राप्नोती'ति च, 'अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वा'दिति च । तद्यदा तावदेष हेतु'स्तृजादिभिस्तुल्यं पर्यायः प्राप्नोती'ति, तदा 'विप्रतिषेधे पर'मित्यनेन किं क्रियते ? नियमः—'विप्रतिषेधे परमेव भवती'ति । तदैतदुपपन्नं भवति—'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवे'ति । यदा त्वेष हेतु'रप्रतिपत्तिर्वोभयोस्तुल्यबलत्वा'दिति, तदा 'विप्रतिषेधे पर'मित्यनेन किं क्रियते ? द्वारम्—'विप्रतिषेधे परं तावद्भवति, तस्मिन्कृते यदि पूर्वमपि प्राप्नोति तदपि भवति । तदैतदुपपन्नं भवति—'पुनः प्रसङ्गविज्ञानात्सिद्ध'मिति ।

प्र०–व्यवस्था । तृजादिभिरिति । आदिशब्दस्य प्रकारार्थत्वात्तृजादिभ्यस्तव्यदादयो न भिन्ना इत्यर्थः । सकृद्गताविति । यथा 'कुरुतात्त्व'मिति ह्रेर्लुक् च प्राप्नोति, तातङ् चेति परत्वात्तातङ् । तस्य स्थानिवद्भावाल्लुङ्न प्रवर्तते । द्वारमिति । अप्रतिपत्त्यपनयनेन परशास्त्रप्रवृत्तेर्द्वारम्, उपायः क्रियत इति यावत् । पुनः प्रसङ्गविज्ञानादिति । 'ईजतु'रिति परत्वात्सम्प्रसारणे कृते द्विर्वचनं भवति । लक्ष्यानुरोधेन च व्यक्त्याकृति-

उ०–आह—तृजादीति । भाष्ये—आचार्यो वार्तिककारः । यथेति । न च लुक्कृताऽकृतप्रसङ्गित्वेन नित्यः, शब्दान्तरप्राप्त्या तस्याऽप्यनित्यत्वात् । न चान्तरङ्गानपीति न्यायात्कैमुतिकन्यायेन परादपि लुको बलवत्त्वेनेदमयुक्तमिति वाच्यम् । परिभाषाणामिष्टसिद्धिमात्रफलकत्वात् । ईजतुरिति । न च पूर्वं द्वित्वप्रवृत्तावपि वचिस्वपीति लिट्यभ्यासस्येति संप्रसारणाभ्यामिष्टं सिध्यतीति वाच्यम् । 'न संप्रसारणे' इतिनिषेधेनाऽभ्यासस्य सम्प्रसारणाऽनापत्तेः । व्यक्त्याकृतीति । केचित्तु नहि 'व्यक्तिपक्षे सर्वं शास्त्रं प्राप्नोति न तु जातिपक्षे' इत्यत्र मानमस्ति । पक्षद्वयेपि सर्वव्याप्तिरेकशेषसूत्रे भाष्ये स्पष्टमुक्ता । तत्र 'न ब्राह्मणं हन्या'दित्यादौ सर्वब्राह्मणहननिषेधाय जातिपक्षाश्रयणमिति च स्पष्टम् । किं च भाष्यं—लक्ष्य-साधारण्येन दृष्टान्तभेदेन पर्यायाऽप्रतिपत्ती ये प्राप्ते तदाश्रयेण तद्वचनोपपत्तिपरं, न तु जाति-

† १. १. ४२ वा० ५; १३९ वा० १; ६. ४. ६२ वा० २; ७. १. २१ वा० २

‡ ७. १. ९२ वा० ३; ७. २. १ वा० ३; ७. ४. १ वा० १; १० वा० १.

## [ विप्रतिषेधे परमित्युक्त्वाऽङ्गाधिकारे पूर्वम् ॥[1] ]

विप्रतिषेधे परमित्युक्त्वाऽङ्गाधिकारे पूर्वमिति वक्तव्यम् । किं कृतं भवति ? पूर्वविप्रतिषेधा न पठितव्या भवन्ति—'गुणवृद्ध्यौत्वतृज्वद्भावेभ्यो नुम्पूर्वविप्रतिषिद्धम्', 'नुमचिरतृज्वद्भावेभ्यो नु'डिति* । कथं ये परविप्रतिषेधाः—'इस्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेने'ति† । सूत्रं च भिद्यते ।

यथान्यासमेवास्तु । कथं ये पूर्वविप्रतिषेधाः ? 'विप्रतिषेधे पर'मित्येव सिद्धम् । कथम् ? परशब्दोऽयं बह्वर्थः । अस्त्येव व्यवस्थायां वर्तते । तद्यथा—'पूर्वः पर' इति । अस्त्यन्यार्थे वर्तते । [तद्यथा[2]—] 'परपुत्रः' 'परभार्या' । अन्यपुत्रः अन्यभार्येति गम्यते । अस्ति प्राधान्ये[3] वर्त्तते । तद्यथा—'परमियं ब्राह्मण्यस्मिन्कुटुम्बे' । प्रधानमिति गम्यते । अस्तीष्टवाची परशब्दः । तद्यथा—'परं धाम गत' इति । इष्टं धामेति गम्यते । तद्य इष्टवाची परशब्दस्तस्येदं ग्रहणम्, विप्रतिषेधे परं—यदिष्टं तद्भवती'ति[4] ।

प्र०—पदार्थाश्रयणादनयोः परिभाषयोर्विषयविभागोऽवसेयः । तद्य इष्टवाचीति । इष्टाऽनिष्ट-

उ०—व्यक्त्याश्रयेणेति स्पष्टमेव । अन्यथा जातिपक्षप्रवृत्तामप्रतिपत्तिमुपक्रम्य तव्यादिषु दोषाशङ्कापरं भाष्यमसङ्गतं स्यात् । अनवकाशत्वेनैषां न परत्वेन व्यवस्थेति त्वदुक्त्यसङ्गत्यापत्तेश्च, अग्रे तृजादितुल्यताया एव तेषु प्रतिपादनाच्च । नहि तृजादयो व्यक्तिपक्षे एव सर्वविषयाः, अपि तु जातिपक्षेऽपि । किं च व्यक्तिपक्षेऽप्यन्यव्यक्तिविषयलाभेन चरितार्थस्येयं व्यक्तिर्विरोधात्स्वविषयकत्वं न कल्पयतीत्युपपत्तिरस्ति । किं च जातिपक्षे तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव नैतद्विषयकत्वमित्यत्र विनिगमकाऽभावः । तत्रैकः शास्त्रदृष्टान्तोऽपरो लौकिकस्तयोराश्रयणे लक्ष्यानुसारो बीजमित्येव वक्तुमुचितम् । अन्यथा तव व्यक्तिपदार्थाश्रयेण संमते सकृद्गतिन्याये कुरुतात्वमित्युदाहरणं त्वद्दत्तमसङ्गतं स्यात् । 'कुरुशब्दाद्धेलुं'गिति वचनस्य तातङभावपक्षे चारितार्थ्येन 'कुरुशब्दाद्धेस्तात'ङिति वचनस्यानवकाशत्वेन विप्रतिषेधाऽप्रसक्तेरिति वदन्ति । अङ्गाधिकारस्थवक्ष्यमाणपूर्वविप्रतिषेधवार्तिकाश्रयणे गौरवं मत्वाह—विप्रतिषेधे इति । पूर्वं विप्रतिषिद्धमिति कर्मधारयः । नुम्शब्दस्वरूपस्य विशेष्यत्वान्नपुंसकनिर्देशः । अङ्गाधिकारे परविप्रतिषेधस्याऽपीष्टत्वेनेदमसङ्गतं मत्वाहाऽन्यः—कथमिति । सूत्रं च भिद्यत इति । अधिकसूत्रकरणादिति भावः । चेनाऽनङ्गाधिकारस्थपूर्वविप्रतिषेधाऽसंग्रहरूपदोषसंग्रहः । सूत्रं भिद्यते चेत्यन्वयः ।

व्यवस्थायामिति । तदाकाङ्क्षप्रवृत्तिनिमित्ते इत्यर्थः । ननु लक्षणचक्षुषां तद्विभागो दुर्ज्ञेयोऽत आह—इष्टानिष्टेति । अङ्गशब्दस्य मुख्यो योऽर्थस्तस्य प्रकृतेऽभावादाह—

१—इदं वार्तिकं क्वाचित्कम् । * ७. १. ९५ वा० १०; ११. † ७. १. १०० भाष्यम् ।
२—क्वचिन्न । ३—'प्रधाने'पा० । ४—'इति' क्वचिन्न ।

अन्तरङ्गं च ॥ ८ ॥

अन्तरङ्गं च बलीयो भवतीति वक्तव्यम् ॥ किं प्रयोजनम् ?

**प्रयोजनं यणेकादेशत्वोत्त्वानि गुणवृद्धिद्विर्वचनाऽल्लोपस्वरेभ्यः ॥९॥**

गुणाद्यणादेशः—स्योनः स्योना। गुणश्च प्राप्नोति यणादेशश्च†। परत्वाद् गुणः स्यात्। यणादेशो भवत्यन्तरङ्गतः॥ वृद्धेर्यणादेशः—द्यौकामिः स्यौकामिः। वृद्धिश्च प्राप्नोति यणादेशश्च×। परत्वाद्वृद्धिः स्यात्। यणादेशो

---

प्र०–विभागश्च व्याख्यानाद्बोध्यः। अन्तरङ्गं चेति। अन्तर्मध्येऽङ्गानि निमित्तानि पारार्थ्याद्यस्य तदन्तरङ्गमित्युच्यते। एवं बहिरङ्गानि यस्य तद् बहिरङ्गम्। एतच्च न्यायसिद्धमेवाऽनूदितम्। कार्यमित्यत्रार्हे कृत्यः। करणार्हं कार्यम्। तुल्यबलं च करणार्हमिति नित्याऽनित्योत्सर्गापवादान्तरङ्गबहिरङ्गेष्वस्य सूत्रस्याऽव्यापारः। स्योन इति। सिवेर्बाहुलकान्नप्रत्यये कृतेऽपवादत्वाद्वलोपं बाधित्वा गुणात्पूर्वमन्तरङ्गत्वादूठ् भवति। तत्र कृतेऽन्तरङ्गत्वाद्यणा गुणो बाध्यते। बहिरङ्गस्याप्यूठो यणादेशे कर्तव्येऽसिद्धत्वं न भवति, 'नाजानन्तर्य'इति वचनात्। द्यौकामिरिति। ननु कृतयणादेशात्तद्धितोत्पत्तौ वृद्ध्या भाव्यमिति नास्ति युगपद्यणवृद्ध्योः प्राप्तिः। एवं तर्ह्यकृतव्यूहाः पाणिनीया इति दि उ काम इ इति स्थिते अत्र यणवृद्ध्योर्युगपत्प्रसङ्गः। अथवा द्यौकामिरिति पदं यदा विभज्यान्वाख्यायते—दिव्काम इ इति, तदा 'दिव उ'दित्युत्त्वे कृते यणवृद्धी प्राप्नुतः।

---

उ०–अन्तर्मध्ये इति। बहिरङ्गसमुदायस्य मध्येऽन्तर्भूतानीत्यर्थः। अङ्गशब्दस्य निमित्तेषु वृत्तौ निमित्तं दर्शयति—पारार्थ्यादिति। एवं चाऽन्तर्भूतनिमित्तापेक्षमन्तरङ्गं बहिर्भूतनिमित्तापेक्षं च बहिरङ्गमिति भावः। एतच्च न्यायेति। स च न्यायो'ऽचःपरस्मि'न्नित्यत्र भाष्ये दर्शितः। करणार्हं—करणयोग्यम्। तुल्यबलं चेति। यद्यपि विप्रतिषेधशब्देनेदमपि लब्धुं शक्यं तथापि तदेतदर्थबोधनेऽसमर्थमिति भावः, कदाचिल्लोके दुर्बलबलवतोरपि विरोधदर्शनात्। नित्याऽनित्येति। नित्यस्य बलवत्त्वबीजं तु कृताऽकृतप्रसङ्गित्वेनावश्यकतैव। अन्तरङ्गं प्रथमं बुद्धावारोहतीति तत्काले बहिरङ्गानुपस्थितेस्तदेव प्रथमं प्रवर्तते। एवं च क्वचिद्भाष्ये 'परत्वान्नित्यत्वाच्चे'त्यादौ परत्वादित्युक्तिरेकदेशिन इति बोध्यम्।

पूर्वमन्तरङ्गत्वादिति। अन्तरङ्गत्वाभावेपि नित्यत्वेनोठ् सुसाध इत्युक्तं 'येन विधि'रिति सूत्रे। इदमुदाहरणमुणादिषु व्युत्पत्तिपक्षवादिनां मते। कृतेऽन्तरङ्गत्वादिति। अन्तर्भूतनिमित्तकत्वरूपादित्यर्थः। युगपत्प्रसङ्ग इति। 'अन्तरङ्गन्यायमनालोचयतः पूर्वपक्षिण' इति शेषः। नन्वकृतव्यूहपरिभाषा नास्त्येव। किं च तद्विषये नाऽन्तरङ्गन्याय इति भाष्याऽसङ्गतिरित्यत आह—अथवेति। एवं चाऽनयैव सिद्धे समर्थानामित्यत्र समर्थग्रहणं न कार्य-

---

† पुगन्तलघूपधस्य च ७. ३. ८६; इको यणचि ६. १. ७७.

× तद्धितेष्वचामादेः ७. २. ११७; इको यणचि ६. १. ७७.

भवत्यन्तरङ्गतः ॥ द्विर्वचनाद्यणादेशः—दुद्यूषति सुस्यूषति । द्विर्वचनं च प्राप्नोति यणादेशश्च+ । नित्यत्वाद् द्विर्वचनं स्यात् । यणादेशो भवत्यन्तरङ्गतः ॥ अल्लोपस्य च यणादेशस्य च नास्ति संप्रधारणा ॥ स्वराद्यणादेशः—द्यौकामिः स्यौकामिः । स्वरश्च प्राप्नोति यणादेशश्च† । परत्वात्स्वरः स्यात् । यणादेशो भवत्यन्तरङ्गतः ॥ गुणादेकादेशः—'काद्रवेयो मन्त्रमपश्यत्' । गुणश्च प्राप्नोत्येकादेशश्च‡ । परत्वाद् गुणः स्यात् । एकादेशो भवत्यन्तरङ्गतः ॥ वृद्धेरेकादेशः—वैक्षमाणिः सौत्थितिः । वृद्धिश्च प्राप्नोत्येकादेशश्च* । परत्वाद्वृद्धिः

प्र०–दुद्यूषतीति । दिवेः सन् । 'सनीवन्तर्द्ध'ेति पक्षे इडभावः । 'हलन्ताच्चे'ति कित्त्वम् । ऊडादेशः । तत्र यण्च प्राप्नोति, द्विर्वचनं च । नित्यत्वाद् द्विर्वचनं स्यात् । एतद्भाष्यं दूषयन्ति—'द्विःप्रयोगो द्विर्वचनं षाष्ठिकं व्यवस्थापितम् । तत्र शब्दान्तरप्राप्त्या द्विर्वचनमनित्यं, यण्तु नित्यः' इति वदन्तः । अल्लोपस्येति । ननु 'गाण्डीवधन्वने'-त्यत्रास्ति सम्प्रधारणा । गाण्डीवधनु अन् अ इति स्थिते यदि पूर्वं यणादेशः, ततो 'न संयोगाद्वमन्ता'दित्यल्लोपनिषेधाद्रूपं सिध्यति । अथ तु परत्वादल्लोपः स्यात्ततो यण् न स्यात् । एवं तर्हि नित्यत्वात्पूर्वमत्र यण्भवतीति मन्यते । कृतेऽप्यल्लोपे तस्य स्थानिवत्त्वाद्यणः प्राप्त्या नित्यत्वम् । यणि कृते नाऽस्त्यल्लोपः, प्रतिषेधादिति तस्याऽनित्यत्वम् । द्यौकामिरिति । दि उ काम इ इति स्थिते यण् च प्राप्नोति 'ञ्नित्यादिर्नित्य'मिति स्वरश्च । तत्र यदि पूर्वं स्वरः स्यात्त'दोदात्तस्वरितयोर्यण'इत्यौकारः स्वरितः स्यात्, उदात्तश्चेष्यते । द्युकाम इति पूर्वपदप्रकृतिस्वरोपि यणाऽन्तरङ्गत्वाद् बाध्यते तथैव 'दिव-उ'दित्युत्त्वेन च । काद्रवेय इति । कद्रुशब्दात्'संज्ञाया'मित्यूङि कृते 'स्त्रीभ्यो ढक्'

उ०–मित्यभिप्रायः । स्थाने द्विर्वचनपक्षे यणोपि शब्दान्तरप्राप्त्याऽनित्यत्वं स्यादत आह—द्विःप्रयोग इति । वदन्त इति । कृताऽकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यताभ्युपगमे तु यणोऽपि नित्यतया परत्वाद्यणेव स्यादिति तेषामाशयः । अन्ये तु द्विःप्रयोगपक्षेपि द्वितीयः प्रयोगो द्विर्वचननिष्पाद्यः [ पर ] एव । एवं च यस्य द्वित्वं, न तस्य यण्तदनन्तरम्, किं तु द्वितीयस्य प्रयोगस्य । द्विवचनं तु यण्यपि कृते तस्यैव । नित्यशब्दवादे प्रयोगभेद एव शब्दभेदकः । एकप्रयोगे कृते कृताऽकृतप्रसङ्गित्वे व हि नित्यमिति भाष्याशयमाहुः । तस्यानित्यत्वमिति । 'यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्य'मिति क्वाचित्कमिति भावः । पूर्वपदप्रकृतीति । दिवि कामो यस्येति विग्रहे 'बहुव्रीहौ प्रकृत्ये'त्यनेनेत्यर्थः । ननूत्वे यणिति ततः पूर्वमेव स्वरः स्यादत आह—तथैवेति । स्त्रीभ्य इति । यदि कद्रूर्नागमाता तदाऽनेन, यदि

+ सन्यङोः; इको यणचि ६. १. ९; ७७. † ञ्नित्यादिर्नित्यम्; इको यणचि ६. १. १९७; ७७.

‡ ओर्गुणः ६. ४. १४६; अकः सवर्णे दीर्घः ६. १. १०१.

* प्रद्धितेष्वचामादेः ७. २. ११७; अकः सवर्णे दीर्घः ६. १. १०१.

स्यात्। एकादेशो भवत्यन्तरङ्गतः ॥ द्विर्वचनादेकादेशः—ज्ञाया ओदनो ज्ञौदनः। ज्ञौदनमिच्छति ज्ञौदनीयति। ज्ञौदनीयतेः सन् जुज्ञौदनीयिषति। द्विर्वचनं च प्राप्नोत्येकादेशश्च×। नित्यत्वाद् द्विर्वचनं स्यात्। एकादेशो भवत्यन्तरङ्गतः॥ अल्लोपादेकादेशः—शुना शुने। अल्लोपश्च प्राप्नोत्येकादेशश्च+। परत्वादल्लोपः स्यात्। एकादेशो भवत्यन्तरङ्गतः।

नैतदस्ति प्रयोजनम्। नास्त्यत्र विशेषोऽल्लोपेन वा निवृत्तौ सत्यां पूर्वत्वेन वा। अयमस्ति विशेषोऽल्लोपेन निवृत्तौ सत्यामुदात्तनिवृत्तिस्वरः प्रसज्येत†। नाऽत्रोदात्तनिवृत्तिस्वरः प्राप्नोति। किं कारणम्? 'न गोश्वन्साववर्ण' [ ६. १. १८२ ] इति प्रतिषेधात्। नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः। कस्य तर्हि? तृतीयादिस्वरस्य‡। यत्र तर्हि तृतीयादिस्वरो नास्ति—'शुनः पश्ये'ति।

प्र०-'द्व्यच' इति ढकि एयादेशे 'ढे लोपोऽकद्र्वा' इति लोपप्रतिषेधा'दोर्गुण'इति गुणश्च प्राप्नोत्येकादेशश्च। नन्वकृत एकादेशे'ऽप्रत्यय' इति निषेधात्प्रातिपदिकत्वाऽभावात्तद्धित एव न स्यात्। कृते त्वेकादेशे तस्याऽन्तवद्भावात्प्रातिपदिकत्वात्तद्धितोत्पत्तिरित्यानुपूर्व्या सिद्धत्वादप्रयोजनमेतदित्याहुः। अत्रोच्यते—अकृतेऽप्येकादेशे 'नोङ्धात्वो'रिति 'ढे लोपोऽकद्र्वा' इति निषेधाच्च ज्ञापकाद्भविष्यति तद्धित इत्यदोषः।

शुनेति। ननु 'श्वयुवे'ति सम्प्रसारणे कृते तस्या'ऽसिद्धवदत्राभा'दित्यसिद्धत्वात् 'न संयोगाद्वमन्ता'दिति निषेधादल्लोपस्य नास्ति प्राप्तिः। एवं तर्हि तत्प्राग्भादित्यसिद्धत्वमाश्रित्यैतदुक्तम्। प्रयोजनप्रत्याख्यानवाद्याह—नैतदस्तीति। प्रयोजनवाद्याह—अयमस्तीति। प्रत्याख्यानवाद्याह—नात्रेति। प्रयोजनवाद्याह—नैष इति। स एवाह—यत्र तर्हीति। यत्र पुनरित्यर्थः। शुनः पश्येति। अत्र हि 'न गोश्व'निति प्रतिषेधाऽभावादल्लोपे सत्युदात्तनिवृत्तिस्वरप्रसङ्गः। तस्मात्पूर्वमेकादेश एष्टव्यः।

उ०-काचन मानुषी तदा'ऽवृद्धाभ्य' इत्यणि प्राप्ते तदपवादो 'द्व्यच' इति। एकादेशात्पूर्वं द्व्यच्त्वाऽभावे 'स्त्रीभ्य' इत्यनेनैव ढक्। कद्रूश्च नागमातैवेत्युचितम्। ज्ञापकादिति। 'स्त्रीभ्यो ढ'गित्यादौ प्रातिपदिकादित्यस्याऽसंबन्धेन 'लिङ्गविशिष्ट'परिभाषया वा सिद्धेर्ज्ञापकपर्यन्तानुधावनं किमर्थमिति चिन्त्यम्। अत एवैणेयादौ ढक्सिद्धिरित्याहुः। ज्ञापकमपि चिन्त्यम्। 'अन्तरङ्गं बलव'दित्येतज्ज्ञापनेन कृते एकादेशे तत्प्रवृत्त्या चारितार्थ्यसंभवात्। भाष्ये—परत्वाद्वृद्धिरिति। न च सा नित्या, शब्दान्तरप्राप्तत्वात्। इदमपि समर्थग्रहणप्रत्याख्यानतात्पर्यम्। नित्यत्वाद् द्विर्वचनमिति भाष्ये। शब्दान्तरप्राप्त्याऽनित्यत्वं तु क्वाचित्कमिति भावः।

× समयङोः; वृद्धिरेचि ६. १. ९; ८८.

+ अल्लोपो ऽनः ६. ४. १३४; संप्रसारणाच्च ६. १. १०८.

† अनुदात्तस्य च यत्रोदात्तलोपः ६. १. १६१. ‡ सावेकाचस्तृतीयादिर्विभक्तिः ६. १. १६८.

एवं तर्हि न लाक्षणिकस्य प्रतिषेधं शिष्मः। किं तर्हि? येन केनचिल्लक्षणेन प्राप्तस्य विभक्तिस्वरस्य प्रतिषेधः। यत्र तर्हि विभक्तिर्नास्ति—बहुशुनीति+।

यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत। नैवं शक्यम्। इहापि प्रसज्येत—कुमारीति। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति— नोदात्तनिवृत्तिस्वरः शुन्यवतरती'ति, यदयं श्वन्शब्दं गौरादिषु पठति†, अन्तोदात्तार्थं यत्नं करोति। सिद्धं हि स्यान्ङीपैव।

प्र०- प्रत्याख्यानवाद्याह—एवं तर्हीति। प्रयोजनवाद्याह—यत्र तर्हीति। बहुशुनीति। 'बहोर्नञ्वदुत्तरपदभूम्नी'त्यन्तोदात्तः, तस्मान्ङीपि कृतेऽल्लोपे क्रियमाणे उदात्तनिवृत्तिस्वरः स्यात्। प्रत्याख्यानवाद्याह—यदि पुनरिति। प्रयोजनवाद्याह—नैवं शक्यमिति। कुमारशब्दः 'सावर्णान्तर'इति ङीप उदात्तस्वरो न स्यात्। प्रत्याख्यानवाद्याह—एवं तर्हीति। 'शुनी'त्यत्र ङीप 'उदात्तनिवृत्तिस्वरस्य सिद्धत्वात्किं ङीब्विधानेनेत्यर्थः। तदेवमल्लोपादेकादेशस्य स्वरार्थत्वं दूषितम्। प्रयोजनान्तरं त्वस्त्येव।

उ०- एवं तर्हीति। तस्य 'श्नसोरल्लोप'इति तपरकरणेनाऽनित्यत्वादनाश्रयणमिति वक्तुं युक्तम्। 'वार्णादाङ्ग'मित्यप्यनित्यत्वान्नाश्रितम्। न चाऽन्तरङ्गपरिभाषया अप्याभीयत्वेन तद्दृष्ट्या बहिरङ्गस्याऽसिद्धतया सर्वथा नेदमुदाहरणमिति वाच्यम्। 'वाह ऊठ्'सूत्रज्ञापिताऽसिद्धपरिभाषया अभीयत्वे'प्यन्तरङ्गं बलीय' इत्यस्यास्तित्वे मानाऽभावात्। धर्मिग्राहकमानेन तां प्रति बहिरङ्गस्याऽऽभीयासिद्धत्वाऽप्रवर्तनाच्चेति दिक्। भाष्ये—उदात्तनिवृत्तिस्वरः। 'अनुदात्तस्य च यत्रोदात्तलोप' इत्यनेन। न गोश्वन्निति। गवादिभ्यः परस्योदात्तत्वं नेत्यर्थः। तृतीयादिस्वरस्य—'सावेकाच' इति विहितस्य, आनन्तर्यात्, 'तृतीयादिर्विभक्ति'रित्यनुवर्त्तनाच्चेति भावः। एवं च सत्यल्लोपे उदात्तनिवृत्तिस्वरः स्यादिति प्रयोजनवाद्याशयः। इत उत्तरो 'यत्र तर्ही'त्यादिग्रन्थो ग्रन्थच्छायया प्रत्याख्यानवादिन इति भाति, तत्तु न युक्तम्। तृतीयादिविभक्त्यभावेन 'न गोश्व'न्नित्यस्याऽप्रसक्तेरुदात्तनिवृत्तिस्वरो निष्प्रत्यूह इति फलभेदोपसंहारस्य तदपलापकप्रत्याख्यानवादिविरुद्धत्वादत आह—स एवेति। अयं भावः—तृतीयादिस्थानिकस्य लक्षणविशेषानादरेण सर्वस्य निषेध इत्याशङ्क्योदाहरणान्तरदानमिति। नन्वेवं तर्हिशब्दो न युक्त इत्यत आह—पुनरिति। चेत्यर्थः। एतदर्थमेव तत्तदुक्तित्वेनादित आन्तं तद्योजनमिति बोध्यम्। भाष्ये—न लाक्षणिकस्येति। तृतीयादिशब्दविशेषमुपादाय विहितस्येत्यर्थः। भाष्ये—विभक्तिस्वरस्येति। 'तृतीयादि'रिति नाऽनुवर्त्तते, 'विभक्ति'रित्येव। एवं च 'शुन' इत्यादावपि नास्ति फलभेद इत्यर्थः। ननु बहुश्वञ्छब्दस्य बहुव्रीहित्वेन पूर्वपदप्रकृतिस्वरत्वादुदात्तनिवृस्वराऽप्राप्तिरत आह—बहोरिति। प्रत्याख्यानवादिनाऽल्लोपस्यैवेष्टत्वेन तद्रीत्या'ऽन उपधे'त्यस्य प्राप्तिं मत्वा 'बहुशुनी'त्युदाहृतम्। भाष्ये—यदि पुनरिति। विभक्तिग्रहणमपि नाऽनुवर्त्तते इति भावः। कुमारशब्द इति। तस्माद्विभक्तिग्रहणमनुवर्त्तते,

+ बहोर्नञ्वदुत्तरपदभूम्नि ६. २. १७५. † षिद्गौरादिभ्यश्च ४. १. ४१.

स्वरादेकादेशः—सौत्थितिः वैक्षमाणिः। स्वरश्च प्राप्नोत्येकादेशश्च†। परत्वात्स्वरः स्यात्। एकादेशो भवत्यन्तरङ्गतः॥ गुणस्य चेत्त्वौत्त्वयोश्च नास्ति संप्रधारणा॥ वृद्धेरित्वोत्वे—स्तैर्णिः पौर्तिः। वृद्धिश्च प्राप्नोतीत्वोत्वे च‡। परत्वाद्वृद्धिः स्यात्। इत्वोत्वे भवतोऽन्तरङ्गतः॥ द्विर्वचनादित्वोत्वे—आतेस्तीर्यते आपोपूर्यते। द्विर्वचनं च प्राप्नोतीत्वोत्वे च×। नित्यत्वाद् द्विर्वचनं स्यात्। इत्वोत्वे भवतोऽन्तरङ्गतः॥ अल्लोपस्य चेत्वोत्वयोश्च नास्ति संप्रधारणा॥ स्वरे नास्ति विशेषः।

प्र०—यद्यत्राऽल्लोपो भवति ततोऽन उपधालोपिन' इति ङीपि सति 'बहुशुनी'ति भवति। यदा त्वेकादेशेनाऽल्लोपो बाध्यते तदोपधालोपित्वाऽभावान्ङीबभावाद् बहुश्वेति। गौरादिलक्षणो ङीष्नास्ति, 'अनुपसर्जना'दित्याधिकारात्। भाष्ये तु बहुशुनीति प्रत्याख्यानवादिमतेनोपन्यस्तम्। तत्पक्षे किल ङीपा भाव्यमिति। न्यायमूलं चेद'मन्तरङ्गं बलीय' इति। न च न्यायस्याऽत्र केनचिद् बाधोऽस्तीति 'बहुश्वे'त्येव भाव्यमिति न्यायविद आहुः। सौत्थितिरिति। सु उत्थित इ इति स्थिते यद्यत्र पूर्वमुकारस्योदात्तत्वं स्यात्तदा 'स्वरितो वाऽनुदात्ते पदादा'विति पक्षे स्वरितत्वं प्रसज्येत। पूर्वं त्वेकादेशे कृते नित्यमाद्युदात्तमेतद्भवति। गुणस्येति। परत्वाद्धि गुणेन भाव्यम्। स्तैर्णिरिति। विभज्यान्वाख्याने स्तॄ त—इ इति स्थितेऽन्तरङ्गत्वादित्वं, ततो वृद्धिः। स्वर इति। 'स्तैर्णि'-

उ०—तथा च 'बहुशुनी'त्यत्रोदात्तनिवृत्तिस्वरः स्यादिति भावः। बहुश्वेतीति। 'डाबुभाभ्या'मिति डापि, तदभावे चेति भावः। नन्वेवं प्रयोजनवादिग्रन्थे बहुशुनीत्ययुक्तमत आह—भाष्ये त्विति। ननु प्रत्याख्यानान्ततयैवाऽत्रत्यग्रन्थपर्यवसानादसिद्धवत्सूत्रस्थैतदानुपूर्वीकभाष्याच्च बहुशुनीति भगवत इष्टमिति भ्रमं वारयति—न्यायेत्यादिना। ननु भाष्यमेव न्यायबाधकमस्त्वित्यत आह—न्यायविद इति। भाष्यस्योदात्तनिवृत्तिस्वरकृतस्वरवैलक्षण्यपरिहारमात्रतात्पर्यकतया न न्यायबाधकत्वम्। डाबुभाभ्यामितिसूत्रस्थभाष्यरीत्या 'बहुश्वे'त्येव भाष्यसंमतमिति भावः। न चाऽल्लोपे सति तस्य स्थानिवत्त्वाद्यण् स्यादिति कुतो नापादितः। 'यूनस्तिः' 'शुनः पुच्छे'त्यादिनिर्देशैर्वारणसंभवात्। वस्तुतो लोपे सर्वानुदात्तं शुनेति प्राप्नोति, पूर्वरूपे त्वेकादेशस्वरेणाद्युदात्तमित्यपि विशेषो बोध्यः। ननु पूर्वमुदात्तत्वेऽपि तदेकादेशस्यैकादेश उदात्तेनेत्यनेनोदात्तत्वे इष्टसिद्धेराह—तदेति। नित्यमिति। 'ञ्नित्यादि'रित्यनेनेति भावः। एतदपि प्रयोजनं समर्थग्रहणप्रत्याख्यानाभिप्रायेण।

परत्वाद्धीति। इदं वस्तुतत्त्वकथनं, न तु संप्रधारणाऽभावे हेतुः। स तूभयोरपि बहि-

† ञ्नित्यादिर्नित्यम्; अकः सवर्णे दीर्घः ६. १ १९७; [illegible]

‡ तद्धितेष्वचामादेः ७. २. ११७; ऋत इद्धातोः; उदोष्ठ्यपूर्वस्य ७. १. १००; १०२.

× सन्यङोः ६. १. ९; ऋत इद्धातोः; उदोष्ठ्यपूर्वस्य ७. १. १००; १०२.

## इग्ङशीनामादुगुणः ॥ १० ॥

इण्ङशीनामाद्गुणः सवर्णदीर्घत्वात् प्रयोजनम् । अयज इन्द्रम् अवप इन्द्रम् । वृक्ष इन्द्रम् प्लक्ष इन्द्रम् । य इन्द्रम् त इन्द्रम् । आद्गुणश्च प्राप्नोति सवर्णदीर्घत्वं च× । परत्वात्सवर्णदीर्घत्वं स्यात् । आद्गुणो भवत्यन्तरङ्गतः ।

## न वा सवर्णदीर्घत्वस्याऽनवकाशत्वात् ॥ ११ ॥

न वैतदन्तरङ्गेणाऽपि सिध्यति । किं कारणम् ? 'सवर्णदीर्घत्वस्यानवकाशत्वात्' । अनवकाशं सवर्णदीर्घत्वमाद्गुणं बाधेत ॥ नैतदन्तरङ्गेऽस्त्यनवकाशं परमिति । इहापि स्योनः स्योनेति शक्यं वक्तुं—'न वा परत्वाद् गुणस्ये'ति ।

प्र०–रिति यदि पूर्वं स्वरः, तत इत्वं, तथाप्यान्तरतम्यादुदात्तत्वं सिद्धयति । न वेति । दण्डाग्रमित्यादूदुगुणः प्राप्नोति, कुमारी ईयत इत्यादौ यणादेश इत्यवश्यं सवर्णदीर्घत्वेन विध्यन्तरं बाध्यम् । नैतदिति । एकनिमित्तप्राप्तविध्यन्तरबाधेनेन सावकाशः सवर्णदीर्घोऽन्तरङ्गं बाधितुं न शक्नोतीति भावः । निरवकाशेन तु विध्यन्तरेण सावकाशोऽन्तरङ्गोपि विधिर्बाध्यते यथा गोत्रेऽलुगचीत्यलुका लुक् । न वा परत्वादिति । यथा त्वत्र परत्वेन न व्यवस्था अपि त्वन्तरङ्गत्वेन, तथा आद्गुणोपि समानकक्ष्यो दीर्घेण

उ०–भूतप्रत्ययापेक्षत्वेन समत्वेनाऽन्तरङ्गत्वाऽभाव इति बोध्यम् । ननु स्तीर्णशब्दादिदिञ न दोषोऽत आह—विभज्येति । भाष्ये—इत्वोत्वे भवतोऽन्तरङ्गत इति । अत्रैकाच्त्वाऽनभ्यासत्वप्रथमत्वादिबहूपाध्यपेक्षत्वेन द्वित्वस्य बहिरङ्गत्वं बोध्यम् । इदं प्रयोजनमेकदेश्युक्तिः । द्वयोर्नित्यत्वेऽनित्यत्वे वा परत्वाद्वित्वादिसिद्धेः । यङन्तस्य द्वित्वेन तस्याऽपरनिमित्तकत्वेनाऽन्तरङ्गत्वाच्चेत्यन्ये । स्वरेणाऽपीत्वोत्वयोर्नास्ति संप्रधारणेत्याह—स्वरे नास्तीति । ननु 'कुमारीहते' 'दण्डाग्र'मित्यादौ सावकाशं दीर्घत्वमत आह—दण्डाग्रमिति । एवं च यणगुणाभ्यां सर्वविषयव्याप्तेरवश्यं विध्यन्तरे बाध्ये बाध्यसामान्यचिन्तयाऽगृह्यमाणविशेषत्वात्सर्वं बाध्यमित्यर्थः । अन्तरङ्गादपि निरवकाशस्य बलवत्त्वेन 'नैतदन्तरङ्ग'इत्यनुपपन्नमत आह—एकनिमित्तेति । एकस्थानिकेत्यपि बोध्यम् । एवं च स्वसमाननिमित्तकेन स्वसमानस्थानिकेनैव च 'येन नाप्राप्ति'न्यायो न तु विभिन्नस्थानिनिमित्तकेनापीति न तद्बाध इति भावः । यस्तु सर्वथाऽनवकाशः स बाधक एवेत्याह—निरवकाशेनेति । एकस्थानिनिमित्तकेनेत्यर्थः । बहिर्भूताऽजादिप्रत्ययापेक्षत्वादलुग्बहिरङ्गः । भाष्ये—इहापीति । 'यद्यन्तरङ्गेऽपीदं स्यात्तर्हि तत्राऽप्यन्तरङ्गत्वाद्यण्न स्याद् गुणस्य परत्वा'दिति बाधकतर्केण समाननिमित्तकमेव निरवकाशपराभ्यां बाध्यत इति द्रढितम् । फलितमाह—यथा त्विति ।

× आद् गुणः; अकः सवर्णे दीर्घः ६. १. ८७; १०१.

## ऊङापोरेकादेश ईत्त्वलोभ्याम् ॥ १२ ॥

ऊङापोरेकादेश ईत्त्वलोपाभ्यां भवत्यन्तरङ्गतः प्रयोजनम् ॥ ईत्त्वादेकादेशः—खट्वीयति मालीयति। ईत्त्वं च प्राप्नोत्येकादेशश्च+। परत्वादीत्त्वं स्यात्। एकादेशो भवत्यन्तरङ्गतः॥ लोपादेकादेशः—कामण्डलेयः माद्रवाहेयः। लोपश्च प्राप्नोत्येकादेशश्च†। परत्वाल्लोपः स्यात्। एकादेशो भवत्यन्तरङ्गतः॥ अथ किमर्थमीत्त्वलोपाभ्यामित्युच्यते, न 'लोपेत्त्वाभ्या'मित्येवोच्येत? संख्यातानुदेशो‡ मा भूदिति। आपोऽप्येकादेशो लोपे प्रयोजयति—चौडिः बालाकिः*।

## आत्त्वनपुंसकोपसर्जनह्रस्वत्वान्ययवायावेकादेशतुग्विधिभ्यः ॥१३॥

आत्त्वनपुंसकोपसर्जनह्रस्वत्वानि अयवायावेकादेशतुग्विधिभ्यो भवन्त्यन्तरङ्गतः।

प्र०—बाध्यते न त्वन्तरङ्ग इति भावः। खट्वीयतीति। खट्व आ य इति स्थिते यदि पूर्वमीत्त्वं स्यात्तत आद्गुणः प्रसज्येत। नन्वाकारस्य कृते ईत्त्वे यस्येति लोपो भविष्यति। नैतदस्ति। 'पूर्वविधा'वितीत्त्वस्य स्थानिवद्भावात्। न लोपेत्त्वाभ्यामिति। ऊङ ईत्त्वाऽसम्भवादयं क्रमोऽयुक्त आश्रयितुमिति भावः। यद्यप्यजाद्यदन्तमिति ईत्त्वशब्दस्य पूर्वनिपातो न्याय्यस्तथापि लक्षणे प्रायेणाऽसौ नाद्रियते। चौडिरिति। पूर्वमाकारलोपे सति तस्य स्थानिवत्त्वादसिद्धत्वाद्वाऽकारलोपाऽभावादाद्गुण इति गुणस्य प्रसङ्गः।

उ०— ननु खट्वाशब्दे सुबुत्पत्तेः प्रागेवैकादेशोऽत आह—खट्व आ इति। विभज्यान्वाख्याने दोषः। सुप्तु लिङ्गविशिष्टपरिभाषयेति भावः। लोप इति। खट्वशब्दाऽकारस्येत्यर्थः। नन्वजाद्यदन्तत्वादीत्त्वशब्दस्यैव पूर्वनिपातो युक्तोऽत आह—ऊङ इति। न्याय्य इति। शास्त्रीयत्वात् क्रमबाधोऽपि सोढव्य इति भावः। लक्षणे इति। 'अन्तिकबाढयोर्नेदसाधा'वित्यादिनिर्देशैः क्रमानुसारस्य सर्वपूर्वनिपातविधिभ्यो बलवत्त्वज्ञापनादिति भावः। भाष्ये—सङ्ख्यातानुदेश इति। ननु नाऽत्र यथासङ्ख्यसूत्रप्राप्तिः, तस्य विध्यङ्गत्वात्, नापि स्थानाख्यप्रमाणस्य, समासनिर्देशादिति चेन्न, अनूद्यमानयोरपि तत्प्रवृत्तेर्दृष्टत्वादिति भावः। असिद्धत्वाद्वेति। चिणो लुग्न्यायेनाऽत्राभीयासिद्धत्वं बोध्यम्। ननूपदेशे आत्त्वमनैमित्तिकमयादयस्तु

+क्यचि च ७. ४. ३३; अकः सवर्णे दीर्घः ६. १. १०१.

† ढे लोपोऽकद्र्वाः ६. ४. १४७; अकः सवर्णे दीर्घः ६. १. १०१.

‡ यथासंख्यमनुदेशः समानम् १. ३. १०. * यस्येति च ६ ४. १४८.

वेञ्—वानीयम् । शो—शानीयम् । ग्लै—ग्लानीयम् । म्लै—म्लानीयम् । ग्लाच्छत्रम् म्लाच्छत्रम् । आत्त्वं च प्राप्नोत्येते च विधयः† । परत्वादेते विधयः स्युः । आत्त्वं भवत्यन्यरङ्गतः ॥ नपुंसकोपसर्जनह्रस्वत्वं च प्रयोजनम् । अतिर्यत्र अतिन्वत्र । अतिरिच्छत्रम् अतिनुच्छत्रम् । आराशस्त्रीदम् धानाशष्कुलीदम् । निष्कौशाम्बीदम् निर्वाराणसीदम् । निष्कौशाम्बिच्छत्रम् निर्वाराणसिच्छत्रम् । नपुंसकोपसर्जनह्रस्वत्वं च प्राप्नोत्येते च विधयः‡ । परत्वादेते विधयः स्युः । नपुंसकोपसर्जनह्रस्वत्वं भवत्यन्तरङ्गतः ।

**तुग्यणेकादेशगुणवृद्ध्यौत्त्वदीर्घत्वेत्वमुमेत्त्वरीविधिभ्यः ॥ १४ ॥**

यणेकादेशगुणवृद्ध्यौत्त्वदीर्घत्वेत्वमुमेत्त्वरीविधिभ्यस्तुग्भवत्यन्तरङ्गतः ।

यणादेशात्—अग्निचिदत्र सोमसुदत्र । एकादेशात्— अग्निचिदिदम् सोमसुदुदकम् ॥ गुणात्—अग्निचिते सोमसुते ॥ वृद्धेः—प्रकृच्छकः प्रार्च्छकः ॥

प्र०- ग्लानीयमिति । विभज्यान्वाख्याने ग्लै अनीय इति स्थितेऽनैमित्तिकत्वादात्त्वमन्तरङ्गं भवति । ग्लाच्छत्रमिति । ग्ला म्ला इति क्विबन्तम् । अत्रापि तथा विभज्यान्वाख्याने ग्लै—छत्रमिति स्थिते यदि पूर्वं तुक् स्यात्तदैजन्तत्वाऽभावादात्त्वं न स्याद्यथा ढौकितेति । उपदेशग्रहणाऽनपेक्षया चैतदुदाहरणम् । अतिर्यत्रेति । अतिरै—अत्र इति स्थिते आयादेशे सत्यजन्तत्वाद्ध्रस्वो न स्यात् । आराशस्त्रीदमिति । 'आराशस्त्री—इद'मिति स्थिते यद्यत्र पूर्वमेकादेशः स्यात्तदा तस्याऽन्तवद्भावाद्ध्रस्वे कृते रूपं न सिद्ध्येत् । अग्निचिदत्रेति । पदसमुदायस्य विभज्याऽन्वाख्याने 'अग्निचि—अत्रे'ति स्थिते यदि पूर्वं यण्स्यात्तदा तुङ्न स्यात् । नपुंसकं चाऽत्राऽग्निचि

उ०-प्रत्ययोत्पत्त्यनन्तरभाविन इति संप्रधारणाऽभावादाह—विभज्येति । 'अशिती'ति प्रसज्यप्रतिषेध इति भावः । क्विबन्तमिति । कर्तरि क्विबन्तेन षष्ठीसमास इत्यर्थः । अनपेक्षयेति । पूर्वं चैतत्प्रयोजनमेकदेशयुक्तिरिति भावः । अन्तवदिति । 'स नपुंसक'मिति नपुंसकत्वस्याऽपि शास्त्रीयत्वादतिदेश इति भावः । पदसमुदायस्येति । 'पदस्य पदा'दित्यादौ पदसमुदायस्याप्यन्वाख्यानदर्शनादिति भावः । पुंसि विभक्त्येति । न च सुबपेक्षया परत्वात्प्रथमं तुगिति कथं सुपा व्यवधानोक्तिरिति वाच्यम्, 'अग्निचिते' इत्यादौ गुणतुकोः संप्रधारणाया अत्र भाष्ये कृतत्वेन तुकः पूर्वमन्तरङ्गत्वाद्विभक्तिं सिद्धवत्कृत्यैवाऽस्य भाष्यस्य प्रवृत्तिरित्याशयात् । भाष्ये—प्रकृच्छकः प्रार्च्छक इति । षत्वतुकोरित्यनपेक्ष्येदम् । बहिरङ्गत्वेनाऽपि सिध्यति ।

† आदेच उपदेशेऽशिति; एचोऽयवायावः; पदान्ताद्वा ६. १. ४५; ७८; ७६.

‡ ह्रस्वो नपुंसके प्रातिपदिकस्य; गोस्त्रियोरुपसर्जनस्य १. २. ४७; ४८; एचोऽयवायावः; पदान्ताद्वा; अकः सवर्णे दीर्घः ६. १. ७-; ७६; १०१.

औत्वात्—अग्निचिति सोमसुति ॥ दीर्घत्वात्—जगद्भ्याम् जनगद्भ्याम् ॥ ईत्वात्—जगत्यति जनगत्यति ॥ मुमः—अग्निचिन्मन्यः सोमसुन्मन्यः ॥ एत्वात्—जगद्भ्यः जनगद्भ्यः ॥ रीविधेः—सुकृत्यति पापकृत्यति ।

'अनङानङ्भ्यां चे'ति वक्तव्यम् । [अनङ्—] सुकृत् । [आनङ्—] सुकृद्दुष्कृतौ ॥ तुक् च प्राप्नोत्येते च विधयः× । परत्वादेतेविधयः स्युः । तुग्भवत्यन्तरङ्गतः ।

## इयङादेशा गुणात् ॥ १५ ॥

इयङादेशो गुणाद्भवत्यन्तरङ्गतः प्रयोजनम् । धियति रियति । इयङादेशश्च प्राप्नोति गुणश्च+ । परत्वाद् गुणः स्यात् । इयङादेशो भवत्यन्तरङ्गतः ।

उवङादेशश्चेति वक्तव्यम् । प्रादुद्रुवत् प्रासुस्रुवत् ।

## श्वेः सम्प्रसारणपूर्वत्वं यणादेशात् ॥ १६ ॥

श्वेः सम्प्रसारणपूर्वत्वं यणादेशाद्भवत्यन्तरङ्गतः प्रयोजनम् । शुशुवतुः शुशुवुः । पूर्वत्वं च प्राप्नोति यणादेशश्च† । परत्वाद्यणादेशः स्यात् । पूर्वत्वं भवत्यन्तरङ्गतः ।

प्र०—इति द्रष्टव्यम् । पुंसि विभक्त्या व्यवधानात् । सुकृद्दुष्कृताविति । कथं पुनरत्राऽऽनङ् प्राप्नोति यावता विद्यायोनिसम्बन्धवाचिनामृकारान्तानां द्वन्द्वे स विहित इति चिन्त्यमेतत् । धियतीति । 'धि धारणे' तिपि शे कृते तिबाश्रयो गुणः प्राप्नोति । विकरणाश्रय इयङ् भवत्यन्तरङ्गत्वात् । यणादेशश्चेति । 'एरनेकाच' इति यण् ।

उ०—नाजानन्तर्ये इति तु नास्त्येवेत्यभिप्रायः । चिन्त्यमेतदिति । सुकृदादिशब्दयोः प्रकरणादिना यदा ऋत्विग्विशेषे पर्यवसानं तदेदमुदाहरणमित्याहुः । ननु शस्य ङित्वाद् गुणस्य कथं प्रासिद्धयोरप्येकनिमित्तत्वेनान्तरङ्गत्वाद्यभावश्चेत्यत आह—तिबाश्रय इति । गुणो—लघूपधगुणः ।

१—कोष्ठान्तर्गतः पाठः क्वाचित्कः ।

× ह्रस्वस्य पिति कृति तुक्; छे च; इको यणचि; अकः सवर्णे दीर्घः ६. १. ७१; ७३; ७७; १०१; घेर्ङिति ७. ३. १११; उपसर्गादृति धातौ ६. १. ९१; अच्च घेः; सुपि च ७. ३. ११९; १०२; क्यचि च ७. ४. ३३; अरुर्द्विषदजन्तस्य मुम् ६. ३. ६७; बहुवचने झल्येत् ७. ३. १०३; रीङ् ऋतः ७.४.२७; ऋदुशनस्पुरुदंसोऽनेहसां च ७.१.९४; आनङ् ऋतो द्वन्द्वे ६.३.२५.

+ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६. ४. ७७; पुगन्तलघूपधस्य च ७. ३. ८६.

† संप्रसारणाच्च ६. १. १०८; एरनेकाचोऽसंयोगपूर्वस्य ६. ४. ८२.

## ह्व आकारलोपात् ॥ १७ ॥

ह्व आकारलोपात्पूर्वत्वं भवत्यन्तरङ्गतः प्रयोजनम् । जुहुवतुः जुहुवुः । पूर्वत्वं च प्राप्नोत्याकारलोपश्च× । परत्वादाकारलोपः स्यात् । पूर्वत्वं भवत्यन्तरङ्गतः ।

## स्वरो लोपात् ॥ १८ ॥

स्वरो लोपाद्भवत्यन्तरङ्गतः प्रयोजनम् । औपगवी सौदामनी । स्वरश्च प्राप्नोति लोपश्च* । परत्वाल्लोपः स्यात् । स्वरो भवत्यन्तरङ्गतः ।

## प्रत्ययविधिरेकादेशात् ॥ १९ ॥

प्रत्ययविधिरेकादेशाद्भवत्यन्तरङ्गतः प्रयोजनम् । अग्निरिन्द्रः वायुरुदकम् । प्रत्ययविधिश्च प्राप्नोत्येकादेशश्च† । परत्वादेकादेशः स्यात् । प्रत्ययविधिर्भवत्यन्तरङ्गतः ।

यणादेशाच्चेति वक्तव्यम्‡ । अग्निरत्र वायुरत्र[1] ।

प्र०—जुहुवतुरिति । ह्वा—अतुस् । 'ह्वः सम्प्रसारणमभ्यस्तस्य च'ति सम्प्रसारणे कृते यद्याकारलोपः स्यात्तदा स्थानिवत्त्वा'दसिद्धवदत्राभा'दित्यसिद्धत्वाच्चोवङ्न स्यात् । औपगवीति । उपगोरियमित्यणि ङीपि च कृते यदि प्रत्ययाद्युदात्तत्वात्पिदनुदात्तत्वाद्वा पूर्वं लोपः स्यात्तदोदात्तनिवृत्तिस्वर ईकारस्य न स्यात् । अग्निरिन्द्र इति । यद्यपि प्रत्ययरहितायाः प्रकृतेः प्रयोगो नास्ति तथापि वाक्यस्य विभज्यान्वाख्याने क्रियमाणेऽयं विचारः क्रियते । यद्यपि प्रत्ययस्य नित्यत्वं तथाप्यन्तरङ्गत्वेनैव सिद्ध-

उ०— एरिति । 'इको य'णिति त्वियङा बाधितमिति भावः । उस्थानिकयणस्तु पूर्वरूपमपवाद इति तात्पर्यम् । यद्याकारेति । ननु 'कृदतिङ्'सूत्रस्थाकररीत्या चिकीर्षतीत्यादा'वचः परस्मि'न्निति स्थानिवत्त्वेन तुगभाववज्जुहुवतुरित्यत्र पूर्वरूपेपि तस्य स्थानिवत्त्वादुवङोऽप्राप्तिरिति चेन्न । पूर्वस्य धातुत्वाऽभावेन तदुद्देश्यकविधेरभावादित्याहुः । उपगोरियमिति । 'अनन्तरापत्य'मिति शेष इत्येके । गोत्राऽणि तु जातित्वान्ङीषेव स्यादिति न स्वरः प्रयोजनमिति भावः । प्रत्ययाद्युदात्तत्वादिति । एतदणः । पिदनुदात्तत्वाद्वेति । एतन्ङीपः । पिदनुदात्तत्वमप्युभयापेक्षलोपादन्तरङ्गमेवेति बोध्यम् । प्रत्ययस्येति । एकादेशेपि पूर्वान्तवत्त्वेन सुपः

× संप्रसारणाच्च ६. १. १०८; आतो लोप इटि च ६. ४. ६४.

* आद्युदात्तश्च; अनुदात्तौ सुप्पितौ ३. १. ३; ४; यस्येति च ६. ४. १४८.

† स्वौजसमौट्····ङ्यौस्सुप् ४. १. २; अकः सवर्णे दीर्घः ६. १ १०१. ‡ इको यणचि ६. १. ७७.

१—इतः परं "प्रत्ययविधिश्च प्राप्नोति यणादेशश्च । परत्वाद् यणादेशः स्यात् । प्रत्ययविधिर्भवत्यन्तरङ्गतः ।" इत्यपि स्यादिति केचित् ।

## लादेशो वर्णविधेः ॥ २० ॥

लादेशो वर्णविधेर्भवत्यन्तरङ्गतः प्रयोजनम् । पचत्वत्र पठत्वत्र । लादेशश्च प्राप्नोति यणादेशश्च× । परत्वाद्यणादेशः स्यात् । लादेशो भवत्यन्तरङ्गतः ।

## तत्पुरुषाऽन्तोदात्तत्वं पूर्वपदप्रकृतिस्वरात् ॥ २१ ॥

तत्पुरुषान्तोदात्तत्वं पूर्वपदप्रकृतिस्वराद्भवत्यन्तरङ्गतः प्रयोजनम् । पूर्वशालाप्रियः अपरशालाप्रियः । तत्पुरुषान्तोदात्तत्वं च प्राप्नोति, पूर्वपदप्रकृतिस्वरत्वं च+ । परत्वात्पूर्वपदप्रकृतिस्वरत्वं स्यात् । तत्पुरुषान्तोदात्तत्वं भवत्यन्तरङ्गतः ।

एतान्येतस्याः परिभाषायाः प्रयोजनानि यदर्थमेषा परिभाषा कर्तव्या ।

यदि सन्ति प्रयोजनानीत्येषा परिभाषा क्रियते, ननु चेयमपि कर्तव्या 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति । किं प्रयोजनम् ? पचावेदम् पचा-

प्र०—त्वान्न तदाश्रितम् । पचत्वत्रेति । यद्यत्र पूर्वं यणस्यादनल्विधाविति स्थानिवत्त्वनिषेधादुत्वं न स्यात् । पूर्वशालाप्रिय इति । पूर्वा शाला प्रिया अस्येति त्रिपदे बहुव्रीहौ कृते 'तद्धितार्थे'ति द्वयोः पदयोस्तत्पुरुषः । तत्र त्रिपदाश्रयबहुव्रीहिनिमित्तः पूर्वपदप्रकृतिस्वरो बहिरङ्गत्वान्न प्रवर्तते । तेन तत्पुरुषसमासाश्रयं शालाशब्दस्यान्तोदात्तत्वं भवति । पूर्वशब्दः 'स्वाङ्गशिटामदन्ताना'मित्याद्युदात्तः । पचावेदमिति । अन्तरङ्गबलीयस्त्वेनैतन्न सिद्ध्यति । बहिरङ्गे कृते आद्गुणे 'एत ऐ' इति प्राप्नोति । अनयैवेति । इयं हि व्यापिका, पूर्वोक्तप्रयोजननिष्पादात् । शास्त्राऽसिद्धत्वाश्रयणाद् बहिरङ्गलक्षणं न तावत्प्रवर्तते । अन्तरङ्गलक्षणे तु प्रवृत्ते यत्र निमित्तसद्भावस्तत्र बहिरङ्गलक्षणप्रवृत्तिः ।

उ०—प्राप्तेस्तस्य नित्यत्वम् । भाष्ये—परत्वाद्यणिति । शब्दान्तरप्राप्तेर्नित्यत्वं नोक्तम् । लादेशशब्देन लादेशस्थानिक आदेशस्तदाह—उत्वं नेति । तत्रेति । यद्यपि सति शिष्टत्वादिदं सिद्धं, तथाप्यन्तरङ्गन्यायादपीष्टसिद्धिरिति भावः । बहिरङ्गे कृते इति । अयं हि न्यायो युगपत्प्राप्तावन्तरङ्गस्य प्रथमं प्रवृत्तिबोधक एवेति भावः । पूर्वोक्तेति । अन्तरङ्गे कर्त्तव्ये बहिरङ्गमसिद्धम् । तद्बहिरङ्गं कृतं, किंचिर्षितं वेत्यन्यत् । ननु 'स्योन' इत्यत्र परत्वाद् गुणे तस्याऽसिद्धत्वेपीकोऽभावाद्यण स्यादत आह—शास्त्रेति । नन्वेवं 'सौथिति'रित्यादौ स्योने गुणशास्त्रवद्बहिरङ्गमाद्युदात्तशास्त्रं न प्रवर्ततेत्यत आह—अन्तरङ्गेति । युगपत्प्राप्तौ बहिरङ्गस्य न पूर्वं प्रवृत्तिः, प्रवृत्ते त्वन्तरङ्गे भवत्येव बहिरङ्गमिति भावः । भाष्ये—बहिरङ्गलक्षणस्येति । 'ऊठ' इति

× एरुः ३. ४. ८६; इको यणचि ६. १. ७७.

+ समासस्य ६. १. २२३; बहुव्रीहौ प्रकृत्या पूर्वपदम् ६. २. १.

मेदम्। असिद्धत्वाद् बहिरङ्गलक्षणस्य गुणस्यान्तरङ्गलक्षणमेत्वं† मा भूदिति। उभे तर्हि कर्तव्ये। नेत्याह। अनयैव सिद्धम्। इहापि स्योनः स्योनेति,—असिद्धत्वाद् बहिरङ्गलक्षणस्य गुणस्याऽन्तरङ्गलक्षणो यणादेशो भविष्यति।

यद्यसिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इत्युच्यते—अक्षद्यूः हिरण्यद्यूः—असिद्धत्वाद् बहिरङ्गलक्षणस्योठोऽन्तरङ्गलक्षणो यणादेशो न प्राप्नोति‡। नैष दोषः। 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण' इत्युक्त्वा ततो वक्ष्यामि—'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्ति'रिति। सा तर्ह्येषा परिभाषा कर्तव्या ? न कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति—'भवत्येषा परिभाषे'ति, यदयं 'षत्वतुकोरसिद्धः' [ ६. १. ८६ ] इत्याह।

प्र०-नाजानन्तर्य इति। अचोरानन्तर्यमाश्रित्य यत्र कार्यं विधीयते तत्रैषा परिभाषा नोपतिष्ठते। यदयमिति। कोऽसिचदधीत्येति बहिरङ्गस्यैकादेशस्याऽसिद्धत्वात्षत्वं न भविष्यति, तुक् च प्रवर्तिष्यते इति किमसिद्धवचनेन।

उ०-शेषः। अत्रैकदेशी समाधत्ते—नाजानन्तर्ये इति। अचोरानन्तर्यमिति। अचोरिति द्वित्वमविवक्षितं, तेन वक्ष्यमाणेन षत्वतुग्ग्रहणरूपेण ज्ञापकेन न विरोधः। 'अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये कृते च तस्मिन्प्राप्तेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्याऽसिद्धत्वं ने'ति तदर्थः। एतेन 'पचावेदमित्यादौ गुणेऽनानन्तर्याश्रयणादसिद्धत्वाऽनापत्ति'रित्यपास्तम्। 'अयजे इन्द्रं' 'धियती'त्यादि च सिद्धम्। 'अक्षद्यू'रित्यत्र यणि लोपाऽभावश्च सिद्धः। तुक् च प्रवर्त्तिष्यत इति। समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं पूर्वपदसंबन्धेन समासे जाते तत्र संहितायां नित्यत्वादेकादेशे ल्यपि तुगपेक्षया पदद्वयसंबन्धिवर्णापेक्षैकादेशस्य दध्यत्रेत्यादौ संयोगान्तलोपाऽपेक्षया यणो बहिरङ्गत्वेनाऽसिद्धत्ववदसिद्धत्वेन तत्प्रवृत्तिरिति भावः। षत्वग्रहणं तु न युक्तं ज्ञापकं, त्रैपादिकेऽन्तरङ्गे तत्परिभाषायाः कार्यकालपक्षेऽप्यप्रवृत्तेर्विसर्जनीयसूत्रभाष्यसंमतत्वात्। षत्वस्याऽपि पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेनाऽन्तरङ्गत्वाऽभावाच्च। न चाऽधीत्येत्यादौ 'पूर्वं धातुरुपसर्गेण युज्यते' इत्येकादेशोऽन्तरङ्ग इति वाच्यम्। साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पदान्तरसंबन्धनिमित्तकार्यात्पूर्वमुपसर्गसंबन्धेन तन्निमित्तकस्याऽन्तरङ्गत्वमिति तदर्थो न तु प्रत्ययनिमित्तादपीति तदर्थ इति 'संप्रसारणाच्चे'ति सूत्रे भाष्ये स्पष्टत्वात्। तत्र हि 'खट्वा आ 'ऊढे'त्यत्र सवर्णदीर्घाद्गुणोऽन्तरङ्ग इत्युक्तम्। 'सुट् कात्पूर्व'इत्यादिसूत्रेऽप्युक्तम्—'उपसर्गार्थेन पूर्वं संबन्धस्ततः प्रत्यये कृते उपसर्गेण संबन्ध इति संक्र-ति इति स्थितेऽन्तरङ्गतरार्थकोपसर्गनिमित्तकः सुट् द्वित्वादितः पूर्व'मिति। एवं च विशिष्टोपसर्गनिमित्तकत्वादुपसर्गार्थाश्रितमुपसर्गनिमित्तं कार्यमन्तरङ्गम्, यत्तु न तथा तत्र पूर्वागतसाधनकार्यमेवाऽन्तरङ्गम्। अत एव 'प्रेद्ध' इत्यत्र 'गुणो बहिरङ्ग' इति भाष्ये उक्तम्। अस्याश्च परि-

† एत ऐ ३. ४. ९३. ‡ च्छ्वोः शूडनुनासिके च ६. ४. १९. इको यणचि ६. १. ७७.

इयं तर्हि परिभाषा कर्तव्या–'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति ? एषा च न कर्तव्या, आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्येषा परिभाषे'ति, यदयं 'वाह ऊठ् [ ६. ४. १३२ ] इत्यूठं शास्ति ।

**तस्य दोषः पूर्वपदोत्तरपदयोर्वृद्धिस्वरावेकादेशात् ॥ २२ ॥**

तस्यैतस्य लक्षणस्य दोषः पूर्वोत्तरपदयोर्वृद्धिस्वरावेकादेशादन्तरङ्गतोऽभिनिर्वृत्तान्न प्राप्नुतः । पूर्वैषुकामशमः अपरैषुकामशमः* । गुडोदकम् तिलोदकम् । 'उदकेऽकेवले' [६.२.९६] इति पूर्वोत्तरपदयोर्व्यपवर्गाऽभावान्न स्यात् ।

प्र०– यदयमिति । दित्यवाह्—अस् इति स्थिते वाहः सम्प्रसारणमेव कर्तव्यम् । तत्र कृते पूर्वैकादेशे च ण्याश्रये च गुणे 'वृद्धिरेची'ति वृद्धौ सिद्धं 'दित्यौह' इति । अनकारान्ते चोपपदे वहेश्छन्दसि ण्विर्न दृश्यते । प्रयोगदर्शने वा सत्यूहतेः क्विपि स प्रयोगो भविष्यति । किमूडादेशविधानेनेति परिभाषाया ज्ञापक ऊड्विधिः । तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्याऽसिद्धत्वादन्तरङ्गो गुणो न स्यादित्यूड् विधीयते । पूर्वैषुकामशम इति । 'पूर्व इषुकामशमी अ' इति स्थिते यद्यन्तरङ्गत्वादाद्गुणः स्यात्तदा पूर्वोत्तरपदयोर्व्यपवर्गाऽभावादुभयत आश्रयणेऽन्तादिवद्भावनिषेधाच्च 'दिशोऽमद्राणाम्' 'प्राचां ग्रामनगराणा'मित्युत्तरपदवृद्धिर्न स्यात् । 'उत्तरपदवृद्धौ सर्वं चे'ति चशब्दाद्दिक्शब्दाश्चेति तथैव पूर्वपदान्तोदात्तत्वं न स्यात् । सावकाशं चैतदुभयं 'पूर्वकार्ष्णमृत्तिक' इति । गुडोदकमिति । 'उदकेऽकेवले' इति पूर्वपदान्तोदात्तत्वं न स्यात् ।

उ०–भाषाया भाष्येऽन्यत्र क्वाऽप्यव्यवहारादियमेकदेश्युक्तिः । एतज्ज्ञापकेनाऽन्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यमिति तत्त्वम् ।

वृद्धौ सिद्धमिति । परिभाषासत्त्वे तु विभक्तिनिमित्तसंप्रसारणस्य ण्याश्रयेऽन्तरङ्गे गुणेऽसिद्धत्वात्तदभावे वृद्धौ गुणस्याऽसिद्धत्वात्तदभावे च वृद्ध्यर्थमूडावश्यक इति भावः । नन्वनकारान्तेऽकारान्तोपसर्गे चोपपदेऽवर्णाऽभावात्पररूपेण बाधाच्च 'वृद्धिरेची'त्यस्याऽप्राप्तावूठ्संप्रसारणयोः फले विशेष इत्यत आह—अनकारान्तेति । इदमकारान्तोपसर्गोपलक्षणम् । छन्दसीति । न च ण्यन्तात्क्विपि वच्यादिभ्यो विहितत्वाऽभावेन सम्प्रसारणाऽभावे विश्ववाट्शब्दो लोकेऽप्यस्त्येवेति वाच्यम् । 'क्वौ लुप्त'मित्यस्य क्वाचित्कतया णिलोपस्य स्थानिवत्त्वेन तत्र 'वाह ऊठ्'सूत्रस्य प्राप्तेरेवाऽभावादित्याहुः । वस्तुतो लोकेपि वहेर्ण्विदर्शनाच्छन्दसीत्युपलक्षणम् । ऊहतेरिति । धातूनामनेकार्थत्वान्नाऽर्थभेदः ।

भाष्ये—तस्यैतस्येति । 'असिद्धं बहिरङ्ग'मित्यस्येत्यर्थः । दिशोऽमद्राणामिति । 'इत्यनुवर्तमाने' इति शेषः । अत्रापि स्वर उदाहर्तुं शक्य इत्यभिप्रायेणाह—उत्तरपदेति । चशब्दाद्दिक्शब्दाश्चेति । अनेन विहितं पूर्वपदान्तोदात्तत्वं तथैव व्यपवर्गाऽभावान्न स्यादित्यन्वयः । भाष्ये—उदकेऽकेवले इति । मिश्रवाचिनि समासे उदके परे पूर्वमन्तोदात्तमिति

* प्राचां ग्रामनगराणाम् ७. ३. १४, उत्तरपदवृद्धौ सर्वं च ६. २. १०५.

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'पूर्वोत्तरपदयोस्तावत्कार्यं भवति नैकादेश' इति, यदयं 'नेन्द्रस्य परस्य' [७.३.२२] इति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? इन्द्रे द्वावचौ । तत्रैको 'यस्येति च' [ ६. ४. १४८ ] इति लोपेनाऽपह्रियते, अपर एकादेशेन । ततोऽनच्क इन्द्रः संपन्नः । तत्र कः प्रसङ्गो वृद्धेः ? पश्यति त्वाचार्यः 'पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश' इति ततो 'नेन्द्रस्य परस्ये'ति प्रतिषेधं शास्ति ।

## यणादेशादियुवौ ॥ २३ ॥

यणादेशादियुवावन्तरङ्गतोऽभिनिर्वृत्तान्न प्राप्नुतः । वैयाकरणः सौवश्व इति । लक्षणं हि भवति '[1]य्वोरचि वृद्धिप्रसङ्ग इयुवौ भवत' इति ॥ नैष दोषः । अनवकाशावियुवौ । अचीत्युच्यते ॥ किं पुनः कारणमचीत्युच्यते ? इह मा भूताम्–ऐतिकायनः औपगव इति । स्तामत्रेयुवौ, 'लोपो व्योर्वलि' [६.१.६६] इति लोपो भविष्यति । यत्र तर्हि लोपो नास्ति—प्रैयमेधः प्रैयङ्गव इति ।

## उसि पररूपाच्च ॥ २४ ॥

उसि पररूपाच्चान्तरङ्गतोऽभिनिर्वृत्तादियादेशो न प्राप्नोति* । पचेयुः यजेयुः ।

प्र०–'उदश्विदुदक'मित्यादावेव तु स्यात् । प्रसङ्गेन व्याकरणान्तरे लक्षणं विचारयितुमाह—यणादेशादिति । लोपो भविष्यतीति । ननु बहिरङ्गत्वादियुवोरसिद्धत्वाल्लोपो न प्राप्नोति । अत्राहुः—समुदायस्याऽसिद्धत्वं नावयवस्येति । समुदायस्याऽसिद्धत्वे सामर्थ्यात्तदवयवस्याप्यसिद्धत्वमिति चिन्त्यमेतत् । पचेयुरिति । 'पच् अ या उस्'

उ०-तदर्थः । एतदुदाहरणमेकदेशिनः । 'अन्तादिवच्चे'तिसूत्रे पूर्वान्तवद्भावेनाऽत्रैतत्स्वरसाधनात् । उभयाश्रयत्वं तु नाऽत्र, एकदेशविकृतस्याऽनन्यत्वादुदकशब्दस्याऽप्युदकशब्देन ग्रहणादिति तत्र कैयटः । भाष्ये—नेन्द्रस्येति । ननूभयत आश्रयणेऽन्तादिवत्त्वाऽभावेप्यन्तादिवत्त्वेपि व्यपवर्गाऽभावे वा 'सौमेन्द्र' इति तदुदाहरणे विकारविशिष्टेऽन्तवद्भावेन पूर्वपदत्वे 'न्द्र'शब्दे एकदेशविकृतन्यायेनेन्द्रशब्दत्वात्सामर्थ्येनाऽन्त्यवृद्धिनिषेध एवाऽस्त्वत आह—इन्द्रे द्वावचाविति । एको यस्येतीति । यद्यपि वृद्धिः परा तथापि लोपो नित्य इति भावः । न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवाऽस्त्विति तत्सम्भव इति वाच्यम् । एकदेशविकृतन्यायस्याप्याहार्यारोपबोधकत्वेन व्यपवर्गस्य निरूपयितुमशक्यत्वात् । किं चेन्द्ररूपोत्तरपदाद्यच्स्थानिकवृद्धेस्तदभावेनाऽप्राप्तेस्ताद्रूप्यानतिदेशादिति दिक् । पाणिनीये तादृशलक्षणाऽभावादाह—प्रसङ्गेनेति । तदेव दर्शयति भाष्ये—लक्षणं हि भवति य्वोरिति । अनवकाशत्वे हेतुः—अचीत्युच्यत इति । 'यत' इत्यादिः । बहिरङ्गत्वादिति । 'वृद्धिप्रसङ्ग' इत्युक्तेस्तन्निमित्तनिमित्तकत्वादित्यर्थः । चिन्त्यमिति । एवं च 'स्तामत्रे'त्यादिग्रन्थः पूर्वपक्ष्येकदेशि-

१–'य्वोर्वृद्धि' पा० । * उस्यपदान्तात् ६. १. ९६; अतो येयः ७. २. ८०.

नैष दोषः। नैवं विज्ञायते—'या'इत्येतस्येय् भवतीति। कथं तर्हि ? 'यास्'इत्येतस्येय् भवतीति।

**लुग्लोपयणयवायावेकादेशेभ्यः ॥ २५ ॥**

लोपयणयवायावेकादेशेभ्यो लुग्बलीयानिति वक्तव्यम् ॥ लोपात्—गोमान् प्रियोऽस्य* गोमत्प्रियः। यवमत्प्रियः। गोमानिवाचरति गोमत्यते। यवमत्यते॥ यणादेशात्—ग्रामण्यः कुलं ग्रामणिकुलम्। सेनान्यः कुलं सेनानिकुलम्॥ अयवायावेकादेशेभ्यः—गवे हितं गोहितम्। रायः कुलं रैकुलम्। नावः कुलं नौकुलम्। वृकाद्भयं वृकभयम्॥ लुक् च प्राप्नोत्येते च विधयः†, परत्वादेते विधयः स्युः। लुग्बलीयानिति वक्तव्यं, लुग्यथा स्यात् ॥२॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्येप्रथमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम्।

---

प्र०—इति स्थिते यद्यत्रान्तरङ्गत्वात्पररूपं क्रियते तदा व्यपवर्गाऽभावादियादेशो न स्यात्। एकादेशस्याऽन्तवत्त्वाद्भविष्यतीतिचेत्, एवमपि रूपं न सिद्ध्येत्।

यासित्यस्येति। सलोपाऽपवाद इयादेशः। अकृते सलोपे नाऽस्ति पररूपप्रसङ्गः। गोमत्प्रिय इति। यद्यत्र लोपः स्यात्तदा प्रत्ययलक्षणेन नुमादि स्यात्। ामणि कुलमिति। यणादिषु कृतेषु लुकि सति रूपं न सिद्ध्येत्। वृकादिति। पूर्वमेकादेशे कृते तस्यादिवद्भावाल्लुकि सति रूपं न सिद्ध्येत्। 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इत्यस्य 'प्रत्ययोत्तरपदयोश्चे'त्यत्र ज्ञापितत्वात्सिद्धम् ॥२॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम्।

---

उ०— ान्त्येकदेशिनोरुक्तिरिति भावः। वस्तुतः परिभाषारम्भे दोषात्परिभाषा न कार्येति पूर्वपक्षिणो वाक्ये तामादाय दोषोद्भावनमयुक्तमिति चिन्त्यमेव चिन्त्यम्। या ङसिति स्थिते इति। अन्तरङ्गत्वादियः पूर्वं सलोपः। व्यपवर्गाऽभावादिति। 'या'शब्दाऽभावादिति भावः। न सिध्येदिति। ङकारान्तस्येयापत्तेरिति भावः। यासिति च्छेदे 'येय' इति सौत्रो निर्देश इति भावः। 'अतोया इय' इत्येव पाठ इत्यानेमुक्सूत्रे भाष्ये। ननु नित्याऽन्तरङ्गत्वेन सलोपे यासेव दुर्लभोऽत आह—सलोपापवाद इति। वार्णपरिभाषयेदं सिध्यति। तदनाश्रयणेन तु भाष्यम्। लुग्लोपयोः फले विशेषमाह—यद्यत्रेति। लुकि तु 'न लुमते'ति निषेध इति भावः। भाष्ये—परत्वादेत इति। परत्वादुत्कृष्टत्वात्। अन्तरङ्गत्वादित्यर्थः। तदाह—अन्तरङ्गानपीति ॥२॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते प्रथमाध्यायस्य चतुर्थे पादे प्रथममाह्निकम्।

---

*'यँस्य' पा०। † सुपो धातुप्रातिपदिकयोः २. ४. ७१; हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्; इको यणचि; एचोऽयवायावः; अकः सवर्णे दीर्घः ६. १. ६८; ७७; ७८; १०१.

## यू स्त्र्याख्यौ नदी ॥ १ । ४ । ३ ॥

यू इति किमर्थम् ? खट्वा माला । किंच स्यात् ? खट्वाबन्धुः मालाबन्धुः । 'नदी बन्धुनि' [ ६. २. १०९ ] इत्येष स्वरः प्रसज्येत । इह च बहुखट्वक इति 'नद्यृतश्च' [ ५. ४. १५३ ] इति नित्यः कप्प्रसज्येत ।

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'नापो नदीसंज्ञा भवती'ति, यदयं 'ङेराम्नद्याम्नीभ्यः' [ ७. ३. ११६ ] इति पृथगाब्ग्रहणं करोति ॥ इह तर्हि—मात्रे मातुरिति 'आण्नद्याः' [ ११२ ] इत्याट्प्रसज्येत ।

किं पुनरिदं दीर्घयोर्ग्रहणमाहोस्विद्ध्रस्वयोः ? किं चातः ? यदि दीर्घयोर्ग्रहणं 'यू' इति निर्देशो नोपपद्यते । दीर्घाद्धि पूर्वसवर्णदीर्घः प्रतिषिध्यते* ॥ उत्तरत्र च† [ संज्ञि ] विशेषणं न प्रकल्पेत 'यू ह्रस्वा'विति । यदि यू, न ह्रस्वौ, अथ ह्रस्वौ, न यू । यू ह्रस्वौ चेति विप्रतिषिद्धम् ॥ अथ ह्रस्वयोः, 'हे

प्र०- यू स्त्र्याख्यौ नदी । यू इति किमर्थमिति । 'स्त्र्याख्यं नदी'त्येतावदेवास्तु, ज्ञापकादापो न भविष्यतीति प्रश्नः । एष स्वर इति । पूर्वपदान्तोदात्तत्वमित्यर्थः । इष्यते च पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् । खट्वाशब्दस्य नित्स्वरेणाद्युदात्तत्वात् । मातुरिति । मातृशब्दः सम्बन्धिवचनः स्त्रीविषय एवेति नाऽऽख्याग्रहणेन निवर्त्यते । परिच्छेत्तृवाची त्वन्य एव मातृशब्दः । 'नद्यृतश्चे'ति ऋग्रहणमस्त्र्यर्थं स्यात्—बहुपितृक, इत्यज्ञापकमृकारान्तानां नदीसञ्ज्ञाऽभावस्य । किं पुनरिति । ननु समानधर्मानुपपत्त्या सन्देहाऽभावात्प्रश्नानुपपत्तिः, नहि दीर्घनिर्देशे 'यू' इति निर्देशोपपत्तिः, एवं तर्हि युक्ताऽयुक्तत्वनिरूपणाय प्रश्नः । उत्तरत्र चेति । ह्रस्वनिर्देशे तु 'ह्रस्व' इत्येकत्वस्याऽविवक्षितत्वाद्यू ह्रस्वाविति विशेषणविशेष्यभावोपपत्तिः । असति तु विशेषणे मात्रे मातुरित्यत्रापि प्रसङ्गः । अथ ह्रस्वयोरिति । दीर्घयोरप्यणसवर्णान्

उ०- यू स्त्र्याख्यौ । ननु 'यू'पदाऽभावे स्त्र्याख्यमात्रेऽतिसङ्गः, स्त्र्याख्याविति द्विवचनवैयर्थ्यं चेत्यत आह—स्त्र्याख्यं नदीत्यादि । ननु खट्वाशब्दस्य फिषोऽन्तोदात्तत्वेन पूर्वपदप्रकृतिस्वरतत्स्वरयोर्न विशेषोऽत आह—नित्स्वरेणेति । खटेः क्वनि खट्वाशब्दनिष्पत्तेरिति भावः । ननु मातृशब्दस्य जननीपरिच्छेत्तृवाचकतया नानालिङ्गत्वेन स्त्र्याख्यत्वाऽभावोऽत आह—मातृशब्द इति । आख्याग्रहणसामर्थ्याच्च लिङ्गव्यतिरिक्ताऽर्थभेदः शब्दभेदनियामक इति न दोष इति भावः । 'बहुपितृक' इत्यनन्तरमितिरध्याहार्यः । समानधर्मानुपपत्तिमेव दर्शयति—नहीति । एवं तर्हीति । निर्देशानुपपत्त्या ह्रस्वपक्षस्यैव युक्तत्वमिति व्युत्पादनाय प्रश्न इति भावः । भाष्ये—निर्देशो नोपपद्यत इति । छान्दसत्वकल्पनं वृथेति भावः । दीर्घमात्रग्रहणार्थं तत्स्यादिति न वृथात्वमत आह—उत्तरत्र चेति । ननु ह्रस्वनिर्देशेऽपि 'यू ह्रस्व' इति भिन्नार्थकवचनत्वात्सामानाधिकरण्यानुपपत्तिरत आह—ह्रस्व

* दीर्घाज्जसि च ६. १. १०५. † ङिति ह्रस्वश्च १. ४. ६. १-क्वचिन्न ।

शकटे' अत्रापि प्रसज्येत† । नैष दोषः । अवश्यमत्र विभाषा नदीसंज्ञैषितव्या । उभयं हीष्यते—हे शकटि, हे शकटे इति [ च[२] ] ।

इह तर्हि—शकटिबन्धुरिति 'नदी बन्धुनि' [ ६. २. १०९ ] इत्येष स्वरः प्रसज्येत । इह च बहुशकटिरिति 'नद्यृतश्च' [ ५. ४. १५३ ] इति कप्प्रसज्येत ॥ नैष दोषः । 'ङिति ह्रस्वश्च' [ १ ४. ६ ] इत्ययं नियमार्थो भविष्यति—'ङित्येव यू ह्रस्वौ नदीसंज्ञौ भवतो नान्यत्रे'ति ॥ कैमर्थक्यान्नियमो भवति ? 'विधेयं नास्ती'ति कृत्वा । इह चास्ति विधेयम् । किम् ? नित्या नदीसंज्ञा प्राप्ता[१], सा विभाषा विधेया । तत्राऽपूर्वो विधिरस्तु नियमो [ वा[२] ]-ऽस्त्वित्यपूर्व एव विधिर्भविष्यति न नियमः ।

प्र०-गृह्णातीति सिध्यति । ननु चोकाल इत्यत्रोक्तम्—'अणुदित्सवर्णस्येत्यत्राऽशब्दसंज्ञा-ग्रहणमनुवर्तते' । ततश्च सर्वग्रहणेन न भाव्यम् । नैष दोषः । 'नेयङुवङ्स्थानावस्त्री'ति प्रतिषेधात्सवर्णग्रहणं भविष्यतीति । नहि ह्रस्व इयङुवङ्स्थानः स्त्र्याख्योऽस्ति । 'अस्त्री'त्ययमपि निषेधपर्युदासः सवर्णग्रहणस्य ज्ञापकः । अवश्यमत्रेति । तत्र दीर्घ-ग्रहणपक्षे शकटिशब्दस्याऽप्राप्ता पक्षे नदीसंज्ञा विधेया । ह्रस्वनिर्देशे तु नित्या प्राप्ता पक्षे बाध्येति नास्ति विशेषः । अथ तु बह्वादिषु शकटिशब्दो विभाषा ङीषर्थः पठ्यते, तदा दीर्घनिर्देशपक्षे पाक्षिके ङीषि हे शकटि इति भवति, शकटिशब्दस्य हे शकटे इति । ह्रस्वनिर्देशे तु ङीषि सत्यसति च हे शकटीति प्राप्नोतीत्यस्ति भेदः ।

एष स्वर इति । पूर्वपदान्तोदात्तत्वम् । पूर्वपदप्रकृतिस्वरेण तु शकटिशब्दे त्रयोऽप्यचः पर्यायेण उदात्ता भवन्ति 'शकटिशकट्योरक्षरमक्षरं पर्यायेणे'ति वच-नात् । इह चेति । 'शेषाद्विभाषे'ति विभाषा कविष्यते, नित्यश्च प्राप्नोति । कैमर्थक्यादिति । कोऽर्थोऽस्येति किमर्थम् । तस्य भावः कैमर्थक्यम् । प्रश्नविषयविष-यिणोः सम्बन्धो भावप्रत्ययेनोच्यते । यत्र तत्साध्यस्याऽर्थस्य सिद्धत्वात्किमर्थमिति प्रश्नः ।

उ०-इतीति । 'वेदाः प्रमाण'मित्यादावप्येवमेव । नन्वेकत्वाऽविवक्षापेक्षया 'यू' इत्यस्याऽसम्बन्ध एव कल्प्य इत्यत आह—असतीति । ननु ह्रस्वनिर्देशे दीर्घयोर्न स्यादिति कुतो नोक्तमत आह—दीर्घयोरपीति । अनुवर्तते इति । तच्च सप्तम्या विपरिणमय्य शब्दसंज्ञायां विधे-यायां सवर्णग्रहणं नेत्यर्थकरणादिति भावः ।

भाष्ये—हे शकटे इति । पर्जन्यवल्लक्षणप्रवृत्त्याऽम्बार्थनद्योरिति ह्रस्वे कृते 'हे गौरी'तिवद् गुणो न स्यादिति भावः । नास्ति विशेष इति । 'वचनारम्भं प्रती'ति शेषः । अथ त्विति । असंदिग्धे संदिग्धवचनमेतत् । पठ्यते इति । पाठाऽभावेऽपि 'सर्वतोऽक्तिन्नर्था'-

† अम्बार्थनद्योर्ह्रस्वः ७. ३. १०७. १–'प्राप्नोति' पा० । २–क्वचिन्न ।

अथाऽयं नित्यो योगः स्यात्प्रकल्पेत नियमः ? बाढं प्रकल्पेत । नित्यस्तर्हि भविष्यति । तत्कथम् ? योगविभागः करिष्यते* । इदमस्ति,—'यू स्त्र्याख्यौ नदी' 'नेयङुवङ्स्थानावस्त्री' [ ४ ] 'वामि' [ ५ ] । ततो 'ङिति' । ङिति चेयङुवङ्स्थानौ यू वाऽस्त्री नदीसंज्ञौ न भवतः । ततो 'ह्रस्वौ' । ह्रस्वौ च यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः । 'इयङुवङ्स्थानौ' 'वा' 'ने'ति निवृत्तम् ।

यद्येवं 'शकटये' अत्र गुणो† न प्राप्नोति । द्वितीयो योगविभागः करिष्यते, शेषग्रहणं न करिष्यते‡ । कथम् ? इदमस्ति—'यू स्त्र्याख्यौ नदी' 'नेयङुवङ्स्थानावस्त्री' 'वामि' । ततो 'ङिति' । ङिति चेयङुवङ्स्थानौ यू वाऽस्त्री नदीसंज्ञौ न भवतः । ततो 'ह्रस्वौ' । ह्रस्वौ च यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः । 'इयङुवङ्स्थानौ' 'वा' 'ने'ति निवृत्तम् । ततो 'घि' । घिसंज्ञौ च भवतः स्त्र्याख्यौ यू ह्रस्वौ ङिति । ततो 'ऽसखि' । सखिवर्जितौ च यू ह्रस्वौ घिसंज्ञौ भवतः । 'स्त्र्याख्यौ' 'ङिती'ति च निवृत्तम् ॥ यदि तर्हि शेषग्रहणं न क्रियते नार्थ एकेनापि योगविभागेन । अविशेषेण नदीसंज्ञोत्सर्गः । तस्य ह्रस्वयोर्घिसंज्ञा बाधिका । तस्यां नित्यायां प्राप्तायामियं ङिति विभाषाऽऽरभ्यते ।

प्र०–तस्यैव नियमार्थत्वं, न तु प्रयोजने सतीत्यर्थः । यद्येवं शकटय इति । नित्यया नदीसंज्ञया घिसंज्ञाया बाधितत्वात् । ततो घीति । एकविषयत्वाच्च घिनदीसंज्ञयोरेक-संज्ञाधिकाराच्च पर्यायेण प्रवृत्तौ शकट्यै शकटये इति च सिद्ध्यति । अविशेषेणेति ।

उ०–दिति ङीषि शकटीशब्दस्य सत्त्वमिति बोध्यम् । अस्ति भेद इति । एवं चोभाभ्याम-प्यवश्यं वचनं कार्यमित्याशयकभाष्यमेकदेश्युक्तिरिति भावः । ननु किंशब्दोऽनिर्धारितविशेष-विषये प्रश्ने, प्रश्नविषयत्वं च [ न ] नियमार्थत्वे प्रयोजकमत आह—कोऽर्थ इति । अर्थः—प्रयोजनम् । संबन्धो—विषयविषयिभावः । समासकृत्तद्धितोत्तरत्वादेः संबन्धार्थक-त्वादित्यर्थः । प्रश्नविषयत्वे बीजं दर्शयंस्तस्य नियमप्रयोजकत्वमाह—यत्रेत्यादि । एवं च विधेयत्वाभिमताऽन्यथासिद्धिर्नियमप्रयोजिकेति फलितम् । तदाह भाष्ये—विधेयं नास्ती-त्यादि । अस्त्री वा नदीसंज्ञौ नेति केवलस्त्रीशब्दादौ प्राप्त्या तदन्ते वाऽत्रापि नित्यस्त्रीलिङ्गा-वित्यर्थाऽज्ञानात्प्राप्तिं मत्वैवं व्याख्यातम् । ननु शेषग्रहणप्रत्याख्यानाद् घित्वेन गुणो भवि-ष्यतीत्यत आह—नित्ययेति । विभक्तेन ह्रस्वावित्यनेन नित्यसंज्ञाया एव विधानादिति भावः । भाष्ये—शेषग्रहणं न करिष्यत इति । तत्सत्त्वे हि स्त्रीलिङ्गह्रस्वयोर्नदीसंज्ञया उक्तत्वेनाऽनुक्तनदीत्वाऽभावात्तत्र घिसंज्ञा विधातुमशक्येति भावः । ननु घित्वेऽपि नदीत्वाऽ-

* ङिति ह्रस्वश्च १. ४. ६. † इदुद्भ्याम् ७. ३. १११. ‡ शेषो घ्यसखि १. ४. ७.

अथवा पुनरस्तु दीर्घयोः। ननु चोक्तं 'निर्देशो नोपपद्यते। दीर्घाद्धि पूर्वसवर्णदीर्घः प्रतिषिध्यत' इति। 'वा छन्दसि' [ ६. १. १०६ ] इत्येवं भविष्यति। 'छन्दसी'त्युच्यते न चेदं छन्दः। छन्दोवत्सूत्राणि भवन्तीति।

यदप्युच्यत 'उत्तरत्र विशेषणं न प्रकल्पेत यू ह्रस्वाविति, यदि यू, न ह्रस्वौ। अथ ह्रस्वौ, न यू। यू ह्रस्वाविति च विप्रतिषिद्ध'मिति। नैतद्विप्रतिषिद्धम्। आहाऽयं 'यू ह्रस्वा'विति। यदि यू, न ह्रस्वौ। अथ ह्रस्वौ, न यू। त एवं विज्ञास्यामः—'य्वोर्यौ ह्रस्वा'विति। कौ च य्वोर्ह्रस्वौ ? सवर्णौ।

अथ स्त्र्याख्याविति कोऽयं शब्दः ? स्त्रियमाचक्षाते स्त्र्याख्यौ। यद्येवं स्त्र्याख्यायाविति प्राप्नोति*। अनुपसर्गे हि को विधीयते†। न तर्हीदानीमिदं भवति—

"यस्मिन्दश सहस्राणि पुत्रे जाते गवां ददौ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति" ॥

प्र०-ह्रस्वयोर्दीर्घयोश्चेत्यर्थः। बाध्यत्वादुत्सर्गसामान्यादुत्सर्ग इत्युक्तम्। परत्वात्तु पुन्नपुंसकयोः कृतार्था घिसंज्ञा नदीसंज्ञाबाधिका। तस्यामिति। अङिति तु शकटिबन्धुर्बहुशकटिरित्यादौ घिसंज्ञया नदीसञ्ज्ञाया बाधितत्वाद्दोषाऽभावः। छन्दोवदिति। तादर्थ्यात्सूत्रेष्वपि छन्दःशब्दो वर्त्तत इति छन्दोविषयं कार्यं सूत्रेष्वपि प्रवर्तते। गौणमुख्यन्यायश्छन्दःप्रदेशेषु निर्देशाऽन्यथानुपपत्त्या नाश्रीयते। अथेति। यथाऽर्थोभिप्रेतस्तथा न शब्दसंस्कारोऽस्तीति प्रश्नः। अनुपसर्गे हीति। य'स्त्वातश्चोपसर्ग'इति कः स

उ०-निवृत्तेराद्यापि स्यादत आह—एकविषयत्वादिति—एकसंज्ञाधिकाराच्चेति पर्याये हेतू। 'अविविशेषेण'त्यस्य स्त्रीपुंसाऽविशेषेणेति नार्थ इत्याह—ह्रस्वयोरिति। ननु स्त्रियां नदीत्वं घित्वं लिङ्गत्रयसाधारणमिति सावकाशत्वात्कथमुत्सर्गाऽपवादभावोऽत आह—बाध्यत्वादिति। सामान्यं—बाधत्वलक्षणसादृश्यम्। सूत्रेष्वपीति। 'छन्दोव'दित्यतिदेशादिति भावः। तादर्थ्यादिति—छन्दोवदितिदेशो बीजमुक्तम्। निर्देशान्यथानुपपत्त्येति। निर्देशकल्पिताऽतिदेशाऽन्यथानुपपत्त्येत्यर्थः। अतिदेशविषये तद्वैयर्थ्यापत्त्या गौणमुख्यन्यायाऽप्रवृत्तेरिति भावः।

शब्दे संदेहाऽभावात्कोऽयमिति प्रश्नोऽनुपपन्न इत्यत आह—यथार्थ इति। भाष्ये एकदेश्याह—स्त्रियमिति। इतर आह—यद्येवमिति। स्त्र्याख्यायावितीति। कर्मण्यणातो युक्ता भाव्यमिति भावः। यस्त्विति। यद्यप्याचष्टे इत्याख्य इति व्युत्पाद्य पश्चात्षष्ठीसमासे सिध्यति, तथापि 'स्त्रियमाचक्षाते' इति विग्रहोल्लेखादेवमुक्तम्। पुनरेकदेश्याह—न तर्ही-

* कर्मण्यण् ३. २. १. † आतोऽनुपसर्गे कः ३. २. ३.

छन्दोवत्कवयः कुर्वन्ति । नह्येषेष्टिः ॥ एवं तर्हि कर्मसाधनो भविष्यति†, स्त्रियामाख्यायेते स्त्र्याख्यौ । यदि कर्मसाधनः कृत्स्त्रिया धातुस्त्रियाश्च न सिध्यति, तन्त्र्यै लक्ष्म्यै श्रियै भ्रुवै ॥ एवं तर्हि बहुव्रीहिर्भविष्यति,—स्त्रियामाख्याऽनयोः स्त्र्याख्यौ । एवमपि कृत्स्त्रिया धातुस्त्रियाश्च न सिध्यति,—तन्त्र्यै लक्ष्म्यै श्रियै भ्रुवै ॥ एवं तर्हि विज्भविष्यति× ॥ अथवा पुनरस्तु क एव,—स्त्रियमाचक्षाते स्त्र्याख्याविति । ननु चोक्तं 'स्त्र्याख्यायाविति प्राप्नोति । अनुपसर्गे हि को विधीयत' इति । मूलविभुजादिपाठात्को भविष्यति* । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं—

यस्मिन्दश सहस्राणि पुत्रे जाते गवां ददौ ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति'' ॥ इति ।

प्र०—परत्वात्कर्मण्यणित्यणा बाध्यते । न तर्हीति । शिष्टप्रयोगादस्मिन्विषये कप्रत्ययस्य साधुत्वमेष्टव्यमिति भावः । छन्दोवत्कवय इति । तेनच्छान्दसत्वाद्भविष्यति । नह्येषेति । असाधव एवैवमादयः, न तु तत्प्रामाण्यात्साधुत्वव्यवस्था । आख्यायेते इति । 'घञर्थे कविधान'मिति कप्रत्ययः । 'साधनं कृते'ति सप्तमीसमासः । कृत्स्त्रिया इति । नहि तयोरीकारोकारौ स्त्रियां विहितौ यथा ङ्यूङाविति भावः । एवं तर्हीति । आख्यानमाख्या । 'आतश्चोपसर्गे' इत्यङ् । स्त्रियामाख्यानमनयोरिति बहुव्रीहिः । अत्र पक्षे सूत्रेणैव प्रत्ययः समासश्च सिद्ध्यतीति भावः । स्त्रियां—स्त्रीविषये, आख्या—प्रतिपादनमित्यर्थः । एवमपीति । नहि तयो स्त्रियां विधानमित्यर्थः । एवं तर्हीति । असरूपत्वादणा पक्षे विज् न बाध्यते । समुदायधर्मस्यावयव आरोपात्कृत्स्त्रिया अप्यत्र

उ०—दानीमिति । सौत्रप्रयोगे विप्रतिपन्नं प्रति श्लोकानुपपत्तिकथनमसङ्गमत आह—शिष्टेति । स एवाह—छन्दोवदिति । इदमेष्टव्यमिति भावः । इतर आह—नह्येषेति । तद्व्याचष्टे—असाधव इति । ऋषीणां तपोमाहात्म्यात्तु तदुच्चारयितॄणामस्माकं न प्रत्यवाय इति बोध्यम् । 'स्त्रियामाख्यायेते' इति भाष्ये 'शास्त्रेणे'ति शेषः । ननूपपदत्वाऽभावात्समासो न स्यादत आह—साधनमिति । नहीति । ईकाराद्यन्तस्य स्त्रियां विधानाऽभावाद्वर्णयोः संज्ञेति वाच्यम् । एवं च ङ्यूङोरेव स्यान्न तु तन्त्र्यादेरिति भावः । प्रतिपादनं । शास्त्रेणेत्यर्थः । भाष्ये—एवं तर्हि विजिति । सूत्राणां छन्दोवत्त्वादिति भावः । क्विप्तु नोक्तः, तस्यादन्तेभ्योऽनभिधानात् । अत एव 'शंस्था' इत्यादौ नेत्त्वम् । एवं चादन्तधातुप्रकृतिकमादन्तं प्राति-

† घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ३. ३. ५८ वा० ४.

× आतो मनिन्क्वनिब्वनिपश्च ३. २. ७४.

* कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ३. २. ५ वा० २.

अथाख्याग्रहणं किमर्थम् ?

**नदीसंज्ञायामाख्याग्रहणं स्त्रीविषयार्थम् ॥ १ ॥**

नदीसंज्ञायामाख्याग्रहणं क्रियते 'स्त्रीविषयार्थम्'। स्त्रीविषयावेव यौ नित्यं तयोरेव नदीसंज्ञा यथा स्यात्। इह मा भूत्--ग्रामण्ये सेनान्ये स्त्रियै इति।

**प्रथमलिङ्गग्रहणं च ॥ २ ॥**

प्रथमलिङ्गग्रहणं च कर्तव्यम्। प्रथमलिङ्गे यौ स्त्र्याख्याविति वक्तव्यम्। किं प्रयोजनम् ?

---

प्र०—पक्षे संज्ञा सिद्ध्यति। आख्याग्रहणमिति। विच्पक्षे आख्याशब्द एवासम्। क्प्रत्ययपक्षे तु प्रवृत्तिनिमित्तनिर्देशः। यू स्त्रियामित्येव स्त्र्यर्थवृत्तित्वं लभ्यते इति प्रश्नः। स्त्रीविषयार्थमिति। आख्याग्रहणसामर्थ्यान्नियम आश्रीयते। स्त्रियमेव यावाचक्षाते न तु लिङ्गान्तरयुक्तमपीत्यर्थः। ग्रामण्ये इति। ग्रामणीशब्दः क्रियाशब्दत्वान्त्रिलिङ्गत्वात्स्त्रीविषयो न भवतीति स्त्रियामपि वर्तमानो नदीसंज्ञो न भवति। यद्येवमिष्वशनिप्रभृतीनामुभयलिङ्गानां पट्वादीनां च गुणवचनत्वात्सर्वलिङ्गानां स्त्रीविषयत्वाऽभावात्स्त्रियां वृत्तौ 'ङिति ह्रस्वश्चे'ति नदीसंज्ञा न प्राप्नोति। एवं तर्हि 'ङिति ह्रस्वश्चे'त्यत्रैवंविधो नियमो नाश्रीयते केवलस्य स्त्रीशब्दस्याऽनुवर्तनादित्यदोषः। प्रथमलिङ्गग्रहणमिति। यः शब्दः प्रथमं स्त्रीत्वविशिष्टार्थमाह पश्चात्तु प्रकारान्तरेणाऽर्थान्तरं लिङ्गान्तरयुक्तं, तस्य तदानीमस्त्र्याख्यत्वादप्राप्ता नदीसंज्ञाऽनेन विधी-

---

उ०—पदिकं लोकेऽसाध्विति बोध्यम्। आदन्तेभ्यो विचश्छन्दसि विधानादित्याहुः। वर्णयोः स्त्र्याख्यानकर्तृत्वाऽभावात्कथं तन्न्यादौ सिद्धिरत आह—समुदायेति। ङ्यूङोस्तु शास्त्रकल्पितं तदस्तीति भावः। अत्र पक्षे तदन्तसंज्ञापक्षे वक्तुं शक्य इति चिन्त्यम्। अत्र पक्षे 'आच्छीनद्यो'रित्यादिविषयेऽवयवे समुदायरूपारोपेण निर्वाह इति बोध्यम्। क्प्रत्ययपक्षे आख्यशब्दसत्त्वेनाख्याग्रहणमित्युक्तमत आह—विजिति। प्रवृत्तिनिमित्तेति। एवं चाख्याबोधकं ग्रहणमित्यर्थं इति भावः। नियम इति। वार्त्तिके विषयशब्दोऽनन्यभावे। तद्द्योतक एवकारो भाष्ये। एवकारार्थ एव च नित्यग्रहणेनाऽन्वाख्यायत इति बोध्यम्। स्त्रियमेवेति। स्त्रीत्वविशिष्टमेवेत्यर्थः। क्रियाशब्दत्वादिति। प्रवृत्तिनिमित्तभेद एव शब्दभेदप्रयोजको, न तु विशेष्यभेदो, नापि लिङ्गभेदः, तद्भेदेपि भेदव्यवहाराऽभावादिति भावः। ङिति ह्रस्वश्चेत्यत्रेति। ह्रस्वघटितवाक्ये, दीर्घघटितवाक्ये च। एतदुपसंहारे स्फुटीभविष्यति। भाष्ये—प्रथमलिङ्गेति। वृत्तेः पूर्वं लिङ्गबोधके वृत्तिघटकशब्दे विद्यमानौ स्त्र्याख्यौ यू तयोर्वृत्तौ स्त्र्याख्यात्वाऽभावेपि नदीत्वार्थमित्यर्थः। तदन्तसंज्ञापक्षे वृत्तिघटकशब्दे विद्यमानत्वं तस्य व्यपदेशिवद्भावेन बोध्यं तदाह—यः शब्द इति। यद्यप्यर्थभेदाच्छब्दभेदस्तथापि अस्यैक्य-

## प्रयोजनं क्विब्लुप्समासाः ॥ ३ ॥

क्विप्—कुमार्यै† ब्राह्मणाय ॥ लुप्—खरकुट्यै‡ ब्राह्मणाय ॥ समास—अतितन्त्र्यै ब्राह्मणाय । अतिलक्ष्म्यै ब्राह्मणाय ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । अवयवस्त्रीविषयत्वात्सिद्धम् । अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसंज्ञा भविष्यति ।

प्र०-यते । क्विबिति । कुमारीमिच्छत्यात्मनः—कुमारीयति । ततः कर्तरि क्विप् । अथवा कुमारीवाचरतीत्याचारे क्विपं विधाय कर्तरि क्विब्विधेयः ।

खरकुट्यै इति । खरकुटीवेतीवार्थे 'संज्ञाया'मिति कनो 'लुम्मनुष्ये' इति लुप् । यद्यप्यत्र युक्तवद्भावात्स्त्रीत्वमस्ति तथापि स्वाश्रयस्य पुंस्त्वस्याऽनिवर्तनान्नाऽयं स्त्रियामेव वर्तते, किं तर्हि ? पुंस्यपीत्याख्याग्रहणान्नियमार्थादप्राप्ता नदीसंज्ञा विधीयते ।

उ०—मात्रेणाऽभेदाध्यवसायाद्यत्तच्छब्दबोधितैक्योपपत्तिः । प्रकारान्तरं,—वृत्त्यन्तरप्राप्तिः । आचारे क्विपमिति । प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणादिति भावः । ङ्यन्तादाचारक्विप्सत्त्वे इदम् । खरकुटीवेति । खरकुटशब्दात्पिप्पल्यादेराकृतिगणत्वान्ङीष् । कुटीशब्देन समासो वा । पुंस्त्वस्याऽनिवर्तनादिति । न च तदनिवृत्तौ 'खरकुटीः पश्ये'त्यादौ नत्वापत्तिः, 'प्रकृतिव'दित्यतिदेशेन प्रकृतिलिङ्गप्रयुक्तकार्याऽतिदेशेन तद्विरुद्धस्वाश्रयकार्याऽप्रवृत्तेः । स्पष्टं चेदं 'स्त्रिया'मितिसूत्रे भाष्ये । यद्वा तेन स्वप्रयुक्तकार्याऽभावोऽप्यतिदिश्यते । स्पष्टं चेदं 'तस्माच्छस' इति सूत्रे भाष्यकैयटयोः । अत्रापि पक्षे प्रकृते स्वाश्रयलिङ्गनिवृत्तौ मानाऽभाव इत्याशयः । तत्प्रत्याख्यानेऽपि स्त्र्याख्यावित्यस्य स्त्रीत्वेनैव य आहेति नार्थः, किं तु स्त्रीत्वविशिष्टमेव य आहेत्यर्थः, न चायं तथा, स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वादिविशिष्टस्याऽभिधानात् । न च पदार्थमात्रे शास्त्रीयलिङ्गत्रयस्य सत्त्वेनाऽसम्भवः, व्यक्तिवस्तुपदार्थादिपदबोध्यत्वकाले तत्तल्लिङ्गोपजनेऽपि स्त्रीपदादिबोध्यत्वदशायां तत्सत्त्वे मानाऽभावात् । प्रकृते तु 'ब्राह्मणाये'त्यादिविशेष्यदर्शनेन तत्सत्ताऽनुमानात् । तत्फलं तु 'श्रिये ब्राह्मणाये'त्यत्र लुपि 'ङिति ह्रस्वश्चे'ति विकल्पाऽभावः । 'प्रथमलिङ्गं चे'ति तु न तद्विषयमिति वक्ष्यते । 'यथा दारादिशब्दैः शब्दशक्तिस्वाभाव्याच्छास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्याऽभिधानं, तथा लुबन्तैरपि शास्त्रीयस्त्रीत्वविशिष्टस्यैव-पुमादेरभिधानम् । अत एव 'तदशिष्य'मित्यनेन तत्प्रत्याख्यानं सङ्गच्छते । एवं चाऽस्यापि नित्यस्त्रीत्वमस्त्येवे'त्यपास्तम् । 'अतिशयिता तन्त्री'रिति विग्रहे दोषाऽभावादाह-तन्त्रीमतीति ।

बहिरङ्गे इति । 'अकृतव्यूह'परिभाषा तु नास्त्येवेति भावः । यथोद्देशे इदम् । अवयवशब्देनाऽत्र वृत्तिप्रकृतिभूतशब्दमात्रग्रहणम् । अत एव क्यजाद्यन्ते न दोषः । समुदाये कार्यप्रवृत्तिस्तु नद्यन्तत्वाद्बोध्या । वस्तुतः—कार्यकालपक्षेऽपि समासे स्पष्टैव तदवयवस्य तत्प्राप्तिः ।

† सुप आत्मनः क्यच् ३. १. ८; अन्येभ्योऽपि दृश्यते ३. २. १७८.

‡ लुम्मनुष्ये ५. ३. ९८. १—इदं वार्तिकमिति केचित् ।

**अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे[1] यणस्थानप्रतिषेधप्रसङ्गोऽवयवस्येयङुवङ्स्थानत्वात् ॥ ४ ॥**

अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे[1]× यणस्थानयोरपि य्वोः प्रतिषेधः प्रसज्येत। आध्यै प्रध्यै† ग्रामण्यै। किं कारणम्? 'अवयवस्येयङुवङ्[3]स्थानत्वात्'। अवयवोऽत्रैयङुङ्[3]स्थानः‡।

**सिद्धं त्वङ्गरूपग्रहणाद्यस्याङ्गस्येयुवौ तत्प्रतिषेधात् ॥ ५ ॥**

सिद्धमेतत्। कथम्? अङ्गरूपं गृह्यते। यस्याऽङ्गस्येयुवौ भवतस्तस्येदं ग्रहणम्, न चैतस्यांगस्येयुवौ भवतः।

---

प्र०–अतितन्त्र्यै इति। तन्त्रीमतिक्रान्त इति तत्पुरुषः। अवयवस्त्रीविषयत्वादिति। अन्तरङ्गत्वात्पूर्वमेव स्त्र्याख्यत्वात्प्रवृत्ता नदीसंज्ञा पश्चादुपजायमाने लिङ्गान्तरयोगे बहिरङ्गे न निवर्त्तत इति भावः। आध्यै इति। आध्यायतीति 'ध्यायतेः सम्प्रसारणं चे'ति क्विप्सम्प्रसारणं च। अत्राऽवयवो धीशब्द इयङ्स्थानः। समुदायस्य त्वेरनेकाच इति यणा बाधितत्वादियङ्स्थानत्वाऽभावः। नन्वाधीप्रधीशब्दौ क्रियाशब्दत्वात्त्रिलिङ्गत्वात्स्त्रीविषयौ न भवतो,—यथैव ग्रामणीसेनानीशब्दाविति नदीसंज्ञया न भाव्यमिति पूर्वाऽपरव्याघातदर्शनाच्चिन्त्यमेतत्। सिद्धं त्विति। 'अचि श्नुधात्वि'त्यनेन अङ्गस्ये-

---

उ०–अत एव भाष्ये 'तदाश्रया नदीसंज्ञा भविष्यती'त्युक्तम्। कार्यवेलायामपि भविष्यतीत्यर्थस्तस्य। कैयटरीत्या तु 'तदाश्रया नदीसंज्ञाऽस्ती'ति वदेत्। कुमारीत्यादावपि विशेषणतया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वमस्त्येव। प्राधान्येन तन्मात्रबोधकत्वनिवेशो तु न मानमित्याशयः। चिन्त्यमेतदिति। 'आध्यायती'त्यादिविग्रह इत्यभिमानः। वस्तुतस्तु ध्यानं धीः, आ ईषत्प्रकृष्टा वा धीर्यस्या इति विग्रहः। एवं च गतिपूर्वत्वाद्यणपि सुलभः, अवयवस्येयङ्स्थानत्व'मिति भाष्यं च रमणीयमेव। 'आध्यै' इत्यादौ समुदायस्य नित्यस्त्रीत्वाऽभावान्नदीत्वाऽप्राप्तेरवयवस्य सा वाच्या। सा च न प्राप्नोति, तस्येयङ्स्थानत्वात्। वार्त्तिकारम्भे तु न दोषः, तेन हि नित्यस्त्रीत्वाऽभावेपि प्राक्तननित्यस्त्रीत्वं गृहीत्वेदानीं सा प्रवर्त्तते। न चेदानीमसावियङ्स्थान इति निषेधाऽप्रवृत्तिः, प्राक्तनेयङ्स्थानत्वं गृहीत्वा निषेधस्य तु न प्रवृत्तिः, मानाऽभावादिति भावः। न च 'गतिकारकपूर्वस्ये'त्यत्र प्रतिपदोक्तपरिभाषया नित्यसमासस्यैव ग्रहणमित्यत्र यण्दुर्लभः, अत एव क्रुन्मेजन्तसूत्रे 'मा नः समस्य दूढ्य' इति मन्त्रव्याख्यावसरे 'दुर्धियः' इति कैयटेन प्रयुक्तमिति वाच्यम्। मानाऽभावात्। कैयटप्रयोगे दुःस्थिता धीर्येषामिति विग्रहेण धीशब्दं प्रति गतित्वाऽभावान्न दोषः। अत्र चेदमपि भाष्यं मानम्।

---

१–'प्रतिषेधप्रसङ्गे' पा०। × नेयङुवङ्स्थानावस्त्री १. ४. ४.

† एरनेकाचोऽसंयोगपूर्वस्य ६. ४. ८२. ३–उवङ् क्वचिन्न।

‡ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६. ४. ७७,

## ह्रस्वेयुवस्थानप्रवृत्तौ च स्त्रीवचने ॥ ६ ॥

ह्रस्वौ चेयुवस्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम् । शकट्यै* अतिशकट्यै ब्राह्मण्यै । क्व मा भूत् शकटये* अतिशकटये ब्राह्मणाय । धेन्वै अतिधेन्वै ब्राह्मण्यै । क्व मा भूत् ? धेनवे अतिधेनवे ब्राह्मणाय । श्रियै अतिश्रियै ब्राह्मण्यै । क्व मा भूत् ? श्रिये अतिश्रिये ब्राह्मणाय । भ्रुवै अतिभ्रुवै ब्राह्मण्यै । क्व मा भूत् ? भ्रुवे अतिभ्रुवे ब्राह्मणाय ।

अपर आह--'ह्रस्वेयुवस्थानप्रवृत्तौ स्त्रीवचने' । ह्रस्वौ चेयुवस्थानौ च प्रवृत्तावपि स्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम् । शकट्यै अतिशकट्यै

प्र०-यङ्वङ्विधानात्सामर्थ्याक्षिप्तमत्राऽङ्गम् । तेन यस्याङ्गस्येयङुवङौ निर्वर्त्येते तस्य नदीसंज्ञानिषेधः । 'आध्यै' इत्यत्राऽवयवस्याऽङ्गत्वं नास्ति । अङ्गस्य च 'एरनेकाच' इति यणिवधानादियङुवङ्स्थानता नास्तीति निषेधाऽभावः । एतदर्थमेव स्थानग्रहणं कृतम्,—'इयङुवङोर्यदा स्थितिस्तदा प्रतिषेधो यथा स्याद्यदा त्वपवादेन बाधस्तदा मा भूत्' । ह्रस्वेति । 'अवयवस्त्रीविषयत्वात्सिद्ध'मित्यस्यायमपवादः । ह्रस्वेयङुवङ्स्थानानां प्रवृत्तिरर्थान्तरसङ्क्रान्तिस्तस्यां सत्यां स्त्रीवचने एव संज्ञा भवति न लिङ्गान्तरवचने । चशब्दादप्रवृत्तौ चेति ज्ञेयम् । एतदेव 'प्राक्प्रवृत्ते'रिति भाष्ये स्पष्टीकृतम् ।

अपर आहेति । चशब्दोऽत्र न पठ्यत इति पूर्वस्माद्विशेषः । नहि प्राक्प्रवृत्तेः

उ०- सामर्थ्याक्षिप्तमिति । इयङुवङ्स्थानत्वस्याऽङ्गे एव सम्भवादिति भावः । एतद्वार्त्तिकभाष्यप्रामाण्यादियङुवङ्भ्यामुपस्थितस्याऽङ्गस्य शाब्देऽन्वय इति तात्पर्यम् । अङ्गत्वं नास्तीति । ननु त्वदुक्तविग्रहेऽन्तर्वर्तिविभक्त्या धीशब्दस्याप्यङ्गत्वमस्त्येवेति चेन्न । नदीसंज्ञाकार्यप्रयोजकश्रूयमाणविभक्तिनिरूपिताऽङ्गे यत्र क्वापीयङादेः स्थितिस्तत्र निषेधात् । अत एव 'हे श्री'रित्यादौ निषेधस्तदाह—एतदर्थमेवेति । यत्र नदीकार्याश्रयेऽङ्गे बाधकाऽबाधितेयङुवङोः स्थितिः क्वचित्प्रयोगे दृष्टा तस्य शब्दस्य, सति सम्भवे तदवयवस्य च नदीत्वं नेत्यर्थं इति भावः । 'प्रध्यै' इत्यत्र चाऽवयवनित्यस्त्रीत्वमादाय नित्यैव संज्ञा । इयङ्स्थानत्वाऽभावाच्च न 'ङिति ह्रस्वश्चे'ति विकल्पः । न च प्रधीशब्दावयवस्य नदीत्वे 'नद्यृतश्चे'ति कबापत्तिः, समासात्पूर्वावस्थायामुत्तरपदस्य नदीत्व एव कपः प्रवृत्तेः ।

नन्वेवमतिश्रिये ब्राह्मणायाऽतिशकटये ब्राह्मणायेत्यादावयवस्त्रीत्वमादाय विकल्पापत्तिरित्याशङ्क्य भाष्ये—ह्रस्वेयुवित्यादि । ङित्प्रत्ययाक्षिप्ताङ्गस्यैव स्त्रियामिति विशेषणमित्यनेनाऽन्वाख्यायत इति बोध्यम् । आख्यापदं त्वत्र न संबध्यतेऽतिश्रिया इत्यादावङ्गस्य तत्त्वाऽभावात्पाक्षिकनदीत्वाऽनापत्तेः । एवं च समुदायस्यानेन नदीत्वं क्रियते । तत्र 'प्रथमलिङ्गग्रहणं चे'त्यस्य प्रत्याख्यानरीत्या प्राप्त्यभावान्नञं निवर्त्य विधित्वेनैव व्याचष्टे—नदीसंज्ञौ भवत इति । वस्तुतो वार्त्तिकेनाप्यतिलक्ष्म्यै इत्यादाववयवस्यैव सा क्रियते इति समु-

* लुब्मनुष्ये ५. ३. ९८.

ब्राह्मण्यै। क्व मा भूत्? शकटये अतिशकटये ब्राह्मणाय। धेन्वै अतिधेन्वै ब्राह्मण्यै। क्व मा भूत्? धेनवे अतिधेनवे ब्राह्मणाय। श्रियै अतिश्रियै ब्राह्मण्यै। क्व मा भूत्? श्रिये अतिश्रिये ब्राह्मणाय। भ्रुवै अतिभ्रुवै ब्राह्मण्यै। क्व मा भूत्? भ्रुवे अतिभ्रुवे ब्राह्मणाय।

किमर्थं पुनरिदमुच्यते? प्रथमलिंगग्रहणं चोदितम्, तद्द्वेष्यं विजानीयात्सर्वमेतद्विकल्पत इति। तदाचार्यः सुहृद् भूत्वान्वाचष्टे 'ह्रस्वौ चेयुव्स्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेवे'ति ॥३॥

षष्ठीयुक्तश्छन्दसि वा ॥ १ । ४ । ६ ॥

योगविभागः कर्तव्यः। 'षष्ठीयुक्तश्छन्दसि'। षष्ठीयुक्तः पतिशब्दश्छन्दसि घिसंज्ञो भवति। ततो 'वा'। वा छन्दसि सर्वे विधयो भवन्ति। सुपां

प्र०–किंचिदनिष्टमापद्यते यदर्थः समुच्चयः क्रियते। पठ्यमानोऽपि चशब्दः स्त्रीवचनशब्देन सम्बध्यते, स च नियमार्थः। क्वचिद्भाष्ये पठ्यते—"अस्त्रीवचनावेव नदीसंज्ञौ भवत इति वक्तव्यम्। शकट्यै अतिशकट्यै ब्राह्मणाय। क्व मा भूत्? शकटये अतिशकटये ब्राह्मण्यै" इत्यादि। एष त्वपपाठः। उपसंहारस्याऽन्यथाभिधानात् ॥३॥

षष्ठीयुक्तः। योगविभागेनेति। तेन परिभाषा सम्पद्यते,—'यावदिह शास्त्रे कार्यं तच्छन्दसि वा भवति'। तत्राऽनयैव सिद्धत्वा'द्बहुलं छन्दसी'त्यादि न वक्तव्यम्। एतदर्थश्च 'व्यत्ययो बहुल'मित्यत्र योगविभागो न व्याख्येयः। उभयत्रविभाषा चेयं विज्ञेया। सुपामिति। 'कर्मणि द्वितीये'त्यादेर्नियमस्य विकल्पनादनियमोऽपि च्छन्दसि भवतीति

उ०–दायस्य नैव प्राप्तिः, 'अतिश्रिये' इत्यादावयवस्य तेन प्राप्ता 'नेय'ङिति निषिद्धा। तस्य तु नाऽनेन संज्ञाविकल्पो, यतो ङिद्विहितस्तदादित्वाऽभावात्। 'ह्रस्वा'वित्यादेर्ह्रस्वेवर्णाद्यन्ते, इयङादिस्थानेवर्णाद्यन्ते च शब्दरूपे इति वार्त्तिकेऽर्थः तादृशौ शब्दाविति भाष्येऽर्थ इत्यलम्। ननु प्रथमलिङ्गग्रहणस्य 'यू स्त्र्याख्यौ'वित्यत्रोपसङ्ख्यातत्वेन 'ङिति ह्रस्वश्चे'त्यत्राऽप्रसक्ते'र्ह्रस्वेयुवे'त्यादि व्यर्थमत आह—अवयवेति। न्यायस्तत्रापि समान इति भावः। 'प्रथमलिङ्गे'त्यस्य 'ङिति ह्रस्वश्चे'त्यत्रानुवृत्तिभ्रमवारणायेदमिति तु भाष्ये वक्ष्यति। अतः कैयटे प्रत्याख्यानवाक्यमारम्भवाक्यस्याप्युपलक्षणं बोध्यम्। नहि प्राक्प्रवृत्तेरिति। ननु नयतीति नीस्तमतिक्रान्तायै 'अतिनिये ब्राह्मण्यै' हरिमतिक्रान्तायै 'अतिहर्यै' इत्यत्र नदीत्वापत्तिरूपमनिष्टमस्त्येव। न चाङ्गस्य नित्यस्त्रीत्वाऽभावान्न दोषः, तस्य नित्यस्त्रीत्वेन विशेषणेऽतिश्रियै ब्राह्मण्यै इत्यसिद्ध्यापत्तेरिति चेन्न, तादृशानामनभिधानात्। नियमार्थ इति। अस्त्रीवचनाऽङ्गव्यावृत्त्यर्थं इत्यर्थः। 'शकटये'इत्युदाहरणं तु लुबन्तं बोध्यम्। उपसंहारस्येति। 'प्रथमलिङ्गग्रहणं चोदितं तद्द्वेष्य'मित्यादेरित्यर्थः। द्वेष्यमित्यस्य—अनिष्टविषयकमपीत्यर्थः। विकल्पत इत्यत्रोपसर्गोऽविवक्षितार्थः। तदाचार्य इति। अस्याशय उक्तः ॥३॥

षष्ठीयुक्तः। अत्र षष्ठीपदं तदन्तपरम्। षष्ठ्या युक्त इत्यर्थे तु षष्ठ्यामित्येव सिद्धे युक्त-

व्यत्ययः, तिङां व्यत्ययः, वर्णव्यत्ययः, लिंगव्यत्ययः, कालव्यत्ययः, पुरुषव्यत्ययः, आत्मनेपदव्यत्ययः, परस्मैपदव्यत्ययः ।

सुपां व्यत्ययः—'युक्ता माताऽसीद् धुरि दक्षिणायाः'* । दक्षिणायामिति प्राप्ते ॥ तिङां व्यत्ययः—'चषालं ये अश्वयूपाय तक्षति†' । तक्षन्तीति प्राप्ते ॥ वर्णव्यत्ययः—'त्रिष्टुभौजः शुभितमुग्रवीरम्‡' । सुहितमिति प्राप्ते ॥ लिंगव्यत्ययः—'मधोर्गृह्णाति' 'मधोस्तृप्ता इवासते' । मधुन इति प्राप्ते ॥ कालव्यत्ययः—'श्वोऽग्नीनाधास्यमानेन' 'श्वः सोमेन यक्ष्यमाणेन'× । श्व आधाता, श्वो यष्टेति प्राप्ते+ ॥ पुरुषव्यत्ययः—'अधा स वीरैर्दशभिर्वियूयाः'†† वियूयादिति प्राप्ते ॥ आत्मनेपदव्यत्ययः—'ब्रह्मचारिणमिच्छते'‡‡ । इच्छतीति प्राप्ते ॥ परस्मैपदव्यत्ययः—'प्रतीपमन्य ऊर्मिर्युध्यति' । 'अन्वीपमन्य ऊर्मिर्युध्यति' । युध्यत इति प्राप्ते ॥६॥

प्र०—सुपां व्यत्ययसिद्धिः । कालव्यत्यय इति । कालविहितप्रत्ययव्यत्यय इत्यर्थः ॥९॥

उ०—ग्रहणवैयर्थ्यापत्तेः । तत्र समासे पूर्वेणैव सिद्धत्वात् 'कुलुञ्चानां पतये नम' इत्यसमासार्थमेवेदम् । न चैवमपि समासे छन्दसि परत्वादयमेव विकल्पः स्यादिति वाच्यम् । वेदे आपाद्यरूपाऽभावेनेष्टापत्तेः । तत्र 'बहुलं छन्दसी'त्यादिबहुतराऽकरणलाघवाय योगविभागो भाष्ये कृतः । नन्वेवमपि स्थलान्तरविहितानां कथं विकल्पसिद्धिरत आह—तेनेति । योगविभागसामर्थ्यगम्यसर्वविषयत्वेनेत्यर्थः । परिभाषेति । कार्यमात्रं चाऽस्या लिङ्गं, तदाह—यावदिति । उभयत्रविभाषेति । यत्र यत्राऽस्या उपस्थितिस्ते केचित्प्राप्तविभाषारूपाः, केचिदप्राप्तविभाषारूपाः पर्यवस्यन्तीति भावः । यद्यपि तेषु विधिषु नित्यं प्राप्तेषु 'छन्दसि वे'त्यनेन सर्वापि प्राप्तविभाषैव, तथाप्यस्य विकल्पविधेर्व्यत्ययमात्रपर्यवसन्नतयाऽस्यैव तत्सम्भव इति बोध्यम् ।

ननु स्वादिवाक्येनाऽनियमेन प्राप्ते कथं व्यत्यय इत्यत आह—कर्मणीति । नियमस्यैव विकल्प इति भावः, यत्कर्मण्येवेति तच्छन्दसि वेति वचनव्यक्तेः । एवं च करणेऽप्राप्तद्वितीयया 'यवाग्वाऽग्निहोत्रं जुहोती'त्यादौ प्रयोगभेदेन करणाऽकरणाभ्यां विकल्पेऽप्राप्तविभाषा, अन्यप्राप्तावन्यस्य करणाद्व्यत्ययत्वं च बोध्यम् । सुहितमिति प्राप्ते इति । सकारहकारयोः शभौ । क्वचित्तु 'शुधितमिति प्राप्ते' इति पाठो दृश्यते । मधुन इति प्राप्ते इति । 'माध्वीर्गावो भवन्तु नः' इति क्षीरवाची नपुंसकलिङ्ग इति भावः । कालव्यत्ययस्य ब्रह्मणोऽप्यशक्यत्वादाह—कालविहितेति ॥९॥

---

* ऋग्वेदे १. १६४. ९ † ऋग्वेदे १.१६२.६; तै० सं० ४.६.८.६. ‡ तै० सं० ४.४.१२. × तै० ब्रा० १.१.९. + अनद्यतने लुट् ३.३.१५. †† ऋग्वेदे ७.१०४ १५. ‡‡ अथर्ववेदे ११.५.१७.

१—'सुपां व्यत्यय' इत्यारभ्य प्रकरणमिदं सर्वं 'व्यत्ययो बहुलम्' ३. १. ८५ सूत्रभाष्येऽपि द्रष्टव्यम् । तत्रेदमधिकं पठ्यते—

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥

## यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ॥ १ । ४ । १३ ॥

[ अथ यस्माद् ग्रहणं किमर्थम् ? ] यस्मादिति व्यपदेशाय ।

अथ प्रत्ययग्रहणं किमर्थम् ? 'यस्माद्विधिस्तदादि प्रत्ययेऽङ्ग'मितीयत्युच्यमाने स्त्री इयती* स्त्रीयतीत्यत्रापि प्रसज्येत** । प्रत्ययग्रहणे पुनः क्रियमाणे न दोषो भवति ।

---

प्र०– यस्मात्प्र । यस्मादिति व्यपदेशायेति । 'संज्ञिन' इति शेषः । सति हि यस्मादित्यस्मिंस्तदादीत्यनेन संज्ञी निर्देष्टुं शक्यते, नान्यथा । परामृष्टव्यसंज्ञ्यनिर्देशे 'त'दिति परामर्शोऽभावात्तदादीत्यसम्बद्धमेव स्यात् । स्त्रीयतीति । स्त्रीशब्दात्सुशब्दस्य तल्लोपस्य च विधिरस्तीत्यङ्गसंज्ञा स्याद्भसंज्ञा चेति, संज्ञाद्वयनिमित्तो 'यस्येति चे'तिलोपः प्रसज्येत । ईश इदमादेशस्य 'यस्येति'लोपस्या'ऽसिद्धवदत्राभा'दित्यसिद्धत्वं नास्ति, प्राग्भादसिद्धत्वमिति केषाञ्चि'दभ्युपगमात् । पदान्तरनिरपेक्षपदसंस्कारपक्षे स्थानिवद्भावो नास्ति, नाऽनादिष्टादचः पूर्वः स्त्रीशब्द इति ।

---

उ०– यस्मात् । ननु सर्वस्यापि शब्दस्य व्यवहाररूपव्यपदेशाऽर्थत्वादत्रैव तत्कथनमनुचितमत आह—संज्ञिन इतीति । ननु तदादिपदमेव संज्ञिनिर्देशकं भविष्यतीत्यत आह—सति हीति । ननु यच्छब्दाऽभावे तच्छब्दप्रयोगो नेत्यसिद्धम्, 'ते तद्राजाः' 'कला च सा कान्तिमती कलावतः' 'सा गङ्गेत्यादौ प्रकृतप्रसिद्धानुभूतार्थकेषु व्यभिचारादित्यत आह—परामृष्टव्येति । प्रकृतादेरभावादिति भावः । तदिति । परामर्शाभावादिति । 'त'दित्येतत्परामर्शयोग्याऽभावादित्यर्थः । न च 'प्रत्ययविधी'त्यत्र प्रकृतप्रत्ययस्यैव तदा परामर्शोऽस्तु, 'यस्य प्रत्ययस्य विधिस्तदाद्यङ्ग'मित्यर्थोऽस्त्विति वाच्यम्, एवं हि विहितप्रत्ययादेरेवाऽङ्गसंज्ञा स्यादिति 'भविष्यती'त्यादौ धातोर्गुणाऽनापत्तिः । एवं च विशिष्टसंज्ञिनिर्देशार्थं 'यस्मा'दित्युक्तमिति भावः । न च 'प्रकृत्यादि प्रत्ययेऽङ्ग'मित्येवास्तु, 'प्रकृत्यादी'त्यस्य यस्मात्प्रत्ययविधिस्तदादीत्यस्य च पर्यायत्वेन पर्यायेषु लाघवगौरवविचाराऽनादरात् । योगविभागेन वक्ष्यमाणपरिभाषालाभाय तथान्यासस्यावश्यकत्वाच्च ।

स्त्री इयतीति । इदंशब्दात्परिमाणे वतुः, वस्य घः, तस्य इयादेशः, इदम ईश्, यस्येति लोपः । उगित्त्वान्ङीप् । ननु 'यस्माद्विधिस्तदादि प्रत्ययेऽङ्ग'मित्युक्ते यत्र प्रत्ययेऽङ्गत्वं तस्यैव विधेः प्रत्यासत्त्या लाभेन प्रकृते न दोषोऽत आह—स्त्रीशब्दादिति । तदभावे तु व्याप्तिन्यायेनेहाऽपि स्यात् । सति तु प्रत्ययग्रहणे तत्सामर्थ्यात्प्रत्यासत्तिरेवाश्रीयत इति भावः । असिद्धत्वं नास्तीति । चिणो लुङ्न्यायेन प्राप्तिः । प्राग्भादिति । वस्तुतस्त्वयङ्का-

---

१–अयं पाठः प्रामाणिकभाष्येषु नोपलभ्यते ।

* किमिदम्भ्यां वो घः ५. २. ७०; आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७. १. २; इदंकिमोरीश्की ६. ३. ९०; यस्येति च ६. ४. १४८. ** यस्येति च ६. ४. १४८.

अथ विधिग्रहणं किमर्थम् ? 'यस्मात्प्रत्ययस्तदादि प्रत्ययेऽङ्ग'मितीयत्युच्यमाने दधि अधुना, मधु अधुना+ अत्रापि प्रसज्येत× । विधिग्रहणे पुनः क्रियमाणे न दोषो भवति ॥ तदेतत्प्रत्ययग्रहणेन विधिग्रहणेन च समुदितेन[1] क्रियते संनियोगः—'यस्माद्यः प्रत्ययो विधीयते तदादि तस्मिन्नङ्गसंज्ञं भवती'ति ।

अथ तदादिग्रहणं किमर्थम् ?

प्र०— अथेति । 'यस्मात्प्रत्यय' इत्यत्र 'विधीयत' इत्यध्याहरिष्यत इति प्रश्नः । दधि अधुनेति । असति विधिग्रहणे परशब्दस्याऽप्यध्याहारः स्यात् । इदमो यदाऽधुनाप्रत्ययो निपात्यते इदमादेशस्य चेशो 'यस्ये'ति लोपस्तदेदं प्रत्युदाहरणम् । यदा त्विदमोऽशभावो धुना च प्रत्ययस्तदा 'स्त्रीयती'त्येतदेव प्रत्युदाहरणम् । ननु क्रियमाणेपि विधिग्रहणेऽत्राऽङ्गसंज्ञा प्राप्नोति । अस्ति हि दधिशब्दात्सुप्रत्ययविधिरधुनाप्रत्ययश्च परः । ततश्चाऽङ्गसंज्ञायां भसंज्ञायां च सत्यां 'यस्ये'ति लोपः प्राप्नोतीत्याह—तदेतदिति । प्रत्यासत्तिन्यायाश्रयणाद्यस्माद्यः प्रत्ययो विहितस्तस्मिन्नेव प्रत्यये पर-

उ०—पत्तिर्दोषः । न च तत्रापि—ईलोपस्याऽसिद्धत्वं, भ्याश्रयत्वात्तत्प्राप्तेरभावात् । 'यस्ये'तिलोपप्राप्तिनिमित्तसमुदायापेक्षयाऽतिरिक्तस्य स्त्रीशब्दस्येयङापेक्षणादित्यादि षष्ठे निरूपयिष्यामः । नानादिष्टादिति । इयङि 'न पदान्ते'ति निषेधोऽपि बोध्यः ।

ननु विधिग्रहणाऽभावे 'यस्मात्प्रत्यय' इत्यस्य क्रियाकाङ्क्षा न शान्तेत्यत आह—अध्याहरिष्यत इति । परशब्दस्यापीति । यद्यपि 'यस्मा'दिति पञ्चम्या परशब्दाध्याहारस्योभयोरप्यावश्यकत्वं, तथापि तावतैव विश्रान्तिः स्यान्न तु 'विधीयत' इत्यस्यापि । अपिरेवाऽर्थे । विधिग्रहणे इति । प्रत्ययग्रहणस्याप्युलक्षणम् । भसंज्ञायां चेति । न च सति प्रत्ययविधिग्रहणे 'यचि भ'मित्यत्रापि यस्माद्यजादिप्रत्ययविधिरित्यर्थलाभान्नाऽत्र भसंज्ञाप्राप्तिरिति वाच्यम् । 'यस्मात्प्रत्ययविधिस्तस्य यजादौ प्रत्यये भत्व'मित्यर्थः स्यात् । प्रत्यासत्तिन्यायानाश्रयणेनैवाऽस्य ग्रन्थस्य प्रवृत्तेरिति भावः । यस्येति लोप इति । 'इकोऽची'ति नुमः प्राप्तिरित्यन्ये । प्राग्दिशीयत्वेनाऽस्य विभक्तित्वाद्भत्वाच्च न नलोप इति तदाशयः । इत्याहेति । इत्याशङ्कायामाहेत्यर्थः । प्रत्यासत्तीति । तन्न्यायप्रवृत्तिलाभार्थमेवोभयमिति भावः । विधिग्रहणं भनक्तीत्यादा'वतो दीर्घ' इति दीर्घव्यावृत्त्यर्थमित्यपि बोध्यम् । ध्वनितं चेदं श्नम्विधायके भाष्ये ।

भाष्ये—अथ तदादीति । आदिग्रहणविषयः प्रश्नः । ननु दीर्घग्रहणविधानसामर्थ्यादनङ्गत्वेऽपि दीर्घोऽत आह—अन्यथेति । 'चिकीर्षामी'त्यादौ शबेकादेशस्य पूर्वान्तवत्त्वेनाऽङ्ग-

+ अधुना ५. ३. १७. × यस्येति च ६. ४. १४८; इकोऽचि विभक्तौ ७. १. ७३.
1—'समुदितेन किं क्रियते ? संनियोगः' पा० ।

## अङ्गसंज्ञायां तदादिवचनं स्यादिनुमर्थम् ॥ १ ॥

अङ्गसंज्ञायां तदादिग्रहणं क्रियते स्याद्यर्थं नुमर्थं च ॥ स्याद्यर्थं तावत्—करिष्यावः करिष्यामः* ॥ नुमर्थम्—कुण्डानि वनानि† ।

## मित्सुटोरुपसंख्यानम् ॥ २ ॥

मित्वतः सुड्वतश्चोपसंख्यानं कर्तव्यम् । मित्वतः—भिनत्ति छिनत्ति । अभिनत् अच्छिनत्‡ । सुड्वतः—संचस्करतुः संचस्करुः× ।

प्र०—तस्तदाद्यङ्गमित्यर्थः । करिष्याव इति । विकरणान्तस्याङ्गसंज्ञायां सत्यां तन्निबन्धन-'मतो दीर्घो यञी'ति दीर्घत्वं भवति । अन्यथा 'पापाव' इत्यादावेव स्यात् । पर्येयङ्लुगन्तस्य वलि 'लोपो व्योर्वली'ति यलोपे दीर्घत्वे च रूपम् । कुण्डानीति । यदा नुम्परादिस्तदाऽत्र 'सुपि चे'ति दीर्घत्वं सिद्ध्यति । 'दधीनी'त्यादौ तु अनकारान्तत्वान्न सिध्यति । पूर्वान्तपक्षे सामानीत्यादिवत्सिध्यति । यदा त्वभक्तत्वपक्षस्तदेदं प्रयोजन-मादिग्रहणस्य । पूर्वान्तपक्षस्तु स्थापित इत्यप्रयोजनमेतत् । मित्सुटोरिति । मित्सुटोः कृतयोरित्यर्थः । भाष्यकारस्तु वस्तुतोऽर्थं व्याचष्टे—मित्वत इति । भिनत्तीति । रूपोदाहरणमेतत् । कार्योदाहरणं च—अभिनदिति । नित्यत्वात् श्नमि कृतेऽङ्गसंज्ञा-यामसत्यामडागमो न स्यादित्यङ्गसंज्ञोपसङ्ख्यायते । संचस्करतुरिति । द्विर्वचने कृते'ऽडभ्यासव्यवायेपी'ति सुटि चाऽनङ्गत्वा'दृतश्च संयोगादे'रिति गुणो न स्यात् । यदा तु 'पूर्वं धातुरुपसर्गेण युज्यते' इत्येष पक्षस्तदान्तरङ्गत्वात्सुटि कृते तद्भक्तस्य

उ०—त्वात्तत्रापि दीर्घस्य चारितार्थ्यं बोध्यम् । 'करोती'त्यादौ गुणोऽपि प्रयोजनं बोध्यम् । तदेदमिति । 'कुण्डानी'त्येतदित्यर्थः । ननु मित्सुटोरङ्गत्वे न किंचित्प्रयोजनमत आह—कृतयोरिति । सति सप्तमीति भावः । भाष्येति । सत्सप्तम्यैव सिद्धे मत्वध्याहाराश्रयणम-युक्तमतः फलितार्थकथनपरं भाष्यमित्यर्थः । रूपोदाहरणमिति । मित्वद्रूपमीदृशमित्यर्थः । अन्ये तु 'भिनत्ती'त्यादावङ्गत्वाऽभावे लघूपगुणाशङ्का, कर्मधारयेण समाधानं च वृद्धोक्तम-सङ्गतं स्यादिति भाष्याशयमाहुः । ननु परत्वात्पूर्वमेवाडागमोऽत आह—नित्यत्वादिति । 'लावस्थायाम'डिति पक्षे 'भिन्धी'त्यादावाङ्गं धित्वं न स्यादिति बोध्यम् । ननु संशब्द-मात्रापेक्षत्वेनाऽन्तरङ्गत्वात्सुटि ततो लिडादिकमिति न दोषोऽत आह—द्विर्वचन इति । 'पूर्वं धातुः साधनेन युज्यत' इति सिद्धान्तादिति भावः । ननु टित्त्वाद्धात्ववयवत्वेन न दोषोऽत आह—अडभ्यासेति । नाऽयं टित्त्वादाद्यवयवः, किं त्वनेन मध्ये प्रवेशित इत्यभक्त इति

१—'ग्रहणं' पा० । * अतो दीर्घो यञि ७. ३. १०१. † सर्वनामस्थाने चाऽसम्बुद्धौ ६. ४. ८.
‡ रुधादिभ्यः श्नम् ३. १. ७८. लुङ्लङ्लृङ्क्ष्वडुदात्तः ६. ४. ७१.
× अडभ्यासव्यवायेऽपि ६. १. १३६; ऋतश्च संयोगादेर्गुणः ७. ४. १०.

किं पुनः कारणं न सिध्यति ? सुटो बहिरङ्गत्वात् । बहिरङ्गः सुट्, अन्तरङ्गो गुणः । 'असिद्धं बहिरङ्गमन्तरङ्गे' । वक्ष्यत्येतत् 'संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थम्+ । यदि 'संयोगोपध'ग्रहणं क्रियते नाऽर्थः संयोगादिग्रहणेन । इहापि सस्वरतुः सस्वरुरिति 'संयोगोपधस्ये'त्येव सिद्धम् । भवेदेवमर्थेन नाऽर्थः । इदं तु न सिध्यति—'संचस्करतुः संचस्करु'रिति ॥ किं पुनः कारणं न सिध्यति ? इह तस्य वा ग्रहणं भवति तदादेर्वा, न चेदं तन्नापि तदादि ।

सिद्धं तु तदाद्यादिवचनात् ॥ ३ ॥

सिद्धमेतत् । कथम् ? तदाद्याद्यङ्गसंज्ञं भवतीति वक्तव्यम् । किमिदं तदाद्यादीति ? तस्यादिस्तदादिः, तदादिरादिर्यस्य तदिदं तदाद्यादीति ।

प्र०—तद्ग्रहणेन ग्रहणात्स्कृशब्दादेव प्रत्ययविधिरित्यङ्गसंज्ञा सिद्ध्यत्येव । स्कृशब्दस्य द्विर्वचने कृते 'शर्पूर्वाः खय' इति खयः शेषे संचस्करतुरिति सिद्ध्यति । किं तु 'संस्क्रीषीष्ट' 'संस्क्रियत' इति इड्गुणनिवृत्तये कात्पूर्वग्रहणेनाऽभक्तत्वं सुटो ज्ञापितमिति पूर्वमपि प्रत्ययोत्पत्तेः सुटि कृते नास्ति सुट्सहितस्याऽङ्गसंज्ञेति गुणो न स्यादित्युपसंख्यानम् । तस्य वेति । व्यपदेशिवद्भावादिति भावः । तस्यादिरिति । भिद आदि-

उ०—भावः । तद्युक्तस्येति । टित्वादित्यर्थः । स्कृशब्दादेवेति । इदं चिन्त्यम् । एवं ह्यत्र धातूपसर्गयोः समासो दुर्वारः । स हि 'पूर्वं' धातुः साधनेने'ति न्यायेनोपपदमितिसूत्रे भगवता वारितः । इड्गुणेति । 'ऋतश्च संयोगादेः' 'गुणोर्त्तिसंयोगाद्यो'रिति विहितेत्यर्थः । अभक्तत्वं सुटो ज्ञापितमिति । इदं ज्ञापकं कथमिति चिन्त्यम् । यद्वाऽस्य 'इति मत्वे'ति शेषः । अत एवेङ्गुणनिवृत्तये वचनमेव करिष्यति भाष्यकृत् षष्ठे । किं च सुटोऽभक्तत्वे सकारादेर्धातुत्वाऽभावात् 'स्कृ'-शब्दस्य कथं द्वित्वमिति सुधीभिर्विभाव्यम् । यद्यप्यत्र्यपूर्वपक्षिणः सुटोऽनवयवत्वाऽभिमानात्सञ्चस्करतुरित्यादौ संयोगादित्वाऽभावादपि गुणो न प्राप्नोति, तथापि 'संयोगोपधग्रहणं कर्तव्य'-मिति वार्तिकेन साध्यः । यद्यप्यवयवाऽवयविभागस्य षष्ठ्यर्थस्याऽभावात्कथं तेनाऽपि सिद्धिस्तथापि यदन्त्यवर्णनिरूपितमुपधात्वं संयोगस्येति निरूपकत्वलक्षणे षष्ठ्यर्थे बहुव्रीहिरित्यभिमानः ।

भाष्ये—किं पुनरिति । प्रश्नमुपपादयति—सुटो बहिरङ्गत्वादिति । बहिर्भूतोपसर्गनिमित्तत्वात्सुटो बहिरङ्गत्वम् । एवं च तस्याऽसिद्धत्वात्सिध्यत्येत्वाऽङ्गत्वमिति भावः । नन्वसिद्धत्वेनाऽङ्गत्वसाधने तेनैव संयोगादित्वाऽभावात्कथं गुणः स्यादत आह—वक्ष्यत्येतदिति । तथा च तत्सामर्थ्यात्तदंशे नाऽसिद्धत्वमिति भावः । 'सस्वरतु'रित्यस्य संयोगोपधग्रहणेन सिद्धावपि तदा सामर्थ्याऽभावादसिद्धत्वाऽभावानुपपत्तौ 'सञ्चस्करतु'रित्यादि न सिध्यतीत्याह—भवेदित्यादि संचस्कररित्यन्तम् । तस्मात्संयोगोपधग्रहणसामर्थ्योपपत्तये संयोगादिग्रहणमपि कार्यमिति भावः । तत्र संयोगोपधग्रहणे कृते यदि तत्सामर्थ्यादसिद्धत्वाऽभावस्तदाङ्गत्वेऽपि तद्विषये तदभावः स्यादिति तत्करणेऽपि तदसिद्धिरित्यप्यर्थोत्राभिप्रेत-

+७. ४. १० वा० १. १–'इति' क्वचिन्न ।

स तर्हि तथा निर्देशः कर्तव्यः ? न कर्तव्यः । उत्तरपदलोपऽत्र द्रष्टव्यः । तद्यथा,—उष्ट्रमुखमिव मुखमस्योष्ट्रमुखः, खरमुखः । एवं तदाद्यादि तदादीति ।

## तदेकदेशविज्ञानाद्वा सिद्धम् ॥ ४ ॥

तदेकदेशविज्ञानाद्वा सिद्धमेतत् । तदेकदेशभूतं तद्ग्रहणेन गृह्यते । तद्यथा,—गङ्गा यमुना देवदत्तेति । अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते । तथा देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते ।

विषम उपन्यासः । इह केचिच्छब्दा अक्तपरिमाणानामर्थानां वाचका भवन्ति—य एते संख्याशब्दाः परिमाणशब्दाश्च । पञ्च सप्तेति,—[1]एकेनाप्यपाये न भवन्ति । द्रोणः खारी आढकमिति,—नैवाधिके भवन्ति न च न्यूने । केचिद्यावदेव तद्भवति तावदेवाहु—[2]य एते जातिशब्दा गुणशब्दाश्च । तैलं घृतमिति खार्यामपि भवति द्रोणेपि । शुक्लो नीलः कृष्ण इति हिमवत्यपि

प्र०–भेकारः स आदिर्भिनदित्यस्येति भवत्यङ्गसंज्ञा । एवं करोतेर्द्विर्वचने कृते 'चस्कृ'-शब्दे स्थिते यस्मात्कृशब्दात्प्रत्ययविधिस्तस्यादिश्चकारः, स एवादिश्चस्कृशब्दस्य । उष्ट्रमुख इति । यथा गतार्थत्वान्मुखशब्दनिवृत्तिस्तथा पूर्वं प्रतिपादितम् । इहापि प्रतिलक्ष्यं लक्षणभेदात्तदवयवे तच्छब्दो वर्तत इति तदवयवादित्वान्मित्सुटोः कृतयोरङ्गसंज्ञा सिद्धयति । एकेनाप्यपाये इति । अपाये—तस्य रूपस्याऽपगमे । एकेन—करणेन ।

उ०–स्तेत्र सिद्धत्वाऽभावे कुतोऽङ्गत्वं न सिध्यतीति पुनः पृच्छति—किं पुनरिति । एवं 'सुटो बहिरङ्गत्वा'दित्यादि भाष्यं योजयन्ति केचित् । परे तु भाष्ये 'सुटो बहिरङ्गत्वा'दित्यादिः 'किं पुनः कारणं न सिध्यती'त्यन्तो ग्रन्थ उपसर्गार्थसंबन्धो धातोः पूर्वमेव, ततश्च प्रत्यये कृते द्विर्वचनात्पूर्वमन्तरङ्गतरार्थकोपसर्गनिमित्तकः सुडिति लिटः 'स्कृ'शब्दाद्विध्यभावेन संयोगादेरङ्गत्वाऽभावाद् गुणो न प्राप्नोतीति भाष्याशय इति प्रामाणिकाः । ननु तदादिग्रहणे सति कथं कस्य केवलस्य ग्रहणमत आह—व्यपदेशिवदिति । तस्यादिश्चकार इति । द्विर्वचने द्विःप्रयोगत्वस्वीकारादित्यर्थः ।

ननूष्ट्रमुखे बाधात्तथाङ्गीकारेपि 'करिष्याम' इत्यादौ मुख्यार्थत्वेपि चारितार्थ्यादत्र लक्षणायां मानाऽभावोऽत आह—इहापीति । प्रतिलक्ष्यमिति । तस्य लक्ष्यत्वनिश्चयः शिष्टप्रयोगादिति भावः । तदवयवे इति । तदाद्यवयवे इत्यर्थः । भाष्ये—अक्तपरिमाणानाम्—नियतपरिमाणानाम् । एकेनाप्यपाये इति । तृतीया न कर्त्तरि, षष्ठ्या बाधादत आह—अपाये इति । न चैकस्य विद्यमानस्याऽपाये करणता संभवतीति सामर्थ्यात्स्वाऽभावेनेति

१–'त एकेना' पा० । २–'यथैते' पा० ।

भवति वटकणिकामात्रेऽपि द्रव्ये। अङ्गसंज्ञा चाऽव्यक्तपरिमाणानां क्रियते सा केनाधिकस्य स्यात्।

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति--'तदेकदेशभूतं तद्ग्रहणेन गृह्यत' इति, यदयं 'नेदमदसोरकोः' [ ७. १. ११ ] इति सककारयोः प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्? इदमदसोः कार्यमुच्यमानं कः प्रसङ्गो यत्सककारयोः स्यात्। पश्यति त्वाचार्यः—'तदेकदेशभूतं तद्ग्रहणेन गृह्यत' इति, ततः सककारयोः प्रतिषेधं शास्ति।

अथ द्वितीयं प्रत्ययग्रहणं किमर्थम्?

**प्रत्ययग्रहणं पदादावप्रसङ्गार्थम् ॥ ५ ॥**

प्रत्ययग्रहणं क्रियते पदादावङ्गसंज्ञा मा भूदिति। किं च स्यात्? स्त्र्यर्थम् श्र्यर्थम् भ्र्वर्थम्, अङ्गस्येतीयङुवङौ स्याताम्*।

**परिमाणार्थं च ॥ ६ ॥**

परिमाणार्थं च द्वितीयं प्रत्ययग्रहणं क्रियते। 'यस्मात्प्रत्ययविधिस्तदाद्यङ्ग'-

प्र०—एकाऽभावेनेत्यर्थः। यथा 'वर्षकृतं दुर्भिक्ष'मिति वर्षमभवत्करणं संपद्यते। अङ्गसंज्ञा चापीति। 'यस्मात्प्रत्ययविधिस्तदादी'ति विशिष्टरूपपरिग्रहात्।

तदेकदेशभूतमिति। तन्मध्यपतितत्वात्तदेकदेशत्वाऽवसायः। स्त्र्यर्थमिति। असति द्वितीये प्रत्ययग्रहणे प्रत्ययविधानमात्रप्रतिबद्धाऽङ्गसंज्ञा स्त्रीशब्दस्य प्राप्नोति, ततश्चतुर्थी-विधानात्। ततश्चाऽङ्गाश्रय इयङ् स्यात्। पुनः प्रत्ययग्रहणे तु यस्माद्यः प्रत्ययो विहितः स एव यदि परो भवति तदा तस्याऽङ्गसंज्ञा भवति। यश्चाऽत्र प्रत्ययो विहितो नाऽसौ परः, लुप्तत्वात्। न च प्रत्ययलक्षणं भवति, 'न लुमताङ्गस्ये'ति निषेधात्। इयङादेश-कार्यस्याऽऽङ्गत्वात्तस्मिन्कर्तव्ये निषेधप्रवर्तनात्।

उ०—ज्ञायते। एवं चैकाऽभावेन पञ्चादिशब्दवाच्यरूपाऽपाये पञ्चादिशब्दा न प्रवर्त्तन्त इति भावः। तत्र दृष्टान्तमाह—यथेति। विशिष्टरूपपरिग्रहादिति। एवमुपसर्गादिसंज्ञा अप्यव्यक्त-परिमाणनिष्ठत्वान्न न्यूने लौकिकैकदेशविकृतन्यायेनेत्यपि बोध्यम्। नन्वभक्तत्वात्तदेकदेशत्व-मेवाऽसिद्धमत आह—तन्मध्येति।

भाष्ये—पदादाविति। पदादौ परे इत्यर्थः। असतीति। तदभावे प्रत्यासत्तिन्या-योत्थानाऽभावादित्यर्थः। निषेधादिति। अङ्गसंज्ञाऽपि प्रत्यये परतः पूर्वस्य कार्यमिति भावः। तस्मिन्कर्तव्ये इति। तन्निमित्तेऽङ्गत्वे कर्तव्ये इत्यर्थः। तदादेः संघातस्येति। वाक्य-

* अचि श्नुधातुभ्रुवां य्वोरियङुवङौ; स्त्रियाः ६. ४. ७७; ७९.

मितीयत्युच्यमाने [1]दाशतयस्याप्यङ्गसंज्ञा प्रसज्येत ।

तत्तर्हि कर्तव्यम् ? न कर्तव्यम् । केनेदानीमङ्गकार्यं भविष्यति ? 'प्रत्यय' इति प्रकृत्याऽङ्गकार्यमध्येष्ये । यदि 'प्रत्यय' इति प्रकृत्याऽङ्गकार्यमधीषे प्राकरोत् उपैहिष्ट उपसर्गात्पूर्वावडाटौ प्राप्नुतः† ।

**सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात् ॥ ७ ॥**

सिद्धमेतत् । कथम् ? 'प्रत्ययग्रहणे यस्मात्स प्रत्ययो विहितस्तदादेस्तदन्तस्य च ग्रहणं भवती'त्येषा परिभाषा कर्तव्या ।

कः पुनरत्र विशेषः, एषा परिभाषा क्रियेत, प्रत्ययग्रहणं वा ? अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि ।

प्र०— परिमाणार्थं चेति । अन्यथा 'देवदत्त ओदनमपाक्षीदिति देवदत्तशब्दात्सुप्रत्ययस्य-विधिरिति तदादेः संघातस्याऽङ्गसंज्ञायां सत्यां देवदत्तशब्दात्पूर्वोऽडागमः स्यात् । प्रत्यय-ग्रहणे तु सति यस्माद्यः प्रत्ययो विहितस्तस्मिन्नेव परतस्तदाद्यङ्गमिति विज्ञायमाने न भव-त्यतिप्रसङ्गदोषः । [1]दाशतयस्येति । दशावयवा येषां ते दशतये । तेषु भवो दाशतयः । एतच्चाऽनियमप्रतिपादनार्थं न त्वत्र दशसङ्ख्या विवक्षिता । अवयवान्विचार्य सूत्रमाक्षेप्तुं प्रश्नं करोति—तत्तर्हीति । सूत्रमित्यर्थः । प्रत्यय इति प्रकृत्येति । तेन 'ब्राह्मणभिस्सा' 'क्रिमिणां पश्ये'त्यादावैस्दीर्घाद्यभावः । प्राकरोदिति । लङि परतः पूर्वस्याऽनियता-वधेरडागमो विधीयमान उपसर्गादेः स्यात् । सिद्धं त्विति । यत्र पूर्वः कार्यित्वेना-श्रीयते तत्र तदादेः कार्यं भवति । यत्र तु प्रत्ययान्तः संघातः आश्रीयते तत्र तदादेः प्रत्ययान्तस्य ग्रहणं भवतीत्यर्थः । प्रत्ययग्रहणं चेति । प्रत्ययो गृह्यते यस्मिन्सूत्रे तत् । अङ्गसंज्ञासूत्रमित्यर्थः । अवश्यमिति । क्रियमाणेऽप्यस्मिन्सूत्रे परिभाषाऽवश्यं

उ०—संस्कारपक्षे इदम् । 'दाशतय'शब्देन 'ऋक्संहितेत्यन्ये । एतच्चेति । इदमपिना सूचितमिति भावः । यदि 'तत्तर्ही'त्यनेनाऽव्यवहितत्वाद् द्वितीयप्रत्ययग्रहणं परामृश्यते तदा 'केनेदानी'-मित्यादिभाष्याऽसङ्गतिः । नहि तदकरणेऽङ्गकार्ये काचिदनुपपत्तिः, अङ्गसंज्ञायामङ्गस्येत्यधि-कृत्य दीर्घादिविधिसंभवादत आह—अवयवानिति । भिस्सा—ओदनः । क्रिमिशब्दाल्लो-मादित्वान्ने टापि द्वितीयैकवचनम् । एवं च यदङ्गाधिकारव्यावर्त्यं तदेव प्रत्ययग्रहणस्याऽ-पीति भावः । नामः प्रत्ययसमुदायत्वेन प्रत्ययत्वाऽभाव इति बोध्यम् । एतद् द्वयमप्यर्थवत्परि-भाषया सिद्धमिति चिन्त्यम् । अनियतावधेरिति । एवं च 'देवदत्तः प्राकरो'दित्यत्र देवा-त्पूर्वमप्यट् स्यादिति बोध्यम् । ननु केऽण इत्यादौ तदन्तग्रहणाऽभावात्समुच्चयो युक्तोऽत आह—यत्रेति । व्यवस्थितत्वान्न समुच्चयः । तत्र तदन्तविधेः 'प्रत्ययग्रहणे चाऽपञ्चम्या' इति निषेधादिति भावः । प्रत्ययविधौ तु नाऽस्याः प्रवृत्तिर्विहितप्रत्ययविषयत्वादस्या इति

† लुङ्लङ्लृङ्क्ष्वडुदात्तः; आडजादीनाम् ६. ४. ७१; ७२.

१—'प्र नूनं' (ऋ० १०।१८८।१) तदेकमेव जातवेदसं गायत्रं तृच दशतयीषु विद्यते । (निरुक्ते ७।५)

**प्रयोजनं धातुप्रातिपदिकप्रत्ययसमासतद्धितविधिस्वराः ॥ ८ ॥**

धातु—देवदत्तश्चिकीर्षति । संघातस्य धातुसंज्ञा प्राप्नोति+ । प्रातिपदिक—देवदत्तो गार्ग्यः । संघातस्य प्रातिपदिकसंज्ञा प्राप्नोति× ॥ प्रत्यय—महान्तं पुत्रमिच्छति । संघातात्प्रत्ययोत्पत्तिः प्राप्नोति† ॥ समास—ऋद्धस्य राज्ञः पुरुषः । संघातस्य समाससंज्ञा प्राप्नोति* ॥ तद्धितविधि—देवदत्तो गार्ग्यायणः । संघातात्तद्धितोत्पत्तिः प्राप्नोति‡ । स्वर—देवदत्तो गार्ग्यः । संघातस्य 'ञ्नित्यादिर्नित्यम्' [ ६. १. १९७ ] इत्याद्युदात्तत्वं प्राप्नोति ॥ 'प्रत्ययग्रहणे यस्मात्स[विहितः]तदादेस्तदन्तस्य ग्रहणं भवती'ति न दोषो भवति ।

प्र०—कर्तव्येति व्यापित्वात्परिभाषैवाश्रयणीया, न तु सूत्रमित्यर्थः । संघातस्येति । ततश्च सुब्लुक् प्राप्नोति । महान्तं पुत्रमिति । समुदायस्याऽन्ते सुप्श्रवणात्सुबन्तत्वात् । सत्यां तु परिभाषायां समुदायस्याऽसुबन्तत्वादवयवस्य सापेक्षत्वादसामर्थ्यान्न भवति प्रत्ययः । ऋद्धस्येति । 'सुप्सुपे'ति विवक्षितायामपि सङ्ख्यायां समुदायस्य सुबन्तत्वात्समासप्रसङ्गः । परिभाषायां तु सत्यां समुदायस्याऽसुबन्तत्वात्सुबन्तसमुदायस्य च सङ्ख्याविवक्षायां समासाऽप्रसङ्गात् । अवयवस्य च सापेक्षत्वात्समासाऽभावः । संघातात्तद्धितोत्पत्तिरिति । ततश्च वृद्धिस्वरौ संघातस्य स्यातां, पूर्वस्य च सुपो लुक् ।

उ०—बोध्यम् । यत्र त्विति । 'कृत्तद्धिते'त्यादौ । एतेन प्रकृते 'तदादी'त्यंशस्यैवोपयोगेन तदन्तस्येत्ययुक्तमित्यपास्तम्, प्रसङ्गात्तदुक्तेः । एव'मेङ्ह्रस्वात्संबुद्धे'रित्यादौ तदादे'रिति पञ्चम्यन्तमित्यपि बोध्यम् । सूत्रप्रश्नस्य प्रक्रान्तत्वात्प्रत्ययग्रहणमित्ययुक्तमत आह—प्रत्यय इति । ततश्चेति । संघातस्य धातुत्वात्प्रातिपदिकत्वाच्चेत्यर्थः । न च समासग्रहणकृतनियमेन प्रातिपदिकत्वं दुर्लभं, नियमस्य भेदसंसर्गद्वारकाऽर्थवत्समुदायविशेषविषयकत्वात् । न च तद्धितान्तस्य तादृशमर्थवत्त्वमित्याशयात् । असामर्थ्यादिति । यदि स्यात्तदा 'महान्तं पुत्रीयती'त्यपि स्यादिति भावः । विवक्षितायामपीति । वस्तुतस्तत्र सङ्ख्याविवक्षायां फलाऽभाव इति वक्ष्यामः । ततश्च वृद्धीति । ननु 'देवदत्तो गार्ग्यायण' इत्यत्र यदि गार्ग्यापत्यं देवदत्तस्तदा समुदायात्प्राप्तिरेव न, असामर्थ्यात् । अपत्यप्रत्ययो ह्यपत्यवता समर्थो न त्वपत्यसमानाधिकरणविशेषणेनाऽपि, यदि देवदत्तो यो गार्ग्यस्तस्याऽपत्यमित्यर्थस्तर्हि देवदत्तस्य गार्ग्यस्यापत्यमित्याद्युदाहार्यमिति चेन्न, 'देवदत्तो गार्ग्यायणो भक्तिरस्ये'ति विवक्षायां 'गोत्रक्षत्रियाख्येभ्य'

+ सनाद्यन्ता धातवः ३. १. ३२; सुपो धातुप्रातिपदिकयोः २. ४. ७१.

× कृत्तद्धितसमासाश्च १. २. ४६; सुपो धातुप्रातिपदिकयोः २. ४ ७१.

† सुप आत्मनः क्यच् ३. १. ८. * षष्ठी २. २. ८.

‡ यञिञोश्च ४. १. १०१; सुपो धातुप्रातिपदिकयोः २. ४. ७१. १—क्वचिन्न ।

सा तर्ह्येषा परिभाषा कर्तव्या ? न कर्तव्या । एवं वक्ष्यामि—'यस्मात् प्रत्ययविधिस्तदादि प्रत्यये' गृह्यमाणे गृह्यते । ततः—'अङ्गम्' अङ्गसंज्ञं च भवति यस्मात्प्रत्ययविधिस्तदादि प्रत्यये ।

यदि 'प्रत्ययग्रहणे यस्मात्स [विहितः] तदादेर्ग्रहणं भवती'त्युच्यते,—अवतप्ते नकुलस्थितं त एतत्' । 'उदकेविशीर्णं त एतत्' सगतिकेन सनकुलेन च समासो+ न प्राप्नोति । एवं तर्हि 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'-त्युक्त्वा ततो वक्ष्यामि—

'कृद्ग्रहणे गतिकारकपूर्वस्यापि' ॥ ९ ॥

कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवती'त्येषा परिभाषा कर्तव्या ।

कान्येतस्याः परिभाषायाः प्रयोजनानि ?

**प्रयोजनं समासतद्धितविधिस्वराः ॥ १० ॥**

समास—अवतप्ते नकुलस्थितं त एतत् । उदकेविशीर्णं त एतत् । सगतिकेन सनकुलेन च समासः सिद्धो भवति । समास ॥ तद्धितविधि—सांकूटिनम् व्यावक्रोशी । संघातात्तद्धितोत्पत्तिः सिद्धा भवति× । तद्धितविधि ॥

प्र०- एवं वक्ष्यामीति । योगविभागोऽत्र क्रियते । 'यस्मात्प्रत्ययविधिस्तदादि प्रत्यये' इत्येकं सूत्रम् । अत्र सोपस्कारत्वात्सूत्राणां 'गृह्यमाणे गृह्यते' इति वाक्यशेषः समर्थ्यते । 'प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादि गृह्यत' इत्यर्थः । सांकूटिनमिति । 'अणि-

उ०-इति वुञ्स्यादित्यभिप्रायात् । योगविभाग इति । न च द्वितीयस्योपयोगाऽभावादिदमयुक्तम् । 'ह्रस्वादङ्गात्' 'न लुमताङ्गस्ये'त्यादिव्यवहारनिर्वाहाय द्वितीययोगोऽप्यावश्यक इति भावः । सोपस्कारत्वादिति । पूरणापेक्षत्वादित्यर्थः । 'अवतप्ते' इत्यादौ नकुलस्थितविशीर्ण-शब्दयोरनया परिभाषया क्तान्तत्वाऽभावात्कृदन्तरूपोत्तरपदत्वाऽभावाच्च 'क्तेन' 'क्षेपे' तत्पुरुषे कृती'ति समासविभक्त्यलुकौ न स्याताम् । आद्ये चापलम्, अन्तेऽत्यन्ताऽलभ्यत्वं द्योत्यम् ।

व्यावक्रोशीत्यत्र 'कर्मव्यतिहारे णच्' । 'णचः स्त्रियामञ्' । 'न कर्मव्यतिहारे' इत्यैज्निषेधः । सांकूटिने अभिविधौ भाव इनुण् । साङ्कुटिनमिति ह्रस्वपाठोऽपि भाष्ये ।

१—क्वचिन्न । + क्षेपे २. १. ४७. २—भाष्यमिदमिति केचित् ।
× अणिनुणः; णचः स्त्रियामञ् ५. ४. १५; १४.

स्वर—दूरात् आगतः दूरादागत इति*। 'अन्तः' 'थाथघञ्क्ताजबित्रकाणाम्' [ ६. २. १४३; १४४ ] इत्येष स्वरः सिद्धो भवति ॥ 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवती'ति न दोषो भवति।

सा तर्ह्येषा परिभाषा कर्तव्या? न कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्येषा परिभाषे'ति, यदयं 'गतिरनन्तरः' [ ६. २. ४९ ] इत्यनन्तरग्रहणं करोति ॥१३॥

प्र०-नुण' इति यदि 'कूटि'न्नित्येतस्मात्क्रियेत तदा तस्यैवादिवृद्धिः। दूरागत इति। आगम्यते स्मेति कर्मणि क्तः। तत्र गतिस्वरेणाद्युदात्त आगतशब्दः। ततो दूरशब्दस्य 'स्तोकान्तिके'ति समासः। 'पञ्चम्याः स्तोकादिभ्य' इत्यलुक्। अत्र समासान्तोदात्तत्वे प्राप्ते तदपवादकृत्स्वरेणाद्युदात्ते आगतशब्दे प्राप्ते, सगतेरपि क्तान्तत्वात्स्थानान्तरप्राप्तत्वाद् गतिस्वरस्य बाधकस्याऽपि बाधकत्वात् 'थाथघञ्क्ते'ति सिद्धमन्तोदात्तत्वम्। यदयमिति। 'अनन्तर'ग्रहणस्य प्रयोजनमभ्युद्धृतमित्यत्राभिशब्दस्य व्यवहितस्य प्रकृतिस्वरो मा भूदिति। यदि चैषा परिभाषा न स्यात्तत 'उद्धृत'-शब्दस्याऽक्तान्तत्वात्क्तान्त उत्तरपदेऽनन्तरे परतो गतिस्वरो विधीयमानो नैव प्राप्नोति किमनन्तरग्रहणेन। तत्क्रियमाणमस्याः परिभाषायाः सद्भावं ज्ञापयतीत्यर्थः ॥१३॥

उ०-ननु दूरादागतेऽन्तोदात्तत्वं साध्यं, तच्च समासस्वरेण सिद्धमत आह—आगम्यते स्मेति। 'स्म'शब्दप्रयोगो भूतकालद्योतनाय। गतिस्वरेण—कर्मणि क्तान्ते उत्तरपदे 'गतिरनन्तर' इति विहितेन पूर्वपदप्रकृतिस्वरेण। ततो दूरशब्दस्येति। अयमपि परिभाषासाध्य एव। कृत्स्वरेणेति। कृदुत्तरपदप्रकृतिस्वरेणेत्यर्थः। एतत्प्राप्तिरपि परिभाषयैव। 'सगतेरपी'त्यनेन तत्प्राप्तियोग्यता। ननु गतिस्वरेण पूर्वं बाधितस्य 'थाथे'त्यस्य कथं पुनः प्राप्तिरत आह—स्थानान्तरप्राप्तत्वादिति। समासान्तरप्राप्तत्वादित्यर्थः। यतो गतेरुत्तरक्तान्तस्य यदन्तोदात्तत्वं तस्यैव सोऽपवादो न तु कारकादुत्तरक्तान्तस्यापीति तात्पर्यम्। गतिस्वरस्य बाधकस्यापीति। थाथादिस्वरबाधकस्यापीत्यर्थः। बाधकत्वादिति। समासान्तरप्राप्त्या सति शिष्टत्वेनेति भावः। यद्यपि परिभाषाऽभावे कृदन्तत्वाऽभावात् कृत्स्वराऽप्राप्तौ समासान्तोदात्तत्वेनेदं सिध्यति तथापि परिभाषासत्त्वेऽपि सिध्यतीत्युपन्यासः। अस्या इति। एकदेशद्वारा कृत्स्ना परिभाषा ज्ञाप्यत इति भावः। अनन्तरग्रहणे तु तत्सामर्थ्यात्प्रत्ययग्रहणे यस्मादित्यस्या एवोपस्थानमिति तात्पर्यम्। एतच्च विस्तरेण 'गतिरनन्तर' इति सूत्रे षष्ठे उपपादयिष्यते ॥१३॥

* स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २. १. ३९; पञ्चम्याः स्तोकादिभ्यः ६. ३. २.

## सुप्तिङन्तं पदम् ॥ १ । ४ । १४ ॥

अन्तग्रहणं किमर्थं न 'सुप्तिङ्पद'मित्येवोच्येत ? केनेदानीं तदन्तानां भविष्यति ? तदन्तविधिना† ॥ अत उत्तरं पठति—

**पदसंज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम् ॥ १ ॥**

पदसंज्ञायामन्तग्रहणं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्यो'ऽन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? 'तरप्तमपौ घः' [ १. १. २२ ] तरप्तमबन्तस्य घसंज्ञा न भवति । किं च स्यात् ? कुमारी गौरितरा । 'घादिषु नद्या ह्रस्वो भवती'ति‡ ह्रस्वत्वं प्रसज्येत ।

यद्येतज्ज्ञाप्यते 'सनाद्यन्ता धातवः' [ ३. १. ३२ ] इत्यन्तग्रहणं कर्तव्यम् । 'कृत्तद्धितसमासाश्च' [ १. २. ४६ ] इत्यन्तग्रहणं कर्तव्यम् ।

प्र०— सुप्तिङन्तं । अन्तग्रहणमिति । असत्यन्तग्रहणे सुप्तिङामेव पदसंज्ञा स्यात्तत्श्चाऽग्निष्वित्यादौ 'सात्पदाद्यो'रिति षत्वनिषेधप्रसङ्ग इत्येतदर्थं यद्यन्तग्रहणं क्रियते तन्न कर्तव्यम् । 'प्रत्ययग्रहणे यस्मात्स विहित' इत्यनन्तरोक्तया परिभाषया तदन्तविधेर्लब्धत्वादिति प्रश्नः । कुमारी गौरितरेति । तरबन्तस्य घसंज्ञायां सत्यां तत्रोत्तरपदे परतो ह्रस्वत्वं 'कुमारी'शब्दस्य पुंवद्भावं परत्वाद्बाधित्वा स्यात् । तरपि तु परतो 'गौरी'शब्दस्य न स्यात् । ततः 'कुमारिगौरतरे'ति प्राप्नोति । 'कुमारगौरितरे'ति चेष्यते । भाष्ये तु समासप्रदर्शनपरं वाक्यमुपात्तम् । सनाद्यन्ता धातव इति ।

उ०— सुप्तिङन्तम् । तिङ्साहचर्यात्सुबपि प्रत्याहारः, 'न ङिसंबुद्ध्यो'रिति निषेधाच्च । तदन्तविधेरिति । शब्दस्वरूपस्य विशेष्यत्वात्तदन्तलाभ इति भावः । न च तदन्तविधिलाभेऽपि व्यपदेशिवद्भावेन केवलप्रत्ययस्याऽपि प्राप्तौ तदप्रवृत्तये पुनरन्तग्रहणमिति वाच्यं, 'हलि सर्वेषा'मित्यादिनिर्देशैस्तस्येहाऽप्रवृत्तिकल्पनादिति तात्पर्यम् । परत्वाद् बाधित्वेति । 'पुंवद्भावाद्ध्रस्वत्वं विप्रतिषेधेने'त्युक्तेरिति भावः । न च पुनः पुंवत्त्वं, सकृद्गतिन्यायाश्रयणात् । अत एव तरप्सार्थकम् । तरपि त्विति । अत्र पक्षे घसंज्ञकस्योत्तरपदस्य सम्भवेन घेनोत्तरपदविशेषणात्केवलस्य चोत्तरपदत्वाऽभावात्तत्र परतो न ह्रस्वप्राप्तिरिति भावः । कुमारिगौरतरेति ।

१—'अर्थः पदमैन्द्राणा'मिति निरुक्तवृत्तौ (१ । १ । १) दुर्गाचार्यः । 'वर्णसङ्घातः पद'मिति कौटिल्यः (अर्थशास्त्र, अधि० २, प्र० २६, अ० १०). † येन विधिस्तदन्तस्य १.१.७२. २—'ग्रहणम' पा० ।
‡ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ६. ३. ४३.

इदं तृतीयं ज्ञापकार्थम् ॥ द्वे तावत्क्रियेते न्यास एव । यदप्युच्यते—'कृत्तद्धितसमासाश्चेत्यन्तग्रहणं कर्तव्य'मिति । न कर्तव्यम् । अर्थवदिति वर्त्तते*, कृत्तद्धितान्तं चैवार्थवन्न केवलाः कृतस्तद्धिता वा ॥१४॥

प्र०—अन्यथा सनादीनामेव केवलानां धातुसंज्ञा स्यात् । ततश्चाऽचिकीर्षीदित्यादौ सन एव धातुत्वात्प्रत्ययोत्पत्तौ तदादेरेवाङ्गत्वात्सनः पूर्वोऽट् स्यात् । 'कृत्तद्धिते'त्यत्राऽसत्यन्तग्रहणे केवलयोः कृत्तद्धितयोः प्रातिपदिकसंज्ञा स्यात् । ततश्च भिद् छिदिति क्विबन्तस्य न स्यात् । अर्थवत्सूत्रेण तु न भवति, 'अधातु'रिति निषेधात् । नाऽपि प्रत्ययलक्षणेन प्राप्नोति, प्रत्ययनिमित्तमन्यस्य यत्कार्यं विधीयते तत्प्रत्ययलोपे भवति, न तु प्रत्ययस्यैव यत्कार्यं तदपि । नह्यसत्कार्यित्वेन वचनशतेनाऽपि शक्यमाश्रयितुम् । केवलस्य च तद्धितस्य प्रातिपदिकसंज्ञायां सत्यामौपगव इत्यत्रापि षष्ठ्याः प्रातिपदिकेऽनन्तर्गतत्वाल्लुग्न स्यात् । तदन्तविधौ तु दोषानवतारः । न केवला इति । ननु यद्यर्थवत्ता लौकिक्याश्रीयते सा पदस्यैव, न तु कृत्तद्धितान्तस्याऽपि, पदस्यैव लोके प्रयोगाऽर्हत्वात् । अन्वयव्यतिरेकगम्या त्वर्थवत्ता केवलानामपि कृत्तद्धितानामस्तीति किमुच्यते—'न केवला' इति । एवं तर्ह्यर्थवद्ग्रहणानुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते इत्यदोषः ॥१४॥

उ०—गौरीशब्दे 'तसिलादिष्वि'ति पुंवत्त्वं प्राप्नोति । 'कुमारिगौरीतरे'त्यपपाठः । न च तदन्तविध्यभावे ज्ञापितेऽप्यन्तपदं व्यर्थं, प्रत्ययमात्रस्य संज्ञायामपि पदप्रदेशेषु तदन्तविधिना सिद्धेरिति वाच्यम्, पदत्वस्य प्रत्ययाऽप्रत्ययसाधारणत्वात् । 'उञि च पदे' इत्याद्यसङ्गतेश्चेति दिक् । अधातुरिति । विशेषणतया क्रियाबोधकस्याऽपि क्विबन्तादेर'त्वसन्तस्ये'तिसूत्रेऽधातोरित्युक्त्या धातुत्वानपगमज्ञापनादिति भावः । प्रत्ययनिमित्तमिति । लक्षणग्रहणादिति भावः । न च केवलकृतां तद्धितानां च प्रातिपदिकत्वे फलाऽभावः । 'ङ्याप्प्रातिपदिका'दित्यादौ शब्दरूपं विशेष्यमादाय तदन्तविध्याश्रयणेन तल्लाभावात् । लौकिकी—लोकविदिता । अत्र पक्षेऽर्थवद्ग्रहणात्तदन्तस्यापि न प्राप्नोतीति भावः । सामर्थ्यादिति । कृत्तद्धितयोरर्थवत्त्वाऽव्यभिचारादिति भावः । लौकिकार्थप्रत्यासन्न इति । लौकिकाऽर्थकं यत्पदं तदर्थस्य प्रत्यासन्नः—शास्त्रकल्पितस्वादिप्रकृतेरर्थः । तदाह—अभिव्यक्ततर इति । तदेवाह—प्रत्ययान्तेष्विति । कृत्तद्धितप्रत्ययार्थस्तु न तादृशः, कल्पितावयवार्थत्वात्तस्य । प्रत्ययान्तेषु—सुबन्तेषु । सुबर्थत्वात्तस्याः । सुपो द्योतकत्वात्तत्रैव स लक्ष्यते न तु तद्रहिते इत्यर्थः । एवमेव पूर्वसूत्रे । इहाप्यर्थाधिकारानुवृत्तिसामर्थ्येन तद्ग्रहः । तदुक्तमनुवृत्तिसामर्थ्यादिति, न तु तत्सामर्थ्यादित्युक्तम् । भाष्येप्यर्थवदित्यस्यार्थवत्पदगृहीतार्थवदित्यर्थः ॥ १४ ॥

---

* अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १. २. ४५.

## नः क्ये ॥ १ । ४ । १५ ॥

किमर्थमिदमुच्यते न 'सुबन्तं पद'मित्येव सिद्धम्† ? नियमार्थोऽयमारम्भः । 'नान्तमेव क्ये पदसंज्ञं भवति नान्यत्'। भवति । क्व मा भूत् ? वाच्यति स्रुच्यति* ॥१५॥

## स्वादिष्वसर्वनामस्थाने ॥ १ । ४ । १७ ॥

'असर्वनामस्थान' इत्युच्यते तत्र ते राजा तक्षा‡ 'असर्वनामस्थान'इति पदसञ्ज्ञाया प्रतिषेधः प्रसज्येत ॥ 'ना॑ऽप्रतिषेधात्'। नाऽयं प्रसज्यप्रतिषेधः— 'सर्वनामस्थाने ने'ति । किं तर्हि ? पर्युदासोऽयं 'यदन्यत्सर्वनामस्थाना'दिति । सर्वनामस्थानेऽव्यापारः । यदि केनचित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति ॥ 'अ॑प्राप्तेर्वा' । अथवाऽनन्तरा या प्राप्तिः सा प्रतिषिध्यते । कुत

प्र०— नः क्ये । किमर्थमिति । लुप्तेऽपि सुपि प्रत्ययलक्षणेन सिद्धा पदसंज्ञेति प्रश्नः । नान्तमेवेति । 'क्य एव नान्त'मिति विपरीतनियमो न भवति । 'न ङिसंबुद्ध्यो'रिति नलोपनिषेधाज्ज्ञापकात् । वाच्यतीति । नन्वत्र क्यचा न भाव्यं 'गोसमानाक्षरनान्ता'-दिति वचनात् । एकीयमतं तदित्यदोषः । तन्मते तु क्यङ्क्यषोरनान्तं व्यावर्त्यं तपस्यतीत्यादौ ॥१५॥

स्वादिष्वसर्वनामस्थाने । राजेति । प्रत्ययलक्षणेन सर्वनामस्थानपरत्वात् । नाऽप्रतिषेधादिति । प्रसज्यप्रतिषेधः 'प्रतिषेध'शब्देनोक्तः । अप्राप्तेर्वेति । प्रसज्य-

उ०— नः क्ये । नलोपार्थत्वात्पदत्वप्रयोजनप्रश्नोऽनुपपन्नोऽत आह—लुप्तेऽपीति । ज्ञापकादिति । न च नान्तात्क्यचि ततः क्विपि सुपि प्रत्ययलक्षणेन क्यसत्त्वादनेन नियमेन पदत्वस्याव्यावृत्तेः प्राप्तनलोपवारणाय तदावश्यकम् । तथा प्रयोगाऽभावात् । अन्तरङ्गनलोपस्य बहिरङ्गेण निषेधेन बाधाऽयोगाच्च । वचनं त्वन्यथानियमे चरितार्थमिति भावः । 'क्ये नान्तं पदमेवे'त्यपि न, व्याख्यानात् । अआइईउऊऋॠऌॡ इति दश समानाक्षराणि । ऌकारस्य दीर्घाऽभावान्नवैवेति प्रातिशाख्ये । तपस्यतीति । अत्र पदत्वे रुत्वं स्यादिति भावः ॥१५॥

स्वादिष्व । पर्युदासेप्यार्थः प्रतिषेधोऽस्त्येवेत्यत आह—प्रसज्येति । शाब्दप्रतिषेध इति भावः । प्राप्तबाधो न युज्यत इति । गौरवादिति भावः । आसादयेदिति । अनेन देवदत्तहन्तृहतन्यायस्याऽयमविषय इति दर्शितम् । हननजातीयाऽप्राप्तेरेवाऽभावादिति भावः ।

† सुप्तिङन्तं पदम् १.४.१४; सुपो धातुप्रातिपदिकयोः २.४.७१; प्रत्ययलोपे प्रत्ययलक्षणम् १.१.६२.
* चोः कुः; झलां जशोऽन्ते ८. २. ३०; ३९.
‡ हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ६. १. ६८; प्रत्ययलोपे प्रत्ययलक्षणम् १. १. ६२.
१—इदं वार्तिकमित्यन्ये ।

एतत् ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति । पूर्वा प्राप्तिरप्रतिषिद्धा, तया भविष्यति ॥ ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् ।

[ [1]योगविभागाद्वा[2] । ] अथवा योगविभागः करिष्यते—'स्वादिषु' पूर्वं पदसंज्ञं भवति । ततः 'सर्वनामस्थानेऽयचि' । पूर्वं पदसंज्ञं भवति । ततः 'भम्' । भसंज्ञं च भवति यजादावसर्वनामस्थान इति ॥ यदि तर्हि सावपि पदं भवति, एचः प्लुतविकारे पदान्तग्रहणं चोदितम्†, इह मा भूत्—भद्रं करोषि गौरिति । तस्मिन्क्रियमाणेऽपि प्राप्नोति । वाक्यपदयोरन्त्यस्येत्येवं तत् ।

[1]भुवद्वद्भयो धारयद्वद्भयः [ [2]पदसंज्ञा ] । एतयोः पदसंज्ञा वक्तव्या । भुवद्वद्भयः धारयद्वद्भयः ॥१७॥

प्र०-प्रतिषेधाश्रयणेऽपि न दोष इत्यर्थः । ननु चेयमिति । परत्वादिति भावः । 'स्वादिष्वि'ति प्राप्तिं प्रतिषेधो बाधते । तत्र यथा देवदत्तस्य हन्तरि हतेऽपि न पुनः प्रादुर्भाव एवं पदसंज्ञा न स्यादित्यर्थः । नोत्सहत इति । 'स्वादिष्वि'ति प्राप्तिः किं पूर्वस्याः प्राप्तेर्बाधिकाऽस्त्वथ निषेधस्य बाध्येति । तत्र प्राप्तबाधो न युज्यते इत्यप्राप्त्यनुमानं बाध इत्यपवादविषयपरिहारेणोत्सर्गस्य प्रवर्त्तनात्स्वादिष्वितिप्राप्तिस्तत्राऽसती कथं बाधकत्वमासादयेत् । यथा वृत्तावित्यत्र 'नादिची'ति प्रतिषेधारम्भात्तद्विषये पूर्वसवर्णदीर्घस्याऽभावाद् वृद्धिं प्रति बाधकत्वाऽभावाद् वृद्धिः प्रवर्तते, तथेह 'सुबन्तं पद'मिति पदसंज्ञेत्यर्थः । सर्वनामस्थानेऽयचीति । 'असर्वनामस्थाने' इत्यत्र नञ्श्रुतो यचीत्यनेन संबन्धं नीयते, यकारादि सर्वनामस्थानं नास्तीति यग्रहणमुत्तरार्थम् । तेनाऽजादौ सर्वनामस्थाने पदसंज्ञा निषिध्यते, न तु हलादाविति राजेत्यत्रापि भवति ।

भसंज्ञं चेति । भसंज्ञाविधौ सर्वनामस्थानेनैव नञ्संबध्यते । गौरिति । अत्र 'स्वादिष्वि'तिपदसंज्ञायां सत्यां 'पूर्वस्यार्धस्यादुत्तरस्येदुता'विति प्रसज्येत । वाक्यपदयोरिति । वाक्यस्य चाऽत्र विसर्जनीयोऽन्त्यो नत्वौकारः । भुवद्वद्भय इति । तसौ मत्वर्थ इति भसंज्ञाप्राप्तौ पदसंज्ञाविधिः ॥१७॥

उ०-'अयजादौ सर्वनामस्थाने' इत्यर्थभ्रमं वारयति—असर्वेति । यजादौ सर्वनामस्थाने पदं नेत्यर्थः । तादृशार्थे हि योगविभागवैयर्थ्यं स्यादिति भावः । ननु यग्रहणं व्यर्थं, तदादिसर्वनामस्थानाऽभावादत आह—यकारादीति । नन्वेवं भविधावपि तथैव संबन्धः स्यादत आह—भसंज्ञेति । मतुपि 'स्वादिष्वि'त्यनेनैव सिद्धमत आह—तसाविति ॥१७॥

१—वार्तिकमित्यन्ये । २—कोष्ठकबद्धः पाठः क्वाचित्कः ।

† एचः प्लुतविकारे पदान्तग्रहणम् ८. २. १०७ वा० १.

## ध्रुवमपायेऽपादानम् ॥ १ । ४ । २४ ॥

ध्रुवग्रहणं किमर्थम्? ग्रामादागच्छति शकटेन[†] । नैतदस्ति । करण-संज्ञाऽत्र बाधिका भविष्यति[†] ॥ इदं तर्हि—'ग्रामादागच्छन्कंसपात्र्यां[‡] पाणिनौदनं भुङ्क्त इति । अत्राऽप्यधिकरणसंज्ञा बाधिका भविष्यति[‡] ।

इदं तर्हि—वृक्षस्य पर्णं पतति, कुड्यस्य पिण्डः पततीति ।

प्र०- ध्रुवमपाये । ध्रुवग्रहणमिति । अध्रुवस्य परत्वात्संज्ञान्तरं प्रवर्तिष्यते इति प्रश्नः । शकटेनेति । अपाये शकटस्याऽपि साधनत्वादपादानसंज्ञा प्राप्नोति । करणसंज्ञेति । यथा 'धनुषा विध्यती'ति क्रियमाणेपि ध्रुवग्रहणे परत्वात्करणसंज्ञा भवति, एवमक्रियमाणेऽपि शकटस्य भविष्यतीत्यर्थः । इदं तर्हीति । ननु कंसपात्री-साधनमेवाऽऽगमने न भवति, भुजिक्रियायां तु साधनं ध्रुवा च, तत्र परत्वादधि-करणसंज्ञेति 'आकडार'सूत्र उक्तम् । एवं तर्हि वस्तुस्थित्याऽत्रागमनं प्रधानं, तदङ्गं तु भोजनम् । शब्दात्तु विपरीतो गुणप्रधानभावः प्रतीयते । तदुक्तं हरिणा—

'चङ्क्रम्यमाणोऽधीष्वाऽत्र जपंश्चङ्क्रमणं कुरु ।
तादर्थ्यस्याऽविशेषेपि शब्दाद्भेदः प्रतीयते' ॥ इति ।

तत्र कंसपात्री भुजेः साधनत्वात्तद्द्वारेणाऽऽगमनस्यापि भवत्येव साधनम् । अत्रापीति । शब्देन भोजनस्यैव प्राधान्यं प्रतीयते इति तत्प्रयुक्तयैव संज्ञया भाव्यम् । यथा भोक्तुं ग्राममभिनिविशत इति प्रधानक्रियापेक्षया ग्रामस्य कर्मसंज्ञा भवति न तु भुज्यपेक्षयाऽधिकरणसंज्ञा । वृक्षस्येति । अस्त्यत्राऽपाय इति भावः । नन्वत्र कारक-

उ०- ध्रुवमपाये । अपायोऽत्र विभागजसंयोगानुकूलोऽवधिसाकाङ्क्षो गतिविशेषः । 'गति-र्विना त्ववधिना नाऽपाय इति कथ्यते' इति हर्युक्तेः । नन्वध्रुवनिवृत्त्यर्थं तत्स्यादत आह—अध्रुवस्येति । ननु शकटस्य विभागाश्रयत्वाऽभावात्कथं प्राप्तिरत आह—अपाये इति । 'अपाये यत्साधन'मित्येव शब्दमर्यादया लभ्यते, न त्वदुक्तमिति भावः । भाष्ये—ग्रामादा-गच्छन्निति । ग्रामात्काशीमागच्छन्बलाधानाय मध्ये कंसपात्र्यामोदनं भुङ्क्ते इत्यर्थः । नन्विति । न च भोजनद्वारा गमनसाधनत्वम् । भोजनस्य प्राधान्येन गमनाङ्गत्वाऽभावात् । एवं च पुनरत्र कथनमनुचितमिति भावः । वस्तुस्थित्येति । भोजनस्यागमनोद्देश्यकत्वादार्थिकं प्राधान्यमिति भावः । 'जपंश्चङ्क्रमणं कुर्वि'ति पाठः । 'अधीयंश्चङ्क्रमण'मिति पाठे 'इङ्धार्योः शत्रकृच्छ्रिणी'ति शतेत्यन्ये । तादर्थ्यस्य—चङ्क्रमणार्थत्वस्य । प्रेरकस्य हि गवादिरक्षणाय चङ्क्रमणमात्रमपेक्षितमिति तस्यैवाऽऽर्थं प्राधान्यम् । नन्वेवमपि भुजिसाधनकंसपात्र्याः कथमागनसाधनत्वमत आह—तत्रेति । कंसपात्र्यधिकरणकभोजनस्याऽऽगमनोद्देशेन प्रवृत्ते-रिति भावः । शब्देनेति । शब्दसंस्कारे तस्यैव प्रत्यासत्त्या ग्रहीतुमुचितत्वादिति भावः ।

१—'ध्रुवमिति किमर्थम्' पा० । † साधकतमं करणम् १.४.४२. ‡ आधारोऽधिकरणम् १.४.४५.

## जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् ॥ १ ॥

जुगुप्साविरामप्रमादार्थानामुपसंख्यानं कर्तव्यम् ॥ जुगुप्सा—अधर्माज्जुगुप्सते । अधर्माद् बीभत्सते ॥ विराम—[1]धर्माद्विरमति । [1]धर्मान्निवर्तते ॥ प्रमाद—धर्मात्प्रमाद्यति । धर्मान्मुह्यति ।

इह[2] चोपसंख्यानं कर्तव्यम्—'सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा' इति ।

तत्तर्हीदं [3]बहु वक्तव्यम् ? न वक्तव्यम् । इह तावदधर्माज्जुगुप्सते अधर्माद्

प्र०-त्वाऽभावात्संज्ञा न भविष्यति, अपायाऽभावाच्च । सत्येव ह्यवधावपायो भवतीति पूर्वसूत्रे उक्तत्वात् । तत्र केचिदाहुः—सुज्ञानत्वात्पूर्वसूत्रे उक्तत्वाच्च भाष्यकारेणाऽयमर्थो नोक्तः । अन्ये त्वाहुः—सतीह ध्रुवग्रहणे विशिष्टोऽपायो लभ्यते, असति तु तस्मिन्पातमात्रस्य लोकेऽपायत्वेन प्रसिद्धत्वात्कारकाधिकारकानपेक्षया च प्रत्युदाहरणमुपन्यस्तम् । जुगुप्सेति । संश्लेषपूर्वको विश्लेषोऽपायः । स चात्र नास्ति । बुद्धिकल्पितस्तु गौण इति भावः । कारकशेषत्वाद्वाऽत्र षष्ठी प्राप्नोति, यथा नटस्य शृणोतीति । सांकाश्यकेभ्य इति । 'पञ्चमी विभक्ते' इत्यनपेक्ष्य वचनम् । अत्र 'यतश्च निर्धारण'मिति षष्ठीसप्तम्यौ प्राप्नुतः । न वक्तव्यमिति । 'साधकतमं करण'मिति तमग्रह-

उ०- सत्येवावधाविति । विभागजसंयोगानुकूलव्यापार एवाऽपायः, इह तु संयोगानुकूलव्यापार एवार्थं इति भावः । सुज्ञानत्वादिति । एवं च संज्ञिनिर्देशस्य कारकाक्षिप्तेन सिद्धत्वाद्ध्रुवग्रहणं चिन्त्यप्रयोजनमिति भावः । सतीहेति । ध्रुवत्वेनाऽवधित्वेन विवक्षित इत्यर्थो भवतीति भावः । इह त्ववयवित्वेन विवक्षा नावधित्वेनेति तात्पर्यम् । कारकाधिकारानपेक्षयेति । वृक्षस्य पर्णेऽन्वयेन क्रियाजनकत्वाऽभावादिति भावः । वस्तुतः पर्णसम्बन्धेपि वृक्षस्य पातजनकत्वं वास्तवमस्त्येवेति तदपेक्षायामपि न दोषः । न च कारक इति सूत्रे तद्व्यावर्त्यत्वेनेदमाशङ्क्य 'नात्रापायो विवक्षित' इत्यादिभाष्यादपायपदव्यावर्त्यत्वमुक्तं, तत्कथमत्र ध्रुवपदव्यावर्त्यत्वोक्तिः, ध्रुवपदेनाऽचलार्थकेन तद्व्यावृत्त्यसंभवश्चेति वाच्यम् । 'ध्रुवमिति किमर्थ'मित्यस्य 'ध्रुवमपाये इति किमर्थ'मित्याशयात् । तत्सूत्रोक्तरीत्यैव चाऽस्य व्यावृत्तिः । अपायजनकं यद्ध्रुवमचलं तदपादानमिति सूत्रार्थः । ध्रुवत्वं चाऽवधित्वोपयोगिचेष्टानाश्रयत्वम् । तेनाऽस्यावधित्वोपगमातिरिक्तस्वव्यापाराऽभावो ध्वन्यते । करणादौ तु तत्त्वोपगमाऽतिरिक्तोपि स्वव्यापारोऽस्तीत्याहुः । जुगुप्सा—निन्दा । गौण इति । अपायत्वेनाऽप्रसिद्ध इत्यर्थः । तमग्रहणेनेति । कारकाधिकारादेव साधकत्वे लब्धे साधकग्रहणेनैव प्रकर्षे लब्धे तमग्रहणं व्यर्थं सदप्रसिद्धार्थकत्वेन गौणस्यापि ग्रहणं ज्ञापयतीत्यर्थः ।

१—'अधर्माद्' पा० । २—'इदं' पा० । ३—'बहु' क्वचिन्न ।

बीभत्सत इति, य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति—'दुःखोऽधर्मो नाऽनेन कृत्यमस्ती'ति । स बुद्ध्या संप्राप्य निवर्तते । तत्र 'ध्रुवमपायेऽपादान'-मित्येव सिद्धम् ॥ इह च [१]धर्माद्विरमति [१]धर्मान्निवर्तत इति, धर्मात्प्रमाद्यति धर्मान्मुह्यतीति, य एष मनुष्यः [२]संभिन्नबुद्धिर्भवति स पश्यति—नेदं किंचिद्धर्मो नाम 'नैनं करिष्यामी'ति । स बुद्ध्या संप्राप्य निवर्तते । तत्र 'ध्रुवमपायेऽपादान'मित्येव सिद्धम् ॥ इह च साङ्काश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति, यस्तैः साम्यं गतवान्भवति स एतत्प्रयुङ्क्ते ।

**गतियुक्तेष्वपादानसंज्ञा नोपपद्यतेऽध्रुवत्वात् ॥ २ ॥**

गतियुक्तेष्वपादानसंज्ञा नोपपद्यते । अश्वात् त्रस्तात्पतितः । रथात्प्र-

प्र०—णेन, 'स्वरितेनाधिकार' इत्यधिकः कारोऽधिकार इत्यस्यार्थस्याश्रयणेन च बुद्धिव्यवस्थिताऽपायाश्रयाऽपादानसंज्ञा प्रवर्तते । अधर्माज्जुगुप्सत इति । जुगुप्सादयो निवृत्त्यङ्गे जुगुप्सादौ वर्तन्ते । संभिन्नबुद्धिरिति । धर्माऽधर्मयोरेकाकारबुद्धिर्नास्तिक इत्यर्थः । यस्तैरिति । तैः साङ्काश्यकैः पाटलिपुत्रकाणां समगुणत्वाद्यः साम्यमवगतवान्स प्रकर्षाश्रयेण पुनः पृथक् कृत्वा वाक्यं प्रयुङ्क्ते इत्यर्थः । त्रिविधं चेदमपादानं—निर्दिष्टविषयमुपात्तविषयमपेक्षितक्रियं चेति । तत्र निर्दिष्टविषयं,—यत्र धातुनाऽपायलक्षणो विषयो निर्दिष्टः । यथा—ग्रामादागच्छतीति । उपात्तविषयं,—यत्र धातुर्धात्वन्तराऽर्थाङ्गं स्वार्थमाह । यथा च 'बलाहकाद्विद्योतत' इति । निःसरणाऽङ्गे द्योतनेऽत्र द्युतिवर्तते । यथा वा 'कुसूलात्पचती'त्यादौ । ओदनाङ्गे पाके पचिर्वर्तते । अपेक्षितक्रियं यत्र क्रियावाचि पदं न श्रूयते, केवलं क्रिया प्रतीयते । यथा—'साङ्काश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा' इति । गतियुक्तेष्विति । अचलं ध्रुवमेकरूपं चेति परिस्पन्दे ध्रुवता नास्तीति मन्यते । अश्वात् त्रस्तादिति । त्रासपूर्वके

उ०—युक्त्यन्तरमप्याह—स्वरितेनाधीत्यादि । ननु प्रयोक्तुस्तैः साम्याऽभावाद्यस्तैः साम्यं गतवानित्यनुपपन्नमत आह—तैरिति । नन्वत्र क्रियाऽभावात्कारकत्वाऽभावेन कथमपादानत्वमत आह—त्रिविधं चेति । केवलं प्रतीयत इति । 'प्रविश पिण्डी'मित्यादाविवोपात्तपदेनेत्यर्थः । यथेति । अत्र 'विभक्ता' इति क्रिया गम्यत इत्याहुः ।

गतियुक्तेष्विति । त्रासादीनामवधित्वोपयोगितां मन्यमानस्य प्रश्नः । उत्तराशयस्तु न तदवधित्वोपयोगि, अश्वात्पतितो वृक्षात्पतित इत्यादावभावात् । अत्र विद्यमानमपि तदविवक्षितत्वान्नावधित्वोपयोगितया विवक्षितम्, किं त्वश्वत्वादिकमेवेति तत्त्वम् । ननु त्रासो नाम मनोधर्मो न हि तावता पिण्डस्य ध्रुवत्वमपैतीत्यत आह—त्रासपूर्वके इति । ननु त्रास-

१—'अधर्माद्' पा० । २—संभिन्नबुद्धिः = नास्तिक इति कैयटः ।

वीतात्पतितः । सार्थाद्गच्छतो हीन इति । किं कारणम् ? 'अध्रुवत्वात्' ।

**न वाऽध्रौव्यस्याऽविवक्षितत्वात् ॥ ३ ॥**

न वैष दोषः । किं कारणम् ? 'अध्रौव्यस्याऽविवक्षितत्वात्' नाऽत्राऽध्रौव्यं विवक्षितम् । किं तर्हि ? ध्रौव्यम् । इह तावदश्वात् त्रस्तात्पतित इति, यत्तदेश्वेऽश्वत्वमाशुगामित्वं तद्ध्रुवं, तच्च विवक्षितम् । 'रथात्प्रवीतात्पतित' इति,

प्र०–परिस्पन्देऽनेकार्थत्वाद्धातूनां त्रसिर्वर्तते । त्रस्तश्चाऽश्वः पातस्य निमित्तमिति पूर्वमश्वस्य त्रस्तत्वेन संबन्धः, पश्चात्पतित इत्यनेनेति ध्रुवताऽश्वस्य नास्ति ।

न वेति । अयमर्थः ध्रुवमेकरूपमुच्यते । तच्च ध्रौव्यमपायविषयमाश्रीयते न त्वनवच्छिन्नम् । ततोऽपाये यदनाविष्टं तदपाये ध्रुवमुच्यते । देवदत्तकर्तृके च पाते त्रस्तस्याप्यश्वस्याऽपायानावेशाद्ध्रुवत्वम् । देवदत्तस्यैवाऽपायावेशादध्रुवत्वम् । अथवाऽश्वस्य त्रस्तत्वाद्यदध्रौव्यं तत्प्रथममविवक्षितमित्यर्थः । तथा हि—कारकस्य पूर्वं क्रियायां समन्वयः । स च श्रुतिप्रापित उच्यते । पश्चाद्विशेषणेन वाक्यीयः संबन्धः । ततश्चाऽश्वात्पतित इति सम्बन्धे नास्त्यश्वस्याऽध्रुवत्वम् । पश्चात् त्रस्तत्वेन संबन्धे सत्यप्यध्रौव्येऽन्तरङ्गसंज्ञा न निवर्तते । विशेषणस्याऽसत्यप्यपादानत्वे सामयिकी विभक्तिः । सा च विशेष्यानुरोधेन प्रवर्तते न त्वनियमेन । अथवा त्रस्तस्याऽप्यपादानत्वं, सत्यपि त्रासापेक्षेऽध्रौ० पातं प्रति ध्रौव्यात् । यथोक्तं प्राक् । आशुगामित्वमिति । अयमर्थः—व्युत्पत्तिनिमित्त-

उ०–क्रियान्वयात्पूर्वमेव पतनक्रियासंबन्धे ध्रुवत्वमस्त्येवेत्यत आह—त्रस्तश्चाश्व इत्यादि ।

एकरूपमिति । ध्रुवमस्य शीलमित्यादिदर्शनात्, 'ध्रुवं स्थैर्ये' इत्यादिधात्वर्थानुसाराच्चेति भावः । अपायविषयमिति । प्रत्यासत्तेरिति भावः । विभागजसंयोगानुकूलो गतिविशेषो ह्यपायः । स च प्रधान एव गृह्यते, युक्तत्वात्स चात्र [1]पत्युपात्तः, न च तदाश्रयोऽश्वः, तथात्वे कर्तृत्वापत्तिरिति भावः । अनवच्छिन्नमिति । अनिरूपितमित्यर्थः ।

अपाये यदनाविष्टमिति । अपाये सति प्रकृतधातूपात्तया क्रियया यदनाविष्टमित्यर्थः । एवं च प्रकृतधातूपात्तगत्यनाविष्टत्वमेव ध्रुवत्वमिति तात्पर्यम् । हरिरप्याह—

'अपाये यदुदासीनं चलं वा यदि वाऽचलम् । ध्रुवमेवाऽतदावेशा'दिति ।

परं तु सिद्धान्तभाष्याक्षराणामत्राऽर्थे न सामञ्जस्यं, किं तर्हि, ध्रौव्यं विवक्षितम् । 'अश्वात् त्रस्तात्पतित' इत्यत्राऽश्वत्वं ध्रु॰, तदेव विवक्षितम् । 'धावतः पतित' इत्यादौ सतोऽप्यध्रौव्यस्याऽविवक्षेत्यक्षराणामसामञ्जस्यात् । प्रधानव्यापाराश्रयस्वरूपस्य त्वदभिमताऽध्रौव्यस्याऽत्र कदाप्यसत्त्वात् । तस्मान्मदुक्त एव सूत्रार्थ उचितो, भाष्यार्थश्चेति सुधियो विभावयन्तु । कारकस्य पूर्वमिति । क्रियानिवर्तकरूपस्य तस्याऽन्तरङ्गत्वात्पूर्वं क्रिययाऽन्वय इत्यर्थः । श्रुतिः—पञ्चम्यादिः । वाक्यं—पदसमूहः । पूर्वमश्वात्पतित इति बोधे पातहेत्वाकाङ्क्षायां पश्चात् त्रस्तादित्यस्याऽन्वय इति भावः । नन्वेवमपि'त्रस्ता'दिति पञ्चम्यनुपपन्नैवेत्यत आह—विशेषणस्येति । सामयिकीति । 'न केवला प्रकृति'रिति समयाद्विभक्तिरुत्पाद्या । सा चाऽभिन्न-

[1]–पतधातुनोपात्त इत्यर्थः ।

यत्तद्रथे रथत्वं रमन्तेऽस्मिन्रथ इति तद्ध्रुवं, तच्च विवक्षितम्। सार्थाद्गच्छतो हीन इति, यत्तत्सार्थे सार्थत्वं सहाऽर्थीभावस्तद्ध्रुवं तच्च विवक्षितम्।

यद्यपि तावदत्रैतच्छक्यते वक्तुं, ये त्वेतेऽत्यन्तगतियुक्तास्तत्र कथम्—धावतः पतितः, त्वरमाणात्पतित इति? अत्रापि—'न वाऽध्रौव्यस्याऽविवक्षितत्वा'दित्येव सिद्धम्॥ कथं पुनः सतो नामाऽविवक्षा स्यात्? सतोऽप्यविवक्षा भवति। तद्यथा,—'अलोमिकैडका', 'अनुदरा कन्ये'ति। असतश्च विवक्षा

प्र०—मात्रमाशुगामित्वमिति तदपेक्षयाऽध्रौव्यं न शङ्कनीयम्। जातिरेव शब्दप्रवृत्तिनिमित्तमिति नास्त्येवाऽत्राऽध्रौव्यम्। आशुगामित्वशब्देनैकार्थसमवायात् साहचर्यादश्वत्वमेवोच्यते।

यद्यपीति। यत्र क्रिया न प्रवृत्तिनिमित्तं, किं तु व्युत्पत्तिमात्रनिमित्तं, तत्रैतद्वक्तुं युज्यते। यत्र तु शब्दप्रवृत्तिनिमित्तं क्रिया तत्र कथं नाऽध्रौव्यमिति प्रश्नः। अत्रापीति। सरणक्रियोपलक्षितं द्रव्यमात्रमपादानत्वेन विवक्षितम्। तच्च देवदत्तकर्तृके पाते पूर्वोक्तन्यायाद्ध्रुवमेवेत्यर्थः। कथं पुनरिति। शब्दोपात्तमपि सरणं द्रव्योपलक्षणार्थत्वादध्रौव्यनिमित्तं न भवतीति कुत एतदिति प्रश्नः। अलोमिकेति। अल्पत्वाल्लोम्नां तत्कार्याऽकरणादेवमुच्यते। असतश्चेति। निदर्श-

उ०—विशेष्यसमानशक्तिकत्वनियमाद्विशेषणानां तेभ्यो विशेष्यसमानैव विभक्तिरिति भावः। आद्यपक्षस्यैव युक्तत्वबोधनाय पुनस्तं स्मारयति—अथवेति। भाष्यस्वारस्यं तु द्वितीयव्याख्याने एव। न शङ्कनीयमिति। पूर्वोक्तद्वितीयव्याख्यारीत्येयं शङ्का बोध्या, त्रस्तत्वस्य प्रथममनन्वयेऽप्याशुगामित्वस्य शब्दादुपस्थित्या तत्कृतमध्रौव्यं न शङ्क्यम्, जातेरेव प्रवृत्तिनिमित्तत्वादिति भावः। भाष्ये—सहार्थीभाव इति। सहार्थो येषां तद्भाव इत्यर्थः। परे त्वाशुगमनाश्रयत्वमश्वशब्देन योगतो बुध्यते, रमणक्रियाश्रयत्वं रथशब्देनोच्यते, सहमिलनक्रियाश्रयत्वं च सार्थशब्देन, अश्वत्वादिकं च रूढ्या। एवं चाऽश्वात्पतित इति प्रयोगे यद्यश्वस्य तदविवक्षयाऽश्वत्वमात्रविवक्षया ध्रुवत्वं तवाभिमतं तर्हि त्रस्तादिति विशेषणेपि न क्षतिरिति भावः। अश्वनिष्ठाऽश्वत्वाशुगामित्वयोर्मध्ये तत्—अश्वत्वमेव ध्रुवताप्रयोजकं, तच्च विवक्षितं—तदेव विवक्षितमित्यक्षरार्थं इत्याहुः। ननु प्रवृत्तिनिमित्तमविवक्षितमित्ययुक्तमत आह—सरणक्रियोपलक्षितमिति। अनेन प्रवृत्तिनिमित्तस्याऽप्यविवक्षा दर्शिता। तदेव भाष्ये उक्तं—सतोऽप्यविवक्षेति। पूर्वोक्तेति। त्रस्तादित्यादावुक्तरीत्येत्यर्थः।

नन्वसतश्चेति प्रकृतानुपयुक्तमत आह—निदर्शनार्थमिति। अग्रे सूक्ष्मो मूले स्थूल ओदनपिण्डो वर्धितकम्। यदा त्विति। 'परस्परस्मान्मेषावपसरत'इत्यत्र तु

'मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्॥' इति बोध्यम्।

१—'अत्यन्तं गतियुक्ताः' पा०।

भवति—'समुद्रः कुण्डिका', 'विन्ध्यो वर्धितक'मिति ॥२४॥

**भीत्रार्थानां भयहेतुः ॥ १ । ४ । २५ ॥**

अयं योगः शक्योऽवक्तुम्। कथं वृकेभ्यो बिभेति दस्युभ्यो बिभेति, चौरेभ्यस्त्रायते तस्युभ्यस्त्रायत इति ? इह तावद्वृकेभ्यो बिभेति दस्युभ्यो बिभेतीति, य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति—'यदि मां वृकाः पश्यन्ति ध्रुवो मे मृत्यु'रिति। स बुद्धया संप्राप्य निवर्तते। तत्र 'ध्रुवमपायेऽपादानम्' [ १. ४. २४ ] इत्येव सिद्धम्॥ इह 'चौरेभ्यस्त्रायते' 'दस्युभ्यस्त्रायत' इति, य एष मनुष्यः प्रेक्षापूर्वकारी सुहृद्भवति स पश्यति —

प्र०-नाऽर्थमिदमुच्यते। यथाऽसतो विवक्षा भवति एवं सतोऽप्यविवक्षेत्यर्थः। समुद्रः कुण्डिकेति। कुण्डिकायां पानीयबाहुल्यात्समुद्रं विवक्षितं, समुद्रस्य वा सुतरत्वात् कुण्डिकात्वम्। विन्ध्यो वर्धितकमिति। पूर्ववदन्यतररूपारोपेण व्याख्येयम्। मेषो मेषादपसर्पतीत्यत्रैकस्य कर्तृत्वाविवक्षाऽपरस्याऽपादानत्वविवक्षा। यदा तु 'मेषावपसरत' इति प्रयोगस्तदाऽवध्यन्तरमपेक्षणीयम्॥२४॥

भीत्रार्थानाम्। कथमिति। भयम्—आकुलीभावः, त्राणम्—अनर्थप्रतिघात इति। तत्र च नास्ति मुख्योऽपाय इति प्रश्नः। प्रेक्षापूर्वकारीति। बुद्धिव्यवस्थापितोऽत्राऽपायोऽस्तीति भावः। तत्र निवृत्त्यङ्गे भये बिभेत्यादयो वर्तन्त इत्युपात्तविषयमेतदपादानम्। 'चौरेभ्यस्त्रायत'इत्यनर्थपरिहाराय निवर्तयतीत्यर्थः। चौरमध्यगतस्यापि त्राणे चौरसंपर्कफलस्य वधबन्धनाऽपहरणादेर्निवर्त्तनात्तेभ्यो निवर्त्तयतीत्युच्यते। 'वारणार्थानामीप्सित'इत्यनेनाऽत्राऽपादानसंज्ञा न प्राप्नोति, चौराणामनीप्सितत्वात्।

उ०- किं च मेषपदोपात्तयोरेव क्रियाश्रयत्वं, परस्परपदोपात्तयोर्विभागाश्रयत्वमेवेति तत्र न दोषः। अन्यथा वस्तुतस्तदाश्रयक्रियाभेदेपि धातुना विभागद्वयस्य, तज्जनकक्रियाद्वयस्य च निवृत्तभेदस्यैवोपादानात्परत्वात्कर्तृत्वं दुर्वारमेव स्यात्। आत्मानमात्मनेत्यादावन्तःकरणाद्युपाधिना भेदस्यैव शब्दरूपोपाधिकृतभेदस्याऽत्रापि सत्त्वाच्च। अस्मन्मते शब्दानुविद्धार्थस्यैव भानाच्च। हरिकारिकायामप्यवधित्वमित्यस्य 'परस्परपदोपात्तयो'रिति शेषः। 'कर्तृत्व'मित्यस्य 'मेषपदोपात्तयो'रिति शेष इति वदन्ति ॥२४॥

भीत्रार्थानां। सूत्रे भीत्राशब्दौ भावक्विबन्तौ। 'चौरेभ्य' इति पाठे प्रज्ञाद्यणन्तो बोध्यः। चुरा स्तेयं शीलमस्येति णान्तो वा। अनर्थप्रतिघात इति। अनर्थश्च भयं, तद्धेतुश्चौर इति त्राणार्थानामपि भयहेतुः कारकं संभवतीति बोध्यम्। भाष्ये—पश्यति। विचारयतीत्यर्थः। ननु निवृत्तेरेव वारणत्वाद्वारणार्थानामित्यनेन सिद्धिरिति कुतो नोक्तमत आह—वारणार्थानामिति। अनीप्सितत्वात्—तद्धात्वर्थप्रयोज्यफलाऽनाश्रयत्वात्। इदं वचनमिति। प्रत्याख्याने तु षष्ठ्या अनभिधानान्निवृत्तिर्बोध्या। क्रियां प्रति जनकत्वेन विवक्षाया-

'यदीमं चौराः पश्यन्ति ध्रुवमस्य 'वधबन्धनादिपरिक्लेशा' इति । स बुद्धया संप्राप्य निवर्तयति । तत्र 'ध्रुवमपायेऽपादान'मित्येव सिद्धम् ॥२५॥

## पराजेरसोढः ॥ १ । ४ । २६ ॥

अयमपि योगः शक्योऽवक्तुम् । कथम्-अध्ययनात्पराजयत इति ? य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति—'दुःखमध्ययनं दुर्धरं च गुरवश्च दुरुपचारा' इति । स बुद्धया संप्राप्य निवर्तते । तत्र 'ध्रुवमपायेऽपादानम्' [ १. ४. २४ ] इत्येव सिद्धम् ॥२६॥

## वारणार्थानामीप्सितः ॥ १ । ४ । २७ ॥

किमुदाहरणम् ? माषेभ्यो गा वारयति । भवेद्यस्य माषा न गावः, तस्य माषा ईप्सिताः स्युः । यस्य तु खलु गावो न माषाः, कथं तस्य माषा ईप्सिताः स्युः ? तस्याऽपि माषा एवेप्सिताः । अतश्चेप्सिताः, यदेभ्यो गा वारयति ।

---

प्र०-सूत्रारम्भपक्षे तु कारकशेषत्वात् षष्ठ्यां प्राप्तायामिदं वचनम् ॥२५॥

पराजे । पराजिः क्वचिदभिभवे वर्तते । यथा शत्रून्पराजयते इति । इह त्वसोढग्रहणान्न्यूनीभाववृत्तिर्गृह्यते । अध्ययनात्पराजयते । हसति । अध्येतुं ग्लायतीत्यर्थः । अत्र चार्थेऽकर्मकत्वात्षष्ठ्यां प्राप्तायां वचनम् । पूर्ववदस्यापि प्रत्याख्यानं, निवृत्त्यङ्गे पराजये पराजेर्वर्तनात् ॥२६॥

वारणा । किमुदाहरणमिति । अव्याप्तिं मन्यमानस्य प्रश्नः । भवेद्यस्येति । यस्यात्मीया माषास्तस्य त इप्सिता इत्यर्थः । अभिप्रेतपर्यायमीप्सितशब्दं मन्यते । यस्य त्विति । यस्यात्मीया गावः, परकीयास्तु माषास्तस्य न त ईप्सिताः ।

तस्यापीति । 'ईप्सित'शब्दः क्रियाशब्द आश्रीयते, न तु रूढिशब्दः । तत्र

---

उ०-मेषा संज्ञा । संबन्धित्वेन विवक्षायां तु षष्ठ्यामिष्टापत्तिरेव, सूत्राणि प्रपञ्चार्थान्येवेति हृदयः ॥२५॥

पराजेर । असोढग्रहणादिति । अत्र कालोऽविवक्षितः । तेन 'पराजेष्यत' इत्यपि भवति । न्यूनीभावेति । शक्तिवैकल्येत्यर्थः । षष्ठ्यामिति । तत्सम्बन्धिशक्तिवैकल्यमित्यर्थाभावः । निवृत्त्यङ्गे इति षष्ठीसमासः । शक्तिवैकल्येन ततो निवर्त्तेत इत्यर्थात् ॥२६॥

वारणार्था । अव्याप्त्युपपादकं—यस्य खल्विति भाष्ये । ननु धात्वर्थजन्यफलशालित्वरूपमीप्सितत्वं सर्वत्राऽप्यस्तीत्यत आह—अभिप्रेतेति । आप्तुमिष्टा इति । वारणं—प्रवृत्तिविघातः । स च तद्व्यापारजन्यतत्फलाऽभावप्रयोजको भक्षणादिजनकव्यापाराऽभावानु-

---

१—'वधबन्धनपरिक्लेशा' पा० ।

इह 'कूपादन्धं वारयती'ति कूपेऽपादानसंज्ञा न प्राप्नोति। न हि तस्य कूप ईप्सितः। कस्तर्हि ? अन्धः। तस्यापि कूप एवेप्सितः। पश्यत्ययम्— 'अन्धः कूपं मा प्राप'दिति। अथवा यथैवाऽस्यान्यत्राऽपश्यत ईप्सैवं कूपेऽपि।

इह-'अग्नेर्माणवकं वारयती'ति माणवकेऽपादानसंज्ञा प्राप्नोति। कर्मसंज्ञाऽत्र

प्र०—वारणक्रियया परकीया अपि माषा वारयितुराप्तुमिष्टा भवन्ति, मा नशन्नेते इत्येतेभ्योऽसौ गा वारयति। माषा एवेत्येवकारो भिन्नक्रमः। ईप्सिता एवेत्यर्थः। कूपादिति। अन्धसंबन्धे कूपस्य न विनाशो, नाऽपि राजभयमिति प्रश्नः। कस्तर्ह्यन्ध इति। तं प्रत्यनुकम्पायाः सद्भावात्तस्येप्सितत्वं मन्यते। तस्यापीति। वारणक्रिययाऽऽप्तुमिष्ट इत्यर्थः। अथवेति। 'ईप्सित' इत्यनेन कर्मणा कर्तृमात्रस्याक्षेपान्निवार्यमाणस्याऽन्धस्य गमनादिक्रियया कूप आप्तुमिष्टो भवतीति प्रवर्त्ततेऽपादानसंज्ञा। अन्धस्य च प्रवृत्त्यनुमेयेप्सा, तदाह—अन्यत्राऽपश्यत इति। अन्धस्येत्यर्थः। स ह्यपश्यन्नपि गन्तव्यं जिगमिषति। अन्यथा न क्वचित्तस्य प्रवृत्तिः स्यात्। इदानीमतिप्रसङ्गमुद्भावयति—इहाग्नेरिति। कर्मसंज्ञाऽत्रेति। परत्वादिति भावः। कर्मसंज्ञाया

उ०—कूले व्यापारः क्वचित्, क्वचित्तद्व्यापारजन्यतत्फलाऽभावप्रयोजकः संयोगानुकूलव्यापाराऽभावानुकूलव्यापारः। एवं च तद्धात्वर्थप्रयोज्यफलाश्रया इत्यर्थस्तदाह—मा नशन्निति। नाशाऽभावरूपफलेन व्याप्तुमिष्टा इत्यर्थः। नाशाऽभावाच्च[1] भक्षणाऽभावः पर्यवसन्नः। तस्य च फलस्य धात्वर्थत्वपर्यन्तं नाग्रहः। माषनाशे हि सति राजभयमधर्मश्च स्यादिति भावः। नन्वेवं 'माषा एवे'ति भाष्याद्गवामीप्सितत्वाऽभावो लभ्यते इति सुतरामीप्सिततमत्वाऽभावेन कर्मत्वाऽभावाद्द्वितीया न स्यादत आह—भिन्नक्रम इति। गवादिनिष्ठव्यापाराऽभावस्यैव मुख्यतयोद्देश्यत्वेन तदाश्रयत्वेनेच्छाविषयत्वात्तासां कर्मत्वमिति भावः। ननु पूर्वोदाहरणादस्य को विशेष इत्यत आह—अन्धेति। ननु तदसंबन्धिनस्तस्य कथं तदीप्सितत्वमत आह—तं प्रतीति।

माषाणां राजभयादितो नाशाऽभावरूपफलाश्रयत्वेन गोस्वाम्यभिप्रेतत्वेऽप्यस्य कथं तत्त्वमत आह—वारणक्रिययेति। क्रियाशब्दस्य ग्रहणात् कूपस्याऽपि तत्संयोगाऽभावरूपफलाश्रयत्वादिति भावः। गमनादिक्रिययेति। वारणधात्वर्थघटकयेत्यर्थः। अत्र पक्षे भक्षणादिजनकव्यापाराऽभावानुकूलव्यापार एव वारयतेरर्थः। एवं च वारणार्थकधातुप्रतिपाद्यव्यापारजन्यफलाश्रयत्वमेवाऽत्रेप्सितत्वमिति भावः। नन्वेवमपि प्रधानकर्त्तुरनीप्सितत्वात्कथमेतत्प्राप्तिरत उक्तं—कर्तृमात्रस्येति। कर्तृग्रहणं चोपलक्षम्। नन्वन्धस्य पदार्थज्ञानाऽभावात्कथं तद्विषयेप्सेत्यत आह—अन्धस्य चेति। सामर्थ्यगम्यस्यैव प्रकर्षस्याऽनाश्रयणं, न तूपात्तस्येत्यत उक्तं—मन्यत इति। नन्वीप्सितमाषाणां न गवादीप्सितं, नापि तस्याऽपादानत्वमिष्टमत आह—वारयितुरिति। यदीप्सितं कर्मेति। 'कर्म'शब्दोऽत्र क्रियापरः।

१—'नाशाऽभावश्च भक्ष्यमाणाऽभाव' पा०।

बाधिका भविष्यति[†] । अग्नावपि तर्हि बाधिका स्यात् । तस्माद्वक्तव्यं 'कर्मणो-यदीप्सित'मिति । 'ईप्सितेप्सित'मिति वा ।

**वारणार्थेषु कर्मग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचनम् ॥१॥**

वारणार्थेषु कर्मग्रहणमनर्थकम् । किं कारणम् ? 'कर्तुरीप्सिततमं कर्म' [ १. ४. ४९ ] इति वचनात् । 'कर्तुरीप्सिततमं कर्मे'त्येव सिद्धम् ।

अयमपि योगः शक्योऽवक्तुम् । कथं माषेभ्यो गा वारयतीति ? पश्यत्ययं यदीमा गावस्तत्र गच्छन्ति [1]ध्रुवं सस्यविनाशः, सस्यविनाशेऽधर्मश्चैव राजभयं च । स बुद्ध्या सम्प्राप्य निवर्तयति । तत्र 'ध्रुवमपायेऽपादानम्' [१.४.२४] इत्येव सिद्धम् ॥२७॥

प्र०—अवकाशो—वारणार्थेभ्योऽन्ये धातवः । अपादानसंज्ञास्तु प्रकर्षरहितमीप्सितम् । ईप्सिततमस्य तूभयप्रसङ्गे परत्वात्कर्मसंज्ञा । अग्नावपीति । कारकाधिकारे प्रकर्षो न विवक्ष्यते इत्यतन्त्रं तमनिर्देशं मन्यते । कर्मणो यदीप्सितमिति । तत्र कर्मसंज्ञा निमित्तमेवाऽपादानसंज्ञाया इति माणवके प्रवर्तते । ततस्तस्येप्सितस्याऽग्नेरपादान-संज्ञेत्यर्थः । ईप्सितमिति । वारयितुर्यदीप्सितं कर्म तस्य यदीप्सितमित्यर्थः । शेष-षष्ठ्या चाऽत्र समासः । अन्यथा 'क्तेन च पूजाया'मिति निषेधः स्यात् । कर्तुरिति । प्रकर्षप्रत्ययोपादानसामर्थ्यात्कर्मसंज्ञायां प्रकर्षो विवक्ष्यत एव । तत्र द्वयोः संज्ञयोः सावकाशयोः परत्वादीप्सिततमस्य कर्मसंज्ञा ॥२७॥

उ०—ईप्सितो यो धात्वर्थ इत्यर्थः । तस्य यदीप्सितमिति । तज्जन्यफलाश्रय इत्यर्थः । भक्षणादि-जनकव्यापाराऽभावस्य हि नाशाऽभावाऽन्धाऽपतनादिफलमिति भावः । एवं च पूर्वोक्तसमा-धानद्वयाभिप्रायकं लक्षणद्वयं बोध्यम् । एतेनार्थाभेदाच्छब्दभेदमात्रेण लक्षणद्वयकथनमयुक्त-मित्यपास्तम् । ननु प्रकर्षाऽविवक्षणेनानवकाशत्वादिदमेव भविष्यतीत्यत आह—प्रकर्षेति । अयं भावः—तरबादिः प्रवृत्तिनिमित्तगतप्रकर्षे विधीयते । प्रवृत्तिनिमित्तं चाऽत्रेच्छा । तस्यां स्वतः प्रकर्षसंभवेपि व्याख्यानाद्विशेषणीभूतव्याप्तिगतः स गृह्यते । व्याप्तिप्रकर्षश्च प्रकृत-धात्वर्थप्रधानीभूतव्यापारप्रयोज्यधात्वर्थफलीयत्वरूपः । एवं च प्रकृतधात्वर्थप्रधानीभूत-व्यापारप्रयोज्यधात्वर्थफलाश्रयत्वमीप्सिततमत्वं, तच्च नाऽग्नाविति । ननु कर्तृग्रहणात्सिद्ध-मेतत्, प्रकृतसूत्रे इवेप्सितेति कर्मणा कर्तुराक्षेपेणैव सिद्धे पुनः कर्तृग्रहणेन प्रकृतधात्वर्थ-प्रधानीभूतव्यापाराश्रयस्यैव ग्रहणादिति चेन्न । लघुना 'तम'ग्रहणेन'कर्तु'रित्यस्य प्रत्याख्याने तात्पर्यादित्याहुः । भाष्ये—पश्यत्ययमिति । विचारयतीत्यर्थः ॥२७॥

† कर्तुरीप्सिततमं कर्म १. ४. ४९. १–'ध्रुवः' पा० ।

## अन्तर्धौ येनाऽदर्शनमिच्छति ॥ १ । ४ । २८ ॥

अयमपि योगः शक्योऽवक्तुम् । कथम्—उपाध्यायादन्तर्धत्त इति ? पश्यत्ययं 'यदि मामुपाध्यायः पश्यति ध्रुवं मे प्रेषणमुपालम्भो वे'ति । स बुद्ध्या सम्प्राप्य निवर्तते । तत्र 'ध्रुवमपायेऽपादानम्' [ १. २. २४ ] इत्येव सिद्धम् ॥२८॥

## आख्यातोपयोगे ॥ १ । ४ । २९ ॥

उपयोग इति किमर्थम् ? 'नटस्य शृणोति', 'ग्रन्थिकस्य शृणोति' ॥ 'उपयोग' इत्युच्यमानेऽप्यत्र प्राप्नोति । एषोऽपि ह्युपयोगः । आतश्चोपयोगो यदाऽऽरम्भका रङ्गं गच्छन्ति 'नटस्य श्रोष्यामः', 'ग्रन्थिकस्य श्रोष्याम' इति ।

एवं तर्ह्युपयोग इत्युच्यते, सर्वश्चोपयोगः, तत्र प्रकर्षगतिर्विज्ञास्यते—'साधीयो य उपयोग' इति । कश्च साधीयः ? यो ग्रन्थाऽर्थयोः ।

अथवोपयोगः को भवितुमर्हति ? यो नियमपूर्वकः । तद्यथा,—'उपयुक्ता माणवका' इत्युच्यन्ते य एते नियमपूर्वकमधीतवन्तो भवन्ति ।

---

प्र०— अन्तर्धौ येना । अन्तर्धत्ते इति । तिरोभवतीत्यर्थः ॥२८॥

आख्याता । उपयोगो व्यापारः, स चाऽविशिष्टो नटोपाध्याययोरिति मत्वा पृच्छति—उपयोग इति किमर्थमिति । आरम्भका रङ्गं गच्छन्तीति । रङ्गं—सामाजिकस्थानम् । आरम्भकाः—यत्नेन प्रवृत्तिमन्तो गच्छन्तीत्यर्थः । प्रकर्षगतिरिति । व्यापारमात्रे लब्धे उपयोगग्रहणं विशिष्टव्यापारपरिग्रहार्थम् । तेन ग्रन्थार्थधारणार्थं यद्ग्रहणं स उपयोगः । अथवेति । उपयोगशब्दस्यैवाऽयमर्थो नियमपूर्वकं विद्या-

---

उ०— अन्तर्धौ येना । अन्तर्द्धिर्व्यवधानम् । यस्य च भावेनेति सप्तमी, येनेति सौत्री तृतीया । उभयोः प्रयोगाऽभावेनोभयप्राप्तावित्यरयाऽप्रवृत्तेः । उभयप्रयोगे एव तत्प्रवृत्तिरित्यात्ममान'इति सूत्रे भाष्ये स्पष्टम् । अन्तर्द्धिनिमित्तकं यत्कर्तृकमात्मकर्मकाऽदर्शनमिच्छति तदपादानमित्यर्थः । नन्वन्तर्धत्त इत्यस्य विभजत इत्यर्थेऽपादानत्वं सिध्यतीत्यत आह—तिरोभवतीति । आत्मकर्मकोपाध्यायकर्तृकदर्शनाऽभावेच्छया तिरोभवतीत्यर्थः । निवृत्तिपूर्वकभवने धातोर्वृत्तेर्ध्रुवमिति सूत्रेणैव सिद्धमिति बोध्यम् ॥२८॥

आख्यातोप । व्यापार इति । उपयुज्यते फलायेति व्युत्पत्तेरिति भावः । आरम्भका—गीतश्रोतॄणां मध्ये मुख्याः । यत्नेन प्रवृत्तिमन्तो गच्छन्तीति । अत्यावश्यकत्वबुद्ध्या गच्छन्तीति यावत् । प्रवृत्तिरत्र व्यापारसामान्यं, यत्नेनेत्यस्यातियत्नेनेत्यर्थः । व्यापारमात्रे इति । कारकाधिकारादिति भावः । ग्रन्थार्थधारणार्थमिति । यदा तु नटादिभ्योऽपि तथाऽध्ययनं तदा 'नटाच्छृणोती'ति भवत्येवेति बोध्यम् । अयमर्थ इति । उप-

किं पुनराख्यातानुपयोगे कारकमाहोस्विदकारकम् ? कश्चात्र विशेषः ?

**आख्यातानुपयोगे कारकमिति चेदकथितत्वात्कर्मसंज्ञाप्रसङ्गः ॥१॥**

आख्यातानुपयोगे कारकमिति चेदकथितत्वात्कर्मसंज्ञा प्राप्नोति* ।

अस्तु तर्ह्यकारकम् ।

**अकारकमिति चेदुपयोगवचनानर्थक्यम् ॥ २ ॥**

यद्यकारकमुपयोगवचनमनर्थकम् ॥ अस्तु तर्हि कारकम् । ननु चोक्तम्—'आख्यातानुपयोगे कारकमिति चेदकथितत्वात्कर्मसंज्ञाप्रसङ्ग' इति । नैष दोषः । परिगणनं तत्र† क्रियते—'दुहियाचिरुधिप्रच्छि¹भिक्षिचिञा'मिति ।

अयमपि योगः शक्योऽवक्तुम् । कथम्-उपाध्यायादधीत इति ? अपक्रामति तस्मात्तदध्ययनम् । यद्यपक्रामति, किं नात्यन्तायाऽपक्रामति ? सन्ततत्वात् ।

प्र०-ग्रहणम् । किं पुनरिति । उभयथा संभवाद्दोषदर्शनाच्च प्रश्नः । यद्यपक्रामतीति । यथा फलं वृक्षादपक्रान्तं न पुनर्वृक्षे तद्भवति, एवं शब्देऽपि प्रसङ्ग इत्यर्थः । सन्ततत्वादिति । शब्दस्य व्यञ्जका ध्वनय उपाध्यायेनोत्पाद्यमाना भिन्ना अपि सादृश्यात्तत्त्वेनाऽध्यवसीयमानाः श्रोतुः पुनः पुनः श्रोत्रप्रदेशं गच्छन्तो व्यक्तिस्फोटरूपं

उ०-योगशब्दस्य तत्रैव रूढिरन्यत्र तु लक्षणया प्रयोग इत्यर्थः । नियमो—भिक्षाचरण-भूशय्यादिः । इदं च तत्तद्विद्याश्रवणनियमानामुपलक्षणमित्याहुः । उभयथेति । नटं विना गीतश्रवणाद्ययोगात्तस्य तज्जनकतया कारकत्वं, कुलालपितृवदन्यथासिद्धत्वसम्भावनया चाऽकारकत्वमिति भावः । भाष्ये—अनुपयोग इति । अनियमपूर्वकश्रवण इत्यर्थः । कर्मसंज्ञा-प्रसङ्ग इति । अपादानादिभिरसंकीर्तितत्वं च तत्प्राप्तिपूर्वकाऽविवक्षायामिव सर्वथा तदप्राप्तावपीति तात्पर्यम् । कर्मत्वं कारकत्वांऽशोऽपि तत्र परिगणनलभ्य एवेति बोध्यम् । अस्तु तर्हि कारकमिति । गीतद्वारा तस्य तज्जनकत्वाद्द्वारेण द्वारिणो नान्यथासिद्धिरिति तद्विवक्षैवेति भावः ।

अपक्रामति तस्मात्तदध्ययनमिति । अधीयमानवाक्यजातमध्ययनमित्युच्यते । एवं चाऽपक्रमजनितविश्लेषाश्रयत्वादुपाध्यायस्याऽपादानत्वं सिद्धम् । उपाध्यायादपक्रान्तं शब्दजातमुपादत्ते इत्यर्थादिति भावः । शब्दानामपक्रमणं न युक्तमिति शङ्कते—यद्यपेति । शब्दस्य व्यञ्जका ध्वनय इति । पुनः पुनरुत्पाद्यमानत्वेन सन्ततत्वमिति भावः । ननु तेषां भिन्नभिन्नत्वात्कथं तद्रूपाऽनुपक्तस्य स्फोटस्य स एवाऽयमित्येकताप्रत्ययोऽत आह—सादृश्यादिति । यथा ज्वालारूपमिति । प्रतिक्षणं विनश्यदपीत्यर्थः । सन्ततमिति । तथा

* अकथितं च १. ४. ५१. † १. ४. ५१ सूत्रभाष्ये । १ -'प्रछि' पा० ।

अथवा ज्योतिर्वज्ज्ञानानि भवन्ति ॥२९॥

प्र०—जातिस्फोटरूपं वा शब्दमभिव्यञ्जयन्तीत्यर्थः।

अथवेति। यथा ज्वालारूपं ज्योतिरविच्छेदेनोत्पद्यमानं सादृश्यात्तत्त्वेनाऽध्यवसीयमानं सन्ततं तथैवोपाध्यायज्ञानानि भिन्नानि भिन्नशब्दरूपतामापद्यमानानि सन्तन्तान्युच्यते। ज्ञानस्य शब्दरूपापत्तिरिति दर्शनमत्र भाष्यकारस्य। तथा चोक्तम्—

'वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।
कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थितः' ॥ इति ॥२९॥

उ०—व्यवहारविषय इति भावः। वायोः कैश्चित्परमाणूनां—शब्दतन्मात्रादिरूपाणां कैश्चित्कैश्चि ज्ज्ञानस्य शब्दत्वमिष्यते। तदुक्तं हरिणा—

'लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्त्तिना।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥'

'वक्तुरिच्छे'त्यनेनैकस्यैव वायोरनेकशब्दत्वोपपत्तिरुक्ता। तथा—

'अणवः सर्वशक्तित्वाद्भेदसंसर्गवृत्तयः।
छायाऽऽतपतमःशब्दभावेन परिणामिनः ॥'

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ॥'

तथा—

'अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः।
व्यक्तये स्वस्वरूपस्य शब्दत्वेन विवर्त्तते ॥'

ज्ञाता—वृत्तिविशिष्टमन्तःकरणम्।

'स मनोभावमापद्य तेजसा पाकमागतः'।

तेजसा—जाठरेण। पाकं—दाहम्।

'वायुमाविशति प्राणमथासौ समुदीर्यते ॥'

असौ सवृत्तिमनोयुतः प्राणः। तदाह—

'अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।
तद्धर्मेण समाविष्टस्तेजसा सोपि पच्यते ॥'

तद्धर्मेण—दाहेन। दाहवशादेव—

'विभज्य स्वात्मनो ग्रन्थीञ्छ्रुतिरूपैः पृथग्विधैः'।

श्रुतिरूपैः—ध्वनिरूपैः। 'सहे'ति शेषः।

'प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते ॥' इति।

प्राणः—सवृत्तिकमनोरूपान्तःकरणयुतः। एतावतैव ज्ञानस्य शब्दत्वमिति द्रष्टव्यम्। दर्शनं—सिद्धान्तः। प्रवादः—शास्त्राणि। 'नटस्य शृणोती'त्यादावीदृशबुद्धिकृताऽपायविवक्षाऽनभिधानान्नेति नातिप्रसङ्गः ॥२९॥

## जनिकर्तुः प्रकृतिः ॥ १ । ४ । ३० ॥

अयमपि योगः शक्योऽवक्तुम् । कथं गोमयाद्वृश्चिको जायते, गोलोमाऽविलोमभ्यो दूर्वा जायन्त इति ? आपक्रामन्ति तास्तेभ्यः । यद्यपक्रामन्ति, किं नाऽत्यन्तायाऽपक्रामन्ति ? सन्ततत्वात् ।

अथवाऽन्याश्चाऽन्याश्च प्रादुर्भवन्ति ॥३०॥

## भुवः प्रभवः ॥ १ । ४ । ३१ ॥

अयमपि योगः शक्योऽवक्तुम् । कथं हिमवतो गङ्गा प्रभवतीति ? अपक्रामन्ति तास्तस्मादापः । यद्यपक्रामन्ति, किं नाऽन्त्यन्तायापक्रामन्ति ? सन्ततत्वात् ॥ अथवान्याश्चान्याश्च प्रादुर्भवन्ति ॥३१॥

प्र०- जनिकर्तुः । अपक्रामन्ति ता इति । लोकप्रसिद्ध्याश्रयेणैतदुच्यते । लोके हि यद्यस्माज्जायते तत्तस्मान्निर्गच्छतीत्युच्यते । तर्काश्रयास्तु प्रक्रिया भिद्यन्ते । वैशेषिकदर्शने परमाण्वादिसमवेतं कारणेभ्योऽपृथग्देशं कार्यमुत्पद्यत इति नास्ति कार्यस्याऽपक्रमः । सांख्यदर्शनेऽप्याविर्भावतिरोभावलक्षणजन्मनाशरूपरिणामाभ्युपगमान्नास्त्यपक्रमः । यदीति । यद्यतोऽपक्रामति तत्पुनस्तत्र न दृश्यते इति प्रसिद्धम् । इह तु तत्राऽस्ति दर्शनमिति प्रश्नः । सन्ततत्वादिति । अविच्छेदादित्यर्थः । यथा बिलाद्दीर्घभोगो भोगी निष्क्रामन्नप्यविच्छेदात्तत्रोपलभ्यते तथा दूर्वा अपीत्यर्थः । अथवेति । क्षणिकपक्षं, द्रव्यान्तरारम्भपक्षं वा, परिणामपक्षं वाऽऽश्रित्यैतदुक्तमित्याहुः । ननु सतो जन्माऽयोगादसतश्च कर्तृत्वाऽसंभवात्पक्षान्तराऽभावाच्च कथमङ्कुरो जायत इति प्रयोगः । नैष दोषः । बुद्धिव्यवस्थापितस्याऽर्थस्य क्रियायां कारकरूपोपगमात् ॥३०॥

भुवः प्र । सन्ततत्वादिति । सादृश्यनिबन्धनतत्त्वाध्यवसायादविच्छेदेन तासामुपलम्भादित्यर्थः । अथवेति । वस्तुतोऽत्र भेद एवाऽपामिति भावः ॥३१॥

उ०- जनिकर्तुः । ननूपादानकारणे समवेततयोत्पद्यमानस्य कथं ततोऽपक्रम इत्यत आह— लोकेति । यथा वृक्षजन्ये फले वृक्षादपक्रान्तत्वव्यवहारः । तन्त्राश्रयाः—शास्त्राश्रयाः । तर्काश्रया इति पाठेऽपि स एवार्थः । तत्रास्तीति । जन्मोत्तरमिति भावः । द्रव्यान्तरारम्भेति । खण्डपटादिरीत्येत्यर्थः । परिणामेति । साङ्ख्यमते प्रतिक्षणपरिणामित्वात्पदार्थानां गोरोमादेस्तत्तदवस्थदूर्वारूपेण परिणाम इति भावः । जन्माऽयोगादिति । वैफल्यादिति भावः । कर्तृत्वाऽसम्भवादिति । किं चैवं शशविषाणादेरप्युत्पत्तिप्रसङ्गः । किं चैतन्मते कलिकावस्थायामसत एव गन्धस्य विकासावस्थायामुत्पत्तिर्वाच्या । एवं च सर्वपुष्पेषु विकासमात्रेण गन्धोत्पत्त्यापत्तिः । एवं बाल्येऽविद्यमानस्य शुक्रशोणितादेर्यौवने उत्पत्तौ तृतीयप्रकृतावपि तदुत्पत्तिप्रसङ्ग इति बोध्यम् । उत्तरम्—बुद्धीति । कारकरूपं,—कारकत्वम् ॥३०॥

भुवः प्र । भेद एवाऽपामिति । सादृश्यमूलकोऽपि नाऽभेदाध्यवसाय इति भावः ॥३१॥

## कर्मणा यमभिप्रैति[1] स सम्प्रदानम् ॥ १ । ४ । ३२ ॥

कर्मग्रहणं किमर्थम् ? 'यमभिप्रैति स सम्प्रदान'मितीयत्युच्यमाने कर्मण एव सम्प्रदानसंज्ञा प्रसज्येत । कर्मग्रहणे पुनः क्रियमाणे न दोषो भवति । कर्म निमित्तत्वेनाश्रीयते ।

अथ 'यंस'ग्रहणं किमर्थम् ? 'कर्मणाऽभिप्रैति सम्प्रदान'मितीयत्युच्यमाने

प्र०- कर्मणा यम । कर्मग्रहणमिति । 'उपाध्यायाय गां ददाती'त्यत्र गोरुपाध्यायस्याप्यभिप्रेयमाणत्वम् । यतो गोर्दानक्रियया करणभूतयाऽभिप्रेयतं, गवा तूपाध्यायः । तत्र परत्वाद्गोः कर्मसंज्ञेति पारिशेष्यादुपाध्यायस्यैव संप्रदानसंज्ञा भविष्यतीति प्रश्नः । कर्मण एवेति । सत्यप्युभयसंभवेऽन्तरङ्गत्वात्कर्मण एव गवादेः स्यादित्यर्थः । नन्वेवं कर्मसंज्ञाऽनवकाशा स्यात् । वचनसामर्थ्यात्तर्हि पर्यायः स्यात् । कारकप्रकरणे च प्रकर्षयोगो नाश्रीयते, न त्वन्तरङ्गबहिरङ्गव्यवहारः । ननु पर्याये सति 'गत्यर्थकर्मणी'त्यारम्भोऽनर्थकः स्यात् । तस्य प्रत्याख्यातत्वादित्यदोषः । अथेति । अध्याहारेणाऽपि सर्वनामद्वयार्थो लभ्यत इति प्रश्नः । अभिप्रयत एवेति । श्रुतपदार्थसंबन्धेनैव निराकाङ्क्षत्वेऽध्याहारानुपपत्तिरिति भावः । कर्तृसंज्ञायास्त्वकर्मको धातुरवकाशः स्यात् । ततश्चोपाध्याय शिष्येण गौर्दीयते इत्यत्रार्थं शिष्यायोपाध्यायस्य गौर्दीयत इति स्यात् । ननु शिष्यस्य कर्तृत्वाऽभावे कथं गोः कमसंज्ञा ? नैष दोषः । कर्मसंज्ञायां स्वातन्त्र्यस्य कर्तृग्रहणेनापलक्षणात् । तथा च 'सार्थाद्धीयत' इत्यत्र कर्मणि

उ०- कर्मणा यम । नन्वसत्यस्मिन् कर्मण्यपि स्यादित्यत आह—उपाध्यायायेति । करणभूतयेति-स्वरूपकथनम् । अन्तरङ्गत्वादिति । दानक्रियाभिप्रेतगवोपाध्यायोऽभिप्रेत इति तस्य क्रियासंबन्धो बहिरङ्ग इति भावः । नन्वेवमिति । 'दा'योग एव सम्प्रदानत्वांमत्यस्याऽनाश्रयणादिति भावः । प्रकर्षयोगः,—सामर्थ्यगम्यप्रकर्षयोगः । प्रत्याख्यातत्वादिति । सिद्धान्तेऽप्यस्याऽनुवादत्वेनेदानीमपि तत्त्वमेवेति भावः । अत्र 'कर्मणे'ति निर्दिष्टस्य शेषत्वं, 'य'मिति निर्दिष्टयोर्हेयत्वलक्षणं शेषित्वं प्रतीयते इत्यजां ग्रामं नयतीत्यादौ ग्रामस्य न संप्रदानत्वमिति बोध्यम् । यदा तु ग्रामोऽजासंयुक्तो भवत्वित्युद्देशेनाऽजानयनं तदा भवत्येवाऽजां ग्रामाय नयतीति । ननु संज्ञिनिर्देशार्थं तदावश्यकमत आह—अध्याहारेणापीति ।

श्रुतेति । तिङ्श्रुत्योपस्थापितेत्यर्थः । एवं च यः स इत्येव लभ्येतेति भावः । सार्थादिति । प्रधानधात्वर्थव्यापाराश्रयत्वेऽपि 'अपादाने चाऽहीयरुहो'रितिसूत्रेण कर्मप्रत्ययान्तहीधातुयोगेऽपादानत्वज्ञापनात्पञ्चमी, सार्थेन त्यज्यते इत्यर्थकोयं प्रयोगः ।

१—"अत्राभिप्रैतीति पदत्रयम् । न तु समासः । 'उदात्तवता गतिमता च तिङा गतेः समासो वक्तव्यः' इति वार्तिकस्य छन्दोविषयत्वादिति हरदत्तः" इति शब्दकौस्तुभतत्त्वबोधिनीकारादयः ।

अभिप्रयत एव सम्प्रदानसंज्ञा प्रसज्येत । 'यंस'ग्रहणे पुनः क्रियमाणे न दोषो भवति । 'यंस'ग्रहणादभिप्रयतः सम्प्रदानसंज्ञा निर्भज्यते ।

अथाऽभिप्रग्रहणं किमर्थम् ? 'कर्मणा यमेति स सम्प्रदान'मितीयत्युच्यमाने यमेव सम्प्रत्येति तत्रैव स्यात्—'उपाध्यायाय गां ददाती'ति । इह न स्यात्—'उपाध्यायाय गामदात् । उपाध्यायाय गां दास्यती'ति । 'अभिप्र'ग्रहणे पुनः क्रियमाणे न दोषो भवति । अभिराभिमुख्ये वर्तते, 'प्र'शब्द आदिकर्मणि । तेन यं चाभिप्रैति, यं चाऽभिप्रैष्यति, यं चाभिप्रागादाभिमुख्यमात्रे सर्वत्र सिद्धं भवति[1] ।

क्रियाग्रहणमपि कर्तव्यम् । इहापि यथा स्यात्—श्राद्धाय निगर्हते । युद्धाय सन्नह्यते । पत्ये शेत इति ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । कथम् ?

प्र०—लकारोत्पत्तिः । निर्भज्यत इति । आक्रुष्यत इत्यर्थः । अथेति । कर्मणा यमेति गच्छति प्राप्नोति संबध्नातीत्यर्थः । 'अभिप्रैती'त्युक्ते स एवार्थ इति प्रश्नः । आभिमुख्यमात्र इति । उपसर्गद्वयोपादानसामर्थ्यात् कालानवच्छिन्ना क्रियाश्रीयत इत्यर्थः । ननु यथा 'तेन दीव्यती'त्यादौ सङ्ख्याकालयोर्न विवक्षा तथेहापि सङ्ख्यावत्कालस्याऽविवक्षा भविष्यतीति किमुपसर्गद्वयोपादानेन । एवं तर्हि न्यायसिद्ध एवार्थ उपसर्गद्वयोपादानेन प्रदर्श्यत इति भाष्यकारस्याऽभिप्रायः । श्राद्धायेति । श्राद्धं निन्दति, नास्तिकत्वादित्यर्थः । युद्धायेति । युद्धविषयं संनहनपूर्वकं निश्चयं करोतीत्यर्थः । पत्ये शेत इति ।

उ०—आक्रुष्यत इति । निराक्रियत इत्यर्थः । भाष्ये—यं संप्रत्येतीति । संनिहितसंप्रदानस्थले दानस्य तत्काले विप्रसन्तोषरूपदृष्टफलेनापि फलवत्त्वात्तत्रैव स्यात्, असंनिहितसंप्रदानस्थले 'विप्राय ददाती'ति न स्यादिति भावः । 'उपाध्यायाये'त्यत्र 'संनिहिताये'ति शेषः । अग्रे 'विप्रकृष्टाये'ति शेषः । आभिमुख्यमात्रे इति । कर्मणा करणभूतेन क्रियारम्भे यमुद्दिशतीत्यर्थः । स चोद्देशः सर्वत्राऽस्तीति भावः । सङ्ख्यावदिति । अन्यथा 'विप्रेभ्यो गां ददाती'ति न स्यादिति भावः । न्यायसिद्ध एवेति । अयमभ्युपगमवादः । निन्दतीति । 'गर्ह कुत्साया'मिति स्मृतेः । निश्चयं करोतीति । उद्देश्यत्वप्रदर्शनायेदम् । एवमुत्तरत्रोपसत्त्येत्यपि । 'उपाश्रित्ये'ति पाठान्तरम् । भाष्ये—क्रियां हीति । एवं च बहुलक्ष्यसंस्कारानुरोधेन कर्मशब्देनोभयं गृह्यते ।

---

1—'अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् । प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम् ॥'

इति वाक्यपदीयात् सम्प्रदानमनिराकर्तृप्रेरकानुमन्तृभेदात् त्रिविधमिति शब्दकौस्तुभादिषु प्रतिपादितम् ।

क्रियां हि लोके कर्मेत्युपचरन्ति—'कां क्रियां करिष्यसि'। किं कर्म करिष्यसीति। एवमपि कर्तव्यम्। कृत्रिमाऽकृत्रिमयोः कृत्रिमे सम्प्रत्ययो भवति॥ क्रियाऽपि कृत्रिमं कर्म। न सिध्यति। 'कर्तुरीप्सिततमं कर्म' [१. ४. ४९] इत्युच्यते, कथं च नाम क्रियया क्रियेप्सिततमा स्यात्? क्रियापि क्रिययेप्सिततमा भवति। कया क्रियया? सन्दर्शनक्रियया वा, प्रार्थयतिक्रियया वा, अध्यवस्यतिक्रियया वा। इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुद्ध्या तावत्कंचिदर्थं संपश्यति, संदृष्टे प्रार्थना, प्रार्थनायामध्यवसायः, अध्यवसाय आरम्भः, आरम्भे निर्वृत्तिः, निर्वृत्तौ फलाऽवाप्तिः। एवं क्रियाऽपि कृत्रिमं कर्म।

एवमपि—कर्मणः करणसंज्ञा वक्तव्या, सम्प्रदानस्य च कर्मसंज्ञा। पशुना रुद्रं यजते। पशुं रुद्राय ददातीत्यर्थः। अग्नौ किल पशुः प्रक्षिप्यते तद्रुद्रायो-

प्र०—पतिमुपसृत्य शेते इत्यर्थः। न सिध्यतीति। क्रियान्तराऽनुपादानादिति भावः। कथं च नामेति। क्रियान्तरानुपादाने एकस्या एव क्रियायाः कर्मकरणभाव एकदा एकात्मन्येव नोपपद्यत इति भावः। क्रियापीति। प्रतीयमानक्रियापेक्षः कारकभावः 'प्रविश पिण्डी'मित्यादाविवाऽत्रेत्यर्थः। यदा तु सन्दर्शनादयो धात्वर्थाद्भेदेन विवक्ष्यन्ते तदा संप्रदानसंज्ञा, अन्यदा तु कर्मसंज्ञैव। यथा 'कटं करोती'ति। सा च भेदाऽभेदविवक्षा प्रयोगदर्शनवशेन नियतविषयैवाश्रीयत इति प्रयोगस्याऽसङ्करः। कर्मणः करणसंज्ञेति। एतच्छन्दोविषयम्। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति यथाप्राप्तमपि प्रयोगो भवति। पशुना रुद्रं यजत इति। रुद्रं देवतामुद्दिश्य पशुं त्यज-

उ०— भाष्ये—न सिध्यतीति। कृत्रिमकर्मत्वं क्रियाया न सिध्यतीत्यर्थः। ननु 'पश्य धावती'त्यादौ क्रियाया अपि तत्त्वदर्शनादाह—क्रियान्तरेति। भिन्नकाले भिन्नरूपेण च कर्तृकर्मताया एकस्मिन्नपि दर्शनादाह—एकदा एकात्मन्येवेति। अत्रत्यं भाष्यं 'कर्तरि कर्मे'त्यत्र व्याख्यातम्। ननु सन्दर्शनादीनां सर्वत्र भावात्सर्वत्र संप्रदानत्वं स्यादत आह—यदा त्विति। एवं च 'पत्ये शेते' इत्यादेर्दर्शनादिपूर्वकारम्भकर्मपत्युद्देश्यकं शयनं करोतीत्यर्थः। भेदेनेति। तत्तद्रूपेण बोधविषयतया विवक्ष्यन्त इत्यर्थः। यथा कटं करोतीति। तत्र हि कटकर्मकक्रियेत्येव बोधो न तु तस्याः क्रियाया विद्यमानमपि संदर्शनादिपूर्वकारम्भकर्मत्वं तत्तद्रूपेण बोधविषय इति भावः। 'पशुं रुद्राय ददाती'ति भाष्यप्रयोगानुपपत्तेराह—एतच्छन्द इति। ननु पूजायां पशोः करणत्वाद्रुद्रस्य च कर्मत्वात्किमुपसङ्ख्यानेनेत्यत आह—त्यजतीत्यर्थ इति। अत्रार्थे त्वदुक्तं न सम्भवतीत्यर्थः। त्यजतीत्यस्य 'अग्ना'विति शेषः। तदुक्तं भाष्ये—अग्नौ किल पशुः प्रक्षिप्यते इति। नन्वेवं 'रुद्राय ददाती'त्युक्तमनुपपन्नमत आह—यद्रुद्रायोपह्रियते इति। तत्—तेन प्रक्षेपेण, रुद्राय—रुद्रमुद्दिश्य, उपह्रियते—ददातीति व्यवहार इत्यर्थः। अग्नौ दग्धे स्वत्वानुत्पत्त्या तदुद्देश्यकत्यागे ददाति-

पद्यियत इति ॥३२॥

## क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः ॥ १ । ४ । ३७ ॥

किमेत एकार्थाः, आहोस्विन्नानानार्थाः ? किं चातः ? यद्येकार्थाः किमर्थं पृथङ्निर्दिश्यन्ते ? अथ नानार्थाः, कथं कुपिना शक्यन्ते विशेषयितुम् ?

एवं तर्हि नानार्थाः, कुपौ त्वेषां सामान्यमस्ति । न ह्यकुपितः क्रुध्यति,

---

प्र०-तीत्यर्थः कैश्चिद[1]न्वर्थसंज्ञाविज्ञानाद्ददातिविषय एव संप्रदानसंज्ञेत्यभ्युपगतम् । दानं च स्वत्वनिवृत्तिः परस्वत्वापत्तिपर्यन्तेति प्रत्यज्ञायि । तदुभयमप्ययुक्तम् । अन्यत्रापि भाष्यकारेण संज्ञाया अभ्युपगमात् । तथा च क्रियाग्रहणस्य, 'गत्यर्थकर्मणी'ति सूत्रस्य च प्रत्याख्यानं कृतम् । तथा स्वत्वनिवृत्त्यभावेऽपि ददातेः प्रयोगो दृश्यते—'न शूद्राय मतिं दद्या'दिति । 'खण्डिकोपाध्यायस्तस्मै चपेटां ददाती'ति च ॥३२॥

क्रुधद्रु । किमेत इति । ननु लोकव्यवहारादेवार्थाऽवगमात्सन्देहानुपपत्तिः । एवं तर्हि चित्तदोषरूपता सर्वेषामस्तीति सामान्यापेक्षायामेकार्थत्वम्, अवान्तरभेदविवक्षायां तु भिन्नार्थत्वमित्यदोषः । किमर्थमिति । एकेनैव धातुनाऽर्थस्योपलक्षितत्वादन्येषां वैयर्थ्यप्रसङ्गः । नानार्था इति । क्रोधो—रोषः । द्रोहोऽभिचारः । ईर्ष्या—परगुणाऽसहनम् । असूया—परगुणविध्वंसनम् । कुपाविति । कुपौ धातौ वाच्यत्वेन यदवस्थितं तदेषां साधारणमित्यर्थः । कोपपूर्वाणां सर्वेषां ग्रहणार्थं 'यं प्रति कोप' इति विशेषणमित्यर्थः । तेनेह न भवति—भार्यामीर्ष्यतीति । परैर्दृश्यमानां न सहत इत्ययमत्रार्थ इति नास्ति कोपप्रभवत्वमत्रेर्ष्यायाः । न ह्यकुपितः क्रुध्यतीति । ननु

---

उ०-भाक्त इति भावः । अन्वर्थेति । सम्यक् प्रदीयतेऽस्मै इतीत्यर्थः । नन्वेवमपि 'रजकस्य वस्त्रं ददाती'त्यत्रापि स्यादत आह—दानं चेति । तत्र ददातिप्रयोगस्तूपमानात्, कारकशेषत्वात् षष्ठीति भावः । अन्यत्रापीति । 'पत्ये शेते' इत्यादावपीत्यर्थः । पूर्वोक्तप्रयोगे तु शेषत्वविवक्षायां षष्ठी । 'न शूद्राये'त्यस्य मतिं—तज्जनकशास्त्रं नोपदिशेदित्यर्थः । द्वितीये ददातिः संयोगे लाक्षणिक इति बोध्यम् ॥३२॥

क्रुधद्रुहेर्ष्या । ननु तेषां सर्वेषां योगे यथा स्यादित्येतदर्थं तदत आह—एकेनैवेति । सूत्रेऽर्थग्रहणसत्त्वादिति भावः । अभिचार इति । दुःखजनको व्यापार इत्यर्थः । परगुणाऽसहनम्—एतत्स्वस्य तदाधिकगुणसंपादनफलकम् । गुणविध्वंसनं—गुणेषु दोषत्वाऽऽविष्करणम् । नन्विदमयुक्तं, न हि रोषादीनां सामान्यं कुपिधातावस्तीत्यत आह—कुपौ

---

१—काशिकान्यासपदमञ्जरीप्रभृतिष्वन्वर्थसंज्ञा स्वीकृता सा तु भाष्यानुयायिभिर्नादृता ।

"यत्तु वृत्तिकारः—सम्यक् प्रदीयते यस्मै तत् सम्प्रदानमित्यन्वर्थसंज्ञेयम् । तथा च गोनिष्ठस्वस्वत्वनिवृत्तिसमानाधिकरणपरस्वत्वोत्पत्त्यनुकूलव्यापाररूपक्रियोद्देश्यस्य ब्राह्मणादेरेव सम्प्रदानत्वम् । पुनर्ग्रहणाय रजकस्य वस्त्रदाने 'रजकस्य वस्त्रं ददाती'ति सम्बन्धसामान्ये षष्ठ्येवेत्याहुः, तन्न; 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाती'ति भाष्यविरोधात् । 'कर्मणा यमभिप्रैति' इति सूत्र-

न वाऽकुपितो द्रुह्यति, न वाऽकुपित ईर्ष्यति, न वाऽकुपितोऽसूयति ॥३७॥

## साधकतमं करणम् ॥ १ । ४ । ४२ ॥

'तम'ग्रहणं किमर्थं न 'साधकं करण'मित्येवोच्येत ? 'साधकं करण'-मितीयत्युच्यमाने सर्वेषामेव कारकाणां करणसंज्ञा प्रसज्येत । सर्वाणि हि कारकाणि साधकानि । तमग्रहणे पुनः क्रियमाणे न दोषो भवति ।

नैतदस्ति प्रयोजनम् । पूर्वास्तावत्संज्ञा अपवादत्वाद्बाधिका भविष्यन्ति, पराः परत्वादनवकाशत्वाच्च ।

---

प्र०–कोपः क्रोध एवेति भेदाऽभावात्कथं पौर्वापर्यम् । एवं तर्हि प्रथमामनुद्भूतां कोपावस्थां द्वितीयां चोद्भूतां विकृतवाक्कायव्यापारानुमीयमानामाश्रित्यैतदुक्तमित्यदोषः । न वाऽकुपितो द्रुह्यतीति । यत्र विषये संप्रदानसंज्ञेष्यते तदुद्देशेनैतदुच्यते, न तु सर्वविषयाऽपेक्षया । अन्यथा व्यभिचाराऽभावाद्यं प्रति कोप इति विशेषणमनुपादेयं स्यात् । 'भार्यामीर्ष्यती'ति विनापि कोपात्प्रयोगदर्शनाच्च । 'अस्मान्द्वेष्टी'त्यत्र संप्रदानसंज्ञा न भवति, द्विषेरक्रोधार्थत्वात् । अनभिनन्दने हि द्विषिर्वर्तते, यथौषधं द्वेष्टीति ॥३७॥

साधकतमं । तमग्रहणमिति । कारकाधिकारात्साधकत्वे लब्धे पुनः साधकश्रुतिः प्रकर्षमवगमयतीति प्रश्नः । सर्वेषामेवेति । प्रकर्षगतिरुत्तरत्र प्रतिपादयिष्यते । तत्र वचनसामर्थ्यादेकसंज्ञाधिकाराच्च करणसंज्ञायाः संज्ञान्तराणां च विकल्पः स्यात् । नन्वसति विशेषाश्रयणे करणकारकसंज्ञाद्वयोपादानमनर्थकं स्यात् । तर्हि संज्ञाद्वयविधानसामर्थ्यात्करणसंज्ञा कंचिदेव विषयं परिहरतीति लभ्यते । न त्वनिष्टविषयपरिहारेणेष्ट एव विषये तस्याः प्रवृत्तिर्लभ्या । परत्वादनवकाशत्वाच्चेति ।

---

उ०–धाताविति । अनभिनन्दनं—प्रीत्यभावः ॥३७॥

साधकतमं । अत्र कारकाधिकारात्क्रियानिरूपतातिशयितकारकत्ववत्करणमित्यर्थः । अतिशयश्च यद्व्यापारानन्तरमव्यवधानेन फलोत्पत्तिस्तत्त्वम् । ननु पूर्वोक्तातिशयबोधकतया तस्सार्थकमत आह—कारकाधिकारादिति । ननु सर्वेषां करणत्वे संज्ञान्तराणां का गतिरत आह—तत्रेति । संज्ञाद्वयेति । कारकसंज्ञैव कार्या, अन्वर्थसंज्ञया च स्वानुरूपः संज्ञ्याक्षेप्तव्यः 'कारके तृतीये'त्येव कार्यमिति भावः । ननु सावकाशत्वे एव परत्वस्य व्यवस्थापकत्वादेक-

---

व्याख्यावसरे भाष्यकृताऽन्वर्थसंज्ञाया अस्वीकाराच्च ।····तस्माद्'रजकाय वस्त्रं ददाती'त्यादि भवत्येव ।" इति परमलघुमञ्जूषायां नागेशभट्टः ।

"रजकाय वस्त्रं ददातीत्यपि 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाती'ति भाष्योदाहरणादिष्टमेव ।" इति वैयाकरणभूषणसारे कौण्डभट्टः । शब्दकौस्तुभतत्त्वबोधिन्यादिष्वपीदमेव प्रतिपादितम् ।

इह तर्हि 'धनुषा विध्यति' अपाययुक्तत्वाच्चाऽपादानसंज्ञा†, साधकत्वाच्च करणसंज्ञा प्राप्नोति । तमग्रहणे पुनः क्रियमाणे न दोषो भवति ।

एवं तर्हि लोकत एतत्सिद्धम् । तद्यथा,—लोके 'अभिरूपायोदकमानेयम्' 'अभिरूपाय कन्या देये'ति, न चानभिरूपे प्रवृत्तिरस्ति, तत्र 'अभिरूपतमाये'ति गम्यते । एवमिहाऽपि 'साधके करण'मित्युच्यते, सर्वाणि च कारकाणि साधकानि, न चाऽसाधके प्रवृत्तिरस्ति, तत्र 'साधकतम'मिति विज्ञास्यते ।

एवं तर्हि सिद्धे सति यत्तमग्रहणं करोति तज्ज्ञापयत्याचार्यः—'कारकसंज्ञायां तरतमयोगो न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? अपादानमाचार्यः किं न्याय्यं मन्यते, यत्र संप्राप्य निवृत्तिः । तेनेहैव स्यात्—'ग्रामादागच्छति', 'नगरादागच्छती'ति । 'साङ्काश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा' इत्यत्र न स्यात् । 'कारकसंज्ञायां तरतमयोगो न भवती'त्यत्रापि सिद्धं भवति ।

प्र०—विषयभेदाऽपेक्षो हेतुद्वयोपन्यासः । सावकाशत्वे सति परत्वं हेतुः, अन्यत्र निरवकाशत्वम् । इह तर्हीति । अत्र संज्ञाद्वयप्रसङ्गे निरवकाशत्वादपादानसंज्ञैव स्यात् । करणसंज्ञा ह्यपादानादन्यत्र सावकाशा । तमग्रहणे तु सति विविक्तविषयलाभादुभयोर्धनुषा विध्यतीत्यत्र परत्वात्करणसंज्ञा सिध्यतीति । उदकमानेयमिति । कन्यादानार्थम् । न चाऽनभिरूप इति । दृष्टाऽदृष्टप्रयोजनत्वात्कन्यादानस्येति भावः । तरतमयोगो नास्तीति । कथं पुनः केवलयोः प्रत्यययोः प्रयोगः । नैष दोषः । प्रत्ययानुकरणत्वात् । तत्राऽनुकरणाभ्यामनुकार्यौ प्रत्ययौ प्रतीयेते, ताभ्यामपि साहचर्यात्तदर्थः प्रकर्षो लक्ष्यते । तत्र तमश्रुतिरेतज्ज्ञापयति 'प्रकर्षप्रत्ययग्रहणमन्तरेणेह प्रकरणे सामर्थ्यगम्यः प्रकर्षो नाश्रीयते' । सांकाश्यकेभ्य इति । बुद्धिकल्पितोऽत्राऽपायो न

उ०—विषये द्वयोः परत्वाऽनवकाशत्वयोरसम्भवादाह—विषयभेदेति । 'सावकाशत्वे' इत्युक्तिरभ्युपगम्यवादेन, न हि तमाऽभावे करणत्वविनिर्मुक्तः संज्ञान्तरविषयोऽस्ति । वस्तुतो भाष्ये—'परत्वाच्चे'त्यस्योत्कृष्टत्वाच्चेत्यर्थकस्य व्याख्या—अनवकाशत्वाच्चेति । ननु संज्ञाद्वयप्रसङ्गे परत्वात्करणत्वं सिध्यतीत्यत आह—अत्रेति । अपादानादन्यत्रेति । 'काष्ठैः पचती'त्यादौ उदकादानेऽभिरूपस्याऽनियामकत्वादाह—कन्यादानार्थमिति । दृष्टं—कन्यासुखसन्तानादि । अदृष्टं—परलोकः । न चाऽसाधके इति । 'संज्ञाया' इति शेषः । लक्ष्यते इति । अत एव ततः स्वार्थे ष्यञि'तारतम्य'मित्यतिशये सिध्यति । तरतमेत्यतिशयार्थमव्ययमित्यन्ये । एवमेवातिशयार्थकं 'तरा'मित्यप्यव्ययं बोध्यम् । उच्चारितस्यैव प्रत्यायकत्वात्प्रतीतानुकार्येणातिशयप्रतीतिरिति चिन्त्यम् । नन्वत्र प्रकरणे तरतमयोगाऽभावे ईप्सितमात्रस्य कर्मत्वं प्राप्नोतीत्यत आह—तत्र तमेति । बुद्धिकल्पित इति । 'अपादान'मिति महासंज्ञयैवाऽपाये

† ध्रुवमपायेऽपादानम् १. ४. २४.

तथाऽऽधारमाचार्यः किं न्याय्यं मन्यते, यत्र कृत्स्न आधारात्मा व्याप्तो भवति। तेनेहैव स्यात्—'तिलेषु तैलम्' 'दध्नि सर्पि'रिति। 'गङ्गायां गावः', 'कूपे गर्गकुल'मित्यत्र न स्यात्। 'कारकसंज्ञायां तरतमयोगो न भवती'त्यत्रापि सिद्धं भवति ॥४२॥

## उपान्वध्याङ्वसः ॥ १ । ४ । ४८ ॥

### वसेरश्यर्थस्य प्रतिषेधः ॥ १ ॥

वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः। ग्राम उपवसतीति ॥ स तर्हि वक्तव्यः ?

प०–तु मुख्यः। यत्र कृत्स्न इति। सर्वैरवयवैः सह यत्रावयवी व्याप्त इत्यर्थः। गङ्गायामिति। गोभिर्गङ्गाया व्याप्त्यभावान्न स्यादधिकरणसंज्ञा। अस्माज्ज्ञापकात् सामीप्यमात्राश्रयेण प्रकल्पिताधारनिबन्धना सा भवति। अथ सामग्रीसाध्यायां क्रियायां कोऽतिशयः। करणस्येति चेत्। तद्व्यापारानन्तरं क्रियाप्रसिद्धिः। यस्य च यदाऽतिशयविवक्षा तदा तस्य करणत्वं, यथा 'स्थाल्या पच्यत' इति। कारकान्तरापेक्षश्च करणस्यातिशयो न तु स्वकक्षायामित्यश्वेन पथा दीपिकया व्रजतीति सर्वेषां क्रियानिष्पत्तौ संनिपत्योपकारकत्वात्करणत्वं सिद्धम् ॥४२॥

उपान्व। वसेरश्यर्थस्येति। अर्थशब्दो निवृत्तिवाची। व्यधिकरणे षष्ठ्यौ। अश्यर्थस्य वाचको यो वसिस्तस्येत्यर्थः। अथवा शीङोऽर्थः श्यर्थः, न श्यर्थोऽश्यर्थः, तस्य। अस्थानार्थस्येत्यर्थः। स्थाने हि शीङ् वर्तते। यथा 'जलाशय' इति। तेन 'ग्रामे

उ०–ध्रुवे लब्धे पुनस्तद्ग्रहणसामर्थ्यात्प्रकर्षविवक्षायामत्र न स्यादिति भावः। सामीप्यमात्राश्रयेणेति। तेनाऽपीत्यर्थः। अपिनैकदेशवृत्तिताश्रयेणेत्यस्य संग्रहः। प्रकल्पितेति। संपूर्णप्रवाहे एकदेशधर्मस्य तीरधर्मस्य वाऽऽधारत्वस्योपचार इति भावः। तादृशमाधारत्वमपि सप्तम्याः शक्यमेवेति बोध्यम्। स्थाल्या पच्यते इति। प्रतनुतरकपालतयाऽत्रातिशयविवक्षा बोध्या। 'अश्वेन पथे'त्यादिष्वपि प्रत्यासन्नस्य कस्यचिदेव करणत्वं स्यादिति भावः। संनिपत्येति। [1]खलेकपोतन्यायेन सर्वेषां साक्षादुपकारकत्वविवक्षणादित्यर्थः ॥४२॥

उपान्वध्या। ननूपपूर्वो वसिरभात्यर्थेऽप्रसिद्ध इत्यत आह—अर्थशब्द इति। अशिश्च तदर्थपर इत्यपि बोध्यम्। अश्यर्थनिवृत्तिवाचकस्य वसेरित्यक्षरार्थः। व्यधिकरणे इति। उक्तेऽर्थे सामानाधिकरण्याऽसम्भवादिति भावः। अश्यर्थस्येति। अशिनिवृत्तेरित्यर्थः। सामानाधिकरण्यायाऽऽह—अथवेति। अनयोराद्यव्याख्यैव युक्ता, भाष्यस्वारस्यात्। न: क:

१–वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत्पतन्ति।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ॥ इति खलेकपोतन्यायः ॥

न वक्तव्यः । नाऽत्रोपपूर्वस्य वसेर्ग्रामोऽधिकरणम् । कस्य तर्हि ? अनुपसर्गस्य । ग्रामेऽसौ वसंस्त्रिरात्रमुपवसतीति ॥४८॥

## कर्तुरीप्सिततमं कर्म ॥ १ । ४ । ४९ ॥

तमग्रहणं किमर्थम् ? 'कर्तुरीप्सितं कर्मे'तीयत्युच्यमान इहा'ऽग्नेर्माणवकं वारयती'ति माणवकेऽपादानसंज्ञा प्रसज्येत† । नैष दोषः । कर्मसंज्ञाऽत्र बाधिका भविष्यति । अग्नावपि तर्हि बाधिका स्यात् । इह पुनस्तमग्रहणे क्रियमाणे तदुपपन्नं भवति यदुक्तं 'वारणार्थेषु कर्मग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचना'दिति‡ ।

प्र०–तिष्ठती'त्यत्राऽर्थे ग्राममुपवसतीति प्रयोगः । अस्थानार्थत्वे तु ग्राम उपवसतीति । नात्रेति । विशिष्टाधारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्तिविशिष्टकालां प्रत्याययितुमिदं प्रयुज्यते 'ग्राम उपवसती'ति । तत्राऽन्तरङ्गत्वात्प्रतीयमानवसिक्रियापेक्षो ग्रामस्याऽधिकरणभावः । उपवसनं तु स्वरूपेणैव कालमपेक्षत इति कालेनैवास्याऽन्तरङ्गः संबन्धः । ग्रामादिना तु बहिरङ्गः इत्यर्थः ॥४८॥

कर्तुरीप्सित । तमग्रहणमिति । असत्यपि तमग्रहणे'ग्रामं गच्छती'त्यादौ कर्मसंज्ञा सिध्यति, ईप्सिततमस्यापीप्सितत्वसद्भावादिति प्रश्नः । माणवक इति । विशेषविहितत्वादपादानसंज्ञायाः । कर्मसंज्ञेति । परत्वात् । अग्नावपीति । अग्निमाणवकयोरीप्सितत्वसद्भावात् । कर्मापादानसंज्ञाविषयविभागाऽज्ञानपरमेतत्, न तु निरवकाशाऽपादानसंज्ञा सावकाशया कर्मसंज्ञया बाधितुं शक्यते । तमग्रहणे तु सति संज्ञयोर्विषयविभागलाभः ।

उ०–तदधिकरणं ग्रामोऽत आह—विशिष्टेति । अन्तरङ्गत्वादिति । ग्रामे वासाधिकरणत्वस्यैव प्रसिद्धत्वेन शीघ्रोपस्थितिकत्वरूपान्तरङ्गत्वादित्यर्थः । प्रतीयमानेति । एवमुपवासाधिकरणकालोऽपि प्रतीयमान एवेति बोध्यम् । ननु कालबोधकपदाऽभावात्कथं विशिष्टकालभुजिनिवृत्तिप्रतीतिरत आह—उपवसनं त्विति । एवकारेण नित्याकाङ्क्षा दर्शिता । तदुक्तं भाष्ये—त्रिरात्रमिति । आरम्भे त्वत्राऽपि द्वितीया न स्यादिति तात्पर्यम् । अन्तरङ्ग इति । आवश्यक इत्यर्थः । बहिरङ्ग इति । आकाङ्क्षाऽभावादनावश्यक इत्यर्थः । असम्बन्ध एवेति वक्तुं युक्तम् ॥४८॥

कर्तुरी । असत्यपीति । अभ्यासिर्नास्तीति भावः । विशेषेति । अनवकाशत्वादित्यर्थः । विषयविभागाऽज्ञानेति । अग्नावेव कर्मसंज्ञा, माणवके एवाऽपादानत्वमित्यपि स्यादिति भावः । तमग्रहणे त्विति । तद्यथा तथा'वारणार्थाना'मिति सूत्रे उपपादितम् ।

† वारणार्थानामीप्सितः १. ४. २७. ‡ १. ४. २७ वा० १.

इहोच्यते—'ओदनं पचती'ति, यद्योदनः पच्येत द्रव्यान्तरमभिनिर्वर्तेत। नैष दोषः। तादर्थ्यात्ताच्छब्द्यं भविष्यति—ओदनार्थास्तण्डुला ओदन इति।

अथेह कथं भवितव्यम्—'तण्डुलानोदनं पचती'ति, आहोस्वित्—'तण्डुलानामोदनं पचती'ति? उभयथाऽपि भवितव्यम्। कथम्? इह हि 'तण्डुलानोदनं पचती'ति द्व्यर्थः पचिः, तण्डुलान्पचन्नोदनं निर्वर्तयतीति।

इहेदानीं 'तण्डुलानामोदनं पचती'ति द्व्यर्थश्चैव पचिर्विकारयोगे च षष्ठी, तण्डुलविकारमोदनं निर्वर्तयतीति।

प्र०— इहेति—लोकः शास्त्रं च सामान्येन निर्दिश्यते। लोके प्रयुज्यमानत्वात्, शास्त्रे चोदाह्रियमाणत्वात्। द्रव्यान्तरमिति। ओदनशब्दस्य तण्डुलविकारविशेषवचनत्वात्पचेश्च विक्लित्त्युपसर्जनविक्लेदनवचनत्वान्निर्वृत्तस्यौदनस्य विक्लेदनान्तरकरणात्। ओदनार्था इति। गौणार्थाश्रयणेनैव सर्वलोकस्य प्रयोगदर्शनादिदमत्र न चोदनीयं—'मुख्यस्यैव त्वोदनस्य पुनर्विक्लित्तिकरणे कस्मादयं प्रयोगो न भवती'ति। विकारविशेषप्रतिपादनाय गौणार्थपरिग्रहः। 'तण्डुलान्पचती'त्युक्ते विकारान्तरमपि प्रतीयते। अथेहेति। उभयथा प्रयोगदर्शनात्। प्रकृतिविकृत्योः साक्षादुपादानात्तादर्थ्याताच्छब्द्यानुपपत्त्या, विक्लेदनवचने तु पचौ 'तण्डुलानामोदनं पचती'ति प्रयोगाऽयोगाद्द्रव्यान्तरनिर्वृत्तिप्रत्ययप्रसङ्गाच्च, निर्वर्तनवचने तु पचौ तण्डुलानां कर्मभावाऽघटनात्तण्डुलानोदनं पचतीति प्रयोगाऽभावप्रसङ्गाच्च प्रश्नः। द्व्यर्थः पचिरिति। विक्लेदनोपसर्जने निर्वर्तने पचिर्वर्तते। तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः। तत्रोपसर्जनविक्लेदनक्रियापेक्षं तण्डुलानां कर्मत्वम्। प्रधानभूतनिर्वर्तनापेक्षं त्वोदनस्य। द्व्यर्थश्चैवेति। तण्डुलानां संबन्धिनं विकारविशेषमोदनं विक्लित्त्या निर्वर्तयतीत्यर्थः। सा च विक्लित्तिः सामर्थ्यात्तण्डुलानामेवेति विज्ञायते।

उ०— ननु लोकेपि तथा व्यवहारादिहेत्ययुक्तमत आह—लोकः शास्त्रं चेति। नन्वोदनपाके कथं द्रव्यान्तरस्योत्पत्तिरत आह—ओदनशब्दस्येति। भाष्ये—यद्योदनः पच्येतेत्यस्यौदनकर्मकः पाको यदि बुद्ध्येतेत्यर्थः। 'द्रव्यान्तरमभिनिर्वर्तेते'त्यस्य च द्रव्यान्तराऽभिनिर्वृत्तिः प्रतीयेतेत्यर्थः। 'विक्लेदनान्तरकरणादिति। विक्लेदनान्तरप्रतीतिप्रसङ्गादित्यर्थः। ननु गौणार्थेन प्रयोगे किं फलमत आह—विकारेति। ओदनस्वरूपेत्यर्थः। विकारान्तरं—भर्जनादिरूपं, विक्लित्तिपदेन च पाकफलमात्रमुच्यते। ननूभयविधव्यवहारात्प्रयोगद्वयेऽपि भाव्यमेवेति 'केन प्रयोगेण भाव्य'मित्यर्थकप्रश्नाऽनुपपत्तिरत आह—प्रकृतीत्यादि। कर्मभावाऽघटनादिति। न हि तत्र तण्डुला निष्पाद्यन्ते इति भावः। ननु फलव्यापारावादाय सर्वस्यापि द्व्यर्थत्वं, नापि तावतोक्तप्रयोगोपपत्तिरत आह-विक्लेदनेति। निवर्तनरूपद्वितीयार्थमादाय द्व्यर्थत्वमिति भावः। विक्लित्त्या निर्वर्तयतीति। विक्लित्तिविशिष्टं निर्वर्तनं पचेरर्थः।

देवदत्तः । विज्ञापयति देवदत्तम् ॥ उपलभते देवदत्तः । उपलम्भयति देवदत्तम् ।

किं पुनः कारणं न सिध्यति ? 'अशब्दक्रियत्वात्' ।

अस्तु तर्हि—'शब्दो येषां कर्मे'ति ।

**शब्दकर्मण इति चेज्जल्पतिप्रभृतीनामुपसंख्यानम् ॥ ३ ॥**

शब्दकर्मण इति चेज्जल्पतिप्रभृतीनामुपसंख्यानं कर्तव्यम् । के पुनर्जल्पतिप्रभृतयः ? जल्पति विलपति आभाषते ॥ जल्पति देवदत्तः । जल्पयति देवदत्तम् ॥ विलपति देवदत्तः । विलापयति देवदत्तम् ॥ आभाषते देवदत्तः । आभाषयति देवदत्तम् ।

**दृशेः सर्वत्र ॥ ४ ॥**

दृशेः सर्वत्रोपसंख्यानं कर्तव्यम् । पश्यति [1]रूपतर्कः कार्षापणम् । दर्शयति

प्र०–शृणोत्यादयो हि न ज्ञानमात्रवचनाः । बुद्ध्यर्थावपि जानात्युपलभत इत्येतौ यद्यप्युपलब्धिमात्रवचनौ, तथापि प्रयोजकव्यापारविवक्षायां प्रकरणादिवशाद्यदा शब्दविषयामेवोपलब्धिं प्रत्याययतस्तदा साधनकर्मग्रहणे सिद्ध्यति, न तु क्रियाग्रहण इत्युपसंख्यानं कर्तव्यम् । एवं तु बुद्ध्यर्थत्वादनयोः सिद्ध्यतीति चिन्त्यमेतत् ।

जल्पतिप्रभृतीनामिति । जल्पत्यादयः शब्दक्रियायां वर्तन्त इति क्रियाग्रहणे सिद्ध्यति न तु साधनकर्मग्रहणे, 'पुत्रं जल्पती'त्यादौ शब्दकर्मत्वाऽभावात् ।

दृशेः सर्वत्रेति । यदि क्रियाग्रहणमथ साधनग्रहणमथोभयगत्याश्रयणं, सर्वत्र दृशेर्न प्राप्नोतीति भावः । पश्यति रूपतर्क इति । चक्षुःप्रणिधानद्वारक उपलम्भे यदा

उ०–प्रतिषेध' इति भाष्यसामञ्जस्येऽन्यादृशशब्दायतेरकर्मकत्वप्रयुक्तप्राप्तेर्निषेधे मानाऽभावेन चिन्त्योऽयं कैयट इति ।

न ज्ञानमात्रेति । ज्ञानसामान्यवचना एव बुद्ध्यर्थास्तत्र गृह्यन्ते, न तु तद्विशेषवचना इति भावः । शब्दविषयामेवेति । श्रोत्रेन्द्रियजज्ञानरूपामित्यर्थः । एवं च ज्ञानविशेषाऽर्थत्वेन न बुद्ध्यर्थत्वात्सिद्धिरिति भावः । बुद्ध्यर्थत्वादिति । ज्ञानसामान्यार्थत्वमाश्रित्य बुद्ध्यर्थत्वादपि सिध्यतीत्यभिमानः । चिन्त्यमेतदिति । चिन्ताबीजं तु—यदा जानात्यादीनां शब्दविषये श्रावणज्ञाने वृत्तिस्तदाऽप्यणौ कर्तुर्णौ कर्मत्वमिष्टम् । न च तदा बुद्ध्यर्थत्वेन सिद्धिः, ज्ञानसामान्यार्थत्वाऽभावात् । एवमेव दृशेरुपसंख्यानम् । अत एव यदा रूपादिविषयकचाक्षुषज्ञाने वृत्तिस्तदा न भवति । यथा 'विजानाति रूपतर्कः कार्षापणं, विज्ञापयति रूपतर्कणेति भाष्याशय इति ।

पुत्रं जल्पतीति । लाडनपूर्वके जल्पने जल्पेर्वृत्तेरिति भावः । एतेना'ऽकर्मकत्वात्सिद्धि'रित्यप्यपास्तम् । सर्वत्र दृशेरिति । ज्ञानसामान्यार्थकत्वाऽभावादिति भावः । ननु 'पश्यार्थै-

१–रूपतर्कः—रजतकार्षापणादिपरीक्षकः [ चान्दी का पारखी, चांदी के सिक्कों का परखने वाला जौहरी । कौटिलीयार्थशास्त्रे 'रूपदर्शक'शब्दोऽस्मिन्नर्थे दृश्यते । तद्यथा—'रूपदर्शकः पणयात्रां व्यावहारिकीं कोशप्रवेश्यां च स्थापयेत् ।' ( अधि० २, अ० १२ ) ।

रूपतर्कं कार्षापणम् ।

**अदिखादिनीवहीनां प्रतिषेधः ॥ ५ ॥**

अदिखादिनीवहीनां प्रतिषेधो वक्तव्यः ॥ अत्ति देवदत्तः । आदयते देवदत्तेन ॥ अपर आह—सर्वमेव प्रत्यवसानकार्यमदेर्न भवतीति वक्तव्यं, परस्मैपदमपि* । इदमेकमिष्यते—'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' [ ३. ४. ७६ ] । 'इदमेषां जग्धम्' ॥ खादि—खादति देवदत्तः । खादयति देवदत्तेन ॥ नी–नयति देवदत्तः । नाययति देवदत्तेन ।

**वहेरनियन्तृकर्तृकस्य ॥ ६ ॥**

वहेरनियन्तृकर्तृकस्येति वक्तव्यम् । वहति भारं देवदत्तः । वाहयति भारं देवदत्तेन ॥ अनियन्तृकर्तृकस्येति किमर्थम् ? वहन्ति यवान् बलीवर्दाः । [1]वाहयन्ति बलीवर्दान् यवान् ।

---

प्र०–दृशिर्वर्तते तदैतद्वक्तव्यम्, अन्यत्र तु बुद्ध्यर्थत्वात्सिद्ध्यति । तत्र साधनकर्मग्रहणमित्येष पक्ष आश्रीयते । क्रियाग्रहणे कर्मग्रहणानर्थक्यप्रसङ्गात् । 'गतिबुद्धिशब्दप्रत्यवसानार्थाऽकर्मकाणा'मित्येव सिद्धत्वात् । पुत्रादिकर्मत्वे जल्पतिप्रभृतीनामुपसङ्ख्यानं कर्तव्यमेव । श्लोकादिशब्दविशेषकर्मकत्वे तु शब्दकर्मत्वात्सिद्धिः । दृशेर्बुद्ध्यर्थत्वादेव ग्रहणं सिद्ध्यति ।

अदिखादीति । अदिखाद्योः प्रत्यवसानार्थत्वात्प्राप्तिः । नीवह्योर्गत्यर्थत्वात् । यद्यपि 'न गतिहिंसार्थेभ्य' इत्यत्र 'न वहिर्गत्यर्थ' इत्युक्तं भाष्ये, तथापि 'वहेरनियन्तृकर्तृकस्ये'त्यभिधानाय वहेरुपक्षेपः । परस्मैपदमिति । 'निगरणचलनार्थेभ्यश्चे'ति प्राप्तम् ।

वहेरिति । नियन्ता—सारथिः । भक्षेरिति । 'अणिकर्तें'ति हेतुमण्णिचो

---

उ०–आऽनालोचन' इति दर्शनाद् दृशेर्ज्ञानसामान्यार्थकत्वाद् बुद्ध्यर्थत्वेन सिद्धिरत आह–चक्षुरिति । दृशेरिति । 'ज्ञानसामान्यार्थत्वे' इति शेषः । चाक्षुषज्ञानार्थकाऽर्थं तु वचनमावश्यकमेवेति बोध्यम् । इदमेव ज्ञापयति 'ज्ञानसामान्यार्थकानां तत्र ग्रहण'मिति । इत्युक्तं भाष्ये इति । तच्च तत्रैव निरूपितम् । अत एव 'न वे'ति 'सूत्रे 'हृक्रो'रित्यस्योभयत्र विभाषात्वमुक्त्वा'ऽप्राप्ते हरति भारं देवदत्तो हारयति भारं देवदत्त'मिति प्रापणार्थे उदाहृतम् । विपूर्वो हरतिर्गत्यर्थं इति च कैयटः । एवं च वहेः प्रतिषेधो नाऽपूर्वः । तथापीति । एवं च नियन्तृकर्तृकवहेरुपसङ्ख्यानं कार्यमिति तात्पर्यम् । नयतेस्तु गत्युपसर्जनं प्रापणमर्थं इति गत्यर्थकत्वमस्त्येव । प्रापयतेस्तु शुद्धं प्रापणमेव वहिवदर्थं इति न स गत्यर्थं इति बोध्यम् । भाष्ये—इदमेकमिष्यते इति । एवं च 'सर्वमेवे'त्यसङ्गतं, परस्मैपदकर्मत्वयोः प्रतिषेधो वक्तव्य इत्यर्थः । सारथिरिति । पशुप्रेरक इत्यर्थः । अन्यथा रथप्रेरक एव सारथिशब्दस्य प्रसिद्धत्वेन भाष्यो-

---

* निगरणचलनार्थेभ्यश्च १. ३. ८७.  १–'वाहयति' पा० ।

## भक्षेरहिंसार्थस्य ॥ ७ ॥

भक्षेरहिंसार्थस्येति वक्तव्यम् । भक्षयति पिण्डीं देवदत्तः । भक्षयति पिण्डीं देवदत्तेन ॥ अहिंसार्थस्येति किमर्थम् ? भक्षयन्ति यवान्बलीवर्दाः । [1]भक्षयन्ति बलीवर्दान् यवान् ।

## अकर्मकग्रहणे कालकर्मणामुपसंख्यानम् ॥ ८ ॥

अकर्मकग्रहणे कालकर्मणामुपसंख्यानं कर्तव्यम् ॥ मासमास्ते देवदत्तः । मासमासयति देवदत्तम् । मासं शेते देवदत्तः । मासं शाययति देवदत्तम् ।

## सिद्धं तु कालकर्मणामकर्मकवद्वचनात् ॥ ९ ॥

सिद्धमेतत् । कथम् ? कालकर्मका अकर्मकवद्भवन्तीति वक्तव्यम् ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'अकर्मकाणा'मित्युच्यते न च केचित्कदाचित्काल-

प्र०—निषेधाच्चुरादिण्यन्तोऽप्यण्यन्त एवेति प्राप्तिः । भक्षयन्ति यवानिति । क्षेत्रस्थानामङ्कुराद्यवस्थायां यवानां भक्षणाद्धिंसा भवति । तदवस्थायां कैश्चिच्चैतन्यस्याऽभ्युपगमात् । परकीययवभक्षणे वा परो हिंसितो भवति । हिंसाङ्गे भक्षणेऽत्र भक्षिर्वर्तते ।

कालकर्मणामिति । कालग्रहणेन साहचर्यात्पूर्वं सहनिर्दिष्टत्वाद्भावाऽध्वदेशानामपि ग्रहणम्, वक्ष्यमाणन्यायस्य तुल्यत्वाद्वा ।

सिद्धं त्विति । तेन 'मासमास्यते देवदत्तेने'त्यादावकर्मकेभ्यो भावे विधीयमाना लादयः सिद्धा भवन्ति । स्वाश्रयं चाऽव्यावृत्तं कर्मत्वम् । तेन 'मास आस्यते देवदत्तेने'त्यादौ कर्मण्यपि भवन्ति । न च केचिदिति । ननु क्रियामात्रविवक्षायां कालादीनामविवक्षितत्वात्तेरप्यकर्मकत्वं भवत्येव, यथा 'शेते देवदत्तो न भुङ्क्ते' इति । अत्राहुः—अत्यन्ताऽविद्यमानकर्माणो धातवोऽकर्मकग्रहणेन गृह्यन्ते, न त्वविवक्षितकर्माणः,

उ०—दाहरणाऽसङ्गतेरिति बोध्यम् । ननु भक्षयतेर्नित्यण्यन्तत्वेनाऽणौ कर्त्रभावादाह—अणि कर्तेति । 'णा'वित्यत्र सर्वगत्यर्थादिभ्यो हेतुमण्णिच एव संभवेन तस्यैव ग्रह इति भावः । भक्षेः प्रत्यवसानार्थत्वात्प्राप्तिः । वार्त्तिके 'प्रतिषेध' इति शेषः । पिण्ड्या अप्राणित्वादुदाहरणे भक्षेरहिंसार्थत्वम् । ननु यवानामप्यचेतनत्वात्तद्विषयस्याऽपि कथं हिंसार्थत्वमत आह—क्षेत्रस्थानामिति । इदमुपलक्षणं, बीजावस्थानामपि भक्षणे हिंसासत्त्वात् । हिंसाङ्गे इति । इदमुभयसाधारणम् । तत्राऽऽद्ये यवान् हिंसन् भक्षयतीत्यर्थः, द्वितीये तु 'परा'नित्यध्याहार्यम् । परान् हिंसन् यवान् भक्षयतीत्यर्थः । अत्राऽऽद्यमेव युक्तं, भाष्यस्वरसादित्याहुः । उदाहरणकक्षायां 'भक्षयन्ती'ति बहुवचनपाठे 'तत्स्वामिन' इति शेषः । तुल्यत्वाद्वेति । 'वा'-

[1]—'भक्षयति' पा० ।

भावाध्वभिरकर्मकाः । त एवं विज्ञास्यामः 'कचिद्येऽकर्मका' इति ।

प्र०-अन्यथा पचादीनामपि कर्माऽविवक्षायामकर्मकनिबन्धनानि कार्याणि भवेयुः । अकर्मकशब्दस्य च धातवोऽन्यपदार्थत्वेनाऽऽश्रीयन्ते न त्वर्थाः । अर्थाश्रयणे हि कर्माऽविवक्षायामर्थस्याऽकर्मकव्यपदेशः स्यात् । धातुषु त्वाश्रीयमाणेषु क्वचिदपि कर्मसम्बन्धदर्शनेन सारूप्यात्त एवैत इति तत्त्वप्रत्ययविषया नाऽकर्मकत्वेन व्यपदिश्यन्ते । अर्थास्तु कारकादिभेदाद्भिन्ना एवेत्यन्ये सकर्मका अन्य एवाऽकर्मका इति स्याद्व्यपदेशः । यदा त्वर्थस्याऽपि स्वतो नास्ति भेद इति दर्शनं तदार्थेष्वप्यन्यपदार्थेष्वदोषः । क्वचिदिति । द्रव्य एव कर्मणि सत्यकर्मका इत्यर्थः ।

उ०-शब्दाश्रार्थे । नन्वकर्मवद्भावे कर्मणि लो न स्यादत आह—स्वाश्रयमिति । 'सकर्मके'त्यत्र कर्ममात्रस्य ग्रहणादिति भावः । 'अकर्मके'त्यत्र निषेध्यकोटौ त्वन्तरङ्गद्रव्यकर्मण एव ग्रहणमिति तात्पर्यम् ।

गृह्यन्त इति । इह शास्त्र इत्यर्थः । तदेवाह—अन्यथेति । कर्माऽविवक्षायामिति । तदविवक्षा हि द्वेधा,—तदन्वययोग्यधात्वर्थत्यागात्, सत्येव तस्मिन्नर्थे तत्र कर्मत्वेनाऽन्वयाऽविवक्षायां संबन्धित्वेनाऽन्वयस्य विवक्षणाद्वेति । कार्याणि—लादयः । अत्राऽरुचिबीजं तु 'लः कर्मणी'त्यादिशास्त्रे एवं वक्तुमशक्यम् । 'कृतपूर्वी कट'मित्यत्र क्तस्याऽविवक्षितकर्मतया भावे साधनस्य 'कर्तृकर्मणो'रिति भाष्यादौ स्पष्टत्वात् । 'अकर्मशब्दस्य चे'त्यादि तदुपपादनमप्यनुचितं, कर्मसंज्ञाया अर्थसंज्ञात्वेनाऽर्थानामेवान्यपदार्थत्वस्यौचित्यात् । 'अर्थस्याऽपि स्वतो नास्ति भेद' इति दर्शनमप्यसङ्गतमेव, धातूनां नानार्थत्वोच्छेदापत्तेः । तस्मादयमर्थः—किमकर्मकशब्दे कर्मपदस्य कर्मसंज्ञाप्रयोजके लक्षणया 'न विद्यते कर्मसंज्ञाप्रयोजकोऽर्थो येषां धातूना'मित्यर्थः, उत 'कर्मरहितार्थप्रतिपादकाना'मित्यर्थः ? लक्षणोभयत्र तुल्या । तत्र नाद्य इत्याह भाष्ये—न च केचिदिति । तथा च 'कर्मसंज्ञाप्रयोजकाऽर्थरहिताना'मित्यर्थे सर्वेषां तदर्थसम्भवेनाऽकर्मकाणामित्यस्योदाहरणाऽसम्भव इत्यर्थः । अन्त्येऽविवक्षितकर्मतयोदाहरणसम्भवो वाच्यः । न च कालस्य क्रियामात्रेणाऽऽकाङ्क्षिततया तदविवक्षाऽसम्भवः । आख्याताऽर्थकालेनैव तदाकाङ्क्षाशान्त्या बाह्यकालकर्मणोऽविवक्षासम्भवात् । एवं च सति गत्यादिसूत्रे तुल्यजातीयापेक्षतया नियमस्य सकर्मकविषयतयाऽकर्मकविषये 'कर्तुरीप्सिततम'मित्यनेन तदुपपत्तावकर्मकग्रहणं व्यर्थं स्यात् । तस्मात्सामर्थ्यं मनसि निधायाह—त एवमित्यादि । एतच्च सामान्यापेक्षं ज्ञापकं 'शास्त्रेऽकर्मकपदमात्रे ईदृशार्थग्रहण'मिति । क्वचिदित्येतद्व्याचष्टे—द्रव्य एव कर्मणि सतीति । 'सती'त्यस्य 'प्रतियोगिनि सती'ति शेषः । एवं च कालाद्यतिरिक्तकर्मप्रतियोगिकाऽभाववन्त इत्यर्थः । तादृशाश्च सर्वथा द्रव्यकर्माऽभाववन्तः शेत्यादयः, अविवक्षितकर्माणश्चेत्युभयेऽपि । प्रयोगानुसारित्वाच्चाऽविवक्षायाः पचादिष्वविवक्षया नाऽकर्मकत्वनिबन्धनकार्याणि । न चैवमपि तुल्यजातीयतया सकर्मकविषयनियमेन सिद्धावकर्मकग्रहणं व्यर्थं, सकर्मकत्वेन कालादिकर्मकाणामपि ग्रहणेन तद्विषयनियमस्याप्यापत्तौ 'मासमासयति देवदत्त'मित्यसिद्ध्यापत्तेः । प्रतियोगिसमर्पक'कर्म'पदेन तु न कालादीनां ग्रहणम्, एतत्सामर्थ्यादिति न दोषः । वस्तुतो भाष्ये 'क्वचि'दित्यस्य कालादीनां कर्मत्व-

अथवा येन कर्मणा सकर्मकाश्चाऽकर्मकाश्च भवन्ति तेनाऽकर्मकाणाम्, न चैतेन कर्मणा कश्चिदप्यकर्मकः ॥ अथवा यत्कर्म भवति, न च भवति,

प्र०— अथवा येनेति । संभवव्यभिचाराभ्यां विशेषणविशेष्यभावे सर्वत्र वस्तुस्थित्याऽविवक्षिता अपि कालादयः सन्तीति न तैः केचिदकर्मका इत्यर्थः ।

अथवेति । अकर्मकश्रुत्याऽन्तरङ्गं द्रव्यकर्म निषिद्ध्यते, न बहिरङ्गं कालादिकर्म । तथा हि—पूर्वं क्रियाया द्रव्यकर्मणा सह संबन्धो भवति, पश्चात्कालादिभिः परिमाणनिर्धारणाय । तथा चोक्तम्—

'शक्तिप्रमाणसंख्यादेर्द्रव्यधर्मात्प्रवर्तते ।
क्रियासु कालयोगोऽतः प्राग्योगो द्रव्यकर्मणा' ॥ इति ।

उ०—प्रयोजकव्याप्त्यादिरहितेऽर्थ इत्यर्थः । कैयटोक्तव्याख्यायां हि 'कालभावाध्वभि'रिति पूर्वं तृतीयानिर्देशात्केनचिदित्येव वदेत् । एवं च तदवस्थायामकर्मकत्वेनाऽकर्मकत्वव्यवहारो धातूनाम् । अकर्मकपदसामार्थ्याच्च तदवस्थायां कर्मरहिता गृह्यन्ते इति बोध्यम् ।

भाष्ये—न चैतेनेति । कालादिनेत्यर्थः । तद्व्याचष्टे—सम्भवेति । कालादीनां तु व्यभिचारो नास्त्युक्तरीत्या व्यापनादिरूपधात्वर्थपूर्वके स्वार्थे सकर्मकाणामपि वृत्तेस्तेषामपि तत्सम्भवादिति भावः । अयं भावः—कालादेरपि प्रतियोगिभूतकर्मपदेन कर्मग्रहणेऽकर्मको धातुरसम्भवीति सामर्थ्याद् द्रव्यकर्मण एव प्रतियोगित्वेन ग्रहणमिति । ननु तदविवक्षायां तत्सम्भव इत्यत आह—वस्तुस्थित्येति । धातुरेवान्यपदार्थ इति भावः ।

वस्तुतो व्याप्त्यादिविवक्षासत्त्वेऽप्यकर्मकत्वोपपत्तिर्दर्श्यते—अथवेति भाष्येण । उपपत्तिस्तूक्तैव । 'न चैतेन'त्यादिना भाष्येण व्यभिचाराऽभाव उच्यते । पूर्वस्माद्भेदव्युत्पादनायाऽन्तरङ्गत्वतात्पर्यकतया योजयति—अकर्मकेति । पूर्वं क्रियाया इति । तदुद्देशेनैव क्रियाप्रवृत्तेरिति भावः । शक्तिप्रमाणेति । द्रव्यधर्मरूपाच्छक्त्यादेः सकाशात् क्रियासु कालयोगः प्रवर्तते इत्यर्थः । तत्र शक्तेर्यथा,—वसन्तादिकालयोगः पल्लवजन्मादेः । प्रमाणवशाद्यथा,—दीर्घशष्कुल्यादिचर्वणस्य दण्डादिकालयोगः । सङ्ख्यावशाद्यथा,—नाना द्रव्यकर्मकपाकस्य । सकर्मकपदे तु कालादेः कर्मसंज्ञाविधानसामर्थ्यात् कालादिकर्मणोऽपि ग्रहणम् । अत एवा'ऽऽस्यते मास' इति कर्मणि लः सिध्यति । अत्रैतत्सूत्रस्थाऽकर्मकपदवत्सकर्मकपदे कालादिकर्मणोऽग्रहणे तात्पर्यग्राहकाऽभावादिति तत्त्वम् । 'न चेतत्कर्मे'तिभाष्येण द्रव्यकर्मणो व्यभिचार एव दर्श्यते न त्वन्तरङ्गत्वमिति चिन्त्यम् । वस्तुतो द्वितीयपक्षोक्तमेवार्थं भङ्ग्यन्तरेणाह—अथवेति । 'न चैतेने'त्यादेः कश्चिदप्यकर्मक एतेन कर्मणा रहितो नेत्यर्थेन सकर्मकाणामेतत्कर्माऽभावादेषामपि व्यभिचारित्वमिति कश्चिद्भ्राम्येत्तद्भ्रमनिवृत्त्यर्थं तस्याऽर्थस्य पुनः कथनम् । एवं चाऽकर्मकपदेन व्यभिचारिद्रव्यकर्मरहितानामित्यर्थबोधनेन मासादिकर्मसत्त्वेऽप्यकर्मकत्वमित्येतत्पक्षेऽर्थः । न त्वेतद्भाष्यबलेनाऽत्यन्ताऽविद्यमानकर्मकाणामेवाऽत्र ग्रहणमिति वक्तुं युक्तम् । 'कालाध्वनो'रिति सूत्रे 'लः कर्मणी'ति सूत्रस्थाऽकर्मकपदविषयेऽपीदृशस्यैव भाष्यस्य सत्त्वेन तत्राऽप्यत्यन्ताऽविद्यमानकर्मकाणामेव ग्रहणापत्तौ पूर्वोक्त'कुव-

तेनाऽकर्मकाणाम् । न चैतत्कर्म क्वचिदपि न भवति ॥५२॥

## हृक्रोरन्यतरस्याम् ॥ १ । ४ । ५३ ॥

### हृक्रोर्वावचनेऽभिवादिदृशोरात्मनेपद उपसंख्यानम् ॥ १ ॥

हृक्रोर्वावचनेऽभिवादिदृशोरात्मनेपद उपसंख्यानं कर्तव्यम् । अभिवदति गुरुं देवदत्तः । अभिवादयते गुरुं देवदत्तम् । अभिवादयते गुरुं देवदत्तेन ॥ पश्यन्ति भृत्या राजानम् । दर्शयते भृत्यान् राजा । दर्शयते भृत्यै राजा ॥ कथं चाऽत्राऽऽत्मनेपदम् ? एकस्य 'णेरणौ' [ १. ३. ६७ ] इति, अपरस्य 'णिचश्च' [ १. ३. ७४ ] इति ॥५३॥

## स्वतन्त्रः कर्ता ॥ १ । ४ । ५४ ॥

किं यस्य स्वं तन्त्रं स स्वतन्त्रः ? किं चातः ? तन्तुवाये प्राप्नोति ।

---

प्र०- सूत्रं चेदं नियमार्थमिति 'आकडार'सूत्र उक्तं तत एवाऽवधार्यम् ॥५२॥

हृक्रोर । उभयत्र विभाषेयमिति नवेति विभाषेत्यत्रोक्तम् । अभिवादिदृशोरिति। अभिवादयतेरप्राप्ता कर्मसंज्ञा पक्षे विधीयते, दृशेर्बुद्ध्यर्थत्वान्नित्यप्राप्ता पक्षे निवर्त्यते ॥५३॥

स्वतन्त्रः कर्ता । किं यस्येति । तन्तुवायस्य स्वतन्त्रशब्दवाच्यत्वाद्विशेषानुपादानाच्च प्रश्नः । तन्तुवाय इति । यद्यपि 'तन्तुवायो वयति भुङ्क्ते' इत्यादौ तन्तुवायस्य कर्तृसंज्ञेष्यते तथापि विशेषविहितत्वात्परत्वाच्चापादानादिसंज्ञाविषयेपि सा प्राप्नोति,

---

उ०-पूर्वी'त्यादिभा'याऽसङ्गत्यापत्तेः । किं चाऽत्यन्ताऽविद्यमानकर्मकाणामत्र ग्रहणमिति पक्षे लुनातेर्निर्वृत्तप्रेषणाण्णिचि 'लावयति केदारं देवदत्त' इति 'णेरणा'विति सूत्रस्थकैयटप्रयोगे केदारस्य कर्मत्वाऽनापत्तिरिति दिक् ॥५२॥

हृक्रोर । इत्यत्रोक्तमिति । 'वार्तिककृते'ति शेषः । भाष्ये—कथं चात्रात्मनेपदमिति । एतद्वार्त्तिकोदाहरणयोरित्यर्थः । अभिवादयतावणौ कर्मणो णौ कर्तृत्वाऽभावाद्दर्शयतावणौ कर्तृकर्मातिरिक्तकर्मणः सत्त्वादिति प्रश्नः । एकस्येति । आद्याऽन्यस्य दृशेरित्यर्थः । अणौ कर्तृकर्मातिरिक्तकर्माऽभावो विवक्षित इति भावः । अपरस्येति । आद्यस्याऽभिवादयतेरित्यर्थः । उक्त आशयः ॥५३॥

स्वतन्त्रःकर्त्ता । भाष्ये—स्वं तन्त्रमिति । विततास्तन्तवस्तन्त्रम् । किमयं बहुव्रीहिरिति प्रश्नतात्पर्यम् । विशेषविहितत्वादित्यभ्युच्चयः, निरवकाशत्वाऽभावात् । अपादानादिसंज्ञेति । 'तन्तुवायाद्गृह्णाती'त्यादौ । ब्राह्मणादेर्नेति । 'तन्तुवाय' इत्यस्य भाष्यस्य तत्रैवेत्यर्थं इति भावः । वितन्यत इति । स च सन्निवेशविशिष्टस्तन्तुसमूहः । स्वतन्त्र उच्यत इति । यथाकथंचिद्व्युत्पन्नोऽयं प्रधानार्थे रूढ इति भावः । प्राधान्ये वर्त्तमानस्यैव ग्रहणं कृत

नैष दोषः। अयं तन्त्रशब्दोऽस्त्येव वितानेे वर्तते। तद्यथा,—आस्तीर्णं तन्त्रम्, 'प्रोतं तन्त्र'मिति। वितानमिति[1] गम्यते। अस्ति प्राधान्ये वर्तते। तद्यथा,—स्वतन्त्रोऽसौ ब्राह्मण इत्युच्यते। स्वप्रधान इति गम्यते। तद्यः प्राधान्ये वर्तते तन्त्रशब्दस्तस्येदं ग्रहणम्।

**स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युपसंख्यानमस्वतन्त्रत्वात् ॥ १ ॥**

स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युपसंख्यानं कर्तव्यम्। पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति†। किं पुनः कारणं न सिध्यति? 'अस्वतन्त्रत्वात्'।

---

प्र०—'ब्राह्मणोऽधीते' इत्यादौ च ब्राह्मणादेर्न प्राप्नोतीति दोषः। वितान इति। वितन्यत इति वितानम्। स्वतन्त्रोऽसौ ब्राह्मण इति। स्वशब्द आत्मवाची। स्व आत्मा तन्त्रं प्रधानं यस्य स 'स्वतन्त्र' उच्यते। तत्र कारकाऽधिकारात्क्रियासिद्धौ प्राधान्यस्योपयोगात्तन्तुवायस्याऽपि तन्तुवायरूपतया तत्राऽनुपयोगात्प्रधानवाचिनः 'स्वतन्त्र'शब्दस्येह ग्रहणम्। अनेककारकसाध्यायामपि क्रियायां यथा कस्यचित्स्वातन्त्र्यं तथा 'कारक'सूत्रे प्रतिपादितम्। यस्य धातुना व्यापारोऽगुणभावेनोच्यते सर्वोऽसौ 'स्वतन्त्र' इत्येतदपि तत्रैव भाष्यकृता प्रतिपादितम्।

हेतुमतीति। प्रयोज्य इत्यर्थः। यथा कर्तृसन्निधौ करणादीनां नास्ति स्वातन्त्र्यं तथा प्रयोजकसन्निधौ प्रयोज्यस्य पारतन्त्र्यात्स्वातन्त्र्याऽभावात्कर्तृसंज्ञाया अप्रसङ्गात् 'पाचयत्योदनं देवदत्तेने'ति कर्तृतृतीया न प्राप्नोति। 'तत्प्रयोजक' इत्यत्र च तच्छब्देन परामर्शो नोपपद्यते।

---

उ०—इत्यत आह—तत्रेति। क्रियासिद्धौ यः स्वतन्त्र इत्यर्थे प्राधान्यस्यैवाऽन्वययोग्यत्वम्। तन्तुवायरूपतयेति। 'कारक' इत्यनेन क्रियामात्रस्योपस्थितेस्तस्मिंश्च तत्त्वेनाऽनुपयोग इत्यर्थः। बहुलक्ष्यसंस्कारानुरोधाच्च प्रधानस्यैव ग्रहणमित्यपि बोध्यम्। ननु किं प्राधान्यं कर्तुरित्यत आह—अनेकेति। सकलकारकप्रवर्तकत्वादिति भावः। नन्वेवं 'स्थाली पचती'त्यादि न स्यादत आह—यस्य धातुनेति। अगुणभावेन—प्राधान्येन।

स्वतन्त्र इति। स्वातन्त्र्येण विवक्षित इत्यर्थः। तच्चारोपितमनारोपितं वेत्यन्यत्। कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थव्यापाराश्रयो हि सः। तादृश एव च सकलकारकप्रवर्तकः। प्रायेण कर्मप्रत्ययसमभिव्याहारे फलव्यापारयोर्वैयधिकरण्यादर्शनात्समभिव्याहारे इत्यन्तमित्यादि निरूपितं मञ्जूषायाम्। 'हेतुमति चे'त्यत्र 'हेतुम'च्छब्देन प्रयोजकव्यापार उच्यते, न च तत्र संज्ञेष्यतेऽत आह—प्रयोज्य इति। स एवाऽत्र हेतुमच्छब्दार्थत्वेन विवक्षित इत्यर्थः। स्वातन्त्र्यमिति। 'उद्भूत'मिति शेषः। दूषणान्तरमाह—तत्प्रयोजक इति।

---

१—'वितान इति' पा०। † कर्तृकरणयोस्तृतीया २. ३. १८.

**न वा स्वातन्त्र्यादितरथा ह्यकुर्वत्यपि कारयतीति स्यात् ॥ २ ॥**

न वा कर्तव्यम् । किं कारणम् ? 'स्वातन्त्र्यात्' । स्वतन्त्रोऽसौ भवति । 'इतरथा ह्यकुर्वत्यपि कारयतीति स्यात्' यो हि मन्यते—नाऽसौ स्वतन्त्रः, अकुर्वत्यपि तस्य 'कारयती'त्येतत्स्यात् ।

**नाऽकुर्वतीति चेत्स्वतन्त्रः ॥ ३ ॥**

न चेदकुर्वति तस्मिन्कारयतीत्येतद्भवति, स्वतन्त्रोऽसौ भवति ।

शक्यं तावदनेनोपसंख्यानं कुर्वता वक्तुं—'कुर्वन्स्वतन्त्रोऽकुर्वन्ने'ति । साधीयो ज्ञापकं भवति । प्रेषिते च किलायं क्रियां चाऽक्रियां च दृष्ट्वाऽ-

प्र०— न वेति । प्रयोजकसन्निधानेऽपि प्रयोज्यस्य करणादिसाधनविनियोगादिना स्वातन्त्र्यस्य क्रियासिद्धौ सद्भावादित्यर्थः । अकुर्वत्यपीति । यदि प्रयोज्यस्य स्वातन्त्र्यं न स्यान्नैवाऽसौ साधनान्तरविनियोगादिना क्रियां कुर्यात्, तथा चाऽकुर्वत्यपि प्रयोज्ये 'प्रयोजकः कारयती'ति व्यपदिश्येत ।

शक्यं तावदिति । उपसंख्यानवाद्यपि प्रयोज्यस्य स्वातन्त्र्यमस्तीत्यभ्युपगच्छतीति प्रतिपाद्यते । प्रयोज्यस्य स्वातन्त्र्येण स्वव्यापारं प्रत्यप्रवर्त्तनात्किलोपसंख्यानमारभ्यते । तेन चेदमवश्याभ्युपगन्तव्यम्—'यः करोति स स्वतन्त्रो न त्वकुर्वन्निति' । एवं चेत्प्रयोजकसन्निधानेपि स्वार्थदर्शनात्प्रयोज्यः करोति नान्यथेति तस्य स्वातन्त्र्यमस्त्येव । तथा चोक्तं भाष्यकृता—'नेह कश्चित्परोऽनुग्रहीतव्य इति प्रवर्तते, सर्व इमे स्वभूत्यर्थं प्रवर्तन्ते' ( ३. १. २६ वा० १४ ) इति । प्रेषिते चेति । कर्तुरधिकरणत्वेन

उ०—तत्र हि तत्पदेन स्वतन्त्र एव पूर्वसूत्रोपात्तः परामृश्यते । क्रियासिद्धाविति । स्वक्रियासिद्धावित्यर्थः । अयं भावः—स्वक्रियाकारकप्रवर्त्तकत्वरूपस्वातन्त्र्यमस्याऽस्त्येव परप्रेर्यत्वेऽपि । ननु प्रेरणायाः क्रियाविषयत्वात्कथमकुर्वति 'कारयती'ति प्रयोगोऽत आह—यदीति । साधनान्तरविनियोगेन क्रियासाधकत्वमेव हि स्वातन्त्र्यम् । मूले 'आदि'पदार्थः क इति चिन्त्यम् । व्यपदिश्येतेति । तदाऽपि तस्यौपसंख्यानिककर्तृत्वेन कर्तुः प्रयोजकत्वात्तस्य हेतुत्वे णिजापत्तिः । एवं चोपसंख्यानमतिव्यापकमिति भावः । भाष्ये 'न चेदमकुर्वति तस्मिन्कारयतीत्येतद्भवती'त्यनन्तरं 'किं तु कुर्वत्येवे'ति शेषः । स्वतन्त्रोऽसाविति । असावुपसङ्ख्यानलभ्यकर्तृसंज्ञकः स्वतन्त्र इत्यर्थः । एवं चोपसङ्ख्यानाऽतिप्रसङ्गवारणाय वार्तिकेऽपि स्वतन्त्रपदमनुवर्त्यम् । तत्सामर्थ्याद्गौणार्थकत्वमाश्रित्य कुर्वतः स्वतन्त्रत्वात्तत्रैव कर्तृसंज्ञा नाऽकुर्वत इति वाच्यमित्याह—शक्यं तावदिति । एवं च सूत्र एव गौणमुख्यसाधारणस्वतन्त्रपदार्थमाश्रित्य वार्त्तिकं न कार्यमिति भावः । तदाह—उपसंख्यानवादीति ।

तेन चेदमिति । उक्तदोषवारणायेत्याशयः । 'अकुर्वन्निती'त्यन्तमभ्युपगमे कर्म । एवं चेदिति । प्रेरणोत्तरमप्यकरणं चेदित्यर्थः । स्वातन्त्र्यमस्त्येवेति । अन्यथा स्वार्थाऽभावेऽपि कुर्यादित्यर्थः । एवं च सूत्रेणैव सिद्धे उपसंख्यानं व्यर्थमिति भावः । भाष्ये—ज्ञापकम्—अनुमापकम् । अयम्—उपसंख्यानवादी । प्रेषिते—पुरुषे । क्रियाम्—'क्रिया-

ध्यवस्यति 'कुर्वन्स्वतन्त्रोऽकुर्वन्ने'ति। यदि च प्रेषितोऽसौ न करोति स्वतन्त्रोऽसौ भवतीति ॥५४॥

## तत्प्रयोजको हेतुश्च ॥ १।४।५५ ॥

### प्रैषेऽस्वतन्त्रप्रयोजकत्वाद्धेतुसंज्ञाऽप्रसिद्धिः ॥ १ ॥

प्रैषेऽस्वतन्त्रप्रयोजकत्वाद्धेतुसंज्ञाया अप्रसिद्धिः [ [1]प्राप्नोति ]। स्वतन्त्र-

---

प्र०—विवक्षितत्वात्सप्तमी। क्रियामिति। स्वार्थदर्शनादिच्छायां सत्यां क्रियां तददर्शने त्वक्रियाम्। यदि चेति। स्वार्थादर्शनादिच्छायामसत्यामित्यर्थः ॥५४॥

तत्प्रयोजको। प्रैष इति। ननु पूर्वसूत्र एव प्रयोज्यस्य स्वातन्त्र्यमुपपादितं तत्किमर्थं चोद्यते ? एवं मन्यते—प्रैषादूर्ध्वं प्रयोज्यस्य स्वव्यापारे प्रवर्तनात्स्वातन्त्र्यम्। प्रैषकाले तु स्वव्यापाराऽप्रवर्तनात्प्रवृत्तौ प्रैषवैयर्थ्यात्स्वातन्त्र्यं नास्ति। तस्य च प्रयोजको न हेतुः स्यात्। ततश्चाऽत्र न णिज्भवेत्। प्रैषग्रहणमध्येषणनिवृत्त्यर्थमिति

---

उ०—प्रयोज्यमनेन कारयती'ति प्रयोगम्, अक्रियां—'तत्प्रयोज्यमनेन कारयती'ति प्रयोगाऽभावं च दृष्ट्वा निश्चिनोति कुर्वन्स्वतन्त्रोऽकुर्वन्नेतीत्यर्थः। एतेन प्रेषिते क्रियादर्शनादेव तस्य पारतन्त्र्यनिर्णय इति स एव कथं स्वातन्त्र्ये हेतुरित्यकुर्वन्न स्वतन्त्र इत्यस्य प्रकृतेऽनुपयोगश्चेति परास्तम्। एवमुपसंख्यानारम्भेऽतिप्रसङ्गवारणाय स्वतन्त्रपदसंबन्धाद्यभिधायैवं सति मुख्यस्वातन्त्र्यग्रहणेपि प्रयोज्यस्य तदस्तीत्याह—यदि चेति भाष्ये। अस्य'इच्छायामसत्या'-मिति शेषः। तदाह—स्वार्थादर्शनादिति। एवं च यद्ययं परतन्त्रः स्यात्सर्वथा कुर्यादेव, कदाचिन्न करोत्यपि, तस्मात्स्वतन्त्र इति भावः। एवं च 'स्वेच्छाधीनप्रवृत्तिनिवृत्तिकत्वं स्वातन्त्र्य'मित्युक्तं, तस्यैव च प्रागुक्तं सकलकारकप्रयोक्तृत्वम्। तच्चारोपितमनारोपितं च संज्ञोपयोगि। तत्रारोपितं स्थाल्यादौ, अन्त्यं पुरुषे। यस्य च स्वातन्त्र्यविवक्षा तद्व्यापार एव च धातुना प्राधान्येनोच्यते, शब्दशक्तिस्वभावात्। तदुक्तं कारके इति सूत्रे भाष्ये—'संभवनक्रियां च कुर्वती स्थाली पचतीति यदोच्यते तदा तत्र व्यापारे पचिर्वर्तते, स्थालीस्थे च यत्ने कथ्यमाने 'स्थाली स्वतन्त्रे'ति। आरोपितस्वातन्त्र्यवतीति तदर्थः। कर्तुरधिकरणत्वेनेत्यादि चिन्त्यम्। नह्यत्र वाक्ये प्रेषितो दर्शनक्रियायामध्यवस्यतिक्रियायां वा कर्ता, 'अय'मित्यस्य कर्तुरुपादानात्। 'क्रिया'मित्येतत्कर्मनिरूपितं स्वस्याधिकरणत्वं स्थाल्यां तण्डुलमित्यादिवत्। अन्यथा 'देवदत्ते पचती'त्यस्याप्यापत्तिः। कर्तृकर्मद्वारा क्रियाश्रयस्यैवाऽधिकरणत्वाच्च। न च क्रियामित्येतन्निरूपितं कर्तृत्वं, तस्य सत्त्वभूतार्थप्रतिपादकत्वात् ॥५४॥

तत्प्रयोजको। शेषषष्ठ्या समासः। प्रवर्तनात्स्वातन्त्र्यमित्यस्य—'अस्तु नामे'ति शेषः। समाश्रितो—विवक्षितः। ननु 'न वा सामान्ये'त्यादे'र्हेतुमति चे'त्यत्र वक्ष्यमाणतया'ऽपरमुक्त'मित्यसङ्गतमत आह—वक्ष्यमाणस्यापीति। अयं हि 'न वा सामान्ये'ति

---

[1]—स्वचिन्न।

प्रयोजको हेतुसंज्ञो भवतीत्युच्यते, न चासौ स्वतन्त्रं प्रयोजयति ॥ 'स्वतन्त्रत्वात्सिद्धम्। सिद्धमेतत्। कथम्? स्वतन्त्रत्वात्। स्वतन्त्रमसौ प्रयोजयति।

**स्वतन्त्रत्वात्सिद्धमिति चेत्स्वतन्त्रपरतन्त्रत्वं विप्रतिषिद्धम् ॥२॥**

यदि स्वतन्त्रो न प्रयोज्योऽथ प्रयोज्यो न स्वतन्त्रः, प्रयोज्यः स्वतन्त्रश्चेति विप्रतिषिद्धम्।

**उक्तं वा ॥ ३ ॥**

किमुक्तम्? एकं तावदुक्तं 'न वा स्वातन्त्र्यादितरथा ह्यकुर्वत्यपि कारयतीत्येतस्या'दिति[1]। अपरमुक्तं 'न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम्' 'स्वतन्त्रप्रयोजकत्वादप्रयोजक इति चेन्मुक्तसंशयेन तुल्य'मिति[‡] ॥५५॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम्।

---

प्र०—केचित्। अध्येषणे किल व्यापार्यमाणस्य गुर्वादेः स्वव्यापारे स्वातन्त्र्यमस्तीति। न तद्युक्तम्। न्यायस्य तुल्यत्वात्। तस्मादत्र प्रैषग्रहणेन नियोगमात्रमुच्यते न तु निकृष्टविषय एव नियोगः।

स्वतन्त्रत्वादिति। दृष्टसामर्थ्यो वा संभावितसामर्थ्यो वा क्रियायां स्वातन्त्र्येण समाश्रित एव नियुज्यत इत्यर्थः। स्वतन्त्रपरतन्त्रत्वमिति। प्रयोजकसन्निधौ। पारतन्त्र्येण स्वातन्त्र्यस्य तिरस्कृतत्वाद्यौगपद्यानुपपत्तिरिति भावः।

उक्तं वेति। वक्ष्यमाणस्याऽपि बुद्ध्या विषयीकृतत्वाद्भूतत्वसमारोपादुक्तं वक्ष्यमाणं चाऽभेदेनोक्तं वेति निर्दिष्टम्। न वा सामान्यकृतत्वादिति। 'हेतुमति चे'त्यत्र वार्तिककारेणैवदुक्तम्। मुक्तसंशयेनेति। अप्रयुक्तो यः स्वयं करोति तेन तुल्यः प्रयोज्योऽपीत्यर्थः ॥५५॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम्।

---

उ०—वार्तिकार्थः—कंसं घातयतीत्यादौ 'हेतुमति चे'त्येव सिद्धत्वादुपसङ्ख्यानं न कार्यम्। कथं सामान्यकृतत्वमत आह—हेतुत इति। मुख्याद्धेतुतः पौराणिकादिरविशिष्ट इत्यर्थः। स्वतन्त्रप्रयोजकस्य हेतुत्वादयमप्रयोजको हेतुरिति चेदित्यर्थः ॥५५॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम्।

---

१—इदं वार्तिकमिति केचित्। † १. ४. ५४. वा० २. ‡ १. १. ३६ वा० १२; ११.

## प्राग्रीश्वरान्निपाताः ॥ १ । ४ । ५६ ॥

किमर्थं रेफाधिक ईश्वरशब्दो गृह्यते ?

### रीश्वराद्वीश्वरान्मा भूत्

'रीश्वरा'दित्युच्यते, वीश्वरान्मा भूत् —'शकिणमुल्कमुलावीश्वरेतोसुन्कसुनौ' [ ३. ४. १२; १३ ] इति ॥ नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—'अनन्तरो य ईश्वरशब्दस्तस्य ग्रहण'मिति* यदयं 'कृन्मेजन्तः' [ १. १. ३९ ] इति कृतो मान्तस्यैजन्तस्य चाऽव्ययसंज्ञां शास्ति ।

### कृन्मेजन्तः परोऽपि सः ।

परोऽप्येतस्मात्कृन्मान्त एजन्तश्चास्ति† । तदर्थमेतस्यात् ॥ यत्तर्ह्यव्ययीभावस्याव्ययसंज्ञां शास्ति‡ तज्ज्ञापयत्याचार्योऽ'नन्तरो य ईश्वरशब्दस्तस्य ग्रहण'मिति ।

### समासेष्वव्ययीभावः

[1]समासस्यैतज्ज्ञापकं स्यात्—'अव्ययीभाव एव समासोऽव्ययसंज्ञो भवति

प्र०– प्राग्रीश्वरान्निपाताः । किमर्थमिति । 'प्रागीश्वरा'दित्येव क्रियतां प्रत्यासत्त्या'ऽधिरीश्वर'इतीश्वरशब्दो ग्रहीष्यत इति प्रश्नः । वीश्वरादिति । व्याप्तिन्यायाद्वीश्वरात्प्राक्स्यात् । यदा संहितया सूत्रपाठस्तदा वकारसहित ईश्वरशब्दोऽस्तीत्यभिप्रेत्यैवमुक्तम् । यदयमिति । सेकसेन्प्रभृतीनां णमुल्कमुलोश्च निपातत्वादेवाऽव्ययसंज्ञायां सिद्धायां 'कृन्मेजन्त' इत्यव्ययसंज्ञाविधानाज्ज्ञापकाद्व्याप्तिर्बाध्यत इत्यर्थः । परोऽपीति । 'कृत्यार्थे तवैके'नित्यादिरेजन्तः, खमुञादिश्च मान्तोऽस्ति तदर्थमेतत्स्यादित्यज्ञापकं व्याप्तेर्बाधस्य । यत्तर्हीति । व्याप्तावाश्रीयमाणायां निपातत्वादव्ययीभावस्याऽव्ययसंज्ञा सिद्धैवेति किं तद्विधानेनेति ज्ञापकं संपद्यते । समासेष्विति । तुल्यजातीयव्यावृत्तये

उ०– प्राग्रीश्वरा । 'अधिरीश्वर' इति सूत्रस्थे 'ईश्वर' इति पदे प्रकृतिभागस्य पूर्वान्तरेफेण सहाऽनुकरणं 'रीश्वरा'दिति । नन्वन्यस्यापीश्वरशब्दस्याऽवधित्वं स्यादत आह–प्रत्यासत्त्येति । ननु प्रथमोपस्थितत्वादस्यैव ग्रहणं स्यादत आह—व्याप्तीति । वीश्वरादिति । तत्रापीश्वरशब्दोऽस्तीति भावः । वीश्वरशब्दस्य क्वाप्यश्रवणादाह—यदेति । ननु नियमाऽपेक्षया ज्ञापकत्वं युक्तमत आह—तुल्येति । न्यायबाधकल्पने बहुषु शास्त्रबाधः कल्प्यः । नियमे तु सजातीयविषय एवेति लाघवं नियमे इति भावः । 'समासे एतज्ज्ञापक'मिति भाष्ये ज्ञापकशब्दो नियमपर इति बोध्यम् ।

* अधिरीश्वरे १. ४. ९७. † कृत्यार्थे तवैकेन्केन्यत्वनः; कर्मण्याक्रोशे कृञः खमुञ् ३.४.१४;२५.

‡ अव्ययीभावश्च १. १. ४१. १–'समासे एतज्ज्ञापक'मिति नागेशसम्मतः पाठः ।

नाऽन्य' इति ॥ एवं तर्हि लोकत एतत्सिद्धम् । तद्यथा,—लोके 'आ वनान्तादोदकान्तात् प्रियं पान्थमनुव्रजे'दिति । य एव प्रथमो वनान्त उदकान्तश्चा[1] ततोऽनुव्रजति ।

लौकिकं चाऽतिवर्तते ॥

द्वितीयं[2] च तृतीयं च वनान्तमुदकान्तं[3] वानुव्रजन्ति ॥ तस्माद्रेफाधिक ईश्वरशब्दो ग्रहीतव्यः ।

अथ प्राग्वचनं किमर्थम् ?

---

प्र०—नियमार्थमेतत्स्यान्न तु व्याप्त्यग्रहणज्ञापनार्थमेतदित्यर्थः । एवं तर्हीति । लोके प्रत्यासत्तिराश्रीयते, यथा 'कपिञ्जलानालभेते'ति त्रय एवालभ्यन्ते न चतुरादयः । शास्त्रे च लोकव्यवहारोऽङ्गीक्रियते इति भावः । लौकिकमिति । लौकिकं प्रत्यासत्तिलक्षणं न्यायं लोक एव परित्यजति । स्नेहादिवशाद्द्वितीयमप्युदकान्तं प्राप्य निवर्तन्ते । 'कपिञ्जला'नित्यत्र तु प्रथमातिक्रमे कारणाऽभावा'न्न हिंस्यात्सर्वा भूतानी'ति चतुर्थादिषु निषेधावतारात्त्रय एवाऽऽलभ्यन्ते । इह तु विरोधकाऽभावाद्व्याप्तिन्यायाश्रयः स्यात् । 'न लोकाव्यये'त्यव्ययत्वाल्लोकादीनां सिद्धे षष्ठीनिषेधे पुनस्तेषामुपादानमव्ययसंज्ञाया एवाऽभावं ज्ञापयेत् । निपातसंज्ञा तु स्यादेव । ततश्चिकीर्ष्वर्थमित्यादौ 'निपात एका'जिति प्रगृह्यसंज्ञा स्यात् ।

अथेति । प्राग्ग्रहणद्वारेणाऽवधिनिर्देशश्चोद्यते । 'निपाता' इत्येवाऽस्तु, यथा

---

उ०— ननु लोकन्यायस्य शास्त्रे कथमाश्रयणमत आह—शास्त्रे चेति । लक्ष्यानुरोधात्प्रत्यासत्तिरेवाश्रयिष्यते इति भावः । भाष्ये 'प्रियं प्रोथ'मिति क्वचित्पाठः । तत्र प्रोथोऽध्वगः । 'प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु' । 'प्रोथोध्वगेऽश्वघोणायां कटिस्त्रीगर्भयोरपी'ति मेदिनीविश्वोक्तेः । यत्तु हरदत्तेन—'प्रोथं पर्याप्तमित्यर्थकं क्रियाविशेषणं, 'प्रोथ पर्याप्ता'विति धातोः पचाद्य'जित्युक्तम् । तदुक्तकोशाऽनुक्तेस्तस्य धातोरभावाच्च प्रकृतेऽर्थासङ्गते'र्गूंथयूथप्रोथा'इत्युणादिसूत्रेण'थ'प्रत्ययान्ततया साधनाच्चोपेक्ष्यम् । प्रथमातिक्रमे इति । सकलकपिञ्जलालम्भाऽसम्भवात्केषुचिदालब्धव्येषु त्रयो वाऽथ चतुरादय इति सन्देह इति भावः । व्याप्तिन्यायाश्रये बाधकमाह—निषेधावतारादिति । बहुषु 'न हिंस्या'दिति निषेधबाधकल्पनाभिया 'प्रथमातिक्रम'न्यायस्यैव तत्राङ्गीकार इति भावः । 'पर्यग्निकृतानारण्यानुत्सृजन्ती'त्युक्तेर्हिंसाप्रसक्त्यभावादाद्येन युक्तिरिति बोध्यम् । ननु 'न लोके'तिसूत्रे लोकादिग्रहणमिह व्याप्तिन्यायबाधकं स्यादत आह—न लोकेति । एवं चाऽत्र रेफोच्चारणमेव ज्ञापकमत्र शास्त्रे प्रथमातिक्रमन्यायानाश्रयणस्येति बोध्यम् । अत एव 'णिजां त्रयाणा'मित्यादौ 'त्रयाणां'ग्रहणं चरितार्थम् । ननु प्राग्ग्रहणाऽभावे परशब्दोऽप्यध्याह्रियेतेत्यत आह—प्राग्ग्रह-

---

१—'उदकान्तश्च ततोऽनुव्रजन्ति' पा० । २—क्वचिन्न । ३—'चानुव्रजन्ति' पा० ।

## प्राग्वचनं संज्ञाऽनिवृत्त्यर्थम् ॥ १ ॥

प्राग्वचनं क्रियते निपातसंज्ञाया अनिवृत्तिर्यथा स्यात्। अक्रियमाणे हि प्राग्वचनेऽनवकाशा गत्युपसर्गकर्मप्रवचनीयसंज्ञा निपातसंज्ञां बाधेरन्। ता मा बाधिषतेति प्राग्वचनं क्रियते॥ अथ क्रियमाणेऽपि प्राग्वचने यावताऽनवकाशा एताः संज्ञाः कस्मादेव न [1]बाधन्ते? क्रियमाणे हि प्राग्वचने सत्यां निपातसंज्ञायामेता अवयवसंज्ञा आरभ्यन्ते तत्र वचनात्समावेशो [2]भवति॥५६॥

## चादयोऽसत्त्वे ॥ १। ४। ५७॥

अयं सत्त्वशब्दोऽस्त्येव द्रव्यपदार्थकः—तद्यथा,—'सत्त्वमयं ब्राह्मणः',

---

प्र०—'प्रत्यय' इत्यादिरधिकारो विनाऽप्यवधिनिर्देशेनाभिमतविषये प्रवर्त्तते तथाऽयमपि प्रवर्तिष्यते इति भावः। निपातसंज्ञामिति। चादिषु प्रादिष्वप्यक्रियायोगे, विकल्पितगतिसंज्ञाविषयेषु साक्षात्प्रभृतिषु च गतिसंज्ञाऽभावपक्षे सावकाशा निपातसंज्ञा गत्यादिसंज्ञाभिर्बाध्येतेत्यर्थः। क्रियमाण इति। 'रीश्वरा'दिति पञ्चम्या प्राक्शब्दाध्याहारे लब्धे पुनःश्रुतिः प्राग्ग्रहणं संपद्यते। परशब्दाध्याहारेण तु पञ्चमी न भविष्यति। 'चादयोऽसत्त्वे' इत्यादीनामसंबद्धत्वप्रसङ्गात्। तन्त्रेणैव वा द्वौ प्राक्शब्दावुच्चार्येते। तेनाऽयमर्थः—'प्रागीश्वराद्ये व्यवस्थितास्ते प्राङ्निपातसंज्ञा भवन्ती'ति निपाताः सन्तो गत्यादिसंज्ञा इति समावेशसिद्धिः। केवले तु 'निपाता' इत्यधिकारे क्रियमाणे सत्यामपि प्रतियोगमनुवृत्तावेकसंज्ञाधिकारात्पर्यायः स्यान्न तु समावेशः। अवयवसंज्ञा इति। विशिष्टाऽवधिपरिच्छिन्नस्य समुदायस्यान्तरालपतिता गत्यादिसंज्ञाभाजोऽवयवा भवन्ति तेषां संज्ञा इत्यर्थः॥५६॥

चादयोऽसत्त्वे। अयमिति। अर्थद्वयेऽपि सत्त्वशब्दस्य प्रयोगदर्शनाद्विशेषाव-

---

उ०—एवद्वारेणेति। नन्वियमपि निरवकाशेत्यत आह—चादिष्विति। चादिषु सावकाशा, अक्रियायोगे प्रादिषु सावकाशेत्यादिक्रमेणान्वयः। बाध्येतेति। तत्तद्विशेषसंज्ञाविषये अस्या अनुपस्थितिरेव स्यादिति भावः। भाष्ये—अथ क्रियमाणेऽपीति। 'प्रागीश्वरा'दित्युक्तावपि विशेषसंज्ञाविषय एवोपस्थितिः स्यादित्यर्थः।

समाधत्ते—क्रियमाणे हीति। अवधिनिर्देशसामर्थ्यात्प्रतिसूत्रमुपस्थितौ तत्सामर्थ्यात् समावेश इति भावः। नन्वेवमपि पर्यायः स्यादत आह—रीश्वरादिति। असंबद्धत्वेति। विधेयाऽनिर्देशादिति भावः। निपाताः सन्त इति। प्राग्ग्रहणसामर्थ्यादेतदर्थलाभः, तेन गत्यादिसंज्ञानां निमित्तमेव निपातसंज्ञेति समावेशसिद्धिरिति भावः। विशिष्टावधीति। रीश्वररूपाऽवधिपरिच्छिन्नसमुदायस्येत्यर्थः। अवयवसंज्ञा इति। षष्ठीतत्पुरुष इति भावः॥५६॥

चादयोऽसत्त्वे। सीदन्त्यस्मिन्निति। विशेषणत्वेनाऽवतिष्ठन्तेऽस्मिन्नित्यर्थः। सदे-

---

१—बाधन्त इति' पा०। २—भविष्यति' पा०।

'सत्त्वमियं ब्राह्मणी'ति। अस्ति क्रियापदार्थकः—सद्भावः सत्त्वमिति। कस्येदं ग्रहणम्? द्रव्यपदार्थकस्य। कुत एतत्? एवं च कृत्वा विधिश्च सिद्धो भवति, प्रतिषेधश्च।

किं पुनरयं पर्युदासो—यदन्यत्सत्त्ववचनादिति, आहोस्वित्प्रसज्याऽयं प्रतिषेधः—'सत्त्ववचने नेति'? किं चातः? यदि पर्युदासो 'विप्र' इत्यत्रापि प्राप्नोति। क्रियाद्रव्यवचनोऽयं संघातः, द्रव्यादन्यश्च विधिनाऽऽश्रीयते। अस्ति च प्रादिभिः सामान्यमिति कृत्वा तदन्तविधिना† निपातसंज्ञा प्राप्नोति।

प्र०—गतौ प्रमाणाऽनुपलम्भात्प्रश्नः। तत्र सीदन्त्यस्मिञ्जातिगुणक्रिया इति सत्त्वं द्रव्यमुच्यते। यदा तु सतो भावः सत्त्वमिति तदा साध्यमानतया क्रियारूपापन्ना सत्ता सत्त्वशब्देनोच्यते। एवं च कृत्वेति। यदि सत्त्वशब्देन सत्तोच्यते तदा प्रतिषेधोऽनर्थकः स्यात्। न हि चादिषु सत्तावाची कश्चिच्छब्दोस्ति यदर्थो निषेधः स्यात्। 'पशुर्वै पुरुष' इत्यत्र च निपातसंज्ञा स्यात्। चाद्यनुकरणानां 'चः पठितो' हिर्यस्मादर्थे'इत्यादावपि विधिनिषेधौ यथाभिमतविषयं न व्यवतिष्ठेयाताम्। द्रव्यग्रहणे तु वि ते। द्रव्यशब्देन चाऽत्र सिद्धरूपं वस्त्वभिधीयते। तदुक्तम्—

'वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः'॥ इति।

किं पुनरिति। उभयथा शास्त्रे दर्शनात्प्रश्नः। विप्र इति। विप्रातीति विप्रः। 'आतश्चोपसर्गे' इति कप्रत्ययान्तः। क्रियोपसर्जनद्रव्यवाचित्वात्केवलाद्द्रव्यात्क्रियाद्रव्यसमुदायस्याऽन्यत्वाद् द्रव्यान्यस्मिन्नर्थे वर्तते। प्रादिभिरिति। निपातत्वेनाऽभिमतैः। सामान्यमिति। सारूप्यम्। तदन्तविधिनेति। ननु विशेष्याऽसन्निधानात्कथं तदन्त-

उ०—गौणादिकस्त्वः। साध्यमानेति। वस्तुतः साध्यमानाऽवस्थः क्रियारूपापन्नो योऽर्थः सत्तारूपः स सत्त्वपदेनोच्यत इत्यर्थः। 'चाद्यनुकरणार्थाना'मिति पाठे चादीनामनुकरणं स्वरूपबोधनमर्थः प्रयोजनं येषां तेषामित्यर्थः। इत्यादावपीति। 'निपातसंज्ञा स्यादि'त्यनुषज्यते। विधिनिषेधाविति। अस्य'इति हेतो'रित्यादिः। यथाभिमतविषयमिति। अनुकार्ये निपातत्वं नाऽनुकरणे, नापि गवादिपरपश्वादावित्यादीति भावः। सिद्धरूपमिति। तत्त्वं च लिङ्गसंख्याकारकान्वयित्वेन, सर्वनामपरामर्शयोग्यत्वेन वा। तदाह—वस्तूपेति। लक्षणान्तरमाह—भेद्यत्वेनेति। लिङ्गसंख्याविशेष्यत्वेनेत्यर्थः। उभयथेति। द्रव्यभिन्नेऽर्थे वर्त्तमानाश्चादय इति पर्युदासेऽर्थः। सत्त्वे वर्त्तमानं चादिस्वरूपं न निपातसंज्ञमिति प्रसज्यप्रतिषेधेऽर्थः। चादिष्वपाठात्कथं प्राप्तिरित्यतो भाष्ये—अस्ति च प्रादिभिरिति। निपातत्वेनेति। एवं चोत्तरसूत्रविषयेऽयं दोष इत्यर्थः। तथापि समुदाये कथं प्राप्तिरतो भाष्ये—तदन्तविधिनेति। निपातस्य

† येन विधिस्तदन्तस्य १. १. ७२. १—'हि' पा०।

अथ प्रसज्यप्रतिषेधो न दोषो भवति ॥ यथा न दोषस्तथास्तु ॥५७॥

**प्रादय उपसर्गाः क्रियायोगे ॥ १ । ४ । ५८–५९ ॥**

**प्रादय इति योगविभागः ॥ १ ॥**

'प्रादय' इति योगविभागः कर्तव्यः । प्रादयोऽसत्त्ववचना निपातसंज्ञा भवन्ति । तत 'उपसर्गाः क्रियायोग' इति ॥ किमर्थो योगविभागः ?

**निपातसंज्ञाऽर्थः ॥ २ ॥**

निपातसंज्ञा यथा स्यात् ।

**एकयोगे हि निपातसंज्ञाऽभावः ॥ ३ ॥**

एकयोगे हि सति निपातसंज्ञाया अभावः स्यात् । यस्मिन्नेव विशेषे गत्युपसर्गकर्मप्रवचनीयसंज्ञास्तस्मिन्नेव विशेषे निपातसंज्ञा स्यात् ।

---

प्र०–विधिः ? एवं तर्ह्ययमर्थः—'निपातस्य संज्ञा निपातसंज्ञा, सा चाऽव्ययसंज्ञा' । तस्यां चास्ति तदन्तविधिः—'प्रयोजनं सर्वनामाऽव्ययसंज्ञाया'मिति । तत्र विप्रशब्दे प्रशब्दस्य निपातसंज्ञायां सत्यां यथा 'परमोच्चै'रिति स्वराद्यन्तस्याऽव्ययसंज्ञा भवति, एवं निपातान्तस्यापि स्यात् । ततो लुक्प्रसज्येत । 'विप्रकम्बल' इत्यत्र च निपातान्तस्य पूर्वपदप्रकृतिस्वरः स्यात् ॥५७॥

प्रादयः । यदा प्रागेव 'प्रादयः' इति योगो विभज्यते तदा प्रयोजनकथनाय वार्तिकम् । यदा तु 'प्रादय उपसर्गाः क्रिययोगे' इत्येको योगः पठ्यते तदा योगविभागः कर्तव्यत्वेन चोद्यते ॥ एकयोगे हीति । अक्रियायोगे निपातसंज्ञा न स्यात्, क्रियायोग एव तु गत्युपसर्गसंज्ञावत्स्यात् । ततश्च प्रगत आचार्यः प्राचार्य इत्यत्र पूर्वपदप्रकृतिस्वरो न स्यात् । यस्मिन्नेवेति । कर्मप्रवचनीयसंज्ञा 'सुः पूजाया'मित्यादिभिर्योगैः

---

उ०–संज्ञेति । सकलनिपातमुद्दिश्यैकवाक्यविहिता संज्ञेत्यर्थः । प्रगृह्यसंज्ञा तु न तन्मात्रोद्देशेन विहितेति भावेनाह—सा चाऽव्ययेति । तस्यां चास्तीति । 'प्रयोजन'मित्यादेर्गमकाच्छब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः । अत्रेदं बोध्यम्—एवं हि पशुशब्दस्य जातिविशिष्टद्रव्यवाचिनोप्यसत्त्वभूतार्थत्वादसत्त्व इत्यस्य व्यावर्त्याऽप्रसिद्धिः । तस्मात्किं पुनरित्यादिभाष्यमेकदेशिनोरुक्तिरित्याहुः ॥५७॥

प्रादय उपसर्गाः । ननु विभक्तस्यैव पाठात्कर्त्तव्य इत्यनुपपन्नमत आह—यदेति । प्रागेवेति । सूत्रकृता सूत्रप्रणयनकाले एवेत्यर्थः । एवं व्याख्याने भाष्यस्थकर्तव्यपदस्वारस्यभङ्गः । ननु 'निपाता' इत्यस्याऽधिकारादेकयोगेऽपि निपातत्वं सि मत आह—अक्रियेति । तदाह भाष्ये—यस्मिन्नेव विशेष इति । क्रियायोगरूपे इत्यर्थः । ननु प्रादयः क्रियायोगे उपसर्गा गतय इतिवत् 'प्रादयः कर्मप्रवचनीया' इति वचनाभावादाह—सुः पूजायामिति ।

## मरुच्छब्दस्योपसंख्यानम् ॥ ४ ॥

मरुच्छब्दस्योपसंख्यानं कर्तव्यम्। मरुद्त्तो मरुत्तः। 'अच उपसर्गात्' [ ७. ४. ४७ ] इति तत्वं यथा स्यात्।

## अच्छब्दस्योपसंख्यानम् ॥ ५ ॥

अच्छब्दस्योपसंख्यानं कर्तव्यम्। अद्धा† ॥५८–५९॥

प्र०-प्रादीनां विहिता।

मरुद्त्त इति। प्रक्रियायां रूपमलौकिकमिदमुपात्तम्। तत्वेन हि नित्यं भाव्यम्। उपसर्गसंज्ञैव चाऽस्येष्यते, न निपातसंज्ञा। तस्यां हि सत्यां 'निपाता आद्युदात्ता' इत्याद्युदात्तत्वं 'तृतीया कर्मणी'ति पूर्वपदप्रकृतिस्वरेण स्यात्, अन्तोदात्तश्च मरुच्छब्द इष्यते। अव्ययसंज्ञा च स्यात्। तत्व एवोपसर्गसंज्ञेष्यते। अनभिधानाद्धि किरङ् च न भवति। संज्ञावचनसामर्थ्याच्चाऽनजन्तत्वेपि तत्वं प्रवर्तते। अनेन तु न्यायेन मरुन्नयतीति तवर्गव्यवायेऽपि णत्वं प्राप्नोति। तस्मात्तत्व एवोपसर्गसंज्ञा वक्तव्या। प्रकारान्तरेणाऽपि मरुतशब्दो व्युत्पादयिष्यते—'[1]तत्पर्वमरुद्भ्या'मिति।

अच्छब्दस्येति। तेन भिदादिषु श्रद्धाशब्दो न पठितव्यो भवति ॥५८–५९॥

उ०-न'न्वच उपसर्गा'दित्यत्र 'त्त' इति द्वितकारकारकनिर्देशात्सर्वादेशस्तत्वमनजन्तत्वेपि संज्ञाविधानसामर्थ्याद्भवति। तच्च नित्यमिति'मरुद्त्त'इत्ययुक्तमत आह—प्रक्रियायामिति। नन्वलौकिकप्रक्रियावाक्यं मरुत्—दा त इति दर्शयितुमुचितं न तु दत्त इतीति चेदत्राहुः—मरुद्भिर्दत्त इत्यर्थकलुप्तविभक्तिकमरुच्छब्देन श्रुतौ 'मरुत'शब्दस्य विग्रहप्रदर्शनं कृतं, तथैव भगवतोक्तमिति। इष्यत इति। 'तृतीया कर्मणी'तिपूर्वपदप्रकृतिस्वरेणेत्यर्थः। मृग्रोरुति-प्रत्ययान्तत्वादन्तोदात्तः सः। एवं च मरुत्तपदं मध्योदात्तमिति भावः। अव्ययसंज्ञा च स्यादिति। तथा च मरुद्भिर्दत्त इति मत्वर्थीयप्रकरणस्थभाष्यप्रयोगे विभक्तिश्रवणं न स्यादिति भावः। नन्वस्योपसर्गत्वे 'उपसर्गे घोः किः' 'आतश्चोपसर्गे' इति अङ्की स्यातामित्यत आह—अनभिधानादिति। अनेन न्यायेन—संज्ञावचनसामर्थ्यरूपेण। तस्मात्तत्व एवेति। अत एवो'पसर्गाश्चाऽभिवर्ज'मित्याद्युदात्तत्वमपि न। नन्वेवं तत्वविधावेव मरुत उपसंख्यानेन सिद्धे संज्ञाविधावुपसंख्यानं व्यर्थं स्यादिति चिन्त्यम्। केचित्त्वत्रोपसंख्यानेन निपातत्वमिष्यते एव। तेनाद्युदात्त एव मरुत्शब्दः। निपातसंज्ञाऽपि तत्वविषये एवेति मरुद्भिर्दत्त इति पाञ्चमिकभाष्यप्रयोगस्य नानुपपत्तिः। [1]पञ्चमेपि तन्पर्वमरुद्भ्यामिति निर्देव पाठ इत्याहुः। कैयटस्वारस्येन तु स पिदिति बोध्यम्। व्युत्पादयिष्यत इति। 'मत्वर्थीयप्रकरणे' इति शेषः ॥५८–५९॥

---

† आतश्चोपसर्गे ३. ३. १०६. १–पर्वमरुद्भ्यां तप् ५. २. १२२ वा० १०.

## गतिश्च ॥ १ । ४ । ६० ॥

### कारिकाशब्दस्य ॥ १ ॥

कारिकाशब्दयोपसंख्यानं कर्तव्यम् । कारिकाकृत्य* ।

### पुनश्चनसौ छन्दसि ॥ २ ॥

पुनश्चनसौ छन्दसि गतिसंज्ञौ भवत इति वक्तव्यम् । पुनरुत्स्यूतं† वासो देयम् । पुनर्निष्कृतो‡ रथः 'उशिग्दूतश्चनोहितः††' ।

### गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्तास्तं प्रतीति वचनम् ॥३॥

गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञा भवन्तीति वक्तव्यम् ॥ किं प्रयोजनम् ?

### प्रयोजनं घञ्षत्वणत्वे ॥ ४ ॥

घञ्—प्रवृद्धो भावः प्रभावः । 'अनुपसर्गे' इति प्रतिषेधो मा भूत्‡‡ ।

षत्वम्—विगताः सेचका अस्माद् ग्रामाद्विसेचको ग्रामः । 'उपसर्गा' दिति षत्वं मा भूत्× । णत्वम्—प्रगता नायका अस्माद् ग्रामात्प्रनायको ग्रामः । 'उपसर्गा' दिति णत्वं मा भूत्+ ।

---

प्र०— गतिश्च । कारिकाशब्दस्येति । कारिका क्रिया, मर्यादा—स्थितिरित्यर्थः । यत्न इत्यपरे । यस्तु श्लोकवाची कारिकाशब्दस्तस्य ग्रहणं न भवति, क्रियायोगग्रहणेन कारिकाशब्दस्य विशेषणात्क्रियावृत्तेर्ग्रहणात् ।

पुनश्चनसाविति । ततश्च 'पुनराधेय'मित्यत्र कृदन्तोत्तरपदप्रकृतिस्वरेण 'यतोऽनाव' इति 'धे'शब्द उदात्तः । पुनरुत्स्यूतमिति । गतित्वात्समासः । स्वरस्तु प्रवृद्धादेराकृतिगणत्वादन्तोदात्तत्वम् । चनोहित इति । निपातत्वादाद्युदात्तस्य चनःशब्दस्य 'गतिरनन्तर' इति प्रकृतिस्वरः । गत्युपसर्गसंज्ञा इति । क्रियायोग इति सामान्येनोपा-

---

उ०— गतिश्च । कारिकेति । भावे ण्वुल् । श्लोकादौ तु कारके । श्लोकवाचीति । दासीवाचिनोऽप्युपलक्षणम् । क्रियायोगेति । क्रियारूपे युज्यमाने वर्तमानादित्यर्थः ।

पुनःशब्दस्य गतित्वे स्वयं फलं दर्शयति—ततश्चेति । एतेन 'पुनरुत्स्यूत'मिति भाष्यो-

---

* कुगतिप्रादयः २ २ १७; समासेऽनञ्पूर्वे क्त्वो ल्यप् ७. १. ३७.

† कुगतिप्रादयः २. २. १८. ‡ गतिर्गतौ ८. १. ७०. १—ऋक्० १. ११ २.

†† गतिरनन्तरः ६. २. ४९. ‡‡ श्रिणीभुवोऽनुपसर्गे ३. ३. २४.

× उपसर्गात् सुनोति ···सञ्जाम् ८. ३. ६५. + उपसर्गादसमासेऽपि णोपदेशस्य ८. ४. १४.

## वृद्धिविधौ च धातुग्रहणार्थक्यम् ॥ ५ ॥

वृद्धिविधौ च धातुग्रहणमनर्थकम्—'उपसर्गादृति धातौ' [६. १. ९१] इति । तत्र धातुग्रहणस्यैतत्प्रयोजनमिह मा भूत्—'प्रर्षभं वनमि'ति । क्रियमाणे चाऽपि धातुग्रहणे 'प्रर्च्छक'इत्यत्र प्राप्नोति । 'यत्क्रियायुक्तास्तं प्रती'ति वचनान्न भवति ।

'वद्धिधिनस्भावाऽबीत्त्वस्वाङ्गादिस्वरणत्वेषु दोषो भवति ॥ वद्धिधि*—यदुद्वतो निवतो यासि बप्सत्[†] । वद्धिधिः ॥ नस्भाव‡—प्रणसं मुखम् । उन्नसं मुखम् । नस्भाव ॥ अबीत्त्व††—प्रेपम् परेपम । अबीत्व ॥ स्वाङ्गादिस्वर‡‡—प्रस्फिक् प्रोदरः । स्वाङ्गादिस्वर ॥ णत्व×—प्र णः शूद्रः, प्र ण आचार्यः, प्र

प्र०–दानाद्विशेषावधारणार्थं वचनम् । अथवा प्रत्यासन्नैव क्रिया गृह्यते इति न्यायव्युत्पादनार्थम् ।

वृद्धिविधौ चेति । उपसर्गेणैव धातोराक्षेपात् । प्रर्च्छक इति । प्रगता ऋच्छका अस्मादिति बहुव्रीहिः । तत्र धातुग्रहणस्य शाकलनिवृत्तिः प्रयोजनं वक्ष्यते । उद्वत

उ०–दाहरणे सुप्सुपेति समासेनैव सिद्धे पुनःशब्दस्य गतिसंज्ञा व्यर्थेत्यपास्तम् । तद्ध्वनयन्नवक्ष्यति—स्वरस्त्विति । 'सह सुपे'तिसूत्रे भाष्ये त्वसमस्तत्वाऽभिप्रायेण 'गतिर्गताविति निघात' इत्युक्तम् ।

शाकलनिवृत्तिः प्रयोजनमिति । शाकलम्—'ऋत्यक' इति । योगविभागेन पुनर्विधानद्वारेति भावः । 'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिः । 'अञ् नासिकाया' इति वर्त्तमाने 'उपसर्गाच्चे'त्यजनस्भावौ । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' 'उपसर्गात्स्वाङ्गं ध्रुवमपर्शु'-इत्युत्तरपदाद्युदात्तत्वरूपः स्वरः । 'उपसर्गाद्बहुल'मिति णत्वम् । ननु धात्वर्थे वतेर्विधानाद्वस्त्येव क्रियायोगोऽत आह–क्रियाशब्दस्येति । धात्वर्थे वर्त्तमानात् स्वार्थे स इति भावः । प्रत्ययार्थत्वेऽपि तद्दशायां तस्य क्रियात्वाऽभाव इत्यन्ये । उद्वत इत्यादेरुद्गतान्निगतानित्यर्थः । प्रेप-

१–'वद्धिधिनस्भावाबीत्त्वस्वाङ्गादिस्वरणत्वेषु दोषः' इति वार्तिकमिह केचित्पठन्ति ।

* उपसर्गाच्छन्दसि धात्वर्थे ५. १. ११८. † ऋक्० १०. १४२. ४.

‡ उपसर्गाच्च ५.४.११९. †† ऋदनोर्देशे ६.३.९७. ‡‡ उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ६.२.१७७.

× उपसर्गादनोत्परः ८. ४. २८.

णो राजा, प्र णो वृत्रहा ॥ 'उपसर्गा'दित्येते विधयो न प्राप्नुवन्ति ।

**वद्धिधिनस्भावाबीत्वस्वाङ्गादिस्वरणत्वेषु वचनप्रामाण्यत्सिद्धम् ॥६॥**

अनवकाशा एते विधयस्ते वचनप्रामाण्याद्भविष्यन्ति ।

**सुदुरोः प्रतिषेधो नुम्विधितत्वषणत्वेषु ॥ ७ ॥**

सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेषु वक्तव्यः ॥ नुम्विधि—सुलभम् दुर्लभम् । 'उपसर्गा'दिति नुम् मा भूदिति+ । 'न सुदुर्भ्यां केवलाभ्याम्' [ ७. १. ६८ ] इत्येतन्न वक्तव्यं भवति ॥ नैतदस्ति प्रयोजनम् । क्रियत एतन्न्यास एव ॥ तत्व—सुदत्तम् । 'अच उपसर्गात्तः' [ ७. ४. ४७ ] इति तत्वं मा भूदिति ॥ षत्व–सुसिक्तं घटशतेन । सुस्तुतं श्लोकशतेन 'उपसर्गा'-दिति षत्वं मा भूदिति* । 'सुः पूजायाम्' [ १. ४. ९४ ] इत्येतन्न वक्तव्यं भवति ॥ नैतदस्ति प्रयोजनम् । क्रियत एतन्न्यास एव ॥ णत्व—दुर्नयम् दुर्नीतमिति । 'उपसर्गा'दिति णत्वं मा भूदिति† ॥६०॥

---

प्र०–इति । क्रियाशब्दस्याऽप्रयोगादुपसर्गत्वाऽभावः । अनवकाशा इति । येषां हि क्रियाशब्दप्रयोगे त्वं प्रत्युपसर्गसंज्ञा ते संप्रत्यनुपसर्गसंज्ञा अपि गृह्यन्त इत्यर्थः । क्रियत इति । केवलाभ्यामिति विशेषणाऽभिधानार्थमवश्यं कर्तव्यम् । तेनाऽतिसुलम्भमित्यते-रुपसर्गत्वे नुम्भवत्येव । क्रियत इति । पूजायामिति विशेषणोपादानार्थम् । तेन 'सुषिक्तं किं तवात्रे'त्यादौ षत्वं भवत्येव ॥६०॥

---

उ०–मित्यादेः प्रगता आपो यस्मिन्नित्यादिरर्थः 'प्र ण' इत्यादेः प्रकृष्टानामस्माकमित्यर्थः । इत्यर्थ इति । तत्र सर्वत्रोपसर्गग्रहणं प्राद्युपलक्षणमिति भावः । ननु लघुना गुरोः प्रत्याख्याने 'क्रियते एवे'त्यसङ्गतमत आह–केवलाभ्यामितीति । अवश्यमिति । वार्त्तिककृताऽपीति भावः । इत्यत्रोपसर्गत्वे नुम् भवत्येवेति । सोरुपसर्गत्वे सतीत्यर्थः । निषेधाऽभावादित्याशयः । इत्यतेरुपसर्गत्वे इति पाठेऽतेः परस्य सोरुपसर्गत्वे इत्यर्थः । 'इत्यतेः परस्य सोरुपसर्गत्वे' इति पाठस्तु युक्त एव । 'सुः पूजाया'मित्येतत्कर्मप्रवचनीयसंज्ञाविधायकम् । भाष्ये—णत्वं मा भूदिति । न च दुसमादाय णत्वं दुर्वारं, कृतरोर्दुसोप्यत्रानुकरणेन तस्यापि निषेधात् ॥६०॥

---

+ उपसर्गात् खल्घञोः ७. १. ६७.

* उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ८. ३. ६५.

† उपसर्गादसमासेऽपि णोपदेशस्य ८. ४. १४.

## ऊर्यादिच्विडाचश्च ॥ १ । ४ । ६१ ॥

कृभ्वस्तियोग इति वक्तव्यम् । इहैव यथा स्यात्—ऊरीकृत्य ऊरीभूय । इह मा भूत्—ऊरी पक्त्वा ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । क्रियायोग इत्यनुवर्तते* । न चाऽन्यया क्रिययोर्यादिच्विडाचां योगोऽस्ति ॥६१॥

## अनुकरणं चाऽनितिपरम् ॥ १ । ४ । ६२ ॥

कथमिदं विज्ञायते—इतेः परमितिपरम्, न इतिपरमनितिपरमिति, आहोस्विदितिः परो यस्मात्तदिदमितिपरम्, न इतिपरमनितिपरमिति ॥ किं चातः ? यदि विज्ञायते—इतेः परमितिपरम्, न इतिपरमनितिपरमिति, 'खाडिति कृत्वा निरष्ठीव'दित्यत्र प्राप्नोति । अथ विज्ञायते—इतिः परो यस्मात्तदिदमितिपरम्, न इतिपरमनितिपरमिति, 'श्रौषड्वौषडिति कृत्वा निरष्ठीव'दित्यत्र प्राप्नोति ।

अस्तु ताव'दितिः परो यस्मात्तदिदमितिपरम्, न इति परमनितिपर'मिति । ननु चोक्तं—'श्रौषड्वौषडिति कृत्वा निरष्ठीवदित्यत्र प्राप्नोती'ति । नैष दोषः ।

प्र०- ऊर्यादि । ऊरी पक्त्वेति । प्रयोगाऽपर्यालोचनेन संभवमात्राश्रयेणैतदुदाहृतम् । न चान्ययेति । च्विडाचौ तावत्कृभ्वस्तियोग एव विहितौ ऊर्यादयोऽपि कृभ्वस्तिविषया एव प्रयुज्यन्ते नाऽन्यत्र ॥६१॥

अनुक । कथमिति । द्वयोरपि समासयोः संभवाद्दोषदर्शनाच्च प्रश्नः । खाडिति कृत्वेति । गतिसंज्ञायां समासः स्यात्, धातोश्चाऽनन्तरं प्रयोग इति रूपमेतन्न सिद्ध्येत् । 'इति खाट्कृत्ये'त्यत्र च निषेधप्रसङ्गः । श्रौषड्वौषडिति । श्रौषट्छब्द इतिपरो न भवति वौषटा व्यवधानादिति गतिसंज्ञाऽप्रसङ्गः । ननु व्यवहितेऽपि परशब्दस्य दर्शनाद्भवत्येवेतिपरत्वम् । नैष दोषः । अव्यवधान एवाऽस्य मुख्या वृत्तिः । अन्यत्र त्वन्तरालस्थमसमीक्ष्याऽव्यवधानमेवाश्रित्य प्रयुज्यते । इह तु वौषटो व्यवधायकस्योच्चारणादयुक्तमनपेक्षणम् । 'खाट्कृत्येति निरष्ठीव'दित्यत्र धातुव्यवधानेपि प्रतिषेध-

उ०- ऊर्यादि । च्विडाचोः केवलयोः प्रत्यययोः क्रियायोगाऽसंभवात्सामर्थ्येन संज्ञाविधावपि तदन्तविधिः । वक्ष्यमाणरीत्याऽस्य प्रयोगस्यैवाऽभावादाह—प्रयोगेति । ॥६१॥

अनुकरणं । इतेः परमिति । 'सुप्सुपे'ति योगविभागात्समासः । धातोश्चान्तरमिति । तद्व्यवधानेन गतेः प्रयोग इत्यर्थः । इति खाट्कृत्येति । इति हेतोः खाट्कृत्य गत इत्यर्थः । नन्वितेः परत्वसत्त्वेन कथमत्र प्राप्तिरत आह—श्रौषडिति । एवं गतिसमासस्य नित्यत्वादयं प्रयोगो न स्यादिति भावः । 'तस्मि'न्निति सूत्रे निर्दिष्टग्रहणाद्व्यवहितसाधारण एवाऽयमित्यतो दूषणाऽन्तरमाह—खाट्कृत्येतीति । इति—हेतोः खाट्कृत्य निरष्ठीवदित्यर्थः । वस्तुत इतेः परमिति विग्रहवाक्ये उत्तराऽङ्गविकल'तस्मा'दितिपरिभाषोपस्थित्याऽव्यवहितपरत्वबोधाद्-

* प्रादय उपसर्गाः क्रियायोगे १. ४. ५८–५९.

इदं तावदयं प्रष्टव्यः—अथेह 'ते प्राग्धातोः' [ १. ४. ८० ] इति कथं गतिमात्रस्य पूर्वप्रयोगो भवति—'उपोद्धरती'ति ? गत्याकृतिः प्रतिनिर्दिश्यते । इहापि तर्ह्यनुकरणाऽऽकृतिः प्रतिनिर्दिश्यते ।

किमर्थमिदमुच्यते ?

**अनुकरणस्येतिकरणपरत्वप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः ॥ १ ॥**

अनुकरणस्येतिकरणपरत्वप्रतिषेध उच्यते । किं प्रयोजनम् ? 'अनिष्टशब्दनिवृत्त्यर्थः' । अनिष्टशब्दता मा भूदिति । इदं 'विचारयिष्यते—[1] प्राग्धातुवचनं[2] प्रयोगनियमार्थं वा स्यात्संज्ञानियमार्थं वेति* । तद्यदा प्रयोगनियमार्थं तदाऽनिष्टशब्दनिवृत्त्यर्थमिदं वक्तव्यम् । यदा हि संज्ञानियमार्थं तदा न दोषो भवति ॥६२॥

**आदराऽनादरयोः सदसती ॥ १ । ४ । ६३ ॥**

इदमतिबहु क्रियते—आदरे अनादरे सत् असदिति । 'आदरे स'दित्येव

प्र०-प्रसङ्गात् । इदं तावदिति । यो व्यक्त्याश्रयेण व्यवधानं मन्यते । गत्याकृतिरिति । तस्याश्च भिन्नास्वपि व्यक्तिषु अभिन्नाया नास्त्यत्र व्यवधानम् ।

किमर्थमिति । 'अनितिपर'मित्येतदित्यर्थः । संज्ञानियमपक्षे सिद्धिं मत्वा प्रश्नः । अनिष्टशब्दनिवृत्त्यर्थमिति । 'खाडिति कृत्वे'ति प्रयोक्तव्ये 'इति खाट्कृत्ये'तिप्रयोगः स्यात् । प्रयोगनियमे चाऽयं दोषः । तत्र ह्ययमर्थः—गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्या इति । ततो व्यवहितस्य प्रयोगाऽप्रसङ्गः । संज्ञानियमे तु न दोषः । तेनैव नियमेन 'खाडिति कृत्वे'त्यत्र व्यवहितस्य सञ्ज्ञानिवारणादस्य प्रयोगस्य सिद्धत्वात् ॥६२॥

आदरा । कथमसत्कृत्येति । यदि न सत्कृत्याऽसत्कृत्येति नञ्समासः क्रियते,

उ०-वृत्तावपि तदन्तर्भावेणैकार्थीभाव इति भाष्याशयः । 'अयं'पदार्थं दर्शयति—य इति । तस्याश्चेति । गतिशब्देन तत्संज्ञकाऽनेकव्यक्तेर्ग्रहणं, लक्ष्यानुसारादित्याशयः । गतिसंज्ञार्थं सूत्रमावश्यकमिति प्रश्नानुपपत्तिरत आह—अनितिपरमित्येतदिति । संज्ञेति । प्राक्प्रयुक्ता एव गत्यादिसंज्ञा इति तदर्थः ॥६२॥

आदराना । आदरः—[3]प्रत्युत्थानादिविषयस्वराख्यः । अनादरः—परिभवः, औदासीन्यं च, तच्चावश्यकोत्थानादिविषयापेक्षा । कार्यार्थत्वादिति । तेनाऽसच्छब्देन समासादि-

१—'विचारयिष्यति' पा० । २—'तेप्राग्धातुवचनं' पा० ।

* प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणपरस्येतिकरणप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थं १.४.८० वा० १.

३—लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च । आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ॥
शय्यासने अध्याचरिते श्रेयसा न समाविशेत् । शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत् ॥
( इति मनुप्रोक्तः शिष्टाचारः । अ० २, ११७, ११९ )

सिद्धम् । कथमसत्कृत्येति ? तदन्तविधिना भविष्यति[†] । केनेदानीमनादरे भविष्यति ? नञाऽऽदरप्रतिषेधं विज्ञास्यामः—न आदरेऽनादर इति ।

नैवं शक्यम् । आदरप्रसङ्ग एव हि स्यादनादरप्रसङ्गे न स्यात् । अनादर-ग्रहणे पुनः क्रियमाणे बहुव्रीहिरयं विज्ञायते—'अविद्यमानादरेऽनादर' इति । तस्मादनादरग्रहणं कर्तव्यम्, असतस्तु तदन्तविधिना सिद्धम् ॥६३॥

---

प्र०—तदा सतिशिष्टत्वात्कृदुत्तरपदप्रकृतिस्वरं बाधित्वाऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं स्यात् । अथ न सदसदिति समासः क्रियते, तदा सच्छब्दस्य गतिसंज्ञा विधीयमानाऽसच्छब्दस्य न स्यादिति भावः । तदन्तविधिनेति । यद्यपीह प्रकृतं विशेष्यं नास्ति तथापि कार्यार्थत्वात्संज्ञायाः कार्यप्रदेशेषु प्रकृतस्य गतिना विशेषणात्तदन्तविधिर्भवति । तत्र समासविधौ 'सु'बिति प्रकृतं, 'गतिरनन्तर' इत्यत्र पूर्वपदं, 'गतिर्गता'वित्यत्र पद-स्येति । अव्ययसंज्ञायामस्त्येव तदन्तविधिः । न आदर इति । अनेनाऽसच्छब्दस्याऽनादरार्थवृत्तित्वं दर्शयति । ततश्चाऽनादरग्रहणेन यत्साध्यं तदन्यथाऽपि सिध्य-तीत्येतत्परमेतत् ।

आदरप्रसङ्ग इति । 'गुरुमसत्कृत्ये'त्यादौ तु स्यात्, 'पाखण्डिनमसत्कृत्ये'-त्येवमादौ तु न स्यात् । तथा हि—अब्राह्मण इति क्षत्रियादिरेवोच्यते न तु गोलोष्टादिः । बहुव्रीहिरिति । स चाऽत्यन्ताऽभावे प्रसक्ताऽभावे च भवतीति सर्वत्र संज्ञा सिद्ध्यति । असतस्त्विति । 'आदरानादरयोः स'दित्येव वक्तव्यम् । तत्राऽनादरे सच्छब्दस्य प्रवृत्त्यसंभवात्सामर्थ्यात्तदन्तविधिनाऽसच्छब्दस्य गतिसंज्ञा भविष्यति । यथा'गोष्पदं सेविते'त्यत्राऽसेविते गोष्पदशब्दस्य प्रवृत्त्यभावात्सामर्थ्यादगोष्पद-शब्दाऽर्थमसेवितग्रहणम् ॥६३॥

---

उ०—सिद्धिः । गतिसंज्ञा तु सच्छब्दस्यैवेति भावः । सुबिति प्रकृतमिति । 'समर्थ' इति प्रकृत-मित्यपि बोध्यम् । ननु तदन्तविधिना कार्यसम्भवेऽप्यनादर इत्यस्याऽसत्त्वे कथमत्र तत्प्रती-तिरित्याह भाष्ये—केनेदानीमिति । नन्वनादर इत्यस्याऽसत्त्वे कथं नञाऽऽदरप्रतिषेधो विज्ञास्यतेऽत आह—अनेनेति । आदरप्रतिषेधमित्यस्य—सदर्थादरप्रतिषेधमित्यर्थः । त्यादौ तु स्यादिति । नञ्समासे सद्दशस्यैव प्रतीतेर्गुर्वादिविषये एव प्रयोगः स्यात् । पाखण्ड्यादि-विषये तु प्रयोगो न स्यादिति भावः । प्रसक्ताऽभावे चेति पाठः । नन्वनादरग्रहणेऽसद्ग्रहण-मपि कार्यमेव । अन्यथा सच्छब्दस्याऽनादरेऽवृत्तेरत्र तदन्तविध्यभावाच्च कस्य तत्र वर्तमानस्य सञ्ज्ञा स्यादत आह—आदरेत्यादि । सामर्थ्यादिति । प्रकृतविशेष्याऽभावेपि शब्दरूपं विशेष्यमादायेत्यर्थः ॥६३॥

---

[†] येन विधिस्तदन्तस्य १. १. ७२.

## अन्तरपरिग्रहे ॥ १ । ४ । ६५ ॥

## अन्तःशब्दस्याऽङ्किविधिसमासणत्वेषूपसंख्यानम् ॥ १ ॥

अन्तःशब्दस्याङ्किविधिसमासणत्वेषूपसंख्यानं कर्तव्यम्[†] । अङ्—अन्तर्धा ॥ किविधिः—अन्तर्धिः ॥ समासः—अन्तर्हत्य ॥ णत्वम्—अन्तर्हण्याद्गोभ्यो गाः ॥६५॥

## साक्षात्प्रभृतीनि च ॥ १ । ४ । ७४ ॥

## साक्षात्प्रभृतिषु च्व्यर्थवचनम् ॥ १ ॥

साक्षात्प्रभृतिषु च्व्यर्थवचनं कर्तव्यम् । असाक्षात्साक्षात्कृत्वा साक्षात्कृत्य । यदा हि साक्षादेव [२]सत्किंचित् क्रियते तदा मा भूदिति ।

## मकारान्तत्वं च गतिसंज्ञासंनियुक्तम् ॥ २ ॥

मकारान्तत्वं च गतिसंज्ञासंनियोगेन वक्तव्यम् । लवणङ्कृत्य ।

प्र०— अन्तरप । अन्तःशब्दस्येति । अङ्किविधिणत्वानि उपसर्गसंज्ञाश्रयाणि, समासश्च गतिसंज्ञाश्रय इत्यपूर्वं वचनम् । सूत्रोपादानं च सामान्येनोपसंख्यानमुच्यते । गतिसंज्ञाया अनेनैव सिद्धत्वादपूर्ववचनाऽभावात् । अन्तर्हण्यादिति । 'हन्तेरत्पूर्वस्ये'ति णत्वस्य सिद्धत्वा'दन्तरदेशे' इति न वक्तव्यं भवति । देशे तु क्षुभ्नादित्वाण्णत्वाऽभावः, तथैवा'ऽयनं चे'ति न वक्तव्यं, 'कृत्यच' इति सिद्धत्वात् । 'अन्तर्णयती'त्यत्राऽप्युपसर्गादिति णत्वं सिद्ध्यति ॥६५॥

साक्षात् । साक्षात्प्रभृतिष्विति । अभूततद्भावविषयाणामेव यथा स्याद्यदा तु साक्षाद्भूतं रूपान्तरेण क्रियते तदा मा भूदित्यर्थः । लवणीकृत्येति । तत्र हि पर-

उ०— अन्तरपरिग्रहे । ननु समासस्य सूत्रेणैव सिद्धेर्वार्त्तिके 'समास'ग्रहणं व्यर्थमत आह—सामान्येनेति । एवं चोपसंख्यानशब्देनाऽपूर्ववचनमेव नोच्यते किं तु विधानमात्रम् । एवं चोपसर्गसंज्ञाविषयमपूर्ववचनं गतिसंज्ञाविषयसूत्रं चोपसंख्यानशब्देनोच्यते इति न समासग्रहणं व्यर्थमिति भावः । ननु गतिसंज्ञांऽशेऽप्यपूर्वत्वमस्त्वित्यत आह—गतिसंज्ञाया इति । अनेनैवेति । सूत्रेणैवेत्यर्थः । तदतिरिक्तविषये त्वनेनाऽपि नेष्यत इति भावः । 'नन्वन्तरदेशे' इत्यादिनैव सिद्धेर्णत्वे उपसंख्यानं व्यर्थमत आह—हन्तेरित्यादि । तथैवेति । 'अन्तरयण'-मित्यस्याऽनेनैव सिद्धेर्देशे प्रतिषेधोऽपि क्षुभ्नादित्वात्सिद्ध इति भावः । तदारम्भेऽप्यस्यावश्यकतां दर्शयति अन्तर्णयतीति ॥६५॥

साक्षात्प्र । साक्षाद्भूता इति । प्रत्यक्षा इत्यर्थः । तदुक्तं भाष्ये—यदा हि साक्षादेव सत्किंचित्क्रियत इति । 'लवण'मित्यादिगणपाठान्मान्ता अपि एते शब्दाः स्वतन्त्रा इति भ्रमं व्यावर्तयति भाष्ये—मकारान्तत्वं चेति । पुनःप्रसङ्गेति । परत्वाद्विकल्पेऽपि सव-

† आतश्चोपसर्गे; उपसर्गे घोः किः ३. ३. १०६; ९२; कुगतिप्रादयः २. २. १८; समासेऽनञ्पूर्वे क्त्वो ल्यप् ७. १. ३७; हन्तेरत्पूर्वस्य ८. ४. २२. १—'ग्रहणं' पा० । २—,सद' क्वचिन्न ।

## तत्र [चं] च्विप्रतिषेधः ॥ ३ ॥

तत्र [च¹] च्व्यन्तस्य प्रतिषेधो वक्तव्यः । लवणीकृत्य ।

## न वा पूर्वेण कृतत्वात् ॥ ४ ॥

न वा वक्तव्यम् । किं कारणम् ? 'पूर्वेण कृतत्वात्' । अस्त्वनेन विभाषा, पूर्वेण नित्यो भविष्यति* ।

इदं तर्हि प्रयोजनम्—'मकारान्तत्वं च गतिसंज्ञासन्नियुक्त'मित्युक्तं तच्च्व्यन्तस्य मा भूदिति । एतदपि नास्ति प्रयोजनम् । लवणशब्दस्याऽयं विभाषा 'लवणं'शब्द आदेशः क्रियते । यदि च 'लवणी'शब्दस्याऽपि विभाषा 'लवणं'शब्द आदेशो भवति न किंचिद्दुष्यति । त्रैशब्द्यं चेह साध्यम्, तच्चैवं सति सिद्धं भवतीति ॥७४॥

## ते प्राग्धातोः ॥ १ । ४ । ८० ॥

किमिदं प्राग्धातुवचनं प्रयोगनियमार्थम्—'एते प्रागेव धातोः प्रयोक्तव्याः, आहोस्वित्संज्ञानियमार्थम्—'एते प्राक्चाऽप्राक्च प्रयोक्तव्याः, प्राक्प्रयुज्यमानानां गतिसंज्ञा भवती'ति । कश्चाऽत्र विशेषः ?

प्र०—त्वादनेन विभाषा प्राप्नोति, नित्या च गतिसंज्ञेष्यते । पूर्वेणेति । पुनःप्रसङ्गविज्ञानादिति भावः । च्व्यन्तस्य मा भूदिति । एकदेशविकृतस्याऽनन्यत्वात्प्राप्नोति । त्रैशब्द्यमिति । त्रय एव शब्दास्त्रैशब्द्यम् । लवणं कृत्वा, लवणंकृत्य, लवणीकृत्येति ॥७४॥

ते प्राग्धातोः । किमिदमिति । नियमद्वयसंभवात्प्रश्नः । तत्र यदा प्रयोगनियमस्तदा त इत्यनेन लब्धगत्युपसर्गसंज्ञाः परामृश्यन्ते । यदा तु संज्ञानियमस्तदा प्रादय

उ०—भावे नित्यविधिप्राप्त्या न दोष इति भावः । न च प्राप्तविभाषाविषये वैकल्पिकाऽभावे नित्याऽङ्गीकारे विकल्पशास्त्रवैयर्थ्यापत्तिः । अच्व्यन्ते चारितार्थ्यात् । भाष्ये—गतिसंज्ञासन्नियुक्तमिति । वैकल्पिकगतिसंज्ञासंनियुक्तमित्यर्थः । एकदेशेति । एवं च 'लवणीकृत्ये'त्यनिष्टं स्यादिति भावः । भाष्ये—लवणंशब्द इति । 'लवण'मिति गणपाठः । तस्य—'लवण'शब्दस्य लवणमित्यादेश इत्यर्थः । गतिसंज्ञासंनियुक्तत्वाद्गतिसंज्ञाऽभावे आदेशाऽभाव इति भाष्ये विभाषेत्युक्तम् । अनेन गतित्वाऽभावे च लवणीशब्दे पूर्वेण गतित्वमिति भावः ॥७४॥

ते प्राग्धातोः । ननु 'ते' इत्यनेन यदि लब्धसंज्ञानां परामर्शस्तदा द्वितीयपक्षानुत्थितिरेव, केवलानां परामर्शे त्वेतत्संज्ञारहितानामप्याद्यपक्षे व्यवहितप्रयोगानापत्तिरत आह—तत्र यदेति । अनिष्पादादिति । संज्ञानियमपक्षेऽस्य परिभाषात्वेनैकवाक्यतयैव संज्ञाविधानादिति भावः । प्रत्यासत्तेश्च गत्युपसर्गसंज्ञाविषय एव नियमो न निपातसंज्ञाविषयक इति बोध्यम् ।

१—क्वचिन्न । * कर्याद्विच्विडाचश्च १।४।६१.

**प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणस्येतिकरण-परप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः ॥ १ ॥**

प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणस्येतिकरणपरप्रतिषेधो वक्तव्यः† । किं प्रयोजनम् ? 'अनिष्टशब्दनिवृत्त्यर्थः' । अनिष्टशब्दता मा भूदिति ।

**छन्दसि परव्यवहितवचनं च ॥ २ ॥**

'छन्दसि परेऽपि' 'व्यवहिताश्च' [ १. ४. ८१; ८२ ] इति वक्तव्यम् ।

**संज्ञानियमे सिद्धम् ॥ ३ ॥**

संज्ञानियमे ['सति] सिद्धमेतद्भवति । अस्तु तर्हि संज्ञानियमः ।

**उभयोरनर्थकं वचनमनिष्टाऽदर्शनात् ॥ ४ ॥**

उभयोरपि पक्षयोर्वचनमनर्थकम् । किं कारणम् ? 'अनिष्टाऽदर्शनात्' । न हि कश्चित्प्रपचतीति प्रयोक्तव्ये 'पचति प्रे'ति प्रयुङ्क्ते । यदि चाऽनिष्टं दृश्येत, ततो यत्नार्हं स्यात् ।

---

प्र०–उपनिषत्पर्यन्ताः स्वरूपेणैव प्रत्यवमृश्यन्ते, संज्ञाया अनिष्पादात् । अनेनैकवाक्यतामापन्नैः पूर्वसूत्रैस्तस्या विधानात् ।

अनुकरणस्येति । 'अनुकरणं चानितिपर'मित्यत्रैतद्व्याख्यातम् । संज्ञानियमे सिद्धमिति । 'अनितिपर'मिति न कर्त्तव्यम्, अनेनैव नियमेन 'खाडिति कृत्वे'त्यत्र संज्ञानिरासस्य सिद्धत्वात् । उत्तरसूत्रद्वयं च न कर्तव्यं भवति । परव्यवहितानां च गत्युपसर्गसंज्ञयोर्निवारणान्न तु प्रयोगस्येत्यर्थः । अस्त्विति । लाघवादस्यैव पक्षस्य युक्तत्वात् ।

उभयोरिति । भाषायां परव्यवहितप्रयोगो न दृश्यते, तत्र किं प्रयोगनियमेन वा संज्ञानियमेन वा । यत्र हि लोके सङ्कीर्णः प्रयोगो, यथा गौगाविति, तत्राऽसाधुपरिहाराय साध्वनुज्ञानं कर्तव्यम् । न त्वसङ्कीर्ण एव प्रयोगे स्थिते शास्त्रस्य किंचिदस्ति प्रयोजनम् । छन्दसि तु परव्यवहितप्रयोगो दृश्यत एव ।

---

उ०–ननु संज्ञानियमे इदं व्यर्थम्, अप्राक्प्रयुज्यमानानामपि संज्ञायां जातायामनिष्टाऽभावादत आह—अनितीति । एवं चैवमाद्यकरणमेवाऽत्र पक्षे सूत्रस्य फलमिति भावः । न तु प्रयोगस्येति । न चाऽप्राप्तसंज्ञानां परव्यवहितानां संज्ञार्थमुत्तरसूत्रम्, फलाभावात्, परव्यहितानामेकाकिनामेव छन्दसि प्रयोगेण 'गतिर्गता'विति फलस्य वक्तुमशक्यत्वात् । एवं च संज्ञानियमे प्रयोगनियमपक्षीयफलसिद्धिः, त्रितयाऽकरणलाघवं चेति भावः । नन्वापाद्यमानव्यवहितपरप्रयोगनिवृत्तये सूत्रं स्यादत आह—भाषायामिति । एवं चाऽनभिधानेन प्रत्याख्यानमिति भावः । न दृश्यत इति । 'शिष्टानां यज्ञकर्मणोऽन्यत्रापी'ति शेषः । द्वयोरप्युप-

---

† अनुकरण चानितिप म् १. ४. ६२. १–सर्वाचन्न ।

## उपसर्जनसन्निपाते तु पूर्वपरव्यवस्थार्थम् ॥ ५ ॥

उपसर्जनसन्निपाते तु पूर्वपरव्यवस्थार्थमेतद्वक्तव्यम्—'ऋषभं कूलमुद्रुजम्', 'ऋषभं कूलमुद्वहम्'* । अत्र गतेः प्राग्धातोः प्रयोगो यथा स्यात् ।

यद्युपसर्जनसन्निपाते पूर्वपरव्यवस्थार्थमिदमुच्यते, 'सुकटङ्कराणि† वीरणानी'त्यत्र गतेः प्राग्धातोः प्रयोगः प्राप्नोति । आचार्यप्रवृत्तिर्ज्ञापयति—'नाऽत्र गतेः प्राक्प्रयोगो भवती'ति यदयम् 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' [ ३. ३. १२६ ] इति खकारमनुबन्धं करोति । कथं कृत्वा ज्ञापकम् ? खित्करण एतत्प्रयोजनं 'खिती'ति मुम् यथा स्यादिति‡ । यदि चाऽत्र गतेः प्राक्प्रयोगः स्यात्, खित्करणमनर्थकं स्यात् । अस्त्वत्र मुम् । 'अनव्ययस्ये'ति प्रतिषेधो भविष्यति‡ । पश्यति त्वाचार्यो 'नात्र गतेः प्राग्धातोः प्रयोगो भवती'ति, ततः खकारमनुबन्धं करोति ।

नैतदस्ति ज्ञापकम् । यद्यत्र[1] गतेः प्राक्प्रयोगः स्यात्, स्यादेवाऽत्र मुमा-

प्र०- उपसर्जनसंन्निपात इति । यद्यपि लोके विपरीतः प्रयोगो न दृश्यते, तथापि 'कूलमुद्रुज'मित्यादौ द्वयोरप्युपपदत्वात्समासे कृते'उपसर्जनं पूर्व'मिति शास्त्रदर्शनात्पर्यायेण पूर्वनिपातेन भाव्यं, कूलमुद्रुजम् उत्कूलंरुजमित्येवं यो भ्राम्येत्तं प्रतीदं सूत्रं कर्तव्यमित्यर्थः । सुकटङ्कराणीति । सुखेन कटाः क्रियन्त इति 'कर्तृकर्मणोश्च भूकृञो'रिति खल् । तत्राऽस्मान्नियमात्कटंसुकराणीति प्राप्नोति । अस्त्वत्रेति । शास्त्रेण प्राप्नोतु, प्रतिषेधात्तु नैव प्रयुज्यत इत्यर्थः । खित्करणादव्ययस्यापि भवत्विति चेत्, नैतदस्ति । 'अनव्ययस्ये'ति निषेधस्य प्रत्यक्षत्वाद्बाधितुमशक्यत्वात् । प्रयोगनियमस्य त्वन्यत्र सावकाशत्वाद्बाधेऽपि न काचित् क्षतिः । स्यादेवेति । 'कटंसुकराणी'त्येवमपि प्रयोगे

उ०-पदत्वादिति । यद्यपि समासः क्रमेणैव, तथापि कदाचित्पूर्वं कूलशब्देन समासे तत उदेति विपरीतः प्रयोगः स्यादिति भावः । तथा च सूत्रसार्थक्याय प्रयोगनियमपक्ष एवादर्तव्यः । तस्मिंश्च कृते'ऽनिती'त्याद्यपि सर्वं कार्यमिति तात्पर्यम् । ननु सुस्थितं कटं कुर्वन्तीत्यर्थान्नाऽयं गतिरुपसर्गो वेति न दोषोऽत आह—सुखेनेति । उत्तरसूत्रे एव खलः खित्त्वस्य सफलत्वादिति भावः । ईषच्छब्दयोगे तु स खलनाऽनभिधानात् । अन्यथेषदाढ्यंभवं भवता, ईषदाढ्यङ्करो मैत्रो भवतेत्यादावीषतोऽगतित्वेन खित्त्वस्य चारितार्थ्याज्ज्ञाप्याऽसङ्गतिरेव स्यादिति बोध्यम् ।

नन्वव्यन्तत्वात्सोर्मुमः प्राप्तिरस्त्येवेत्यत आह भाष्ये—अस्त्वत्रेति । प्राप्नोत्वित्यर्थः । प्रत्यक्षत्वादिति । विधित्वादित्यर्थः । प्रयोगनियमस्येति । एवं च विधिबाधापेक्षयाऽन्यत्र

* उदि कूले रुजिवहोः ३. २. ३१. † कर्तृकर्मणोश्च भूकृञोः ३. ३. १२७.

‡ खित्यनव्ययस्य; अरुर्द्विषदजन्तस्य मुम् ६. ३. ६६; ६७.

१—'यद्यप्यत्र' इति कीलहार्नपाठस्तु न मनोरमः ।

गमः। कथम्? 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवती'ति। तस्मान्नार्थ एवमर्थेन प्राग्धातुवचनेन॥ कथम्—'ऋषभं कूलमुद्रुजम्', 'ऋषभं कूलमुद्वहम्'? नैष दोषः। नैष उदिरुपपदम्। किं तर्हि? विशेषणम्। उदि कूले रुजिवहोः' [ ३. २. ३१ ] उत्पूर्वाभ्यां रुजिवहिभ्यां कूल उपपद इति ॥८०॥

## कर्मप्रवचनीयाः ॥ १। ४। ८३ ॥

किमर्थं महती संज्ञा क्रियते? अन्वर्थसंज्ञा यथा विज्ञायेत—'कर्म प्रोक्तवन्तः कर्मप्रवचनीया' इति॥ के पुनः कर्म प्रोक्तवन्तः? ये संप्रति क्रियां नाहुः। के च संप्रति क्रियां नाहुः? येऽप्रयुज्यमानस्य क्रियामाहुस्ते कर्म-

प्र०—स्यादेव सुमित्यर्थः ॥८०॥

कर्मप्रवचनीयाः। किमर्थमिति। लाघवार्थत्वात्संज्ञाकरणस्य लाघवप्रकर्षाय एकाक्षरा द्व्यक्षरा वा संज्ञा कार्येति भावः। अन्वर्थसंज्ञेति। अर्थमनुगता, अर्थेन वा अनुगता, अङ्गीकृतप्रवृत्तिनिमित्ता या सा संज्ञाऽन्वर्थसंज्ञा। कर्म प्रोक्तवन्त इति। प्रयुज्यमाने क्रियापदे क्रियाविशेषं द्योतितवन्त इत्यर्थः। क्रियां नाहुरिति। क्रियागतं विशेषं न द्योतयन्तीत्यर्थः। येऽप्रयुज्यमानस्य क्रियामाहुरिति। 'शाकल्यस्य संहितामनु प्रावर्ष'दिति वाक्येऽप्रयुज्यमानस्य निशमेर्या क्रिया तत्कृतो वर्षसंहितयोर्हेतुहेतुमद्भावलक्षणः सम्बन्ध इत्ययमर्थोऽनुशब्दसन्निधौ प्रतीयते। तदयमनुः संहितामिति द्वितीय-

उ०—चरितार्थस्य परिभाषारूपत्वेन गुणभूतस्य बाध उचित इति भावः। भाष्ये—एवमर्थेनेति। प्रयोगनियमार्थेनेत्यर्थः। सुकटङ्कराणीत्यसिद्धेरिति भावः। ननु सूत्राऽभावे, संज्ञानियमेऽपि वोत्कूलंरुज इति विपरीतप्रयोगापत्तिरत आह भाष्ये—नैष उदिरिति। तस्मात्प्रयोगनियमार्थं, संज्ञानियमार्थं वोभयथापि सूत्रं न कार्यमेव। आद्ये सुकटङ्कराणीत्यसिद्धेः, अन्त्ये कटंसुकराणीत्यस्यांऽप्यापत्तेः। अनभिधानेन वारणे तु व्यर्थमेव सूत्रमित्याशयः। यत्तु भ्रमनिवृत्त्यर्थेपि सूत्रे संज्ञानियमपक्ष एवादर्त्तव्यः कटंसुकराणि सुकटङ्कराणीत्युभयविधप्रयोगसिद्धये इति स्थितमिति। तन्न। कटंसुकराणीत्यस्येष्टत्वे मानाभावात्। अत्र गतेः प्राग्धातोः प्रयोगः प्राप्नोति। 'यद्यत्र गतेः प्राक्प्रयोगः स्या'दित्यादिशब्दैस्तदनिष्टत्वस्यैव लाभादिति दिक् ॥८०॥

कर्मप्रवचनीयाः। ननु संज्ञां विना तत्प्रयुक्तकार्याऽसिद्धिरत आह—लाघवार्थत्वादिति। ननु सर्वाऽपि संज्ञा-अर्थं प्रयोजनमनुगतैवेत्यत आह—अर्थमिति। अर्थशब्दोऽभिधेयपर इति भावः। अङ्गीकृतप्रवृत्तिनिमित्तेति। अङ्गीकृतयोगाऽर्थप्रवृत्तिनिमित्तेत्यर्थः। एवं च योगरूढा संज्ञाऽन्वर्थसंज्ञोच्यते। भाष्ये—कर्म प्रोक्तवन्त इति। कर्म—क्रियां क्रियागतविशेषमित्यर्थः। भूते 'कृत्यल्युटो बहुल'मिति कर्त्तर्यनीयः। ननु निपातानां द्योतकत्वात् 'प्रोक्तवन्त' इत्यसङ्गतमत आह—प्रयुज्यमाने इति। 'सुखमनुबभूवे'त्यादौ द्योतकेपि प्रोक्तवत्त्वमस्त्येवेत्यर्थः।

ननु निपाताः क्रियां कदापि न वदन्तीति 'संप्रती'त्ययुक्तमत आह—क्रियागतमिति। यदि संप्रति क्रियागतं विशेषं न द्योतयन्ति, किं तर्हि द्योतयन्तीत्यत्राह भाष्ये—येऽप्रयुज्य-

प्रवचनीयाः ॥८३॥

प्र०—याऽभिहितं संबन्धमवच्छिनत्ति। विशिष्टक्रियाभिजनितत्वेन, हेतुहेतुमद्भावलक्षण-विशेषरूपतया वा तत्सन्निधौ सम्बन्धस्य संप्रत्ययात्। तथा हि—क्रियायास्तावदयं न वाचकः, कारकविभक्तिप्रसङ्गात्, शेषविभक्तिसम्बन्धस्याऽप्रतीतिप्रसङ्गाच्च। अत एव न क्रियापदाक्षेपकः। यथा 'प्रादेशं विपरिलिखती'ति विमाय परिलिखतीति विशब्दो विमानक्रियाया आक्षेपक इति 'प्रादेश'मिति कर्मणि द्वितीया। क्रियाविशेषद्योतकत्वमपि क्रियापदसन्निधाने दृष्टमिति अत्र न सम्भवतीति पारिशेष्यात्तत्सम्बन्धावच्छेद-हेतुरनुः सम्पद्यते। तथा चोक्तं हरिणा—

'क्रियाया द्योतको नाऽयं न संबन्धस्य वाचकः।
नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः॥' इति।

तत्र 'क्रियामाहु'रिति क्रियाशब्देन तदुपजनितसम्बन्धविशेष उपचारादुच्यते। 'आहु'रित्यस्याऽपि द्योतयन्तीत्ययमर्थः। क्वचित्तु प्रवृत्तिनिमित्ताऽभावेऽपि वचन-सामर्थ्यादियं संज्ञा प्रवर्तते। यथा 'सुः पूजाया'मिति सोः षत्वादिनिवृत्तये गत्युपसर्ग-संज्ञाबाधनार्था ॥८३॥

उ०—मानस्येति। तद्वाच्यां क्रियां—तद्वाच्यक्रियाकृतसंबन्धविशेषम्। तदेवोपपादयति—शाकल्यस्येति। तत्र संबन्धावच्छेदप्रकारमाह—विशिष्टक्रियेति। निशमनक्रियाजनित-संबन्धेन संहितासंबन्धि वर्षणमिति बोध इति भावः। एवं बोधाननुभवादाह—हेतु-हेतुमदिति। संहिताहेतुकं प्रवर्षणमिति बोधः। वस्तुतः क्रियाद्वारको यः संबन्धः स हेतु-त्वादिना भासते इति तत्त्वम्। क्रियायाः—क्रियागतविशेषस्य, वाचको—द्योतक इत्यर्थः। कारकविभक्तिप्रसङ्गादिति। 'वृक्षं वृक्षं प्रति सिञ्चती'त्यादा वुपपदविभक्ते'रिति न्यायेन कर्मणि द्वितीयैव स्यादित्यर्थः। मम तु प्रतिद्योत्यसंबन्धेनान्वये कारकविभक्तेरप्राप्तावियमिति भावः। ननु को विशेषोऽत आह—शेषेति। शेषविभक्त्यर्थसम्बन्धस्येत्यर्थः। अनेन कारक-विभक्त्यर्थस्यापि सम्बन्धत्वं सूचितम्। सम्बन्धस्याऽपि न वाचकः, द्वितीययैव तत्प्रतीतेः। अत एवेति। सम्बन्धाऽप्रतीतिप्रसङ्गादेवेत्यर्थः। तदाक्षेपे तां प्रति कर्मत्वादिनैवाऽन्वय-सम्भवादिति भावः। 'कर्मप्रवचनीययुक्ते' इत्यस्य वैयर्थ्यं च स्यादित्यपि बोध्यम्। क्रिया-गतविशेषद्योतकत्वाऽभावे युक्त्यन्तरमप्याह—क्रियाविशेषेत्यादि। न संभवतीति। 'अनु हरिं सुरा' इत्यादौ क्रियापदाऽसन्निधानादिति भावः। पारिशेष्यादिति। एवं च संबन्ध-सामान्ये प्राप्तषष्ठीबाधाय द्वितीयार्थमयमारम्भ इति भावः। कारिकायां 'क्रियाया' इत्यस्य—क्रियागतविशेषस्येत्यर्थः। भेदको—द्योतकः ॥८३॥

## अनुर्लक्षणे ॥ १ । ४ । ८४ ॥

किमर्थमिदमुच्यते ? कर्मप्रवचनीयसंज्ञा यथा स्यात्, गत्युपसर्गसंज्ञे मा भूतामिति । किं च स्यात् ? शाकल्यस्य संहितामनु प्रावर्षत्—'गतिर्गतौ' [ ८. १. ७० ] इति निघातः प्रसज्येत ।

यद्येवं वेरपि कर्मप्रवचनीयसंज्ञा वक्तव्या । वेरपि निघातो नेष्यते—'प्रादेशं प्रादेशं विपरिलिखति' । अस्त्यत्र विशेषः । नाऽत्र वेर्लिखिं प्रति क्रियायोगः । किं तर्हि ? अप्रयुज्यमानम्—'प्रादेशं प्रादेशं विमाय परिलिखती'ति ।

यद्येवमनोरपि कर्मप्रवचनीयसंज्ञया नार्थः । अनोरपि हि न वृषिं प्रति क्रियायोगः । किं तर्हि ? अप्रयुज्यमानम्—शाकल्येन सुकृतां संहितामनुनिशम्य देवः प्रावर्षत् । इदं तर्हि प्रयोजनं, द्वितीया यथा स्यात्—'कर्मप्रवचनीययुक्ते द्वितीया' [ २. ३. ८ ] इति ॥ अत उत्तरं पठति—

प्र०- अनुर्ल । किमर्थमिति । 'लक्षणेत्थंभूताख्याने'त्यनेनैव सिद्धत्वादिति प्रश्नः । इतरः शिष्यबुद्धिपरीक्षार्थं जात्युत्तरं ददाति—कर्मप्रवचनीयसंज्ञेति । निघात इति । निपातत्वादाद्युदात्तोऽत्राऽनुरिष्यते । नाऽत्र वेरिति । न हि प्रादेशो लिख्यते । किं तर्हीति । 'धातुं प्रती'ति वाक्यशेषः । प्रादेशे च योग्या क्रिया वेराक्षेप्येति सामर्थ्याद्विमानक्रियाया आक्षेपः । शाकल्येन सुकृतामिति । अत्र वाक्ये या निशमनक्रिया तत्कृतो वर्षसंहितयोः सम्बन्धावच्छेदोऽनुना प्रतिपाद्यत इति नास्ति वर्षक्रियायोगोऽनोरित्यर्थः ।

उ०- अनुर्लक्षणे । जात्युत्तरम्—असदुत्तरम् । तत्त्वं च 'लक्षणेत्थ'मित्यनेनैव गत्यादिसंज्ञाबाधसिद्धेरिति भावः । न हि प्रादेश इति । किं तु तत्परिच्छिन्नं भूम्यादीति भावः । धातुं प्रतीति । अप्रयुज्यमानधातुबोध्यक्रियया योगे इति फलितोऽर्थः । ननु या काचित् क्रियाऽऽक्षेप्येत्यत आह—प्रादेशे चेति । प्रादेशान्वये इत्यक्षरार्थः । एवं च 'गतिर्गता'वित्यत्र प्रत्यासत्त्यैकक्रियानिरूपितगतित्ववतोर्ग्रहणेन नाऽत्र निघातप्राप्तिरिति भावः । ननु शाकल्यस्य संहितामित्याद्युदाहरणे संबन्धावच्छेदकताया अन्वादीनामुक्तत्वेन क्रियापदाक्षेपोऽसङ्गतः, द्वितीया यथा स्यादित्युत्तरग्रन्थाऽसङ्गतिश्चेत्यत आह—अत्र वाक्ये इति । 'शाकल्येन सुकृता'मिति वाक्ये । प्रतिपाद्यते इति । 'शाकल्यस्य संहितामित्युदाहरणे' इति शेषः । गत्यादिसंज्ञापवादत्वं त्वस्या एकशेषस्य द्वन्द्वापवादत्ववद्बोध्यम् । 'शाकल्येन सुकृता'मित्युक्त्या

## अनुर्लक्षणेवचनानर्थक्यं सामान्यकृतत्वात् ॥ १ ॥

अनुर्लक्षणेवचनमनर्थकम् । किं कारणम् ? 'सामान्यकृतत्वात्' । सामान्येनैवात्र कर्मप्रवचनीयसंज्ञा भविष्यति 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' [ १. ४. ९० ] इति ।

## हेत्वर्थं तु वचनम् ॥ २ ॥

हेत्वर्थमिदं वक्तव्यम् । हेतुः शाकल्यस्य संहिता वर्षस्य, न लक्षणम् । किं वक्तव्यमेतत् ? न हि कथमनुच्यमानं गंस्यते ? लक्षणं हि नाम स भवति येन पुनः पुनर्लक्ष्यते, न यः सकृदपि निमित्तत्वाय कल्पते । सकृच्चाऽसौ शाकल्येन सुकृतां संहितामनुनिशम्य देवः प्रावर्षत्[2] ।

स तर्हि तथा निर्देशः कर्तव्यो'ऽनुर्हेता'विति ॥ अथेदानीं लक्षणेन हेतु-रपि व्याप्तो नार्थोऽनेन । लक्षणेन हेतुरपि व्याप्तः । न ह्यवश्यं तदेव लक्षणं

प्र०- अनुर्लक्षण इति । सूत्राऽनुकरणमेतत् । सामान्यकृतत्वादिति । सामान्यं—साधारणं यत्सूत्रमर्थान्तरसंज्ञ्यन्तरनिर्देशात्, तेनैव कृतत्वात्—सिद्धत्वादित्यर्थः ।

हेत्वर्थमिति । हेतुरर्थः प्रयोजनम्-प्रयोजक एतस्य वचनस्येत्यर्थः । हेतुरिति । अन्वयव्यतिरेकाभ्यां वर्षं प्रति संहिताया कारणत्वाऽवगमादित्यर्थः । किं वक्तव्यमिति । हेतोर्लक्षणत्वं नास्तीति किं परिभाषितव्यमिति पृच्छति । येन पुनः पुनरिति । पौनःपुन्येन साहचर्यावगमे लक्ष्यलक्षणभावो भवतीति भावः ।

अथेदानीमिति । येनोक्तं 'स तर्हि तथे'ति, स एव सन्दिहानः पृच्छति । व्याप्त

उ०- तत्तदृषिकृतत्वं शाखास्वभ्युपैति । स्पष्टं चेदं 'तेन प्रोक्त'मितिसूत्रे भाष्ये । नास्ति वर्षेति । एवं च 'गतिर्गता'वित्यस्य न प्राप्तिः । क्रियायोगस्य तद्गतविशेषद्योतकतारूप एव गतिसंज्ञा-निमित्तमिति भावः । एवं चैतद्द्योत्यसंबन्धस्य क्रियान्वयेऽपि न क्षतिरिति तात्पर्यम् । अत उत्तरमिति—सार्वविभक्तिकस्तसिः । अस्योत्तरमित्यर्थः । नन्वनुरिति प्रथमान्तस्य 'वचन-मनर्थक'मित्यनेनाऽन्वयोऽनुचित इत्यनोरिति वक्तुमुचितमत आह—सूत्रेति । अनुर्लक्षणे इत्येतद्वचनमित्यर्थः । ननु तस्यापि विशेषत्वात् 'सामान्येने'त्ययुक्तमत आह–सामान्यमिति । ननु साध्यतयाऽस्य हेतुः प्रयोजनं नेत्यत आह—हेतुरिति । प्रयोजक इति । प्रयुज्यतेऽनेनेति व्युत्पत्तेः । भाष्ये—हेतुः शाकल्यस्येति । 'लक्षणेत्थ'मितिसूत्रे ज्ञापकस्यैव लक्षणशब्देन ग्रहाद्धेतोश्च तत्त्वाऽभावान्न तेन सिद्धिरित्यर्थः । तत्र हेतुत्वमुपपादयति—अन्वयेति ।

भाष्ये—येन पुनःपुनरिति । 'गृहीतसंबन्धेने'ति शेषः । लक्ष्यलक्षणभाव इति । तद्व्यवहार इत्यर्थः । न यः सकृदपीति । 'गृहीतसंबन्ध' इति शेषः । निमित्तत्वाय । तेन तत्कारणमेवेत्यर्थः । स तर्हीति । कृतेपि सूत्रे हेतोर्लक्षणशब्देन व्यवहाराऽभावादिति भावः ।

१—'वचनानर्थक्यम्' पा० । २—'प्रावर्षदिति'

भवति—येन पुनः पुनर्लक्ष्यते। किं तर्हि? यत्सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणं भवति। तद्यथा,—'अपि भवान् कमण्डलुपाणिं छात्रमद्राक्षी'-दिति। [1]सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवति।

[2]तदेव तर्हि प्रयोजनम्—द्वितीया यथा स्यात्, 'कर्मप्रवचनीययुक्ते द्वितीये'ति। एतदपि नास्ति प्रयोजनम्। सिद्धाऽत्र द्वितीया 'कर्मप्रवचनीय-युक्त' इत्येव। न सिध्यति। परत्वाद्धेत्वाश्रया तृतीया प्राप्नोति[3] * ॥८४॥

## आङ्मर्यादावचने ॥ १ । ४ । ८९ ॥

प्र०-इति। हेतुविषयत्वाल्लक्षणस्य तेन हेतुर्व्याप्तो भवति। लक्षणेनेति—सिद्धान्तवादी। तदपि लक्षणमिति। कार्योत्पत्तिनिमित्तमपि तद्विशेषावगमहेतुत्वाल्लक्षणं भवतीत्यर्थः। परत्वादिति। येन नाऽप्राप्तिन्यायेन कर्मप्रवचनीययुक्ते द्वितीया षष्ठ्या एव बाधिका। तां तु परत्वात्तृतीया बाधेत। पुनः संज्ञाविधाने तु स्थानान्तरप्राप्त्या द्वितीया हेतुतृतीयां बाधते ॥८४॥

आङ्मर्या। आङ्मर्यादाऽभीति। अन्यत्र मर्यादाऽभिविध्योर्भेदेन निर्देशदर्श-

उ०-ननु 'हेत्वर्थमिद'मित्युक्तवन्तं प्रति 'हेतोर्लक्षणत्वाऽभावादनुर्हेताविति वक्तव्य'मित्यन्येनोक्ते, 'अथेदानी'मितिग्रन्थः स्वरसतो हेत्वर्थवादिन इति लभ्यते, तन्न युक्तं, 'नार्थोऽनेने'ति वाक्य-शेषविरोधात्, नापि सूत्रप्रत्याख्यानवादिनः, तस्य विच्छिन्नत्वादत आह—येनोक्तमिति। ननु हेतुत्वं विना लक्षणत्वस्य विद्युद्वृक्षविषये सत्त्वेन, लक्षणत्वं विना हेतुत्वस्य च दण्डादौ दर्शनेन 'लक्षणेन हेतुर्व्याप्त' इत्यसङ्गतमत आह—हेतुविषयत्वादिति। 'प्रकृतोदाहरणे' इति शेषः। 'व्याप्त' इत्यस्य संबद्ध इत्यर्थो द्रष्टव्यः। ननु भूयो दर्शनाऽभावात्कथं ज्ञापकत्वमत आह भाष्ये—न ह्यवश्यमिति। तद्विशेषावगमेति। कालविशेषाऽवच्छिन्नवृक्षव्यवगमेत्यर्थः। यो मे कमण्डलुपाणिश्छात्रः पूर्वं दृष्टः सोऽद्य त्वया दृष्ट इति—'अपि भवा'निति वाक्यार्थः। लक्षणत्वं न व्याप्यत्वाऽपरपर्यायमेव, किं तूपलक्षणकत्वरूपमपीति भावः।

एवं च 'लक्षणेत्थ'मित्यत्राऽपि लक्षणशब्देन हेतोरभिधानादिदं व्यर्थं स्यादत आह भाष्ये—तदेवेति। ननु विध्यन्तरपूर्वकत्वेन द्वितीयाया अपवादत्वात्कथं तृतीयावाध्यत्वमत आह—येन नेति। बाधेतेति। यत्र हेतुत्वं न भासते तत्र 'लक्षणेत्थ'मित्येतत्संज्ञाप्रयुक्ता द्वितीया सावकाशा। यथा 'वृक्षमनु विद्योतते' इत्यादौ, 'धनेन कुल'मित्यादौ चाऽनोर-भावाद्धेतुतृतीया सावकाशेति भावः। ननु कृतेऽप्यस्मिन् द्वितीयया कथं बाधोऽत आह—पुनः संज्ञेति। पुनः संज्ञाविधानेन पुनर्द्वितीयाविधानं कल्प्यते। तच्च तृतीयाप्राप्त्युत्तर-कालत्वात्स्थानान्तरप्राप्तमित्युच्यते इति बोध्यम् ॥८४॥

आङ्मर्यादा। ननु परिच्छेदहेतुमात्रं मर्यादेति सिद्धमेवाऽभिविधावपीत्यत आह—

१—'सकृदप्यसौ'। २-'एतदेव'। ३—'एवमर्थमिदमुच्यते' इत्यधिकं क्वचिद् दृश्यते।

* हेतौ २. ३. २३.

[1]आङ्मर्यादाऽभिविध्योरिति वक्तव्यम्। इहापि यथा स्यात्—'आकुमारं[†] यशः पाणिने'रिति ॥ तत्तर्हि वक्तव्यम्? न वक्तव्यम्। 'मर्यादावचन' इत्येव सिद्धम्। एषाऽस्य यशसो मर्यादा ॥८९॥

**लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ १ । ४ । ९० ॥**

कस्य लक्षणादयोऽर्था निर्दिश्यन्ते? वृक्षादीनाम् ॥ किमर्थं पुनरिदमुच्यते? कर्मप्रवचनीयसंज्ञा यथा स्यात्, गत्युपसर्गसंज्ञे मा भूतामिति। नैतदस्ति प्रयोजनम्। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो न च वृक्षादीन्प्रति क्रियायोगः।

---

८०-नात्—विना तेनेति मर्यादा, सह तेनेत्यभिविधिरित्यर्थभेदं मत्वा वार्तिकं पठति। आकुमारमिति। कुमारानपि यशःप्राप्तमित्यर्थः। मर्यादावचन इत्येवेति। वचनग्रहणस्येदं प्रयोजनमवान्तरभेदपरिहारेण परिच्छेदहेतुमात्रं मर्यादा यथा गृह्येत ॥८९॥

लक्षणेत्थम्भू। कस्येति। किं यथा विभक्तिसमीपादयोऽन्यथार्थास्तथा लक्षणादयः प्रत्यादीनाम्, अथ पदान्तरवाच्याः सन्तो विषयभावेन संज्ञायाः प्रत्यादीनां वा निर्दिष्टा इति प्रश्नः। वृक्षादीनामिति। 'वृक्षं प्रति विद्योतते विद्यु'दिति वृक्षो विद्योतनस्य लक्षणम्। प्रत्यादयस्तु प्राप्तिक्रियाजनितसंबन्धविशेषाऽवच्छेदहेतवः। किमर्थमिति। 'वृक्षं वृक्षं प्रति सिञ्चती'त्यत्र कर्मत्वाद् द्वितीया सिद्धेति तद्विधानार्थं

---

उ०-अन्यत्रेति। अवान्तरेति। मर्यादाविशेष एवाऽभिविधिः। मर्यादैव यदा कार्येण युज्यते तदाऽभिविधिः, यदा तु न तदा मर्यादेति विशेषाऽविवक्षणादिति भावः। तदुक्तं भाष्ये—एषाऽस्य यशसो मर्यादेति। अस्य—पाणिनेः। एषा—कुमाररूपा। मर्यादा—परिच्छेदहेतुरित्यर्थः ॥८९॥

लक्षणेत्थं। प्रत्यादीनां वेति। तेषां तद्विषयत्वं च तद्घटितसंबन्धपरिच्छेदकत्वाद्बोध्यम्। भाष्ये—वृक्षादीनामिति। तदुत्तरविभक्तीनामित्यर्थः। प्रत्यादयस्तु तद्द्योतका इति भावः। संबन्धविशेषेति। वृक्षविद्योतनयोः प्राप्तिक्रियाजनितो लक्ष्यलक्षणभाव इति भावः। महासंज्ञाकरणेन क्रियाजनितसंबन्धद्योतकताया एव प्रायेण कर्मप्रवचनीयानामुचितत्वादिति तात्पर्यम्। ननु द्वितीयार्थमिदमावश्यकमत आह—वृक्षं वृक्षं प्रतीति। क्रियायोगाऽभावादिति। तेषां समभिव्याहृतविभक्त्यर्थसंबन्धमात्रद्योतकत्वादिति भावः।

भाष्ये-न च वृक्षादीन्प्रतीति। प्रतियोगे वृक्षादीनिति द्वितीया संबन्धार्थिका वृक्षाद्युत्तर-

---

१-इतः पूर्वं केचिद्वार्तिकमधीयते 'आङ्मर्यादाभिविध्योरिति।

† पञ्चम्यपाङ्परिभिः २. ३. १०; आङ्मर्यादाभिविध्योः २. १. १३.

इदं तर्हि प्रयोजनम्, द्वितीया यथा स्यात्—'कर्मप्रवचनीययुक्ते द्वितीया [ २. ३. ८ ] इति । वृक्षं प्रति विद्योतते[1] वृक्षमनु विद्योतत इति[2] ॥९०॥

**अधिपरी अनर्थकौ ॥ १ । ४ । ९३ ॥**

किमर्थमधिपर्योरनर्थकयोः कर्मप्रवचनीयसंज्ञोच्यते ? कर्मप्रवचनीयसंज्ञा यथा स्यात्, गत्युपसर्गसंज्ञे मा भूतामिति । नैतदस्ति प्रयोजनम् । यत्क्रियायुक्तौ तं प्रति गत्युपसर्गसंज्ञौ भवतः, अनर्थकौ चेमौ ।

इदं तर्हि प्रयोजनम्, पञ्चमी यथा स्यात्—'पञ्चम्यपाङ्परिभिः' [ २. ३. १० ] इति, कुतः पर्यागम्यत इति ।

सिद्धाऽत्र पञ्चम्यपादान इत्येव† । आतश्चापादानपञ्चम्येषा[3], यत्राधिशब्देन योगे पञ्चमी न विधीयते तत्रापि श्रूयते[4]—'कुतोऽध्यागम्यत' इति ।

एवं तर्हि सिद्धे सति यदनर्थकयोर्गत्युपसर्गसंज्ञाबाधिकां कर्मप्रवचनीयसंज्ञां शास्ति तज्ज्ञापयत्याचार्यो'ऽनर्थकानामप्येषां भवत्यर्थवत्कृत'मिति । किमेतस्य ज्ञापने प्रयोजनम् ? निपातस्याऽनर्थकस्य प्रातिपदिकत्वं चोदितं‡ तन्न वक्तव्यं भवति ।

प०-तावदिदं न भवति । प्रत्यादीनां च क्रियाविशेषाऽनवद्योतनात्क्रियाऽयोगाऽभावाद्-गत्युपसर्गसंज्ञाबाधनाऽर्थमपि नोपयुज्यत इति प्रश्नः । वृक्षं प्रतीति । अकर्मकत्वाद् द्युतेः कर्मणि द्वितीया नास्ति ॥९०॥

अधिपरी । किमर्थमिति । अनर्थकयोः क्रियायोगाऽभावात्संज्ञान्तरबाधनार्थं संज्ञाविधानं नोपयुज्यते । नाऽपि परियोगे पञ्चमीविधानार्थम् । अपेन साहचर्याद्वर्जन-

उ०-विभक्त्यर्थसंबन्धिनामेषामित्यर्थः । तत्संबन्धश्च तदर्थसम्बन्धपरिच्छेदकत्वेनेति बोध्यम् । अकर्मकत्वादिति । एवमर्थमर्थं प्रति शब्दनिवेश इत्यादौ निविशत्यधिकरणे द्वितीयाऽर्थमपीदं बोध्यम् । सकर्मकयोगेपि कर्मत्वाऽविवक्षायां सम्बन्धत्वेन विवक्षायां प्रत्यादिद्योत्यसम्बन्धे-नाऽन्वयविवक्षायां च द्वितीयार्थमित्यपि बोध्यम् । एतेनाऽकर्मकत्वाद् द्वितीया नास्तीति कैयटोक्तेः सकर्मकधातुयोगे कर्मणि द्वितीययैव सिद्धमिति भ्राम्यन्तः परास्ताः ॥९०॥

अधिपरी । ननु गत्यादिसंज्ञाबाधनं फलमित्यत आह—अनर्थकयोरिति । पञ्चमीति । 'पञ्चम्यपाङ्परिभिरिति सूत्रेणे'ति शेषः । किंचाऽधिशब्दयोगे पञ्चम्यविधानेऽपि यथाऽ-

१—'वृक्षं परि विद्योतते' इत्यधिकं क्वचित् । २—'एतमर्थमिदमुच्यते' इत्यधिकं क्वचित् ।
† अपादाने पञ्चमी २. ३. २८. ३—पञ्चम्येव'पा० । ४—'च श्रूयते' पा० ।
‡ निपातस्यानर्थकस्य प्रातिपदिकत्वम् ? २. ४५ वा० १२.

अथवा नैवेमावनर्थकौ । किं तर्ह्यनर्थकावित्युच्यते ? [1]अनर्थान्तरवाचिनावनर्थकौ, धातुनोक्तां क्रियामाहतुः । तदविशिष्टं भवति, यथा पयः शङ्खे ।

यद्येवं धातुनोक्तत्वात्तस्यार्थस्योपसर्गप्रयोगो न प्राप्नोति—'उक्तार्थानाम-

प्र०-विषयपरियोगे तस्या विधानादपादानसद्भावे चाऽधिशब्दस्य प्रयोग इव परियोगे तन्निमित्तायाः पञ्चम्याः सिद्धत्वादिति प्रश्नः ।

अथवेति । पूर्वाऽपरितोषेणेदमुच्यते । यस्य शब्दस्य वाच्यं द्योत्यं वा वस्तु न संभवति तस्य वाक्यार्थेऽनुपयोगात्प्रयोगानुपपत्तिः । तस्मादर्थशब्द इह प्रयोजनवाची, तेन योऽर्थोऽनयोर्द्योत्यस्तस्य प्रकरणादिवशात्संप्रत्ययान्निष्प्रयोजनावेतावुच्येते । धातुनोक्तामिति । प्रकरणादिसामर्थ्यावगतविशेषां धातुनोक्तां क्रियामित्यर्थः । आहतुरिति । द्योतयत इत्यर्थः । तदविशिष्टमिति । तत्—क्रियालक्षणं वस्त्वविशिष्टम् । अधिपरिसन्निधानेऽप्यनाहितविशेषमित्यर्थः । यथेति । शङ्खे न्यस्तं क्षीरं शौक्ल्येनाऽभिन्नं शङ्खादित्यर्थः ।

यद्येवमिति । धातोर्वाचकत्वात्तस्य प्रयोगं नाक्षिपति, तेन विना तयोः प्रयोगाऽसंभवात् । उपसर्गग्रहणं चाऽधिपर्योरुपलक्षणार्थम् । उक्तार्थानामपीति । प्रकरणा-

उ०-पादानत्वात्सा तथा परियोगेऽपीत्याह—अपादानेति । आगमनादिक्रियानिरूपितेत्यर्थः । द्वितीयार्थमपि न, अर्थाऽभावेन कर्मप्रवचनीययुक्तत्वस्य निरूपयितुमशक्यत्वादिति भावः । पूर्वाऽपरितोषेणेति । 'नेमावनर्थका'विति भाष्येण स्फुटं तदावेदनादिति भावः । किं चोक्ताऽर्थे ज्ञापितेपि न चारितार्थ्यं, क्रियागतविशेषद्योतकत्वरूपक्रियायोगाऽभावेन गतिसंज्ञाद्यप्राप्तेरिति बोध्यम् । प्रयोगानुपपत्तिरिति । तस्माद् द्योत्यार्थेनाऽर्थवत्त्वमस्याऽप्येषितव्यमित्यर्थः । नन्वेवमनर्थकावित्यसङ्गतमत आह—तस्मादिति । अर्थान्तरबोधकत्वाऽभावान्निष्प्रयोजनावित्यर्थः । ननु धातुना क्रियोक्तावपि तद्गतोपरिभावसर्वतोभावरूपविशेषद्योतनमनयोः फलमत आह—प्रकरणेति । पूर्वं क्रियाप्रक्रमेण 'त'दिति नपुंसकमनुपपन्नमत आह—तदिति । एवं च क्रियायोगसत्त्वात्प्राप्तगत्यादिसंज्ञाबाधनार्थमिदमावश्यकमिति भावः ।

ननु विपरीतं कुतो न शङ्कितमत आह—धातोरिति । धातोः प्रयोगं व्यर्थत्वेन नाक्षिपतीत्यर्थः । तदेवाह—तेन विनेति । तयोर्वाचकत्वाऽभावादित्यर्थः । नन्वनयोरुपसर्गत्वाऽभावादुपसर्गेत्युपपन्नमत आह—उपसर्गेति । 'आगच्छत्यध्यागच्छती'त्यादिपाठः । अत्रेदं बोध्यम्—कैयटोक्तयावयावकदृष्टान्तेन, भाष्योक्तेनाऽपूपौ द्वाविति दृष्टान्तेन वाऽऽगच्छतीत्यर्थापेक्षयाऽधिकोऽर्थो नाऽनयोर्द्योत्यो, नापि प्रकरणादिनाऽप्यागच्छतीत्यस्योपरिभावसर्वतोभावार्थकत्वं, किं त्वागमनमात्रार्थकत्वमेव, अध्यागच्छतीत्याद्यप्यागमनमात्रार्थकमेव । किं तु बोद्धुस्ततो मिलितादेवार्थबोधेन तस्याप्यनुवादकत्वेन धात्वर्थद्योतकतेति व्यवहारः । फलं तु

१—अर्थान्तराऽबोधकौ निष्प्रयोजनावित्यर्थः ।

प्रयोग' इति। उक्तार्थानामपि प्रयोगो दृश्यते। तद्यथा,—अपूपौ द्वावानय, ब्राह्मणौ द्वावानयेति ॥९३॥

**अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ॥ १ । ४ । ९६ ॥**

इह कस्मान्न भवति—'सर्पिषोऽपि स्यात्', 'गोमूत्रस्यापि स्यात्'? किं च स्यात्? द्वितीयाऽपि[1] प्रसज्येत 'कर्मप्रवचनीययुक्ते द्वितीया'। [२.३.८] इति। नैष दोषः। नेमेऽप्यर्था निर्दिश्यन्ते। किं तर्हि? परपदार्था इमे निर्दिश्यन्ते—'एतेष्वर्थेषु यत्पदं वर्तते तत्प्रति अपिः कर्मप्रवचनीयसंज्ञो भवती'ति।

प्र०-दिवशादवगतार्थानामपि स्फुटतराऽवगत्यर्थः प्रयोगो लोके भवति। न चाऽनियमप्रसङ्गः, येषामेव हि गतार्थानां प्रयोगो दृश्यते ते एव प्रयुज्यन्ते, न तु वृक्षस्तरुः पादप इति, तथा प्रयोगाऽदर्शनात्। अपूपौ द्वाविति। 'अपूपा'वित्यत एवाऽवगते द्वित्वे द्विशब्दस्याऽपि प्रयोगो लोके दृश्यते। तदेतदुक्तं भवति—यथा यावशब्दो वाक्यान्तरविषयोऽन्य एव, अन्यश्च यावकशब्दः। यथा च ऋषभशब्दो वृषभशब्द इति च। तथैवागच्छत्यध्यागच्छति पर्यागच्छतीति च। तदत्र विषये धातोरधिपर्योश्च सहाऽभिधायित्वमङ्गीकर्तव्यम् ॥९३॥

अपिः पदार्थ। इहेति। यथाऽपिशब्दस्य कर्मप्रवचनीयसंज्ञायां सत्यां 'स्या'दित्यत्रोपसर्गाश्रयं षत्वं न भवत्येवं सर्पिःशब्दाद्द्वितीया कस्मान्न भवतीति प्रश्नः। इतरो भवत्येवऽत्राऽपेः संज्ञेत्याह—किं च स्यादिति। नेमे इति। यद्यपिशब्दस्यार्था इमे निर्दिश्येरन्, पदार्थग्रहणमनर्थकं स्यात्, स्वपदार्थाऽव्यभिचारात्। संभावनादीनां चोपादानमनर्थकं स्यात्, तेषामपि पदार्थत्वादिति। परपदार्था इति। 'स्या'दित्यादेः

उ०-न किंचिदिति तत्त्वम्। एतेन 'प्रकरणादिसामर्थ्याऽवगतविशेषा'मित्यादिकैयटश्चिन्त्यः। सर्वत्र प्रकरणसत्त्वे तद्विषये एव वैतत्प्रयोगे मानाऽभावाच्च। अपूपौ द्वाविति। अत्र द्विशब्दापूपशब्दयोर्वाचकयोः, प्रत्यययोर्द्योतकयोः, प्रकृतिप्रत्यययोर्वाचकद्योतकयोः, द्वावित्यत्र तयोर्वाचाकनुवादकयोश्च समुच्चयो दृश्यत इत्यर्थः ॥९३॥

अपिः पदार्थ। ननूपसर्गत्वप्रयुक्तषत्वस्य 'स्या'दित्यत्र निवृत्तये एतत्संज्ञाप्रवृत्तिरस्त्येवेत्यत आह—यथेति। इत्याहेति। इत्याशयेनाहेत्यर्थः। यद्यपीति। 'यदि—अपिशब्दार्था' इति च्छेदः। स्वपदार्थेति। स्वपदार्थेन पदस्याऽव्यभिचारादित्यर्थः। संभवनादीनां चेति। तेषामप्यपिरूपस्वपदार्थत्वादिति भावः। एषु वर्त्तमानोऽपिरिति नार्थस्तथा सति प्रत्यासत्त्या पदार्थशब्देनाऽपेः स्वपदार्थ एव गृह्येतेति तद्वैयर्थ्यम्। 'अपिः कर्मप्रवचनीय' इत्येव वदेदिति

[1] 'अपि' क्वचिन्न।

अथवा यदत्र कर्मप्रवचनीययुक्तं नाऽदः प्रयुज्यते। किं पुनस्तत्? बिन्दुः। बिन्दोस्तर्हि कस्मान्न भवति? 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति प्रथमा भविष्यतीति ॥९६॥

प्र०-परस्य पदस्यामी अर्था इत्यर्थः। तदयमर्थः—'स्या'दित्यादिपदं कर्तृसामान्यवाच्यपि यदा सामर्थ्यात्कर्तृविशेषे बिन्दौ वर्तते तदा तत्प्रत्यपिः कर्मप्रवचनीयः। सर्पिःशब्दस्तु समुदाय एव वर्तते नावयवे। अत एवावयवोपजनितव्यतिरेके षष्ठी भवति।

अथवेति। बिन्दुकर्तृकत्वं क्रियायाः द्योतयितुमपिः प्रयुज्यते इति बिन्दुं प्रति कर्मप्रवचनीयोऽपिर्न तु सर्पिः प्रतीति भावः। बिन्दोस्तर्हीति। ननु यदा बिन्दुशब्दो न प्रयुज्यते तदाऽपिः कर्मप्रवचनीयः। तदुच्यते वृत्तिकारैः—पदान्तरस्याऽप्रयुज्यमानस्यार्थः पदार्थ इति। न चाऽप्रयुक्ते द्वितीया विधातुं शक्या। अत्राहुः—पदार्थग्रहणमिहोपलक्षणार्थमुपात्तं, तेन यस्मिन्पदार्थे पदान्तरस्याऽभिधानशक्तिर्नास्ति तत्राऽपिः कर्मप्रवचनीयः। ततश्च गतार्थो बिन्दुशब्दो यदा विस्पष्टप्रतिपत्तये प्रयुज्यते तदाप्यपिः कर्मप्रवचनीयसंज्ञो भवति। उपपदविभक्तेरिति। कारकविभक्तिरत्र प्रथमा। सर्वत्रैव वाक्येऽवश्यभाव्यं क्रियया, अन्ततः सत्तया। तत्र बिन्दोः प्रथमं 'स्या'दित्यनेन संबन्धोऽन्तरङ्गः, पश्चात्तु तद्द्वारकोऽपिशब्देन ॥९६॥

उ०-तात्पर्यम्। यदा सामर्थ्यादिति। अपिशब्दसामर्थ्यादित्यर्थः। अयं भावः कर्मप्रवचनीययुक्तत्वं तद्द्योत्यसंबन्धप्रतियोगित्वमिव तद्द्योत्यबोधकत्वमपि, तच्च 'स्या'दित्यस्यैव न 'सर्पिष' इति न ततो द्वितीया। कर्मप्रवचनीयानां संबन्धद्योतकत्वं तु प्रायिकम्, अधिपर्यादौ व्यभिचारादिति। 'स्या'दित्याख्यातेन बिन्दुत्वेनाश्रयत्वेन वाऽऽश्रयबोध इत्येतत्पक्षतात्पर्यम्।

भाष्ये—अथवेति। अयं भावः—अपिना परपदार्थो बिन्दुस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यं संबन्धश्च द्योत्यते। तत्रापिद्योत्यसंम्बन्धप्रतियोगित्वस्य बिन्दौ सत्त्वात्तस्यैव कर्मप्रवचनीययुक्तत्वमिति। तदाह—बिन्दुकर्तृत्वमिति। तद्दौर्लभ्यप्रयुक्तदौर्लभ्यं चेत्यपि बोध्यम्। पृथग्बिन्दूपस्थितिस्तस्य चाऽऽख्यातार्थेऽभेदान्वय इत्येतत्पक्षतात्पर्यम्। यदत्र कर्मप्रवचनीययुक्तं—कर्मप्रवचनीयद्योत्यसंबन्धप्रतियोगीति भाष्याक्षरार्थः। उपलक्षणार्थमिति। यत्पदप्रयोगं विनाऽपि तदर्थोऽपिशब्देनाऽवश्यं द्योत्यते तादृशाऽपेः कर्मप्रवचनीयत्वमित्यर्थः। तत्फलितमाह—तेन यस्मिन्निति। पदान्तरस्य—तद्वाचकत्वेन प्रसिद्धातिरिक्तस्य, अभिधानशक्तिर्नास्ति, 'अपिशब्दसमभिव्याहारं विने'ति शेषः। अर्थात्तत्समभिव्याहारेऽस्तीति लब्धम्। एवं च 'सर्पिष'इत्येतत्तत्संबन्धिबिन्दुपरं बोध्यम्। वागादिशब्दे स्त्रीत्वस्य प्रकृतिवाच्यत्वेऽपि द्योतकटाबादिप्रयोगवत्तस्य द्योतकत्ववच्च बिन्दुशब्दप्रयोगेऽप्यपेस्तद्द्योतकत्वाऽक्षतिरित्याह—ततश्चेति। ननु प्रथमायाः कारकाधिकारेऽपठितत्वात्कथं कारकविभक्तित्वमत आह—सर्वत्रैवेति। क्रियाजनकार्थकत्वमेव कारकविभक्तित्वमिति भावः। अन्तरङ्ग इति। अपिद्योत्यो बिन्दुरिति तस्य कथमपिसंबन्धो बहिरङ्ग इति चिन्त्यम्। अपिना द्योत्यद्योतकभावः संबन्धः स्वाभाविक इति तस्य कथं 'स्या'दित्येतत्संबन्धोत्तरकालिकता, तस्माद्वाचनिकोऽयं न्याय इति तत्त्वम् ॥९६॥

**अधिरीश्वरे ॥ १ । ४ । ९७ ॥**

**अधिरीश्वरवचन उक्तम् ॥ १ ॥**

किमुक्तम् ? 'यस्य चेश्वरवचनमिति कर्तृनिर्देशश्चेदवचनात्सिद्धम्' । 'प्रथमानुपपत्तिस्तु' । 'स्ववचनात्सिद्ध'मिति* । अधिः स्वं प्रति कर्मप्रवचनीयसंज्ञो भवतीति वक्तव्यम् ॥९७॥

**लः परस्मैपदम् ॥ १ । ४ । ९९ ॥**

**लादेशे परस्मैपदग्रहणं पुरुषबाधितत्वात् ॥ १ ॥**

प्र०— अधिरी । उक्तमिति । वक्ष्यमाणमपि बुद्ध्या निरूपितत्वादुक्तमित्युक्तम् । कर्तृनिर्देशश्चेदिति । यदीश्वरवचनमित्यनेन पदेनेश्वरः स्वामी भृत्यनियोगादौ यः कर्ता स निर्दिश्यते तदाऽनेन स्वामिनः सप्तमी विधीयते—'अधि ब्रह्मदत्ते पञ्चालाः' इति । तत्राऽधिकरणत्वादेव सप्तमी सिद्धा । ब्रह्मदत्ते स्थिताः पञ्चाला इत्यर्थावगमात् । 'पञ्चालाः' इति च प्रथमा न प्राप्नोति, 'कर्मप्रवचनीययुक्ते द्वितीये'ति द्वितीयया बाधितत्वात् । स्ववचनादिति । 'अधि ब्रह्मदत्ते पञ्चालाः' इत्यस्याऽन्यथासिद्धत्वादधिः स्वे इति वक्तव्यम्, 'अधि पञ्चालेषु ब्रह्मदत्तः' इत्यर्थम् । 'ईश्वरवचन'मिति च कर्तृषष्ठ्या समासः । 'ईश्वरेण यदुच्यते स्वं तत्र कर्मप्रवचनीययुक्ते सप्तमी'ति । यदि वा—यस्य संबन्धिन ईश्वरस्य वचनं सप्तमी । तत्र पञ्चालेष्वासनादिक्रियोपजनिते संबन्धे षष्ठ्यां प्राप्तायां सप्तमी विधीयते । स्वं च प्रत्यधेः कर्मप्रवचनीयसंज्ञा न तु स्वामिनमिति स्वामिनः प्रथमैव भवति ॥९७॥

लः परस्मैपदम् । 'ल' इत्यादेशाऽपेक्षा षष्ठी । लादेशाः परस्मैपदसंज्ञका इत्यर्थः । लादेश इति । 'लस्ये'त्यत्र 'परस्मैपद'मिति वक्तव्यम् । इह तु वचने एक-

उ०— अधिरी । वक्ष्यमाणमपीति । 'यस्मादधिकं यस्य चेश्वरवचन'मिति सूत्रे इत्यर्थः । स निर्दिश्यते इति । यन्निष्ठमीश्वरत्वमुच्यते इत्यर्थादिति भावः । प्रथमा न प्राप्नोतीति । सूत्रे ईश्वरेणेशितव्यस्याक्षेपात्तं प्रत्यपि कर्मप्रवचनीयत्वादिति भावः । ईश्वरेण यदुच्यते इति । सम्बध्यत इत्यर्थः । ईश्वरेण स्वनिरूप्यधर्मवत्तया यदुच्यत इत्यर्थो वा । निरूपकस्यैव कर्तृत्वविवक्षा, न त्वीशितव्यस्य । देशरूपत्वेन पञ्चालानामप्याधारत्वेन सप्तमी सिद्धेत्यत आह—तत्रेति । आसनादिक्रियोपजनितः संबन्धः—स्वस्वामिभावादिः । ननु ब्रह्मदत्तादपि द्वितीयापत्तिरत आह—स्वं चेति । तस्यैव कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वेन ब्रह्मदत्तान्न द्वितीयेति भावः ॥९७॥

लः पर । नन्वस्य प्रथमान्तत्वे लकाराणामेव परस्मैपदसंज्ञा स्यात्तथा चानुदात्तङिद्भ्यो

१–नेदं वार्तिकमपि तु भाष्यमेवेति पी० एस० सुब्रह्मण्यशास्त्री ( लेक्चर्ज आन पतञ्जलिज् महाभाष्य )
* १.३.९ वा० १-३ ।

लादेशे† परस्मैपदग्रहणं कर्तव्यम् । किं कारणम् ? 'पुरुषबाधितत्वात्' ।

**इह वचने हि संज्ञाबाधनम् ॥ २ ॥**

इह हि क्रियमाणेऽनवकाशा पुरुषसंज्ञा‡ परस्मैपदसंज्ञां बाधेत ।

परस्मैपदसंज्ञाऽप्यनवकाशा, सा वचनाद्भविष्यति । सावकाशा परस्मैपदसंज्ञा । कोऽवकाशः ? शतृक्वसू* अवकाशः ।

**सिचि वृद्धौ तु परस्मैपदग्रहणं ज्ञापकं पुरुषाऽबाधकत्वस्य ॥ ३ ॥**

यदयं 'सिचि वृद्धिः परस्मैपदेषु' [ ७. २. १ ] इति परस्मैपदग्रहणं करोति तज्ज्ञापयत्याचार्यो 'न पुरुषसंज्ञा परस्मैपदसंज्ञां बाधत' इति ।।९९।।

---

प्र०—संज्ञाऽधिकारात्परस्मैपदसंज्ञां शतृक्वस्वोः सावकाशां पुरुषसंज्ञास्तिङ्क्षु बाधेरन्नित्यर्थः। सिचि वृद्धौ त्विति । अस्मादेव लिङ्गादेकसंज्ञाधिकारोऽत्र बाध्यत इति भावः । आत्मनेपदसंज्ञया परस्मैपदसंज्ञाया बाधनं यथा स्यादित्येवमर्थं त्विह प्रकरणेऽनयोः संज्ञयोर्विधानम् । सामान्याऽपेक्षं च ज्ञापकमित्यात्मनेपदसंज्ञयाऽपि पुरुषसंज्ञानां च समावेशो भवति । अन्यथा पुरुषसंज्ञाः सावकाशास्तिङ्क्षु अनवकाशया आत्मनेपदसंज्ञया बाध्येरन् ।।९९।।

---

उ०—लकारा एव न स्युः । किं च 'तङाना'वित्यत्र प्रथमान्तस्य सम्बन्धो न प्राप्नोतीत्यत आह—षष्ठीति । अत एव 'टित आत्मनेपदाना'मित्यादि चरितार्थम् । तङानावित्यादेश्च तङानभाविनि लक्षणायां गौरवमतः षष्ठ्यन्तत्वमेवादेशापेक्षया युक्तमिति भावः । लस्येत्यत्रेति । 'लस्य तिप्तस्झी'त्यत्रेति भावः । भाष्ये—लादेश इत्यस्य—लादेशप्रकरणे इत्यर्थः । बाध्यत इति । इष्टानुरोधादिति भावः । एतेन पर्यायज्ञापनेनाऽपीदं चरितार्थमित्यपास्तम् । ननु तृतीय[1] एव परस्मैपदसंज्ञास्तु, किं ज्ञापकाश्रयेणेत्यत आह—आत्मनेपदेति । ननु ज्ञापकात्परस्मैपदसंज्ञया समावेशेऽप्यात्मनेपदसंज्ञाया पुरुषसंज्ञानां समावेशो न स्यादत आह—सामान्यापेक्षं चेति । पुरुषसंज्ञायां परस्मैपदात्मनेपदग्रहणानुवृत्त्या समावेशसिद्धिः । अनुवृत्तिरेव लिङ्गेन विवक्षिता । एतदर्थमेव चाऽत्र प्रकरणे पुरुषसंज्ञाविधानमित्यन्ये ॥९९॥

---

† तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ३. ४. ७८.

‡ तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १. ४. १०१.

* लटः शतृशानचावप्रथमासमानाधिकरणे; क्वसुश्च ३. २. १२४; १०७.

१—तृतीये = तृतीयाध्याये 'लस्य' ३. ४. ७७ इत्यत्र ।

## तिङस्त्रीणि त्रीणि[1] प्रथममध्यमोत्तमाः ॥ १ । ४ । १०१ ॥

## प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं समसंख्यार्थम्[2] ॥ १ ॥

प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं कर्तव्यम् । आत्मनेपदानां च प्रथममध्यमोत्तमसंज्ञा भवन्तीति वक्तव्यम् । किं प्रयोजनम् ? 'समसंख्यार्थम्' । संख्यातानुदेशो† यथा स्यात् । अक्रियमाणे ह्यात्मनेपदग्रहणे तिस्रः संज्ञाः, षट् संज्ञिन, वैषम्यात्संख्यातानुदेशो न [3]प्राप्नोति ॥ क्रियमाणेऽपि चात्मनेपदग्रहणे—

## आनुपूर्व्यवचनं च ॥ २ ॥

आनुपूर्व्यवचनं च कर्तव्यम् । अक्रियमाणे हि कस्यचिदेव त्रिकस्य प्रथमसंज्ञ स्यात्, कस्यचिदेव मध्यमसंज्ञा, कस्यचिदेवोत्तमसंज्ञा ।

## न वैकशेषनिर्देशात् ॥ ३ ॥

यत्तावदुच्यते-'आत्मनेपदग्रहणं कर्तव्यं समसंख्यार्थ'मिति, तन्न कर्तव्यम् । संज्ञा अपि षडेव निर्दिश्यन्ते । कथम् ? 'एकशेषनिर्देशात्' । एकशेषनिर्देशोऽयम् ॥

प्र०- तिङस्त्रीणि । तिङां षट् त्रिकाः, संज्ञास्तिस्र इति वैषम्याद्यथासंख्यं न प्राप्नोतीति मत्वाह—प्रथमेति । आत्मनेपदग्रहणे च पृथक् क्रियमाणे सूत्रं परस्मैपदविषयमेव भवतीति वाक्यभेदादेकेन वाक्येन परस्मैपदानां त्रयाणां तिस्रः संज्ञाः, द्वितीयेनाऽऽत्मनेपदानामिति सिद्धमिष्टम् । वैषम्यादिति । यद्यप्येकैकस्य त्रिकस्याऽनेकसंज्ञाकरणे प्रयोजनाऽभावस्तथापि कस्यचित्त्रिकस्य काचित्संज्ञेत्येतावल्लभ्यते न तु यथाऽभिमतविषयविभागलाभः ॥ आनुपूर्व्यवचनं चेति । अत्र सूत्रे त्रिकाणामुच्चारणं नास्ति, केवलं त्रीणित्रीणीति वीप्सा प्रतिपत्तिस्तेषाम् । तत्राऽनियमप्रसङ्गे नियमार्थमानुपूर्व्यग्रहणं च कर्तव्यमित्यर्थः ॥ एकशेषनिर्देशादिति । आकृत्यभिधानाश्रयेण प्रत्याख्यातं सूत्रं, शास्त्रप्रक्रियासंपत्त्यर्थमेव संपद्यते । अथैतस्मिन्निति । उभयथा संभवात्प्रश्नः ।

उ०- तिङस्त्रीणि । ननु 'तिङस्त्रीणि त्रीणी'त्यनेनात्मनेपदत्रिकाणामपि ग्रहणं सिध्यतीत्यत आह—तिङां षडिति । नन्वात्मनेपदग्रहणे कृते परस्मैपदसम्बन्धिनां संज्ञा न स्यादिति दोषस्तदवस्थ एवेत्यत आह—आत्मनेपदेति । सहविवक्षाऽभावादेकशेषो न प्राप्नोतीत्यत आह—आकृतीति । इदमुपलक्षणं, व्यक्तिपक्षेऽपि तत्प्रत्याख्यानात् । यद्वैकशेषशब्देन तन्त्रं लक्ष्यते । नन्वेतत्संज्ञाप्रवृत्तेः पूर्वं 'प्रथममध्यमयो'रिति व्यवहारो न युक्तोऽत आह—प्रसिद्धिमिति । सिद्धान्तकालिकीं प्रसिद्धिमित्यर्थः ।

---

१—"इह त्रीणित्रीणीत्येकं पदम् । द्वे वेति । हरदत्तः" इति शब्दकौस्तुभः ।

२—इह सूत्रत्रयेऽपि ( लः परस्मैपदम् । तङानावात्मनेपदम् तिङस्त्रीणि० ) महासंज्ञाकरणं पूर्वाचार्यानुरोधात्' इति कौस्तुभः । उद्योते ३६९ पृष्ठे नागेशस्याप्ययमेवाभिप्रायः ।

† यथासङ्ख्यमनुदेशः समानाम् १ ३ १० . ३—'स्यात्' पा० ।

अथैतस्मिन्नेकशेषनिर्देशे सति किमयं कृतैकशेषाणां द्वन्द्वः—प्रथमश्च प्रथमश्च प्रथमौ, मध्यमश्च मध्यमश्च मध्यमौ, उत्तमश्चोत्तमश्चोत्तमौ, प्रथमौ च मध्यमौ चोत्तमौ च प्रथममध्यमोत्तमा इति । आहोस्वित्कृतद्वन्द्वानामेकशेषः प्रथमश्च मध्यमश्चोत्तमश्च प्रथममध्यमोत्तमाः, प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्च—प्रथममध्यमोत्तमा इति ? किं चातः ? यदि कृतैकशेषाणां द्वन्द्वः, प्रथममध्यमयोः प्रथमसंज्ञा प्राप्नोति, उत्तमप्रथमयोर्मध्यमसंज्ञा प्राप्नोति, मध्यमोत्तमयोरुत्तमसंज्ञा प्राप्नोति । अथ कृतद्वन्द्वानामेकशेषो न दोषो भवति । यथा न दोषस्तथास्तु ।

किं पुनरत्र न्याय्यम् ? 'उभय'मित्याह । उभयं हि दृश्यते । तद्यथा,—बहु शक्तिकिटकम्[1], बहूनि शक्तिकिटकानि[2]। बहु स्थालीपिठरम्, बहूनि स्थालीपिठराणि ।

यदप्युच्यते—क्रियमाणेऽप्यात्मनेपदग्रहण 'आनुपूर्व्यवचनं कर्तव्य'मिति । न कर्तव्यम् । लोकत एतत्सिद्धम् । तद्यथा,—लोके 'विहव्यस्य[3] द्वाभ्यां द्वाभ्यामग्निरुपस्थेय' इति, न चोच्यते-'आनुपूर्व्येणे'ति, आनुपूर्व्येण चोपस्थीयत इति ॥१०१॥

प्र०-प्रथममध्यमयोरिति । प्रसिद्धिमाश्रित्यैतदभिधीयते । व्याख्यानान्निर्णय इति मत्वाह—कृतद्वन्द्वानामिति ।

बहु शक्तिकिटकमिति । एकशेषे कृते द्वन्द्वः । 'जातिरप्राणिना'मित्येकवद्भावः । बहुशब्दश्चात्र वैपुल्यवचन इत्येकवचनम् । समुदायस्य वैपुल्यमवयवानां प्रचयाद्भवति। यदा तु समाहारद्वन्द्वे कृते एकशेषः क्रियते तदा 'बहूनि शक्तिकिटकानी'ति भवति । लोकत इति । यथा 'पंक्तिस्थेषु ब्राह्मणेषु द्वौ द्वौ ब्राह्मणावानये'त्युक्ते आनुपूर्व्येणानयनं भवति न तु व्युत्क्रमेण तथेहापि भविष्यतीत्यर्थः । विहव्यस्येति । विहव्याख्यस्य सूक्तस्य 'द्वाभ्यां द्वाभ्यामग्निरुपस्थेय' इत्युक्ते आनुपूर्व्येण ऋग्द्वयं गृह्यते न तु व्युत्क्रमेण ॥१०१॥

उ०- भाष्ये—किं पुनरत्रेति । यद्यप्यत्र व्याख्यानतः कृतद्वन्द्वानामेवैकशेषस्तथापि लोके कथं न्याय्यमिति प्रश्नः । नन्वस्य बहुशब्दस्य बहुत्वार्थकत्वे एकवचनानुपपत्तिरत आह—बहुशब्दश्चेति । नन्वेवमवयवबहुत्वप्रतीतिर्न स्यादत आह—समुदायस्येति । भाष्ये—लोकत इति । 'विहव्यस्ये'त्यादिस्मृतेरित्यर्थः । तथेहापीति । 'प्रथम''मध्यमे'त्यादि महासंज्ञाकरणं तु प्राचामनुरोधेनैवेति भावः । 'ममाऽग्ने नव विहव्य' इति सर्वानुक्रमः ॥१०१॥

१-'किटिकम्' पा० । २-किटिकानि' पा० । किटिः सूकरः' इत्यमरः । 'कीटक'पाठे तु कीटकः कृमिजातौ' इति मेदिनी ।

३-विहव्यसूक्तमृक्संहितायां (१०।१२८) अथर्वसंहितायां (५ । ३) च वर्तते । ऋक्संहितायां नवर्चं सूक्तमथर्वसंहितायां त्वेकादशर्चं दृश्यते । तत्र नवर्चेसूक्ते शाखान्तरप्रसिद्धदशमर्क्संबन्धेन पञ्चद्वयानि भवन्तीति वदन्ति । 'द्वाभ्यां द्वाभ्यामग्निरुपस्थेय' इत्युक्ते आनुपूर्व्येण ऋग्द्वयं गृह्यते ।

## विभक्तिश्च ॥ १ । ४ । १०४ ॥

त्रीणि त्रीणीत्यनुवर्तते*, उताहो न ? किं चातः ? यद्यनुवर्त्तते, 'अष्टन आ विभक्तौ' [ ७. २. ८४ ] इत्यात्वं न प्राप्नोति । अथ निवृत्तं, 'प्रथमयोः पूर्वसवर्णः' [ ६. १. १०२ ] इत्यत्र [1]प्रत्यययोरेव ग्रहणं प्राप्नोति । यथेच्छसि तथास्तु ॥ अस्तु तावदनुवर्तत इति । ननु चोक्त'मष्टन आ विभक्ता-वित्यात्वं न प्राप्नोती'ति । वचनाद्भविष्यति ।

अथवा पुनरस्तु—निवृत्तम् । ननु चोक्तं 'प्रथमयोः पूर्वसवर्णं इत्यत्र प्रत्यययोरेव ग्रहणं प्राप्नोती'ति । नैष दोषः । अचीत्यनुवर्तते† न चाऽजादी प्रथमौ प्रत्ययौ स्तः । ननु चैवं विज्ञायते—अजादी यौ प्रथमौ, अजादीनां वा यौ प्रथमाविति । यत्तर्हि 'तस्माच्छसो नः पुंसि' [६.१.१०३]

प्र०- विभक्तिश्च । सति प्रयोजने स्वरितत्वप्रतिबद्धे शब्दानामनुवृत्त्यननुवृत्ती भवतः । लिङ्गदर्शनं च पत्तद्वयेऽप्यस्ति इति संदेहात्प्रश्नः—त्रीणित्रीणीति । आत्वं न प्राप्नोतीति । न ह्यष्टन्शब्दात्परं युगपत्त्रिकमस्ति । प्रथमयोरिति । प्रत्येकं संज्ञित्वे विभक्तिसमुदायस्य विभक्तिग्रहणेनाऽग्रहणात्प्रथमयोरिति समुदायद्वयाऽपेक्षानुपपत्तौ प्रत्यययोरेव द्वयोर्ग्रहणं प्राप्नोतीत्यर्थः । वचनादिति । त्रिकस्य युगपत्प्रयोगाऽभावात् सामर्थ्यात्समुदायवृत्तिर्विभक्तिशब्दोऽवयवे वर्तिष्यत इति भावः । न चाजादी इति । [2]सुशब्दौशब्दौ प्रथमौ, सुश्चाऽजादिर्न भवतीति प्रत्यययोरजादित्वाऽसंभवादवयवशब्द-स्त्रिके समुदाये उपचाराद्वर्त्तत इति भावः । अजादी याविति । अजादी विशेष्यौ, प्रथमयो-रिति विशेषणं, तेनौजसोरेव ग्रहणमस्त्वित्यर्थः । अजादीनां वेति । 'अची'त्यनुवर्तते ।

उ०- विभक्तिश्च । अनुवृत्तौ स्वरितत्वप्रतिबद्धत्वमभावप्रतियोगितया बोध्यम् । स्वरितत्व-मस्ति नवेति विचारतात्पर्यम् । स्वरितत्वमचार्याणामप्यनुमेयमेवेति बोध्यम् । प्रत्येकमिति । नन्वस्याः प्रत्येकं सत्त्वेऽपि 'द्वितीयायां चे'त्यादिव्यवहारात् त्रिकस्य त्रिकस्य प्रथमादयः सप्त-संज्ञा अवश्यमभ्युपेयाः । एवं च तया 'प्रथमयो'रित्यत्राप्युपपत्तिरिति चेन्न । पाणिनिना तासामकृतत्वात् । सिद्धान्ते तु त्रिकस्य विभक्तित्वेऽवयवधर्मविभक्तित्वस्य त्रिके आरोपे वा यौगिका एव ते व्यवहाराः संभवन्तीति ताः संज्ञाः सूत्रकृता न कृता इति प्रतीमः । विभक्ति-समुदायस्येति । जनपदसमुदायस्य जनपदग्रहणेनाऽग्रहणवदिति भावः । समुदायद्वयापेक्षा-नुपपत्ताविति । तदपेक्षद्विवचनाऽनुपपत्तावित्यर्थः ।

सुशब्दौशब्दाविति । प्रथमयोरिति विशेष्यमचीति विशेषणमिति भावः । अजादित्वाऽसंभवादिति । यद्यपि 'शिवोऽर्च्य'इत्यादावुत्वे कृते सम्भवोऽस्ति तथापि तत्र-'नादिची'ति निषेध इति भावः । एकदेशी शङ्कते—ननु चेति । तद्व्याचष्टे—अजादी

* तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १. ४. १०१.

१–'प्रथमयो' पा० । † इको यणचि ६. १. ७७. २–सुशब्द-औशब्दाविति छेदः ।

इत्यनुक्रान्तं पूर्वसवर्णदीर्घं प्रतिनिर्दिशति तज्ज्ञापयत्याचार्यो 'विभक्त्यो-र्ग्रहण'मिति ।

अथवा वचनग्रहणमेव कुर्यात्—'औजसोः पूर्वसवर्ण' इति ॥१०४॥

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥१।४।१०५॥**

**अस्मद्युत्तमः ॥ १ । ४ । १०७ ॥ शेषे प्रथमः ॥ १ । ४ । १०८ ॥**

किमर्थमिदमुच्यते ?

**युष्मदस्मच्छेषवचनं नियमार्थम् ॥ १ ॥**

नियमार्थोऽयमारम्भः ॥ अथैतस्मिन्नियमार्थे विज्ञायमाने किमयमुपपद-नियमः—युष्मदि मध्यम एव, अस्मद्युत्तम एव । आहोस्वित्पुरुषनियमः—युष्म-

प्र०—तत्र व्याख्यानात्तदादिविधिः । निर्धारणं चाश्रयिष्यते—'अजादिषु यौ प्रथमा'विति । एवमप्यौजसोरेव ग्रहणं स्यादिति चोद्यम् । यत्तर्हीति । 'एतान् गाः पश्ये'त्यत्र नत्व-निवृत्त्यर्थं 'तस्मा'दित्युच्यते । औजसोरेव ग्रहणेऽनन्तरात्पूर्वसवर्णदीर्घादुत्तरः शसः सकारो न संभवतीति किं 'तस्मा'दित्यनेन । तत्क्रियमाणं त्रिकद्वयग्रहणस्य ज्ञापकं संपद्यते ॥१०४॥

युष्मदि । किमर्थमिति । किं लादेशविधानवाक्येनैकवाक्यत्वाद्विध्यर्थमिदम्, अथ विहितेषु लादेशेषु नियमार्थमिदमिति प्रश्नः । तत्रैकवाक्यतापक्षे इतरेतराश्रयदोष-परिहाराय भाविनी संज्ञाऽऽश्रयितव्येति प्रतिपत्तिलाघवार्थं वाक्यभेदेन नियमपक्षं प्रदर्शयितुमाह—युष्मदस्मदिति । किमयमिति । ननु प्रत्ययस्य प्राधान्यात्तन्नियम एव युक्तः । नैष दोषः । समुदायस्य संचिस्कीर्षितत्वात् प्राधान्यं, तदङ्गत्वात्तु प्रत्ययोपपद-योर्द्वयोरप्यप्राधान्यमित्युभयोरपि नियम आशङ्क्यते—युष्मदि मध्यम एवेति ।

उ०—विशेष्याविति । व्याख्यानाच्छब्दरूपं विशेष्यमादाय तदादिविधिरिति भावः । वस्तुतो निर्धारणमेकवचनान्तेन नेति 'कारके'इतिसूत्रे भाष्ये उक्तम् । शब्दरूपं विशेष्यमादाय तदन्त-विधिश्चाऽसति नमके नेतीयं शङ्काऽयुक्तैव, तथापि तामुपगम्य पर एकदेशी समाधत्ते—यत्तर्हीति । भाष्ये—विभक्त्योरिति । विभक्तिसमुदाययोरित्यर्थः । तौ च समुदायौ प्राचां वैयाकरणानां प्रथमाद्वितीयादिसंज्ञत्वेन प्रसिद्धावेव गृह्येते । न च 'तस्मा'दित्यनेन 'गा'-इत्येतद्व्यावृत्तये सवर्णदीर्घ एव परामृष्टव्यः, तस्य व्यवहितत्वादित्याशयः । एतद्भाष्यमूलिका एव प्रथमादयः सप्तम्यन्ताः स्वौजसादीनां सप्तानां त्रिकाणां संज्ञा इति बोध्यम् ॥१०४॥

युष्मद्यु । विधिनियमसम्भवे विधेर्ज्यायस्त्वादाह—तत्रेति । वस्तुत एकवाक्यतापक्षेऽपि फलतो नियमत्वम्, एतैर्विनापि सिद्धेः । 'शुद्धविध्यर्थ'मिति पूर्वपक्षः । अन्यथापि सिद्धे-रितरनिवृत्त्यर्थमिति सिद्धान्त इति तत्त्वम् । समुदायस्येति । विधेये शाब्दं प्राधान्यमुद्देश्ये

द्येव मध्यमः, अस्मद्येवोत्तम इति ? किं चातः ? यदि पुरुषनियमः शेषग्रहणं कर्तव्यं 'शेषे प्रथम' इति । किं कारणम् ? मध्यमोत्तमौ नियतौ, युष्मदस्मदी अनियते, तत्र प्रथमोऽपि प्राप्नोति । तत्र शेषग्रहणं कर्तव्यं प्रथमनियमार्थं—'शेष एव प्रथमो भवति नान्यत्रे'ति । अथाप्युपपदनियमः, एवमपि शेषग्रहणं कर्तव्यं 'शेषे प्रथम' इति । युष्मदस्मदी नियते, मध्यमोत्तमावनियतौ, तौ शेषेऽपि प्राप्नुतः । तत्र शेषग्रहणं कर्तव्यं शेषनियमार्थं—'शेषे प्रथम एव भवति नान्य' इति ।

उपपदनियमे शेषग्रहणं शक्यमकर्तुम्[1] । कथम् ? युष्मदस्मदी नियते, मध्यमोत्तमावनियतौ, तौ शेषेऽपि प्राप्नुतः । ततो वक्ष्यामि 'प्रथमो भवती'ति । तन्नियमार्थं भविष्यति—'यत्र प्रथमश्चाऽन्यश्च प्राप्नोति तत्र प्रथम एव भवती'ति ।

**तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वात् ॥ २ ॥**

तत्र युष्मदस्मदन्येषु प्रथमस्य प्रतिषेधो वक्तव्यः । त्वं च देवदत्तश्च पचथः । अहं च देवदत्तश्च पचावः । किं कारणम् ? 'शेषत्वात्' । 'शेषे प्रथम' इति प्रथमः प्राप्नोति ।

प्र०—तुल्यजातीयव्यावृत्तेर्नियमफलत्वादुत्तमप्रथमौ निवार्येते, न तृजादयः । तृजादिविधिसामर्थ्याद्वा नास्ति तेषां निवारणम् । यत्र प्रथमश्चेति । युष्मदि मध्यम एव, अस्मद्युत्तम एवेति युष्मदस्मदोर्नियतत्वात्तयोः पुरुषान्तरं न भवति । मध्यमोत्तमयोस्त्वनियतत्वाच्छेषेऽपि तत्प्रसङ्गे 'प्रथम' इति सूत्रमारभ्यमाणं सिद्धे प्रथमे मध्यमोत्तमयोर्निवारणाय नियमार्थं संपद्यते, 'प्रथम एव भवति न मध्यमोत्तमा'विति । 'यथा 'समे देशे यजेते'ति पाक्षिक्यां प्राप्तौ नियमः ।

तत्रेति । उभयथा नियमे इत्यर्थः । शेषत्वादिति । यत्र केवले युष्मदस्मदी उप-

उ०—तृद्वेद्यतालक्षणमार्थं प्राधान्यमिति सन्देहे बीजं वक्तुं युक्तम् । सामान्यनियमेऽप्याह—तृजादीति । सिद्धे प्रथमे इति । तिबादिसूत्रेण पक्षे सिद्धे इति भावः । प्रथम एव भवतीति । नियमान्तरस्याऽसम्भवादित्यर्थः ।

पाक्षिक्यां प्राप्ताविति । नन्वेवमेतन्नियमापेक्षया पुरुषनियमस्य परिसंख्यात्वेन गुरुतयोपपदनियम एवोचित इति चेन्न, अनुवादत्वस्यैवकारार्थगर्भत्वस्य प्राप्तबाधकल्पनस्य चोभयत्राऽप्यविशिष्टत्वेन तयोः समत्वमेवेत्याशयात् । नन्वत्र युष्मस्मदोः सत्त्वात्कथं शेषत्वमत आह—यत्र केवले इति । असहाये इत्यर्थः । 'सिद्धं त्वि'त्युक्तिर्न सिद्धान्तिनो, वचनारम्भ-

[1] इदं वार्तिकमित्यन्ये । भाष्यमेवेति परे ।

## सिद्धं तु युष्मदस्मदोः प्रतिषेधात् ॥ ३ ॥

सिद्धमेतत् । कथम् ? 'युष्मदस्मदोः प्रतिषेधात्' । 'शेषे प्रथमः' 'युष्मदस्मदोर्नें'ति वक्तव्यम् ।

## युष्मदि मध्यमादस्मद्युत्तमो विप्रतिषेधेन ॥ ४ ॥

युष्मदि मध्यमादस्मद्युत्तम इत्येतद्भवति विप्रतिषेधेन । 'युष्मदि मध्यम' इत्यस्यावकाशः—त्वं पचसि । 'अस्मद्युत्तम' इत्यस्यावकाशः—अहं पचामि । इहोभयं प्राप्नोति—त्वं चाहं च पचावः । 'अस्मद्युत्तम' इत्येतद्भवति विप्रतिषेधेन ।

स तर्हि विप्रतिषेधो वक्तव्यः ? न वक्तव्यः । 'त्यदादीनां यद्यत्परं तत्तच्छिष्यत'इत्येवमस्मदः शेषो भविष्यति । तत्रा'ऽस्मद्युत्तम' इत्येव सिद्धम् ।

## अनेकशेषभावार्थं तु ॥ ५ ॥

अनेकशेषभावार्थं तु स विप्रतिषेधो वक्तव्यो यदा चैकशेषो न । कदा चैकशेषो न ? सहविवक्षायामेकशेषः, यदा न सहविवक्षा तदैकशेषो नास्ति ।

---

प्र०—पदे स एवाऽशेषस्तत्र मा भूत्प्रथमः । यत्र त्वन्यसहिते ते स्तः तत्र समुदायस्य युष्मदस्मद्ग्रहणेनाऽग्रहणाऽच्छेषत्वमेवेति प्रथमप्रतिषेधो वक्तव्यः ।

स एवाह—सिद्धं त्विति । यत्र शेषे युष्मदस्मदी स्तस्तत्र 'शेषे प्रथमो ने'ति वक्तव्यमित्यर्थः । चोदक आह—स तर्हीति । आचार्यदेशीय आह—न वक्तव्य इति । अस्मदः शेष इति । 'आवां पचाव' इति । तत्राऽस्मद्युत्तम इति । ननु शिष्यमाणस्याऽस्मदो द्व्यर्थत्वादप्रयुज्यमानेऽपि युष्मदि तदर्थगतौ मध्यमविधानात्तस्याऽप्यत्र प्रसङ्ग इति विप्रतिषेध एवाश्रयितव्यः । अत्राहुः—युष्मदर्थे साहचर्याद्यदाऽस्मद्रूपत्वमारोप्यते तदा भेदाऽभावात् पृथग्युष्मदर्थाऽभावादस्मदुपपदनिमित्तः सिद्ध उत्तम एवेत्यदोषः । चोदक आह—अनेकशेषभावार्थं त्विति । 'त्वं चाऽहं च पचाव' इत्यत्र प्रयोगे ।

---

उ०—स्याऽपि सत्त्वादत आह—स एवाहेति । पूर्वस्य वचनस्य गुरुत्वात्स एव लाघवाश्रयेण 'सिद्धं त्वि'त्याहेत्यर्थः । ननु 'युष्मदस्मदोर्नें'त्युक्तेऽपि तत्र केवले ते तत्रैव निषेधः स्यादत आह—यत्र शेषे इति । शेषग्रहणं तत्राऽनुवर्त्तत इति भावः । चोदक इति । तृतीय इत्यर्थः ।

आरोप्यत इति । तं विना चाऽस्मच्छब्दात्तद्बोधाऽसंभव इति भावः । तदा पृथगिति । संबोध्यत्वेनाऽबोधादित्यर्थः । 'तदा भेदाऽभावात्पृथ'गिति पाठे तदारोपादेव युष्मदर्थे भेदकधर्माऽभावाद्भेदकधर्माऽप्रतीतेर्हेतो पृथग्युष्मदर्थाऽभाव इत्यर्थः । अत्र प्रयोगं इति । चशब्देनैव

**न वा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेधः ॥ ६ ॥**

न वाऽर्थो विप्रतिषेधेन । किं कारणम् ? युष्मदस्मदोरनेकशेषभावात् तदधिकरणानामपि—युष्मदस्मदधिकरणानामप्येकशेषेण न भवितव्यम् । त्वं चाहं च पचसि च पचामि चेति ।

**क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्राऽनेकशेषभावस्य ॥ ७ ॥**

क्रियापृथक्त्वे च द्रव्यपृथक्त्वं दृश्यते । तद्यथा,—पचसि पचामि च त्वं चाहं चेति । तदनुमानमुत्तरयोरपि क्रिययोरेकशेषो न भवतीति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं 'तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वा'दिति । तत्रापि ह्येवं भवितव्यम्—त्वं च देवदत्तश्च पचसि पचति च । अहं च देवदत्तश्च पचामि पचति चेति ।

यत्तावदुच्यते—'न वा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेध' इति, दृश्यते हि युष्मदस्मदोश्चाऽनेकशेषस्तदधिकरणानां चैकशेषः । तद्यथा,—'त्वं चाहं च वृत्रहन्नुभौ संप्रयुज्यावहा'[1] इति ।

प्र०- आचार्यदेशीय आह—न वेति । सहविवक्षाया अभावे यथा युष्मदस्मदोरेकशेषाऽभावः, एवं तदधिकरणयोरपि क्रिययोर्भेदस्य विवक्षितत्वादाख्यातयोरप्येकशेषाऽभावे 'पचसि पचामि चे'ति पृथगेव प्रयोगान्नाऽर्थो विप्रतिषेधेनेत्यर्थः । एतदेव समर्थयितुमाह—

क्रियापृथक्त्व इति । यथा क्रियापृथक्त्वे सति द्रव्यपृथक्त्वं, न तु सहविवक्षा, एवं द्रव्यपृथक्त्वेऽपि क्रियापृथक्त्वेन भाव्यं, परस्परसाहचर्याऽव्यभिचारात् । एवं च कृत्वेति । द्रव्यपृथक्त्वे सति क्रियापृथक्त्वादित्यर्थः ।

इदानीमाचार्य आह—यत्तावदिति । एकशेषफलत्वादेकशेष इत्युच्यते, न तु

उ०-साहित्यस्य द्योतनादन्नैकशेषो नेत्यर्थः । भाष्ये 'यदा न सहविवक्षे'त्यस्य च विना केवलपदैर्यदा न साहित्यबोध इत्यर्थः । 'तदधिकरणयो'रिति बहुव्रीहिः । भाष्ये तदधिकरणानामिति बहुवचनं त्वनेकयुष्मच्छब्दप्रयोगाभिप्रायेण । न तु सह विवक्षेति । न तन्निबन्धन एकशेष इति भावः । एवं द्रव्येति । क्रियापृथक्त्वोपक्रमे वाक्ये यथा द्रव्यपृथक्त्वमेवं द्रव्यपृथक्त्वोपक्रमे क्रियापृथक्त्वमेवेत्यर्थः । 'न त्वि'त्यस्य 'वाचनिक एकशेष' इत्यत्रान्वयः ।

१-'अह नु त्वं च वृत्रहन्' इति ऋग्वेदे ८. ६२. ११. तै० सं० ७. ४. १५. १. दृश्यते ।

यदप्युच्यते—'क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्राऽनेकशेषभावस्ये'ति, क्रियापृथक्त्वे खल्वपि द्रव्यैकशेषो भवतीति दृश्यते। तद्यथा,—'अक्षाः भज्यन्तां भक्ष्यन्तां दीव्यन्ता'मिति। एवं च कृत्वा सोऽपि दोषो भवति यदुक्तं—'तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वा'दिति।

नैष दोषः। परिहृतमेतत् 'सिद्धं तु युष्मदस्मदोः प्रतिषेधा'दिति।

स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः। शेषे प्रथमो विधीयते, न हि शेषश्चाऽन्यश्च शेषग्रहणेन गृह्यते। भवेत्, प्रथमो न स्यात्, मध्यमोत्तमावपि न प्राप्नुतः। किं कारणम् ? युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावुच्येते, न च युष्मदस्मदी अन्यश्च युष्मदस्मद्ग्रहणेन गृह्यते। यदत्र युष्मद्यच्चाऽस्मत्तदाश्रयौ

प्र०–'प्रथममध्यमोत्तमानामेकशेषोऽसरूपत्वा'दिति वाचनिक एकशेषः, एवं ह्येकशेषे आश्रीयमाणे नाऽर्थो विप्रतिषेधेन। तस्मात्कारकभेदेऽपि क्रियाया अभेदादेक एव धातुः प्रयुज्यते। तस्माच्च परो लकार एवाऽनेकार्थाभिधायी, विरोधाभावात्। तत्र पुरुषद्वयप्रसङ्गे युक्तो विप्रतिषेधः। अक्षा इति। शकटाऽक्षविभीतकाऽक्षदेवनाऽक्षाणां सहविवक्षायामेकशेषः। तत्राऽवयवक्रियायाः समुदाये आरोपाद्भज्यन्तामित्यादि बहुवचनं, सामानाधिकरण्यं चोपपद्यते। यथा द्रव्यैकशेषेऽपि क्रियापृथक्त्वमेवं द्रव्यपृथक्त्वेऽपि क्रियैकशेष इत्यर्थः।

न हि शेषश्चान्यश्चेति। उपयुक्तादन्यः शेषः। युष्मदस्मदोश्चोपयुक्तयोः सद्भावान्नास्ति शेषत्वम्। इतर एतत्सामर्थ्यमविदित्वाऽऽह—भवेदिति। इतर आह—यदत्रेति। तत्सन्निधौ शेषत्वाऽभावात्तन्निबन्धनमेव कार्यं भवतीत्यर्थः। इतरः शेष-

उ०– तदेव वचनमाह—प्रथमेत्यादि। इदं 'स्वरूप'सूत्रे वार्तिकम्। वाचनिकैकशेषे दूषणमाह—एवं हीति। विप्रतिषेधस्थापनाय ह्येतद्भाष्यप्रवृत्तिरिति भावः। अथ भाष्याशयमाह—तस्मादिति। लकार एवानेकार्थाभिधायीति। क्रियायामनेकार्थंगताऽऽरोपितसङ्ख्याभिधायीत्यर्थः। नन्वक्षा इति, भज्यन्तामिति च बहुवचनं कथमत आह—शकटाक्षेति। तत्रैकैकाऽक्षस्यैकैकक्रियायामन्वयेन सहविवक्षा कथमित्याशङ्क्य तामुपपादयति—तत्रेति। एकैकाऽक्षस्यैवैकैकक्रिया विवक्षितेत्यभिप्रायः। वस्तुतः सहविवक्षाऽभावेऽपि लोकन्यायसिद्धं,'विद्वन्मानसे'-तिवत्तन्त्रं बहुवचनान्तानामत्रापीति भाष्याशयः। 'एकशेष'शब्देन च तन्त्रमेव लक्ष्यत इत्याहुः। भाष्ये—सोऽपि दोष इति। विप्रतिषेधाऽङ्गीकाररूपो यो दोषस्तेनोक्तस्तदङ्गीकारे तदुक्तो द्वितीयो दोषोऽपि लग्न इत्यर्थः। परिहृतमेतदिति। 'शक्तिस्त्रैवेति'ति शेषः। उपयुक्तादन्य इति। अस्य—'उपयुक्ताऽसमभिव्याहृत' इत्यादिः। शेषपदस्य तत्रैवार्थे शक्तेरिति भावः। एतत्सामर्थ्यं—शब्दशक्तिम्। तेनाऽवधारणमाश्रितमिति भ्रमस्तस्येति भावः। भाष्ये—यदत्र युष्मदिति। समुदायस्य युष्मत्त्वाऽभावेऽपि तदवयवयुस्मदमादाय मध्यम इत्यर्थः।

मध्यमोत्तमौ भविष्यतः। यथैव तर्हि यदत्र युष्मद्यच्चाऽस्मत्तदाश्रयौ मध्यमोत्तमौ भवतः, एवं योऽत्र शेषस्तदाश्रयः[१] प्रथमः प्राप्नोति।

एवं तर्हि शेष उपपदे प्रथमो विधीयते। उपोच्चारि पदमुपपदम्। यच्चाऽत्रोपोच्चारि, न स शेषः, यश्च शेषः, न तदुपोच्चारि। भवेत् प्रथमो न स्यात्, मध्यमोत्तमावपि न प्राप्नुतः। किं कारणम्? युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावुच्येते। उपोच्चारि पदमुपपदम्, यच्चाऽत्रोपोच्चारि, न ते युष्मदस्मदी, ये च युष्मदस्मदी, न तदुपोच्चारि।

एवं तर्हि शेषेण सामानाधिकरण्ये प्रथमो विधीयते, न चाऽत्र शेषेणैव सामानाधिकरण्यम्। भवेत् प्रथमो न स्यात्, मध्यमोत्तमावपि न प्राप्नुतः। किं कारणम्? युष्मदस्मद्भ्यां सामानाधिकरण्ये मध्यमोत्तमावुच्येते, न चाऽत्र युष्मदस्मद्भ्यामेव सामानाधिकरण्यम्।

एवं तर्हि 'त्यदादीनि सर्वैर्नित्यम्' [ १. २. ७२ ] इत्येवमत्र युष्मदस्मदोः शेषो भविष्यति। तत्र युष्मदि मध्यमोऽस्मद्युत्तम इत्येव सिद्धम्।

न सिध्यति। 'स्थानिन्यपी'ति प्रथमः प्राप्नोति॥ 'त्यदादीनां खल्वपि यद्यत्परं तत्तच्छिष्यत' इति यदा भवतः शेषस्तदा प्रथमः प्राप्नोति।

प्र०–पदार्थमविद्वानाह—यथैवेति॥ एतद्विवरणीयमप्युपेक्ष्योपपदार्थं वर्णयितुमाह—एवं तर्हीति। यच्चात्रेति। युष्मदस्मदोः श्रवणात्तदभावे च शेषसद्भावाभावात्। यश्च शेष इति। 'देवदत्तश्चे'ति। न तदिति। न हि तस्यैव साधनत्वं, किं तर्हि, युष्मदस्मदर्थयोरपि। न चात्र शेषेणैवेति। किं तर्हि युष्मदस्मदर्थेनाऽपि, तद्भावाच्च शेषत्वाऽभाव इत्यर्थः।

एवं तर्हीति। यद्यप्यनेकशेषे दोष उपक्रान्तस्तथाऽप्येकशेषेऽपि दूषणोपन्यासार्थोऽयमुपक्रमः। स्थानिन्यपीति। अप्रयुज्यमाने, प्रयुज्यमाने च शेषे प्रथमविधानात्। दोषान्तरमप्याह—त्यदादीनामिति। एतदपरिहार्यं मन्यमानो लब्धेच्छोऽन्यदप्याह–

उ०–एतद्विवरणीयमपीति। एतत्—शेषपदशब्दं विवरीतुं योग्यमपीत्यर्थः। उपेक्ष्येति। स्फुटत्वादिति भावः। उपपदार्थमिति। उपपदानि तद्विशेषणान्युपपदसमानाधिकरणपदस्थानि पदानि, तदर्थमित्यर्थः सूत्रावकाशं दर्शयति–तदभावे चेति। न हि तस्यैवेति। 'न त'दितिभाष्यस्य न तदेवेत्यर्थ इति भावः। अनेन न पारिभाषिकमुपपदं, किं तु यौगिकमिति निर्णीतम्।

नन्वनेकशेषे दोषे प्रक्रान्ते कथमेकशेषेणाऽन्यथासिद्धिरुक्तेत्यत आह—यद्यपीति। एवं चैकशेषे तयोरेवाऽवस्थानान्नास्त्यत्र शेष इति न प्रथम इति भावः। एकशेषेऽपि दोषमाह भाष्ये–न सिध्यतीति। स्थानिन्यपीति। तद्व्याचष्टे अप्रयुज्यमाने इति। अनेन कैयटेन स्थानि–

१– तदाश्रयः' पा०।

'युष्मदि मध्यमोऽस्मद्युत्तम' इत्येवोच्यते । ताविह न प्राप्नुतः—परमत्वं पचसि, परमाऽहं पचामीति । तदन्तविधिना* भविष्यति[1] । इहापि तर्हि तदन्तविधिना प्राप्नुतः—अतित्वं पचति, अत्यहं पचतीति । ये चाऽप्येते समानाधिकरणवृत्तयस्तद्धितास्तत्र च मध्यमोत्तमौ न प्राप्नुतः—त्वत्तरः पचसि, मत्तरः पचामीति । त्वद्रूपः पचसि, मद्रूपः पचामीति । त्वत्कल्पः पचसि, मत्कल्पः पचामीति ॥ एवं तर्हि '[2]युष्मद्वत्यस्मद्वती'त्येवं भविष्यति । इहापि तर्हि प्राप्नुतः–अतित्वं पचति, अत्यहं पचतीति ।

एवं तर्हि 'युष्मदि साधने' 'अस्मदि साधने' इत्येवं भविष्यति । एवं च कृत्वा सोऽप्यदोषो भवति, यदुक्तं 'तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वा'-दिति ॥ अथवा प्रथम उत्सर्गः करिष्यते, तस्य युष्मदस्मदोरुपपदयोर्मध्यमोत्त-

---

प्र०–युष्मदीति । परमत्वमिति । युष्मदस्मदीति विशिष्टरूपपरिग्रहात्, अस्य च शब्दान्तरत्वात् । आचार्यदेशीय आह—तदन्तविधिनेति । युष्मदस्मदोरुपपदस्य विशेषणत्वात्तदन्तविधिः । चोदको दोषमाह—इहापीति । अतित्वमिति । त्वामतिक्रान्त इति समासः ।

एवं तदन्तविधावतिव्याप्तिमुक्त्वाऽव्याप्तिमाह—ये चाऽप्येते इति । त्वत्कल्प इति । ईषदसमाप्तस्त्वं त्वत्कल्प इति कालान्तरप्रसिद्धगुणरहितो युष्मदर्थ एव 'त्वत्कल्प'शब्देनोच्यते, न तु तत्सदृशं पदार्थान्तरम् । तदभिधाने युष्मदर्थस्य साधनत्वाऽभावान्मध्यमाऽभावात् । एवं 'मत्कल्प' इति बोद्धव्यम् ॥ आचार्यदेशीय आह—एवं तर्हीति । सौत्रत्वान्निर्देशस्य मतुब्लोपोऽभिधास्यते इति भावः । चोदक आह—इहापीति ।

आचार्य आह–एवं तर्हीति । 'समानाधिकरणे' इति वचनाद्युष्मदस्मदर्थेन यत्र लान्तस्य सामानाधिकरण्यं तत्र मध्यमोत्तमाभ्यां भवितव्यमिति नास्ति कश्चिद्दोषः । एवं च कृत्वेति । युष्मदस्मदर्थस्य साधनत्वाच्छेषत्वाऽभावः ॥ अथवेति । 'प्रथम' इत्येतावत्सूत्रं क्रियते । अनाश्रितविषयविशेषः प्रथमो विधीयमान उत्सर्गो भवति । तस्य विषय-

---

उ०–पदार्थो निर्णीतः । अतिशयितस्त्वमिति विग्रहे इष्टापत्तिरत आह—त्वामतीति । 'यत्र लान्तस्ये' त्यन्तपदं वृथेति केचित् । शेषत्वाभाव इति । उपयुक्ताऽसमभिव्याहृत उपयुक्तादन्यः शेषपदेनोच्यत इति भावः । 'एवं तर्हि युष्मदि साधने' इत्यनेन समानाधिकरण इत्यस्याऽर्थो निर्णीतः । 'साधने'इत्यस्य— लकारवाच्यसाधने क्रियया समानाधिकरणे इत्यर्थः । एतदर्थमेवाऽन्तपदमित्यन्ये । अनाश्रितेति । 'तिप्'सिति सिद्धे इदं सूत्रं तदनुवादो विषयविशेषे-

---

* येन विधिस्तदन्तस्य १. १. ७२. १–भविष्यतः' पा० । २–'युष्मदस्मद्वति' पा० ।

मावपवादौ भविष्यतः । तत्र युष्मद्गन्धश्चाऽस्मद्गन्धश्चास्तीति कृत्वा मध्यमोत्तमौ भविष्यतः ।

अथेह कथं भवितव्यम्—अत्वं त्वं संपद्यते त्वद्भवति मद्भवतीति, आहोस्वित्त्वद्भवसि मद्भवामीति ? त्वद्भवति मद्भवतीत्येवं भवितव्यम् । मध्यमोत्तमौ कस्मान्न भवतः ? गौणमुख्ययोर्मुख्ये संप्रत्ययो भवति । तद्यथा,—'गौरनुबन्ध्योऽजोऽग्नीषोमीय' इति, न वाहीकोऽनुबध्यते । कथं तर्हि वाहीके वृद्ध्यात्वे भवतः†—'गौस्तिष्ठति' 'गामानये'ति ? अर्थाश्रय एतदेवं भवति । यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्ध्यात्वे ॥१०५॥

**परः संनिकर्षः संहिता ॥ १ । ४ । १०९ ॥**

**परः संनिकर्षः संहिता चेदद्रुतायामसंहितम् ॥ १ ॥**

प्र०–विशेषे विधीयमानौ मध्यमोत्तमावपवादौ भवतः । तत्राऽपवादनिमित्तसद्भावाद्व्यामिश्रेऽपि विषये मध्यमोत्तमावेव भविष्यतो, न तु प्रथम इत्यर्थः ।

अत्वं त्वमिति । प्रकृतिविकृत्योरभेदविवक्षायां च्विप्रत्ययः, तत्र किं प्रकृत्याश्रयेण प्रथमेन भाव्यमथ विकृत्याश्रयेण मध्यमेनेति प्रश्नः । अत्रोत्तरम्–त्वद्भवतीति । प्रकृतेरेव विकाररूपेण संपत्तौ कर्तृत्वमिति भावः । मध्यमोत्तमौ कस्मादिति । यथा प्रकृतिस्तद्धर्मसमाचाराद्युष्मदस्मद्व्यपदेशं लभते, तथा मध्यमोत्तमावपि प्राप्नुतः । गौणमुख्ययोरिति । तद्धर्मसमाचारादारोपितमत्र युष्मदस्मदर्थरूपत्वमिति भावः । शिष्टं भाष्य'मो'दित्यत्र व्याख्यातं तत एवाऽवधार्यताम् । यदुक्तं 'भवतः शेष' इति, तत्रोत्तरमाहुः—'युष्मदस्मद्भवतु' इत्येवं न संनिवेश आश्रयणीयः । ततश्चाऽस्मद एव शेषो, न तु भवतः । 'पूर्वशेषदर्शनाच्चे'ति वचनाद्वा ॥१०५॥

परः सं । पूर्ववर्णोच्चारणाऽनन्तरमेव यत्र वर्णान्तरमुच्चार्यते न तु तच्छून्यान्तरालं

उ०–पवादबोधनायेति भावः । अत एव भावे प्रथमपुरुषसिद्धिरिति बोध्यम् । विकाररूपेणेति । आरोपितविकाररूपेणेत्यर्थः । 'न संनिवेश आश्रयणीय' इत्यस्य 'किं तु भवतु युष्मद् अस्म'दिति शेषः । वचनाद्वेति । अलिङ्गश्चेतनविषयो युष्मदर्थो, भवदर्थस्तु न तथेति न युष्मदर्थसमानार्थत्वमिति बोध्यम् । यदा भवतः शेषस्तदा भवत्येव प्रथम इत्याशयेन भाष्ये तत्रोत्तराऽनुक्तिरित्यन्ये ॥१०५॥

परः सं । परो वर्णान्तराऽव्यवहित इत्यर्थे मध्यमादिवृत्तावपि सेत्स्यतीत्यग्रिमभाष्याऽ-

† गोतो णित् ७ १. ९०; औतोऽम्शसोः ६. १ ९३

१–"पदस्य पदान्तरेण यदानन्तर्यं सा संहितेति लोकेऽभिधीयते" इति न्यासकारः ।
'संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥'

परः संनिकर्षः संहिता चेद्द्रुतायां वृत्तौ संहितासंज्ञा न प्राप्नोति । द्रुतायामेव हि परः सन्निकर्षो वर्णानां, नाऽद्रुतायाम् ।

तुल्यः संनिकर्षः ॥ २ ॥

तुल्यः संनिकर्षो वर्णानां द्रुतमध्यमविलम्बितासु वृत्तिषु ॥ किंकृतस्तर्हि विशेषः ?

वर्णकालभूयस्त्वं तु ॥ ३ ॥

प्र०-संभवति स पर उत्कृष्टः सन्निकर्षः प्रत्यासत्तिलक्षणः संहितासंज्ञ इति सूत्रार्थः । एवं स्थिते चोद्यते—पर इति । द्रुतायामेव वृत्तावनन्तरोक्तः परः सन्निकर्षः संभवति, न तु मध्यमायां, विलम्बितायां चेत्यर्थः । असंहितमिति । संहितासंज्ञाया अभाव इत्यर्थाऽभावेऽव्ययीभावः । अविद्यमाना वा संहिता अस्मिन्निति बहुव्रीहिः । द्रुतमध्यमविलम्बितास्विति । द्रुता च मध्यमा च विलम्बिता चेति द्वन्द्वे कृते भाष्यकारवचनप्रामाण्याद्ध्रस्वः । सर्वासु वृत्तिषु तुल्यः सन्निकर्षः, नैरन्तर्येणोच्चारणात् । विशेष इति । 'वृत्तीना'मिति शेषः । क्वचित्तु वृत्तिविशेष इत्येव पाठः ।

वर्णानां त्विति । वर्णोपलब्धिकालभेदाद्वर्णकालभूयस्त्वमुच्यते । द्रुतायां स्वल्प उपलब्धिकालः, मध्यमायामधिकः, विलम्बितायामधिकतरः । प्राकृतवैकृतभेदाद्भिन्ना ध्वनयः । तत्र वैकृतध्वनिवशात्तस्यैव वर्णस्य पुनः पुनरुपलब्धिर्भवतीति ध्वनिभेदाद् वृत्तिभेदः । 'किंकृत' इति कारणे पृष्टे 'वर्णकालभूयस्त्वं त्वि'ति सामर्थ्यात्कारणमेवोक्तं

उ०-सङ्गतिरत आह—पूर्वेति । वर्णान्तरव्यवायेऽव्यवहितपरत्वाऽभावादेवातिप्रसङ्गविरहादिको यणाचीत्यादौ संहिताधिकारवैयर्थ्यापत्तेः स नाऽर्थ इति भावः । ननु नञ्तत्पुरुषे उत्तरपदार्थप्रधानतया नपुंसकनिर्देशोऽयुक्तोऽत आह—अव्ययीभाव इत्यादि । पूर्वपदार्थप्राधान्येऽव्ययीभावः, उत्तरपदार्थप्राधान्ये तत्पुरुष इति व्यवस्थितेरिति भावः । वस्तुतः संहितशब्दोऽपि परसंनिकर्षवाची क्लीबः, तेनाऽयं तत्पुरुष एव । असंहितमारोपितं सन्धानं परसंनिकर्षः, तेन तदभावात्संहितासंज्ञा न प्राप्नोतीत्यर्थः । नञाऽव्ययीभावस्तु नास्त्येवेति 'नञ्सूत्रे वक्ष्यते । बहुव्रीहिरिति । पौर्वापर्यं चाऽन्यपदार्थ इत्यभिमानः । अत्राद्यमेव युक्तं, 'संहितासंज्ञा न प्राप्नोती'ति भाष्यव्याख्यानाद्बहुव्रीहेस्तत्पुरुषस्येवाऽव्ययीभावस्याऽपि लघुत्वाच्च योग्यान्यपदार्थाऽभावाच्च । आद्यस्योत्तरपदत्वाऽभावान्मध्यमस्य पूर्वपदत्वाऽभावात्सामानाधिकरण्याऽभावाच्च पुंवत्त्वाऽप्राप्तेराह—भाष्यकारेति । ङ्यापोः संज्ञाछन्दसोर्बहुलमित्यनेनेति भावः ।

ननु सर्ववृत्तिषु वर्णानामेकरूपत्वात्कथं वर्णकालभूयस्त्वमत आह—वर्णोपलब्धीति । वैकृतम्—आलस्यादिजन्यो ध्वनिः । पुनःपुनरुपलब्धिश्चाऽविच्छेदेनोपलब्धिधारा, न तु विच्छिद्य विच्छिद्य ग्रहणमिति । एतच्च 'तपर'सूत्रे विस्तरेण निरूपितम् । ध्वनिभेदादिति । वैकृतध्वनिभेदादित्यर्थः । ननु 'किंकृत' इति कारणप्रश्ने फलकथनेनोत्तरमसङ्गतमत आह—कारणमेवेति । 'वर्णकालभूयस्त्वं त्वि'ति भाष्यस्य 'कारणं वृत्तिविशेषस्ये'ति शेषः । तच्च

वर्णानां तु कालभूयस्त्वम् । तद्यथा,—हस्तिमशकयोस्तुल्यः सन्निकर्षः, प्राणिभूयस्त्वं तु ॥ यद्येवम्—

**द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात् ॥४॥**

द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कर्तव्यम् । किं कारणम् ? 'कालभेदात्' । ये द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायाम्, ये मध्यमायां वृत्तौ वर्णास्त्रिभागाधिकास्ते विलम्बितायाम् ।

**उक्तं वा ॥ ५ ॥**

किमुक्तम् ? 'सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराऽचिरवचनाद् वृत्तयो विशिष्यन्त' इति* ।

अथवा 'शब्दाऽविरामः संहिते'त्येतल्लक्षणं करिष्यते ।

**शब्दाऽविरामे प्रतिवर्णमवसानम् ॥ ६ ॥**

शब्दाऽविरामे प्रतिवर्णमवसानसंज्ञा प्राप्नोति† । किमिदं 'प्रतिवर्ण'मिति ?

---

प्र०—भवतीति । हस्तिमशकयोरिति । हस्तिनो हस्तिना यः सन्निकर्षः, मशकस्य मशकेन, स तुल्यः परस्पराऽपेक्षयेत्यर्थः । प्राणिभूयस्त्वमिति । हस्तिनौ महान्तं देशं व्याप्नुतो, मशकौ तु स्वल्पं, नैरन्तर्यं त्वविशिष्टमित्यर्थः । वर्णानां व्यञ्जकध्वनिकृतं यथोक्तं भेदमप्रतिपद्यमानः स्वगतमेव भेदं मत्वा चोदयति—यद्येवमिति । शिष्टं भाष्यं तपरस्तत्कालस्येत्यत्र व्याख्यातं, तत एवावधार्यम् ।

शब्दाऽविराम इति । यदा प्रयोक्ता शब्दोच्चारणान्न विरमति तदा शब्दाऽविरामः । स च मध्यमविलम्बितयोरपि परसन्निकर्षाऽभावेऽप्यस्तीति सिद्धा संहितासंज्ञा ।

शब्दाऽविरामे प्रतिवर्णमिति । भिन्नप्रयत्नजनितध्वनिव्यङ्ग्यत्वाद्वर्णानां प्रतिवर्णं प्रयत्नभेदादेकप्रयत्नाऽविच्छेदाऽभावात्प्रथमप्रयत्नोच्चारितवर्णानन्तरं प्रयत्नाऽन्तरेण वर्णा-

---

उ०—वैकृतध्वनिरूपं स्वयमुक्तमिति भावः । हस्तिमशकयोः परस्परसंनिकर्षं इति नाऽर्थं इत्याह—हस्तिन इति । अत एव 'प्राणिभूयस्त्व'मित्यग्रिमग्रन्थसङ्गतिरिति भावः । प्राणिशब्देनाऽत्र शरीरम् । व्यञ्जकध्वनीति । उपलब्धिधाराजनकध्वनीत्यर्थः । भाष्ये—उक्तं वेति वचनारम्भापेक्षो विकल्पः । ननु शब्दानां नित्यत्वाद्विरामाऽभावेऽविराम इति विशेषणं व्यर्थमत आह—यदेति । 'शब्द'शब्देन तदुच्चारणं लक्ष्यत इति भावः ।

नन्वविरामेऽवसानसंज्ञाप्राप्तिरित्यसङ्गतमत आह—भिन्नेति । ध्वनिपदेनाऽत्र कण्ठताल्वाद्यभिघातः । प्रयत्नभेदे एकप्रयत्नविच्छेदाऽभावो हेतुः । 'अविच्छेदाऽभाव'इत्यस्याऽऽ-

---

* १. १. ७०. वा० ५ । † विरामोऽवसानम् १. ४. ११०.

वर्णं वर्णं प्रति प्रतिवर्णम् । येनैव यत्नेनैको वर्ण उच्चार्यते विच्छिन्ने वर्णे उपसंहृत्य तमन्यमुपादाय द्वितीयः प्रयुज्यते, तथा तृतीयस्तथा चतुर्थः ॥ एवं तर्ह्यनवकाशा संहितासंज्ञाऽवसानसंज्ञां बाधिष्यते ॥ अथवाऽवसानसंज्ञायां प्रकर्षगतिर्विज्ञास्यते—साधीयो यो विराम इति । कश्च साधीयः ? यः शब्दार्थविरामः ।

अथवा 'ह्रादाऽविरामः संहिते'त्येतल्लक्षणं करिष्यते ।

**ह्रादाऽविरामे स्पर्शाऽघोषसंयोगेऽसन्निधानादसंहितम् ॥ ७ ॥**

ह्रादाऽविरामे स्पर्शानामघोषाणां [च[1]] संयोगेऽसंनिधानात्संहितासंज्ञा न

प्र०—न्तरोच्चारणादेकैकस्य वर्णस्य विरामसद्भावादवसानसंज्ञा प्राप्नोति । अवसानसंज्ञामिति । वर्णान्तरानुच्चारणे 'वृक्षः' इत्यादौ सावकाशामिति भावः । तेन सर्वथा वर्णानां यो विरामः सोऽवसानसंज्ञो न तु नान्तरीयक इत्यर्थः ।

अथवेति । सर्वत्र विरामसद्भावात्पुनः श्रुत्या विशेष आश्रीयते । शब्दार्थयोरिति । अन्यत्र तु सत्यपि शब्दविरामे पदार्थस्य वाक्यार्थस्य वाऽविरामान्न भवत्यवसानसंज्ञा ।

ह्रादाविराम इति । प्रयत्नविशेषजनितो वर्णविरामेऽप्यनुरणनरूपो वर्णान्तरोच्चारणेऽप्यनुरणनरूपो वर्णान्तरोच्चारणेऽप्यनुवर्तमानो घोषो ह्राद उच्यते । स्पर्शाऽघोषसंयोग इति । वर्ग्याणां प्रथमद्वितीयानां शषसानां च संयोगे घोषविच्छेदादसन्निधानात्संहितासंज्ञाया अप्राप्तिरित्यर्थः । 'अघोषसंयोग' इत्येव सिद्धत्वात्स्पर्शग्रहणमनर्थकम्, अस्पर्शानामप्यघोषाणां शषसानां संयोगे तुल्यन्यायत्वात्संज्ञाया अप्रसङ्गात् । न च स्पर्शानामघोषाणां चेति समुच्चयः, घोषवतां स्पर्शानां संयोगे दोषाऽप्रसङ्गात् ।

उ०—रोपितविच्छेदप्रतियोगिकोऽभाव इत्यर्थः । तेनाऽभावप्रतियोगिको भावः कथं, तस्य भावप्रतियोगिकत्वनियमादिति न शङ्क्यम् । विच्छेदश्च निवृत्तिविरामाऽपरपर्यायः क्रियाविशेष इति बोध्यम् । एकैकस्य वर्णस्येति । एकवर्णोच्चारणानन्तरं तन्नाशकाले द्वितीयवर्णोच्चारणफलकद्वितीययत्नोत्पत्त्यधिकरणकाले च वर्णाऽभावात्तद्विरामोऽस्त्येवेत्यर्थः । यद्यप्यवच्छेदकभेदेनाऽनेकयत्नोत्पत्तिरपि युगपत्, तथापि प्रकृते नाभिरूपैकदेशावच्छेदेनाऽनेकयत्नोत्पत्तिर्युगपद्विरुद्धा । वस्तुतो यत्नाऽयौगपद्यमेव । नर्त्तक्या नानावयवावच्छिन्नक्रियाः क्षणभेदेनैव । कालसौक्ष्म्यात्तु तदग्रह इत्याशयः । अवसानसंज्ञा प्राप्नोतीति । एवं चैकसंज्ञाधिकारात्संहितासंज्ञा न स्यादिति भावः । विच्छिन्ने वर्णे । तेनैव यत्नेन नष्टे इत्यर्थो बोध्यः । एतेन 'येनैवे'त्यत्रैवकारो व्यर्थ इत्यपास्तम् । उपसंहृत्य । पूर्वयत्नं त्यक्त्वेत्यर्थः । अन्यमिति । यत्नान्तरमित्यर्थः । प्रकर्षबोधकशब्दाभावात्कथं तत्प्रतीतिरत आह—सर्वत्रेति । शब्दस्य विरामः—श्रवणकृतः । अर्थस्य—बोधकृतः । अन्यत्र त्विति । वर्णानन्तरं वर्णान्तरोच्चारणे मध्यकाले इत्यर्थः । घोषः—ध्वनिविशेषः । घोषविच्छेदादिति । असत्त्वादेव विच्छेदस्तदाह—असंनिधानादिति । घोषवतामिति । तृतीयचतुर्थानामित्यर्थः । दोषाऽप्रसङ्गादिति ।

१—क्वचिन्न ।

प्राप्नोति—कुक्कुटः [1]पिप्पका पित्तमिति । किमुच्यते संयोग इति । अथ यत्रैकः पचतीति, एकः पूर्वपरयोर्ह्रादेन प्रच्छाद्यते । तद्यथा,—द्वयो रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते । बदरपिटके रिक्तको लोहकंसस्तद्गुण उपलभ्यते ।

**एकेन तुल्यः सन्निधिः ॥ ८ ॥**

यथैवैको वर्णो ह्रादेन प्रच्छाद्यते, एवमनेकोऽपि ।

अथवा 'पौर्वापर्यमकालव्यवेतं संहिते'त्येतल्लक्षणं करिष्यते ।

**पौर्वापर्यमकालव्यवेतं संहिता चेत्पूर्वाऽपराऽभावादसंहितम् ॥९॥**

पौर्वापर्यमकालव्यवेतं[2] संहिता चेत्पूर्वाऽपराभावात्[3]संहितासंज्ञा न प्राप्नोति । न हि वर्णानां पौर्वापर्यमस्ति । किं कारणम् ?

प्र०—कुक्कुट इति । कुक्कुट इवाऽयमिति कनो'लुम्मनुष्ये'इति लुपि कृते 'संज्ञायामुपमान'मित्याद्युदात्तत्वं शिष्टमनुदात्तं, ततः संहितायां विधीयमानमुदात्तादनुदात्तस्य स्वरितत्वं न स्यात् । पचतीति । अत्रापि चकारस्याऽघोषत्वादकारोच्चारणे घोषविच्छेदात्स्वरितत्वाऽप्रसङ्गः । ह्रादेनेति । द्वयोरकारयोर्घोषवतोर्मध्ये चकारो घोषवानिव लक्ष्यत इत्यर्थः । आश्रयान्तरगतोऽपि गुण आश्रयान्तर उपलभ्यत इति दृष्टान्तेन दर्शयति—द्वयोरिति ।

एकेनेति । अनेकस्य यः सन्निकर्षः स एकेन तुल्यः, यथैकोऽतद्गुणोऽपि तद्गुणवस्त्वन्तरसन्निधौ तद्गुण उपलभ्यते, तथाऽनेकोऽपि स्फटिकादिरर्थ इत्यर्थः ।

अथवेति । वर्णान्तरोच्चारणकालादन्येन वर्णशून्येन कालेनाऽव्यवहितं पौर्वापर्यं संहितेति लक्षणं क्रियते । तेन मध्यमविलम्बितयोः परसन्निकर्षाऽभावेऽपि संहितासंज्ञा सिध्यति । पूर्वाऽपराभावादिति । युगपत्स्थितानां देशकृतं पौर्वाऽपर्यं दृष्टम् । वर्णास्त्वेकैकश उपलभ्यमाना यौगपद्येनाऽसन्निधानात्कथं पौर्वापर्यमश्नुवीरन् ।

उ०—तथा व्याख्याने हि तत्रापि दोष इति भाष्याल्लभ्यते, तच्चाऽसङ्गतं स्यात्तत्र दोषाऽप्राप्तेरिति भावः । स्पर्शानां मध्येऽघोषस्येत्यर्थः । शषससंयोगे फलं नास्तीति भाष्याशयमन्ये । ननु कुक्कुटादौ न किंचित्संहिताकार्यमत आह—कन इति ।

घोषविच्छेदादिति । असत्त्वादेव विच्छेदः । भाष्ये—पचतीत्यस्य—'तत्र कथ'मिति शेषः । 'कुक्कुट' इत्यादौ कृतशङ्कः 'पचती'त्यत्र परिहरति—एकः पूर्वेति । तन्न्यायेन कुक्कुटादावपि समाधत्ते—एकेनेत्यादिना । वर्णान्तरेति । वर्णान्तरोच्चारणे नाऽन्तरीयकाऽर्धमात्राकालादन्येनाऽधिकेनेत्यर्थः । ननु पूर्वः पूर्वकालः परश्च परकाल इति कथं पूर्वाऽपरभावोऽत आह—युगपदिति । अयं भावः—यदि कालिकं पौर्वापर्यं त'देको यणची'त्यादिसंहिताकार्याऽसंभवः, पूर्वपरयोर्युगपत्स्थित्यभावादत एव न दैशिकमपीति । अनेकश इति ।

१—पिप्पिका 'पिप्पकः' पा० । २—'व्यपेतं' पा० । ३—'पूर्वपराभावात्' पा० ।

**एकैकवर्णवर्तित्वाद्वाच उच्चरितप्रध्वंसित्वाच्च वर्णानाम् ॥ १० ॥**

एकैकवर्णवर्तिनी वाक्, न द्वौ युगपदुच्चारयति। 'गौ'रिति यावद्गकारे वाग्वर्तते, नौकारे, न विसर्जनीये। यावदौकारे, न गकारे, न विसर्जनीये। यावद्विसर्जनीये, न गकारे, नौकारे। 'उच्चरितप्रध्वंसित्वात्'। उच्चरितप्रध्वंसिनः

प्र०- एकवर्णवर्तित्वादिति। सामान्येनोपक्रमात्स्त्रीप्रत्ययाऽभावः। उच्चरितेति। क्रमोत्पन्ना अपि वर्णा यद्यवतिष्ठेरंस्तदा स्यात्पूर्वाऽपरव्यपदेशो ज्येष्ठमध्यमकनिष्ठव्यपदेशवत्। अनवस्थानात्तु नास्ति तात्त्विकः पूर्वाऽपरभाव इत्यर्थः। व्यञ्जकध्वन्यपेक्षया चैतदुक्तम्। ध्वनिस्फोटभेदस्त्वन्यत्र निर्णीतत्वान्नेहोपन्यस्यते। न द्वौ युगपदिति। युगपद्द्वयोरुच्चारणे स्यादेवाऽव्यवधानम्। कालेन पौर्वापर्यं तु मा भूदिति भावः। वागिति। वागिन्द्रियमित्यर्थः। एतेन युगपदनवस्थानात्सन्निकर्षोऽप्याक्षिप्त इति विज्ञेयम्।

उ०-भिन्नकाले इत्यर्थः। 'एकैकश' इति पाठान्तरम्। तत्राऽपूपौ द्वाविति वद्वयतिलुनत इतिवच्च द्विर्वचनशसोर्यौगपद्यं बोध्यम्। तद्धितमात्रेण तु न वीप्साप्रतीतिः, अल्पश इत्यर्थस्याऽपि प्रतीतेः। नन्वेकैकवर्णवर्तिनीत्वादित्युचितम्, अगुणवचनत्वेन पुंवत्त्वाऽप्राप्तेरत आह— सामान्येनेति। तेनोपक्रमे च नपुंसकत्वमेवेति भावः। अनेन युगपदुपलम्भं निरस्य युगपद्वास्तवीं सत्तामपि निरसितुमाह—भाष्ये—उच्चरितेति। उच्चरितप्रध्वंसित्वम्। उच्चारणाधिकरणकालोत्तरकालवृत्तिध्वंसप्रतियोगित्वरूपम्। उच्चारणाऽधिकरणकालोऽपि क्षणसमूहरूपः प्रत्यक्षयोग्यः, क्षणिकस्य प्रत्यक्षाऽयोगात्। यद्यवतिष्ठेरन्निति। कालिकपौर्वापर्यमपि युगपदवस्थितेष्वेव ग्रहीतुं शक्यं न तु नष्टविद्यमानयोस्तदाह—ज्येष्ठेत्यादि। 'अयं ज्येष्ठोऽयं कनिष्ठ' इति व्यवहारवदयं पूर्वोऽयं पर इति व्यवहारस्य नष्टविद्यमानयोरसंभवः, नष्टविद्यमानयोः संबन्धस्य निरूपयितुमशक्यत्वादिति भावः। वर्णानां स्फोटरूपाणां नित्यत्वादिदमयुक्तमत आह—व्यञ्जकेति। स्फोटस्य तु सर्वसाधारण्येनैकत्वात्तमादाय पौर्वापर्यस्योक्तिसंभवोऽपि नास्तीति भावः। अन्यत्र—तपरसूत्रे। स्यादेवेति। कालकृतमव्यवधानं स्यादेवेत्यर्थः। एवं

---

१–'एकवर्णवर्तित्वात्' पा०। अयमेव पाठः कैयटसम्मतः। पाठाविमौ वाक्यपदीयस्य पुण्यराजटीकायामुदधृतौ विद्येते (वाक्य० का० २ का० ८३ पृ० ५५)

"अत्र भाष्यपरिकर्त्रा कीलहार्नमहाशयेन पूर्वापराभावात्, एकैकवर्णवर्तित्वात् इति पाठद्वयं पुण्यराजेनोपात्तयोः पाठयोर्भाष्यकोशेषु सतोः परिगृहीतमिति कारणेनात्र भवितव्यम्। मन्ये पुण्यराजटीका तेन नालोकितेति"। इत्यत्र चारुदेवशास्त्रिणां टिप्पणी।

२–'एकवर्णवर्तिनी' पा०।

खल्वपि वर्णाः । उच्चरितः प्रध्वस्तः । अथाऽपरः प्रयुज्यते, न वर्णो वर्णस्य सहायः ॥ एवं तर्हि—

बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्वन्नीतिः ।
शब्देनाऽर्थान्वाच्यान्दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम् ॥

बुद्धिविषयमेव शब्दानां पौर्वापर्यम् । इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यत्यस्मिन्नर्थेऽयं शब्दः प्रयोक्तव्यः, अस्मिंस्तावच्छब्देऽयं तावद्वर्ण स्ततोऽयं ततोऽयमिति ॥१०९॥

## विरामोऽवसानम् ॥ १ । ४ । ११० ॥

इदं विचार्यते—अभावो वाऽवसानलक्षणं स्याद्विरामो वेति ? कश्चात्र-विशेषः ?

प्र०- एवं तर्हीति । बुद्धिप्रकल्पितः सर्वः पौर्वापर्यसन्निकर्षादिव्यवहार इत्यर्थः । धीरः—पण्डितः । तत्वन्नीतिरिति । तननं तत्, साऽस्ति यस्याः सा'तत्वती'—सकलविषयव्यापिनी, नीतिर्बुद्धिर्यस्य स तत्वन्नीतिरिति । अन्ये तु तन्वन्नीतिरिति पठन्ति । तन्वती विषयान्व्याप्नुवती बुद्धिर्यस्येति स एवार्थः ॥१०९॥

विरामोः । इदं विचार्यत इति । विचरति नाना गच्छति यद्वस्तु तद्विचार्यते

उ०-न युगपदुच्चारणाऽभावान्न संनिकर्षो, नापि पौर्वापर्यमिति भावस्तदाह भाष्ये—अथाऽपर इति । तद्वर्णध्वंसाऽनन्तरमपरो वर्णः प्रयुज्यते तावतापि स पौर्वापर्यादिव्यवहारे न वर्णान्तरस्य सहाय इत्यर्थः ।

बुद्धौ कृत्वेति । बुद्धावन्तःकरणे, चेष्टाः कण्ठताल्वाद्यभिघातव्यापारजन्यान् शब्दान् कृत्वा—प्रतिबिम्बितान्कृत्वा, शब्देन—वाच्यानर्थान् बुद्धौ—बुद्धिरूपे देशे दृष्ट्वा—तत्रैव पौर्वापर्यव्यवहारं कुर्यादित्यर्थः । 'बुद्धिविषय'मित्यस्य बुद्धिस्थशब्दविषयमित्यर्थः । तत्र वक्तुर्बुद्धिस्थत्वमुपपादयति—य इति । तदर्थमेव शास्त्रप्रवृत्तेस्तस्यैव शास्त्रफलतयोक्तेः । अस्मिन्नर्थे इति । एतदर्थमेव बुद्धावर्थदर्शनमप्युक्तम् । श्लोके पौर्वापर्यमित्युपलक्षणम् । अयमिति । बुद्ध्युपारूढत्वमात्रश्रव्यसूक्ष्मोच्चारणव्यङ्ग्यशब्दपरामर्शः । अन्यथेदमः प्रत्यक्षपरामर्शकत्वा-देतदनुपपत्तिः । प्रयोक्तव्याः—परप्रत्यययोग्यस्थूलोच्चारणरूपेण प्रयोगेणाऽभिव्यक्तव्याः । अस्मिन् शब्दे—इत्यस्य 'व्यञ्जनीये' इति शेषस्तदाह—बुद्धिप्रकल्पित इति । बुद्धिस्थ-प्रकल्पितशब्दविषय इत्यर्थः । 'प्रकल्पिते'त्यस्य प्रतिबिम्बेन तत्तद्रूपतया प्रकल्पितेत्यर्थः ॥ १०९ ॥

विरामो । नाना प्रकारं गच्छति प्राप्नोति यत्तन्नानाप्रकारं गम्यते तथा प्रापय्य किं

१—क्वचिन्न ।

**अभावेऽवसानलक्षण उपर्यभाववचनम् ॥ १ ॥**

अभावेऽवसानलक्षण उपर्यभावग्रहणं कर्तव्यम् । उपरि योऽभाव इति वक्तव्यम् । पुरस्तादपि हि शब्दस्याऽभावस्तत्र मा भूदिति । किं च स्यात् ? रसः रथः, 'खरवसानयोर्विसर्जनीयः' [ ८. ३. १५ ] इति विसर्जनीयः प्रसज्येत ।

अस्तु तर्हि—विरामः ।

**विरामे विरामवचनम् ॥ २ ॥**

यस्य विरामः, विरामग्रहणं तेन कर्तव्यम् । ननु च यस्याऽप्यभावस्तेनाऽप्यभावग्रहणं कर्तव्यम् । परार्थं मम भविष्यति—अभावो लोपः†, ततोऽवसानं चेति । ममापि तर्हि विरामग्रहणं परार्थं भविष्यति—विरामो लोपः, अवसानं चेति । '[1]उपरि यो विराम' इति वक्तव्यम् । पुरस्तादपि [हि[2]] शब्दस्य विरामस्तत्र मा भूत् । किं च स्यात् ? रसः रथः, 'खरवसानयोर्विसर्जनीय' इति विसर्जनीयः प्रसज्येत । [नैष दोषः[2] ।] आरम्भपूर्वको मम विरामः ।

अथवा नेदमवसानलक्षणं विचार्यते । किं तर्हि ? संज्ञी । अभावोऽवसानसंज्ञी स्याद्विरामो वेति । कश्चात्र विशेषः ?

**अभावेऽवसानसंज्ञिन्युपर्यभाववचनम् ॥ ३ ॥**

अभावेऽवसानसंज्ञिन्युपर्यभावग्रहणं कर्तव्यम् । उपरि योऽभाव इति

प्र०—परीक्ष्यत इत्यर्थः । अभावो वेति । केचिदभावोऽवसानमिति पठन्ति, अन्ये तु विरामोऽवसानमिति, तत्र युक्ताऽयुक्तविचारः क्रियते । उपरीति । वर्णोच्चारणादूर्ध्वं योऽभावस्तदुपलक्षितो वर्णोऽवसानमिति वक्तव्यं प्रागभावस्योपलक्षणत्वनिवृत्त्यर्थम् ।

उ०—युक्तमिति परीक्ष्यत इत्यर्थः । अत्र लक्षणे सन्देहाऽभावादाह—केचिदिति । प्रागभावस्येति । प्राग्वर्तिनः शब्दाऽभावस्येत्यर्थः । भाष्ये—रसः रथ इत्यत्र । खरवसानयोरिति विसर्जनीयः प्रसज्येतेति । पदावयवस्याऽवसाने रेफस्य विसर्ग इति सूत्रार्थं इति भावः । 'खरी'ति वाक्ये तु रेफान्तस्य पदस्येत्यर्थं इति बोध्यम् ।

अदर्शनमिति । यद्यपि तद्दर्शनाऽभावः, अभावश्च वर्णस्य, तथाप्यभावपदेन तस्यापि लाभः । वर्णदर्शनाऽभाववर्णाऽभावयोः समनियतत्वादिति भावः । अस्मिन् पक्षे इति । वर्णान्तराऽभावोपलक्षितवर्णस्याऽवसानत्वपक्षे इत्यर्थः । स च प्रवृत्तस्येति । एवं च पुरस्तान्न विरामव्यवहार इति भावः । भाष्ये—नेदमवसानलक्षणमिति । अवसानव्यवहारविषयस्य

† अदर्शनं लोपः १. १. ६०. १—इतः पूर्वम् 'उपरि विरामवचन'मिति वार्तिकं केचित्पठन्ति ।
२—क्वचिन्न ।

वक्तव्यम् । पुरस्तादपि हि शब्दस्याऽभावस्तत्र मा भूदिति । किं च स्यात् ? रसः रथः, 'खरवसानयोर्विसर्जनीय' इति विसर्जनीयः प्रसज्येत ।

अस्तु तर्हि—'विरामोऽवसानम्' ।

**विरामे विरामवचनम् ॥ ४ ॥**

यस्य विरामस्तेन विरामग्रहणं कर्तव्यम् । ननु च यस्याप्यभावस्तेनाप्यभावग्रहणं कर्तव्यम् । परार्थं मम भविष्यति—अभावो लोपः, ततोऽवसानं चेति । ममापि तर्हि विरामग्रहणं परार्थं भविष्यति—'विरामो लोपोऽवसानं चे'ति । उपरि यो विराम इति वक्तव्यम् । ननु चोक्तम्—आरम्भपूर्वक इति । नावश्यमयं रमिः प्रवृत्तावेव वर्तते । किं तर्हि ? अप्रवृत्तावपि । तद्यथा,—'उपरतान्यस्मिन्कुले व्रतानि' 'उपरतः स्वाध्याय' इति । न च तत्र स्वाध्यायो भूतपूर्वो भवति, नापि व्रतानि ।

प्र०-रस इति । परवत्पूर्वस्याऽपि रेफस्याऽभावविषयत्वाद्विसर्जनीयप्रसङ्गः ।

विरामे विरामवचनमिति । अधिकं कर्तव्यमित्यर्थः । ततोऽवसानं चेति । अदर्शनमभाव इत्येक एवाऽर्थः । तेन पुनरभावग्रहणं न कर्तव्यमित्यर्थः । तत्र लोपसंज्ञायामभावः संज्ञित्वेनाऽऽश्रीयते, अवसानसंज्ञायां तूपलक्षणत्वेन । तेन वर्णान्तराऽभावोपलक्षितो वर्णोऽवसानसंज्ञ इत्यर्थः । उत्तरत्र त्वभावस्यैव लोपावसानसंज्ञे व्याख्यास्येते । अस्मिन्पक्षे 'खरवसानयो'रिति षष्ठी । खरः समीपस्य रेफस्याऽवसानस्य च रेफस्येत्यर्थः । अथवैकाऽपि सप्तमी विषयभेदाद्भिद्यते—खरि परतो रेफस्य विसर्जनीयोऽवसाने च रेफे स्थानिनि विसर्जनीय इत्यादेशस्य विषयत्वेन स्थानी विवक्ष्यते । ममापीति । अभावो विराम इति पर्यायत्वं मन्यते । आरम्भपूर्वक इति । निवृत्तिर्विरामः, स च प्रवृत्तस्य भवतीति भावः । अवसानलक्षणमिति । अभावोपलक्षितो वर्णोऽवसानं, विरामोपलक्षितो वेति पूर्वं विचारितम् । इदानीं तु तावेव संज्ञित्वेन विचार्येते । 'अभावो लोप' इत्येकस्य संज्ञाद्वयविधानसामर्थ्याद्विषयविभाग आश्रीयते । प्रसक्ताऽभावो लोपसंज्ञः, अभावमवसानसंज्ञमिति । नावश्यमिति । प्रवृत्तौ सत्यां या निवृत्तिस्तस्यामित्यर्थः । उपरतान्यस्मिन्निति । न प्रवृत्त्य निवृत्तानि । किं तर्हि ? पूर्वमेवाऽप्राप्तानीत्यर्थः । नियतविषयत्वाच्च शब्दप्रयोगस्य 'शशविषाणमुपरत'मिति प्रयोगाऽभावः । क्वचिद्वनानीति पाठः ।

उ०-वर्णस्योपलक्षणभूतं वस्तु न विचार्यते इत्यर्थः । प्रसक्ताऽभाव इति । प्रसक्तोच्चारणाऽभाव इत्यर्थः । प्रवृत्तौ रमेः प्रयोगस्य क्वाप्यभावादाह—प्रवृत्तौ सत्यामिति । न प्रवृत्त्य निवृत्तानीति पाठः । उपरतविरतौ च पर्यायौ । क्वचिद्वनानीति पाठ इति । व्रतानीत्यस्य स्थाने तथा पाठ इत्यर्थः । तत्र वनपदं वानप्रस्थाश्रमोपलक्षणम् । एतदन्तेन लक्षणयोः साम्यमुपपादितम् ।

**भावाऽविरामभावित्वाच्छब्दस्याऽवसानलक्षणं न ॥ ५ ॥**

भावाऽविरामभावित्वाच्छब्दस्याऽवसानलक्षणं नोपपद्यते । किमिदं 'भावाऽविरामभावित्वा'दिति ? भावस्याऽविरामो भावाऽविरामः, भावाऽविरामेण भवतीति भावाऽविरामभावी, भावाऽविरामभाविनो भावो भावाऽविरामभावित्वम् ।

अपर आह—'भावभावित्वादविरामभावित्वाच्च शब्दस्याऽवसानलक्षणं नोपपद्यत' इति ।

**तत्पर इति वा वर्णस्याऽवसानम् ॥ ६ ॥**

विरामपरो वर्णोऽवसानसंज्ञो भवतीति वक्तव्यम् ।

---

प्र०– भावाविरामभावित्वादिति । इह शब्दस्य स्वसंबन्धी ह्यभावोऽवसानलक्षणं स्यात्, शब्दान्तरस्य संबन्धी वा । न तावत्स्वसंबन्धी, विरोधात् । न हि यस्य सत्ता तस्य तदानीमेवाऽसत्ता युज्यते । नाऽपि शब्दान्तरसंबन्धी । न हि घटाऽभावः पटस्याऽभावो भवति । भावस्य सत्ताया अविच्छेदेन भवत्यवश्यमिति भावाऽविरामभावी—शब्दः । न हि शब्दस्य भवनकाले सत्ता विच्छिद्यते इत्यर्थः ।

अपर आहेति । भावाऽविरामशब्दयोर्द्वन्द्व इत्यर्थः । इदानीं लक्षणद्वयस्याऽप्यनुपपत्तिः प्रतिपाद्यते । भावेन सत्तायाऽविरामेण अविच्छेदेन भवतीत्यर्थः । उपाधिरहितस्याऽभावस्य प्रतीतिर्नास्ति ।

तत्पर इति वेति । इदानीं शब्दान्तराऽभावपरो वर्णोऽवसानसंज्ञो भवतीति प्रतिपाद्यते । अभावेनापि बुद्धिपरिकल्पितं पौर्वापर्यमाश्रीयते ।

---

उ०– अथोभयत्रापि दोषं शङ्कते—भावाऽविरामेति । नापि शब्दान्तरेति । 'वावसाने' इत्यादाववसाने स्थितस्येत्यर्थः । प्रत्यासत्त्योचितः । एवं च तद्वर्णसम्बन्ध्यवसाने इत्यर्थं इति भावः । अविच्छेदेनेति । अविच्छेदाऽविरामौ पर्यायौ, तत्प्रतियोगिनौ विच्छेदविरामौ च क्रियाविशेषरूपौ भावपदार्थौ । एतेनाऽभावस्य भावप्रतियोगिकत्वादिदं चिन्त्यमिति परास्तम् । अन्याऽभावपरो वर्ण इत्यादि त्वग्रे वक्ष्यत्येव ।

इदानीम्—'अपर आहे'ति व्याख्यानकाले । अन्ये तु 'वर्णानामभाव' इत्युक्ते वर्णत्वावच्छिन्नप्रतियोगिताकाऽभाव इत्यर्थः । स च न वर्णसत्त्वे इति भाष्यार्थं इत्याहुः । ननु शब्दस्य भावाऽविरामभावित्वेऽप्यभावोऽवसानमिति लक्षणे को दोषस्तत्र शब्दस्याऽनिवेशादित्यत आह—उपाधिरहितस्येति । प्रतियोगिरहितस्येत्यर्थः । शब्दशास्त्रत्वाच्च शब्द एव प्रतियोगीति भावः । विरामोऽभावपदार्थोपि संबन्धादिवदभावसमानाधिकरणत्वाच्च प्रतियोगिसापेक्ष इति भावः ।

बुद्धिकल्पितेति । बुद्धिदेशेऽग्रेऽभावं दृष्ट्वा तत्र कल्पितं पौर्वापर्यमित्यर्थः ।

**वर्णोऽन्त्यो वाऽवसानम् ॥ ७ ॥**

अथवा व्यक्तमेव पठितव्यम्—'अन्त्यो वर्णोऽवसानसंज्ञो भवती'ति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

**संहिताऽवसानयोर्लोकविदितत्वात्सिद्धम् ॥ ८ ॥**

'संहिताऽवसान'मिति लोकविदितावेतावर्थौ । एवं हि कश्चित्कंचिदधीयान-माह-'[1]शन्नोदेवीयं संहितयाऽधीष्वे'ति । स तत्र परमसन्निकर्षमधीते । अपर आह-'केनाऽवस्यसी'ति ? स आह—अकारेणोकारेणोकारेणेति । एवमेतौ लोकविदितावर्थौ, तयोर्लोकविदितत्वात्सिद्धमिति ॥११०॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् । पादश्च समाप्तः । प्रथमोऽध्यायः समाप्तः ।

---

प्र०- अथवेति । यद्यपि विरामशब्दे करणसाधने आश्रीयमाणेऽयमर्थो लभ्यते, तथापि भावसाधनस्याऽपि संभवात्करणसाधनत्वं संदिग्धमिति 'व्यक्तमेव पठितव्य'-मित्युक्तम् ।

संहितयाधीष्वेति । यथा पदनैरन्तर्यं संहिताव्यवहारस्तथैकपद्येऽपि वर्ण-नैरन्तर्ये । अवसानशब्दोऽपि विधिप्रदेशेषु भावसाधनः, करणसाधनो वाऽऽश्रयिष्यते इति नार्थः संज्ञाद्वयविधानेन । तेन विनापीष्टस्य सिद्धत्वात् ॥११०॥

इत्युपाध्यायजैयटपुटकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य चतुर्थपादे चतुर्थमाह्निकम् । पादोऽध्यायश्च समाप्तः ।

---

उ०- ननु लोके संहिताशब्दः पदनैरन्तर्ये एव प्रसिद्धो न वर्णनैरन्तर्ये इत्यत आह—यथेति । ऐकपद्ये इति । एकपदे इत्यर्थः । भावसाधन इति । अत्र पक्षे खरवसानयोरित्यत्र बौद्धं पौर्वापर्यमाश्रयणीयमिति शिवम् ॥११०॥

इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्याऽध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् । पादोऽध्यायश्च समाप्तः ।

---

१—'शन्नो देवी'शब्दोऽस्मिन्नस्तीति शन्नोदेवीयं सूक्तम् । 'मतौ च्छः सूक्तसाम्नोः ५. २. ५९. इति मत्वर्थे छः प्रत्ययः । 'शं नो॑ दे॒वीर॒भिष्ट॑ये' इत्यादि सूक्तं सुप्रसिद्धाथर्ववेदशौनकशाखायाः प्रथम-काण्डस्य षष्ठं सूक्तं वर्तते । पैप्पलादशाखायास्तु प्रथमं सूक्तम् । नवाह्निकस्य ४ पृष्ठे टिप्पणी द्रष्टव्या ।

२—संहिताऽवसानसंज्ञायोर्लोकविदितत्वात् तद्विधायकं सूत्रद्वयं शक्यमकर्तुम् ।

इति वेदविमर्शादिपुस्तकलेखकेन 'सुधारक'मासिकपत्रसम्पादकेन नानाग्रन्थसम्पादकानुवादकेन वेदव्याकरणाचार्येण वेदव्रतशास्त्रिणा निहितायां 'विमर्शा'मिधटिप्पण्यां प्रथमोऽध्यायः ।

❀ ओ३म् ❀

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

[ श्रीकैय्यटकृतप्रदीपेन नागोजीभट्टकृतेन भाष्यप्रदीपोद्द्योतेन च विभूषितम् ]

तस्यायं—

## द्वितीयो भागः

स च—

परमतपस्विनां श्रीमताम्भगवान्देवाचार्याणामन्तेवासिना
महाविद्यालयगुरुकुलझज्जरस्योपाचार्येण
वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्येण
पण्डित वेदव्रतेन वर्णिना सम्पादितो
'विमर्श' टिप्पण्या च संयोजितः ।

प्रकाशकः—

हरयाणा-साहित्य-संस्थानम्
गुरुकुल झज्जर (रोहतक)

प्रथमं संस्करणम्
द्विसहस्रम्
२०००

२०२१ विक्रमाब्दे
१८८६ शकाब्दे
१९६४ खिस्ताब्दे

मूल्यम् ७·००
सप्तरूप्यकाणि
( सात रुपये )

प्रकाशकः—
हरयाणा-साहित्य-संस्थानम्
पो० गुरुकुल झज्जर, जि० रोहतक

सम्पादकः—
श्री वेदव्रतः स्नातकः सिद्धान्तशिरोमणिः
वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्यः
(उपाचार्यः—महाविद्यालयगुरुकुलझज्जरस्य)

मुद्रकः—
श्री शिरीशचन्द्र शिवहरे, एम. ए.
प्रबन्ध सञ्चालक
दी फाइन आर्ट प्रिंटिंग प्रेस, अजमेर

❀ ओ३म् ❀

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

[ प्रदीप-उद्द्योत-विमर्शैः समलङ्कृतम् ]

तस्यायं—

## द्वितीयोऽध्यायः

### समर्थः पदविधिः ॥ २ । १ । १ ॥

विधिरिति कोऽयं शब्दः ? विपूर्वाद्धाञः कर्मसाधन इकारः, विधीयते ]

प्रदीपः-समर्थः पदविधिः । विधिरिति कोऽयं शब्द इति । अर्थाऽनिश्चयात्संदेहे सति प्रश्नः । किं भावसाधनः, उत कर्मसाधनः । तत्र भावसाधने पदानां विधीयमानत्वात् कर्मणि षष्ठी । इतरत्र शेषषष्ठी । तत्र येषामर्थभेदाच्छब्दभेद इति दर्शनं, सादृश्यनिबन्धना च प्रत्यभिज्ञा, तद्दर्शने 'क' इति प्रश्नो विशिष्टशब्दनिर्धारणाय । ये त्वर्थभेदेऽपि शब्दस्यैक्यमिच्छन्ति तत्पक्षेऽर्थभेदाच्छब्दभेदमारोप्य 'क' इति प्रश्नः ॥ विपूर्वादिति । 'विध विधाने' इत्यस्यौणादिकेन्प्रत्ययान्तस्य निवृत्त्यर्थं 'विपूर्वाद्धाञ' इत्युक्तम् । स्वरे चाऽनयोर्भेदः । इन्प्रत्ययान्तस्याद्युदात्तत्वात्, किप्रत्ययान्तस्याऽन्तोदात्तत्वात् । तस्यैव प्रयोगदर्शनमुत्तरे हेतुः । कर्मसाधन इति । एतद्भावसाधननिवृत्त्यर्थमुक्तम् । 'विधीयत' इति वाक्यप्रदर्शनं सुखप्रतिपत्त्यर्थम् ।

उद्द्योतः-समर्थः पद । विधिरिति कोऽयमिति भाष्यस्य न स्वरूपप्रश्ने तात्पर्यं, तस्य श्रोत्रेण निश्चितत्वादित्यतोऽभिप्रायमाह—अर्थेति । कोऽयमित्यस्य किमर्थकोयमित्यर्थः । शब्दार्थयोरभेदादिति भावः । किं भावेति । करणाधिकरणसाधनस्त्वनन्वितत्वात्प्रयोजनाऽभावाच्च नोल्लिखितः । विधीयमानत्वादिति । वस्नसादिविधाविति शेषः । इतरत्रेति । कर्मसाधने इत्यर्थः । 'अर्थभेदाच्छब्दभेद' इति मते प्रत्यभिज्ञानुपपत्तिः, तद्भेदेपि शब्दैक्ये तु 'कः शब्द'इत्यनुपपन्नमत आह—तत्रेति ।

औणादिकेन्निवि । 'इगुपधात्कि'दित्यनेनेति भावः । स्वरे चेति । बहुलग्रहणादौणादिकस्यापि कर्मणि संभव इति भावः । प्रयोगदर्शनमिति । ईस्वरेणाऽष्टाध्यायीपाठादह, वेदे लोके चेति शेषः ॥ एतद्भावेति । तथा सति पदकर्मके विधाने इत्यथापत्ता समासाद्य-

विधिरिति । किं पुनर्विधीयते ? समासो विभक्तिविधानं पराङ्गवद्भावश्च* ।

किं पुनरयमधिकारः, आहोस्वित्परिभाषा ? कः पुनरधिकारपरिभाषयोर्विशेषः ? अधिकारः प्रतियोगं तस्याऽनिर्देशार्थ इति योगे योग उपतिष्ठते ।

---

प०- किं पुनरिति । कार्यविशेषस्येहाऽनिर्देशात्प्रश्नः । इतरो वक्ष्यमाणान्कार्यविशेषान् पर्यालोच्याह—समास इति । अनन्तरस्यापि पराङ्गवद्भावस्याऽल्पविषयत्वादनादरात्तन्निमित्तग्रहणाचातिप्रसङ्गनिरासस्य सिद्धत्वान्मुख्यप्रयोजनत्वाऽभावात्पश्चान्निर्देशः कृतः । तत्र 'समास'शब्देन संज्ञा वोच्यते, समुदायो वा संज्ञी । 'विभक्तिविधान'शब्देन सामान्यविहितानां विभक्तीनां 'कर्मणि द्वितीये'त्यादिना यो नियमः स उच्यते । एवं हि पदविधिर्भवति । अथाप्येकवाक्यताश्रयणेन विभक्तीनां विधानं तथापि पदान्तरसम्बन्धेन यासां विभक्तीनां विधान'मन्तरान्तरेण युक्त'इति, तिङ्विभक्तीनां 'नेर्विशः' इति, तदाश्रयेण पदविधित्वमस्त्येव । तथा चोक्तम्—'निरपि पदं विशिरपि पद'मिति । तत्र विभक्त्यवच्छिन्नत्वाद्विशिष्टं विधानं कर्म सामान्यविधानक्रियाया भवति । यथोक्तम्—'सामान्यपुषेरवयवपुषिः कर्मे'ति ।

कार्यविशेषानिर्देशादस्य पारार्थ्यमवगत्य परार्थेषु रूपद्वयं दृष्ट्वा पृच्छति—किं पुनरिति । नन्वधिकारेऽस्मिन् पदविधिग्रहणमनर्थकम् । उत्तरेषां पदविधित्वाऽव्यभिचारात् । तस्मात्पदविधिग्रहणात्परिभाषात्वनिश्चयात्प्रश्नानुपपत्तिः । एवं तर्हि युक्तायुक्तत्वापेक्षया प्रश्नः । तत्र यद्यधिकारपक्षस्य युक्तत्वं तदा न कर्तव्यं पदविधिग्रहणम् । परिभाषाया युक्तत्वे कर्तव्यम् । अधिकारपक्षेऽपि वा विस्पष्टार्थं भविष्यति ।

कः पुनरिति । अन्योऽत्र प्रष्टा विज्ञेयः । आद्येन तु तद्विशेषज्ञेन भवितव्यम् । अन्यथा 'किं पुनरयमधिकार' इति प्रश्नो नोपपद्यते ॥ अधिकारः प्रतियोगमिति ।

---

उ०-संग्रहः स्यात्, वस्नसाद्यादेशविधौ चाऽतिप्रसङ्गः स्यादिति भावः । इह—सूत्रे ॥ इतर इति । प्रकरणपर्यालोचनयेति भावः । समासपदं वृत्तिमात्रोपलक्षणम् ॥ समुदायो वेति । स ह्यवयवभूतपदानां कार्यः, समूहस्यावयवातिरिक्तताया अपि स्वीकारादिति भावः । विभक्त्यन्तस्य पदत्वाद्विभक्तिविधानस्य कथं पदोद्देश्यकविधित्वमित्याशङ्क्याह—विभक्तीति ॥ एवं हीति । विहितानां नियमस्य विधिना पक्षप्राप्तेतरविभक्त्यन्तानां निवृत्तिरूपस्याश्रयणेन सा निवृत्तिः पदोद्देश्यिकेत्यर्थः । केचित्तु पदोद्देश्यकः, पदत्वसंपादको वा सर्वोपि पदसम्बन्धित्वात्पदविधिरेवेति वदन्ति ॥ ननु किं विधीयत इति प्रश्ने विभक्तिविधानमित्युत्तरमयुक्तं, विधानस्य विधानकर्मत्वाऽभावादत आह—तत्र विभक्त्यवेति । एवं च पाकं पचतीतिवद् सामान्यविशेषभावेनान्वय इति भावः । क्रियाविशेषणत्वाच्च कर्मत्वम् ।

रूपद्वयमिति । यद्यपि संज्ञात्वमपि तत्र, तथाप्येतद्रूपया तया शास्त्रे व्यवहाराऽभावात्तन्नोक्तम् । अन्येनेति । पूर्वपक्षिणा; सिद्धान्तिना चेत्यर्थः । आद्येनेति पाठे किं पुनरिति

---

* प्राक्कडारात् समासः २.१.३; अनभिहिते २.३.१; सुबामन्त्रिते पराङ्गवत् स्वरे २.१.२;

परिभाषा पुनरेकदेशस्था सती [१]सर्वं शास्त्रमभिज्वलयति प्रदीपवत्। तद्यथा,—प्रदीपः सुप्रज्वलित एकदेशस्थः सर्वं वेश्माऽभिज्वलयति। कः पुनरत्र प्रयत्नविशेषः? अधिकारे सति स्वरयितव्यम्, [२]परिभाषायां पुनः सत्यां सर्वमपेक्ष्यम्[३]।

प्र०—स्वरूपे पृष्टे फलाख्यानं तद्द्वारेण स्वरूपावबोधार्थम्। अधिक्रियमाणस्य हि प्रतियोगमुपस्थाने सति तदनिर्देशः फलं संपद्यते। परिभाषा पुनरिति। लिङ्गोपादानेन परिभाषा क्रियमाणा यत्र-यत्र तल्लिङ्गोपलम्भस्तत्तद्व्याप्नोतीत्यर्थः। प्रदेशान्तरेषु तु परार्थतासामान्यादधिकारपरिभाषयोरभेदेन व्यवहारो भाष्यकारस्य 'अधिकारो नाम त्रिःप्रकार' इति। तथा 'द्वयोः परिभाषयोः सावकाशयोः समुपस्थितयो'रिति। कः पुनरत्रेति। कस्मिन् पक्षे यत्नस्य लाघवं भवति, कस्मिन्वा गौरवमिति प्रश्नः। स्वरयितव्यमिति। स्वरितगुणयुक्तं समर्थग्रहणं पठितव्यमित्यर्थः। तत्र स्वरितो गुणः क्रियारूपेण 'स्वरयितव्य'मिति निर्दिष्टः। यथा श्वेतो गुणः 'श्वेतते' इति। पदविधिग्रहणं चात्र पक्षे न कर्तव्यमित्यर्थादुक्तं भवति। सर्वमपेक्ष्यमिति। यावन्ति पद कार्याणि तानि सर्वाण्यपेक्ष्य पदविधिशब्दोपादानेन च परिभाषा कर्तव्येत्यर्थः। अन्यास्वपि परिभाषासु यल्लिङ्गमुपादीयते तल्लिङ्गयुक्तापेक्षा क्रियते।

उ०—सन्देहकर्त्रेत्यर्थः। अन्यथा। अधिकारपरिभाषयोर्विशेषाऽज्ञाने। फलाख्यानम्—'तस्यानिर्देशार्थं' इत्येतत्। स्वरूपम्—योगे योगे उपस्थितिरूपम्। लिङ्गोपादानेनेति। स्वरितत्वप्रयुक्ताधिकारेणोत्तरत्र तत्तत्पदोपस्थितिरधिकारान्तरं दृष्ट्वा व्याख्यानाद्वा निवृत्तिश्च। परिभाषायास्तु लिङ्गवति सर्वत्र तेषां सर्वेषामत्रोपस्थित्या परिभाषाया वा तत्र तत्रोपस्थित्या स्वार्थोपस्थितिद्वारा व्याप्तेरिति भावः। इदं च 'षष्ठी स्थाने' इति सूत्रे निरूपितम्। तदुक्तम्—

'एकदेशस्थिता शास्त्रभवने याति दीपताम्।
परितो व्यापृतां भाषां परिभाषां प्रचक्षते'॥

प्रदेशान्तरेष्विति। 'षष्ठी स्थाने' इति सूत्रे आद्यं, 'निपात एकाजना'डित्यत्र चान्त्यम्। तत्र च पारार्थ्यसामान्यादतिदेशसंज्ञयोः परिभाषात्वेन व्यवहार इति बोध्यम्। स्वरितगुणयुक्तमिति। स्वरवच्छब्दात्तद्धात्वर्थे णिचि मतोर्लुकि टिलोपाऽभावेऽप्यङ्गवृत्तपरिभाषया वृद्ध्यभावे आद्गुणे रूपमिति भावः। यद्वाऽर्शआद्यजन्तस्वरशब्दाण्णिचीदं रूपम्। यावन्तीति। भाष्ये सर्वमित्यस्य लिङ्गवत्सर्वं शास्त्रमित्यर्थः। तानि सर्वाणि—पदविधिशब्दोपादानेन सामान्यतः पदविधित्वेन—अपेक्ष्य अनूद्येत्यर्थः।

१—'कृत्स्नं' पा०। २—'परिभाषायां तु सर्वमपेक्ष्यम्' पा०।
३—अधिकारपक्षे पदविधिग्रहणं न कर्तव्यं भवति परिभाषापक्षे तु कर्तव्यमिति गौरवम्।

तत्रेदमपरं द्वैतं भवति—एकार्थीभावो वा सामर्थ्यं स्याद् व्यपेक्षा वेति ? तत्रैकार्थीभावे सामर्थ्येऽधिकारे च सति समास एकः संगृहीतो भवति; विभक्तिविधानं पराङ्गवद्भावश्चाऽसंगृहीतः। व्यपेक्षायां पुनः सामर्थ्येऽधिकारे च सति

प्र०— द्वैतमिति। द्वयोर्भावो द्विता, तत्र भवं द्वैतं संशयरूपं ज्ञानमुच्यते। अथवा द्वाभ्यामितं प्रकारद्वयेन विरुद्धत्वाद्भिन्नाधारवर्तिना युक्तं वस्तु द्वीतं, तत्र भवं द्वैतं, तदेव संशयज्ञानम्। एकार्थीभाव इति। यत्र पदान्युपसर्जनीभूतस्वार्थानि निवृत्तस्वार्थानि वा प्रधानार्थोपादानाद्व्यर्थानि, अर्थान्तराभिधायीनि वा स एकार्थीभावः। परस्पराकाङ्क्षारूपा व्यपेक्षा।

समास एक इति। तत्रैवैकार्थीभावस्य सद्भावात्। तत्रेति। 'एकार्थीभावः सामर्थ्यमधिकार' इत्येकः पक्षः। 'व्यपेक्षा सामर्थ्यमधिकार' इति द्वितीयः पक्षः। 'द्विविधं सामर्थ्यमधिकार' इति तृतीयः। एवं परिभाषायामपि त्रयः पक्षा इति षट्।

उ०— द्वयोर्भावो द्वितेति। कोटिद्वये सत्येव संशयोदयाद्द्वित्वभवः सन्देह इति भावः। द्विविषयनिश्चयस्यापि द्वित्वभवत्वादाह—अथवेति। विरुद्धत्वाद्भिन्नाधारवर्तिना प्रकारद्वयेन युक्तमित्यन्वयः। परस्परविरुद्धधर्मद्वयवद्वस्तुद्वयमित्यर्थः। अनेकार्थस्यैकार्थत्वमेकार्थीभाव इति शब्दशक्तिमनुसृत्य जहत्स्वार्थाऽजहत्स्वार्थयोस्तं दर्शयिष्यन्नादावजहत्स्वार्थायां तं दर्शयति—यत्र पदानीति। उपसर्जनपदानीत्यर्थः। तदेव ध्वनयन्नाह—उपसर्जनभूतस्वार्थानीति। इतरविशेषणभूतस्वार्थोपस्थापकानीत्यर्थः। न तु पृथक्स्वार्थोपस्थापकानीति तात्पर्यम्। एवं च तत्पुरुषादावेकं पदं तादृशम्, बहुव्रीहौ द्वन्द्वे च पदद्वयमपीति बोध्यम्। जहत्स्वार्थायामाह—निवृत्तस्वार्थानि वेति। उभयत्रापि हेतुः—प्रधानार्थोपादानादिति। आद्ये प्रधानार्थेन स्वोपस्थितिकाले एवोपसर्जनपदार्थस्य विशेषणतयोपादानादित्यर्थः। अन्त्ये प्रधानेन पदेन तदर्थस्याप्युपादानादित्यर्थः। बहुव्रीहौ तु प्रधानं पदं समुदाय इति बोध्यम्। एवं द्वन्द्वेऽपि प्रधानं पदं समुदायस्तदर्थेन साहित्येन स्वविशेषणतया धवाद्यर्थस्योपादानादुपसर्जनभूतस्वार्थानि। यद्वा विशेष्यसाहित्योपस्थापकतया प्रधानेन समुदायेनैव धवाद्यर्थस्याप्युपादानान्निवृत्तस्वार्थानि वेति, तत्राप्ययमेकार्थीभावः। समाहारेतरेतरयोगयोरुभयोरपि साहित्यं विशेष्यम्। आद्येऽनुद्भूतावयवभेदमन्त्ये उद्भूतावयवभेदमित्येव तयोर्भेद इति बोध्यम्॥ व्यर्थानीति। संनिहितत्वान्निवृत्तस्वार्थानीत्येतत्पक्षान्वयि॥ आद्ये आह—अर्थान्तरेति। अर्थान्तरान्वितस्वार्थाभिधायीनीत्यर्थः। प्रत्येकशक्तिसहकृतसमुदायशक्त्या विशिष्टार्थप्रतिपादकानीति भावः॥ पदानीति—बहुवचनं तु बहुव्रीह्याद्यभिप्रायेण। स एकार्थीभाव इति। आद्ये एकीभूतार्थानि मिलितार्थानीत्यर्थः। तत्र मिलतस्येतरसाकाङ्क्षत्वाद्द्वयोरपि समर्थत्वं तत्पुरुषादौ। अन्त्ये पदद्वयार्थयोरेकपदार्थत्वप्राप्तिरित्यर्थः॥ परस्परेति। विशब्दस्य क्रियाव्यतीहारवृत्तित्वादिति भावः।

तत्रैवैकार्थीभावस्येति। तदुक्तत्रयाणां मध्ये तत्रैवेत्यर्थः। व्यपेक्षासहितमधिकारत्वेऽ-

विभक्तिविधानं पराङ्गवद्भावश्च संगृहीतः[1], समासस्त्वेकोऽसंगृहीतः। अन्यत्र खल्वपि समर्थग्रहणानि युक्तग्रहणानि च कर्तव्यानि भवन्ति। क्वान्यत्र ? 'इसुसोः सामर्थ्ये' [८.३.४४] 'न चवाहाहैवयुक्ते' [८.१.२४] इति। व्यपेक्षायां पुनः सामर्थ्ये परिभाषायां च सत्यां यावान् व्याकरणे पदगन्धो नाम[2] स सर्वः संगृहीतो भवति, समासस्त्वेकोऽसंगृहीतः। तत्रैकार्थीभावः सामर्थ्यं परिभाषा चेत्येवं सूत्रमभिन्नतरकं भवति।

एवमपि क्वचिदकर्तव्यं समर्थग्रहणं क्रियते, क्वचिच्च कर्तव्यं न क्रियते। अकर्तव्यं तावत्क्रियते 'समर्थानां प्रथमाद्वा' [४.१.८२] इति।

प्र०—पक्षीसंभवे एकार्थीभावः परिभाषा चेति निर्णयः। अभिन्नतरकं भवति। उभयविधे सामर्थ्ये आश्रीयमाणेऽर्थस्य भेदात्सूत्रस्य भेदः स्यात्। भिन्नेन सामर्थ्येन भिन्नेषु वाक्येषु उपस्थानात्। व्यपेक्षायामपि सामर्थ्ये यद्यपि सूत्रमभिन्नं भवति, तथाप्येकार्थीभावे सामर्थ्ये दोषाऽभावात्प्रकर्षयोगादभिन्नतरकमित्युच्यते। तत्र पराङ्गवद्भावे तन्निमित्तग्रहणाद्दोषाऽभावः। विभक्तिविधानेपि कारकविभक्तिषु क्रियाकारकयोर्व्यपेक्षाऽविनाभावित्वादुपपदविभक्तिषु युक्तयोगग्रहणसद्भावात्क्वचित्तृतीयया योगस्याक्षेपादेतदनुपस्थानेपि न दोषः। परिभाषायां च सुब्धातुप्रभृतयः सर्वा वृत्तयः संगृहीता भवन्ति। एकार्थीभावे चेहाश्रितेऽन्यत्र युक्तग्रहणं समर्थग्रहणं च कृतमेवेति तत्रापि न दोषः।

समर्थानामिति। 'घकालतनेषु कालनाम्नः' इत्यलुग्विधानाल्लिङ्गाद्विभक्त्यन्तात्तद्धित उत्पद्यते इति पदविधित्वादेतत्परिभाषोपस्थानादसामर्थ्ये प्रत्ययाऽप्रसङ्गात्।

उ०—धिकारत्वप्रयुक्तदोषमाह भाष्ये—अन्यत्र खल्वपीति॥ एकार्थीभावसहिताधिकारत्वेऽधिकारत्वप्रयुक्तो दोषस्तु मध्ये पादद्वये निवृत्त्या तृतीयाध्यायादावसंबन्धो बोध्यः। एतेनाऽधिकारत्वसहितोभयविधानसामर्थ्याश्रयणपक्षोऽपि निरस्तः॥ उभयविधे इति। अधिकारत्वे, परिभाषात्वे चेत्यर्थः॥ भेदो—वैरूप्यलक्षणः॥ ननु पराङ्गवद्भावविधानाऽसंग्रहो दोषोऽत आह—तत्रेति॥ व्यपेक्षाऽविनाभावित्वादिति। व्यपेक्षाया नियतत्वादित्यर्थः। एवं चैतदुपस्थितिं विनापि तत्र न दोषः, क्रियाकारकयोरेकार्थीभावाऽसंभवच्चेति भावः॥ अत्र क्रियाकारकयोरित्युक्त्या प्रकृत्यर्थविभक्त्यर्थयोः सर्वथा व्यपेक्षाभावो दर्शितः। इदानीमेकार्थीभावसहितपरिभाषापक्षे उक्तं प्रकर्षयोगमुपपादयति—सुब्धातुप्रभृतय इति। एतेनाऽधिकारत्वे एतदसंग्रहो दोष इति ध्वनितम्॥ अन्यत्र युक्तग्रहणमिति। तथा च तदेवात्रैकार्थीभावसामर्थ्याश्रयणे लिङ्गमिति भावः।

'समर्थानां प्रथमा'दित्यत्र समर्थपदस्य कृतसन्धिकार्यार्थकत्वमजानान आह—एवमपि क्वचिदिति॥ लिङ्गादिति। एतल्लिङ्गमूलकात्कुत्सित इति सूत्रभाष्योक्तन्यायादित्यर्थः।

1—'संगृहीतो भवति' पा०। 2—'पदगन्धोऽस्ति' पा०।

कर्तव्यं न क्रियते 'कर्मण्यण्' [ ३. २. १ ] समर्थादिति । ननु च गम्यते तत्र सामर्थ्यम्—कुम्भकारः नगरकार इति । सत्यं गम्यत उत्पन्ने हि[1] प्रत्यये । स एव तावत्समर्थादुत्पाद्यः ।

अथ समर्थग्रहणं किमर्थम् ? वक्ष्यति 'द्वितीया श्रितादिभिः समस्यते'†—कष्टश्रितः नरकश्रितः इति । समर्थग्रहणं किमर्थम् ? पश्य देवदत्त कष्टं, श्रितो

प्र०—कर्मण्यणिति । पञ्चकप्रातिपदिकार्थपक्षे प्रातिपदिकेनैव कर्मण उपादानान्नास्ति पदविधित्वम् । त्रिकादिपक्षे तु विभक्तिवाच्यत्वात्कर्मणः पदविधित्वादेतत्परिभाषोपस्थानान्नास्ति दोषः । ननु चेति । यदि कुम्भकारशब्दः समर्थाभिधायी चासमर्थाभिधायी च स्यात्ततोऽसमर्थाभिधायिप्रयोगनिवृत्त्यर्थो यत्नः कर्तव्यः स्यान्न त्वन्यथेत्यर्थः । स एव तावदिति । यथा समासादयोऽसमर्थानां मा भूवन्नित्येवमर्थमिदं वचनं क्रियते तद्वदत्रापि समर्थग्रहणसामर्थ्ये प्रत्ययनिवृत्त्यर्थं कर्तव्यमित्यर्थः । प्रतिविधानं तु सुज्ञानत्वाद्भाष्यकृता नोक्तम् । यत उपपदमिति महत्याः संज्ञायाः करणं प्रत्ययस्य पदाश्रयत्वे सति समर्थपरिभाषाव्यापारार्थमेव ।

अथेति । प्रधानपर्यनुयोगद्वारेण सूत्रस्यैवाक्षेपः । यद्यप्यनेन सामर्थ्यं न विधीयते न हि स्वतोऽसमर्थस्य सामर्थ्यं वचनेन कर्तुं पार्यते । तथापि पदविधौ सामर्थ्योपस्थानार्थत्वादस्य समर्थपदस्य प्राधान्यमुच्यते । समस्यत इति । यद्यपि समाससंज्ञामात्र विधीयते, तथाप्यबुधबोधनाय भिन्नयोः शब्दयोः संश्लेषः प्रक्रियायां क्रियत इति समस्यत इत्युक्तम् । पश्येति । असति सूत्रे द्वितीयान्तमात्र श्रितादिभिः समस्येताऽ-

उ०—कृतसन्धिकार्यत्वार्थकमपि तत्र तद्व्यर्थम्, सौत्थितावन्तरङ्गत्वेनैव पूर्वं सन्धिकार्यप्रवृत्तेर्विप्रतिषेधसूत्रे भाष्ये उक्तत्वात् ॥ पञ्चकेति । इदं चिन्त्यम् । तत्पक्षेपि तदर्थद्योतकतया विभक्तेरावश्यकत्वात् । भाष्ये पूर्वपक्ष्याशयस्त्वेवं, पदविधिशब्देन पदोद्देश्यकविधिग्रहणम् । एवं च साक्षात्पदोद्देश्यके समासतद्धितादावेव स्यान्न त्वत्र । अत्र हि यः साक्षादुद्देश्यो धातुर्न स पदम् । किं च धातोरण्, कर्म चोपपदसंज्ञमिति सूत्रार्थात्सन्नियोगशिष्टन्यायेन तत्र सति प्रत्यय इति न तदुद्देश्यकः प्रत्ययविधिः । उपपदसंज्ञायास्तदुद्देश्यकत्वेपि तत्रैकार्थीभावयोग्यद्वितीयाऽभाव इति । देवदत्तस्य कुम्भं करोतीत्यादौ प्रत्ययनिवृत्तये समर्थग्रहणस्यावश्यकत्वात्किमुच्यते 'गम्यते तत्र सामर्थ्य'मित्यत आह—यदीति । प्रयुक्तानामिदमन्वाख्यानं, लोकप्रयुक्ताऽसाधोरेव निवर्तकमिति न दोष इति भावः ।

भाष्ये—उत्पन्ने हीति । हिस्त्वर्थे । यथा समासादय इति । अन्यथात्रापि तद्वैयर्थ्यं स्यात् । प्रयुक्ताऽप्रयुक्तत्वविवेकरहितानामर्थे इहेव तत्रापि कर्तव्यमित्यर्थः ॥ महत्याः संज्ञाया इति । संज्ञासूत्रस्थतत्रग्रहणस्य चेत्यपि बोध्यम् । यथाकथंचित्पदसंबन्धिविधेस्तत्र ग्रहणमिति भावः । न विधीयत इति । एवं च न तस्य प्रधानत्वमिति भावः ॥ सामर्थ्योपस्थानं—समर्थपदोपस्थानम् ॥ 'पश्य देवदत्त कष्ट'मिति कष्टपदार्थमाह—श्रित इति ।

१—'तु' पा० । † द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २. १. २४.

विष्णुमित्रो गुरुकुलम् ॥ 'तृतीया तत्कृतार्थेन गुणवचनेन' [ २. १. ३० ] [ [1]उपादानविकलः ] शङ्कुलाखण्डः, किरिकाणः । समर्थग्रहणं किमर्थम् ? तिष्ठ [2]त्वं शङ्कुलया, खण्डो धावति मुसलेन [ किं त्वं करिष्यसि शङ्कुलया, खण्डो विष्णुमित्र उपलेन ] ॥ 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' [३६] गोहितम् [ वृषभहितम् ] अश्वहितम् । समर्थग्रहणं किमर्थम् ? सुखं गोभ्यो, हितं देवदत्ताय ॥ 'पञ्चमी भयेन' [ ३७ ] वृकभयम् दस्युभयम् चोरभयम् । समर्थग्रहणं किमर्थम् ? गच्छ त्वं मा वृकेभ्यो, भयं देवदत्त[3]स्य यज्ञदत्तात् ॥ 'षष्ठी सुबन्तेन समस्यते'* । राजपुरुषः ब्राह्मणकम्बलः । समर्थग्रहणं किमर्थम् ? भार्या राज्ञः, पुरुषो देवदत्तस्यति ॥ 'सप्तमी शौण्डैः' [४०] अक्षशौण्डः स्त्रीशौण्डः । समर्थग्रहणं किमर्थम् ? कुशलो देवदत्तोऽक्षेषु, शौण्डः पिबति पानागारे ।

---

प्र०–विरोधात् । एकार्थीभावाऽभाऽवेपि वचनात्समाससंज्ञा स्यात् । अनर्थकस्यापि च समासस्य वचनात्प्रातिपदिकसंज्ञा स्यात् । विध्यर्थत्वसंभवे च समासग्रहणस्य नियमार्थत्वानुपादानाद्वाक्यस्य प्रातिपदिकसंज्ञानिषेधः कर्तव्य एव स्यात् । एकार्थीभावाऽभावेऽपि चोत्तरपदार्थस्य बाह्यसंबन्धिनं प्रति योग्यत्वाऽहानाद्विभक्तयः स्युरेव । खण्डो धावतीति । तृतीयान्तार्थकृतत्वमत्रास्तीति समासः स्यात् ।

---

उ०–नन्वसत्यपि समर्थग्रहणे एकार्थीभावाऽभावेऽनर्थकत्वेन प्रातिपदिकसंज्ञाऽप्रवृत्तौ फलाऽभावात्समासोऽपि न स्यात्, सूत्रं त्वेकार्थीभाववति चरितार्थमित्यत आह—असति सूत्रे इति । नन्वेकार्थीभावविषये एव समासः शिष्टैः प्रयुज्यते इति कथमेतदत आह—वचनादिति । लक्षणमात्रशरणं प्रति सूत्रारम्भ इति भावः ।

ननु फलाऽभावोऽत आह—वचनादिति । 'कृत्तद्धिते'तिवचनादित्यर्थः । बाह्य संबन्धिनमिति । विष्णुमित्रादयो बाह्यसंबन्धिनः ॥ भाष्ये—उपादानविकल इति । उपादानेन कृतो विकल इत्यर्थः ॥ तिष्ठ त्वमिति । तिष्ठ त्वं, शङ्कुलया न प्रयोजनं, मुसलेन कृतः खण्डो धावतीत्यर्थः ॥ शङ्कुलयेति सहयोगे तृतीयेत्यपि कश्चित् । हे विष्णुमित्र त्वं शङ्कुलया किं करिष्यसि, उपलेन पाषाणेन कृतः खण्ड इति द्वितीयार्थः ॥ ननु खण्डस्य प्रकृततृतीयान्तार्थकृतत्वं नास्तीत्यत आह—तृतीयान्तार्थेति । तच्छब्देन तृतीयान्तमात्रं परामृश्यते, तच्चाऽत्र खण्डनस्य करणसाध्यत्वावश्यम्भावादवश्यमस्त्येवेति भावः । प्रत्यासत्तिर्नाश्रीयत इत्यभिप्रायः । 'वृकेभ्य' इत्यस्य 'मा भैषी'रिति क्रियां प्रत्यपादानत्वं, यज्ञदत्ताद्देवदत्तोऽवश्यं रक्ष्य इति मार्गे संभावितमपि वृकभयं त्यक्त्वा तद्रक्षणार्थं त्वं गच्छेति वाक्यार्थः ।

---

१–क्वचिन्नेदम् । २–'त्वं तिष्ठ' पा० । ३–'देवदत्ताद् यज्ञदत्तस्य' पा० । * षष्ठी २.२.८.

## द्रव्यं पदार्थ इति चेत् ॥ २१ ॥

यदि द्रव्यं पदार्थः, न भवति तदा सामर्थ्यम् । [ 'भेदाऽभावात्' । ] अथ हि गुणः पदार्थः, भवति तदा सामर्थ्यम् । अन्यो हि वीरत्वं गुणः, अन्यो हि पुरुषत्वम् ।

नान्यत्वमस्तीतीयता सामर्थ्यं भवति । अन्यो हि देवदत्तो गोभ्यश्चाऽश्वेभ्यश्च, न च तस्यैतावता सामर्थ्यं भवति । को वा विशेषो यद् गुणे पदार्थे सामर्थ्यं स्याद् द्रव्ये च न स्यात् ? एष विशेषः । एकं तयोरधिकरणम्, अन्यश्च वीरत्वं गुणः, अन्यः पुरुषत्वम् ।

द्रव्यपदार्थिकस्यापि तर्हि गुणभेदात्सामर्थ्यं भविष्यति । अशक्यो द्रव्य-

---

प्र०— 'संसर्गिभेदकं यद्यत्सव्यापारं प्रतीयते ।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम्' ॥

इति गुणलक्षणयोगात् । तत्र द्रव्ये पदार्थे 'वीरः पुरुष' इत्येताभ्यां द्रव्यमेकमभिधीयते न तु वीरत्वं पुरुषत्वं च । तत्र भेदाऽभावे भेदाधिष्ठानस्य संसर्गस्येहाऽसंभवादसति सामर्थ्ये समासो न प्राप्नोतीति वचनम् ॥ अथ हि गुण इति । वीरत्वं पुरुषत्वं चैकव्यक्तिगतमेताभ्यामभिधीयते इति भेदपूर्वकः संसर्गोऽस्तीति भावः ।

नान्यत्वमिति । उपकारविवक्षायां सामर्थ्यम्, नान्यत्वमात्रेणेत्यर्थः । एकं तयोरिति । ततस्तद् द्वारेणाऽस्ति विशेषणविशेष्यभावः ।

द्रव्यपदार्थिकस्यापीति । एकमपि द्रव्यं भिन्नगुणसंसर्गाद्भेदकार्यं लभते । अशक्य इति । भेदहेतोर्विद्यमानस्यापि गुणस्य शब्देनाऽवाच्यत्वादित्यर्थः । ननु

---

उ०—नन्वेवं भाष्ये—कथमथ हि गुण इत्युक्तमत आह—गुणशब्देनेति ॥ संसर्गिभेदकमिति । संसर्गिण इतरभेदानुमापकमित्यर्थः । सव्यापारमिति । स्वविषयशक्तिग्रहणे स्वाश्रयोपस्थापकत्वरूपव्यापारवदित्यर्थः । स्वावच्छिन्नत्वेन सकलव्यक्त्युपस्थापकत्वव्यापारवदित्यर्थो वा ॥ इत्येताभ्यामिति । पदद्वयेन शुद्धद्रव्यविशेषस्योपस्थितिरित्यर्थः । भेदाधिष्ठानस्येति । अन्यथा घटो घट इत्यपि स्यादिति भावः । पदार्थानां परस्परं विशेष्यविशेषणभावरूपसंसर्ग एव हि सामर्थ्यमिति तात्पर्यम् ॥ एकव्यक्तिगतमिति । तत्तद्विशेषणवैशिष्ट्येन भेदात्तयोर्विशेष्यविशेषणभावलक्षणसंसर्गोऽस्तीति भावः । विशेषणत्वादि संबन्धनियतमेवेत्यत्र तु न मानमिति तात्पर्यम् ॥ उपकारेति । विशेष्यविशेषणभावेनाऽन्वयरूपोपकारेत्यर्थः । अन्यथा देवदत्ताश्वयोरपि कर्मधारयप्रयोजकं सामर्थ्यं स्यादिति भावः ॥ भेदकार्यम्—परस्परविशेषणविशेष्यभावरूपम् । द्रव्यस्येति । एवं च स्मर्यमाणगुणकृतभेदमादाय विशेषणविशेष्यभाव इत्यभिमानः ॥ नन्वभ्यन्तरत्वेऽभिधीयमानोऽपि स्यादत आह—अनभिधीति । संनिधिना—

---

१—क्वचिन्न ।

पदार्थिकेन द्रव्यस्य गुणकृत उपकारः प्रतिज्ञातुम् । ननु चाभ्यन्तरोऽसौ भवति । यद्यप्यभ्यन्तरो न तु गम्यते । न हि 'गुड' इत्युक्ते मधुरत्वं गम्यते, 'शृङ्गवेर'-मिति वा कटुकत्वम् । गुणपदार्थिकेनापि तर्ह्यशक्यो गुणस्य द्रव्यकृत उपकारः प्रतिज्ञातुम् । अथ गुणपदार्थिकः प्रतिजानीते, द्रव्यपदार्थिकोऽपि कस्मान्न प्रतिजानीते । एवमनयोः सामर्थ्यं स्याद्वा न वा ।

क्व च तावदिदं स्यात् समानाधिकरणेनेति† ? यत्र सर्वं समानम्—'इन्द्रः

प्र०–चेति । द्रव्यस्य गुणेन नित्यसंबन्धादित्यर्थः । यद्यपीति । अनभिधीयमानोऽपि संनिधिनैव परिच्छेदहेतुत्वादभ्यन्तरः । न तु गम्यत इति । शब्देन नोच्यत इत्यर्थः । गुणपदार्थिकेनापीति । यद्यवाच्यस्योपकारकत्वं नाश्रीयत इत्यर्थः । अथाऽवाच्य-स्याप्युपकारकत्वमाश्रीयते तदा पक्षद्वयेऽपि साम्यम् ।

क्व च तावदिति । यद्यवाच्यस्योपकारकत्वं नाश्रीयेत इत्यर्थः । यत्र सर्वमिति । समानमेकमधिकरणमभिधेयं तस्य तेन पर्यायेणेत्यर्थ इति मन्यते । ततश्च यत्र प्रवृत्ति-निमित्तमप्येकं वाच्यं च तत्रैव स्यादित्यर्थः । कथं पुनरत्र विशेषणविशेष्यभावः ? उच्यते—कंचित्प्रति कयाचित्संज्ञया सोऽर्थः प्रसिद्धोऽन्यथा त्वप्रसिद्ध इति प्रसिद्धस्य

उ०–स्मृतिमात्रेण । शब्देनेति । वृत्त्यभावादभ्यन्तरस्यापि तस्य विशेष्यविशेषणभावेन प्रतीति-प्रयोजकता नेत्यर्थः । अयं भावः—द्रव्येण नित्यसंबन्धिनो बहवो गुणाः, न हि सर्वेषां सर्वदा स्मरणमनुभूयते इति शब्दजन्योपस्थितिं विना भेदकत्वं वक्तुमशक्यमिति भावः ॥ यद्य-वाच्यस्येति । गुणवादेऽपि द्रव्यस्याऽवाच्यत्वेन तद्द्वारकं सामर्थ्यं वक्तुं न शक्यमिति भावः । अथाऽवाच्यस्येति । एवं रीत्या द्रव्यवादिनः प्रवृत्तिनिमित्तमपि उपकारकं भविष्यतीति भावः । द्रव्यवादे गुणस्याऽवाच्यत्वं नाम शक्यविषयत्वम्, शक्यतावच्छेदके शक्यभावात् । गुणवादे द्रव्यमप्येवमिति तात्पर्यम् ।

भाष्ये—प्रतिजानीते इति । 'समानाधिकरणयोः समास'मिति शेषः । न प्रतिजानीत इति । प्रतिजानीत एवेत्यर्थः । इतर एवमाशयमजानानः प्रतिबन्दीमात्रान्नार्थसिद्धिरित्याह—एवमनयोरिति । असामर्थ्यात्समासाभावनिश्चय एवेत्याशयेनाह—क्व चेति । समानाधि-करणेनेति । विशेषणं विशेष्येण समानाधिकरणेनेतीत्यर्थः । सर्वसाम्ये भेदनिबन्धनविशेषण-विशेष्यभावः, सामानाधिकरण्यं च सर्वथा दुरुपपादमित्यत आह—अभिधेयं यस्येति । वाच्यपर्यायोऽधिकरणशब्द इत्यर्थः । वाच्यं चेति । प्रवृत्तिनिमित्ताश्रयभूतमित्यर्थः । विशेषणत्वमिति । परिच्छेदकत्वमित्यर्थः । 'विशेषणं विशेष्येणे'तिसूत्रे परिच्छेद्यपरिच्छेदक-

† पूर्वकालैकसर्व""समानाधिकरणेन; विशेषणं विशेष्येण बहुलम् २. १. ४६; ५७.

शक्रः पुरुहूतः पुरन्दरः', 'कन्दुः कोष्ठः 'कुशूल'[1] इति । नैवंजातीयकानां समासेन भवितव्यं प्रत्ययेन वोत्पत्तव्यम् । किं कारणम् ? अर्थगत्यर्थः शब्दप्रयोगः । 'अर्थं संप्रत्याययिष्यामी'ति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वा तस्याऽर्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम् । किं कारणम् ? 'उक्तार्थानामप्रयोग' इति । न तर्हीदानीमिदं भवति 'भृत्यभरणीय' इति ? नैतौ समानार्थौ । एकोऽत्र शक्यार्थे कृत्यः, अपरोऽर्हार्थे । शक्यो भर्तुं भृत्यः । अर्हति भृतिं भरणीयः । भृत्यो भरणीयो भृत्यभरणीय इति ।

यदि तर्हि यत्र किंचित्समानं कश्चिच्च विशेषस्तत्र भवितव्यमिहापि तर्हि प्राप्नोति—दर्शनीयाया माता दर्शनीयामातेति । अत्रापि किंचित्समानं कश्चिच्च विशेषः । किं पुनस्तत् ? सद्भावान्यभावौ ।

प्र०–विशेषणत्वम्, इतरस्य तु विशेष्यत्वम् । नैवंजातीयकानामिति । युगपत्प्रयोगाऽभावात्सामर्थ्याभावाच्चेत्यर्थः । भृत्यभरणीय इति । अस्ति चायं शिष्टप्रयोग इति भावः । नैताविति । उपाधिभेदाद्भिन्नार्थावित्यर्थः ।

दर्शनीयाया मातेति । यदि सति भेदे किंचित्समानमाश्रित्य समासः क्रियते तदा यथा वीरपुरुष इत्यत्रानभिधीयमानमपि द्रव्यं समानमाश्रित्य समासः क्रियते तथाऽत्रापि सत्ता समानेति समासः प्राप्नोतीत्यर्थः । ननु परत्वादपवादत्वाद्वाऽत्र षष्ठी-

उ०–भाव एव विशेषणविशेष्यभाव इत्यभिमानः ॥ 'एवंजातीयकाना'मिति भाष्यस्य पर्यायाणामित्यर्थस्तदाह—युगपदिति । सामर्थ्याऽभावाच्चेति । भेदनिबन्धनविशेषणविशेष्यभावरूपस्य तन्मूलैकार्थीभावरूपस्य च सामर्थ्यस्याऽभावादित्यर्थः । विषयतारूपविशेषणत्वाद्येव तत्र निविष्टमिति भावः ॥ भाष्ये—प्रत्ययेन वोत्पत्तव्यमिति । पर्यायाणां सहप्रयोगे आकाङ्क्षाविरहाद्बोधेन भवितव्यमित्यर्थः । प्रत्ययशब्दो ज्ञानपर इति बोध्यम् । शिष्टेति । तथा चाऽविगीतं साधुत्वं भाष्यस्थ'तर्हि'शब्देन सूचितम् । उपाधीति । कर्मरूपार्थसाम्येऽपि शक्यत्वार्हत्वरूपोपाधिभेदादित्यर्थः । भृत्यभरणीयवदेव वीरपुरुषादिरप्युदाहरणमिति भावः ।

यदि सति भेदे इति । अयं पूर्वपक्षोऽधिकरणशब्दस्य पदार्थपरत्वमाश्रित्य । तत्पक्षेऽपि शब्दो नान्यपदार्थः । किं तर्हि ? अर्थ एव । तथा च समानाधिकरणं पदार्थो यस्याश्रयत्वेनाधेयत्वेन वा स समानाधिकरणस्ततस्तद्वाचके लक्षणेत्याशयेन । अत एव न वक्ष्यमाणतृतीयसमाधानाऽसङ्गतिरित्याहुः । अनभिधीयमानमपीति । आक्षिप्तमित्यर्थः । शक्तिग्रहाऽविषय इत्यर्थो वा । समासः प्राप्नोतीति । कर्मधारय इत्यर्थः । भाष्ये—कश्चिच्च विशेष

१–'कुसूलः' पा० ।

न क्वचित्सद्भावान्यभावौ न स्तः, उच्यते चेदं समानाधिकरणेनेति, तत्र प्रकर्षगतिर्विज्ञास्यते–यत्र साधीयः सामानाधिकरण्यम्। क्व च साधीयः सामानाधिकरण्यम्? यत्र सर्वं समानं सद्भावान्यभावौ, द्रव्यं च।

अथवा समानाधिकरणेनेति तत्समानमाश्रीयते यत्समानं भवति न, च भवति। न चैतत्समानं क्वचिदपि न भवति।

अथवा यावद् ब्रूयात् समानद्रव्येणेति, तावत् समानाधिकरणेनेति। द्रव्यं हि लोके 'अधिकरण'मित्युपचर्यते। तद्यथा,—'एकस्मिन्द्रव्ये व्युदितम्'। 'एकस्मिन्नधिकरणे व्युदित'मिति। तथा व्याकरणे 'विप्रतिषिद्धं चानधिकरणवाचि' [ २. ४. १३ ] इत्यद्रव्यवाचीति गम्यते।

एवमपीदमवश्यं 'कर्तव्यं[1] 'समानाधिकरणमसमर्थवद्भवती'ति। किं प्रयोजनम्? सर्पिः कालकम्, यजुः पीतकमित्येवमर्थम्*। यदि 'समानाधिकरणम-

प्र०–समासो भविष्यति। नैतदस्ति। 'समानाधिकरणेन ने'ति प्रतिषेधः प्राप्नोति। विधेः कोऽवकाश इति चेत्—इष्टा तर्हि व्यवस्था न स्यात्, समानाधिकरणोत्तरपदलक्षणश्च पुंवद्भावः प्रसज्येत। सद्भावान्यभावाविति। सत्तान्यत्वे इत्यर्थः।

न चैतदिति। सत्तायाः सर्वत्र भावाद्व्यभिचाराऽभावान्नासौ समानत्वेनाश्रीयते। पूर्वः परिहारः समानत्वमभ्युपगम्य पुनः श्रुत्या प्रकर्षाश्रयेणोक्तः। उत्तरस्तु सर्वसाधारण्यात्सत्तायाः समानव्यपदेशं प्रति निमित्तत्वानाश्रयणेनाभिहितः।

अथवेति। 'अधिकरणशब्दोऽभिधेयावाची'ति पर्यनुयोगो, 'द्रव्यवाची'ति समाधानम्। दर्शनीयाया मातेत्यत्र तु द्रव्यभेदः। अभिधेयस्य तु सत्तायाः समानत्वात्समानत्वं स्यात्। व्युदितमिति। विवादः कृत इत्यर्थः॥ सर्पिः कालकमिति। इसुसोः

उ०–इति। दर्शनीयत्वं मातृत्वं चेत्यर्थः। सत्तान्यत्वे इति। पदार्थवाचिभावशब्देन न कर्मधारयः, किंतु त्वाऽर्थवाचकेन भावशब्देन षष्ठीतत्पुरुष इति भावः॥ भाष्ये—न क्वचिदिति। तयोः केवलान्वयित्वादिति भावः। व्यभिचाराभावादिति। एवं च समानाधिकरणपदव्यावर्त्याऽलाभ इति भावः। नासौ समानत्वेनेति। समानव्यवहारनिमित्तत्वेनेत्यर्थः। समानत्वमिति। समानव्यवहारनिमित्तत्वमभ्युपगम्येत्यर्थः।

अभिधेयवाचीति। अभिधेयत्ववद्वाच्यभिधेयशब्देन पदार्थमात्रमुच्यते। द्रव्यवाचीति। समानशब्दश्चैकत्ववद्वाची सूत्रे। अभिधेयस्य त्विति। वाच्यस्य त्वित्यर्थः। तच्च धर्मो वा, द्रव्यं वेत्यन्यत्। तस्य च सत्तया समानत्वमस्त्येव। तत्पक्षे समानशब्दो नैकपर्याय इति भावः॥ पुनः पूर्वपक्षयति प्रकारान्तरेण भाष्ये—एवमपीदमिति॥ कर्मादे-

१–'वक्तव्यं' पा०। * इसुसोः सामर्थ्ये ८. ३. ४४.

समर्थवद्भवती'त्युच्यते 'सर्पिष्पीयते' 'यजुष्क्रियत' इत्यत्र षत्वं न प्राप्नोति। अधात्वभिहितमित्येवं तत्। एवं च कृत्वा समानाधिकरणेषूपसंख्यानं कर्तव्यम्। वीरः पुरुषो वीरपुरुष इति[1]। किं कारणम्? असमर्थत्वात्।

न वा वचनप्रामाण्यात्॥ २२॥

न वा कर्तव्यम्। किं कारणम्? 'वचनप्रामाण्यात्'। वचनप्रामाण्यादत्र समासो भविष्यति। किं वचनप्रामाण्यम्? 'समानमध्यमध्यमवीराश्चे'ति†।

लुप्ताख्यातेषु च॥ २३॥

लुप्ताख्यातेषु चोपसंख्यानं कर्तव्यम्। निष्कौशाम्बिः निर्वाराणसिः।

लुप्ताख्यातेषु च। किम्? 'वचनप्रामाण्या'दित्येव। किं वचनप्रामाण्यम्? 'कुगतिप्रादय' [ २. २. १८ ] इति। अस्त्यन्यदेतस्य वचने प्रयो-

प्र०—सामर्थ्य इति षत्वनिवारणार्थं वाचनिकसामर्थ्यमिति 'वीरपुरुष' इति समानाधिकरणसमासोऽपि न स्यादित्यर्थः। अधात्वभिहितमिति। धातुसहचरितः प्रत्ययो धातुशब्देनोक्तः। तेनाभिहितं कर्मादि यदि भवति तदा सामर्थ्यमेवेत्यर्थः।

न वेति। वचनसामर्थ्याद्वाचनिकमसामर्थ्यं बाध्यत इत्यर्थः। वीरः पचन्नित्यादौ तु धात्वभिहितेऽनभिधानाद् बहुलग्रहणाद्वा समासाऽभावं मन्यते॥ लुप्ताख्यातेषु चेति। 'वचनप्रामाण्या'दित्यस्योपजीवनार्थमिदं वार्तिकम्। भाष्यकारस्तु प्रपञ्चार्थमुपसंख्यानं प्रतिविधानं च वाक्यभेदेनाचष्टे। आख्यातशब्देन क्रियापदं क्रान्ताद्यपि कथ्यते॥ निष्कौशाम्बिरिति। पूर्वपदोत्तरपदयोरसामर्थ्यं मन्यते। क्रियाविषयत्वादुप-

धात्वभिहितत्वाभावादाह—धातुसहचरित इति। 'स्तुक्रमो'रिति सूत्रस्थभाष्यरीत्या तिङां कर्मादिद्योतकत्वे तु यथाश्रुतमेव भाष्यं सम्यक्। एवं च वीरः पचन्नित्यादौ वक्ष्यमाणदोषशङ्कैव नेति बोध्यम्। ननु वीरपुरुषादन्यत्र कथमित्यत आह—वचनेति। समानाधिकरणसमासप्रकरणे एतद्वचनाऽप्रवृत्तिर्ज्ञाप्यत इत्यर्थः॥ ननु वीरः पचन्नित्यादौ धात्वभिहिते चारितार्थ्यात्कथं ज्ञापकत्वमत आह—वीर इति। बहुलग्रहणस्याप्यनभिधानमूलकत्वादनभिधानादित्येव सारम्।

वार्त्तिकपाठे एकस्यैव वाक्यस्य दर्शनेन कथमुपसंख्याने तन्निषेधे च तात्पर्यमत आह—भाष्यकारस्त्विति। वाक्यभेदेनेति। आवृत्त्येत्यर्थः। आख्यातपदस्य तिङन्ते प्रसिद्धेराह—आख्यातेति। क्रियाबोधकत्वसाम्येन गौण्या वृत्त्येत्यर्थः॥ असामर्थ्यं मन्यते इति।

१—क्वचिन्न। † पूर्वापरप्रथमचरमजघन्यसमानमध्यमवीराश्च २. १. ५८.

जनम्। किम्? सुराजा अतिराजेति। न ब्रूमो 'वृत्ति' सूत्रवचनप्रामाण्या'दिति। किं तर्हि? वार्तिकवचनप्रामाण्यादिति। 'सिद्धं तु क्तान्स्वतिदुर्गतिवचनात्' 'प्रादयः क्तार्थे' इति†।

## तदर्थगतेर्वा॥ २४॥

तदर्थगतेर्वा पुनः सिद्धमेतत्। किमिदं तदर्थगतेरिति? तस्यार्थस्तदर्थः, तदर्थस्य गतिस्तदर्थगतिस्तदर्थगतेरिति। यस्यार्थस्य कौशाम्ब्या सामर्थ्यं स निसोच्यते। अथवा सोऽर्थस्तदर्थः, तदर्थस्य गतिस्तदर्थगतिस्तदर्थगतेरिति। योऽर्थः कौशाम्ब्या समर्थः स निसोच्यते।

प्र०–सर्गाणां द्रव्येण संबन्धाऽभावात्। किं तर्हीति। वार्तिककारकवचनस्यापि स्मृतिशास्त्रत्वात्प्रामाण्यमाश्रितमित्यर्थः। तस्यार्थ इति। क्रान्तशब्दस्य योऽर्थः संप्रतीयते निःशब्देन क्रियाविषयेण तस्याऽर्थस्य सामर्थ्यादाक्षिप्तत्वात्तद् द्वारेण पूर्वपदोत्तरपदयोः सामर्थ्यादित्यर्थः। सोऽर्थ इति। निस एवायं वृत्तिविषये क्रान्तलक्षणोऽर्थ इति प्रदर्शयति।

उ०–साक्षादन्वयाऽभावेनेत्यर्थः। भाष्ये–सुराजा अतिराजेति। दुष्कुलमाकडार इत्यादेरप्युपलक्षणम्। एतेन 'प्रादय' इति बहुवचनं ज्ञापकमित्यपास्तम्।

वृत्तिसूत्रेति। वार्त्तिकेष्वपि सूत्रलक्षणसत्त्वेनार्षत्वेन च सूत्रत्वमभ्युपगम्य पाणिनिसूत्राणां वृत्तिसद्भावाद्वार्त्तिकानां तदभावाच्च तयोर्वैषम्यबोधनायेदम्। वृत्तियुक्तं सूत्रं वृत्तिसूत्रमित्यर्थः। क्वचित्तु वृत्तिः सूत्रेति पाठः, तदा सूत्रप्रामाण्याद्वृत्तिरिति न ब्रूमः, किं तर्हि वार्त्तिकप्रामाण्यादितीत्यर्थः। यथा'ऽनेकमन्यपदार्थे' इति शास्त्रबलाद्बहुव्रीहावन्यपदार्थान्तर्भावेणैकार्थीभावस्तथा प्रकृते 'क्तार्थे' इति। वार्त्तिकबलात्तदर्थोऽन्तर्भाव इति भावः। स्मृतिशास्त्रत्वादिति। अन्यशास्त्रीयवार्त्तिकवन्नास्मदीयं वार्त्तिकं व्याख्यानमेवेति भावः। न च वचनेत्यस्यापि वार्त्तिकत्वाद्वार्त्तिककृता स्वीयवचसः कथ प्रमाणत्वेनाश्रयणमिति भाष्ये 'वार्तिके'-त्याद्यनुपपन्नमिति वाच्यम्। अन्योऽयं वार्त्तिककारो वार्त्तिककारान्तरीयैतद्वचनं प्रमाणान्तरत्वेनाश्रयतीत्यदोषात्।

नन्वन्यशब्दस्यार्थोऽन्येन कथं वक्तव्य इति 'निसोच्यत' इत्यसङ्गतमत आह—संप्रतीयते इति। एवं च 'निसोच्यत' इत्यस्य क्रियाविषयनिसर्थेनाक्षिप्यत इत्यर्थं इति भावः। तदाह—निःशब्देनेति। ननु शक्त्यभावे कथं प्रतीतिरत आह—आक्षिप्तत्वादिति। भाष्ये–तस्यार्थ इति। क्रान्तशब्दस्यार्थं इत्यर्थः। तत्राऽन्यशब्दार्थस्याऽन्येन शक्त्या बोधनाऽसंभवात् 'उच्यत' इत्यस्याक्षिप्यत इत्यर्थं इति भावः। आक्षिप्तस्यापि शाब्देऽन्वयबोधे भानं भवतीति भावः। तदसहमान आह—अथवा सोऽर्थ इति। तदाह—निस एवेति॥ तत्र संशयविषयं

१–'वृत्तिसूत्रम्' पाणिनीयशास्त्रस्य नामान्तरम्। (व्या० शा० इति० भा० १ पृ० २१३)

† २. २. १८ वा० ३; ४.

अथ यत्र बहूनां समासप्रसङ्गः किं तत्र द्वयोर्द्वयोः समासो भवति, आहोस्विदविशेषेण । कश्चात्र विशेषः ?

**समासो द्वयोर्द्वयोश्चेद् द्वन्द्वेऽनेकग्रहणम् ॥ २५ ॥**

समासो द्वयोर्द्वयोश्चेद् द्वन्द्वेऽनेकग्रहणं कर्तव्यम् । 'चार्थे द्वन्द्वः' [२.२.२९] 'अनेक'मिति वक्तव्यम् । इहापि यथा स्यात्—'प्लक्षन्यग्रोधखदिरपलाशा' इति ।

नैष दोषः । अत्रापि द्वयोर्द्वयोः समासो भविष्यति ।

**द्वयोर्द्वयोः समास इति चेन्न बहुषु द्वित्वाभावात् ॥ २६ ॥**

द्वयोर्द्वयोः समास इति चेत् तन्न । किं कारणम् ? 'बहुषु द्वित्वाभावात्' । न बहुषु द्वित्वमस्ति ।

---

प्र०— अथ यत्रेति । यत्र विशिष्टे पूर्वपदोत्तरपदे उपात्ते यथा 'द्वितीयाश्रिते'ति, तत्र नास्ति बहूनां प्रसङ्गः । यत्र तु विशेषो नोपात्तः, 'अनेकमन्यपदार्थे' 'चार्थे द्वन्द्व' इति तत्र सन्देहः । यदि सुप्सुपेति वर्तते ततो विवक्षितत्वात्संख्याया द्वयोर्द्वयोः समासेन भवितव्यम् , अथ निवृत्तं ततो यावतामन्यपदार्थे चार्थे वा वृत्तिस्तावतां भाव्यम् ॥ नन्वनेकग्रहणाद्बहूनामपि भाव्यम्, अन्यथा तदनर्थकं स्यात् । नैतदस्ति । अनेकग्रहणमुपसर्जनसंज्ञार्थं स्याच्चित्रगुरित्यादौ ह्रस्वार्थम् । यदा त्वेकविभक्तित्वेनोपसर्जनसंज्ञा सिध्यतीत्युच्यते तदानेकग्रहणं सुप्सुपेत्यस्य निवृत्त्यर्थं विज्ञायते । तेन बहूनां समासः सिध्यति ।

बहुषु द्वित्वाभावादिति । ननु बहुषु द्वौ विद्येते, तद्यथा—'एषां ब्राह्मणानां द्वावानये'ति, तत्र बहुषूपक्रान्तेषु प्लक्षन्यग्रोधयोरेका द्वन्द्वसंज्ञा । खदिरपलाशयोर्द्वितीया । पुनर्द्वन्द्वसमुदायस्य तृतीया भविष्यति । नैष दोषः । यद्यपि बहुषु द्वौ स्तस्तथापि चतुर्षु सहविवक्षितेषु एकैकस्य शब्दस्य चत्वारोऽर्था इति द्वयोश्चार्थे वृत्त्यसंभवात्, समास-

---

उ०—दर्शयति—यत्रेति । विवक्षितत्वादिति । सुबन्तत्वस्य प्रत्येकमेव समासेरित्यपि बोध्यम् । अनेकस्योपसर्जनत्वे पूर्वनिपातो न फलमित्यत आह—चित्रगुरिति । सुप्सुपेत्यस्येति । तृतीयान्तनिवृत्तौ तात्पर्यम् । प्रथमान्तं तु वर्तत एवेति बोध्यम् । तेन बहूनामिति । भाष्यं त्वनेकग्रहणाऽभावं मत्वा क्त्वाचिन्तया प्रवृत्तमिति बोध्यम् ।

भाष्ये—'द्वन्द्वेऽनेकग्रहण'मित्युपलक्षणं बहुव्रीहेरपि ॥ बहुषु द्वित्वाभावादिति । बहुषु बुद्धिस्थेषु तदवयवयोर्द्वित्वाऽभावादित्यर्थः । त्रिपुत्रे द्विपुत्रत्वव्यवहाराऽभावात् । एवं च 'द्वयोः समास' इति त्वदुक्तिरसंगतेति भावः ॥ ननु मास्तु तयोर्द्वित्वमन्याऽसंनिधाने यौ वस्तुतो द्वित्ववन्तौ तयोः समास इति तदर्थः । एवमेव 'शते पञ्चाश'दित्युक्तिः । अन्याऽसंनिधाने ये पञ्चाशत्त्ववन्तस्ते शते सन्तीति तदर्थं इति शङ्कते—नन्विति । समाधत्ते—यद्यपीति । एकैकस्य चत्वार इति । अनेकस्य चार्थवृत्तित्वे समासविधानादेकैकस्य चतुरवयवः

नावश्यमेवं विग्रहः कर्तव्यः—प्लक्षश्च न्यग्रोधश्च खदिरश्च पलाशश्चेति। किं तर्हि? एवं विग्रहः करिष्यते—प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ, खदिरश्च पलाशश्च खदिरपलाशौ, प्लक्षन्यग्रोधौ च खदिरपलाशौ च प्लक्षन्यग्रोधखदिरपलाशा इति।

होतृपोतृनेष्टोद्गातारस्तर्हि न सिध्यन्ति*। होतापोतानेष्टोद्गातार इति प्राप्नोति, न चैवं भवितव्यम्। भवितव्यं च, यदैवं विग्रहः क्रियते—होता च पोता च होतापोतारौ, नेष्टा चोद्गाता च नेष्टोद्गातारौ, होतापोतारौ च नेष्टोद्गातारौ च होतापोतानेष्टोद्गातार इति[1]। होतृपोतृनेष्टोद्गातारस्तु च सिध्यन्ति।

**समासान्तप्रतिषेधश्च ॥ २७ ॥**

समासान्तस्य च प्रतिषेधो वक्तव्यः। वाक्त्वक्स्रुग्दृषदमिति†। वाक्त्वचस्रुग्दृषदमिति प्राप्नोति॥ नैष दोषः। अत्रापि परेण परेण सह समासो भविष्यति। स्रुक् च दृषच्च स्रुग्दृषदम्। त्वक् च स्रुग्दृषदं च त्वक्स्रुग्दृषदम्। वाक् च त्वक्स्रुग्दृषदं च वाक्त्वक्स्रुग्दृषदमिति॥ होतृपोतृनेष्टोद्गातार एवं तर्हि न सिध्यन्ति॥ इह च—

प्र०-भाक्त्वं नास्तीति एतदनेन प्रतिपाद्यते। एवं विग्रह इति। द्वयोर्द्वयोः सहविवक्षा भविष्यति न तु युगपच्चतुर्णामित्यर्थः। होतृपोतृनेष्टोद्गातार इति। यदा बहूनां समासस्तदा सर्वान्त उत्तरपदे परत एकस्यैवानङ् भविष्यति, द्वयोर्द्वयोस्तु समासे क्रियमाणे एकं वर्जयित्वा सर्वेषामानङा भाव्यम्। अत्र च भाष्यकारवचनप्रामाण्यादुद्गातृशब्दस्य दीर्घः। अन्यथा नप्त्रादिग्रहणस्य नियमार्थत्वान्न स्यात्।

समासान्तप्रतिषेधश्चेति। द्वयोर्द्वयोर्द्वन्द्वसंज्ञायां प्रतिद्वन्द्वं समासन्तः प्राप्नोती-

उ०-समूहोऽर्थः। तत्र द्वयोः सत्त्वेऽपि तयोरितरस्य सापेक्षतयाऽसामर्थ्यान्न तयोः समास इति भावः। बहुषु द्वित्वाऽभावात्तदन्तर्गतद्वयोस्तत्समनियतसामर्थ्याभावादिति भाष्यार्थः। द्वयोर्द्वयोः सहेति। अन्येषामबुद्धिस्थत्वान्न तयोः सापेक्षतेति भावः॥ सर्वान्त इति। तत्समासीयसर्वान्त इत्यर्थः। तत्रैवोत्तरपदशब्दस्य रूढेरिति भावः॥ नियमार्थत्वादिति। तृज्ग्रहणेनैव सिद्धे नप्त्रादिग्रहणमुणादिव्युत्पन्नानां चेन्नप्त्रादीनामेवेति नियमार्थमिति भावः॥ अयमनौणादिकतृन्तृजन्यतरान्त इति भाष्याशयः। इदं 'ण्वुल्तृचौ' 'तृ'न्निति सूत्रस्थभाष्यविरुद्धम्। भाष्ये—'इति प्राप्नोती'त्यस्य—इत्येव प्राप्नोतीत्यर्थः।

समासान्तेन भाव्यमिति। तथा च तस्येष्टतया तत्प्रतिषेधारम्भोऽनर्थक इति भावः।

* आनङ् ऋतो द्वन्द्वे ६.३.२५. १-क्वचिन्न। † द्वन्द्वाच्चुदषहान्तात् समाहारे ५.४.१०६.

सुसूक्ष्मजटकेशेन सुनताजिनवाससा।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति॥

अस्तु तर्ह्यविशेषेण।

**अविशेषेण बहुव्रीहावनेकपदप्रसङ्गः॥ २८॥**

यद्यविशेषेण, बहुव्रीहावनेकपदप्रसङ्गः। तत्र को दोषः?

**तत्र स्वरसमासान्तपुंवद्भावेषु दोषः॥ २९॥**

तत्र स्वरसमासान्तपुंवद्भावेषु दोषो भवति॥ स्वर—पूर्वशालाप्रियः अपरशालाप्रियः। स्वर॥ समासान्त—पञ्चगवप्रियः* [पञ्चनावप्रियः]। समा-

प्र०-इत्यर्थः यद्यपि प्रक्रियान्तरे प्रतिद्वन्द्वमानङादेशवत्समासान्तेन भाव्यं तथापि बहूनां समासाऽभावादेकसमासान्तता न कदाचित्प्राप्नोतीति चोद्यते॥ सुसूक्ष्मजटकेशेनेति। सुष्ठु सूक्ष्मा जटाः केशा अस्येति विग्रहः। यद्यनेकग्रहणं न क्रियते, क्रियमाणं वोपसर्जनसंज्ञार्थं विज्ञायते, सुप्सुपेति चानुवर्तते, तदात्र बहूनां बहुव्रीहिर्न प्राप्नोति।

पूर्वशालाप्रिय इति। यदा बहूनां बहुव्रीहिसंज्ञा, तदा पूर्वपदप्रकृतिस्वरेण पूर्वशब्दः 'स्वाङ्गशिटामदन्ताना'मित्याद्युदात्तः स्यात्, यदा तु द्वयोरेव बहुव्रीहिसंज्ञा भवतीति पक्षस्तदा पूर्वा शाला पूर्वशालेति 'पूर्वापरप्रथमे'ति समासे कृते समासान्तोदात्तत्वे च पूर्वशाला प्रियाऽस्येति द्विपदे बहुव्रीहौ कृते पूर्वपदप्रकृतिस्वरेण शालाशब्दाकार उदात्तः सिध्यति॥ ननु त्रिपदे बहुव्रीहौ कृते 'तद्धितार्थोत्तरपदसमाहारे' इति तत्पुरुषेणात्र भाव्यमिति कथं दोषोपन्यासः? एवं तर्हि परस्तादयं परिहारो वक्ष्यत इति न तावदत्राश्रितः। पञ्चगवप्रिय इति। त्रिपदे बहुव्रीहौ समासान्तो न प्राप्नोति।

उ०-सुष्ठु सूक्ष्मा इति। भाष्यप्रामाण्याजटशब्दोऽदन्तः पुंलिङ्गो घनपर्यायो जटापर्यायो वा। संज्ञाछन्दसोरभावेऽपि सूक्ष्मशब्दस्योत्तरपदपरत्वाऽभावे बहुलग्रहणादुभयत्रापि ह्रस्व इति कश्चित्, तन्न, त्वे चेत्यस्य वैयर्थ्यापत्तेः। एतेन 'पत्नयो गर्भिण्य' इत्यादावनुत्तरपदेऽपि बहुलग्रहणादनेन ह्रस्व इति हरदत्तोक्तमपास्तम्॥ अम्बार्थेतिसूत्रे 'अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यं पत्नयो गर्भिण्य इत्यर्थ'मिति भाष्यमुपादाय 'व्यत्ययो बहुल'मिति दीर्घस्य ह्रस्व इति कैयटोक्तेश्च। यद्यपि पूर्वं पूर्वं कर्मधारयं कृत्वा बहुव्रीहिः क्रियते तथापि सुशब्दस्वरो न सिध्यतीत्यर्थः। यद्यपि सूक्ष्मा जटाः सूक्ष्मजटाः, तादृशाश्च ते केशाश्च सूक्ष्मजटकेशाः, सुष्ठु सूक्ष्मजटकेशा यस्येति बहुव्रीहौ द्विपदसमासेऽपि सिध्यति स्वरश्च, तथापि अत्र पक्षे सौष्ठवस्य शब्दमर्यादया सूक्ष्मविशेषणता न लभ्येतेति अनेकपद एव स एष्टव्यः। 'नञ्सुभ्या'मित्युत्तरपदान्तोदात्तत्वापत्त्या स्वराऽसिद्धेश्च। दृश्यते तु पूर्वपदप्रकृतिस्वरेण सुशब्दस्वर इति दिक्॥ भाष्ये—अस्तु तर्हीति। द्वन्द्वादिविधायकयोरनेकग्रहणसामर्थ्यात् सुबित्येव वर्तते सुपेति निवृत्तमिति भावः। समासान्त अनेकपदप्रसङ्ग इति। अनेकपदसमासत्वप्रयुक्तदोषप्रसङ्ग इत्यर्थः।

* गोरतद्धितलुकि ५.४.९२. १-कचिन्न।

सान्त ॥ पुंवद्भाव—खादिरेतरशम्यम् रौरवेतरशम्यम्[†] ।

**न वावयवतत्पुरुषत्वात् ॥ ३० ॥**

न वैष दोषः । किं कारणम् ? 'अवयवतत्पुरुषत्वात्' । अवयवोऽत्र तत्पुरुषसंज्ञस्तदाश्रयौ समासान्तपुंवद्भावौ भविष्यतः ॥ स्वरः कथम् ?

**तस्यान्तोदात्तत्वं विप्रतिषेधात् ॥ ३१ ॥**

अन्तोदात्तत्वं क्रियतां पूर्वपदप्रकृतिस्वर इति[‡], अन्तोदात्तत्वं भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । 'विप्रतिषेधे पर'मित्युच्यते* । पूर्वं

प्र०–यदा द्वयोर्बहुव्रीहिरिति पक्षस्तदा पञ्चानां गवां समाहारः पञ्चगवं, तत् प्रियमस्येति रूपं सिद्ध्यति । खादिरेतरशम्यमिति । खादिरी इतरा शम्यास्येति त्रिपदे बहुव्रीहौ क्रियमाणे उत्तरपदे पुंवद्भावो विधीयमानः खादिरीशब्दस्य न प्राप्नोति । यदा तु द्वयोर्बहुव्रीहिरिति पक्षस्तदेतरा शम्या इतरशम्येति समासे कृते खादिरी इतरशम्याऽस्येति बहुव्रीहौ सिद्ध्यति पुंवद्भावः ।

न वेति । क्वचित्त्रयाणां पदानां बहुव्रीहौ कृते द्वयोः पदयोस्तद्धितार्थोत्तरपदेति तत्पुरुषः । भिन्नविषयत्वाच्च बहुव्रीहितत्पुरुषसंज्ञयोरेकसंज्ञाधिकारेऽपि नास्ति विरोधः । खादिरेतरशाम्यमित्यत्र पुंवद्भावसिद्धये कृते तत्पुरुषे खादिरी इतरशम्याऽस्येति द्विपदो बहुव्रीहिः क्रियते न तु त्रिपदः । विकारे च प्रत्ययविधानाद्‌'वृद्धिनिमित्तस्ये'ति प्रतिषेधो नास्ति । स्वरः कथमिति । पूर्वशालाप्रिय इत्यादावपवादत्वाद्बहुव्रीहिस्वरः प्राप्नोति ।

विप्रतिषेधादिति । विरोधमात्रं विप्रतिषेधशब्देनात्रोच्यते । हेतुस्त्वन्तरङ्गत्वं, निमित्तस्वरबलीयस्त्वं च । इतरस्तु विप्रतिषेधमूलं परत्वमनेन हेतुत्वेनोक्तमिति मत्वाह– नैष युक्त इति । अन्तरङ्गेति । 'अनुदात्तं पदमेकवर्ज'मिति वचनाद् द्वयोः स्वरयोर-

उ०–इति । 'गोरतद्धिते'ति टच् । पञ्चगवमिति । टचः समासभक्तत्वेनाऽकारान्तोत्तरपदत्वाऽभावात्स्त्रीत्वाऽभावः । तदेतरा शम्येति । पूर्वं कर्मधारयगर्भस्तु न कृतः, इतराशब्दस्य पूर्वनिपातापत्तिरपि दोषो बोध्यः । शम्यापेक्षया द्वयोर्विशेषणत्वेऽपि प्रथमानिर्दिष्टत्वेऽपि 'इतरे'त्यस्य सर्वनामत्वादिति वदन्ति ।

क्वचिद्बहुव्रीहौ कृते तत्पुरुषः, क्वचित्तत्पुरुषे बहुव्रीहिरिति विषयविवेकं दर्शयति—आकडारीयत्वाद्बहुव्रीहितत्पुरुषयोः कथं समावेश इत्यत आह—भिन्नेति । एका समुदायस्याऽपराऽवयवस्येति भिन्नविषयत्वमिति भावः ।

भाष्ये—अन्तरङ्गविप्रतिषेधमिति । अन्तरङ्गत्वलक्षणविरोधमित्यर्थः । ननु द्वयोरपि संभवे कथं विरोधोऽत आह—अनुदात्तं पदमिति ॥ नन्वन्तोदात्तं प्रति बहुव्रीहिस्वरस्या-

† स्त्रियाः पुंवद् भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६. ३. ३४.

‡ समासस्य ६.१.२२३; बहुव्रीहौ प्रकृत्या पूर्वपदम् ६.२.१; * विप्रतिषेधे परं कार्यम् १.४.२.

चान्तोदात्तत्वम्, परं पूर्वपदप्रकृतिस्वरत्वम्। न परविप्रतिषेधं ब्रूमः। किं तर्हि? अन्तरङ्गविप्रतिषेधम्।

**निमित्तिस्वरबलीयस्त्वाद्वा ॥ ३२ ॥**

अथवा निमित्तस्वरान्निमित्तिस्वरो बलीयानिति वक्तव्यम्। किं पुनर्निमित्तम्, को वा निमित्ती? बहुव्रीहिर्निमित्तम् तत्पुरुषो निमित्ती*।

तत्तर्हि वक्तव्यं 'निमित्तस्वरान्निमित्तिस्वरो बलीया'निति? न वक्तव्यम्।

**एकशितिपात्स्वरवचनं तु ज्ञापकं निमित्तिस्वरबलीयस्त्वस्य ॥३३॥**

यदयं युक्तारोह्यादिष्वेकशितिपाच्छब्दं पठति† तज्ज्ञापयत्याचार्यो 'निमित्तस्वरान्निमित्तिस्वरो बलीया'निति। कः पुनरर्हति युक्तारोह्यादिष्वेकशितिपाच्छब्दं पठितुम्। एवं किल नाम पठ्यत एकः शितिः एकशितिः, एकशितिः पादो यस्येति। तच्च न। एवं विग्रहः करिष्यते—एकः शितिरेषु त इम एकशितयः, एकशितयः पादा यस्येति [ एकशितिपादिति ]। अथाप्येवं विग्रहः क्रियते—

प्र०-संभवात्कक्षान्तरप्राप्तत्वाच्च बाध्यबाधकभावादवयवाश्रयत्वादन्तरङ्गत्वं व्यवस्थाहेतुराश्रीयत इत्यर्थः। अन्तरङ्गोऽपि सतिशिष्टेन बहिरङ्गेणापि स्वरेण बाध्यत इत्यनैकान्तिकमन्तरङ्गत्वं मत्वा हेत्वन्तरमाह—निमित्तस्वरबलीयस्त्वादिति। सति बहुव्रीहौ तदवयवोत्तरपदाश्रयो द्वयोस्तत्पुरुष इति बहुव्रीहेर्निमित्तत्वम्।

एकशितिपादिति। युक्तारोह्यादिषु पूर्वपदाद्युदात्तार्थः पाठः। एकशब्दश्च कन्नन्तत्वात्स्वाङ्गशिटामिति वाद्युदात्तः। तत्र त्रिपदे बहुव्रीहौ कृते द्वयोश्च तत्पुरुषे कृते बहुव्रीहौ प्रकृत्येति सिद्ध आद्युदात्तत्वे ज्ञापनार्थः पाठः संपद्यते॥ कः पुनरिति। सर्वथा स्वरस्य सिद्धत्वादकर्तव्य एव पाठो न ज्ञापक इत्यर्थः। निमित्तस्वरस्य तु बलीयस्त्वं वाचनिकं, न तु ज्ञापकसिद्धम्।

उ०-पवादत्वात्कथमन्तरङ्गत्वं तत्राह-कक्षान्तरेति। बहुव्रीह्यनन्तरभावित्वात्तत्पुरुषस्य तत्स्वरस्य समासान्तरप्राप्तस्वरूपं कक्षान्तरप्राप्तत्वम्। एवं च बहुव्रीहिगतसमासत्वप्रयुक्तान्तोदात्तत्वस्यैवापवादोऽयम्, न तु पश्चात्प्राप्ततत्पुरुषप्रयुक्तस्येत्यर्थः। 'अपवादोऽपि यद्यन्यत्रे'ति न्यायादिति भावः। अन्तरङ्गत्वमिति। समासद्वये कृते तदनन्तरं स्वरद्वयप्रवृत्तिरित्यभिमानः। वास्तवसमाधानं तु सतिशिष्टस्वरबलीयस्त्वमेव। तदेव शब्दान्तरेण पठितं—निमित्तिस्वरेति।

अनैकान्तिकमिति। पूर्वमेव बहुव्रीहिस्वरप्रवृत्त्या युगपत्प्राप्त्यभावेनान्तरङ्गपरिभाषाविषयाऽभाव इत्यत्र तात्पर्यमस्य बोध्यम्॥ स्वाङ्गशिटामिति। इदमव्युत्पत्तिपक्षे बोध्यम्। द्वयोस्तत्पुरुष इति। 'तद्धितार्थोत्तरपदे'त्यनेनेत्यर्थः। आचार्येण पठिते कथं पाठाऽभाव उक्त

* तद्धितार्थोत्तरपदसमाहारे च २. १. ५१. † युक्तारोह्यादयश्च ६. २. ८१. १-क्वचिन्न।

एकः शितिरेकशितिः, एकशितिः पादो यस्येति, एवमपि नार्थः पाठेन । 'इगन्ते द्विगा'वित्येष स्वरोऽत्र बाधको भविष्यति† ।

'अस्य तर्हि बहुव्रीह्यवयवस्य तत्पुरुषसंज्ञा प्राप्नोति—

'सुसूक्ष्मजटकेशेन सुनताजिनवाससा । समन्तशितिरन्ध्रेणे'ति ।

तत्र को दोषः ? 'तस्यान्तोदात्तत्वं विप्रतिषेधा'दित्यन्तोदात्तत्वं स्याद्विप्रतिषेधेन ।

नैष दोषः । नेदं बहुव्रीह्यवयवस्य तत्पुरुषस्य लक्षणमारभ्यते । किं तर्हि ? यस्य बहुव्रीह्यवयवस्य तत्पुरुषस्य तल्लक्षणमस्ति तस्यान्तोदात्तत्वं भविष्यति विप्रतिषेधेन । ननु चास्याप्यस्ति । किम् ? 'विशेषणं विशेष्येण बहुलम्' [ २. १. ५७ ] इति । बहुलवचनान्न भविष्यति ।

अस्य तर्हि बहुव्रीह्यवयवस्य तत्पुरुषसंज्ञा प्राप्नोति -'अधिकषष्टिवर्ष' इति* । तत्र को दोषः ? 'तस्यान्तोदात्तत्वं विप्रतिषेधा'दित्यन्तोदात्तत्वं स्याद्विप्रतिषेधेन ।

प्र०- नेदमिति । यद्यपूर्ववचनं क्रियेत—'बहुव्रीह्यवयवस्तत्पुरुषो भवती'ति ततोऽत्र स्याद्दोषः । दिक्संख्ययोस्तूत्तरपदे तत्पुरुषो विधीयत इति दोषाऽभावः । बहुलवचनादिति । समुदायस्य वृत्तावयवस्यान्या संज्ञा विशेषलक्षणं विना बहुलवचनान्न प्रवर्तते । अधिकषष्टिवर्ष इति । त्रिपदे बहुव्रीहौ कृते अधिकग्रहणं चाऽलुकीत्येधिकशब्दस्य संख्या-

उ०—इत्यतस्तात्पर्यमाह—सर्वथेति । विग्रहद्वयेऽपीत्यर्थः । भाष्ये—एवं किल नामेति । तत्पुरुषपूर्वपद-बहुव्रीहौ तिकारेकारस्योदात्तत्वं प्राप्तं, तद्बाधेनैकारोदात्तत्वाय स शब्दः पठ्यते इत्यर्थः । तच्च न युक्तम् । विग्रहान्तरकरणात् । तत्पुरुषपूर्वपदकबहुव्रीहावपि 'तद्धितार्थे'ति तत्पुरुषसमास-संज्ञायां द्विगुत्वमित्याशयेन भाष्ये आह—इगन्ते द्विगाविति । पूर्वपदप्रकृतिस्वरविधायकमेतत् ।

अवयवस्य तत्पुरुषसंज्ञा वाचनिक्यनेन कृतेति मत्वाह—अस्य तर्हीत्यादि । भाष्ये—नेदमिति । 'न वाऽवयवतत्पुरुषत्वा'दित्येतत् । बहुलवचनादिति । क्वचिदन्यदेवेत्यर्थका-दित्यर्थः । अनेन चैतत्प्रपञ्चभूतानां, पूर्वनिपातनियमार्थानां च बहुलग्रहणेन निवृत्तिरिति सूच्यते । अन्यथा तेषां तत्त्वं भज्येत । एतेन महत्कष्टं श्रित इति प्रतीकस्थत्रयाणां तत्पुरुषे 'सन्मह'दिति द्वयोः समासपरः कैयटः परास्तः । न च त्रयाणामेकार्थीभावेऽपि द्वयोर्निष्कृष्यै-कार्थीभावाभावात्कथं विशेषणमित्यस्य प्राप्तिः, 'तद्धितार्थे'ति तु सामर्थ्यात्प्रवर्तत इति वाच्यम् । निष्कृष्यैकार्थीभाव एव शास्त्रप्रवृत्तिरित्यर्थे मानाऽभावादिति दिक् ।

विशेषलक्षणं विनेति । तच्च 'तद्धितार्थे'त्यादि । विशेषलक्षणाऽभावोऽत्रापि तुल्य इत्यत आह—अधिकग्रहणं चेति । अधिकषष्टिवर्षेऽपीति । अधिकशतवर्षेऽपि ङवः

† इगन्तकालकपालभगालशरावेषु द्विगौ ६.२.२९. * तद्धितार्थोत्तरपदसमाहारे च २.१.५१.

नैष दोषः । 'इगन्ते द्विगा'वित्येष स्वरो [बाधको] भविष्यति[†] ॥ यस्तर्हि नेगन्तः—'अधिकशतवर्ष' इति ।

इह चाप्यधिकषष्टिवर्ष इति समासान्तः प्राप्नोति—'डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थमिति[‡] । नैष दोषः । अव्ययादेरित्येवं तत् । किं पुनः कारणम् 'अव्ययादेरित्येवं तत्' ? इह मा भूत्—गोत्रिंशत् गोचत्वारिंशदिति ॥ बहुव्रीहिसंज्ञा तर्हि प्राप्नोति—'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' [ २. २. २५ ] इति* ।

न संख्यां संख्येये वर्तयिष्यामः । कथम् ? एवं विग्रहः करिष्यते—अधिका षष्टिर्वर्षाणामस्येति ।

यथा तर्हि स योगः प्रत्याख्यायते तथा पूर्वेण[††] प्राप्नोति । कथं च स योगः प्रत्याख्यायते ? 'अशिष्यः संख्योत्तरपदः संख्येयवाभिधायित्वादिति[‡‡] ।

प्र०—संज्ञात्वा'त्तद्धितार्थोत्तरपदे'ति पदद्वयस्य तत्पुरुषे कृते समासाऽन्तोदात्तत्वं प्राप्नोतीत्यर्थः । अधिकशब्द कन्नन्तत्वादाद्युदात्तः ॥ बहुव्रीहिसंज्ञा तर्हीति । अधिकषष्टिवर्षेऽपि दोष इति भावः । त्रिपदे बहुव्रीहौ कृते पदद्वयस्य तद्धितार्थोत्तरपदेति तत्पुरुषं परत्वाद् बाधित्वा संख्ययाव्ययेति बहुव्रीहिः प्राप्नोति । ततश्च बहुव्रीहौ संख्येय इति डच्प्रसङ्गः ।

न संख्यामिति । 'अधिकषष्टिवर्ष' इत्येव यथा स्यादित्येवमर्थमव्यविकल्पाय आश्रीयते । तेनाधिका षष्टिर्वर्षाण्यस्येति वाक्यमेव भवति । पूर्वेणेति । अधिका षष्टिर्येषां वर्षाणामिति वर्षेषु संख्येयेषु अनेकमन्यपदार्थे इति बहुव्रीहिः प्राप्नोति । संख्येयवृत्तित्वाच्च बहुव्रीहेस्तन्निबन्धनो डजपीति दोषः । बहुव्रीहिगर्भश्च पुनर्वयस्त्विन्यभिधेये बहुव्रीहिः प्राप्नोति ।

उ०—प्राप्स्या स्वरे विशेष इति भावः । संख्येयपरेण बहुव्रीहौ दोषः स्यादेवेत्यत आह—अधीति । षष्टिशब्दस्याऽजहल्लिङ्गत्वमेकवचनान्तत्वं च मत्वाह—अधिका षष्टिर्वर्षाण्यस्येति । अधिकाषष्टिर्वर्षाणामिति । यद्यपि अधिका षष्टिर्येषां वर्षाणामिति विग्रहे स्थितेऽपि 'संख्येये'तिसूत्रे पूर्वेण बहुव्रीहिः प्राप्नोतीति वक्तुं शक्यते, तथापि संख्येये संख्याया अवृत्त्या डचोऽप्राप्त्या प्रयोजनाऽभाव इति वक्तुं शक्यमित्याशयेन भाष्ये-'यथा तर्हि स योगः प्रत्याख्यायते तथा पूर्वेणे'त्युक्तम् । 'यदा तदे'ति क्वचित्पाठः । स योगः—संख्ययाव्ययेति योगः । डजपीति । तत्प्रत्याख्याने संख्येये वर्त्तमानबहुव्रीहेरित्यर्थात्तस्मादेव डजिति भावः । तर्हि वर्षोत्तरपदत्वं कथं तत्राह—बहुव्रीहिगर्भे इति । एवं चाधिकषष्टिवर्ष इति प्रयोगो दुर्वार एवाऽधिकषष्टिर्वर्षाण्यस्येति विग्रहे वाक्याङ्गीकारेऽपीति भावः ।

१—क्वचिन्न । † इगन्तकालकपालभगालशरावेषु द्विगौ ६. २ २९. ‡ ५. ४. ७३ वा० १; चितः ६. १. १६३. * बहुव्रीहौ संख्येये डजबहुगणात् ५. ४. ७३; चितः ६. १. १६३. ††अनेकमन्यपदार्थे २. २. २४; बहुव्रीहौ संख्येये डजबहुगणात् ५. ४. ७३.

२—'वार्थाभिधायित्वात्' पा० । ‡‡ २. २. २५. वा० ४.

प्रत्याख्याते तस्मिन्योगे संख्यां संख्येये वर्तयिष्यामः। तत्रैवं विग्रहः करिष्यते—अधिका षष्टिर्वर्षाण्यस्येति।

सर्वथा वयमधिकषष्टिवर्षान्न मुच्यामहे। कथम्? यावता स च योगः प्रत्याख्यायतेऽयं च विग्रहोऽस्ति—अधिका षष्टिर्वर्षाणामस्येति।

यत्तु तदुक्तम् 'अधिकषष्टिवर्षो न सिध्यती'ति, स सिद्धो भवति। कथम्? यावता स च योगः प्रत्याख्यायतेऽयं च विग्रहोऽस्ति—अधिका षष्टिर्वर्षाण्यस्येति॥ अधिकशतवर्षस्तु न सिध्यति। कर्तव्योऽत्र यत्नः॥१॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम्।

प्र०- प्रत्याख्यात इति। अव्यविकन्यायेन चाधिका षष्टिर्वर्षाणामस्येति वाक्यमेव भविष्यति। अव्यविकन्यायममत्वाह—सर्वथेति।

अव्यविकन्यायाश्रयेणाह—यत्तु तदुक्तमिति। वृत्तिविषये दशादीनामपि द्व्येकयोरिति। निर्देशात्संख्यानमात्रवृत्तित्वात्संख्येयस्याऽन्यपदार्थत्वात्स योगः प्रत्याख्यायते॥ अधिकशतवर्षस्त्विति। अधिकं शतं वर्षाण्यस्येति त्रिपदे बहुव्रीहौ कृते 'तद्धितार्थोत्तरपदे'ति तत्पुरुषे समासान्तोदात्तत्वं प्राप्नोति, आद्युदात्तत्वं चेष्यते। कर्तव्योऽत्र यत्न इति। युक्तारोह्यादिष्वधिकशतवर्षशब्द आद्युदात्तार्थो द्रष्टव्यः।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे द्वितीयस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम्।

उ०- तत्खण्डयति भाष्ये—प्रत्याख्याते तस्मिन्निति। अधिका षष्टिर्वर्षाण्यस्येति। अत्राऽवान्तरबहुव्रीहिस्तु न, संख्येयरूपान्यपदार्थाऽभावादिति भावः। नन्वधिका षष्टिर्येषां वर्षाणामित्यस्यापि विद्यमानत्वात्कथं दोषपरिहार इत्यत आह—अव्यविकेति। यथाश्रुतग्राहिणश्चोद्यमित्याह—अव्यविकन्यायममत्वाहेति। भाष्ये—'अधिकषष्टवर्षान्न मुच्यामह' इति पाठः। ईदृशाऽनिष्टरूपादित्यर्थः। क्वचित्त्वधिकषष्टिवर्षान्न मुच्यामहे इति पाठः। तदाऽधिकषष्टिवर्षविषयादनिष्टरूपान्न मुच्यामह इत्यर्थः। अधिका षष्टिर्वर्षाणामस्येति। अधिका षष्टिर्येषां वर्षाणां तानि अस्येत्यर्थः।

'आ दशभ्यः संख्याः संख्येये' इति नियमात्तद्विषये सूत्रस्यावश्यकत्वात्कथं प्रत्याख्यानं, तत्राह—वृत्तिविषय इति। अधिकाषष्टिर्वर्षाण्यस्येति विग्रहेऽवान्तरान्यपदार्थाभावादनेकमित्यस्याऽप्राप्तौ तद्योगप्रत्याख्यानेऽधिकषष्टिवर्षः सिद्धः। विग्रहान्तरे तु वाक्यमेव। एवं सूत्रारम्भे अधिका षष्टिर्वर्षाणामस्येति बहुव्रीहिगर्भे बहुव्रीहौ संख्येये वर्त्तमानसंख्यान्तबहुव्रीहेरित्यर्थान्न डच्। विग्रहान्तरे तु वाक्यमेवेत्यधिकषष्टिवर्षः सिद्ध इति भाष्याशयः।

एवं च द्वन्द्वबहुव्रीहिविषयेऽविशेषेणेति पक्षः स्थितः॥१॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते व्याकरणमहाभाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य प्रथमे पादे प्रथममाह्निकम्।

१-'षष्टवर्षान्न' पा०। अयमेव पाठो नागेशसम्मतः।

# सुबामन्त्रिते पराङ्गवत्स्वरे ॥ २ । १ । २ ॥

सुबिति किमर्थम् ? करोष्यटन् । नैतदस्ति । असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? 'समानाधिकरणमसमर्थवद्भवती'ति ।

इदं तर्हि—पीड्ये पीड्यमान ॥ इदं चाप्युदाहरणम्—करोष्यटन् । ननु चोक्तम् 'असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? समानाधिकरणमसमर्थवद्भवती'ति । नैष दोषः । 'अधात्वभिहित'मित्येवं तत् ।

प्र०- सुबामन्त्रिते । सुबिति किमर्थमिति । आमन्त्रितस्य पदत्वात्तस्मिन् परतो विधीयमानस्य पराङ्गवद्भावस्य पदविधित्वात्समर्थपरिभाषोपस्थानात् तिङन्तस्य न भविष्यति । तथा हि—व्यधिकरणस्य तिङन्तस्य वास्तवमसामर्थ्यं समानाधिकरणस्य वाचनिकम्, अतिव्याप्तिनिवारणार्थमवश्यं कर्तव्यं षष्ठ्यामन्त्रितकारकवचनमिति, तेनैव तिङन्तस्यव सिद्धो निरासः । क्रियमाणे च सुब्ग्रहणे तीक्ष्णया सूच्या सीव्यनित्यादौ सुबन्तसमुदायस्याऽप्राप्तिरित्यव्याप्तिः प्राप्नोतीति भावः । करोष्यटन्निति । अधात्वभिहितमिति सापवादत्वान्नास्ति वाचनिकसामर्थ्यम् । पीड्ये पीड्यमानेति । हे पीड्यमान त्वदीयया पीडयाऽहं पीड्य इत्यस्ति सामर्थ्यम् । अथवा संबोधनपदं क्रियाया एव विशेषकमित्यस्ति सामर्थ्यम् । तथा च—'व्रजानि देवदत्ते'ति निघातो भवति । पीड्य इति 'तास्यनुदात्ते'दिति लसार्वधातुकस्यानुदात्तत्वम्, यक उदात्तत्वा'देकादेश उदात्तेनोदात्त' इत्येकार उदात्तः । 'पीड्यमाने'त्यस्य पदादुत्तरस्य निघातः । अधात्वभिहितमिति । सर्वं नाम धातुजमिति दर्शनेन सर्पिःकालकमिति यद्यपि धात्वभिहितं तथापि यत्र क्रिया प्रवृत्तिनिमित्तं, स्फुटा च धातुप्रत्ययेन कर्त्रादिप्रतिपत्तिस्तद्धात्वभिहितं गृह्यते । यदप्युक्तं 'वचनान्तरेणातिव्याप्तिर्निवार्येत' इति, तदपि

उ०- सुबामन्त्रिते । व्यधिकरणस्येति । उपात्तामन्त्रितानन्वयिन इत्यर्थः । यथा हे पीड्यमान त्वं शृणु अहं पीड्ये इत्यर्थकपीड्ये पीड्यमानेत्यादाविति भावः । वाचनिकमिति । 'समानाधिकरणमसमर्थव'दिति । युक्त्यन्तरमप्याह—अतिव्याप्तीति । 'क्षत्रेणागने' इत्यादाविति भावः । भाष्यास्वाद्य एव प्रश्नाशय उपलक्ष्यते । सुबन्तसमुदायस्येति । तस्याऽसुबन्तत्वादिति भावः । भाष्ये—नैतदस्तीति शङ्किता । नैष दोषोऽधात्वभिहितमिति च सिद्धान्त्येकदेशीति तत्त्वम् । एकार्थीभावसामर्थ्यस्यैव तत्र सूत्रे ग्रहणेन तस्याऽत्रानुपस्थितेरित्याहुः । तिङन्तामन्त्रितयोः परस्परसंबन्धाऽभावादसामर्थ्यमित्यत आह—त्वदीययेति । पीड्यमानपदार्थविशेषणीभूतपीडाकरणकत्वेन तद्द्वारा सामर्थ्यमिति भावः । साक्षादपि सामर्थ्यं दर्शयितुमाह—अथवेति । तथा च व्रजानीति । वस्तुतः साक्षात्परस्परान्वयाऽभावेऽपि 'नद्यास्तिष्ठति कूले'इत्यादाविव निघातसिद्धिरत्रास्त्येवेति बोध्यम् । एकार उदात्त इति । पराङ्गवद्भावे तु पीड्ये इति पीकारेकार उदात्तः स्यादिति भावः । स्फुटा चेति । क्रियाप्रवृत्तिनिमित्त-

## आमन्त्रितस्य पराङ्गवद्भावे षष्ठ्यामन्त्रितकारकवचनम् ॥ १ ॥

आमन्त्रितस्य पराङ्गवद्भावे षष्ठ्यन्तमामन्त्रितकारकं च परस्याङ्गवद्भवतीति वक्तव्यम् ॥ षष्ठ्यन्तं तावत्—मद्राणां राजन् । मगधानां राजन् ॥ आमन्त्रित-कारकम्—कुण्डेनाटन् । नास्त्यत्र विशेषः सति पराङ्गवद्भावेऽसति वा । इदं तर्हि—परशुना वृश्चन् ।

## तन्निमित्तग्रहणं वा ॥ २ ॥

तन्निमित्तग्रहणं[1] वा कर्तव्यम् । आमन्त्रितनिमित्तं परस्याङ्गवद्भवतीति वक्तव्यम्[2] । तच्चावश्यमन्यतरद्वक्तव्यम् ।

## अवचने हि सुबन्तमात्रप्रसङ्गः ॥ ३ ॥

अनुच्यमाने ह्येतस्मिन्सुबन्तमात्रस्य पराङ्गवद्भावः प्रसज्येत[3] । अस्यापि प्रसज्येत—'क्षत्रेणाग्ने स्वायुः सꣳरभस्व मित्रेणाग्ने मित्रधेये यतस्व'* ।

---

प्र०-न युक्तम् । न हि सूत्रकारो वार्तिककारस्य वचनेनातिव्याप्तिनिवारणं मन्यते ।

आमन्त्रितस्येति । आमन्त्रिते यो विधीयते स आमन्त्रितसंबन्धी भवतीति षष्ठीनिर्देशः । आमन्त्रितकारकमिति । आमन्त्रिते या धातुवाच्या क्रिया तस्याः कारकमित्यर्थः । नास्त्यत्रेति । कुण्डशब्दो 'नब्विषयस्यानिसन्तस्ये'त्याद्युदात्तः । आमन्त्रितस्य पदात्परस्य निघातः । सत्यपि पराङ्गवद्भावे सुबन्तसमुदायस्याद्युदात्तत्वं शेषनिघातश्चेति भेदाऽभावः । परशुनेति । परशुशब्द आङ्परयोः खनिशृभ्यां डिच्चेति कुप्रत्ययाऽन्तोदात्तः । तन्निमित्तग्रहणं वेति । वाशब्दो विकल्पे । तस्यामन्त्रितस्य यन्निमित्तं तद्वाचि पराङ्गवद्भवतीत्यर्थः । मद्राणां राजन्निति । मद्रनिमित्तं हि राजत्व-मित्यपि तन्निमित्तत्वम् । भृत्यदेशनिमित्ता हि राजता । क्षत्रेणाग्न इति । क्षत्रमित्रयोरा-

---

उ०-कत्वे हि सा स्फुटा भवतीति बोध्यम् । मन्यते इति । अग्रे वार्तिकस्य वक्ष्यमाणतयाऽत्र पूर्वपक्षिसिद्धान्त्येकदेशिनोस्तदज्ञानाच्चेत्यपि बोध्यम् । एतेन वार्त्तिकानामपि वाक्यैकदेश-न्यायेन सूत्रतात्पर्यविषयतायाः पस्पशायां भाष्ये ध्वनितत्वेनेदं चिन्त्यमित्यपास्तम् ।

आमन्त्रितस्येति षष्ठ्यनुपपत्तेराह—आमन्त्रिते इति । कुण्डशब्द इति । न च यदाऽटन्निति पादादौ वर्त्तते, यद्वा वा जीवति पत्यौ जारजवाची कुण्डशब्दः पुंल्लिङ्गस्तदा स्वरभेदोऽस्त्ये-वेति वाच्यम् । पादादावेवंविधप्रयोगाऽभावात्, वृषादित्वेन कुण्डशब्दमात्रस्याद्युदात्तत्वाच्चेति भाष्याशयः ॥ तस्यामन्त्रितस्येति । आमन्त्रितार्थस्येत्यर्थः । तत्प्रवृत्तिनिमित्तस्येति यावत् ।

---

१—'अथवा तन्निमित्तग्रहणं कर्तव्यम्' पा० । २—'मद्राणां राजन्' इत्यधिकमिह क्वचित् पठ्यते । ३—'प्राप्नोति' पा० । * यजु० २७ । ५

किं पुनरत्र ज्यायः ? तन्निमित्तग्रहणमेव ज्यायः । इदमपि सिद्धं भवति—गोषु स्वामिन् । अश्वेषु स्वामिन्* । एतद्धि नैव षष्ठ्यन्तम्, नाप्यामन्त्रितकारकम् ।

**सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमनन्तरत्वात् ॥ ४ ॥**

सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसङ्ख्यानं कर्तव्यम् । तीक्ष्णया सूच्या सीव्यन् । तीक्ष्णेन परशुना वृश्चन् । किं पुनः कारणं न सिध्यति ? 'अनन्तरत्वात्' ॥ ननु च परस्य पराङ्गवद्भावे कृते पूर्वस्यापि भविष्यति ।

---

प्र०—ख्यातवाच्यक्रियापेक्षया करणत्वादामन्त्रितं प्रति निमित्तत्वाऽभावः । क्रियाद्वारकं तु व्यपेक्षालक्षणं सामर्थ्यमस्तीति स्यात्पराङ्गवद्भावः । इह वचनेनाऽतिप्रसङ्गे निरस्ते पूर्वसूत्र एकार्थीभाव एव सामर्थ्यमाश्रितम् । अन्यथा तु द्विविधमपि सामर्थ्यमाश्रीयेत ।

किं पुनरत्रेति । गुरुलाघवमनादृत्य प्रयोजनापेक्षः प्रश्नः । गोषु स्वामिन्निति । स्वामीश्वरेति शेषषष्ठीविषये सप्तमीविधानान्नास्ति कारकत्वम् । निमित्तत्वं तु पूर्वोक्तन्यायेनास्ति ।

सुबन्तस्येति । क्रियमाणेऽपि सुब्ग्रहणे सुबन्तसमुदायस्याऽसुबन्तत्वात्पूर्वस्य च परेणाव्यवधानान्न प्राप्नोति । किं पुनरिति । व्यवहितस्यापि परत्वसंभवात्परस्य वा पराङ्गवद्भावादामन्त्रितानुप्रवेशादव्यवधानाद्भविष्यतीति प्रश्नः । अनन्तरत्वादिति । 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषोपस्थानान्निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादप्राप्ति-

---

उ०— क्रियाद्वारकं त्विति । व्यपेक्षावादे 'कृतः सर्वो मृत्तिकये'त्यादौ समासापत्तेरिदं चिन्त्यम् । भाष्यस्य तु समर्थपरिभाषानुपस्थितौ तदननुवृत्तौ च तात्पर्यम् । समर्थसूत्रे एकार्थीभावस्यैव सिद्धान्तितत्वेन तस्या अत्राऽयोगात् । अत एव भो देवदत्त, भगो देवदत्तेत्यादौ पराङ्गवत्त्वं नेति बोध्यम् । षष्ठ्यामन्त्रितकारकत्वस्य, तन्निमित्तत्वस्य चाऽभावात् । 'ऋतेन मित्रावरुणावृतावृधा'वित्यत्र ऋतेनेत्यस्याऽऽनशाथे इति क्रियान्वयेनामन्त्रितऋतावृधावित्यर्थनिमित्तत्वाऽभावान्न पराङ्गवत्त्वम् । मित्रावरुणावित्यस्य तु ऋतस्य वर्धयितारावित्यर्थकऋतावृधावित्येतत्प्रवृत्तिनिमित्तभूतवर्धनं प्रति कर्तृतया मित्रावरुणयोर्निमित्तत्वात्सिद्ध इष्टः पराङ्गवद्भावः, छान्दसत्वाद्वेति बोध्यम् । उपक्रमस्थभाष्यं तु पूर्वपक्षत्वान्नार्थसाधकम् ॥ नन्वेकार्थीभावसामर्थ्यस्यैव समर्थसूत्रे सिद्धान्तितया कथमत्र पराङ्गवद्भावे तदुपस्थितिरित्यत आह—इहेति । एवं च सुब्ग्रहणं व्यर्थमिति तत्त्वम् । गुरुलाघवमिति । गुरुपदेन गुरुत्वपरेण लाघवपदस्य द्वन्द्वः ।

सुब्ग्रहणेऽपि कृते दोषवारणाय यत्नः कार्यं इति गौरवमित्येतत्परं वार्त्तिकमित्याह—क्रियमाण इति । सुबन्तसमुदायस्यासुबन्तत्वादिति । अनेन सुब्सुपेत्यादौ दर्शितैकत्व-

---

* स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च २. ३. ३९.

## स्वरेऽवधारणाच्च ॥ ५ ॥

स्वरेऽवधारणाच्च न सिध्यति । स्वरेऽवधारणं क्रियते नानन्तर्ये ।

## परमपि च्छन्दसि ॥ ६ ॥

परमपि च्छन्दसि पूर्वस्याङ्गवद्भवतीति वक्तव्यम् । 'आ ते' पितर्मरुतां सुम्नमेतु'† । 'प्रति' त्वा दुहितर्दिवः'‡ । 'वृणीष्व दुहितर्दिवः'* ।

## अव्ययप्रतिषेधश्च ॥ ७ ॥

अव्ययानां च प्रतिषेधो वक्तव्यः । उच्चैरधीयान । नीचैरधीयान ।

प्र०–रित्यर्थः । स्वरेऽवधारणाच्चेति । प्रसिद्धे हि लौकिके आनन्तर्ये स्वरे विधीयमाने पराङ्गवद्भावो विधीयते, न तु पराङ्गवद्भाव एव कर्तव्ये पराङ्गवद्भावेनैवानन्तर्यं संपाद्यते, स्वात्मनि क्रियाविरोधादतिदेशान्तराऽभावाच्च । यथोक्तं हरिणा—'ग्रहणाऽणग्रहणे ग्रहणाऽभाव' इत्यादि । असति तु स्वरग्रहणे विषयभेदाल्लक्षणं भिद्यत इति परस्य आनन्तर्यव्यपदेशे कर्तव्ये पराङ्गवद्भावे कृते पूर्वस्यापि पराङ्गवद्भावो लभ्यते । न च स्वरार्थमानन्तर्यं स्वरशब्देनेहोच्यते, मुख्यार्थसंभवे गौणार्थग्रहणाऽयोगात् । न च 'तस्मिन्निति निर्दिष्टे पूर्वस्य' 'तस्मादित्युत्तरस्ये'ति परिभाषाद्वयमादेशविधावेवोपतिष्ठते । 'गोतो णित्' 'रुदादिभ्यः सार्वधातुके' इत्यादावप्युपस्थानदर्शनात् ।

पितर्मरुतामिति । पितरित्यामन्त्रितनिघातेनानुदात्तम् । तस्मात्परं मरुतामित्येतदप्यनुदात्तमेव भवति । उच्चैरिति । उच्चैर्नीचैःशब्दौ स्वरादिष्वन्तोदात्तौ पठितौ ।

उ० विवक्षया अतिस्थूलमतिविषयत्वं दर्शयति । भाष्ये—'स्वरेऽवधारणाच्चे'ति वार्तिकखण्डमवतारयति—ननु चेति । प्रसिद्ध इति । सिद्ध इत्यर्थः । ग्रहणाऽणीति । 'अणुदि'दिति । ग्रहणकशास्त्रीयाऽण्ग्रहणे ग्रहणकशास्त्राऽभाव इत्यर्थः । यथा तत्र वाक्यार्थबोधात् प्राक्तस्य लक्ष्यसंस्कारकताया वक्तुमशक्यत्वेनाऽप्रवृत्तिस्तथात्र स्वरे ग्रहणात्स्वात्मन्यप्रवृत्तिरिति भावः । विषयभेदादिति । अत एव स्वप्रत्ययान्तात्त्वप्रत्ययसिद्धिः । गौणार्थेति । एतेन परम्परया स्वरस्य कर्तव्यत्वमस्त्येवेत्यपास्तम् । साक्षात्स्वरे कर्त्तव्ये शास्त्रस्य चरितार्थत्वात् । आदेशविधावेवेति । 'षष्ठी स्थाने' इत्यस्य प्रवृत्तेरित्यभिमानः । एवं च तन्निमित्तग्रहणेन तिङन्तव्यावृत्तिसिद्धेः, सुब्ग्रहणे समानाधिकरणे असिद्ध्या च सुब्ग्रहणं न कार्यमिति भाष्याशयः । उत्तरार्थं तु सुबित्यधिकारसूत्रं कर्तव्यमिति बोध्यम् ।

स्वरादिष्विति । एवं चानेनैव स्वरेणानयोरवस्थितिराभ्यां परस्याष्टमिकनिघातवच्चेति भावः । फिट्स्वरेण प्रत्ययस्वरे वान्तोदात्तत्वसिद्धेः स्वरादिष्वन्तोदात्तपाठः किमर्थं इति

१–चतुर्थपञ्चमवार्तिके क्वचिदेकीभूते पठ्येते ।

† ऋ० सं० २. ३३. १. ‡ ऋ० सं० ७. ८१. ३. * ऋ० सं० १०. १२७. ८.

**अनव्ययीभावस्य ॥ ८ ॥**

अनव्ययीभावस्येति वक्तव्यम् । इह मा भूत्—उपाग्न्यधीयान, प्रत्यग्न्यधीयान ॥ अथ किमर्थं स्वरेऽवधारणं क्रियते ?

**स्वरेऽवधारणं सुबलोपार्थम् ॥ ९ ॥**

स्वरेऽवधारणं क्रियते सुब्लोपो* मा भूदिति । परशुना वृश्चन् ।

**न वा सुबन्तैकान्तत्वात् ॥ १० ॥**

न वा कर्तव्यम् । किं कारणम् ? 'सुबन्तैकान्तत्वात्' । सुबन्तैकान्तः पराङ्गवद्भावो भवति ।

**प्रातिपदिकैकान्तस्तु सुब्लोपे ॥ ११ ॥**

प्रातिपदिकैकान्तस्तु भवति सुब्लोपे कृते† ॥ प्रत्ययलक्षणेन‡ सुबन्तै-

प्र०—अधिकरणशक्तिप्राधान्याच्च तन्निमित्तसद्भावः ॥ अनव्ययीभावस्येति । प्रतिषेधप्रतिषेधाद्विधिर्भवति । एतच्च 'लुङ्मुखस्वरोपचाराः प्रयोजन'मित्येतदनपेक्ष्योक्तं भाष्यकारेण । अन्यथा कार्यान्तरेऽव्ययत्वाऽभावादवक्तव्यमेतत्स्यात् ।

परशुना वृश्चन्निति । वृश्चन्निति प्रातिपदिकम् । न चाप्रत्यय इति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञानिषेधो 'न ङिसंबुध्यो'रिति नलोपप्रतिषेधाज्ज्ञापकात् । तत्राऽसति स्वरग्रहणे पराङ्गवद्भावेन प्रातिपदिकानुप्रवेशात् 'सुपो धातुप्रातिपदिकयो'रिति सुपो लुक् प्रसज्येत । स्वरग्रहणे तु सति सुब्लुकि कर्तव्ये पराङ्गवद्भावाऽभावः । सुबन्तैकान्त इति । पराङ्गवद्भावविषयत्वात्पराङ्गवद्भाव उच्यते । 'पराङ्गव'दित्यत्र आमन्त्रितं संनिधानात्परशब्देन गृह्यते । तच्च सुबन्तमेवेति सुबन्तकार्य एव पराङ्गवद्भावोऽन्तरङ्गत्वान्न तु प्रातिपदिककार्य इत्यर्थः ।

प्रातिपदिकैकान्त इति । अस्याभिप्रायः—आमन्त्रिते परतो यत्सुबन्तं तत्परस्याङ्गवद्भवति, परं चात्र सुब्लोपे कृते प्रातिपदिकमेवेति तदङ्गत्वात्सुब्लोपः प्राप्नोत्येव । प्रत्ययलक्षणेनेति । प्रत्ययो निमित्तं लक्षणं यस्यामन्त्रितव्यपदेशस्य तेन सुबन्तैकान्त-

उ०—चिन्त्यम् ॥ पराङ्गवद्भावविषयत्वादिति । अन्यथा 'सुबन्तैकान्त' इत्यनेनामन्वयापत्तिरिति भावः । पराङ्गवद्भावो यस्य स पूर्वशब्दस्तेनोच्यत इति कश्चित् । अन्तरङ्गत्वादिति । सूत्रस्थपरशब्देन वाच्यवृत्त्योपस्थानादित्यर्थः ।

प्रातिपदिकमेवेति । एवोऽप्यर्थे । परस्मिन्प्रातिपदिकत्वस्यापि सत्त्वेन तदवयवत्वस्याप्यापत्तिरिति भावः । प्रत्ययलक्षणेन सुबन्तत्वे स्वतः प्रातिपदिकत्वेन तदवयवत्वमपि स्यादत आह—प्रत्ययो निमित्तमिति । तेन सुबन्तैकान्तत्वमिति । अत्र प्रातिपदिकत्वस्य वस्तुगत्या

* सुपो धातुप्रातिपदिकयोः २. ४. ७१.

† हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ६.१.६८. ‡ प्रत्ययलोपे प्रत्ययलक्षणम् १.१.६२.

कान्तता स्यात्, तस्मात्स्वरेऽवधारणं न कर्तव्यं सुबलोपार्थम्। प्रातिपदिकस्थायाः सुपो लुगुच्यते। तस्मात्स्वरग्रहणेन नार्थः।

इदं तर्हि प्रयोजनम्—षत्वणत्वे* मा भूतामिति। कूपे सिञ्चन्। चर्म नमन्निति।

एतदपि नास्ति प्रयोजनम्। इह तावत्कूपे सिञ्चन्निति स्वाश्रयं पदादित्वं

प्र०—त्वमित्यर्थः। विशेषणत्वेनाप्युपात्तमामन्त्रितं प्रत्यासत्त्या परशब्देन संबध्यत इति सुबन्ताङ्गवद्भावो विधीयते न तु प्रातिपदिकाङ्गवद्भाव इत्यर्थः। प्रातिपदिकस्थाया इति। भाष्यकारवचनप्रामाण्यात्सुप्शब्दस्य स्त्रीलिङ्गत्वम्॥ कूपे सिञ्चन्निति। पराङ्गवद्भावे सत्येकपद्यात्सकारस्य पदादित्वाऽभावात्षत्वप्रसङ्गः। चर्म नमन्निति। सति पराङ्गवद्भावे समानपदत्वाण्णत्वं स्यात्।

स्वाश्रयमिति। विरोधाभावादतिदेशेन स्वाश्रयं पदादित्वं न बाध्यते। यच्चेहामन्त्रितस्य कार्यं शब्देन वोच्यते तत्पूर्वस्य पराङ्गवद्भावात्तत्सहितस्य भवतु, सकारस्य यत्स्वाश्रयं पदादित्वं तत्केन व्याहन्यते। न चात्रातिदेशिकं कार्यमस्तीति स्वाश्रयं

उ०—सत्त्वेऽपि सूत्रेऽनुद्देश्यत्वान्न तदतिदेशेन तदवयवत्वव्यवहार इति भावः। विशेषणत्वेनापीति। पराङ्गवद्भावस्येत्यर्थः। संबध्यते इति। वाच्यतया गृह्यत इत्यर्थः। न च 'सुट्तिथो'रित्यादौ तथयोर्विहितस्य सुटः प्रत्ययावयवत्ववत्प्रकृतेऽपि प्रातिपदिकावयवत्वमिति वाच्यम्, अवयवावयवाङ्गुल्यादौ शरीरावयवत्वस्य लोकसिद्धत्वादुपपत्तेः। प्रकृते तु प्रातिपदिकावयवसुबन्तावयवो न तदवयवो भवति। न हि हस्तावयवकशरीरावयवोऽङ्घ्रिर्हस्तावयव इति भावः। भाष्यकारेति। 'सुप' इत्यत्र विभक्तिर्यदा विशेष्यं तदा न्यायत एव स्त्रीत्वमिति कश्चित्। तन्न, औङः श्यामित्यादौ नित्यस्त्रीत्वेन नदीत्वाय स्वतः स्त्रीलिङ्गत्वस्यैव न्याय्यत्वात्। समानपदत्वादिति। अतिदेशेन परावयवतया विशिष्टस्याऽखण्डत्वे बोधिते स्वाश्रयस्य सखण्डत्वस्याऽदिश्यमानधर्मविरुद्धतया तत्प्रयुक्तणत्वप्रतिबन्धाऽभाव इति भावः।

नन्वस्मदुक्तरीत्या विरोधोऽस्त्येवेत्यत आह—यच्चेहेति। पूर्वस्य पराङ्गवद्भावोक्तेस्तेन पूर्वस्मिन् परप्रयुक्तकार्यप्रवृत्त्या पूर्वनिष्ठस्वाश्रयनिवृत्तावपि परस्मिन् पूर्वनिष्ठकार्यप्रवृत्तौ परनिष्ठस्वाश्रयनिवृत्तौ च मानाऽभावादिति भावः। किं चामन्त्रिते परे पूर्वं प्रत्यासत्त्या आमन्त्रितरूपपराङ्गवत्कार्यभागिति उक्ते आमन्त्रितत्ववैकल्यप्रयुक्ताऽप्राप्तकार्यातिदेश एव लभ्यते न षत्वणत्वयोस्तद्ध्वनयन्नाह—शब्देनेति। आमन्त्रितशब्देनेत्यर्थः। यथा नमत इति। अन्तर्भावितण्यर्थोऽत्र नमिः। 'न दुहे'ति कर्मवत्त्वाश्रययकि प्रतिषिद्धे कर्त्राश्रयः शप्। तत्र निषेधादतिदेशाश्रया प्रवृत्तिः। इह तु अतिदेशस्याऽप्रवृत्तिरेवेति यथाकथंचिद् दृष्टान्ततेति

* आदेशप्रत्यययोः ८. ३. ५९; अट्कुप्वाङ्नुम्व्यवायेऽपि ८. ४. २.

भविष्यति* । चर्म नमन्निति 'पूर्वपदात्संज्ञायामगः' [ ८. ४. ३ ] इत्येतस्मान्नियमान्न भविष्यति । ननु च समास [1]एतद्भवति पूर्वपदमुत्तरपदमिति । 'ने'-त्याह । अविशेषेण[2] तद्भवति-पूर्वं पदं पूर्वपदम्, उत्तरं पदमुत्तरपदमिति ॥२॥

## प्राक्कडारात्समासः ॥ २ । १ । ३ ॥

प्राग्वचनं किमर्थम् ?

**प्राग्वचनं समाससंज्ञाऽनिवृत्त्यर्थम् ॥ १ ॥**

---

प्र०-भवत्येव । यथा 'नमते दण्डः स्वयमेवे'त्यत्र शप् । पूर्वपदात्संज्ञायामिति । पराङ्गवद्भावात्सत्यपि निमित्तनिमित्तिनोः समानपदस्थत्वे 'पूर्वपदात्संज्ञाया'मिति नियमादत्रासंज्ञायां णत्वं न भविष्यतीत्यर्थः । ननु चेति । पूर्वपदशब्दस्य समासावयव एव रूढत्वादिति भावः । अविशेषेणेति । व्याप्तिन्यायाश्रयादत्र यौगिकः पूर्वपदशब्दो गृह्यत इत्यर्थः । एवं स्वरग्रहणे प्रत्याख्याते समानाधिकरणस्योपसंख्यानं न कर्तव्यम् । परस्य पराङ्गवद्भावे कृतेऽपि विषयभेदाल्लक्षणस्याऽऽवर्तनात् पूर्वस्य पराङ्गवद्भावस्य सिद्धत्वात् ॥२॥

प्राक्कडारात् । प्राग्वचनमिति । अत्रावधित्वद्योतनाक्षेपद्वारेणावधेरप्याक्षेपः । समास इत्येव स्वरितत्वादधिकारोऽस्तु, यथा प्रत्यय इति, अनवकाशत्वाच्च समाससंज्ञायाः संज्ञान्तरैः समावेशो भविष्यतीति प्रश्नः । संज्ञाऽनिवृत्त्यर्थमिति । समाससंज्ञायाः संज्ञान्तरविषये अनिवृत्तिर्यथा स्यादित्यर्थः । अन्यथा एकसंज्ञाधिकारात्

---

उ०-बोध्यम् । यद्यप्यनेन णत्वमपि परिहृतं तथापि प्रकारान्तरेणापि समाधातुमेकदेश्याह भाष्ये—चर्म नमन्निति । तद् ध्वनयन्नाह—सत्यपि निमित्तेत्यादि । नियमादत्रेति । यद्यपि विद्ध्यर्थत्वमेवाष्टमे स्थापयिष्यति तथापि योगविभागेनात्र नियमोपपत्तिरित्यभिमानः । समासवयव एवेति । एवं च नियमेन वाक्यव्यावृत्तिः कर्तुं मशक्येति भावः । भाष्ये—अविशेषेणेति एकदेश्युक्तिः, अष्टमे रूढयोरेवानयोर्ग्रहणस्य सिद्धान्तयिष्यमाणत्वात्, अखण्डपदस्यैव तत्र समानपदेन ग्रहणाच्च । उक्तयुक्त्यैव तु णत्ववारणं बोध्यम् । एवं च स्वरग्रहणमपि व्यर्थमिति बोध्यम् ॥२॥

प्राक्कडा । अवधित्वद्योतनेति । अत्र करणे ल्युट् कर्तुः करणत्वविवक्षया बोध्यः ।

---

* सात्पदाद्योः ८. ३. १११. १–'एवैतद्' पा० । २–'णैवैतद्' पा० ।
३–'समास' इति क्वचिन्न ।

प्राग्वचनं क्रियते समाससंज्ञाया अनिवृत्तिर्यथा स्यात् । अक्रियमाणे हि प्राग्वचनेऽनवकाशा अव्ययीभावादयः संज्ञाः समाससंज्ञां बाधेरन्, ता मा बाधिषतेति प्राग्वचनं क्रियते ।

अथ क्रियमाणेऽपि प्राग्वचने यावतानवकाशा अव्ययीभावादयः संज्ञाः कस्मादेव न बाधन्ते ? क्रियमाणे हि प्राग्वचने सत्यां समाससंज्ञायामेता अवयवसंज्ञा आरभ्यन्ते, तत्र वचनात्समावेशो भविष्यति ।

समाससंज्ञाप्यनवकाशा सा वचनाद्भविष्यति । सावकाशा समाससंज्ञा । कोऽवकाशः ? विस्पष्टादीन्यवकाशः । विस्पष्टं पटुर्विस्पष्टपटुः [व्यक्तं पटुर्व्यक्त-

प्र०—पर्यायः स्यात् । सत्यां समाससंज्ञायामिति । स्वरितत्वादेवाऽधिकारे लब्धे प्राक्कडारादित्युपादानसामर्थ्यात्प्राग्ग्रहणमावर्तते । तेन प्राक् समाससंज्ञका भवन्ति, समासाः सन्तोऽव्ययीभावादिसंज्ञका इति समावेशः सिध्यति । अवयवसंज्ञा इति । समाससमूहापेक्षया कस्यचित्समासस्य काचित्संज्ञेत्येवमुक्तम् ।

समाससंज्ञापीति । ततश्चान्तरेणापि यत्नं समावेशः सिध्यति । विस्पष्टपटुरिति । विस्पष्टं पटुरिति विग्रहः । विस्पष्टादयः प्रवृत्तिनिमित्तस्य पाटवादेर्विशेषणानि न तु द्रव्यस्येति विस्पष्टमिति नपुंसकत्वम् । अत एव मुख्यं सामानाधिकरण्यं नास्तीति तत्पुरुषाभावः । यथा शेष इत्येतल्लक्षणमधिकारश्च तथा 'सह सुपे'त्यपीति

उ०—द्योतकाक्षेपेत्यर्थः ॥ पर्यायः स्यादिति । अधिकारलब्धसमाससंज्ञाया अनवकाशत्वादित्याशयः । अनेन अग्रिमग्रन्थ एकदेशिनोरुक्तिरिति सूचितम् । भाष्ये—सत्यां समाससंज्ञायामिति । प्राक्पदोपादानेस्याधिकारतायां एव तत्सामर्थ्येन वक्तव्यतया तत्साहित्येनाऽऽसां विधानाद्वचनात्समावेशः । नन्वेवमपि पर्यायः प्राप्नोति कथं समावेश इति चेत्तत्राह—स्वरितत्वादेवेति । प्रत्यय इत्यादिवत् । अन्यथा 'समासः सह सुपे'त्येकमेव पठेदिति भावः ।

अधुनाधिकारत्वाभावेऽपि समावेशं शङ्कते भाष्ये—समाससंज्ञापीति । प्राग्ग्रहणाऽभावे 'समासः सह सुपे'त्येव सर्वत्र समाससंज्ञाविधिः । 'सह सुपे'त्यंशस्य च स्वरितत्वप्रतिज्ञानादुत्तरत्र संबन्धोऽपि । अव्ययीभावादिसंज्ञाविनिर्मुक्तसमासस्य चाभाव इत्यभिमानः । अत एव 'विस्पष्टपट्वादयोऽवकाशा'इत्यग्रिमभाष्यं सङ्गच्छते । स ह्यव्ययीभावादिसंज्ञाविनिर्मुक्तो विषय इति भावः । मुख्यं सामानाधिकरण्यं नास्तीति । 'विशेषणं विशेष्येणे'त्यत्रोभयोपादानसामर्थ्येन शब्दजन्यबोधविशेष्ययोर्यत्र विशेषणविशेष्यभावस्तत्रैव तत्प्रवृत्तेरिति

१—क्वचिन्न ।

किमेतस्य ज्ञापने प्रयोजनम् ? राज्ञः सखा राजसखः । राजा सखास्येति बहुव्रीहिर्न भवति ।

नैतज्ज्ञापकसाध्यम् 'अपवादैरुत्सर्गा बाध्यन्त' इति । बाधकेनानेन भवितव्यं सामान्यविहितस्य विशेषविहितेन । अथ न सामान्यविहितः, यदुच्यते 'बहुव्रीहिकृतत्वा'दित्येतदयुक्तम् ।

प्र०—च द्व्यजना'दित्याद्युदात्तत्वात्कष्टशब्दस्य । न तु जातिलक्षणबहुव्रीहिनिबन्धनमन्तोदात्तत्वम् । अव्यविकन्यायश्चानेन ज्ञापकेन स्मारितः । राज्ञः सखेति । सख्यस्योभयाधिष्ठानत्वाद्राजा सखास्येत्ययमर्थोऽन्तर्भूत इति बहुव्रीहिः स्यात्, अस्मात्तु ज्ञापकान्न भवति । अथ कश्चिदुत्सर्गापवादन्यायेन बहुव्रीह्यभावं मन्यमान आह—नैतदस्ति । अर्थाभेदे बहुव्रीहौ प्राप्ते तत्पुरुषस्यारम्भात् । ज्ञापकवाद्यपवादवादिनोश्चात्राहोपुरुषिकैव, तत्पुरुषारम्भे बहुव्रीहिबाधलक्षणं तु फलं न भिद्यते । विशेषविहितेनेति । श्रिताद्युपादानेन विधानादस्य विशेषविहितत्वम् । अथ नेति । 'कष्टं श्रित' इति स्वपदार्थे तत्पुरुषविधानात्तत्र च बहुव्रीहेरप्राप्तत्वान्नास्ति सामान्यविहितत्वम् । अन्तर्भूतश्चार्थो न शब्दसंस्कारे निमित्तं, किन्तु शब्दवाच्य एव । यदुच्यत इति । अर्थभेदाच्छ्रितादिग्रहणं कृतमिति भावः ।

उ०—विकेति । अवेर्मांसमिति विग्रह एव, आविकादेव च प्रत्ययोत्पत्तिः—आविकमिति, तथा 'कष्टं श्रितमनेने'ति वाक्यमेव, 'कष्टं श्रित' इति विग्रहे एव समास इत्यर्थः । ननु 'राज्ञः सखे'त्यस्य राजनिरूपितसखित्वत्वानर्थः, बहुव्रीहौ राजाभिन्नसखिसम्बन्धीति बोधेऽन्यनिरूपितं सखित्वं राजनि प्रतीयते इति समानार्थकत्वाभावात्कथं पूर्वोक्तज्ञापकेनात्र समासाभाव इत्यत आह—सख्यस्योभयेति ।

कश्चिदुत्सर्गापवादभावं मन्यमानो ज्ञापकं दूषयति—नैतज्ज्ञापकेति । एतत्—उक्तं वस्तु, ज्ञापकसाध्यं न—ज्ञापकत्वस्यैवासम्भवादित्यर्थः । एवं च श्रितादिविषयतत्पुरुषेणानवकाशतया बहुव्रीहिबाधे कष्टश्रितादौ पूर्वपदाद्युदात्तत्वमेव भवति । एवं च राजा सखास्येति विग्रहे बहुव्रीहिः स्यादेव, 'षष्ठी'ति शास्त्रस्य राजपुरुषादौ सावकाशत्वेन बहुव्रीहिबाधकत्वाभावादिति भावः । किं च उभयोश्चरितार्थयोः परत्वाद्बहुव्रीहिरेव स्यात्, षष्ठीतत्पुरुषो न स्यादेव । टज्विधानं तु 'सुन्दरसख' इत्यादौ कर्मधारये चरितार्थमित्याशयः । एवं च 'ज्ञापकवाद्यपवादवादिनोरत्राहोपुरुषिकैव, तत्पुरुषारम्भे बहुव्रीहिबाधलक्षणं तु फलं न भिद्यते' इति कैयटाशयश्चिन्त्यः । स्वपदार्थे तत्पुरुषेति । स्वपदार्थप्रधानविग्रह इत्यर्थः । बहुव्रीहिस्तु नैवंविधे विग्रहे, किन्तु कष्टं श्रितमनेनेति विग्रहे । एवं च विषयभेदान्न सामान्यविहितत्वं बहुव्रीहेरिति भावः ॥ ननु कष्टं श्रित इत्यत्र बहुव्रीहिविग्रहार्थोऽप्यन्तर्भूत इत्यत आह—अन्तर्भूतश्चार्थ इति । अर्थभेदादिति । एवं च सूत्रसार्थक्यात्त्वदीयज्ञापकत्वमप्यसङ्गतमिति भावः । लोके विग्रहेति । समासप्रयोगे कर्त्तव्ये लोके विग्रहवाक्यस्याप्रयोगात्ततत्पुरुषत्वबहुव्रीहित्वा-

अस्ति खल्वपि विशेषो बहुव्रीहेस्तत्पुरुषस्य च। किं शब्दकृतोऽथार्थकृतः? शब्दकृतश्चार्थकृतश्च। शब्दकृतस्तावत्—बहुव्रीहौ सति कपा भवितव्यं* तत्पुरुषे सति न भवितव्यम्। अर्थकृतः—तत्पुरुषे सति रुहादीनां क्तः कर्तरि भवति धात्वर्थस्यानपवर्गे—आरूढो वृक्षं देवदत्त इति। बहुव्रीहौ व्यपवृक्ते कर्मणि भवति—आरूढो वृक्षो देवदत्तेनेति।

अन्यथाजातीयकाः खल्वपि प्रत्यक्षेणार्थसंप्रत्ययोऽन्यथाजातीयकः संबन्धात्। राज्ञः सखा राजसखः। संबन्धादेतद्गन्तव्यं नूनं राजाप्यस्य सखेति।

प्र०— ननु 'कष्टश्रित' इति समासप्रयोगे लोके विग्रहवाक्याप्रयोगात्तात्पर्याभेदादस्ति बहुव्रीहिकृतत्वमित्याशङ्क्याह—अस्ति खल्वपीति। पूर्वोक्तेन न्यायेनार्थस्वरूपस्वरेषु विशेषमपश्यन् पृच्छति—किमिति। बहुव्रीहाविति। 'शेषाद्विभाषे'त्यनेन कष्टश्रितक इति। तत्पुरुष इति। कष्टश्रित इत्यादौ। रुहादीनामिति। आदिशब्दः प्रकारे। तेन गत्यर्थादयोऽपि गृह्यन्ते। धात्वर्थस्यानपवर्ग इति। सर्वस्य धात्वर्थस्यानिष्ठितत्वेऽपि तदेकदेशभूतत्वाश्रयेणारोहणक्रियाविशिष्टे एव वृक्षारूढ इति शब्दशक्तिस्वाभाव्यादिदमभिधीयते। यथा बद्धो बन्धनमनुभवन्नेवोच्यते, तथा कष्टश्रित इति कष्टमनुभवन्नेवोच्यते। व्यपवृक्त इति। सर्वात्मना धात्वर्थे निष्ठित इत्यर्थः। यथा 'भुक्त ओदन' इति भुजिक्रियायाः समाप्तौ प्रयुज्यते।

भेदान्तरमप्याह—अन्यथेति। प्रत्यक्षेणेति। शब्दादव्यवधानेनेत्यर्थः। अन्यव-

उ०—नवगमादिति भावः। अर्थद्वयबोधेऽप्याह—तात्पर्येत्यादि। एवं च ज्ञापकत्ववादिनोऽपवादत्ववादिनश्च खण्डनायास्ति खल्वपीत्यादि सिद्धान्तिनो ग्रन्थ इति भावः।

भाष्ये—बहुव्रीहौ सतीति। तस्मिन्नेव सतीत्यर्थः। तत्पुरुषे सतीति। तस्मिन्नपि सतीत्यर्थः। न भवितव्यमिति। पूर्वपदप्रकृतिस्वरसन्नियोगेन न भवितव्यमित्यर्थः। तत्पुरुषारम्भे 'वा जातादिष्वि'त्यस्याभावाद् ग्रामगत इत्यादावन्तोदात्तत्वमेवेति 'बहुव्रीहा'विति पूर्वपदप्रकृतिस्वरसंनियोगेन न कदापि कप्। तदनारम्भे तु 'वा जातादिष्वि'त्यारम्भात्पक्षे बहुव्रीहावपि पूर्वपदप्रतिस्वरसत्त्वात्तत्संनियोगेनापि कबापत्तिरिति भावः। कैयटोक्तोदाहरणे समासद्वयेऽपि पूर्वपदप्रतिस्वरसत्त्वात्कपो वैकल्पिकत्वाच्च न विशेष इति चिन्त्यम्।

भाष्ये—अर्थकृत इति। अर्थभेदे सत्येकेनापरस्य न गतार्थतेति भावः। धात्वर्थस्यानपवर्गे इति। सर्वधात्वर्थासमाप्तौ धात्वर्थाविष्ट एव कर्त्तरि एकदेशस्य भूतत्वाश्रयेण क्तो भवति तत्पुरुषे। बहुव्रीहौ तु सर्वधात्वर्थसमाप्तौ धात्वर्थानाविष्टे कर्मण्येव क्त इति विशेष इत्यर्थः। अन्यथाजातीय इति। शब्दत्वाक्रान्त इत्यर्थः। अन्यथाजातीयकः सम्बन्धा-

* शेषाद्विभाषा ५. ४. १५४.

उभयं खल्वपीष्यते—स्वस्ति सोमसखा पुनरेहि, गवांसख इति ॥२४॥

## खट्वा क्षेपे ॥ २ । १ । २६ ॥

किमुदाहरणम् ? खट्वारूढो जाल्मः[1] ॥ क्षेप इत्युच्यते कः क्षेपो नाम ? [2]अधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वारोढव्या । य इदानीमतोऽन्यथा करोति स उच्यते खट्वारूढोऽयं जाल्मः । नातिव्रतवानिति ॥२६॥

प्र०—धानोपलक्षणत्वात्प्रत्ययक्षस्य ॥ ज्ञापकफलमपि निराकर्तुमाह—उभयमिति । सोमसखेति । बहुव्रीहित्वात्समासान्ताभावः । गवांसख इति । तत्पुरुषत्वात्समासान्तस्तत्पुरुषे कृति बहुलमिति, 'षष्ठ्या आक्रोश' इति वा षष्ठ्या अलुक् ॥२४॥

खट्वा । 'खट्वारूढ' इत्यत्र क्षेपहेतोर्धर्मस्यानिर्देशात् क्रियाकारकसम्बन्धमात्रावगमात्पृच्छति—किमुदाहरणमिति । समासस्य क्षेपोऽर्थः, स चात्रास्तीत्याह—खट्वारूढ इति । अधीत्येति । ब्रह्मचारिणा वेदाध्ययने निष्पादिते गृहस्थाश्रमः कर्तव्यः । अन्यथेति । असमाप्तेऽध्ययने भूमिशयनार्हो यः खट्वारोहणं करोतीत्यर्थः । खट्वारोहणं चाविनयोपलक्षणार्थमित्याह—नातिव्रतवानिति ॥२६॥

उ०—दिति । आनुमानिक इत्यर्थः । नन्वेवं राज्ञः सखास्येति विग्रहे बहुव्रीहिः स्यादत आह—उभयं खल्वपीति ॥२४॥

खट्वा । अधीत्य स्नात्वेति । अधीत्य स्नात्वा चेत्यर्थः ॥२६॥

---

१—'जाल्मोऽसमीक्ष्यकारी स्या'दित्यमरः । खट्वारोहणं चेह विमार्गप्रस्थानस्योपलक्षणम् । रूढश्चायं शब्दः । तेन खट्वामारोहतु मा वा, निषिद्धानुष्ठानपरः सर्वोऽपि खट्वारूढ उच्यते । अत एव विभाषाधिकारेऽपि नित्यसमासोऽयम् । न हि वाक्येन निन्दा गम्यते ।

२—"वेदं समाप्य स्नायात् ॥१॥ ब्रह्मचर्यं वाऽष्टाचत्वारिंशकम् ॥२॥ द्वादशकेऽप्येके ॥३॥ गुरुणाऽनुज्ञातः ॥४॥" (पार० गृ० का० २, कं० ६)

"एवं हि समामनन्ति 'वेदमधीत्य स्नाया'दिति" (मीमांसा० शाबर० १।१।१)

"गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया । वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥" (या० स्मृ० १।५१)

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥"

"गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।" इति मनुः (अ० ३ श्लो० २; ४)

# अत्यन्तसंयोगे च ॥ २ । १ । २९ ॥

## अत्यन्तसंयोगे समासस्याविशेषवचनात् क्तेन समासवचनार्थक्यम् १

अत्यन्तसंयोगे समासस्याविशेषवचनात् क्तान्तेन चाक्तान्तेन च 'कालाः क्तान्तेने'त्येतत्समासवचनमनर्थकम्[†] । 'अत्यन्तसंयोग' इत्येव सिद्धम् ।

## अनत्यन्तसंयोगार्थं तु ॥ २ ॥

अनत्यन्तसंयोगार्थं तर्हीदं वक्तव्यम् । षण्मुहूर्ताश्चराचराः[1] । ते [2]कदाचिदहर्गच्छन्ति कदाचिद्रात्रिम् । तदुच्यते—अहर्गताः रात्रिगता इति ॥ नैतदस्ति । गतग्रहणादप्येतत्सिद्धम्[‡] ॥ इदं तर्हि—अहरतिसृताः रात्र्यतिसृताः । मासप्रमितश्चन्द्रमाः ॥२९॥

प्र०- अत्यन्त । 'काला' इति पृथग्योगेन क्तान्तेन समासविधानं न कर्तव्यम् । 'काला अत्यन्तसंयोगे' इत्येक एव योगः कर्तव्यः । तत्र च क्तेनेत्यस्य निवृत्तत्वात्सर्वत्र समासः सिध्यतीति मत्वाह—अत्यन्तसंयोग इति । चराचर इति । चरन्तीत्यर्थः । 'चरिचलिपतिवदीनामाक्चाभ्यासस्ये'ति द्विर्वचनमागागमश्च । कदाचिदहरिति । उत्तरायणे । कदाचिद्रात्रिमिति । दक्षिणायने । ततश्च षड्भिर्मुहूर्तैरह्नो रात्रेश्च नास्त्यत्यन्तसंयोगः । क्रमेण च गच्छन्तः संकलय्य व्यपदिश्यन्ते । अथवैकदेशगमनाद् गच्छन्तीत्युच्यन्ते । गतग्रहणादिति । द्वितीयाश्रितेत्यत्र निर्दिष्टात् । मासप्रमित इति । आदिकर्मणि कर्तरि क्तः । मासं परिच्छेत्तुमारब्धवानित्यर्थः । प्रतिपच्चन्द्रेण च मासस्यात्यन्तसंयोगाभावः ॥२९॥

उ०- अत्यन्तसं । ननु 'काला' इत्यस्याभावेऽत्र तल्लाभो न स्यादत आह—काला इति । ननु क्तान्तेन समासार्थं तत्, अक्तान्तार्थं चेदमपीत्यत आह—तत्र चेति । अनत्यन्तसंयोगे क्तान्तार्थं 'काला' इति, अत्यन्तसंयोगेऽक्तान्तार्थमिदमित्युत्तरम् । षण्मुहूर्ता इति । तावत्पर्यन्तं हि दिनरात्रवृद्धिह्रासौ देशविशेषे ॥२९॥

† कालाः २. १. २८. १–'मुहूर्तो मुहुर्ऋतुः, मुहुर्मूढ इव कालो यावदभीक्ष्णं चेति ।' (निरु० नैघ० अ० २ पा० ७)

२–त्रिंशन्मुहूर्तात्मकेऽहोरात्रे षण्मुहूर्ताश्चराचरा भवन्ति । ते उत्तरायणेऽहर्गच्छन्ति, दक्षिणायने च रात्रिं क्रमशः । तथा चाह कौटिल्यः—"पञ्चदश मुहूर्तो दिवसो रात्रिश्च चैत्रे मास्याश्वयुजे च मासि भवतः । ततः परं त्रिभिर्मुहूर्तैरन्यतरः षण्मासं वर्धते ह्रसते चेति ।" (अर्थशास्त्रे अधि० २, प्र० ३६, अ० २०)

"विंशतिकलो मुहूर्तः कलादशभागश्च, त्रिंशन्मुहूर्तमहोरात्रम्, अयने द्वे भवतो दक्षिणमुत्तरं च । तयोर्दक्षिणं वर्षाशरद्धेमन्ताः, उत्तरं च शिशिरवसन्तग्रीष्माः ।" (सुश्रुते सूत्रस्थाने अ० ६) ‡ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २. १. २४.

# तृतीया तत्कृतार्थेन गुणवचनेन ॥ २ । १ । ३० ॥

तत्कृतार्थेनेति किमर्थम् ? दध्ना पटुः । घृतेन पटुः । नैतदस्ति । असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । न हि दध्नः पटुना सामर्थ्यम् । केन तर्हि ? भुजिना । दध्ना भुङ्क्ते पटुरिति । इहापि तर्हि न प्राप्नोति—शङ्कुलाखण्डः किरिकाण इति । अत्रापि न शङ्कुलायाः खण्डेन सामर्थ्यम् । केन तर्हि ? करोतिना । शङ्कुलया कृतः खण्ड इति । वचनाद्भविष्यति । इहापि तर्हि वचनात्प्राप्नोति—दध्ना पटुः, घृतेन पटुरिति । तस्मात्तत्कृतार्थग्रहणं कर्तव्यम् ।

प्र०— तृतीया । तत्कृतार्थेनेति किमर्थमिति । अयं भावः—'दध्ना पटु'रित्यत्र यदि दधिकृतं पाटवं विवक्षितं तदा भवितव्यं समासेन, विशिष्टद्रव्यसंस्कृतं दध्यपि पाटवं करोतीति तत्कृतत्वसंभवात् । अथ भोजनाद्यपेक्षो दध्नः करणभावो—दध्ना भुङ्क्ते पटुरिति तदा सामर्थ्याभावात्समासो न भविष्यति । दध्ना पटुरिति । अस्याप्ययं भावः—सर्वत्र क्रियाद्वारकेण संबन्धेन भवितव्यम् । ततश्चेहापि क्रियाद्वारकसंबन्धसंभवात्समासः स्यात् । असामर्थ्यादिति । यत्र साक्षात्सामर्थ्यं नास्ति 'दध्योदन' इत्यादौ तत्र वचनसामर्थ्यात्प्रतीयमानक्रियाद्वारकसंबन्धाश्रयेण भवति समासः । इह तु 'शङ्कुलया खण्ड' इत्यादौ साक्षात्सामर्थ्यसंभवे वचनस्य सावकाशत्वाद् दध्ना पटुरित्यत्र न भविष्यति ।

इहापीति । खण्डशब्दस्य गुणोपसर्जनद्रव्यवाचित्वात्साक्षात्संबन्धाभावाच्छङ्कुलयावश्यं क्रियापेक्षितव्या, तामन्तरेण कारकत्वायोगात् । वचनादिति । करोतिक्रियाकृतसंबन्धाश्रयेणेत्यर्थः । इहापीति । परस्परसंबन्धाय चेत्सर्वत्र क्रिया व्यतिरिक्ताऽपेक्ष्यते, तदात्रापि तदपेक्षसामर्थ्यसद्भावात्समासप्रसङ्ग इत्यर्थः । परस्तात्तु

उ०— तृतीया । केवलदध्नः पाटवजनकत्वं वैद्यकविरुद्धमत आह— विशिष्टद्रव्येति । शुण्ठिलवणादिरूपेत्यर्थः । सर्वत्र क्रियेति । उत्तरसूत्रे सदृशनिपुणादिग्रहणेन साक्षात्परस्परान्वये एतदप्रवृत्तिरिति भावः । क्रियाद्वारकसम्बन्धेति । भुजिक्रियाद्वारकेत्यर्थः । यत्रेति । 'अन्नेन व्यञ्जन'मित्यादिविषये । साक्षात्सामर्थ्येति । 'खडि भेदने' इत्यस्माद् घञि निष्पन्नखण्डशब्दार्थक्रियायां करणत्वेनान्वयः । सदृशादिग्रहणं च प्रपञ्चार्थमित्यभिमानः । गुणोपसर्जनद्रव्येति । 'खण्ड'शब्दो हि तत्र रूढो न तु साध्यावस्थापन्नकारकान्वययोग्यक्रियोपसर्जनद्रव्यवाची, तादृशखण्डशब्देन तु 'कर्तृकरणे कृते'त्येव समासः सिद्ध इति भावः । भाष्ये—किरिकाण इति । किरिः—शूकरो रोगविशेषो वा । व्यतिरिक्तेति । पूर्वपदोत्तरपदार्थव्यतिरिक्तेत्यर्थः । तदपेक्षेति । भुजिद्वारकेत्यर्थः । कारकतृतीयातिरिक्ततृतीयान्ते तु नेदं प्रवर्तते, उत्तरसूत्रे निपुणादिग्रहणाज्ज्ञापकादिति भावः । भाष्ये—तत्कृतार्थग्रहणं कर्तव्यमिति । 'कृ'धात्वर्थद्वारके सामर्थ्ये एव यथा स्यान्नतु भुज्यादिद्वारके इत्येतदर्थमित्यर्थः ।

गुणवचनेनेति किमर्थम् ? गोभिर्वपावान् । धान्येन धनवान् ।

किं पुनरिहोदाहरणम् ? शङ्कुलाखण्डो देवदत्त इति । कथं पुनर्गुणवचनेन समास उच्यमानो द्रव्यवचनेन स्यात् ? इह 'तृतीया तत्कृतार्थेन गुणेने'तीयता सिद्धम् । सोऽयमेवं सिद्धे सति यद्वचनग्रहणं करोति तस्यैतत्प्रयोजनमेवं यथा विज्ञायेत 'गुणमुक्तवता गुणवचने'नेति ।

कथं पुनरयं गुणवचनः सन् द्रव्यवचनः संपद्यते । आरभ्यते तत्र मतुब्लोपो 'गुणवचनेभ्यो मतुपो लु'गिति* । तद्यथा,—शुक्लगुणः शुक्लः, कृष्ण-

प्र०-तत्कृतार्थग्रहणं निराकरिष्यते ॥ गुणवचनेनेति किमर्थमिति । अयं भावः—जातेर्नित्यत्वात्तत्कृतत्वाभावाज्जातिवचनेन समासो न भविष्यति । क्रियावचनेन तु 'कर्तृकरणे कृता बहुल'मिति भाव्यं समासेन । 'स्वभावसिद्धं च द्रव्य'मिति तत्कृतत्वाऽभावाद् द्रव्यवाचिनापि न भविष्यति । गोभिर्वपावानिति । गोसंबन्धिदध्याद्युपयोगाद्वपावत्त्वमिति तत्कृतत्वमिस्ति । वपावच्छब्दस्तु गुणवचनो न भवति । यो हि गुणमुक्त्वा द्रव्यमभिधत्ते, यथा 'शुक्लः पट' इति शुक्लशब्दः, स गुणवचनः, वपावच्छब्दस्तु सर्वदा वपासंबन्धविशिष्टं द्रव्यमाहेति नासौ गुणवचनः ।

किं पुनरिति । 'दध्ना जाड्यं' 'घृतेन पाटव'मित्यादौ केवलगुणवाचिना समासो नेष्यते । गुणोपसर्जनद्रव्यवचनस्तु द्रव्यवचनत्वाद् गुणवचनो न भवतीति प्रश्नः । गुणेनेति । अर्थेन च समासासंभवाद् गुणवचनेन भविष्यति । तत्र वचनग्रहणाद् भूतकालपरिग्रहाद् गुणमुक्तवता संप्रति गुणोपसर्जनद्रव्यवाचिना समासो भवतीत्यर्थः ।

कथं पुनरिति । नित्यत्वाच्छब्दार्थसंबन्धस्योपात्तार्थपरित्यागेनार्थान्तराभिधानं न संभवतीति प्रश्नः । आरभ्यत इति । अर्थभेदेन शब्दभेदात्, सादृश्यनिबन्धनत्वाच्च

उ० · स्वभावसिद्धमिति । शब्दशक्तिस्वभावेन सिद्धत्वेनैव घटादिपदाद् द्रव्यभानमिति तत्कृतत्वाभाव इति भावः । 'क्रियत' इति पदान्तरसमभिव्याहारेण तु तत्र साध्यत्वप्रतीतिरित्यन्यत् । एवं च 'दण्डेन घट' इत्यादौ दण्डहेतुको घट इत्येव बोधो न तु तत्कृतत्वप्रतीतिरिति तात्पर्यम् ॥ भाष्ये—धान्येन धनवानिति । धान्येन हेतुना धनवत्त्वात्तत्कृतत्वमत्रापीति भावः । शंकुलाखण्डो देवदत्त इति । शङ्कुलाकृतखण्डगुणको देवदत्त इत्यर्थः । भूतकालेति । बाहुलकाद् भूते कर्तरि ल्युडिति भावः । 'गुणमुक्तवते'ति व्याचष्टे—संप्रतीति । तत्त्वं च केवलगुणवाचकत्वेनापि प्रसिद्धस्य, यथा शुक्लादेः, पार्थक्येन गुणवाचिनो विशिष्टद्रव्यवचनस्यापि, यथा पट्वादेः । भाष्ये—गुणवचनेभ्यो मतुप इति । तत्रापि धर्ममात्रं गुण इति भावः । यद्वेदमर्शआद्यच उपलक्षणम् । नन्वर्थभेदेन शब्दैक्ये मतुपो लोपो व्यर्थोऽत आह—अर्थभेदेनेति । नन्वेवं 'गुणमुक्तवते'त्युक्तं गुणवचनत्वमनुपपन्नमत आह—सादृश्येति । अनेकशक्तीति । प्रकरणादितश्च तत्तच्छक्त्युद्बोध इति भावः ।

* गुणवचनेभ्यो मतुपो लुक् ५. २. ९४ वा० ३.

गुणः कृष्णः । एवं खण्डगुणः खण्डः ।

यद्येवं नार्थस्तत्कृतार्थग्रहणेन । भवति हि शङ्कुलायाः खण्डेन सामर्थ्यम् । असामर्थ्याच्चात्र न भविष्यति—दध्ना पटुः, घृतेन पटुरिति । तस्मान्नार्थस्तत्कृतार्थ-ग्रहणेन ।

**तृतीयासमासेऽर्थग्रहणमनर्थकमर्थगतिर्ह्यवचनात् ॥ १ ॥**

तृतीयासमासेऽर्थग्रहणमनर्थकम् । किं कारणम् ? 'अर्थगतिर्ह्यवचनात्' । अन्तरेणापि वचनमर्थगतिर्भविष्यति ।

**निर्देश्यमिति चेत्तृतीयार्थनिर्देशोऽपि ॥ २ ॥**

अथैवमपि निर्देशः कर्तव्य इति चेत्तृतीयार्थनिर्देशोऽपि कर्तव्यः स्यात् । 'तृतीया तदर्थकृतार्थेन गुणवचनेने'ति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नायमर्थनिर्देशः । किं तर्हि ? योगाङ्ग-मिदं निर्दिश्यते । सति च योगाङ्गे योगविभागः करिष्यते—'तृतीया तत्कृतेन

प्र०-प्रत्यभिज्ञायाः । एकत्वे वाऽनेकशक्तियोगात्प्रयोगभेदेनानेकार्थसंबन्ध इति भावः । भवति हीति । अव्यतिरिक्तकल्पान्तरङ्गप्रतीयमानसमासार्थान्तर्भूतकरोतिक्रियाद्वारक-मिति भावः । 'दध्ना पटु'रित्यत्र तु विपर्ययादसामर्थ्यात्समासाभावः ।

अर्थगतिरिति । तत्कृतस्यार्थत्वाव्यभिचारादित्यर्थः । निर्देश्यमिति चेदिति । सामर्थ्यलभ्यस्यापि यदि विस्पष्टार्थमुपादानमित्यर्थः । योगविभाग इति । तत्कृतेति

उ०- भाष्ये—यद्येवं नार्थस्तत्कृतार्थग्रहणेनेति । एवं—गुणवचनेनेत्यस्यात्र करणे । अयं भावः—'तृतीयान्तं गुणवचनेन समस्यत' इत्युक्ते गुणस्य जन्यतानियमेन तृतीयान्तार्थस्य तदुत्पत्तिप्रयोजकत्वेन च प्रत्यासत्त्या तृतीयान्तार्थकृतगुणवचनेनैव तृतीयान्तस्य समासो भविष्यतीति दध्ना भुङ्क्ते पटुरक्ष्णा काण इत्यादौ न भविष्यतीति ॥ ननु तृतीयात्र सूत्रे न हेतौ, उत्तरसूत्रे निपुणश्लक्ष्णग्रहणात् । एवं च तृतीयान्तगुणवचनयोः साक्षात्सामर्थ्यासम्भ-वेन क्रियाद्वारकं तद् ग्राह्यम् । एवं च यतो दध्ना भुङ्क्तेऽतः पटुरित्यर्थके 'दध्ना पटु'रित्यादा-वपि स्यादत आह—अव्यतिरिक्तकल्पेति । गुणवचनतृतीयान्तयोः समभिव्याहारे उक्तरीत्या तत्प्रतीतिरिति भावः । अन्तरङ्गत्वेऽयमेव हेतुः । अत एव समासार्थान्तर्भूतस्याप्रतीयमान-त्वात्—'प्रतीयमाने'ति ।

उक्तन्यायसिद्धमपि तत्कृतार्थग्रहणं स्पष्टप्रतिपत्तयेऽभ्युपगम्य तत्रार्थग्रहणं व्यर्थमाह वार्त्तिककारः—'तृतीयासमास' इति ॥ नायमर्थनिर्देश इति । उभयत्राप्यर्थपरत्वस्य व्याख्यानेनैव सिद्धेरिति भावः । योगविभाग इति । योगविभागफलक इत्यर्थः । तदाह—

१-'गुणवचनेन' इति क्वचिन्न ।

गुणवचनेन' समस्यते । ततः—'अर्थेन' । अर्थशब्देन च तृतीया समस्यते । धान्यार्थः वसनार्थः हिरण्यार्थः । 'पूर्वसदृशसमोनार्थ' [ २.१.३१ ] इत्यर्थ-ग्रहणं न कर्तव्यं भवतीति ॥३०॥

## पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥२।१।३१॥

**पूर्वादिष्ववरस्योपसंख्यानम् ॥ १ ॥**

पूर्वादिष्ववरस्योपसंख्यानं कर्तव्यम् ? मासावरोऽयम्, संवत्सरावरोऽयम् ।

**सदृशग्रहण उक्तम् ॥ २ ॥**

प्र०—तृतीयायाश्छान्दसो लुक् । अर्थेनेति पृथक्पदमिति वाक्यभेदः संपद्यते । न कर्तव्य-मिति । अर्थशब्देन समासार्थमिति भावः । 'सत्त्वे निविशतेऽपैती'ति लक्षितस्य गुण-स्येह ग्रहणम् । कुङ्कुमलोहितादीन्यत्रोदाहरणानीति करोतिक्रिया तत्रावश्यापेक्ष्येति खण्डादीनां संभवदपि धातुवाच्यक्रियारूपत्वं भाष्यकारेण नोक्तम् ॥३०॥

पूर्व । पूर्वसूत्रेऽर्थशब्देन समासस्य साधितत्वादिहार्थग्रहणमूनेनाभिसंबद्ध्यमानं तदर्थानां विकलादीनां समासं साधयति । पूर्वसूत्रे त्विहत्यमर्थग्रहणं प्रत्याख्यातम् । अर्थप्रधानत्वान्निर्देशस्योनार्थानामन्तरेणाप्यर्थग्रहणं समासस्य सिद्धत्वात् ॥ सदृशग्रहण उक्तमिति । वक्ष्यमाणस्यापि बुद्ध्या निरूपितत्वाद्धेतुकालसंप्रेक्षितत्वाद्वा भूतनिर्देशः ।

उ०-वाक्यभेदः संपद्यत इति । भाष्ये—धान्यार्थ इति । अत्रार्थ्यत इत्यर्थः—प्रयोजनम्, अर्थनमर्थः—प्रार्थना वा । करणतृतीयासमास इति हरदत्तादयः, तन्न, 'कर्तृकरणे' इत्येव सिद्धत्वात् । तस्माद्धनपर्यायार्थशब्देन सह प्रकृत्यादिष्वप्रयुक्ततृतीयान्तस्य समासः । प्रथमार्थे च तृतीया । यद्वा धान्येन कृतोऽर्थं इति विग्रह इति नव्याः । अर्थशब्देन समासार्थ-मिति । फलान्तरार्थमर्थग्रहणमावश्यकमित्यग्रिमसूत्रे वक्ष्यति कैयटः । सत्त्वे इत्यादि । इदं गुणवचनशब्दस्यैव लक्षणमिति गुणपदेन धर्ममात्रं, तदुपसर्जनद्रव्यवाचिनायं समास इति बोध्यम् । खण्डस्य तल्लक्षितत्वाभावाच्च । नोक्तमिति । रूढ्यर्थस्यैव प्रतीतेरिति भावः ॥३०॥

पूर्वसदृश । अर्थग्रहणमूनेनेति । अत एवोनार्थकलहमिति स्वरविधायकसूत्रेऽर्थग्रहणं चरितार्थम् । तत्र हि लक्षणप्रतिपदोक्तपरिभाषयैतत्सूत्रविहितसमासस्यैव ग्रहणम् । सम-सदृशयोः पृथगुपादानाच्चानेनैव सम्बन्ध इति बोध्यम् । अर्थप्रधानत्वान्निर्देशस्येति । ऊन-शब्दोऽर्थपरः, अर्थेन समासासंभवाच्च तद्वाचिनां ग्रहणं, तच्चाविशेषात्सर्वेषामिति भावः । केचित्तु माषेण कृतो विकल इत्यर्थे माषविकल इति पूर्वेणैव सिद्धम् । 'ऊनार्थे'ति सूत्रेऽर्थ-ग्रहणं तु 'धान्यार्थ' इत्यादावन्तोदात्तत्वायेति स्पष्टमेव वृत्त्यादौ । तत्र समासोऽपि पूर्वसूत्र-स्यार्थग्रहणात्सिद्धः । एवं च माषविकलादौ पूर्वपदप्रकृतिस्वरत्वमेवेत्येव भाष्याशयः । अत एव समर्थसूत्रे भाष्ये 'तृतीया तत्कृते'ति सूत्रस्योपादानविकल इत्युदाहरणं दत्तमित्याहुः ।

अवरस्येति । न च कैयटरीत्योनार्थत्वादेव सिद्धिरिति वाच्यम्, 'चैत्रादवरः फाल्गुन' इत्यादौ पूर्वशब्दसमानार्थताया अपि अवरशब्दस्य दर्शनात् । 'सदृशग्रहणे उक्त'मिति भाष्य-कारवचनमिस...नेत्याह—हेतुकालसंप्रेक्षितत्वाद्वेति । हेतुः—वार्तिककारोच्चारणं, तस्य

१—क्वाचित्कः पाठः ।

किमुक्तम् ? 'सदृशग्रहणमनर्थकं तृतीयासमासवचनात्'। 'षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्य'मिति* ॥३१॥

## कर्तृकरणे कृता बहुलम् ॥ २ । १ । ३२ ॥

### कर्तृकरणे कृता क्तेन ॥ १ ॥

कर्तृकरणे कृता क्तेनेति वक्तव्यम्। अहिहतः नखनिर्भिन्नः दात्रलूनः परशुच्छिन्नः। कृता क्तेनेति किमर्थम् ? इह मा भूत्—दात्रेण लूनवान्। परशुना छिन्नवान् ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम्। बहुलवचनात्सिद्धम् ॥३२॥

प्र०—'सदृशप्रतिरूपयोः सादृश्ये' इत्यत्र वक्ष्यते। पूर्वपदप्रकृतिस्वरविधानार्थं सदृशग्रहणमनर्थकं, मात्रा सदृशो मातृसदृश इति 'पूर्वसदृशे'ति समासे कृते 'तत्पुरुषे तुल्यार्थतृतीये'ति प्रकृतिस्वरो भविष्यति ॥ अथोच्यते—तुल्यार्थयोगे षष्ठ्यपि पक्षे विधीयते, ततश्च मातुः सदृशो मातृसदृश इति यदा षष्ठीसमासः क्रियते, तदा पूर्वपदप्रकृतिस्वरार्थं सदृशग्रहणम्। तथा च दास्याः सदृश इत्याक्रोशे षष्ठ्या अलुकि स्वरः सिध्यति, तदा तृतीयासमासे सदृशग्रहणं न कर्तव्यम्। षष्ठीसमासेनैव स्वररूपयोः सिद्धत्वात् ॥ अथोच्यते—हेतुतृतीयार्थमिह सदृशग्रहणं, विद्यया सदृशो विद्यासदृश इति, तदपि न, संबन्धमात्रविवक्षायां षष्ठीसमासेन स्वररूपयोः पूर्वसूत्रेण वा तत्कृतत्वात्सिद्धत्वात् ॥३१॥

कर्तृकरणे। बहुलवचनादिति। अयं भावः—क्तेनेत्युच्यमाने घञादिभिर्नखनिर्भेद इत्यादौ समासो न प्राप्नोति। तस्माद् बहुलग्रहणमेवाऽव्याप्त्यतिव्याप्तिपरिहारार्थमाश्रयणीयम् ॥३२॥

उ०—यः कालस्तस्य संप्रेक्षितत्वान्मनसि स्थापितत्वादित्यर्थः। कारणकालं कार्ये उपचर्य प्रयोग इति तात्पर्यम्।. वार्तिककारवचनमित्यभिप्रेत्य स्वाद्यम्। तदेव युक्तमिति भावः। तदा पूर्वप्रकृतिस्वरार्थमिति। अन्यथान्तोदात्तत्वं स्यादित्यर्थः।

नन्वत्रानभिधानात्षष्ठीसमास एव मास्त्वित्यत आह—तथा च दास्या इति। सिद्धत्वादिति। न च 'मनसः संज्ञाया'मित्यलुकि 'मनसासदृश' इति सिध्यर्थमिदमप्यावश्यकमिति वाच्यम्, तत्कृतत्वेनैव सिद्धत्वात्, अनभिधानेन तत्र समासाभावाच्च। ईदृशसंज्ञायां मानाभावाच्चेति दिक् ॥ संबन्धमात्रविवक्षायामिति। अनेन 'अवश्यं तृतीयासमासो वक्तव्यो यत्र षष्ठ्यर्थो नास्ति भोजनसदृशः, इदमप्यवश्यं वक्तव्यं यत्र षष्ठी श्रूयते दास्याःसदृश इत्याद्यर्थ'मिति 'सदृशप्रतिरूपयो'रिति सूत्रशेषस्थं भाष्यमेकदेश्युक्तिरिति सूचयति, तत्रापि षष्ठ्यर्थस्य संभवात्। प्रतिपदोक्तपरिभाषया 'तुल्यार्थै'रिति तृतीयान्तेनैवैतत्समासप्रवृत्तेश्च। पूर्वसूत्रेण वेति। 'उपादानविकल' इतिवदिति भाव ॥३१॥

कर्तृकरणे कृता। कृता क्तेनेति। भाष्ये—कृतेति क्तस्योपरञ्जकं विशेषणमिति बोध्यम्। 'कृते'त्यस्य स्थाने 'क्तेने'ति वक्तव्यं, कृतेति व्यर्थमिति वार्थः। ननु लाघवात्क्तेनेति युक्तमत आह—अयं भाव इति ॥३२॥

* ६. २. ११ वा० १; २.

# कृत्यैरधिकार्थवचने ॥ २ । १ । ३३ ॥

## कृत्यैरधिकार्थवचनेऽन्यत्रापि दृश्यते ॥ १ ॥

कृत्यैरधिकार्थवचने'ऽन्यत्रापि दृश्यत' इति वक्तव्यम् । बुसोपेन्ध्यम् तृणोपेन्ध्यम् घनघात्यम् ।

## साधनं कृतेति वा पादहारकाद्यर्थम् ॥ २ ॥

अथवा 'साधनं कृता सह समस्यत' इति वक्तव्यम् । किं प्रयोजनम् ? 'पादहारकाद्यर्थम्' । पादाभ्यां ह्रियते पादहारकः । गले चोप्यते गलेचोपकः ॥३३॥

प्र०— कृत्यैरधि । स्तुतिनिन्दापरत्वात्क्रियोपादानस्य कर्तृकरणयोर्गौणत्वात्पूर्वेणाऽप्राप्तः समासोऽनेन विधीयत इति केचिदाहुः । अन्ये तु प्रपञ्चार्थमेतदित्याहुः । तथा च 'काकपीता नदी'त्यत्राऽकृत्यैरप्यधिकार्थवचने समासो दृश्यते । कृत्यैरिति । ततश्च नेद नियमार्थमपि तु प्रपञ्चार्थम् । बुसोपेन्ध्यमिति । अग्नेरल्पत्वात्काष्ठमेतद् बुसेन ज्वालनीयमित्यर्थः । घनघात्यमिति । घनेनाऽयःप्रभृतिना घात्यस्य काठिन्यं प्रतिपाद्यते ।

साधनं कृतेति । बहुलग्रहणसहितसूत्रसंदर्भापेक्षो विकल्पः । पादाभ्यामिति । अपादाने पञ्चमी । हारक इति । 'कृत्यल्युटो बहुल'मिति बहुलग्रहणात्कर्मणि ण्वुल् । चोपक इति । चुपेर्ण्यन्तस्य कर्मणि ण्वुल् ॥३३॥

उ०— कृत्यैरधि । स्तुतिनिन्देति । काकपेयेत्यादौ काककर्तृकपानकर्म नदीति बोधेऽल्पाम्भस्त्वपूर्णाम्भस्त्वादिना निन्दास्तुतिमात्रे तात्पर्यात्क्रियाया निष्प्रयोजनत्वेन गौणत्वात्कर्तृकरणयोरपि गौणत्वमिति भावः । केचिदाहुरिति । कर्तृत्वादेस्तृतीयाप्रयोजकत्ववत्समासप्रयोजकत्वस्यापि संभवादित्यरुचिः । तदाह—अन्ये त्विति । ननु 'कृत्यैरेवाधिकार्थवचन' इति नियमार्थं स्यादत आह—काकपीतेति । नेदं नियमार्थमिति । 'कृत्यैरधिकार्थवचन एवे'त्येवं नियमार्थं नेदमित्यर्थः । भाष्ये—अन्यत्रापि स्तुतिनिन्दाफलकत्वरूपाधिकार्थवचनत्वाभावेऽपि ।

सूत्रसंदर्भेति । 'कर्तृकरणे' 'कृत्यै'रित्येतत्सूत्रद्वयरूपेत्यर्थः । बहुलग्रहणसहितमिदं वा कर्तव्यं, तत्सहितसूत्रसन्दर्भो वेति तात्पर्यम् । बहुलग्रहणं त्वत्रापि कर्तव्यमेव, 'परशुना छिन्ना'नित्याद्यर्थम् । पादाभ्यामित्यस्य कर्तृकरणतृतीयान्तत्वे यथान्यासेऽपि सिध्यतीत्यत आह—अपादाने पञ्चमीति । पादयोर्ह्रियमाणमञ्जीराद्यपेक्षयावधित्वेनापादानत्वम् । गलेचोपक इति । हलदन्तादिति, तत्पुरुषे कृतीति, अमूर्धमस्तकादिति वालुक् । गले मन्दं प्रापणीय इत्यर्थः ॥३३॥

# अन्नेन व्यञ्जनम् ॥ २ । १ । ३४ ॥

# भक्ष्येण मिश्रीकरणम् ॥ २ । १ । ३५ ॥

**अन्नेन व्यञ्जनं भक्ष्येण मिश्रीकरणमित्यसमर्थसमासः ॥ १ ॥**

'अन्नेन व्यञ्जनम्' 'भक्ष्येण मिश्रीकरण'मित्यसमर्थसमासोऽयं द्रष्टव्यः । किं कारणम् ?

**कारकाणां क्रियया सामर्थ्यात् ॥ २ ॥**

कारकाणां क्रियया सामर्थ्यं[1] भवति, न तेषामन्योऽन्येन । तद्यथा,— निश्रयण्या द्वाभ्यां काष्ठाभ्यां सामर्थ्यं, न तेषामन्योऽन्येन ॥ एवं तर्ह्याहायम् 'अन्नेन व्यञ्जनम्' 'भक्ष्येण मिश्रीकरण'मिति, न चास्ति सामर्थ्यम्,[2] तत्र वचनात् समासो भविष्यति ।

**वचनप्रामाण्यादिति चेन्नानाकारकाणां प्रतिषेधः ॥ ३ ॥**

वचनप्रामाण्यादिति चेन्नानाकारकाणां प्रतिषेधो वक्तव्यः । तिष्ठतु दध्ना ओदनो भुज्यते देवदत्तेनेति ।

---

प्र०— अन्नेन । भक्ष्येण । तुल्यन्यायत्वाद्युगपत्सूत्रद्वयस्य विचारः । 'दध्योदन' इत्यादौ क्रियावाची शब्दो न प्रयुज्यते, यथा 'कष्टश्रित' इति । क्रियामन्तरेण च द्रव्याणां परस्परसंबन्धो नास्तीति मत्वाह—अन्नेनेति । किं कारणमिति । समासादुपसेकादि-क्रियावगमात्तत्कृतमस्त्येव सामर्थ्यमिति प्रश्नः । क्रिययेति । तस्याश्च वाचको नास्तीति तदभावात्सामर्थ्याभावः । निश्रयण्या इति । निश्रयणीशब्देन समुदायवृत्तिना उप-चारात्सोपानफलकान्यभिधीयन्ते । द्वाभ्यामिति । ऊर्ध्वाभ्यामित्यर्थः । एवमसामर्थ्ये प्रतिपादिते आचार्यदेशीय आह—एवं तर्हीति ।

नानाकारकाणामिति । भिन्नक्रियापेक्षया कारकाणामित्यर्थः । तिष्ठतु दध्नेति । दध्ना ध्रियतां, जीवत्वित्यर्थः । तत्र दध्नः करणत्वम् ।

---

उ०— अन्नेन व्यञ्ज । अनेनापि करणतृतीयैव समासः, शब्दशक्तिस्वभावात्, करणे इत्यनु-वृत्तेर्वेत्यभिप्रायेणासामर्थ्याशङ्का । द्रव्याणामिति । कारकविभक्त्यन्तवाच्यत्वे इति भावः । फलकानीति । आरोहणावरोहणोपयोगितिर्यक्काष्ठानीत्यर्थः । भाष्ये—निश्रयण्या इति । जातावेकवचनम् । दध्नेति सहयोगतृतीयायामुक्तरीत्या करणतृतीयाभावात्समासाप्राप्ते-राह—जीवत्विति ।

---

१-क्वचिदिदं वार्तिकं पूर्वेण सहैव पठ्यते । २-'अस्ति' पा० ।

**सिद्धं तु समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपद उत्तरपदलोपश्च ४**

सिद्धमेतत् । कथम् ? समानाधिकरणाधिकारे* वक्तव्यम् '[1]क्तान्तस्तृतीयापूर्वपदः समस्यते सुपा, उत्तरपदस्य च लोपो भवती'ति । दध्नोपसिक्तो दध्युपसिक्तः, दध्युपसिक्त ओदनो दध्योदनः । गुडेन संसृष्टा गुडसंसृष्टाः, गुडसंसृष्टा धाना गुडधानाः ।

**षष्ठीसमासश्च युक्तपूर्णान्तः ॥ ५ ॥**

षष्ठीसमासश्च युक्तपूर्णान्तः समस्यते, उत्तरपदस्य च लोपो वक्तव्यः । अश्वानां युक्तोऽश्वयुक्तः, अश्वयुक्तो रथोऽश्वरथः । दध्नः पूर्णो दधिपूर्णः, दधिपूर्णो घटो दधिघटः ॥ तत्तर्हीदं बहु वक्तव्यम् ?

**न वासमासेऽदर्शनात् ॥ ६ ॥**

न वा वक्तव्यम् । किं कारणम् ? 'असमासेऽदर्शनात्' । यद्ध्यसमासे दृश्यते समासे च न दृश्यते तल्लोपारम्भं प्रयोजयति । न चासमास उपसिक्तशब्दः संसृष्टशब्दो युक्तशब्दः पूर्णशब्दो वा दृश्यते ॥ कथं तर्हि सामर्थ्यं गम्यते ?

**युक्तार्थसंप्रत्ययाच्च सामर्थ्यम् ॥ ७ ॥**

प्र०- एवं सूत्रन्यासं दूषयित्वा वार्तिककार आत्मीयं न्यासं दर्शयति—सिद्धं त्विति । उत्तरपदलोपप्रसङ्गेनान्यदप्याह—षष्ठीसमासश्चेति । अश्वानामिति । संबन्धविवक्षया षष्ठी । तथा 'दध्न' इति ।

असमासेऽदर्शनादिति । असमासो वाक्यं, तत्रैव युक्तादयो न दृश्यन्ते । अश्वानां रथोऽश्वरथः, दध्नो घटो दधिघट इति युक्तादिशब्दप्रयोगमन्तरेणापि संबन्धप्रतीत्यैव युक्ताद्यर्थानामाक्षेपात् । 'दधिपूर्णो घट'इत्येतत्तु शब्दान्तरमेव तत्समानार्थम्, न तु दधिघट इत्येतस्यैतद्वाक्यम् । अन्यत्र तु प्रत्ययलक्षणार्थो लोपारम्भो यथाऽग्निचिद् दधिपश्चेति । इह तु लोपान्वाख्याने प्रयोजनाभावः ।

युक्तार्थसंप्रत्ययादिति । युक्तग्रहणं योग्यक्रियोपलक्षणमित्युपसेकादयोऽपि

उ०- सिद्धं त्विति । वार्त्तिकारम्भेऽपि दासीभारादित्वात्पूर्वपदप्रकृतिस्वरो बोध्यः । एवं च सूत्रारम्भेण समफलता । तच्च वार्त्तिकं 'विशेषण'मित्येव सिद्धे समासे पूर्वपदावयवोत्तरपदलोपार्थं कर्त्तव्यम् ॥ संबन्धविवक्षायामिति । कर्तुः करणस्य वा संबन्धत्वेन विवक्षायामित्यर्थः ।

युक्ताद्यर्थानामाक्षेपादिति । संबन्धत्वेन संबन्धस्यैवात्र भानादिति भावः । तदर्थंघटि-

* पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन २. १. ४९. १—'क्तस्तृतीया' पा० ।

दध्ना युक्तार्थता संप्रतीयते ॥ कथं पुनर्ज्ञायते दध्ना युक्तार्थता संप्रतीयत इति ?

**संप्रत्ययाच्च तदर्थाध्यवसानम् ॥ ८ ॥**

संप्रत्ययाच्च तदर्थोऽध्यवसीयते ॥ अवश्यं चैतदेवं विज्ञेयम् ।

**संप्रतीयमानार्थलोपे ह्यनवस्था ॥ ९ ॥**

यो हि मन्यते संप्रतीयमानार्थानां शब्दानां लोपो भवतीति, अनवस्था तस्य लोपस्य स्यात् । 'दधी'त्युक्ते बहवोऽर्था गम्यन्ते 'मन्दकमुत्तरकं निलीनकमिति, तद्वाचिनां शब्दानां लोपो वक्तव्यः स्यात् । तथा 'गुड' इत्युक्ते मधुरशब्दस्य 'शृङ्गवेरमिति च कटुकशब्दस्य ॥ अन्तरेण खल्वपि शब्दप्रयोगं बहवोऽर्था गम्यन्तेऽक्षिनिकोचैः पाणिविहारैश्च, तद्वाचिनां शब्दानां लोपो वक्तव्यः स्यात् ॥३४॥३५॥

प्र०—गृह्यन्ते । एवदुक्तं भवति—'दध्योदन' इत्युक्ते दध्नः संस्कारकत्वमोदनस्य च संस्कार्यत्वं प्रतीयते, न चोपसेकमन्तरेण संस्कार्यसंस्कारकभावोऽस्तीति ।

संप्रत्ययाच्चेति । सर्वलोकव्यवहारसिद्धत्वादिति भावः । अत एव न प्रतिज्ञार्थैकदेशो हेतुः । तदर्थाध्यवसानमिति । संदेहरहितस्तदर्थनिश्चय इत्यर्थः । मन्दकमिति । मन्दजातम् । उत्तरकमिति । परिपक्वावस्थोपरि घनभावः । निलीनकमिति । परिपक्वावस्थायां भ्रष्टम् । एषां च विशेषाणां संभवाद्दधीत्युक्ते संप्रत्ययः । अक्षिनिकोचैरिति । प्रकारान्तरेण विधिनिषेधलक्षणार्थावसायाच्चरितार्थत्वाद्यथा शब्दानां प्रयोगो नास्ति तथा युक्तादीनामपीत्यर्थः ॥३४॥३५॥

उ०—तस्य संबन्धत्वे त्वन्तरङ्गत्वात्तृतीयैव स्यादिति भावः । भाष्ये—दध्ना युक्तार्थता संप्रतीयत इति । दध्नेति पदे वाच्येन युक्तो योऽर्थ उपसेकक्रियादिरूपस्तदर्थता तस्य प्रतीयत इत्यर्थः । वाक्येऽपि वाक्यैकदेशन्यायेन दध्नेत्यस्यैव सोऽर्थ इति बोध्यम् ।

नन्वध्यवसानं संप्रत्यय इति पर्यायस्तथा च हेतुसाध्ययोरविशेष इत्यत आह—सर्वलोकव्यवहारेति । अर्थविशिष्टं ज्ञानं प्रतिज्ञातोऽर्थः, तदेकदेशो ज्ञानं हेतुरित्यर्थः । निश्चय इत्यस्यैव विवरणं—संदेहरहित इति । दधीत्युक्ते संप्रत्यय इति । अयं च प्रत्यय आनुमानिको वाक्यैकदेशन्यायेन वा । प्रकारान्तरेणेति । चेष्टयेत्यर्थः । चरितार्थत्वादिति । शब्दप्रयोगकार्यस्य बोधस्य प्रकारान्तरेण संपन्नत्वादिति भावः ॥३४॥३५॥

१—'आदौ मन्दं ततः स्वादु स्वाद्वम्लं च ततः परम् । अम्लं चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा ॥३॥'
'मन्दं दुग्धं यदव्यक्तरसं किञ्चिद्घनं भवेत् । मन्दं स्यात्सृष्टविण्मूत्रं दोषत्रयविदाहकृत् ॥४॥'
इति भावप्रकाशे । 'त्रिदोषं मन्दकं, जातं वातघ्नं दधि शुक्रलम्' इति चरके (सूत्र० २७ अ० २२५) । सुश्रुते सूत्रस्थाने ४५ अध्याये दधिगुणा विस्तरेण द्रष्टव्याः ।
२—'शृङ्गबेरं' पा० । ३—'कटुशब्दस्य' पा० । ४—'अन्तरेणापि खलु' पा० ।

## चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ २ । १ । ३६ ॥

किं चतुर्थ्यन्तस्य तदर्थमात्रेण समासो भवति ? एवं भवितुमर्हति[1] ।

**चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गोऽविशेषात् ॥ १ ॥**

'चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गः' । सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण सह समासः प्राप्नोति । अनेनापि प्राप्नोति—रन्धनाय स्थाली, अवहननायोलूखलमिति । किं कारणम् ? 'अविशेषात्' । न हि कश्चिद्विशेष उपादीयत 'एवंजातीयकस्य चतुर्थ्यन्तस्य तदर्थेन सह समासो भवती'ति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ।

**बलिरक्षिताभ्यां चानर्थकं वचनम् ॥ २ ॥**

बलिरक्षिताभ्यां च समासवचनमनर्थकम् । यो हि महाराजाय बलिर्महाराजार्थः स भवति । तत्र 'तदर्थ' इत्येव सिद्धम् ।

'यदि पुन'र्विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समास्यत' इत्येतल्लक्षणं क्रियेत ?

**विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानम् ॥ ३ ॥**

'विकृतिः प्रकृत्ये'ति चेदश्वघासादीनामुपसंख्यानं कर्तव्यम् । अश्वघासः

प्र०- चतुर्थी । 'चतुर्थी चाशिषी'ति या हितयोगे चतुर्थी तदन्तस्य समासो न भवति, समासादाशिषोऽनवगमादिति केचिदाहुः । पाणिनीये लक्षणेऽतिव्याप्तिं पुनरुक्तिं च दृष्ट्वा पूर्वाचार्यन्यासे त्वव्याप्तिं मत्वा विचारः क्रियते—किं चतुर्थ्यन्तस्येति । विशेषानुपादानाद्दोषदर्शनाच्च प्रश्नः । इतः स्ववचनेनैव दोषमभिधापयितुमाह—एवं भवितुमर्हतीति । सर्वप्रसङ्ग इति । असत्यपि प्रकृतिविकारभाव इत्यर्थः । यो हीति । देयस्य बलेः संप्रदानार्थतास्तीति तादर्थ्याश्रयः समासः सिद्धः ।

इदानीं पूर्वाचार्यसूत्रं विचार्यते—यदि पुनरिति । अश्वघास इति । तादर्थ्य-

उ०- चतुर्थी तद । समासादाशिषोऽनवगमादिति । एवं चानभिधानात्समासो नेति भावः । यत्तु 'आशिषि आशीर्विषयस्य विधेयत्वं तदाश्रयस्योद्देश्यत्वं च प्रतीयते, न च वृत्तावुद्देश्यविधेयभावेनान्वयो व्युत्पत्तिसिद्ध' इति, तन्न; समासतोऽपि 'अभ्यासलोप' इत्यादावुद्देश्यत्वादिप्रतीतेः । वस्तुतस्तु 'आशीर्विषयक्रियान्वय्यर्थकात्प्रातिपदिकात्तद्द्वारके आयुष्यादियोगे चतुर्थी'ति तदर्थादुभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात्समासस्तेन न । एवं चैतज्ज्ञापकसिद्धैव हितयोगे चतुर्थीति तात्पर्यम् । अतिव्याप्तिः—'रन्धनाय स्थाली'-त्यादौ । पुनरुक्तिः—बलिरक्षितग्रहणस्य । अव्याप्तिः—अश्वघासे । स्ववचनेनैवेति ।

१–'ब्राह्मणार्थं पयः, ब्राह्मणार्थः सूपः, ब्राह्मणार्था यवागूः' इत्यधिकः पाठः क्वचित्, स चानावश्यकः पञ्चमवार्तिके वक्ष्यमाणत्वात् ।

श्वश्रूसुरम्[1] हस्तिविधेति ।

**अर्थेन नित्यसमासवचनम् ॥ ४ ॥**

अर्थशब्देन नित्यसमासो वक्तव्यः । ब्राह्मणार्थम् क्षत्रियार्थम् ॥ किं 'विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यत' इत्यतोऽर्थेन नित्यसमासो वक्तव्यः ? 'ने'त्याह । सर्वथार्थेन नित्यसमासो वक्तव्यो विग्रहो मा भूदिति ।

**सर्वलिङ्गता च ॥ ५ ॥**

सर्वलिङ्गता च वक्तव्या । ब्राह्मणार्थं पयः, ब्राह्मणार्थः सूपः, ब्राह्मणार्था यवागूरिति ॥ कि'मर्थेन नित्यसमास उच्यत' इत्यतः सर्वलिङ्गता वक्तव्या ? 'ने'त्याह । सर्वथा सर्वलिङ्गता वक्तव्या । किं कारणम् ? [2]अर्थशब्दोऽयं

---

प्र०–मत्रास्ति न तु प्रकृतिविकारभावः । [1]श्वश्रूसुरमिति । 'विभाषा सेनासुरे'ति नपुंसकत्वम् । हस्तिविधेति । विधा—हस्त्यन्नं, माषादि । अर्थेनेति । महाविभाषाधिकाराद्विकल्पे प्राप्ते वचनम् । किं विकृतिरिति । तदनन्तरमभिधानादस्यैव लक्षणस्य दोषान्तरं मन्यते । नेत्याहेति । आनन्तर्यं सामर्थ्याभावे सत्यकारणमित्यर्थः ।

सर्वलिङ्गता चेति । परवल्लिङ्गमिति पुंस्त्वमेव प्राप्नोति, अभिधेयवशेन च सर्वलिङ्गता विज्ञेयेति दर्शयति—ब्राह्मणार्थमिति । किमर्थेनेति । पूर्ववत्प्रश्नप्रतिवचने ।

---

उ०–स्वशब्देनात्र पूर्वपक्षी । सर्वनाम्नां बुद्धिस्थपरामर्शकत्वादिति भावः । 'तद्वचनेनैवे'ति युक्तः पाठः ।

आनन्तर्यमिति । सर्वन्यासेषु वचनारम्भस्यावश्यकत्वरूपसामर्थ्ये सति तन्न कारणमित्यर्थः । 'सामर्थ्याभावे' इति क्वचित्पाठः । तदा न्यासान्तरेऽकर्त्तव्यतायोग्यत्वाभावे इत्यर्थो बोध्यः ॥ परवल्लिङ्गमिति पुंस्त्वमिति । परस्योत्तरपदार्थस्य प्रधानत्वात्तद्वदेव लिङ्गं समासेऽपि प्राप्नोतीत्यर्थः, न तु सूत्रस्यात्र विषय इति बोध्यं, तस्य पूर्वपदार्थप्रधानैकदेशिसमासविषयकत्वात् । तद्वक्ष्यति भगवान् 'अर्थशब्दोऽयं पुँल्लिङ्ग' इत्यादि । अभिधेयवशेनेति । समुदायार्थनिरूपितविशेष्यतावदर्थवशेनेत्यर्थः ।

---

१–'अपरे पुनरस्यान्यतो विशिष्टेन कन्यालाभेन कन्यामातरमुन्मादयेयुः' (कामसूत्रे अधि० ३, अ० १ सू० ७)

'श्वश्रूसुर'मिति भाष्योदाहरणेन 'कन्यामातरमुन्मादयेयु'रिति वात्स्यायनवचनेन चोन्मादनकरणभूता सुरा कन्यामात्रे देशविशेषे दीयत स्मेति प्रतीयते ।

यद्यपीदं धर्मशास्त्रविरुद्धं वर्तते, मन्वादिभिः सर्वविधसुरापानस्य प्रतिषिद्धत्वात् । पतञ्जलिरपीदं पुपोष । तद्यथा,—"एवं च कृत्वा धर्मशास्त्रं प्रवृत्तम् ।...सुरा न पेयेति ।... सुरामात्रं न पीयते" (भा० १. २. ६४ वा० ३९) । "ब्राह्मणवधे सुरापाने च महान् दोष उक्तः" (भा० ६. १. ८४ वा० ५) इति । २–'यावतार्थं' पा० ।

पुँल्लिङ्गः, उत्तरपदार्थप्रधानश्च तत्पुरुषस्तेन पुँल्लिङ्गस्यैव समासस्याभिधानं स्यात्, स्त्रीनपुंसकलिङ्गस्य न स्यात्।

तत्तर्हीदं बहु वक्तव्यम्। विकृतिः प्रकृत्येति वक्तव्यम्। अश्वघासादीनामुपसंख्यानं कर्तव्यम्। अर्थेन नित्यसमासो वक्तव्यः। सर्वलिङ्गता च वक्तव्या॥ न वक्तव्यम्।

यत्तावदुच्यते 'विकृतिः प्रकृत्येति वक्तव्य'मिति। न वक्तव्यम्। आचार्यप्रवृत्तिर्ज्ञापयति 'विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यत' इति यदयं बलिरक्षितग्रहणं करोति।[1]कथं कृत्वा ज्ञापकम्? यथाजातीयकानां समासे बलिरक्षितग्रहणेनार्थस्तथाजातीयकानां समासः। यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते न तदर्थमात्रेण, ततो बलिरक्षितग्रहणमर्थवद्भवति[2]।

यदप्युच्यते'ऽश्वघासादीनामुपसंख्यानं कर्तव्य'मिति। न कर्तव्यम्। अश्वघासादयः षष्ठीसमासा भविष्यन्ति। यद्धि यदर्थं भवत्ययमपि तत्राभिसंबन्धो भव'त्यस्यायमस्येद'मिति। तद्यथा,—गुरोरिदं गुर्वर्थमिति। ननु च स्वरभेदो भवति। चतुर्थीसमासे सति पूर्वपदप्रकृतिस्वरत्वेन भवितव्यं* षष्ठीसमासे पुनरन्तोदात्तत्वेन†।

नास्ति भेदः। चतुर्थीसमासेऽपि सत्यन्तोदात्तत्वेनैव भवितव्यम्। कथम्? आचार्यप्रवृत्तिर्ज्ञापयति 'विकृतिश्चतुर्थ्यन्ता प्रकृतिस्वरा भवति न चतुर्थीमात्र'-

प्र०- इदानीं भाष्यकारः पाणिनीयं सूत्रं समर्थयितुं चोदकमुखेनाह—तत्तर्हीति। यदयमिति। यदि तदर्थमात्रेण चतुर्थीसमासः स्यात्तदा बलिरक्षितग्रहणं न कुर्यात्, तादर्थ्यस्य संभवात्तदर्थग्रहणेनैव समासस्य सिद्धत्वात्। अयमपीति। तादर्थ्यं संबन्धविशेषः। विशेषे च सामान्यं संभवतीति तन्मात्रविवक्षायां षष्ठी प्रवर्तत एवेति भावः।

उ०- भाष्ये—समासस्याभिधानमिति। समासार्थस्येत्यर्थः। तन्मात्रेति। संबन्धत्वमात्रेत्यर्थः। इदमेव युक्तं, गुरोरिदं गुर्वर्थमित्यत्रास्यैव प्रकारस्य संभवात्। भाष्ये—गुरोरिदं गुर्वर्थमिति। षष्ठीसमासोऽप्येतद्विषये नित्य एव, भाष्यप्रामाण्यादिति बोध्यम्।

भाष्ये—अर्थे क्ते चेति। न च क्तग्रहणं हितार्थं तत्रातादर्थ्येऽपि 'हितयोगे चे'ति चतुर्थीविधानादिति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्येनात्रापि तदर्थं इत्यस्य संबन्धेना-

१—'तत्कथं' पा०। २—'तदर्थेन प्रकृतिविकृतिभाव एव समास इष्यते बलिरक्षितग्रहणाज्ज्ञापकात्।' इति शब्दकौस्तुभः। * चतुर्थी तदर्थे ६.२.४३. † समासस्य ६.१.२२३.

मिति, यदयं 'चतुर्थी तदर्थे' 'अर्थे' 'क्ते च' [६.२.४३-४५] इत्यर्थग्रहणं क्तग्रहणं च करोति। कथं कृत्वा ज्ञापकम्? यथाजातीयकानां प्रकृतिस्वरत्वेऽर्थ-ग्रहणेन क्तग्रहणेन चार्थस्तथाजातीयकानां प्रकृतिस्वरत्वम्। यदि च विकृतिश्चतु-र्थ्यन्ता प्रकृत्या भवति न चतुर्थीमात्रं, ततोऽर्थग्रहणं क्तग्रहणं चार्थवद्भवति।

यदप्युच्यते'ऽर्थेन नित्यसमासो वक्तव्य' इति। न वक्तव्यः। सर्थ-प्प्रत्ययः करिष्यते। किं कृतं भवति? न चैव हि कदाचित्प्रत्ययेन विग्रहो भवति। अपि च सर्वलिङ्गता सिद्धा भवति। यदि सर्थप्प्रत्ययः क्रियते, इत्संज्ञा न प्राप्नोति। अथापि कथंचिदित्संज्ञा स्यादेवमपि श्र्यर्थम् [1] भ्र्वर्थमित्य-'ङ्गस्ये'तीयङुवङौ स्याताम्[†]।

प्र०-अथवाश्वानां घास इति योग्यतामात्रं विवक्ष्यते न तु तादर्थ्यम्। रन्धनस्थाल्यादय-स्त्वनभिधानात्षष्ठीसमासा न भवन्ति। यूपदार्वादिषु 'चतुर्थी तदर्थे'ति स्वरसिद्ध्यर्थं तादर्थ्यमेव संबन्धविशेषो विवक्ष्यते, न संबन्धसामान्यमिति षष्ठीसमासाभावः।

सर्थविति। 'तदर्थं विकृते'रित्यत्र 'तदर्थे सर्थ'बिति क्रियते। तादर्थ्येन चतुर्थी विभक्तिराक्षिप्यते, तस्मै हितमित्यतो वानुवर्त्तते। तेन चतुर्थ्यन्तात्तादर्थ्येऽभिधेये सर्थप्प्रत्ययो भवति। सकारः पदत्वाय। तेन राजार्थं भवदर्थमित्यादौ नलोपादीनि भवन्ति। पकारोऽनुदात्तार्थः। तेन प्रकृतेर्यथाप्राप्तः स्वरो भवतीति 'अर्थे' इति स्वरार्थं सूत्रं न कर्तव्यं भवति। न चैवेति। प्रत्यये कृते तद्धितान्तत्वात्प्रातिपदिकत्वात्सुब्लुका भवितव्यमिति विग्रहाभाव। अथापीति। 'आदिर्ञिटुडवष्षः प्रत्ययस्ये'ति संहि-तया सूत्रपाठे सकारस्यापि कृतष्टुत्वस्य निर्देशादिति भावः

उ०-दोषात्। न च रक्षितार्थं, तत्र तादर्थ्ये चतुर्थ्या एव सत्त्वात्। वृत्त्युक्तसंप्रदानचतुर्थी तु न, तत्त्वस्योपपादयितुमशक्यत्वात्। भाष्यप्रामाण्येनानभिधानात्संप्रदानत्वाभावकल्पनाच्च। रन्धनस्थाल्यादयस्त्वनभिधानादिति। अत एवोपक्रमस्थं भाष्यं सङ्गच्छते॥ ननु यूपदार्वा-दावपि अश्वघासादिवत्संबन्धसामान्यविवक्षायां षष्ठीसमासोऽन्तोदात्तत्वमपि स्यादत आह— यूपदार्वादिष्विति। तादर्थ्यमेवेति। तादर्थ्यरूपः संबन्धविशेष एवेत्यर्थः। नन्वेवमश्वघासादौ चतुर्थीसमास एवास्तु, बलिरक्षितग्रहणं, तज्ज्ञापितं प्रकृतिविकृतिग्रहणं च मास्तु, पूर्वपद-प्रकृतिस्वरत्वं तु भाष्योक्तरीत्यैव न भविष्यति, 'रन्धनाय स्थाली'त्यादौ षष्ठीसमासवदयमपि अनभिधान भविष्यतीति चेन्न, 'रन्धनाय स्थाली'त्यादौ षष्ठ्येव न, तादर्थ्यस्यैव तत्र संबन्धस्य प्रतीतेः। एवं च तत्र चतुर्थीसमासवारणार्थं तस्यावश्यकत्वादिति भाष्याशयात्। कैयटे'ऽनभिधाना'दित्यस्य षष्ठ्यनभिधानादित्येवार्थः।

1-'भ्र्वर्थम्' पा०। † अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६. ४. ७७.

एवं तर्हि बहुव्रीहिर्भविष्यति । किं कृतं भवति ? भवति वै कश्चिदस्वपद-विग्रहो बहुव्रीहिः । तद्यथा,—'शोभनं मुखमस्याः सुमुखीति । नैवं शक्यम् । इह हि महदर्थमित्यात्त्वकपौ प्रसज्येताम्'† ।

एवं तर्हि तदर्थस्योत्तरपदस्यार्थशब्द आदेशः करिष्यते । किं कृतं भवति ? न चैव हि कदाचिदादेशेन विग्रहो भवति । अपि च सर्वलिङ्गता[1] सिद्धा भवति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । योगविभागः करिष्यते । 'चतुर्थी' । चतुर्थी सुबन्तेन सह समस्यते । ततः 'तदर्थार्थ' । तदर्थस्य[2] चोत्तरपदस्यार्थ-शब्द आदेशो भवति ।

इहापि तर्हि समासः प्राप्नोति—छात्राय रुचितम्, छात्राय स्वदितमिति* । आचार्यप्रवृत्तिर्ज्ञापयति 'तादर्थ्ये या चतुर्थी सा समस्यते न चतुर्थीमात्र'मिति, यदयं हितसुखग्रहणं करोति । कथं कृत्वा ज्ञापकम् ? यथाजातीयकानां समासे हितसुखग्रहणेनार्थस्तथाजातीयकानां समासः । यदि च तादर्थ्ये या चतुर्थी सा समस्यते न चतुर्थीमात्रं ततो हितसुखग्रहणमर्थवद्भवति ।

इहापि तर्हि तदर्थस्योत्तरपदस्यार्थशब्द आदेशः प्राप्नोति—यूपाय दारु

प्र०— शोभनमिति । 'सु'शब्दपर्यायेण शोभनशब्देन विग्रहः, सुशब्दस्य त्वसत्त्ववाचित्वात्तेन नास्ति विग्रहः । अत्र च ब्राह्मणायार्थोऽस्येति विग्रहो न भवतीति विवक्षितम् । ब्राह्मणोऽर्थोऽस्येत्येवं समानाधिकरणस्तु विग्रहो भवत्येव । अत्र चार्थशब्दः प्रयोजनवाची ।

एवं तर्हीति । 'ब्राह्मणाय पय' इति समासे कृते पयःशब्दस्य स्थानेऽर्थशब्द आदेशः क्रियते । तेन ब्राह्मणपय इति तादर्थ्ये प्रयोगो न भवति । चतुर्थ्याश्च समासे निवृत्तत्वादादेशेनार्थशब्देन विग्रहाभावः । अर्थविशेषाभिव्यक्तये च पयःशब्दस्य प्रयोगः ।

उ०— भाष्ये—इत्संज्ञा न प्राप्नोतीति । आद्यसकारस्येत्यर्थः । भवति वै कश्चिदिति । एवं च वैकल्पिकेति बहुव्रीहौ यथान्यत्रापि क्वचिदस्वपदत्वम्, एवमत्रापि ब्राह्मणोऽर्थः प्रयोजनमुपकार्यत्वेन यस्येति प्रयोजनवाच्यर्थशब्देन विग्रहः, न तु चतुर्थ्यन्तेन विग्रहः—'ब्राह्मणायार्थमुपकारोऽस्ये'तीति भावः । तद् ध्वनयन्नाह—अत्र चेति । प्रयोजनवाचीति । उपकार्यत्वेन हि ब्राह्मणस्य प्रयोजनता । 'प्रयोजकवाची'ति पाठे यद् ब्राह्मणार्थं पयस्तस्य ब्राह्मणः प्रयोजको भवतीति भावः । भाष्ये—यदयं हितेति । 'हितयोगे चे'ति वार्त्तिकात्तद्योगे चतुर्थीति भावः । न च सुखग्रहणस्य न ज्ञापकत्वं, तद्योगे चतुर्थ्यभावादिति वाच्यम्, 'हितयोगे चे'ति

† आन्महतः समानाधिकरणजातीययोः ६. ३. ४६; शेषाद्विभाषा ५. ४. १५४.

१—'लिङ्गतापि' पा० । २—'तदर्थस्योत्तर' पा० । * रुच्यर्थानां प्रीयमाणः १ ४. ३३.

यूपदारु रथदारु । 'वा च विधास्यते ॥ इहापि तर्हि विभाषा प्राप्नोति—ब्राह्मणार्थम् क्षत्रियार्थमिति । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति 'प्रकृतिविकृत्योर्यः समासस्तत्र तदर्थस्योत्तरपदस्य वार्थशब्द आदेशो भवति, अन्यत्र नित्य इति यदयं बलिरक्षितग्रहणं करोति ।

एवं तर्हि 'उदकार्थो वीवधः' स्थानिवद्भावादुदभावः प्राप्नोति† । तस्मान्नैवं शक्यम् । न चेदेवम्, अर्थेन नित्यसमासो वक्तव्यः, सर्वलिङ्गता च ।

नैष दोषः । इदं तावदयं प्रष्टव्यः—अथेह 'ब्राह्मणेभ्य' इति कैषा चतुर्थी ? तादर्थ्य इत्याह । यदि तादर्थ्ये चतुर्थी, अर्थशब्दस्य प्रयोगेण न भवितव्यम् 'उक्तार्थानामप्रयोग' इति । समासोऽपि तर्हि न प्राप्नोति । वचनात्समासो भविष्यति ।

यदप्युच्यते 'सर्वलिङ्गता वक्तव्ये'ति । न वक्तव्या । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' ॥३६॥

प्र०— इहापीति । यदि 'चतुर्थी'त्येतावत्समासलक्षणं क्रियेतेत्यर्थः । वा चेति । महाविभाषयार्थादेशोऽपि विकल्प्यते । तेन यूपार्थं दारु यूपदार्विति द्वैरूप्यं भवति । यदयमिति । कुबेरार्थो बलिः कुबेरबलिरिति रूपद्वये सिद्धे बलिरक्षितग्रहणं ज्ञापकं प्रकृतिविकारभावादन्यत्र नित्योऽर्थादेशस्तदर्थस्य भवतीति ।

उदकार्थ इति । यदि वीवधशब्दस्यार्थादेशः क्रियते तदा तस्य स्थानिवद्भावान्मन्थौदनेति पक्षे उदकशब्दस्योदादेशः प्राप्नोति ।

समासोऽपीति । चतुर्थ्यन्तस्यार्थशब्देन समासो विधीयते न चेत्तयोर्यौगपद्येन भाव इति भावः । वचनादिति । असत्यपि लौकिके युगपत्प्रयोगे प्रक्रियायां यौगपद्यमस्त्येवेत्यर्थः ।

लिङ्गमिति । ततश्च 'परवल्लिङ्ग'मित्यस्य लक्षणस्याभावाल्लौकिकप्रयोगाश्रयात्सर्वलिङ्गता भविष्यतीत्यर्थः ॥३६॥

उ०—चेन सुखयोगेऽपि सेति भाष्याशयात् । भाष्ये—उक्तार्थानामिति । न च तादर्थ्यस्य चतुर्थ्योक्तत्वेऽप्याश्रयबोधकार्थशब्दस्य कथमुक्तार्थकत्वमिति वाच्यम्, सम्बन्धेन द्वितीयसम्बन्ध्याक्षेपेणैव तल्लाभस्याप्युपपत्तेः । वचनादिति । 'चतुर्थी तदर्थार्थे'ति वचनात् । लक्षणस्याभावादिति । परस्योत्तरपदस्य प्रधानत्वात्प्रधानवल्लिङ्गं समासस्येति लक्षणस्याभावादित्यर्थः । यद्वा—एकदेशिसमासविषयकतया तस्यात्राभावात्प्रत्याख्यास्यमानत्वाद्वेत्यर्थः ॥३६॥

१—इतः पूर्वं 'वावचनं च' इति वार्तिकं कचित् । 'वावचनं विधास्यते' इति कीलहार्नपाठः ।
२—वीवधः = बहेंगी अथवा कांवर । 'विवधवीवधशब्दौ उभयतोबद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते' इति सिद्धान्तकौमुदी (४. ४. १७) 'विहङ्गिका भारयष्टिस्तदालम्बि शिक्यं काचः' इत्यमरः । † मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ६. ३. ६०.

## पञ्चमी भयेन ॥ २ । १ । ३७ ॥

अत्यल्पमिदमुच्यते 'भयेने'ति । [1]भयभीतभीतिभीभिरिति वक्तव्यम् । वृकाद्भयं वृकभयम् । वृकाद्भीतो वृकभीतः । वृकाद्भीतिर्वृकभीतिः । वृकाद्भीर्वृकभीरिति ।

अपर आह—[2]भयनिर्गतजुगुप्सुभिरिति वक्तव्यम् । वृकभयम् ग्रामनिर्गतः अधर्मजुगुप्सुरिति ॥३७॥

## सप्तमी शौण्डैः ॥ २ । १ । ४० ॥

शौण्डादिभिरिति वक्तव्यम् । इहापि यथा स्यात्—अक्षधूर्तः स्त्रीधूर्तः । अक्षकितवः स्त्रीकितव इति ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । बहुवचननिर्देशाच्छौण्डादिभिरिति विज्ञास्यते ॥४०॥

---

प्र०— पञ्चमी । भयेनेति स्वरूपग्रहणादव्याप्तिं मत्वा वार्तिकारम्भः । व्याख्यानादर्थग्रहणे तु वृकेभ्यस्त्रास इत्यादावपि प्रसङ्गः ॥३७॥

सप्तमी । शौण्डादिभिरिति वक्तव्यमिति । बहुवचनमर्थग्रहणे सति पर्यायार्थं वा स्याद्बहुवचनान्तसमासविधानार्थं वा । गणपाठस्तु सन्नप्यसंगृहीतत्वादकिंचित्करः स्यादिति भावः । बहुवचननिर्देशादिति । धूर्तादीनां साहचर्यादारोपितशौण्डशब्दस्वरूपाणां शौण्डशब्दस्य च शौण्डशब्देनाभिधानात् । यथा छत्रिणो गच्छन्तीति भावः । वृत्त्यन्तर्भूतप्रसक्त्यादिक्रियापेक्षोऽक्षादीनामाधारभावः । अन्तःशब्दोऽत्र पठ्यते तद्योगे अवयविन आधारत्वविवक्षायां सप्तमी ॥४०॥

---

उ०— सप्तमी । अर्थग्रहणे सतीति । अर्थग्रहणद्वारा पर्यायार्थं स्यादित्यर्थः । भाष्ये—बहुवचनेति । 'गणपाठसहकृता'दिति शेषः । साहचर्यादारोपितशौण्डशब्दस्वरूपाणां धूर्तादीनां शौण्डशब्दस्य च तेनाभिधानादित्यन्वयः । यथेति । अच्छत्रिषु छत्रित्वारोपेण तत्र प्रयोग इति भावः । एवं 'काकेभ्यो दधी'त्यादावपि दध्युपघातकत्वसादृश्येन सर्वेषु काकत्वारोपात्प्रयोग इति बोध्यम् । कारकस्य शौण्डादिभिः सामर्थ्यायोगादाह—वृत्त्यन्तरिति । यदि तु यद्द्वारकं यस्य कारकत्वं तदन्वयद्वारैव तस्य क्रियान्वय इत्यङ्गीक्रियते तदा साक्षादपि सामर्थ्यमस्त्येवेति बोध्यम् । अन्तःशब्दोऽत्रेति । मध्यरूपाधिकरणे इत्यर्थकः । 'वनान्त'रित्युदाहरणम् । वनवर्तिमध्ये इत्यर्थस्तस्य । यस्त्वधिकरणशक्तिमात्रवृत्तिस्तेनाव्ययीभाव एव, अन्तर्वणमिति यथा । आधारविवक्षायामिति । आधारत्वविवक्षायामित्यर्थः ॥४०॥

---

१—इतः पूर्वं 'भयमीतभीतिभीभिः'[इति वार्तिकं क्वचित् ।
२—इतः पूर्वं 'भयनिर्गतजुगुप्सुभिः' इति वार्तिकं क्वचित् ।

## ध्वाङ्क्षेण क्षेपे ॥ २ । १ । ४२ ॥

### ध्वाङ्क्षेणेत्यर्थग्रहणम् ॥ १ ॥

ध्वाङ्क्षेण क्षेपेऽर्थग्रहणं कर्तव्यम् । इहापि यथा स्यात्–तीर्थकाक इति । क्षेप इत्युच्यते क इह क्षेपो नाम ? यथा तीर्थे काका न चिरं स्थातारो भवन्त्येवं यो गुरुकुलानि गत्वा न चिरं तिष्ठति स उच्यते 'तीर्थकाक' इति ॥४२॥

## कृत्यैर्ऋणे ॥ २ । १ । ४३ ॥

### कृत्यैर्नियोगे यद्ग्रहणम् ॥ १ ॥

कृत्यैर्नियोगे [ [1]यत्प्रत्यये च ] इति वक्तव्यम् । इहापि यथा स्यात्— पूर्वाह्णे गेयं साम । प्रातरध्येयोऽनुवाक इति ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । ऋण इत्येव सिद्धम् । इह यद्यस्य नियोगतः कार्यमृणं तस्य तद्भवति । तत्र ऋण इत्येव सिद्धम् ।

यद्ग्रहणं च कर्तव्यम् । इह मा भूत्—पूर्वाह्णे दातव्या भिक्षेति ॥४३॥

## क्षेपे ॥ २ । १ । ४७ ॥

किमुदाहरणम् ? अवतप्तेनकुलस्थितं त एतत् ॥ क्षेप इत्युच्यते क इह क्षेपो नाम ? यथावतप्ते नकुला न चिरं स्थातारो भवन्त्येवं कार्याण्यारभ्य यो न चिरं तिष्ठति स उच्यतेऽ'वतप्तेनकुलस्थितं त एत'दिति ॥ 'क्षेपे सप्तम्यन्तं क्तान्तेन सह समस्यत' इत्युच्यते, तत्र [ ते' ] सगतिकेन सनकुलेन च समासो न प्राप्नोति ।

### क्षेपे [2]गतिकसकारकपूर्व उक्तम् ॥ १ ॥

किमुक्तम् ? 'कृद्ग्रहणे गतिकारकपूर्वस्यापी'ति* ॥४७॥

प्र०– ध्वाङ्क्षेण । आधाराधेयमात्रावगमात्क्षेपासंभवं मत्वा पृच्छति । क इति । उपमानोपमेयभावेन कार्येष्वस्थिरत्वात्क्षेपः समासात्प्रतीयत इत्यर्थः ॥४२॥

कृत्यैर्ऋणे । पूर्वाह्णेगेयमिति । 'तत्पुरुषे कृति बहुल'मित्यलुक् । यद्यस्येति । अवश्यकर्तव्यत्वसामान्यादुपचारादन्यत्र प्यृणशब्दस्य प्रयोगदर्शनाद् गौणस्याप्यर्थस्य शास्त्रे लक्ष्यवशेन क्वचिद् ग्रहणादित्यर्थः ॥४३॥

क्षेपे । अवतप्तेनकुलेति । चापलादिति भावः ॥४७॥

उ०– कृत्यैर्ऋणे । भाष्ये—नियोगे इति । आवश्यके इत्यर्थः । गौणस्याप्यर्थस्येति । ऋण-ग्रहणमावश्यकोपलक्षणमित्यर्थः । यद्ग्रहणं चेति । यद्ग्रहणं त्वित्यर्थः ॥४३॥

१–क्वचिन्न । २–'सगतिकसकारकसमास उक्तम्' पा० । * १.४.१३ वा० ६. पृ० ३५६.

## पात्रेसमितादयश्च ॥ २ । १ । ४८ ॥

किमर्थश्चकारः ? एवकारार्थः । पात्रेसमितादय एव । क्व मा भूत् ? परमं [1]पात्रेसमिता इति ॥४८॥

## पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ।२।१।४९।

इह कस्माद्व्ययीभावो न भवति—एका नदी एकनदी । 'नदीभिः संख्ये'ति† प्राप्नोति । [ नैष[2] दोषः । ] इह कश्चित्समासः पूर्वपदार्थप्रधानः, कश्चिदुत्तरपदार्थप्रधानः, कश्चिदन्यपदार्थप्रधानः, कश्चिदुभयपदार्थप्रधानः । [3]पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्वः । न चात्र पूर्वपदार्थप्राधान्यं गम्यते ।

अथवाव्ययीभावः क्रियतां तत्पुरुष इति तत्पुरुषो भविष्यति विप्रतिषेधेन । भवेदेकसंज्ञाधिकारे सिद्धं परं कार्यत्वे तु न सिध्यति । आरम्भसामर्थ्याच्चाव्यीभावः प्राप्नोति, परंकार्यत्वाच्च तत्पुरुषः प्राप्नोति । परं कार्यत्वे च न

प्र०— पात्रे । परमं पात्रेसमिता इति । वैयधिकरण्येऽपि विस्पष्टपटुवत्सुप्सुपेति समासः प्राप्नोति । परममिति क्रियाविशेषणम् । '[1]परमाः पात्रेसमिता' इति तु पाठो ज्यायान् ॥४८॥

पूर्व । एकशब्दप्रसङ्गेन 'नदीभिश्चे'त्यत्रोक्तं वस्तु स्मारयितुमाह-इह कस्मादिति । न चात्रेति । एकत्वविशेषणान्नद्यत्र प्राधान्येन प्रतीयते । शिष्टं भाष्यं तत्रैव

उ०– पूर्वकालै । भाष्ये—इह कस्मादिति । समाहारद्विगोरिवास्यापि बाध्यसामान्यचिन्तया बाधः स्यादिति प्रश्नः । एकत्वविशेषणादिति । एकत्वेन विशिष्टस्य विशेषणत्वादित्यर्थः । नद्यत्रेति । नदीत्वेन नदी प्रधानं न त्वेकत्वेनेत्यर्थः । विप्रतिषेधेनेति । एकशब्दाति-

१–'परमाः पात्रेसमिता' इति तु पाठो ज्यायानिति कैयटः । † नदीभिश्च २. १. २०.
२–क्वचिन्न । ३–'पूर्वपदार्थप्रधानोऽव्ययीभाव इति पूर्वाचार्यपरिभाषितम्' ( शब्दकौस्तुभः २. १. ४ )

दोषः । कथम् ? नदीभिः समाहारेऽव्ययीभावो वक्तव्यः । स चावश्यं वक्तव्यः । सर्वमेकनदीतरे† ॥४६॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ।

## तद्धितार्थोत्तरपदसमाहारे च ॥ २ । १ । ५१ ॥

समाहार इति कोऽयं शब्दः ? समाङ्पूर्वाद्धरतेः कर्मसाधनो घञ्—समाह्रियते समाहार इति ॥ यदि कर्मसाधनः पञ्च कुमार्यः समाहृताः पञ्चकुमारि दशकुमारि 'गोस्त्रियोरुपसर्जनस्य' [ १. २. ४८ ] इति ह्रस्वत्वं न प्राप्नोति,

---

प्र०—व्याख्यातम् ॥४९॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे द्वितीयस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ।

तद्धितार्थो । समाहार इति कोऽयमिति । किं भावसाधनोऽथ कर्मसाधनः । तत्र भावसाधने द्रव्यस्यानयनादिकं न प्राप्नोति । समूहरूपत्वाच्च समाहारस्य तद्धितार्थग्रहणेन समासस्य सिद्धत्वाद्भेदेनोपादानमनर्थकं प्राप्नोति । कर्मसाधनपक्षे तु उपसर्जनह्रस्वत्वं न प्राप्नोति, 'द्विगुरेकवचन'मित्येतच्च वक्तव्यं भवतीति प्रश्नः । कर्मसाधन इति । द्रव्यस्यैव कर्मसंबन्धदर्शनादिति भावः । संज्ञाग्रहणं च घञ्विधौ प्रत्याख्यातमित्यसंज्ञायामपि घञ् भवति ॥ यदीति । कुमार्यर्थस्य प्राधान्यात् समासशास्त्रे च प्रथमानिर्देशाभावाद्ध्रस्वाप्रसङ्गः । यद्यप्यत्र नपुंसकह्रस्वत्वं सिद्ध्यति, पञ्चखट्वीति तु न सिद्ध्यति । अत्र हि वाबन्त इति पक्षे स्त्रीत्वम् । पक्षे क्लीबत्वम् । तत्र क्लीबत्वे ह्रस्वत्वे

---

उ०—रिक्तसंख्याशब्देऽव्ययीभावस्य चारितार्थ्यमिति भावः । समाहारे इति । स च नात्रेति भावः ॥४९॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते द्वितीयस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ।

तद्धितार्थो । इत्येतच्च वक्तव्यमिति । समाह्रियमाणां प्रधानानां बहुत्वादिति भावः । कुमार्यर्थस्य प्राधान्यादिति । एवं च प्रधानत्वेन नानाक्रियासम्बन्धयोग्यतया नानाविभक्त्युत्पत्ते'रेकविभक्ती'ति नोपसर्जनत्वमिति भावः । पक्षे स्त्रीत्वमिति । एवं च स्त्रीत्वेऽप्यनुपसर्जनत्वादह्रस्वत्वेऽनदन्तत्वान्ङीबभावे 'पञ्चखट्वा' इति स्यादिति तात्पर्यम् । क्वचित्तु मूल

---

† नदीपौर्णमास्याग्रहायणीभ्यः ५. ४. ११०; अव्ययीभावश्च २. ४. १८.

'द्विगुरेकवचनम्' [ २. ४. १ ] इत्येतच्च वक्तव्यम् ।

एवं तर्हि भावसाधनो भविष्यति—समाहरणं समाहारः । अथ भावसाधने सति किमभिधीयते ? यत्तदौत्तराधर्यम् । कः पुनर्गवां समाहारः ? यत्तदर्जनं क्रयणं भिक्षणमपहरणं वा । यद्येवं विक्षिप्तेषु पूलेषु गोषु चरन्तीषु न सिध्यति ।

एवं तर्हि समभ्याशीकरणं समाहारः । एवमपि पञ्चग्रामी षण्णगरी त्रिपुरीति न सिध्यति । किं कारणम् ? समेकत्ववाच्याङाभिमुख्ये वर्तते, हरतिर्देशान्तरप्रापणे । नावश्यं हरतिर्देशान्तरप्रापण एव वर्तते । किं तर्हि ? सादृश्येऽपि वर्तते । तद्यथा,—मातुरनुहरति, पितुरनुहरतीति ।

प्र०—सति पञ्चखट्वमिति सिध्यति । स्त्रीत्वे त्वनुपसर्जनत्वादह्रस्वत्वेऽनदन्तत्वान्ङीबभावात्पञ्चखट्वा इति स्यात् । द्विगुरिति । अनेकार्थत्वात्समासस्येति भावः । अथेति । लोके समाहार एकप्रदेशे संघट्टनमुच्यते । तस्य पञ्चग्राम्यादावसंभव इति भावः । यत्तदिति । पञ्चपूल्यादौ तस्य संभवादिति भावः ॥ कः पुनरिति । औत्तराधर्यस्यासंभवात्प्रश्नः । यत्तदर्जनमिति । एकस्यां क्रियायां गुणे वा बुद्ध्या समीपीकरणं समाहार इत्यर्थो विवक्षितः । तत्रार्जननिमित्तत्वादर्जनं समाहार इत्युक्तम् । तच्च क्रयादिना भवतीति तन्निर्देशः कृतः । यथोक्तमप्रतिपद्यमानः पर आह—यद्येवमिति । गोष्विति । नानास्वामिकानामर्जनाभावमाह ।

समभ्याशीकरणमिति । समीपीकरणमित्यर्थः । एवमपीति । ग्रामादीनां नियतदेशावस्थानत्वात्समीपीकरणाभाव इति भावः । यदायं ग्रामशब्दो देशविशेषवाची तदायं दोषः । पुरुषवाचिनि तु न दोषः । तेषां समीपीकरणसंभवात् । समेकत्ववाचीति । भिन्नदेशानामेकवर्गीकरणेन देशान्तरप्रापणं समाहारः । स च ग्रामादीनां नास्तीति भावः । नावश्यमिति । ततश्च ग्रामादीनामपि लाभादिसदृशधर्मा-

उ०—एवेदं दृश्यते । परे तु नात्र नपुंसकह्रस्वप्राप्तिः, एतद्भाष्यप्रामाण्येनानास्थार्धर्चादित्वेन पुंस्त्वस्यापि स्वीकारात् । 'पञ्चकुमारि'रित्यत्र विसर्गो लेखकप्रमादाद् भ्रष्टः । अत एव 'स नपुंसक'मिति शास्त्रं 'विभाषा वृक्षे'ति सूत्रे 'लिङ्गमशिष्य'मित्यादिना प्रत्याख्यातम् । व्यभिचारदर्शनात्तन्न कार्यमिति तदाशयः । अन्यथा संख्यादेरपि लोकाश्रयत्वादत्रैव तत्कथं नेत्यलम् ॥ बुद्ध्या—हस्तादिवत्करणभूतया । एकस्यां क्रियायां—क्रियारूपे वस्तुनि । समीपीकरणं—संघटनमित्यर्थः । अर्जननिमित्तत्वादिति बहुव्रीहिः, अर्जने हि 'एतावन्मयेदमर्जित'मित्येकक्रियायां संघटनं भवतीति भावः । अर्जनं—स्वस्वत्वाक्रान्तताकरणम् । भाष्ये—विक्षिप्तेष्विति । विक्रयार्थं विक्षिप्य स्थापितेष्वित्यर्थः । तत्र नौत्तराधर्यमिति भावः ।

समीपीकरणमित्यर्थ इति । तच्चैकदेशे क्रियायां, बुद्धौ वेत्यन्यत् । एकवर्गीकरणेनेति फलरूपे हेतौ तृतीया । आभिमुख्यार्थोङा वर्गीकरणं लब्धम् ॥ भाष्ये—सादृश्येऽपि वर्तत इति । एकक्रियाकारकत्वाविरूपं सादृश्यमेव समाहारशब्दार्थः, अनुहरतिवत् ।

अथवा पञ्चग्रामी षण्णगरी त्रिपुरीति नैवेदमियत्येवावतिष्ठते। अवश्यमसौ ततः किंचिदाकाङ्क्षति क्रियां गुणं वा। यदाकाङ्क्षति तदेकं स च समाहारः।

अयं तर्हि भावसाधने सति दोषः—'पञ्चपूल्यानीयता'[1]मिति भावानयने चोदिते द्रव्यानयनं न प्राप्नोति। नैष दोषः। इदं तावदयं प्रष्टव्यः—अथेह 'गौरनुबन्ध्योऽजोऽग्नीषोमीय' इति कथमाकृतौ चोदितायां द्रव्य आरम्भणालम्भनप्रोक्षणविशसनानि क्रियन्त इति? असंभवात्। आकृतौ आरम्भणादीनां संभवो नास्तीति कृत्वाकृतिसहचरिते द्रव्य आरम्भणादीनि क्रियन्ते। इदमप्येवं ज्ञातीयकमेव। असंभवाद्भावानयनस्य द्रव्यानयनं भविष्यति॥ अथवा 'अव्यतिरेकाद् द्रव्याकृत्योः'।

किं पुनर्द्विगुसंज्ञा प्रत्ययोत्तरपदयोर्भवति? एवं भवितुमर्हति।

प्र०—नुगमात्समाहारसद्भावः।

अथवेति। केवलेन पदार्थेन व्यवहाराभावादवश्यं क्रिया गुणो वापेक्ष्यते, तत्र च बुद्ध्या भिन्नदेशानामप्यस्ति समीपीकरणमित्यर्थः। स च समाहार इति। तन्निमित्तत्वादित्यर्थः। असंभवादिति। द्रव्यानयनमन्तरेणेत्यर्थः॥ अथवेति। पूर्वमुपायभावेनाग्न्यानयने पात्रस्येव द्रव्यस्य क्रियायामनुप्रवेशः कथितः। इदानीं तु वास्तवभेदाभावाद् बुद्धिपरिकल्पितभेदसद्भावादिति विशेषः॥ किं पुनरिति। काश-

उ०— नन्वनुपूर्वकस्यैव तत्र शक्तिरत आह भाष्ये—अथवेति। नैवेदमिति। पञ्चग्रामीत्यादिपदम्। 'इय'मिति पाठे 'उक्ति'रिति शेषः। इयत्येव—पञ्चग्रामादिमात्र एव। असौ—प्रयोक्ता, द्रष्टा वा। ततः—ग्रामादितः। 'अतिरिक्त'मिति शेषः। आकाङ्क्षति—बोधयितुम्। क्रियां—नदीतीरस्थत्वादिरूपाम्। गुणं—समृद्धत्वादिरूपम्। तत्र च बुद्ध्येति। तत्र—क्रियादौ, बुद्ध्या—करणभूतया, तेषां सामीप्यं संघटनं क्रियत इत्यर्थः॥ असम्भवादिति। जातेरेवानयनान्वयः, क्रिया तु तत्रासम्भवात्तत्सम्बद्धे द्रव्ये इति द्रव्यद्वारा तदानयनादीति भावः। तद् ध्वनयन्नाह—अग्न्यानयने पात्रस्येवेति। 'अग्निरानेय' इति बोधिते शब्दाबुद्धपात्रस्यापि यथानयनं केवलतदानयनासम्भवात्तथेहापीति भावः। मञ्जूषायां चेदमुपपादितम्। वास्तवभेदाभावादिति। द्रव्याकृत्योरिव समाहारसमाह्रियमाणयोरपि वास्तवभेदाभाव इति भावः॥ नन्वेवं घटानां समाहार इति न स्यादत आह—बुद्धिपरिकल्पितेति। अतोऽयं बुद्धिकल्पितोऽतो वास्तवभेदस्यैवाभाव इति भावः। अव्यतिरेकादित्यस्य व्यतिरेकमात्रस्याभावादित्यर्थ इति भावः।

१—'पञ्चफली' पा०।

**द्विगुसंज्ञा प्रत्ययोत्तरपदयोश्चेदितरेतराश्रयत्वादप्रसिद्धिः ॥ १ ॥**

'द्विगुसंज्ञा प्रत्ययोत्तरपदयोश्चेदितरेतराश्रयत्वादप्रसिद्धिः'। केतरेतराश्रयता ? द्विगुसंज्ञानिमित्ते प्रत्योत्तरपदे, प्रत्ययोत्तरपदनिमित्ता च द्विगुसंज्ञा, तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्पन्ते।

एवं तर्हि 'अर्थे' इति वक्ष्यामि।

**अर्थे चेत्तद्धितानुत्पत्तिर्बहुव्रीहिवत् ॥ २ ॥**

अर्थे चेत्तद्धितोत्पत्तिर्न प्राप्नोति। पाञ्चनापितिः द्वैमातुरः त्रैमातुरः*। किं कारणम् ? द्विगुनोक्तत्वाद्, बहुव्रीहिवत्। तद्यथा,—चित्रगुः शबल-

प्र०—कृत्स्नस्य 'प्रत्ययोत्तरपदयो'रिति सूत्रं, तावद्विचारयति। पाणिनीयं तु पश्चाद्विचारयिष्यति। दोषस्य सुप्रतिविधानत्वादाह—एवमिति।

द्विगुसंज्ञानिमित्ते इति। पञ्चसु कपालेषु संस्कृत इति समासे सति प्रातिपदिकत्वात्प्रत्ययेन भाव्यं, प्रत्यये च परतो द्विगुरितीतरेतराश्रयः। पञ्च गावो धनमस्येत्यत्रापि 'पदद्वयस्य तत्पुरुषे कृते बहुव्रीहिः क्रियते' इति पक्षाश्रयेणेतरेतराश्रयोद्भावनम्। 'धन'शब्दस्योत्तरपदत्वे सति पूर्वयोः पदयोः समासेन भवितव्यं सति च पदद्वयस्य समासे बहुव्रीहिणा, तस्मिन्सति धनशब्दस्योत्तरपदत्वेन। सुप्सुपेति संख्याया विवक्षितत्वात् त्रयाणां पदानां बहुव्रीहिणा न भवितव्यमिति मन्यते। यदा त्वनेकग्रहणात्पदत्रयस्यापि बहुव्रीहिर्भवति तदा नास्तीतरेतराश्रयदोषः॥ अथवायं भावः—समास इत्यन्वर्थसंज्ञेयं, समसनं समासः—सङ्क्षेपः। स चासंक्षिप्तानां क्रियते। यदि च पूर्वं बहुव्रीहिः प्रवर्त्तते तदा संक्षिप्तत्वादेकार्थीभावात्किमपरः सङ्क्षेपः क्रियते। तस्मात्तत्पुरुषगर्भो बहुव्रीहिः कर्त्तव्यस्तत्र चेतरेतराश्रयत्वम्॥ पाणिनीयलक्षणं निरूपयितुमाह—एवं तर्हीति। तद्धितार्थे—तद्धिताभिधेये अनुत्पन्न एव तद्धिते द्विगुरिति नास्त्यन्योन्याश्रयत्वमिति भावः।

अर्थे चेदिति। यदि तद्धितार्थेऽभिधेये समासः क्रियते तदा समासेन तद्धित-

उ०— द्विगोरित्येवमविधानात्कथं प्रत्ययो द्विगुनिमित्तोऽत आह—पञ्चस्विति। द्विगुनिमित्तप्रातिपदिकत्वनिमित्तत्वात्तन्निमित्तत्वमिति भावः। नन्वेवमप्युत्तरपदे न सः, द्विगोरुत्तरपदनिमित्तत्वेऽपि बहुव्रीहेस्त्रयाणामपि भावेन उत्तरपदत्वस्य द्विगुनिमित्तत्वाभावादत आह—पञ्च गाव इति। 'तत्पुरुषे कृत एव बहुव्रीहिर्न प्रा'गिति कुतोऽत आह—सुप्सुपेति। संख्याया विवक्षितत्वमुपलक्षणं सुबन्तत्वं समुदाये न पर्याप्तमित्यस्यार्थस्य। 'अविशेषेण बहुव्रीहि'रिति पक्षेऽप्याह—अथवेति। संक्षिप्तत्वे हेतुरेकार्थीभावादिति। 'अर्थ'शब्दो न प्रयोजनवाचीत्याह—तद्धिताभिधेय इति। तत्र वाच्ये समास इत्यर्थः।

१—'द्विगुनिमित्ते' पा०। * अत इञ्; मातुरुत्संख्यासंभद्रपूर्वायाः ४. १. ९५; ११५.

गुरिति बहुव्रीहिणोक्तत्वान्मत्वर्थस्य मत्वर्थीयो न भवति ।

एवं तर्हि 'समासतद्धितविधा'विति वक्ष्यामि ।

**समासतद्धितविधाविति चेदन्यत्र समाससंज्ञाभावः ॥ ३ ॥**

समासतद्धितविधाविति चेदन्यत्र समाससंज्ञा न प्राप्नोति । क्वान्यत्र ? स्वरे । पञ्चारत्निः दशारत्निः । 'इगन्ते द्विगा'वित्येष स्वरो[†] न प्राप्नोति ।

**सिद्धं तु प्रत्ययोत्तरपदयोश्चेति वचनात् ॥ ४ ॥**

सिद्धमेतत् । कथम् ? 'प्रत्ययोत्तरपदयोश्चेति वचनात्' 'प्रत्ययोत्तरपदयोर्द्विगुसंज्ञा भवती'ति वक्तव्यम् ॥ ननु चोक्तं 'द्विगुसंज्ञा प्रत्ययोत्तरपदयोश्चेदितरेतराश्रयत्वादप्रसिद्धि'रिति । नैष दोषः । इतरेतराश्रयमात्रमेतच्चोदितम्, सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि 'सिद्धं तु नित्यशब्दत्वा'दिति[‡] । नेदं तुल्यमन्यैरितरेतराश्रयैः । न हि संज्ञा नित्या ।

प्र०–स्वार्थस्याभिहितत्वात्प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावात् 'पाञ्चनापिति'रित्यादौ तद्धितो न प्राप्नोति ।

समासतद्धितविधाविति । न्यासद्वये दोषदर्शनान्न्यासान्तरमाश्रीयते । 'समासे विधीयमाने तद्धिते च दिक्संख्ये सुपा सह समस्येते' इति लक्षणाश्रयान्नास्तीतरेतराश्रयदोषः, परनिमित्तानपेक्षणात्तद्विषये प्रागेव समासविधानादिति भावः । अन्यत्रेति । यथा स्वरे पराङ्गवद्भावो विधीयमानः षत्वणत्वयोर्न भवत्येवं स्वरे द्विगुसंज्ञा न स्यात् । 'इगन्ते'ति च लक्षणं समाहारद्विगौ सावकाशम् । यानि तु 'द्विगोर्लुगनपत्ये' इत्यादीनि तेषु वचनसामर्थ्याद् द्विगुसंज्ञा प्रवर्तत इत्यभिप्रायेणान्यत्र सावकासे स्वरे दोष उक्तः । पञ्चारत्निरिति । पञ्चारत्नयः प्रमाणमस्येति 'प्रमाणे लो द्विगोर्नित्य'मिति मात्रचो लुक् ।

सिद्धं त्विति । पाञ्चनापितिः पञ्चगवधन इति च स्थितानामेव शब्दानामनुशासनं क्रियते । तत्र प्रत्ययोत्तरपदे स्थिते एवेति नास्ति दोषः । न हि संज्ञेति । प्रत्यय-

उ०– प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावादिति । वाचकप्रत्ययस्थले स आवश्यक इति भावः । द्वितीयं दोषमुद्धर्तुमाह—परनिमित्तेत्यादि ॥ यानि तु द्विगोरिति । 'द्विगोः परस्य तद्धितस्य लु'गिति सूत्रार्थे समाहारद्विगोः परस्य तद्धितस्य लुगर्थमिदमपि सावकाशमेव, 'अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपी'ति वार्त्तिकात् । द्विगोर्निमित्तं यस्तद्धि इत्यर्थे तु तत्र दोषस्यैवाभाव इति चिन्त्यम् ।

† इगन्तकालकपालभगालशरावेषु द्विगौ ६. २. २९. ‡ १. १. १ वा० ६. पृ० १३४.

एवं तर्हि भाविनी संज्ञा विज्ञास्यते। तद्यथा,—कश्चित्कंचित्तन्तुवायमाह—'अस्य सूत्रस्य शाटकं वये'ति। स पश्यति यदि शाटको न वातव्योऽथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्। भाविनी खल्वस्य संज्ञाभिप्रेता, स मन्ये वातव्यो यस्मिन्नुते 'शाटक' इत्येतद्भवतीति। एवमिहापि तस्मिन् द्विगुर्भवति यस्याभिनिर्वृत्तस्य 'प्रत्यय' 'उत्तरपद'मिति चैते संज्ञे भविष्यतः।

अथवा पुनरस्तु 'अर्थे' इति। ननु चोक्त'मर्थे चेत्तद्धितानुत्पत्तिर्बहुव्रीहिव'दिति॥ नैष दोषः। नावश्यमर्थशब्दोऽभिधेय एव वर्तते। किं तर्हि? स्यादथऽपि वर्तते। तद्यथा,—दारार्थं घटामहे। धनार्थं भिक्षामहे। दारा नः स्युर्धनानि नः स्युरिति। एवमिहापि तद्धितार्थे द्विगुर्भवति तद्धितः स्यादिति।

**द्विगोर्वा लुग्वचनं ज्ञापकं तद्धितोत्पत्तेः॥ ५॥**

अथवा यदयं 'द्विगोर्लुगनपत्ये' [ ४. १. ८८ ] इति द्विगोरुत्तरस्य तद्धितस्य लुकं शास्ति तज्ज्ञापयत्याचार्य 'उत्पद्यते द्विगोस्तद्धित' इति।

**समाहारसमूहयोरविशेषात्समाहारग्रहणानर्थक्यं तद्धितार्थेन कृतत्वात्॥ ६॥**

समाहारः समूह इत्यविशिष्टावेतावर्थौ। समाहारसमूहयोरविशेषात्समाहार-

प्र०–संज्ञासंबद्धं, समाससंज्ञाप्रतिबद्धं चोत्तरपदत्वमाश्रित्यायं समासः क्रियते न च प्रत्ययसमाससंज्ञे लोके स्तः॥ एवं तर्हीति। प्रत्ययोत्तरपदयोरिति विषयसप्तमी, न तु परसप्तमीत्यत्र तात्पर्यम्॥ पाणिनीयं समर्थयितुमाह—अथवेति। तद्धितश्चासावर्थः प्रयोजनं तस्मिन् कर्तव्ये द्विगुर्भवतीत्यर्थः। स्यादिति प्रार्थने लिङ्। अत्रापि पक्षे स्वरे द्विगुसंज्ञा न प्राप्नोतीत्याह—द्विगोर्वेति। अभिधेयवचनेऽप्यर्थशब्दे तद्धितानुत्पत्तिदोषो नास्तीत्यर्थः।

समाहारसमूहयोरिति। स्वरूपपदार्थकत्वाद्भिन्नार्थत्वादेकशेषाभावः। अवि-

उ०– प्रत्ययसंज्ञासम्बद्धमिति। प्रत्ययशब्देनोपादानादिति भावः। लोके स्त इति। नित्यत्वेऽपि संज्ञानां तदीयसंकेतग्रहस्य शास्त्रनिरपेक्षं लोकेऽसत्त्वमिति भावः॥ भाष्ये—एते संज्ञे इति। उत्तरपदशब्दोऽपि समाससंज्ञानिमित्तकत्वात्संज्ञैवेति भावः॥ द्विगोर्वा लुग्वचनं ज्ञापकमिति। एवं 'तद्धितार्थे विषयभूत' इत्यर्थेन न सिध्यति। न चात्र पक्षेऽर्थग्रहणं व्यर्थं, 'तद्धिते विषयभूत' इत्येव वक्तुं युक्तत्वादिति वाच्यम्, स्वरे दोषप्रसङ्गात्। वस्तुतो ज्ञापकेनायमेवार्थो बोध्यत इति बोध्यम्।

भिन्नार्थत्वे हेतुः—'स्वरूपे'त्यादिः। समाहार एव तद्धितलुकीति। नियमस्य सजा-

ग्रहणमनर्थकम्। किं कारणम्? 'तद्धितार्थेन कृतत्वात्'। 'तद्धितार्थे द्विगु'-रित्येवमत्र द्विगुर्भविष्यति*।

यदि 'तद्धितार्थे द्विगु'रित्येवमत्र द्विगुर्भवति तद्धितोत्पत्तिः प्राप्नोति। उत्पद्यताम्, लुग्भविष्यति†। लुक्कृतानि प्राप्नुवन्ति। कानि? पञ्चपूली दशपूली—'अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि' [४. १. २२] इति प्रतिषेधः प्राप्नोति। पञ्चगवम् दशगवम्—'गोरतद्धितलुकि' [५.४.९२] इति टच् न प्राप्नोति।

नैष दोषः। अविशेषेण‡ 'द्विगोर्ङीब्भवती'त्युक्त्वा 'अपरिमाणबिस्ताचित-कम्बल्येभ्यः समाहार' इति वक्ष्यामि। तन्नियमार्थं भविष्यति—'समाहार एव नान्यत्रे'ति।

गोरकारो द्विगोः समाहारे। अविशेषेण 'गोष्टज्भवती'त्युक्त्वा 'द्विगोः समाहार' इति वक्ष्यामि। तन्नियमार्थं भविष्यति—'समाहार एव नान्यत्रे'ति।

## अभिधानार्थं तु ॥ ७॥

अभिधानार्थं तु समाहारग्रहणं कर्तव्यम्। समाहारेणाभिधानं यथा स्यात्, तद्धितार्थेन मा भूदिति। किं च स्यात्? तद्धितोत्पत्तिः प्रसज्येत।

प्र०—शेषादिति। एकार्थत्वादित्यर्थः॥ प्रतिषेधः प्राप्नोतीति। यथा पञ्चभिरश्वैः क्रीता पञ्चाश्वेति। अपरिमाणेति। 'न तद्धितलुकि' 'अतद्धितलुकी'त्यपास्य सूत्रद्वयेऽपि समाहारग्रहणं क्रियते, 'समाहार एव तद्धितलुकि ङीप्समासान्तौ भवतो नान्यत्रे'ति नियमविधानान्नास्ति दोषः। अविशेषेणेति। 'गो'रित्येकं सूत्रं क्रियते। गोशब्दान्तस्य तत्पुरुषस्य टज्भवति, ब्राह्मणगव इति। ततो 'द्विगोः समाहार' इति द्वितीयं सूत्रं नियमार्थमित्यर्थः।

अभिधानार्थं त्विति। समासेन समाहारस्याभिधानं यथा स्यात्तद्धितेन मा भूदित्यर्थः। समाहारेणेति। समाहारेऽभिधेये द्विगुरित्यभिधानं यथा स्यात्। एवं चाभिधाने समासेनोक्तत्वात्तद्धितो नोत्पद्यते। तद्धितार्थेनेति। 'तद्धितार्थे द्विगु'रित्य-

उ०-तीयापेक्षत्वात्। तेन 'पञ्चगवधन' इत्यादौ टच्सिद्धिरिति भावः। भाष्ये—द्विगोः समाहार इति। अनवयवभूतद्विगोश्चेत्समाहार एवेत्यर्थः। तेन 'पञ्चगवधन'मित्यस्य सिद्धिः।

समाहारेणेति। समाहारेण समाहारशब्दप्रतिपाद्येनाभिधानं विधानं यथा स्यादित्यर्थः। एवं तद्धितार्थेन—तद्धितार्थशब्दप्रतिपाद्येनेत्यर्थः। तत्फलितमाह—समाहाराभिधेय

* तद्धितार्थोत्तरपदसमाहारे च २. १. ५१ † द्विगोर्लुगनपत्ये ४. १. ८८.
‡ द्विगोः ४. १. २१. १—इदं वार्तिकमिति केचित्।

उत्पद्यताम्, लुग्भविष्यति । लुक्कृतानि प्राप्नुवन्ति । सर्वाणि परिहृतानि । न सर्वाणि परिहृतानि । पञ्चकुमारि दशकुमारि—'लुक्तद्धितलुकि' [१.२.४६] इति ङीपो लुक्प्रसज्येत ।

## द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ॥ ८ ॥

द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासो वक्तव्यः । वाग्दृषदप्रियः छत्रोपानह्प्रियः । पञ्चगवप्रियः दशगवप्रियः* । किं प्रयोजनम् ? समुदायवृत्तावनयवानां मा कदाचिदवृत्तिर्भूदिति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । इह द्वौ पक्षौ वृत्तिपक्षोऽवृत्तिपक्षश्च । यदा वृत्तिपक्षस्तदा सर्वेषामेव वृत्तिः । यदात्ववृत्तिपक्षस्तदा सर्वेषामवृत्तिः ।

प्र०–भिधानं मा भूदित्यर्थः । एवमभिधाने हि तद्धितः स्यात् । अर्थशब्दस्य स्वादर्थत्वाज्ज्ञापकाद्वा ।

उत्तरपदप्रसङ्गेन विचारान्तरमाह—द्वन्द्वेति । वाग्दृषदप्रिय इति । वाक् च दृषच्च प्रिये अस्य, पञ्च गावः प्रिया अस्येति त्रिपदे बहुव्रीहौ कृते उत्तरपदे परतो महाविभाषाधिकाराद्विकल्पेन द्वन्द्वतत्पुरुषौ प्राप्तौ, नित्यौ तु वक्तव्यौ । अन्यथा समासाभावपक्षे समासान्तो न स्यात् । 'जातिरप्राणिना'मिति चात्र समाहारद्वन्द्वः । यदि त्वितरेतरयोगेऽप्यत्र द्वन्द्वः स्यात्तदा कार्ये नैव भेदः स्यात् । समुदायवृत्ताविति । बहुव्रीहावित्यर्थः ।। वृत्तिपक्ष इति । एकार्थीभाव इत्यर्थः । न च समुदायस्यैकार्थीभावे तदभावोऽवयवयोर्युक्तः, विरोधादित्यर्थः । यदावृत्तिरिति । द्वन्द्वतत्पुरुषभाविनां पदानां यदा व्यपेक्षालक्षणं सामर्थ्यं तदा बहुव्रीहिर्न भवतीत्यर्थः ।

उ०–इति । एवं च समाहारशब्देनेव समासेनापि तस्य पुंस्त्वेनैव बोधः । नपुंसकत्वातिदेशात्तु तत्प्रयुक्तं कार्यमात्रमिति बोध्यम् ।

तदा कार्ये नैव भेदः स्यादिति । स्वरे भेदस्य सत्त्वात्समर्थसूत्रभाष्ये उक्तत्वाच्च चिन्त्यमेतत् । क्वचित्तु रूपे नैव भेदः स्यादिति पाठः । क्वचित्तु कार्येणैवेति पाठः । स्वररूपकार्येणैव भेदो न तु रूपेणेत्यर्थः । भाष्ये—अवयवानामिति । द्वन्द्वतत्पुरुषविषयाणामित्यर्थः ॥ तदभावोऽवयवयोरिति । न चैकार्थीभावेऽपि विभाषानुवृत्तिसामर्थ्यात्समासविकल्पोऽस्तु, तस्य सर्वत्र सामर्थ्येनैव सम्बन्धस्य क्लृप्ततया समासेनासम्बन्धात् ॥ नन्वेवं द्वन्द्वयोग्यपदयोर्निष्कृष्य चार्थान्तर्भावेणैकार्थीभावे मानाभावः, पदत्रयस्यैव तथैकार्थीभावकल्पनात् । एवं च द्वन्द्वो दुर्लभः । इदं वचनं तु प्रत्याख्यातम् । 'चार्थे' इति सूत्रं तु धवखदिरावित्यादौ चरितार्थम् । किं चैवं द्वौ मुनी वंश्यौ प्रियौ यस्येति बहुव्रीहौ पूर्वयोरव्ययीभावापत्तिः ।

* द्वन्द्वाच्चुदषहान्तात् समाहारे; गोरतद्धितलुकि ५. ४. १०६; ९२.

## उत्तरपदेन परिमाणिना द्विगोः समासवचनम् ॥ ९ ॥

उत्तरपदेन परिमाणिना द्विगोः समासो वक्तव्यः । [ द्वौ मासौ जातस्य यस्य स[1] ] द्विमासजातः त्रिमासजातः† । किं पुनः कारणं न सिध्यति ? सुप्सुपेति‡ वर्तते । एवं तर्हीदं स्यात्—द्वौ मासौ द्विमासम् द्विमासं जातस्येति । नैवं शक्यम् । स्वरे हि दोषः स्यात् । द्विमासजात इति प्राप्नोति* । द्विमासजात इति चेष्यते†† । द्व्यह्नजातश्च न सिध्यति । द्व्यहजात इति प्राप्नोति, न चैवं भवितव्यम् । भवितव्यं च यदा समाहारे द्विगुः । द्व्यह्नजातस्तु न सिध्यति‡‡ ।

किमुच्यते 'परिमाणिने'ति न पुनरन्यत्रापि—पञ्चगवप्रियः दशगवप्रियः ।

## अन्यत्र समुदायबहुव्रीहित्वादुत्तरपदप्रसिद्धिः ॥ १० ॥

अन्यत्र समुदायो बहुव्रीहिसंज्ञः । अन्यत्र समुदायबहुव्रीहित्वादुत्तरपदं

प्र०– द्विगोरिति । द्विगोर्निष्पत्तय इत्यर्थः । द्वौ मासौ जातस्येति । 'कालाः परिमाणिने'ति त्रिपदे समास इष्यते । स च 'सुप्सुपे'ति संख्याया विवक्षितत्वान्न प्राप्नोति । तस्मिंश्च कृते उत्तरपदे परतो द्विमासशब्दयोः समासः क्रियते, कालान्ते द्विगौ पूर्वपद प्रकृतिस्वरो यथा स्यात् । द्व्यह्नजात इत्यत्र च समासान्तः । द्वौ मासौ द्विमासमिति, समाहारे द्विगुः । 'पात्रादिभ्यः प्रतिषेध' इति स्त्रीत्वाभावः । स्वरे हि दोष इति । समासान्तोदात्तत्वेन जाताकार उदात्तः स्यादित्यर्थः ।

अन्यत्रेति । 'पञ्चगवधन' इत्यादौ बहुव्रीहौ कृते पूर्वयोः समासान्तादिकार्य-

उ०–तथा च स्वरे दोषः । एवं द्वित्रिंशत्प्रिया अस्येति शैषिकबहुव्रीहौ 'संख्ययाव्यये'त्यवान्तरबहुव्रीह्यापत्तौ 'बहुव्रीहौ संख्येय' इति डजापत्तिः, सुचः श्रवणानापत्तिश्चेतिः चेन्न । निष्कृष्यैकार्थीभावस्यैव समासादिनिमित्तत्वे मानाभावात्, समासान्तरं त्वनभिधानान्नेति अधिकषष्टिवर्षप्रसङ्गेन समर्थसूत्रशेषे भाष्ये—ध्वनितम् । द्वन्द्वोऽपि बहुव्रीह्यवयव एव, न द्वन्द्वावयव इति 'होतृपोतृनेष्टोद्गातार' इति भाष्येण ध्वनितम् । नव्यानां तत्र प्रमाद एवेति दिक् ।

भाष्ये—परिमाणिनेति । परिमाणिवाचकोत्तरपदेनेत्यर्थः । समासपदं च सामर्थ्यात्तत्पुरुषपरम् । एवं च तेन करणेन पूर्वयोर्द्विगुसिद्धये त्रयाणां तत्पुरुषो वक्तव्य इत्यर्थः ॥ ननु द्विगोरन्येन समासाभावाद् द्विगोः समास इत्ययुक्तमत आह—द्विगोरिति । 'निष्पत्तये' इति पाठः । 'निष्पत्ता'विति पाठे, निष्पादने कर्तव्य इत्यर्थः । तदुपपादयति—द्वौ मासाविति ॥ भाष्ये—द्व्यह्नजातश्चेति । 'न संख्यादेः समाहार' इति तत्र समासान्तनिषेधादिति भावः ।

१–अयं पाठः क्वचिन्न । † कालाः परिमाणिना २. २. ५.
‡ सुबामन्त्रिते पराङ्गवत् स्वरे; सह सुपा २. १. २; ४.
* समासस्य ६. १. २२३. †† इगन्तकालकपालभगालशरावेषु द्विगौ ६. २. २९.
‡‡ राजाहःसखिभ्यष्टच्; अह्नोऽह्न एतेभ्यः; न संख्यादेः समाहारे ५. ४. ९१; ८८; ८९.

प्रसिद्धम् । [1]उत्तरपदे प्रसिद्धे 'उत्तरपदे' इति द्विगुर्भविष्यति ।

सर्वत्र मत्वर्थे प्रतिषेधः ॥ ११ ॥

सर्वेषु पक्षेषु द्विगुसंज्ञाया मत्वर्थे प्रतिषेधो वक्तव्यः । किं प्रयोजनम् ? पञ्चखट्वा दशखट्वा'—द्विगोः' [ ४.१.२१ ] इतीकारो मा भूत् । पञ्चगुः दशगुः—'गोरतद्धितलुकि' [ ५. ४. ९२ ] इति टज्मा भूदिति ॥५१॥

प्र०–सिद्धये एकार्थीभावे प्रागपि सत्येव पुनः समासः क्रियते । एतेन पूर्वोक्त इतरेतराश्रयदोषोऽपि परिहृतः ।

सर्वत्रेति । यद्यर्थशब्दः स्यादर्थे, यदि वाभिधेयवचनो, ज्ञापकाच्च तद्धितोत्पत्तिस्तदा मतुपस्तद्धितत्वात्तदर्थेऽयमेव समासः स्यान्न तु बहुव्रीहिः, अशेषत्वात् । तस्य तु चित्रग्वादिरवकाशः । तस्मान्मत्वर्थे प्रतिषेधो वक्तव्यः । पञ्चखट्वेति । पञ्च खट्वा यस्यां विद्यन्त इति यदि द्विगुः स्यात्तदा 'वाबन्तः स्त्रियां भाष्यत' इति पक्षे द्विगोरिति ङीप्प्राप्नोति, पक्षे च नपुंसकत्वम् । पञ्चगुरिति । तत्पुरुषत्वे सति टच्प्राप्नोति । नन्वस्मिन् समासे सति मतुपः श्रवणं प्रसज्येत । न च 'द्विगोर्लु'गिति लुगस्ति, 'प्राग्दीव्यत' इत्यधिकारात् । एवं तर्हि दोषोपलक्षणं भाष्यम् । 'मतुपो लुग्वक्तव्य' इति दोषः । तल्लुकि च ङीप्समासान्तौ प्रतिषेधादेव न भविष्यतः । पञ्च आढका यस्याः सा पञ्चाढकेत्यत्र तु ङीप्प्राप्नोति ॥५१॥

उ०– एकार्थीभावे प्रागपि सत्येवेति । बहुव्रीहिसमासकृतैकार्थीभावे सत्येव तत्पुरुषभाविपदमात्रयोः पृथगेकार्थीभावाभावेऽपि समासः क्रियत इत्यर्थः । न च पृथगेकार्थीभावाभावेऽपि वृत्तिश्चेदत्रोत्तरपदग्रहणं व्यर्थम्, अतिप्रसङ्गस्त्वनभिधानादेव त्वयेव मयापि वारणीय इति वाच्यम्, द्विगुसंज्ञार्थत्वात् । तत्फलं तु 'द्विमासप्रिय' इत्यादौ कालान्तद्विगुत्वप्रयुक्तः पूर्वपदप्रकृतिस्वर इति दिक् । एतेनेति । त्रिपदबहुव्रीहिसत्त्वेनेत्यर्थः । तदुक्तं भाष्ये—उत्तरपदं प्रसिद्धमिति ।

अशेषत्वादिति । अनुक्तसमासः शेष इति भावः । त्रिकतः शेषे तु परत्वाद्बहुव्रीहिसिद्धिरिति बोध्यम् । एवं तर्हीति । केचित्तु तद्धितार्थेऽभिधेय इत्यर्थः । तद्धितोत्पत्तिज्ञापकं सजातीयापेक्षत्वात्प्राग्दीव्यतीयविषयमेव । किं चैतत्पक्षैकवाक्यतया स्यादर्थत्वेऽपि प्राप्तस्यानभिधानादनुत्पत्तिः स्यादिति सम्भावनायामपि लिङ्, तन्मूलकमेव मतुप्सूत्रे मत्वर्थे द्विगावन्यतद्धितवन्मतुरपि स्यादित्याशङ्क्य 'द्विगोर्मत्वर्थतद्धितस्य प्रतिषेधो वक्तव्यो यदि तन्नास्ति सर्वत्र मत्वर्थे प्रतिषेध इति, सति तस्मिंस्तेनैव सिद्ध'मित्युक्तम् । प्रत्ययप्रतिषेधारम्भेऽपि ङीप्टचोर्व्यावृत्तये इदमावश्यकमिति तदाशयः । तद्वचनाभिप्रायेण चात्रैतयोरापादनमिति भाष्याशय इत्याहुः । पञ्चाढकेत्यत्र तु ङीप्प्राप्नोतीति । परिमाणान्तत्वादिति भावः । 'न तद्धितलुकी'ति निषेधस्तु अपरिमाणान्तादिविषय इति तात्पर्यम् । 'पञ्चकुमारि'रित्यादौ ङीपो लुक्प्राप्तिरपि बोध्या ॥५१॥

[1] –'उत्तरपदप्रसिद्धेः' पा० ।

# संख्यापूर्वो द्विगुः ॥ २ । १ । ५२ ॥

किमनन्तरे योगे* यः संख्यापूर्वः स द्विगुसंज्ञ आहोस्वित्पूर्वमात्रे ? किं चातः ? यद्यनन्तरे योगे, एकशाटी[†] 'द्विगोः' [ ४. १. २१ ] इतीकारो न प्राप्नोति । अथ पूर्वमात्रे, एकभिक्षा अत्रापि प्राप्नोति ।

अस्त्वनन्तरे । कथमेकशाटी ? ईकारान्तेन समासो भविष्यति—एका शाटी एकशाटी ।

इह तर्हि एकापूपी 'द्विगो'रितीकारो न प्राप्नोति ॥ अस्तु तर्हि पूर्वमात्रे । कथमेकभिक्षा ? टाबन्तेन समासो भविष्यति—एका भिक्षा एकभिक्षा ।

प्र०— संख्यापू । इह कचिदवयवोऽपेक्ष्यते यत्रैतदुच्यते—'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति, क्वचित्तु समुदायो, यथा—'नान्तः पाद'मिति पाठे संहिताधिकारविहितस्य सर्वस्य कार्यस्य निषेधः क्रियते । ततः सन्देहात् पृच्छति—किमनन्तर इति । पूर्वमात्र इति । अत्र पक्षे समानाधिकरणसमासस्त्रिसूत्रीविहितस्तत्पुरुष एव गृह्यते । अन्यथा 'द्विमुनि व्याकरणस्ये'त्यव्ययीभावस्यापि द्विगुसंज्ञा स्यात् । ततश्चेगन्ते द्विगाविति स्वरः प्रसज्येत । एकशाटीति । एकः शाट इति पूर्वकालेति समासः । शाटशब्दश्चाकारान्तोऽस्ति, तस्यैव कनि कृते 'शाटक' इत्येवं रूपं संभवति ।

एकभिक्षेति । भिक्षशब्दो घञन्तोऽस्ति । तथा च 'भिक्षदं न प्रकाशये'दिति प्रयोगः । तत्रैको भिक्ष इति पूर्ववत् समासे कृते समासार्थस्य स्त्रीत्वोपजनान्ङीप्प्रसज्येत । यथा जनानां पदं जनपद इति समासे कृते समासार्थस्य पुंस्त्वमेवमिहापि स्त्रीत्वमिति मन्यते । ईकारान्तेनेति । शाटशब्दाज्जातिलक्षणे ङीषि कृत इति भावः ।

एकापूपीति । एकश्चासावपूपश्चेति पूर्ववत्समासः । अत्र द्विगुत्वे सत्यकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति द्विगोरितीकारः सिध्यति, नान्यथा । केवलश्चापूपशब्दः पुंसि वर्तत इति जातिलक्षणो ङीष्नास्ति ॥ टाबन्तेनेति । भिक्षाशब्देन समासे कृते 'अत' इत्यधिकारान्ङीबभाव इत्यर्थः । भिक्षाशब्दश्च 'गुरोश्च हल'इति स्त्रियां व्युत्पाद्यते । 'वाबन्त' इत्यनेन पक्षे नपुंसकत्वं न भवति, व्यवस्थितविभाषाविज्ञानात् ।

उ०— संख्यापूर्वो द्विगुः । ततः सन्देहादिति । व्यासिन्यायानन्तर्यन्याययोर्द्वयोरपि शास्त्रे आश्रयणादिति भावः । इहापि स्त्रीत्वमिति । 'एकभिक्ष' इति तु नेष्यत एवेति भावः । ङीषि कृत इति । 'एकशाट' इति त्विष्यत एवेति भावः । 'शाच्छो'रिति सूत्रे परिगणित-

* तद्धितार्थोत्तरपदसमाहारे च २. १. ५१.

† पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन २. १. ४९.

इह तर्हि सप्तर्षयः† 'इगन्ते द्विगा'वित्येष स्वरः प्राप्नोति‡ ॥ अस्तु तर्ह्यनन्तरे । कथमेकापूपी ? समाहार इत्येव सिद्धम् । कः पुनरत्र समाहारः ? यत्तद्दानं संभ्रमो वा ।

इह तर्हि पञ्चहोतारः दशहोतारः 'इगन्ते द्विगा'वित्येष स्वरो न प्राप्नोति । अस्तु तर्हि पूर्वमात्रे । कथं सप्तर्षयः ? 'अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दसी'त्येवमेतत्सिद्धम्* । अथवा पुनरस्त्वनन्तरे । कथं पञ्चहोतारः दशहोतारः ? 'आद्युदात्तप्रकरणे दिवोदासादीनां छन्दसी'त्येव सिद्धम्× ॥५२॥

प्र०-यत्रापो ह्रस्वत्वं क्रियते पञ्चखट्वं पञ्चखट्वीत्यादौ, तत्रैव वा स्त्रीत्वं विधीयते । भिक्षाशब्देन त्वनभिधानात्समासो न भवतीति मन्यते । अन्यथा तत्रैकभिक्षीति स्यात् ।

सप्तर्षय इति । 'दिक्संख्ये संज्ञाया'मिति समासः । कः पुनरिति । अनेकविषयत्वात्समाहारस्य एकस्य तदसम्भवात्प्रश्नः । यत्तदिति । एकमप्यपूपं कश्चित्कृपणो ददनेकमिति मन्यते । दाने श्रद्धातिशयाद्वा महत्त्वाद्वा अनेकस्मिन् यः संभ्रमः स एकस्मिन्नपि कर्तव्यो भवति । अथवेति । पूर्वत्रापरितोषेणैतदुच्यते । भाषायामपि सप्तर्षिशब्दोऽन्तोदात्त इष्यते । प्रकृतिस्वरपूर्वपदश्च स्यात् । अत एवैकशाटीत्यादावपि द्विगुस्वराभावः ॥५२॥

उ०-व्यवस्थितविभाषात्वस्यानुल्लेखादरुचेराह—यत्रापो ह्रस्वत्वमिति । 'स नपुंसक'मिति प्रकरणात्समाहारद्विगुविषये एव तत्प्रवृत्तिरिति भावः । ननु 'भिक्ष'शब्देन समासे वक्ष्यमाणरीत्या समाहारविवक्षायां 'एकभिक्षी'त्यपि स्यादत आह—भिक्षाशब्देन त्वनभिधानादिति । अत्र मानं चिन्त्यम् ।

ददनेकमिति । अवयवगतबहुत्वस्यावयविन्यारोपाद् गौणः समाहारोऽत्रापि सुलभ इति भावः । कर्त्तव्यो भवतीति । 'एकापूपी क्रियते'त्यादौ प्रतिग्रहीत्रेति भावः । पक्षद्वयेऽप्युपसंख्यानद्वयेन स्वरसिद्धेः साम्यशङ्कां वारयति—पूर्वत्रापरितोषेणेति । अन्तोदात्त इष्यते इति । अत्र बीजं चिन्त्यम् । किं च प्रवृद्धादिगणपाठेन लोकेप्यन्तोदात्तत्वं सुसाधमिति बोध्यम् । 'प्रकृतिस्वरपूर्वपद' इति बहुव्रीहिः । केचित्तु पक्षयोः साम्येपि पूर्वमात्र इति पक्षस्य फलाभावद्बहुप्रतिविधेयत्वाच्च नादर इत्याहुः ॥५२॥

१–'ह्रदं' पा० । † विशेषणं विशेष्येण बहुलम् २. १. ५७.
‡ इगन्तकालकपालभगालशरावेषु द्विगौ ६. २. २९.
* ६. २. १९९ वा० १. × ६. २. ९१ वा० १.

## कुत्सितानि कुत्सनैः ॥ २ । १ । ५३ ॥

किमुदाहरणम् ? वैयाकरणखसूचिः । किं व्याकरणं कुत्सितमाहोस्विद्वैयाकरणः ? वैयाकरणः कुत्सितस्तस्मिन्कुत्सिते तत्स्थमपि कुत्सितं भवति ॥५३॥

## उपमानानि सामान्यवचनैः ॥ २ । १ । ५५ ॥

'उपमानानी'त्युच्यते कानि पुनरुपमानानि ? किं यदेवोपमानं तदेवोप-

---

प्र०— कुत्सितानि । किं व्याकरणमिति । अयं भावः—शब्दप्रवृत्तिनिमित्तकुत्साथामयं समास इष्यते, 'वैयाकरणश्चौर' इत्यादौ मा भूदिति । तत्र व्याकरणस्य वेदाङ्गत्वान्नास्ति कुत्सा, नापि तदधीयानस्य । वैयाकरण इति । यः पृष्टो निष्प्रतिभत्वात् खं सूचयति 'अहो गगनं निर्मल'मिति प्रश्नं विस्मारयितुं, स निष्फलव्याकरणाध्ययनत्वात्कुत्स्यते । तत्स्थमपीति । आश्रयदोषादाश्रितस्यापि निष्फलत्वात्कुत्सा ॥५३॥

उपमानानि । कानीति । सूत्रानुरोधेन बहुवचनं कृतम् । किं यदेवोपमानमिति । अत्र तूपमानमात्रस्य जिज्ञासितत्वाद्बहुत्वविवक्षायाः प्रयोजनाभावादेकवचननिर्देशः । ननु कर्मकरणयोर्भेदादेकत्वविषये संदेहाभावात्प्रश्नानुपपत्तिः । अयं भावः—'शस्त्रीश्यामा देवदत्ते'ति श्यामत्वं सर्वाश्रयव्यापि यद्यभिन्नं विवक्षितं तदा तद्द्वारेण शस्त्रीदेवदत्तयोरुपमानोपमेयत्वात्तस्य च तयोरविशिष्टत्वात्तद्द्वारकस्तयोरभेद इति 'यदेवोपमानं तदेवोपमेय'मित्यभ्युपगतं भवति । न चैतद्युक्तं, शस्त्रीशब्दप्रयोगवैयर्थ्यप्रसङ्गात् । अथाऽऽधारभेदाच्छ्यामत्वस्य भेदस्तदा शस्त्रीदेवदत्तास्थयोः श्यामगुणयो-

---

उ०— कुत्सितानि । इष्यत इति । तथैव लक्ष्यदर्शनात्प्रत्यासत्तेश्चेति भावः । चौर इति । यथा खसूचनेन व्याकरणाध्ययनस्य निष्फलत्वं प्रतीयते न तथा चौर्येणेति भावः । नापि तदधीयानस्येति । एवं च प्रवृत्तिनिमित्तकुत्साभावादिदं नोदाहरणमित्याशयेन भाष्ये 'किं व्याकरण'मित्यादि प्रश्न इति भावः । आश्रयदोषादिति । स चाप्रतिभत्वम् । अयं च निष्फलत्वे हेतुः ॥५३॥

उपमानानि सामान्य । उपमानत्वं—साधारणधर्महेतुकपरिच्छेदकरणत्वं, तद्वति तस्य रूढत्वात् । तच्चोपमेयसाकाङ्क्षम् । तत्रोपमानोपमेयपदार्थयोरभेदो भेदो वा । 'रावण इव रावणः' 'चन्द्र इव मुख'मित्युभयत्रापि इवशब्ददर्शनात् । तत्र यदि सर्वथाभेदे उपमानोपमेयभावस्तदा तत्र तद्गतभूयोधर्मपरिच्छेद्यत्वरूपोपमेयत्वासंभवः । अत एव सर्वथा भेदेऽपि नेत्याशयेन पृच्छति भाष्ये—कानि पुनरिति । उपमेयात्सर्वथाभिन्नानि, सर्वथा भिन्नानि वेत्यर्थः । साधारणधर्मरूपेणाभेदस्तत्तद्रूपेण भेद इति त्वसौ न जानाति । तदेवाह—किं यदेवेति । एवकारेण तयोरत्यन्ताभेदः सूचितः । एवमन्यदेवेत्यनेनात्यन्तभेदः सूचितः । कर्मकरणरूपार्थभेदेऽपि द्वितीयसदृशव्यवच्छेदफलकस्य 'गौरिव गौ'रिति प्रयोगस्य दर्शनात्सर्वत्र

मेयमाहोस्विदन्यदेवोपमानमन्यदुपमेयम् ? किं चातः ? यदि यदेवोपमानं तदेवोपमेयं, क इहोपमार्थो 'गौरिव गौ'रिति । अथाऽन्यदेवोपमानमन्यदुपमेयं क इहोपमार्थो 'गौरिवाश्व' इति ।

एवं तर्हि यत्र किंचित्सामान्यं कश्चिच्च विशेषस्तत्रोपमानोमेये भवतः । किं

प्र०-भेदान्नास्ति तद्द्वारक उपमानोपमेयभाव इति । किं चात इति । स्ववाचाभिप्रायमभिधापयितुं प्रश्नः । गौरिवेति । व्यक्तिगतानां भेदानां शब्देनासंस्पर्शात्सामान्यमुखेन द्रव्यावसायादिति भावः । गौरिवाश्व इति । अत्यन्तभेदविवक्षायामिदमुच्यते । यदा त्वश्वस्य जाड्यादिधर्मप्रतिपादनायेदमुच्यते तदा भवत्येवोपमानोपमेयभावः ।

किंचित्सामान्यमिति । श्यामत्वस्याधारभेदाद्भेदोप्याश्रीयते, गुणजातेरेकत्वाद-

उ०-तथैव किमिति प्रश्नः । क इहोपमार्थ इति भाष्ये-उपमानोपमेयत्वबोधकेवादिशब्दप्रयोगे किं फलं, कर्मकरणत्वरूपोपमानोपमेयत्वबोधस्यैकत्रासंभवादित्यर्थः ॥ द्वितीयोपमानव्यवच्छेदार्थत्वे तु नोपमानत्वादिव्यवहारः । किञ्च 'गोसदृशो गौ'रित्यादिनैव तद्व्यवच्छेदबोधसंभवेनावाचकैतत्प्रयोगोऽसङ्गतः, सादृश्यस्याभेदेऽप्यङ्गीकारेण नास्यावाचकत्वमिति भावः । उपमानोपमेयभावप्रतीतावुपमा, तदभावेऽनन्वय इति बोध्यम् । अत्र पक्षेऽस्यैवोदाहरणत्वेन तत्र चोपमानत्वाद्यप्रतीत्या सर्वथेवादिघटितप्रयोगस्य बोधकस्य मुख्यस्यासम्भव इति उपमानोदाहरणासंभवः, प्रकृतसूत्रवैयर्थ्यं चेति तात्पर्यम् ॥ गौरिवाश्व इति । अयं भावः—सर्वथा भेदे तत्स्वीकारे इदमुदाहरणं वाच्यम्, तच्चायुक्तं, साधारणधर्ममूलकोपमानोपमेयभावाप्रतीतेरिति केचित् । 'एकत्वविषये संदेहाभावा'दिति पाठे—एकत्वरूपे विषये संदेहविषयत्वाभावादित्यर्थः । 'अयं भाव' इत्यादिग्रन्थेनोच्यमानो भावः कथं भाष्याक्षरस्वरससिद्धः ॥ किं च 'शस्त्रीश्यामे'त्यादौ शस्त्रीशब्दवैयर्थ्यस्योपमानोपमेयभावासंभवस्य च भाष्येऽनुक्तेस्तस्य निर्दलतेति बहुश्रुता विचारयन्तु । वैयर्थ्यप्रसङ्गादिति । तेन कस्यचिद्विशेषस्यानभिधानादिति भावः । श्यामत्वमात्रप्रतीतेः श्यामापदेनैवोपपत्तेः । एवं चोपमाप्रयोजकीभूतसाधारणधर्मं आश्रयभेदेऽप्येक इति तयोरैक्यशङ्का, 'अनेक' इति मते धर्मभेदात्तद्भेदशङ्केति तात्पर्यम् । स्ववाचेति करणम् । स्वशब्देन शङ्किता । प्रयोजककर्त्ता तु प्रष्टा बोध्यः । शब्देनासंस्पर्शादिति । कैयटकृतप्रश्नव्याख्यानेऽस्योपयोगश्चिन्त्यः, साधारणधर्मस्य गोत्वस्यैक्येन 'गौरिवे'त्यस्य वैयर्थ्यमिति तद्व्याख्यायां दोषोपपत्तेः केचिद् व्याख्यातपूर्वपक्षे त्वत्रैवं व्याख्योचिता । अत्यन्तेति । अस्याशय उक्त एव । यदा त्विति । इदमपि कैयटोक्तपूर्वपक्षव्याख्यायां चिन्त्यं, श्यामत्ववज्जाड्यस्याप्येकत्वेनानेकत्वेन वा तदाप्युपमानोपमेयभावासंभवादिति ।

भाष्ये—एवं तर्हि यत्र किंचिदिति । शब्दोपात्तप्रत्येकधर्मेण शस्त्रीत्वदेवदत्तत्वादिना भेदः, श्यामत्वादिसाधारणधर्मेण चाभेद इत्यर्थः । ननु गुणानामाश्रयभेदाद्भेदेन कथं तेषां सामान्यत्वमित्यत आह—श्यामत्वस्याधारेति । भेदोऽप्याश्रीयते इति । भेदो यद्यप्याश्रीयत इत्यर्थः । 'तथापी'ति शेषः । गुणजातेरिति । गुणत्वव्याप्यजातेरित्यर्थः । एवं च श्याम-

वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? मानं हि । नामानिर्ज्ञातज्ञानार्थ-मुपादीयते'ऽनिर्ज्ञातमर्थं ज्ञास्यामी'ति । तत्समीपे यन्नात्यन्ताय मिमीते तदुप-मानम्—'गौरिव गवय' इति । गौनिर्ज्ञातो गवयोऽनिर्ज्ञातः ।

कामं तर्ह्यनेनैव हेतुना यस्य गवयो निर्ज्ञातः स्याद्गौरनिर्ज्ञा तस्तेन कर्तव्यं स्याद्गवय इव गौरिति । बाढं कर्तव्यम् ।

प्र०—भेदोऽपीत्यर्थः । किं वक्तव्यमिति । यथोपवर्णितं वचनेन विना कथं प्रतिपत्तुं शक्य-मिति भावः । इतरो निर्वचनेन यथोक्तं प्रतिपादयितुमाह—न हीति । मानं हीति । यथा प्रस्थादि । तेन हि साकल्येन मेयं परिच्छिद्यते । तत्समीप इति । मानस्य समीप इत्यर्थः । परिच्छेदवशाच्च सामीप्यं परिकल्प्यते, न ह्यत्र मुख्यं सामीप्यमस्ति । 'उप-मानानी'ति निपातनात्तत्पुरुषः । अव्ययीभावे ह्येतद्रूपं न स्यात् ।

कामं तर्हीति । ततश्च व्यवस्था न प्राप्नोतीति भावः । बाढमिति । अपेक्षानिमित्तकः पितापुत्रादिव्यवहारवदुपमानोपमेयभाव इति न कश्चिद्दोष इति भावः ।

उ०—गुणस्य भेदेऽपि श्यामत्वेनैक्यात्सामान्यत्वं साधारणधर्मतेति ध्वनितम् । अत्र सिद्धान्तपक्षे तु 'घन इव श्यामो देवदत्त' इत्यादेरिवघटितप्रयोगस्य संभवेन 'गौरिव गौ'रित्यादावुपमान-त्वाद्यप्रतीत्यानन्वय इति बोध्यम् ।

भाष्ये—मानं हीति । अनिर्ज्ञातार्थस्य साकल्येन ज्ञापकत्वं हि तत्त्वम् । यथा प्रस्थाद्यज्ञातस्य परिमाणरूपार्थस्य साकल्येन ज्ञापकं, न तथोपमानम् । गौर्हि गवयं कति-भिश्चिद्धर्मैरेव तद्गतैर्ज्ञापयति न साकल्येनेत्याशयेनाह—साकल्येनेति । एवं च तदत्यन्ता-भेदेनैव परिच्छेद्येनान्वेति, 'प्रस्थो व्रीहि'रित्यादौ परिच्छेद्ये तद्रूपारोपात् । भेदेनैव वा—'प्रस्थोऽस्य परिमाण'मित्यादौ । तदुक्तं भाष्ये—'अत्यन्तायेति' । इदमव्ययम् । आत्यन्तिका-भेदेन वा तान्परिच्छिनत्ति, इदं तु भेदाऽभेदाभ्यामिति विशेषः, 'चन्द्रेण तुल्य'मित्यादाव-प्यार्थोपमाप्रतीतावस्त्येव भेदाऽभेदप्रतीतिरिति बोध्यम् । परिच्छेदवशादिति । तत्तारतम्यादिति भावः । अव्ययीभावे बहुवचनासङ्गतेराह—निपातनादिति । हीनार्थकोपशब्देन कर्मधार-यस्य सुलभत्वम् । भाष्ये—समीपशब्देन हीनत्वमेवोपलक्ष्यते । 'उपोऽधिके चे'त्यादावुपस्य हीनार्थत्वदर्शनादित्यन्ये ॥ अपेक्षानिमित्तक इति । निरूपकापेक्षानिमित्तक इत्यर्थः । पिता-पुत्रादीति । ज्ञानप्रदत्वाद्यत्र पुत्राणामपि पितृत्व[1]व्यवहारस्तद्विषयोऽयं दृष्टान्तः । जातिस्मरत्वे जन्मान्तरविषयो वा ।

१—पुत्राणामपि पितृत्वव्यवहारो दृष्टस्तद्यथा मनुस्मृतौ (२ १५१)—
"अध्यापयामास पितृन् शिशुराङ्गिरसः कविः । पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥"

किं पुनरिहोदाहरणम् ? शस्त्रीश्यामा । क्व पुनरयं श्यामाशब्दो वर्तते ? शस्त्र्यामित्याह । केन [1]तर्हीदानीं देवदत्ताभिधीयते ? समासेन । यद्येवं 'शस्त्रीश्यामो देवदत्त' इति न सिध्यति । 'उपसर्जनस्ये'ति* ह्रस्वत्वं भविष्यति । यदि तर्ह्युपसर्जनान्यप्येवंजातीयकानि भवन्ति 'तित्तिरिकल्माषी'

प्र०- किं पुनरिति । अयं भावः—यदा शस्त्रीशब्दः शस्त्र्यामेव वर्तते, श्यामशब्दोऽपि तस्यामेव, तदा समासेनोपमेयाया देवदत्ताया अभिधानं न प्राप्नोति । अथ श्यामाशब्दो देवदत्तायां वर्तते, तदा वैयधिकरण्यात्समासाप्रसङ्गः । वचनसामर्थ्यात्समासे मृगीव चपला मृगचपलेति पुंवद्भावो न प्राप्नोति ।

शस्त्रीश्यामेति । साधारणधर्मविशिष्टोपमेयार्थवृत्तिः शब्दः 'सामान्यवचन'शब्देन वचनग्रहणाद् गृह्यते, यथा गुणवचनशब्देन गुणोपसर्जनद्रव्यवाची । क्व पुनरिति । उभयथा दोषदर्शनात्प्रश्नः । केन तर्हीति । पूर्वपदोत्तरपदयोरुपमानवृत्तित्वे तद्व्यतिरिक्तशब्दान्तराभावात्प्रश्नः । समासेनेति । स्वाभाविकत्वादर्थाभिधानस्यान्यपदार्थग्रहणमन्तरेणाप्यश्वकर्णादिवज्जातिविशेषस्य शस्त्रीश्यामादिकः समास उपमेयस्य वाचक इत्यर्थः । यद्येवमिति । गुणवचनस्याश्रयलिङ्गानुविधायित्वात्स्त्रीलिङ्गेन श्यामाशब्देन समासे कृते रूपस्यासिद्धिः ॥ उपसर्जनस्येति । अप्राधान्यादुपसर्जनत्वं मन्यते । समासवाच्यत्वादुपमेयं हि प्रधानम् । यदि तर्हीति । ह्रस्वविधौ कृत्रिममेवोपसर्जनं

उ०- किं पुनरिति । अत्यन्तभेदाभेदयोरुपमानत्वाभावात्प्रश्नः । क्व पुनरिति प्रश्ने कैयटोक्तो भाव उचित इति केचित् । न प्राप्नोतीति । उभयोरेकार्थवृत्तित्वादिति भावः । वैयधिकरण्यादिति । सादृश्यसंबन्धेन शस्त्र्याः श्यामावाच्यदेवदत्तायामन्वयेन सामर्थ्येऽपि वैयधिकरण्यमित्यर्थः । अत्र हि 'समानाधिकरणे'नेति वर्त्तते । इदमुपलक्षणं, सामान्यवचनत्वाभावाच्चेत्यपि बोध्यम् । समानविभक्तिकत्वमुपमानोपमेययोर्न स्यादित्यपि बोध्यम् । पुंवद्भाव इति । सामानाधिकरण्यनिमित्तककर्मधारयत्वनिमित्तक इत्यर्थः ।

साधारणधर्मविशिष्टेति । अनेन सामान्यवचनत्वं समर्थितमुपमेयदेवदत्ताभिधानं च । 'तस्यामेवोभयं वर्तत' इति वक्ष्यमाणरीत्या च सामानाधिकरण्यम् । इदं तात्पर्यमजानानः पृच्छति भाष्ये—क्व पुनरिति । एकदेशिन उत्तरम्—शस्त्र्यामिति । समुदायेन तदभिधानोपपत्तेः केनेति प्रश्नानुपपत्तिमाशङ्क्याह—पूर्वपदेति । अवयवातिरिक्तसमुदाये मानाभाव इत्यर्थः । नन्वन्यपदार्थग्रहणाभावात्कथं समासस्योपमेयवृत्तितेत्यत आह—स्वाभाविकत्वादिति । वस्तुतोऽतिरिक्तत्वाभावेऽपि बुद्धिकल्पितः कश्चित्सोऽतिरिक्तोऽस्त्येवेति भावः । अश्वकर्णादिवज्जातिविशेषस्येति । अश्वकर्णादिर्यथा जातिविशेषस्येत्यर्थः । 'अश्वकर्णादिर्जातिविशेषस्यैवे'ति क्वचित्पाठः । स्त्रीलिङ्गेनेति । एतेन पुँल्लिङ्गश्यामशब्देन समासे रूपसिद्धिरिति नाशङ्क्यमिति भावः । कृत्रिममेवेति । लौकिकसमानाधिकरणमिति बोध्यम् । 'सामान्य-

१-'केनेदानीं' पा० । * गोस्त्रियोरुपसर्जनस्य १. २. ४८.

'कुम्भकपाललोहिनी' अनुपसर्जनलक्षण ईकारो† न प्राप्नोति ।

एवं तर्हि शस्त्र्यामेव शस्त्रीशब्दो वर्तते, देवदत्तायां श्यामाशब्दः । एवमपि गुणोऽनिर्दिष्टो भवति । बहवः शस्त्र्यां गुणास्तीक्ष्णा सूक्ष्मा पृथुरिति । अनिर्दिश्यमानस्यापि गुणस्य भवति लोके संप्रत्ययः । तद्यथा—'चन्द्रमुखी देवदत्ते'ति बहवश्चन्द्रे गुणाः, या चासौ प्रियदर्शनता सा गम्यते ।

प्र०–गृह्यते, न तु लौकिकमपि, 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय' इति न्यायाल्लौकिकग्रहणे दोषप्रसङ्गाच्च । 'तित्तिरिकल्माषी' 'कुम्भकपाललोहिनी'त्यत्रोपमानस्य पुंनपुंसकलिङ्गत्वात्समासात्प्राक् स्त्रीप्रत्ययो नास्ति । समासे कृतेऽनुपसर्जनाधिकारान्ङीब्ङीपोः प्रतिषेधः प्राप्नोति । सत्यपि वा ङीषि सतिशिष्टत्वादुपमानस्वरं बाधित्वा ङीष्स्वरः प्राप्नोति ।

एवं तर्हीति । ततः पूर्वोक्तदोषाभावः । 'शस्त्रीश्यामो देवदत्त' इति श्यामशब्दस्य देवदत्तवृत्तित्वात्तित्तिरिकल्माषीति स्त्रीप्रत्ययान्तेनोपमेयवृत्तिना समासविधानात् । एवमपीति । श्यामाशब्दस्य देवदत्ताभिधाने चरितार्थत्वाच्छस्त्रीगतो गुणो न निर्दिष्टः स्यादित्यनियतगुणनिमित्तसादृश्यप्रतीतिप्रसङ्ग इत्यर्थः । चन्द्रमुखीति । अयं

उ०–वचनै'रित्यप्रथमानिर्दिष्टत्वाच्छ्यामाशब्दो न तथेति भावः ॥ न तु लौकिकमपीति । केवललौकिकमित्यर्थः । दोषप्रसङ्गादिति । आचारक्यजन्तप्रकृतिक'कुमारी'शब्दादौ ह्रस्वप्रसङ्गादित्यर्थः । पुंनपुंसकेति । तित्तिरिः—पुमान्, कुम्भकपालं—क्लीबम् । स्त्रीप्रत्ययो नास्तीति । तत्समानाधिकरणकल्माषलोहितयोरप्यस्त्रीत्वादिति भावः । ङीब्ङीपोः—'अन्यतो ङीष्' 'वर्णादनुदात्ता'दिति विहितयोः । सत्यपि वेति । 'वर्णादनुदात्ता'दित्यादावनुपसर्जनत्वस्य तदन्तविशेषणत्वात्समासोत्तरमिति भावः । अत एव 'श्येण्या च शलल्ये'त्यादिसिद्धिः । उपमानस्वरः—पूर्वपदप्रकृतिस्वरः । ङीष्स्वरः—अन्तोदात्तः । एवं च 'तित्तिरिकल्माषी'त्यत्रैव दोष इति भावः । भाष्यस्य तु नात्र स्वरसः । 'श्येण्ये'त्यादि त्वार्षम् ।

ननु श्यामाशब्दस्य श्यामत्वगुणेनैव देवदत्ताद्यभिधायकत्वात्कथं गुणानिर्देश इत्यत आह—शस्त्रीगतो गुण इति । 'सादृश्यमतिरिक्तः पदार्थ' इति मतेनेदं, एवं च श्यामाशब्दस्य सामान्यवचनत्वाभाव इत्यपि बोध्यम् । अनियतगुणनिमित्तेति । संसर्गविधया प्रतीयमानसादृश्येत्यर्थः । 'उपमानिमित्तत्वेने'ति पाठः । 'उपमाननिमित्तत्वेने'ति पाठे उपमानत्वप्रतीतिनिमित्तत्वेनेत्यर्थः । कथं न स्प्रक्ष्यतीति । उपस्थितत्वेन, प्रत्यासत्त्या चेत्यर्थः । एवं च 'भाष्याब्धिः क्वातिगम्भीर' इत्यत्र मयूरव्यंसकादिसमास एव । उक्तरीत्या सामान्यप्रयोगसत्त्वेनोपमितसमासाप्राप्तेः । 'चन्द्रमुखी'त्यत्र बहुव्रीहौ 'स्वाङ्गाच्चोपसर्जना'दिति ङीष् ।

† अनुपसर्जनात्; अन्यतो ङीष्; वर्णादनुदात्तात्तोपधात्तो नः ४. १. १४; ४०; ३९.

एवमपि 'समानाधिकरणेने'ति† वर्तते, व्यधिकरणत्वात्समासो न प्राप्नोति । किं हि वचनात्‌ भवति ? यद्यपि तावद्वचनात्समासः स्यादिह तु खलु मृगीव चपला मृगचपला समानाधिकरणलक्षणः पुंवद्भावो* न प्राप्नोति ।

एवं तर्हि तस्यामेवोभयं वर्तते । एतच्चात्र युक्तं यत्तस्यामेवोभयं वर्तत इति । इतरथा हि बह्वपेक्ष्यं स्यात् । यदि तावदेवं विग्रहः क्रियते शस्त्रीव

प्र०–भावः–यत्रानिर्दिष्टोऽपि गुणो वृद्धव्यवहारवशादुपमानिमित्तत्वेन प्रतीयते तत्रोपमेये श्रुतः सन्निधानादुपमानं कथं न स्प्रक्ष्यति । किं हि वचनादिति । दुर्बलं प्रकरणं श्रुत्या बाध्यत इत्यर्थः ।

पुंवद्भाव इति । 'पुंवत्कर्मधारयजातीयदेशीयेष्वि'त्यनेन । नन्वस्त्रीपूर्वपदस्य विवक्षितत्वान्मृगक्षीरादिवन्मृगचपलेति भविष्यति । यद्यप्यन्यत्स्त्रियाश्चापल्यमन्यत्पुंस-स्तथापि पुंवद्भावेन स्त्रीप्रत्यये निवृत्ते नास्ति स्त्रीत्वलक्षणविशेषावगतिः । प्रकरणादि-वशात्तु स्त्रीत्वप्रतिपत्तौ जातिमात्रोपादानेऽपि तत्प्रतीतिर्भविष्यति । सा च बहिरङ्गत्वात् स्त्रीप्रत्ययोत्पत्तिनिमित्तं न भवति । एवं तर्हि प्रतिपत्तिगौरवप्रसङ्गादेतदत्र भाष्यकारेण नाश्रितं, गत्यन्तरसंभवाच्च ।

तद्दर्शयति–एवं तर्हीति । शस्त्रीसादृश्याद्देवदत्ता शस्त्रीशब्देनोच्यते, सादृश्यनिमि-त्तादभेदोपचारात्, यथा 'गौर्वाहीक' इति । पूर्वावस्थाश्रयेण च शस्त्र्या उपमानवाचित्व-मवसेयम् । यदि तावदिति । यदा श्यामाशब्दो देवदत्तायां वर्तते, शस्त्रीशब्दः शस्त्र्यामेव,

उ०– भाष्ये–समानाधिकरणलक्षण इति । पूर्वपदार्थस्य सादृश्यसंबन्धेनोत्तरपदार्थेऽन्वयेन व्यधिकरणत्वादिति भावः । पुंवत्कर्मधारयेति । एतेन चपलशब्दस्य प्रियादित्वान्मृगीशब्दस्य जातिशब्दत्वाच्च कथमत्र पुंवत्त्वमित्यपास्तम् । अस्त्रीपूर्वपदस्येति । जातिमात्रविवक्षायां मृग-शब्देन समास इति भावः । बहिरङ्गत्वादिति । प्रकरणादिसापेक्षप्रतीतिकत्वेन तत्त्वम् । मृगीव चपलेति विग्रहे त्वऽव्यविकन्यायाद्वाक्यमेवेति भावः ॥ ननु 'शस्त्री'शब्दस्य कथं देव-दत्तायां वृत्तिरत आह—सादृश्यादिति । तद्व्याचष्टे—सादृश्यनिमित्तादिति । तत्प्रयोजक-साधारणधर्मरूपान्निमित्तादित्यर्थः । परिच्छेदकश्यामशस्त्र्यभिन्ना परिच्छेद्या श्यामा देवदत्तेति बोधः । एतच्च मञ्जूषायां विस्तरेण प्रपञ्चितम् । पूर्वावस्थेति । यद्यपि पुंवत्त्वानुरोधाद्वाक्येऽ-प्यभेदवृत्त्विय आवश्यको वृत्तौ, वृत्तेः प्राक्च यत्र सामानाधिकरण्यं तत्रैवं पुंवत्त्वप्रवृत्तेस्तथापि यदा केवलस्य प्रयोगस्तदा तद्वचनत्वमित्यभिमानः ॥ परे तूपमानानीत्यस्य तत्त्वेन बोधकानी-त्यर्थः । इवशब्दसमभिव्याहाराच्च वाक्ये तत्त्वेन बोधकत्वं, वृत्तौ तु समासशक्तिबलादित्युप-मानवाचित्वाभावशङ्कैव निर्दला, इवशब्दश्च स्वसमभिव्याहृते उपमानत्वद्योतकः । शस्त्री-पदस्य तत्सदृशपरत्वमिवो द्योतयतीति तु न युक्तं, द्योत्यार्थे समभिव्याहृतपदार्थविशेषणताया

† पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन २. १. ४९.

* पुंवत् कर्मधारयजातीयदेशीयेषु ६. ३. ४२.

श्यामा देवदत्तेति, शस्त्र्यां श्यामेत्येतदपेक्ष्यं स्यात्। अथाप्येवं विग्रहः क्रियते यथा शस्त्री श्यामा तद्वदियं देवदत्तेति, एवमपि देवदत्तायां 'श्यामे'त्येतदपेक्ष्यं स्यात्। एवमपि गुणोऽनिर्दिष्टो भवति। बहवश्च शस्त्र्यां गुणास्तीक्ष्णा सूक्ष्मा पृथुरिति। अनिर्दिश्यमानस्यापि गुणस्य भवति लोके संप्रत्ययः। तद्यथा,—'चन्द्रमुखी देवदत्ते'ति बहवश्चन्द्रे गुणा या चासौ प्रियदर्शनता सा गम्यते।

**उपमानसमासे गुणवचनस्य विशेषभाक्त्वात्सामान्यवचनाप्रसिद्धिः ॥ १ ॥**

प्र०-तदा शस्त्रीगतं श्यामत्वमनेकगुणसंभवे गुणान्तरव्यवच्छेदायोपमानिमित्तं प्रतिपादयितुं 'श्यामे'त्यपेक्षणीयम्। अथापीति। यदा शस्त्र्यामेव शस्त्रीशब्दो वर्तते, श्यामाशब्दोऽपि तस्यामेव, तदा देवदत्तागतश्यामत्वप्रतिपादनाय 'श्यामे'त्यपेक्षणीयम्। न च शब्दस्यावृत्तिरस्ति येनोभयगतं श्यामत्वं प्रतिपादयेत्। अत्रापि दोषमाह–एवमपीति। यदा शस्त्रीसादृश्याद्देवदत्तायां शस्त्रीत्वमारोप्यते तदा कं गुणमाश्रित्य तयोः सादृश्यमाश्रीयतामित्यर्थः। उत्तरं तु पूर्वमेव व्याख्यातम्। यद्यपि पूर्वयोरपि पक्षयोरेष परिहारोऽस्ति तथापि ह्रस्वस्त्रीप्रत्ययस्वरपुंवद्भावासिध्या पूर्वं पक्षद्वयं परिहृत्यायं पक्ष आश्रितः।

उपमानसमास इति। 'शस्त्रीश्यामा देवदत्ते'त्यत्र शस्त्रीशब्दसन्निधौ श्यामाशब्दः प्रयुज्यमानः शस्त्रीगतं श्यामत्वगुणं प्रतिपादयति, न च शस्त्रीस्थो गुण आश्रयान्तरे वर्तत इति सामान्यवचनत्वाभाव इत्यर्थः।

उ०-एव स्वभावसिद्धत्वात्। अत एव णिच्तरबादीनां द्योतकतापक्षस्य 'प्रकृत्यर्थविशेषणत्वे'ति शब्देनोल्लेखो भाष्य इत्याहुः।

उपमानिमित्तमिति। उपमा—सादृश्यं, तन्निमित्तं—शस्त्रीगतं देवदत्तागतं वा श्यामत्वं प्रतिपादयितुं—तत्तद्गतत्वेन बोधयितुमित्यर्थः। उभयत्र श्यामत्वप्रकारकबोधस्तव न स्यादिति भावः। इदं च दशमे लिङ्गभेदादिरूपोपमादूषणप्रस्तावे काव्यप्रकाशतट्टीकादौ स्पष्टम्। उपमानतावच्छेदकारोपेणाभेदान्वयादेवोपमानोपमेययोः समानविभक्तिकत्वनियमः। 'अपेक्ष्यं स्या'दितिभाष्यस्य तत्त्वेन बोधार्थमित्येवार्थः। 'तस्यामेवे'ति सिद्धान्तपक्षेऽपि शङ्कते—एवमपीति भाष्ये। शस्त्र्यां श्यामगुणानिर्देशादिति भावः। तदाह—कं गुणमिति। शस्त्र्यां तीक्ष्णत्वादिबहुगुणसत्त्वादिति भावः। उत्तरयति—अनिर्दिश्यमानस्यापीति। यत्रानिर्देशेऽपि बहुगुणवति वस्तुनि तात्पर्यवशाद्यः कश्चिदेव गुणः प्रतीयते तत्रोपमेये श्रुतस्तन्त्रादिना कथमुपमानं न संभन्त्स्यत इति भावः। तद् ध्वनयन्वक्ष्यति—'श्यामशब्दः शस्त्रीशब्देनाभिसंबध्यमानो विशेषवचन' इत्यादि। एष परिहार इति। 'इतरथा हि बह्वपेक्ष्यं स्या'दित्युक्तदोषस्येत्यर्थः। पुंवद्भावासिद्ध्येति। उभयस्य श्यामत्वप्रकारकबोधासिद्ध्येत्यपि बोध्यम्।

पदार्थद्वयगतश्यामत्वोक्तावपि सामान्यवचनत्वाहानिरिति शङ्कते भाष्ये—उपमान-

उपमानसमासे गुणवचनस्य विशेषभाक्त्वात्सामान्यवचनस्याप्रसिद्धिः स्यात् । शस्त्रीश्यामा । श्यामाशब्दोऽयं शस्त्रीशब्देनाभिसंबध्यमानो विशेषवचनः संपद्यते । तत्र 'सामान्यवचनै'रिति समासो न प्राप्नोति ।

**न वा श्यामत्वस्योभयत्र भावात्तद्वाचकत्वाच्च शब्दस्य सामान्यवचनप्रसिद्धिः ॥ २ ॥**

न वैष दोषः । किं कारणम् ? 'श्यामत्वस्योभयत्र भावात्' । उभयत्रैवात्र श्यामत्वमस्ति शस्त्र्यां देवदत्तायां च । 'तद्वाचकत्वाच्च शब्दस्य' । तद्वाचकश्चात्र श्यामाशब्दः प्रयुज्यते । किंवाचकः ? उभयवाचकः । श्यामत्वस्योभयत्र भावात्तद्वाचकत्वाच्च शब्दस्य सामान्यवचनं प्रसिद्धम् । सामान्यवचने प्रसिद्धे 'सामान्यवचनै'रिति समासो भविष्यति । न चावश्यं स एव सामान्यवचनो यो बहूनां सामान्यमाह, द्वयोरपि यः सामान्यमाह सोऽपि सामान्यवचन एव ।

प्र०— न वेति । शस्त्रीशब्दोपादानसामर्थ्यात्, श्यामगुणसन्निधानाच्च यादृशं शस्त्र्यां श्यामत्वमन्यविलक्षणं तादृशं देवदत्ताया इति संप्रत्ययादुभयसाधारणं श्यामत्वं भवति सामान्यमिति न कश्चिद्दोषः । तत्र सादृश्यं सामान्यमुच्यते, गुणो वा द्विवृत्तिर्भिन्नोऽप्यभिन्नत्वेन विवक्षितः सामान्यम् ॥ सर्वश्चेति । शब्दान्तरसंबन्धे सर्वः शब्दो विशेषवाचित्वात्सामान्यवचनो न भवतीति सामान्यवचनग्रहणोपादानसामर्थ्याच्छब्दान्तराभिसंबन्धात्समासरूपात्प्राग्यः शब्दः सामान्यवचनः स गृह्यते, केवलश्च श्यामा-

उ०–समास इति । 'न च शस्त्रीस्थ' इत्युपलक्षणम्–उपमानोपमेयस्थ इत्यर्थः । भाष्ये शस्त्रीशब्देनेत्यप्युपलक्षणमुपमेयेन चेत्यस्यापि ।

शस्त्रीशब्दोपादानेति । 'उपमानशब्दोपादाने'ति क्वचित्पाठः । अयमेव युक्तः । अयं भावः—शस्त्र्यादीनामुपमानत्वेनोपादानादुपमेयसापेक्षत्वेन श्यामाशब्दः उपमेयायां वर्तते, तस्य च तन्त्रेणोपमानेऽप्यन्वयः । एवं चोभयवृत्तिगुणवाचकत्वेन तस्य सामान्यवचनत्वमिति भावः ॥ नन्वेवमपि तयोर्गुणयोराश्रयभेदाद्भेदेन सामान्यस्योभयवृत्त्येकधर्मस्य न वाचकमेतदत आह—यादृशमिति । सादृश्यमूलकाभेदाध्यवसायेन सामान्यवचनतेति भावः । सादृश्यमिति । सादृश्यमूलकाभेदमापन्नं श्यामत्वमित्यर्थः । गुणो वेति । क्रियादेरप्युपलक्षणमेतत् । अभिन्नत्वेन विवक्षित इति । श्लेषमूलकाभेदाध्यवसानादित्यर्थः । 'अभेदेने'ति क्वचित्पाठः । भाष्येऽप्युभयवाचक इत्यनेन श्लेषमूलकमभेदाध्यवसानमुभयत्रान्वयश्च दर्शितः । अन्यथा वाचकताया वस्तुतोऽनेकश्यामगुणनिरूपितायाः सत्त्वेन 'न चावश्य'मित्यादिग्रन्थोऽसङ्गत एव स्यात् । अथ बहुगतसामान्यवचनस्यैव ग्रहणेऽपि न क्षतिरित्याह—अथवेति । अत एवाध-

अथवा 'सामान्यवचनै'रित्युच्यते, सर्वश्च शब्दोऽन्येन शब्देनाभिसंबध्यमानो विशेषवचनः संपद्यते, त एवं विज्ञास्यामः 'प्रागभिसंबन्धाद्यः सामान्यवचन' इति ॥५५॥

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ २ । १ । ५६ ॥

सामान्याप्रयोग इति किमर्थम्? इह मा भूत्—पुरुषोऽयं व्याघ्र इव शूरः। पुरुषोऽयं व्याघ्र इव बलवान्।

सामान्याप्रयोग इति शक्यमवक्तुम्। इह कस्मान्न भवति पुरुषोऽयं व्याघ्र इव शूरः, पुरुषोऽयं व्याघ्र इव बलवानिति? असामर्थ्यात्। कथमसामर्थ्यम्? 'सापेक्षमसमर्थं भवती'ति।

एवं तर्हि सिद्धे सति यत् 'सामान्याप्रयोग' इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो 'भवति वै प्रधानस्य सापेक्षस्यापि समास' इति। किमेतस्य

---

प्र०—शब्दः श्यामगुणविशिष्टं स्त्रीत्वयुक्तं द्रव्यमात्रमाहेति सांप्रतिकाभावे भूतपूर्वगत्याश्रयणात्सिद्धमिष्टम् ॥५५॥

उपमितं व्याघ्रा। पुरुषोऽयं व्याघ्र इव शूर इति। उपमानप्रतिपादनपरमेतत्। वैयधिकरण्यादेवात्र समासस्याप्रसङ्गः। यदा तु व्याघ्रशब्दः शौर्यादेः पुरुषार्थ एव वर्तते तदा सामानाधिकरण्ये सति समासेन भाव्यम्। तत्र यदा प्रकरणादिवशान्नियतसाधारणगुणप्रतिपत्तिस्तदा सामान्याप्रयोगे सति समासः। यदा तु गुणान्तरव्यवच्छेदाय विशिष्टसाधारणगुणवचनशब्दप्रयोगः 'पुरुषो व्याघ्र इव शूर' इति, तदा समासाभावाय सामान्याप्रयोगग्रहणम्। भवति वै प्रधानस्येति। न्यायसिद्ध एवार्थे लिङ्ग-

---

उ०—पक्षयोः श्यामापदस्य सामान्यवचनत्वनिर्वाहः। सामान्यवचनग्रहणेति। सामान्यवचनपदेत्यर्थः। समासरूपादिति। इदमुपलक्षणं वाक्यस्यापीति दिक् ॥५५॥

उपमितं व्याघ्रा। उपमानप्रतिपादनेति। उपमानत्वप्रतिपादनेत्यर्थः। एतत्—इवघटितं वाक्यम्। वैयधिकरण्यादेवेति। व्याघ्रस्येवार्थसादृश्यसंबन्धेनान्वय इत्यभिमानः। यदा त्विति। वाक्येऽपीति भावः। इवशब्दस्तु तद्गतोपमानत्वद्योतक इति बोध्यम्। इदमेव युक्तं, पूर्वसूत्रोक्तभाष्यस्वरसात्, समानविभक्तित्वनियमाच्च। साधारणगुणवचनेति। 'भाष्याब्धिः क्वातिगम्भीर' इत्यादौ तु मयूरव्यंसकादित्वात्समासः।

भाष्ये—भवति वै प्रधानस्यापीति। न च पूर्वसूत्रस्थभाष्यरीत्या व्याघ्रेणापि शूरपदार्थान्वयाद्विशेषणमप्यत्र सापेक्षं, यथा व्याघ्रः शूर एवं पुरुष इति प्रतीतेः। अत एवोपमानोपमेययोर्लिङ्गभेदादेर्दोषत्वम्, अन्यतरलिङ्गस्य साधारणधर्मस्योभाभ्यां भिन्नलिङ्गाभ्याम-

ज्ञापने प्रयोजनम् ? राजपुरुषोऽभिरूपः । राजपुरुषो दर्शनीयः । अत्र वृत्तिः सिद्धा भवति॥ ५६॥

## विशेषणं विशेष्येण बहुलम् ॥ २ । १ । ५७ ॥

### विशेषणविशेष्ययोरुभयविशेषणत्वादुभयोश्च विशेष्यत्वादुपसर्जनाप्रसिद्धिः ॥ १ ॥

विशेषणविशेष्ययोरुभयविशेषणत्वादुभयोश्च विशेष्यत्वादुपसर्जनस्याप्रसिद्धिः । कृष्णतिला इति । कृष्णशब्दोऽयं तिलशब्देनाभिसंबध्यमानो विशेषणवचनः संपद्यते । तथा तिलशब्दः कृष्णशब्देनाभिसंबध्यमानो विशेषण-

---

प्र०—दर्शनमिदम् । प्राधान्यादेवानेकोपकारकोपकार्यत्वाविरोधात्समासस्य सिद्धत्वात् ॥५६॥

विशेषणं वि । विशेषणविशेष्ययोरिति । उभयापेक्षेयं षष्ठी । नित्यसापेक्षत्वाद्योभयशब्दस्य शब्दान्तरेण समासो भवति । विशेषणविशेष्याभिमतयोर्द्वयोर्द्वैरूप्यसद्भावात्समाससिद्धावप्यनियतः पूर्वनिपातः प्राप्नोतीति दोषः । कृष्णशब्द इति । कृष्णशब्द उच्चरितो भ्रमरकोकिलादिद्रव्यमात्रं प्रतिपादयति । तिलशब्देन त्वभिसंबध्य-

---

उ०—न्वयायोग्यत्वं हि तद्बीजमिति वाच्यम्, उपमानत्वेन बोधकस्य तस्य साधारणधर्मांशे नित्यसापेक्षत्वेनादोषात् । साधारणधर्मवत्त्वेनेतरपरिच्छेदकत्वं हि तत्त्वम् । तच्च तत्त्वेन ज्ञातस्यैव । यद्यपि साधारणधर्मवत्त्वेन परिच्छेद्यत्वमेवोपमेयत्वमित्युपमेयमपि नित्यसापेक्षम् । इदमपि तत्रैव सूत्रे भाष्ये ध्वनितम् । तथापि ज्ञापकपरं भाष्यमेकदेश्युक्तिः । प्रधानस्य सापेक्षस्य वृत्तिस्तु कैयटोक्तन्यायादेव । 'असामर्थ्या'दित्यस्योभयोरपीतरसापेक्षत्वेनासामर्थ्यादित्यर्थः । 'शस्त्रीश्यामे'त्यादौ पूर्वोत्तरपदयोः परस्परापेक्षत्वं नासामर्थ्यप्रयोजकमिति न दोषः । यद्यपि लिङ्गवचनभेदेऽप्यभेदान्वयो 'वेदाः प्रमाण'मित्यादौ दृष्टस्तथापि लिङ्गभेदादीनां दूषकताबीजं सहृदयोद्वेग एवेति स्पष्टमलङ्कारतत्त्वविदाम् । अनेकोपकारकोपकार्यत्वम्—अनेकविशेषणविशेष्यत्वम् ॥५६॥

विशेषणं वि । भाष्ये—उभयविशेषणत्वादिति । उभयोर्विशेषणत्वादित्यर्थः । कयोरुभयोः ? विशेषणविशेष्ययोः । अत्रोभयमुद्दिश्य विशेषणत्वस्य विधेयताप्रतीतेः समासेनोद्देश्यविधेयभाव इत्यनादेयम् । ननु विशेषणविशेष्ययोरिति षष्ठी नोपसर्जनाप्रसिद्धिरित्यपेक्षया, विशेषणे उपसर्जनत्वप्रसिद्धिसत्त्वात्, नाप्युभयापेक्षया, सविशेषणतया समासानापत्तेरत आह—उभयापेक्षेयमित्यादि । ननु विशेषणविशेष्ययोरुभयं चेद्विशेषणं विशेष्यं च तदोभयोरप्युपसर्जनत्वादुपसर्जनाप्रसिद्धिरिति दूषणासङ्गतिरत आह—अनियत इति । व्यावर्त्यव्यावर्तकभाव एव विशेषणविशेष्यभावः, स च परस्परमुभयोरित्यव्यवस्थेति शङ्कार्थं इति भावः । 'उपसर्जनाप्रसिद्धि'रित्यस्योपसर्जननियमासिद्धिरित्यर्थो भाष्ये । द्रव्यमात्रं—कृष्णगुणं सर्वं द्रव्यम् । तिलशब्दो विशेषणमिति । परिच्छेदकबोधक इत्यर्थः । परिच्छेद्य-

वचनः संपद्यते । तदुभयं विशेषणं भवत्युभयं च विशेष्यम् । विशेषणविशेष्ययोरुभयविशेषणत्वादुभयोश्च विशेष्यत्वादुपसर्जनस्याप्रसिद्धिः* ।

**न वान्यतरस्य प्रधानभावात्तद्विशेषकत्वाच्चापरस्योपसर्जनप्रसिद्धिः ॥ २ ॥**

न वैष दोषः । किं कारणम् ? 'अन्यतरस्य प्रधानभावात्' । अन्यतरदत्र प्रधानम् । 'तद्विशेषकत्वाच्चापरस्य' । तद्विशेषकं चापरम् । अन्यतरस्य प्रधानभावात्तद्विशेषकत्वाच्चापरस्योपसर्जनसंज्ञा भविष्यति । यदास्य तिलाः प्राधान्येन विवक्षिता भवन्ति कृष्णो विशेषणत्वेन तदा तिलाः प्रधानं कृष्णो विशेषणम् ।

कामं तर्ह्यनेनैव हेतुना यस्य कृष्णाः प्राधान्येन विवक्षिता भवन्ति तिला विशेषणत्वेन, तेन कर्तव्यं 'तिलकृष्णा' इति । न कर्तव्यम् । न ह्ययं द्वन्द्वः—

प्र०—मानस्तिलेष्वेव नियम्यते इति कृष्णशब्दो विशेष्यस्तिलशब्दो विशेषणम् । एवं तिलशब्दस्यापि विशेष्यत्वं, कृष्णशब्दस्य च विशेषणत्वमवसेयम् ।

न वेति । अन्यतरस्य । द्रव्यस्यैवेत्यर्थः । अपरस्येति । गुणस्यैवेत्यर्थः । यदास्य तिला इति । ते हि द्रव्यरूपत्वात्क्रियासिद्धये साक्षादुपयुज्यमानाः प्राधान्येन विवक्ष्यन्ते । कृष्णस्तु गुणत्वाद् द्रव्यव्यवधानेन क्रियायामुपयोगाद्विशेषणं तिलानां संपद्यते ।

इतरो यथोक्तन्यायमबुद्ध्वा विवक्षामात्रनिबन्धनत्वमनेन विशेषणविशेष्यभावस्य प्रतिपादितं, विवक्षायाश्च स्वातन्त्र्यादनियमात्प्रयोगानियम इति मन्यमानः पृच्छति-कामं तर्हीति । न ह्ययमिति । न हि गुणद्रव्यवाचिनोर्द्वन्द्व उपपद्यते । गुणवचनस्य द्रव्यापेक्ष-

उ०—परिच्छेदकभाव एव च विशेष्यविशेषणभाव इत्यभिमानः । अन्यतरापरशब्दयोः सर्वप्रतिपादकत्वादनियमस्तदवस्थ इत्यत आह—द्रव्यस्यैवेत्यर्थ इत्यादि । द्रव्यस्यैवानयनादिक्रियासंभवेन तस्यैव क्रियान्वयौचित्येन तस्यैव विषयताविशेषरूपं विशेष्यत्वमिति भावः । एतदेव ध्वनयितुं प्रधानपदं भाष्ये उपात्तम् । तदेव चात्र विशेष्यविशेषणभावशब्देन गृह्यते न तु परिच्छेद्यपरिच्छेदकभाव इति तत्त्वम् । एतदेव ध्वनयन्नाह—ते हीति । 'यदा' 'तदा' शब्दौ भाष्ये यतस्तत इत्यर्थकाविति भावः । प्राधान्येनेत्यस्य—तेनैवेत्यर्थः ।

विवक्षामात्रेति । यदातदाशब्दौ 'विवक्षिता' इतिशब्दस्य भाष्यस्थोऽबोधे विपरीतप्रतिपत्तौ च बीजम् । विशेषणविशेष्यभावस्येति । परिच्छेदकपरिच्छेद्यभावस्येत्यर्थः । प्रतिपादितमित्यस्य 'इति च बुद्ध्वे'ति शेषः । स्वातन्त्र्यादिति । 'प्रयोक्तु'रिति शेषः ॥

* प्रथमानिर्दिष्टं समास उपसर्जनम् १. २. ४३.

कारणम् ? 'गुणवचना'दित्युच्यते न च समासो गुणवचनः । समासोऽपि गुणवचनः । कथम् ? 'अजहत्स्वार्था वृत्ति'रिति । अथ जहत्स्वार्थायां तु दोष एव । जहत्स्वार्थायां च न दोषः । भवति बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा—'शुक्लवाससमानय' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'ति तद्गुणा आनीयते तद्गुणाश्च प्रचरन्ति ।

**उत्तरपदातिशय आतिशायिको बहुव्रीहेर्बह्वाढ्यतराद्यर्थः ॥ ७ ॥**

उत्तरपदातिशय आतिशायिको बहुव्रीहेर्भवति विप्रतिषेधेन । किं प्रयोजनम् ? 'बह्वाढ्यतराद्यर्थः' । बह्वाढ्यतरः बहुसुकुमारतरः । कः पुनरत्र विशेषो बहुव्रीहेर्वातिशायिकः स्यादातिशायिकान्तेन वा बहुव्रीहिः ? स्वरकपोर्विशेषः । यद्यत्रातिशायिकाद् बहुव्रीहिः स्याद् बह्वाढ्यतर एवं स्वरः प्रसज्येत, बह्वाढ्यतर इति चेष्यते* । बह्वाढ्यकतर इति च प्राप्नोति, बह्वाढ्यतरक इति चेष्यते† ।

प्र०-तदर्थस्य स्वतः प्रकर्षाभावादन्यगत एव प्रकर्ष आश्रीयते । यथोक्तम्—

'द्रव्यस्याव्यपदेश्यस्य य उपादीयते गुणः ।
भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते' ॥ इति ।

एक एवासौ प्रकर्ष इत्यर्थः । यद्यप्यत्राश्रयान्तरवर्तिगुणप्रकर्षस्तथापि यत्र यथाभूतः संभवति तत्र तथाभूत आश्रीयते ।

गुणवचनादिति । नात्र'जादी गुणवचनादेवे'ति बोद्धव्यं, तरपोऽत्र प्रकृतत्वात् । तस्माद् गुणस्यैव प्रकर्षः संभवति न द्रव्यस्येत्याश्रित्यैतदुक्तम् । अजहत्स्वार्थेति । तत्र सूक्ष्मार्थस्य विद्यमानत्वात्प्रकर्षसंभवः । बह्वाढ्यातर इति । यद्यत्र बहुव्रीहिं कृत्वा

उ०- भाष्ये—गुणवचनादिति । गुणोपसर्जनगुणिबोधकात्प्रवृत्तिनिमित्तगुणप्रकर्षे, तत्सहचरितगुणप्रकर्षे वा प्रत्यय उच्यत इत्यर्थः । गुणग्रहणं धर्ममात्रपरम् । समासोऽपि गुणवचन इति । सूक्ष्मत्वविशिष्टवस्त्रविशिष्टपुरुषवचनत्वादिति भावः । अन्यपदार्थे रूढतया गुणवचनत्वं नेत्याशयेन पृच्छति—कथमिति । उत्तरयति—अजहत्स्वार्थेति । एवं चावयवार्थोपस्कृतान्य-

* बहोर्नञ्वदुत्तरपदभूम्नि ६. २. १७५; अनुदात्तौ सुप्पितौ ३. १. ४.

† शेषाद्विभाषा ५. ४. १५४.

## समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च ॥ ८ ॥

समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानं कर्तव्यमुत्तरपदलोपश्च वक्तव्यः । शाकभोजी पार्थिवः शाकपार्थिवः । कुतपवासाः सौश्रुतः कुतपसौश्रुतः । अजापण्यस्तौल्वलिरजातौल्वलिः । यष्टिप्रधानो मौद्गल्यो यष्टिमौद्गल्यः ॥६९॥

## चतुष्पादो गर्भिण्या ॥ २ । १ । ७१ ॥

[1]चतुष्पाज्जातिरिति वक्तव्यम् । इह मा भूत्—कालाक्षी गर्भिणी । स्वस्तिमती गर्भिणी ॥७१॥

---

प्र०—आतिशायिकः क्रियते तदा 'बहोर्नञ्वदुत्तरपदभूम्नी'त्यन्तोदात्तत्वमाढ्यशब्दाकारस्य स्याद्रेफाकारस्य चेष्यते । अयमर्थो न्यायसिद्धो यदि समासात्प्रकर्षप्रत्यय उत्पद्यते तदा किं बहुत्वगुणाश्रयः प्रकर्ष उत आढ्यत्वाश्रयः प्रत्ययोत्पत्तिनिमित्तमिति संदेहः स्यात् । तस्मात्पूर्वं प्रकर्षस्य विवक्षा, पश्चादन्यपदार्थस्य ॥ शाकभोजीति । शाकभोजित्वात्तत्साहचर्यात्तद्व्यपदेशान्नार्थ उत्तरपदलोपेनेत्याहुः ॥६९॥

चतुष्पादो । चतुष्पाज्जातिरिति । केचिज्जातिग्रहणमनुवर्त्यमित्याहुः । अन्ये त्वाहुः—शब्दान्तरसन्निधिनिरपेक्षा ये चतुष्पाज्जातिवचनास्त एवान्तरङ्गत्वाद् गृह्यन्ते न तु कालाक्ष्यादयो यौगिकाः शब्दान्तरसन्निधानाच्चतुष्पाज्जातिविषयाः ॥७१॥

---

उ०—पदार्थस्य समुदायेनोपस्थापनाद् गुणवचनत्वम् । प्रवृत्तिनिमित्तसहचरितगुणप्रकर्ष इव प्रवृत्तिनिमित्तविशेषणविशेषगुणप्रकर्षोऽपि तदुत्पत्तिनिमित्तम् । स च 'गोतर' इत्यादाववाच्यगतोऽपि यदि निमित्तं किं वक्तव्यं विशेषणविशेषणतया वाच्यस्येति भावः । अथेति । तत्र हि उपसर्जनपदानामर्थाभावेऽपि प्रधानपदेन समुदायेन वस्तुतस्तादृशगुणोपलक्षितव्यक्तेरेव बोधो न तु गुणानां वाच्यत्वमिति भावः । जहत्स्वार्थायां च न दोष इति । अवयवानामर्थाभावेऽपि तद्गुणविशिष्टाया व्यक्तेरानयनादि यथावाच्यत्वेऽपि तथा तद्गतप्रकर्षे प्रत्ययः, गोतर इत्यादाववाच्यवाहदोहादिप्रकर्ष इवेति भावः । सन्देहः स्यादिति । प्रकरणादिना निश्चयसम्भवादिदं चिन्त्यम् ॥ नार्थ उत्तरपदलोपेनेत्याहुरिति । अत्रारुचिबीजं तु 'शाकभोजिपार्थिव' इत्यादिप्रयोगव्यावृत्तये वार्तिकमावश्यकमिति ॥६९॥

चतुष्पादो । भाष्ये—'वक्तव्य'मित्यस्य व्याख्येयमित्यर्थः । व्याख्यानप्रकारं दर्शयति—केचिदित्यादिना । शब्दान्तरेति । 'चतुष्पाद्वचनाश्चतुष्पाद्विषया' इत्येव पाठः । 'जाति'रित्यस्य विच्छिन्नत्वादन्तरङ्गबहिरङ्गभावस्य च सर्वैर्दुर्ज्ञेयत्वाद्वचनमेवावश्यकमिति तत्त्वम् ॥७१॥

---

१—इतः पूर्वं 'चतुष्पाज्जातिः' इति वार्तिकं क्वचिद् दृश्यते ।

# मयूरव्यंसकादयश्च ॥ २ । १ । ७२ ॥

किमर्थश्चकारः ? एवकारार्थः । मयूरव्यंसकादय एव । क्व मा भूत् ? परमो मयूरव्यंसक इति ॥७२॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् । पादश्च समाप्तः ।

---

प्र०- मयूरव्यंस । मयूर इव व्यंसको धूर्तः, छात्र इव व्यंसकः, काम्बोज इव मुण्ड इत्युपमानसमासापवादोऽयं समासः प्रतिपदविहितोपमानसमासविषयपूर्वपदप्रकृतिस्वर-बाधनार्थं इत्याहुः ॥७२॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे द्वितीयाध्यायस्य प्रथम पादे तृतीयमाह्निकम् । पादश्च समाप्तः ।

---

उ०- मयूरव्यंस । मयूर इव व्यंसक इति । केचित्तु विशेषणसमासे गुणवचनत्वाद्व्यंसकस्य पूर्वनिपाते प्राप्ते इदमित्याहुः । तन्न । 'उपमानानी'ति सूत्रस्थभाष्यकैटरीत्या तस्य 'येन नाप्राप्ति'न्यायेन विशेषणसमासबाधकत्वात् ॥७२॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् । पादश्च समाप्तः ।

---

# अथ द्वितीयः पादः

## अर्धं नपुंसकम् ॥ २ । २ । २ ॥

इह कस्मान्न भवति—ग्रामार्धः नागरार्ध इति ? अर्धशब्दस्य नपुंसकलिङ्गस्येदं ग्रहणं पुँल्लिङ्गश्चार्धशब्दः । क्व पुनरयं नपुंसकलिङ्गः क्व पुँल्लिङ्गः ? समप्रविभागे नपुंसकलिङ्गः, अवयववाची पुँल्लिङ्गः ।

इह कस्मान्न भवति—अर्धं पिप्पलीनामिति ? न वा भवत्यर्धपिप्पल्य इति ? भवति यदा खण्डसमुच्चयः—अर्धपिप्पली चार्धपिप्पली

---

प्र०- अर्धं नपुं। नपुंसकस्याव्यवस्थितत्वात्कृते च समासे पूर्वपदार्थस्य लिङ्गविशेषानवधारणात्कृतमपि नपुंसकग्रहणमकृतसममिति मत्वा पृच्छति-इहेति । क्व पुनरिति । नपुंसकत्वावधारणहेतावर्थे प्रश्नः । अवयववाची पुँल्लिङ्ग इति । नियमेन नपुंसकलिङ्गो न भवतीत्येवंपरमेतत् । अवयववाची त्वभिधेयवशात्सर्वलिङ्गः । तथा च प्रयोगो दृश्यते—'अपूपार्धं मया भक्षितं' 'दन्तार्धमास्यात् पतित'मिति । तदत्र नपुंसकग्रहणाद्य-

---

उ०- अर्धं नपुं। सूत्रे 'नपुंसक'मित्युक्तेरिह 'कस्मा'दितिप्रश्नोऽनुपपन्न इत्याशङ्क्याह—नपुंसकस्येति। सूत्रे नपुंसकग्रहणं किमर्धशब्दस्यार्थविशेषप्रतिपत्तये, उत समासगतरूपविशेषप्रतिपत्तये ? नाद्य इत्याह—अव्यवस्थितत्वादिति । नपुंसकत्वस्यापूपार्धमित्यादावन्यपदार्थेऽपि दर्शनादिति भावः । नान्त्य इत्याह—कृते चेति । तस्य नपुंसकत्वलक्षणविशेषानवसायेन तत्कृतरूपविशेषाभावादिति भावः । अधिकरणस्याकाशस्य निर्ज्ञातत्वात्प्रश्नानुपपत्तेराह—नपुंसकत्वेति । कस्मिन्नर्थे पुंस्त्ववाचक इति भाष्याक्षरार्थः ॥ पुँल्लिङ्ग एवेति भ्रमं वारयति—नियमेनेति । नपुंसकग्रहणं ज्ञापकमिति । निर्देशेन नपुंसकत्वमात्रे लब्धेऽपि नित्यनपुंसकत्वलाभाय तस्यावश्यकत्वम् । अन्यथा 'अपूपाधर्मम्' 'दन्तार्ध'मित्यादावसमांशवाचिन्यपि एकदेशिसमासः स्यादिति चिन्त्यमेतत् । परे तु 'समप्रविभागे नपुंसकलिङ्ग' इत्यस्य—नपुंसकलिङ्गोऽपीत्यर्थः । अत एव 'ए ओङ्' 'एच इ'गिति सूत्रयोर्भाष्ये 'एचो ह्रस्वविधानेऽर्धैकारार्धौकारौ प्राप्नुत' इति शङ्कायां 'नैव लोके नापि वेदेऽर्धं एकारोऽर्ध ओकारो वास्ती'त्युत्तरपदभाष्ये समविभागविषयेऽपि पुँल्लिङ्गः प्रयुक्तः । अवयववाची तु पुँल्लिङ्ग एव । अपूपार्धमिति—समप्रविभाग एव । अन्यत्रापूपार्धं इत्येव । 'परवल्लिङ्ग'मिति सूत्रे भाष्ये-

चार्धपिप्पली च=अर्धपिप्पल्य इति । यदा त्वेतद्वाक्यं भवत्यर्धं पिप्पलीनामिति तदा न भवितव्यम् । तदा कस्मान्न भवति ? एकाधिकरणे* इति वर्तते ।

न तर्हीदानीमिदं भवति 'अर्धराशि'रिति ? भवति । एकमेवेदमधिकरणं भवति योऽसौ राशिर्नाम ॥२॥

प्र०—स्मिन्नर्थविशेषे नियमेन नपुंसकत्वं तदर्थवृत्तिरेवार्धशब्द आश्रीयते, तत्रैवार्थे नपुंसकत्वाव्यभिचारात् । 'अर्ध'मिति निर्देशादेव नपुंसकत्वे लब्धे नपुंसकग्रहणं ज्ञापकं निर्देशेषु लिङ्गाविवक्षायाः । यदा त्वेतदिति । अर्थश्चात्र भिद्यत एव । समासे च कृते 'अर्धपिप्पली'त्येव स्यात्, पूर्वपदार्थस्य च प्राधान्यात्तस्य चैकत्वात् ।

अर्धराशिरिति । राशेरवयवव्यतिरेकेणासत्त्वादवयवानां च बहुत्वादेकत्वाभावं मन्यते । एकमेवेति । शब्दादेकस्यैवार्थस्य तिरोहितभेदस्यावगमात् ॥२॥

उ०—प्येतत्स्पष्टमित्युत्तरसूत्रे स्फुटीकरिष्यते । अन्यतरस्यांग्रहणापकर्षेण योगविभागेन वा एकदेशिसमासविषये षष्ठीसमासः सूत्रकृतोऽपीष्ट एव । एवं चारम्भप्रत्याख्यानयोः समफलता । नपुंसकग्रहणं तु सूत्रेषु निर्देशो लिङ्गाविवक्षाया ज्ञापकमित्याहुः ।

भाष्ये—अर्धं पिप्पलीनामिति । दशानां पिप्पलीनामर्धमित्यर्थः । न च समासे एकत्वसंख्यायामौत्सर्गिकत्वात्कथमत्र समासापादनम्, एकत्वस्यापि तत्राभानाच्छुद्धपिप्पलीत्वेनानेकपिप्पलीबोधसम्भव इति शङ्काशयः । इतरोऽर्धपदार्थस्य तत्र पञ्चपिप्पलीरूपत्वेन समासे बहुवचनं मत्वा पृच्छति—न वा भवतीति । अर्थान्तरे भवति न त्वेतदर्थे इत्याह परः—भवति यदेत्यादिना । अर्थश्चात्रेति । दशानां पिप्पलीनामर्धं, पञ्चेत्यत्रार्थः, पिप्पलीनां प्रत्येकमर्धानि बहूनीति तत्रार्थः । भाष्ये—'तदा न भवितव्य'मित्यस्य—'अनेन रूपेण न भवितव्य'मित्यर्थस्तमभिप्रेत्याह—अर्धपिप्पलीत्येव स्यादिति । यद्यप्यर्धपदार्था बहवस्तथाप्यर्धशब्देनैकत्वावरुद्धसमुदायस्यैव भानादिति भावः ॥ तदा कस्मान्नेति । समासः कुतो नेत्यर्थः ।

तिरोहितभेदस्येति । तिरोहितावयवभेदस्येत्यर्थः । समूहः समूहिभ्यो भिन्नोऽपीति भावः ॥२॥

* पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २. २. १

## द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ २ । २ । ३ ॥

अन्यतरस्यां ग्रहणं किमर्थम् ? अन्यतरस्यां समासो यथा स्यात्, समासेन मुक्ते वाक्यमपि यथा स्यात्–'द्वितीयं भिक्षाया' इति । नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा, तया वाक्यमपि भविष्यति ।

इदं तर्हि प्रयोजनमेकदेशिसमासेन मुक्ते षष्ठीसमासोऽपि यथा स्यात्†—'भिक्षाद्वितीय'मिति । एतदपि नास्ति प्रयोजनम् । अयमपि विभाषा, षष्ठीसमासोऽपि । तावुभौ वचनाद्भविष्यतः ॥ अत उत्तरं पठति—

**द्वितीयादीनां विभाषाप्रकरणे विभाषावचनं ज्ञापकमवयवविधाने सामान्यविधानाभावस्य ॥ १ ॥**

द्वितीयादीनां विभाषाप्रकरणे विभाषावचनं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यते ? एतज्ज्ञापयत्याचार्यो'ऽवयवविधौ सामान्यविधिर्न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? भिनत्ति छिनत्ति । श्नमि कृते‡ शब्न भवति ।

नैतदस्ति प्रयोजनम् । शबादेशाः श्यनादयः करिष्यन्ते । तत्तर्हि शपो ग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'कर्तरि शप्'

प्र०- द्वितीयतृतीय । अन्यतरस्यां ग्रहणस्य पक्षे षष्ठीसमासप्राप्तये कृतस्य ज्ञापकत्वं नान्तरीयकतया प्रतिपादयितुं पूर्वपक्षोपन्यासः । यद्यपि 'पारेमध्ये' इत्यत्रायमर्थो ज्ञापितस्तथापीह स्मरणाय पुनर्ज्ञाप्यते ।

अवयवविधान इति । सामान्याश्रयसमूहापेक्षया प्रतिनियतो विशेष एकदेशो भवतीति विशेषविषयं विधानमवयवविधानशब्देनोक्तम् । किमेतस्येति । न्यायादेव विशेषविधिः सामान्यविधेर्बाधक इति मत्वा पृच्छति । भिनत्तीति । विरोधादेकफलत्वाच्च बाध्यबाधकभावः । इह तु भिन्नदेशत्वाद्विरोधाभावो विकरणानां चानर्थक्यादेक-

उ०- द्वितीयतृतीय । नान्तरीयकतयेति । तत्सिध्यनुगुणतया ज्ञापकत्वमस्येति भावः । स्मरणाय पुनर्ज्ञाप्यते इति । वारद्वयज्ञापनं दृढसंस्कारजननद्वारा शीघ्रस्मरणायेत्यर्थः । विनिगमनाविरहादिदमपि ज्ञापकमिति भावः ।

सामान्येऽवयवाभावादाह—सामान्याश्रयसमूहेति । 'षष्ठी'त्यादिना सामान्यशास्त्रेण विहितेत्यर्थः । प्रतिनियत इति । 'अर्धं'मित्यादिशास्त्रेण विहितः । भाष्ये–अवयवविधाविति । तद्विषये नोत्सर्गप्रवृत्तिरित्यर्थः । न्यायादिति । येन नाप्राप्तिन्यायादित्यर्थः । विरोधादित्यादि ।

† षष्ठी २. २. ८. ‡ रुधादिभ्यः श्नम् ३. १. ७८.

[३.१.६८] इति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । 'रुधादिभ्य' इत्येषा पञ्चमी 'श'बिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' [१.१.६७] इति । प्रत्ययविधिरयम्, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नायं प्रत्ययविधिः । विहितः प्रत्ययः प्रकृतश्चानुवर्तते ।

एवं तर्हि ज्ञापयत्याचार्यो 'यत्रोत्सर्गापवादं विभाषा तत्रापवादेन मुक्त उत्सर्गो न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? 'दिक्पूर्वपदान्ङीप्' [ ४. १. ६० ] । प्राङ्मुखी प्राङ्मुखा । प्रत्यङ्मुखी प्रत्यङ्मुखा । ङीपा मुक्ते ङीष् न भवति* ।

नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत्—'दिक्पूर्वपदान्ङीषोऽनुदात्तत्वम् ङीब्विधाने ह्यन्यत्रापि ङीब्विषयान्ङीप्प्रसङ्ग' इति† ।

प्र०–फलत्वाभावः । वार्तिककारस्य मतेनेदमुक्तम् । स हि विरोधाभावे बाध्यबाधकभावं नेच्छति । तथा चाह—'अम्बहुजकक्षु नानादेशत्वादुत्सर्गप्रतिषेध' इति । भाष्यकारस्तु विनापि विरोधेन सामान्यविशेषविध्योर्बाध्यबाधकभावमभ्युपगच्छति । अर्थाभिधाने साहायकप्रतिपत्तावेकफलताप्यनयोरस्ति । प्राङ्मुखीति । 'अस्वाङ्गपूर्वपदाद्वे'त्यतो ङीष्ङीब्विधौ वेत्यनुवृत्तिः ।

नैतदस्तीति । वार्त्तिककारस्य मतमाश्रित्य प्रयोजनप्रत्याख्यानम् । यद्यपूर्वो ङीब्विधीयते तदा 'प्रागुल्फा' 'प्राग्जङ्घे'त्यादावपि स्यात् । ङीष एव त्वनुदात्तत्वविधाने

उ०–तदुभयसत्त्वे हि बाध्यबाधकभावः । प्रकृते चोभयोरप्यभावात्तदभाव इति वार्त्तिकमतेनेदं प्रयोजनमुक्तमित्यन्वयः । भाष्यकारस्त्विति । 'सत्यपि सम्भवे बाधनं भवती'ति तदुक्तेरिति भावः । नन्वीदृशं दधिदानं तक्रदानस्य निवर्त्तकं दृष्टं, तत्र ह्येकफलतास्ति, न च सा प्रकृते दृश्यत आह—अर्थाभिधाने इति । प्रतिपत्तिः—प्राप्तिः । वस्तुतो भाष्यमते विरोधाभाव इवैकफलत्वाभावेऽपि बाध इति निरूपितमाकडारसूत्रे भाष्ये ।

शबादेशाः श्यन्नादय इति । तत्र श्नमादेशत्वाच्छपं निवर्त्तयति, मित्वादन्त्यादचः परो ऽभागमवदिति भावः । भाष्ये—यत्रोत्सर्गापवादमिति । 'यत्रोत्सर्गापवादं महाविभाषा-विकल्पितं तत्रे'ति पाठान्तरम् । 'अस्वाङ्गपूर्वपदाद्वेत्यतो ङीष्ङीब्विधौ वे'त्यनुवृत्तिरिति पाठः । उत्सर्गापवादयोरुभयोरपि वैकल्पिकत्वं दर्शयितुं ङीष्ङीब्विधावित्युक्तम् ।

वार्त्तिकारस्येति । यदि त्वसंयोगोपधादित्याद्यनुवर्त्यापूर्वो ङीब्विधीयते तदा प्रयोजनं भवत्येवेत्येवमुक्तम् । इत्यादावपि स्यादिति । 'असंयोगोपधा'दित्याद्यनुवृत्तौ प्रतिपत्तिगौरव-मिति वार्त्तिकाशय इति भावः । ङीष एव त्वनुदात्तत्वविधाने इति । ङीबादेशद्वारेत्यर्थः ।

* स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४. १. ५४. † ४. १. ६० वा० १; २. पृ० ५१६.

इदं तर्हि प्रयोजनम्—अर्धपिप्पली अर्धकोशातकी, एकदेशिसमासेन† मुक्ते षष्ठीसमासो न भवति । उन्मत्तगङ्गम् लोहितगङ्गम्, अव्ययीभावेन[1] मुक्ते बहुव्रीहिर्न भवति । दाक्षिः प्लाक्षिः, इञा मुक्तेऽण्न भवति[2] ।

यद्येतज्ज्ञाप्यत उपगोरपत्यमौपगवः, तद्धितेन मुक्त उपग्वपत्यमिति न सिध्यति । अस्त्यत्र विशेषः । द्वे ह्यत्र विभाषे—'दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम्' [ ४. १. ८१ ] इति 'समर्थानां प्रथमाद्वा' [८२] इति च । तत्रैकया वृत्तिर्विभाषा, अपरया वृत्तिविषये विभाषापवादः ।

क्रियमाणेऽपि वा अन्यतरस्यां ग्रहणे षष्ठीसमासो न प्राप्नोति । किं कारणम् ? '[3]पूरणे ने'ति प्रतिषेधात्* । नैतत्पूरणान्तम् । अना एतत्पर्यवपन्नम्‡ । एतदपि पूरणान्तमेव । कथम् ? पूरणं नामार्थस्तदाह तीयशब्दोऽतः पूरणम् ।

प्र०—दोषोऽत्र प्रसिद्धित्वाद्दोषाभावः । तदेवं नित्ये स्वरमात्रविधाने नास्ति सामान्यविशेषविधित्वम् । वृत्तिविषय इति । एकार्थीभावविषय इत्यर्थः ।

नैतदिति । 'पूरणगुणे'त्यत्र पूरणाधिकारविहितप्रत्ययान्तग्रहणादिति भावः । अनैतदिति । 'पूरणाद्भागे तीयाद'न्निति स्वार्थिकेनाना व्यवहितमित्यर्थः । एतदपीति ।

उ०—'नित्ये स्वरमात्रविधाने' इत्यस्यापि स्वरमात्रफलके ङीबादेशविधाने इत्यर्थः । नित्यत्वं वाग्रहणाननुवृत्तेः । तदनुवृत्तौ हि पक्षे ङीब्श्रवणं स्यादेवेति भावः ।

भाष्ये—इदं तर्हि प्रयोजनमर्धपिप्पलीत्यादि । 'परवल्लिङ्ग'मितिसूत्रस्थभाष्येणेदं विरुध्यते । तत्र हि—'एकदेशिसमासो नारप्स्यते । कथमर्धपिप्पलीति ? समानाधिकरणो भविष्यति—अर्धं चासौ पिप्पली चेति । न चैकदेशिसमासारम्भे षष्ठीसमासस्य तेन बाधो भवति, अन्यथा षष्ठीसमासोऽपि प्राप्नोति । इष्यते षष्ठीसमासोऽपि—'अपूपार्धं मया भक्षितं' 'लब्धं मया ग्रामार्ध'मिति । एवं पिप्पल्यर्धमित्यपि भवितव्य'मित्युक्तम् । तस्माद्यथाश्रुतसूत्रमते एकदेश्युक्तिरियम् । उन्मत्तगङ्गम् । अव्ययीभावेनेति । यद्यपि वाक्येन संज्ञानवगमात्सोऽव्ययीभावो नित्यसमासस्तदुक्तसमासान्यूनार्थकवाक्याभावात्तथापि वापदं तत्र सम्बध्यत एव । अत एव वाक्यं भवत्येव । अत एव 'संज्ञाया'मिति समासविषयेऽपि 'वाप्यामश्वो वाप्यश्व' इति वाक्यं भाष्याद्युक्तं सङ्गच्छत इति भावः ।

पूरणाधिकारेति । पूरणशब्दस्य स्वरितत्वादित्यभिमानः । 'पर्यवपन्न'शब्दं व्याचष्टे—अना व्यवहितमिति । स्वरभेदं प्राप्तमिति यावत् । न तु तदधिकारेति । एवं च सूत्रे विनि-

† अर्धं नपुंसकम् २. २. २.   १–अन्यपदार्थे च संज्ञायाम् २. १. २१.
२–अत इञ् ; प्राग्दीव्यतोऽण् ; तस्यापत्यम् ४. १. ९५; ८३; ९२.   ३–'पूरणेनेति' पा० ।
* पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २. २. ११.
‡ पूरणाद् भागे तीयादन् ५. ३. ४८.

प्रोऽसौ पूरणान्तात्स्वार्थे भागेऽन् सोऽपि पूरणमेव ।

एवं तर्ह्यन्यतरस्यांग्रहणसामर्थ्यात्षष्ठीसमासोऽपि भविष्यति ॥३॥

## प्राप्तापन्ने च द्वितीयया ॥ २ । २ । ४ ॥

किमर्थश्चकारः ? अनुकर्षणार्थः । [ [1]किमनुकृष्यते ? ] 'अन्यतरस्या'-मित्येतदनुकृष्यते† । किं प्रयोजनम् ? अन्यतरस्यां समासो यथा स्यात्, समासेन मुक्ते वाक्यमपि यथा स्यात्—'जीविकां प्राप्त' इति । नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा तया वाक्यमपि भविष्यति ।

इदं तर्हि प्रयोजनं द्वितीयासमासोऽपि यथा स्यात्‡—'जीविकाप्राप्त' इति । एतदपि नास्ति प्रयोजनम् । अयमप्युच्यते द्वितीयासमासोऽपि, तदुभयं वचनाद्भविष्यति ।

एवं तर्हि नायमनुकर्षणार्थश्चकारः । किं तर्हि ? अत्वममेन विधीयते—'प्राप्तापन्ने द्वितीयान्तेन सह समस्येते, अत्वं च भवति प्राप्तापन्नयो'रिति । प्राप्ता जीविकां प्राप्तजीविका । आपन्ना जीविकामापन्नजीविका ॥४॥

प्र०—'पूरणगुणसुहितार्थे'त्यत्रार्थशब्दस्य प्रत्येकं सम्बन्धात् पूरणार्थग्रहणं न तु तदधिकारविहितप्रत्ययग्रहणमित्यर्थः ॥३॥

प्राप्तापन्ने च । अत्वं च भवतीति । चकारेण समुच्चयार्थेनाकारप्रश्लेषोऽनुमीयते । सौत्रत्वाच्च निर्देशस्य प्रकृतिभावः प्रगृह्याश्रयो न भवति । यद्वा समाहारद्वन्द्वे कृते विषयसप्तमी अकारादेशापेक्षा क्रियते, सुबिति चानुवर्तनात् प्राप्तापन्नयोरेव सन्निधानादुपसर्जनसंज्ञा भवति, सूत्रारम्भसामर्थ्याद्वा । प्राप्ता जीविकामिति । लिङ्गविशिष्टपरिभाषया 'प्राप्ता'शब्दस्य समासः ॥४॥

उ०—गमनाविरहाङ्गाध्यप्रामाण्याच्चान्प्रत्ययान्तानां केवलानां च द्वितीयादीनां ग्रहणम् । भिक्षासंबन्धिद्वित्वसंख्यापूरणमित्यर्थः । भाष्ये—एवं तर्हीति । अन्यतरस्यामित्येतत्सामर्थ्यात्पूरणेति प्रतिषेधो नेति भावः ॥३॥

प्राप्तापन्ने च । अयमप्युच्यत इत्यादि उभयोरपि प्राप्तापन्नग्रहणेन विशेषविहितत्वादित्यर्थः । द्वितीययेत्यत्र प्रश्लेषे उद्देश्यासंनिधानं, चकारेण व्यवधानं चेति भावेनाह—सौत्रत्वाच्चेति । सूत्रारम्भेति । 'द्वितीयाश्रिते'त्येव सिद्धे एतत्सामर्थ्यादिति भावः । लिङ्गविशिष्टेति । एकादेशस्य पूर्वान्तत्वादित्यपि बोध्यम् ॥४॥

१—क्वचिन्न । † द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् २. २. ३.
‡ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २. १. २४.

# कालाः परिमाणिना ॥ २ । २ । ५ ॥

किं प्रधानोऽयं समासः ? उत्तरपदार्थप्रधानः । यद्युत्तरपदार्थप्रधानः सधर्मणानेनान्यैरुत्तरपदार्थप्रधानैर्भवितव्यम् । अन्येषु चोत्तरपदार्थप्रधानेषु यैवासावन्तर्वर्तिनी विभक्तिस्तस्याः समासेऽपि श्रवणं भवति । तद्यथा—राज्ञः पुरुषो राजपुरुष इति । इह पुनर्वाक्ये षष्ठी, समासे प्रथमा । केनैतदेवं भवति ? योऽसौ मासजातयोरभिसंबन्धः स समासे निवर्तते । अभिहितः सोऽर्थोऽन्त-

---

प्र०– कालाः । इह वृत्तिवाक्ययोः समानार्थत्वं न्याय्यं 'मासो जातस्ये'ति च वाक्ये जातस्य विशेषणत्वादप्राधान्यम्, समासे तु 'मासजातो दृश्यता'मित्यादौ जातस्यैव कार्यसम्बन्धावगमात् प्राधान्यमन्योत्तरपदार्थप्रधानवैधर्म्यं च लक्ष्यत इति मत्वा पृच्छति—किं प्रधान इति ।

योऽसाविति । षष्ठीनिवृत्तौ न्यायकथनम् । सम्बन्धस्य चान्तर्भावादनुद्भव एव निवृत्तिः । अभिहित इति । प्रथमोत्पत्तिनिमित्तकथनम् । अनुद्भूतोऽपि सम्बन्धो गुणभावेन समासाविधेयत्वाभिहित इत्युच्यते । तत्राभिहितोऽपि कश्चिन्नान्तर्भवति, यथा 'राज्ञः पुरुष' इत्यत्र वाक्ये षष्ठ्या सम्बन्धोऽभिधीयते न तु क्वचिदन्तर्भावमुपयाति । राजसखादौ च बहुव्रीह्यर्थस्यान्तर्भावोऽस्ति, न त्वभिधानमित्युभयोपादानम् ।

---

उ०– कालाः परि । तत्पुरुषे प्राय उत्तरपदार्थप्राधान्यात्प्रश्नानुपपत्तिमाशङ्क्याह—इहेति । प्राधान्यमिति । एवं च समानार्थत्वभङ्ग इति भावः । ननु चित्रगुरित्यादिवत्समासे उत्तरपदार्थप्राधान्यमेकार्थीभावकृतं स्यात्तत्राह—अन्योत्तरेति । तद्वैधर्म्यं च भाष्योक्तम् । किं च वाक्यविपरीतविशेषणविशेष्यभावो नैकार्थीभावसाध्यः, अत एव तस्य एकार्थीभावकृतविशेषेषु भाष्ये गणनाभावः । किं प्रधानोऽयं समास इति समासपदं विग्रहपरमपि ।

उत्तरपदार्थप्रधान इत्युत्तरमप्युभयसाधारणम् । न च विग्रहेऽपि जातस्य प्राधान्ये 'जातस्य मास' इति षष्ठ्यनुपपत्तिः, विशेषणादेव षष्ठीविधानादिति वाच्यं, वृत्तिविग्रहयोः समानार्थत्वानुरोधेन तस्य वाक्यस्य वृत्त्यर्थबोधकत्वविवक्षायां विशेष्यविशेषणभाववैपरीत्येऽपि पूर्वजातसंस्कारानिवृत्तेः । अन्यथा समासे जातप्राधान्येन विशेषणविभक्तिषष्ठ्यापादनस्य भाष्येऽसङ्गत्यापत्तेः । मम तु न दोषः, विग्रहेऽपि तस्यैव प्राधान्येन तत्स्थितिवत्समासादपि तदापादनात् । तदुत्तरषष्ठ्यैव तत्र मासविशेषणकसम्बन्धप्रतीतिवत्समासे विशिष्टोत्तरषष्ठ्या तत्सम्भव इत्याशयात् । सम्बन्धस्याशेषत्वान्न षष्ठीत्युत्तरम् । भाष्ये—यैवासावन्तर्वर्तिनीति । 'उत्तरपद' इति शेषः ।

योऽसाविति । परिच्छेद्यपरिच्छेदकस्वरूपः । समासे इति । षष्ठीप्रयोजको न भवतीत्यर्थः । तदाह—अभिहित इति । षष्ठ्यप्रवृत्तौ निमित्तमिदम्, समासेनाभिहितो यतः—

भूतः प्रातिपदिकार्थः संपन्नस्तत्र 'प्रातिपदिकार्थे प्रथमे'ति* प्रथमा [1]भवति । न तर्हीदानीमिदं भवति मासजातस्येति ? भवति बाह्यमर्थमभिसमीक्ष्य षष्ठी ।

**कालस्य येन समासस्तस्यापरिमाणित्वादनिर्देशः ॥ १ ॥**

कालस्य येन समासः सोऽपरिमाणी, तस्यापरिमाणित्वादनिर्देशः । अगमको निर्देशोऽनिर्देशः । न हि जातस्य मासः परिमाणम् । कस्य तर्हि ?

प्र०-इह परिमाणं जातस्य प्रतिपादयितुं वाक्ये परिमाणिन एव षष्ठी कर्तव्या—'मासो जातस्ये'ति । मासस्य जात इति ह्यभिधीयमाने विवक्षितोऽर्थो न प्रतीयते । तत्र यथा चित्रा गावो यस्येति वाक्ये यद्यपि गवां प्राधान्यं तथापि चित्रगुरिति वृत्तावप्राधान्यमेव, तथेहापि वृत्तिवाक्ययोः परिमाणिनः प्राधान्याप्राधान्ये शब्दशक्तिस्वाभाव्याद् भवतः । भवति बाह्यमिति । परिमाणपरिमाणिसम्बन्ध एव समासेऽन्तर्भूतः, न तु बाह्यसम्बन्ध्यपेक्षो 'मासजातस्य वस्त्र'मित्यादिरपि सम्बन्ध इत्यर्थः ।

न हि जातस्येति । तस्य हि दिष्ट्यादि परिमाणं, न तु मासः, नापि तत्सत्ताया

उ०-अत एवान्तर्भूतः । प्रथमोत्पत्तिनिमित्तमाह—प्रातिपदिकार्थ इति । हि यतोऽभिहितः, अत एव प्रातिपदिकार्थः संपन्न इत्यर्थः । अन्यथा 'पचती'त्यादौ कर्ताभिधीयमानो गुणभूतत्वादन्तर्भूतोऽपीति तत्रापि प्रथमा स्यादत इदमुक्तम् । अनभिहितसम्बन्ध एव षष्ठीति तात्पर्यम् । अन्तर्भावादिति । सम्बन्धिविषयकोपस्थितिविषयत्वादित्यर्थः । अनुद्भव एवेति । पृथगुपस्थित्यविषयसम्बन्धिकत्वमनुद्भवः । प्रथमोत्पत्तिनिमित्तमिति । षष्ठीप्रतिबन्धद्वारेत्यर्थः । ननु 'पक्व' इत्यादौ तत्त्वेनाभिधीयमानं कर्मादिकमभिहितमित्युच्यते नैव तथा सम्बन्धत्वेनाभानादत आह—गुणभावेनेति । सम्बन्धाभिधानमेव भवतीत्यर्थः । सम्बन्धिविषयकोपस्थितिविषयत्वमेव गुणभाव इत्याहुः । न तु क्वचिदन्तर्भावमिति । न सम्बन्धिविषयकोपस्थितौ विषयो भवतीत्यर्थः । उभयोः पृथगुपस्थितयोरेव सम्बन्धसम्भावादिति भावः । विवक्षितोऽर्थ इति । 'कियान्कालोऽस्य जातस्ये'ति प्रश्ने 'जातस्य मास' इत्युत्तरेणैवाकाङ्क्षाशान्तिर्न तु 'मासस्य जात' इत्युत्तरेणेति स एव विवक्षितोऽर्थः, स च न ततः प्रतीयत इति भावः । मासजात इति समासस्य स्वार्थमुत्तरत्वं बोध्यम् ॥ नन्वेवं विग्रहे षष्ठीसमासेनैव सिद्धौ सूत्रं व्यर्थम्, उत्तरं तु तवैव समाप्यार्थमेवेति चेत्, न, एतद्भाष्यप्रामाण्येन परिच्छेद्यपरिच्छेदकसमभिव्याहारे परिच्छेद्यबोधकादेव षष्ठीति स्वीकारात्, अवयवावयविनोः समभिव्याहारे यथावयविवाचकादेव । तत्रार्थे 'जातमास' इत्यनिष्टनिवृत्त्यर्थं सूत्रम् । शब्दशक्तिस्वाभाव्यादिति । यद्यपि एतद्भाष्यात्तद्धहतीति सूत्रभाष्याच्च वृत्त्यर्थोपदर्शके विग्रहवाक्येऽपि तत्समानैव विषयतेति लभ्यते तथाप्यत्र वाक्यपदमर्थबोधाय प्रयुक्तस्वतन्त्रवाक्यपरमिति बोध्यम् । भाष्येऽप्येवमेव ।

* प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २. ३. ४६. [1]-'भविष्यति' पा० ।

त्रिंशद्रात्रस्य । तद्यथा—'द्रोणो बदराणां देवदत्तस्ये'ति । न देवदत्तस्य द्रोणः परिमाणम् । कस्य तर्हि ? बदराणाम् ।

**सिद्धं तु कालपरिमाणं यस्य स कालस्तेन ॥ २ ॥**

सिद्धमेतत् । कथम् ? कालपरिमाणं यस्य स कालस्तेन सह समस्यत इति वक्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'कालस्य येन समासस्तस्यापरिमाणित्वादनिर्देश' इति । कं पुनः कालं मत्वा भवानाह 'कालस्य येन समासस्तस्यापरिमाणित्वादनिर्देश' इति ? येन मूर्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं

---

प्र०-मासः परिमाणम्, सत्ताया नित्यत्वात् । नापि जन्मक्रियायाः, तस्या एकक्षणभावित्वान्मासेन संबन्धासंभवात् । त्रिंशद्रात्रस्येति । ननु त्रिंशद्रात्र एव मासो नापर इति भेदाभावादयुक्तमेतत् । नैष दोषः । कालो जातस्य मासेन परिच्छिद्यते । तथा हि—'कियान् कालोऽस्य जातस्ये'ति प्रश्ने 'मास' इत्यादि प्रतिवचनम् । स च परिच्छिद्यमानस्त्रिंशद्रात्रात्मक एव संपद्यत इत्यभिप्रायेणैतदुक्तम् । एतदेव दृष्टान्तेन दर्शयति—तद्यथेति ।

सिद्धं त्विति । कालशब्देन कालसामान्यमुच्यते । यस्य जातादेः संबन्धिनः कालसामान्यस्य परिमाणं मासादिस्तेन स कालो मासादिः समस्यते । अथवा कालशब्देन मासादिः कालविशेष उच्यते, स कालः परिमाणं यस्य कालसामान्यस्य तद्यस्य सन्बन्धि तेन स कालो मासादिः समस्यत इत्यर्थः । कं पुनरिति । यदि नित्य एको विभुः कालस्तदा तस्य भेदाभावात्परिच्छेदकत्वासंभवः । अथोपाधिभेदात्तस्य भेदस्तदा तद्भेदभिन्नस्य जातमपि प्रति परिच्छेदकत्वमस्त्येव । येन मूर्तीनामिति । तरुतृणलताप्रभृतीनां कदाचिदुपचयः, अन्यदा त्वपचयः । स प्रत्ययान्तराविशेषेऽपि

---

उ०- सत्ताया नित्यत्वादिति । नित्यत्वमत्र परिच्छेदककालाधिककालस्थायित्वं बोध्यम् । इत्यभिप्रायेणेति । जातसम्बन्धी कालो मास इत्यभिप्रायः । भाष्ये—बदराणामिति । देवदत्तसम्बन्धिबदराणामित्यर्थः ।

कालशब्देनेति । 'कालपरिमाण'मिति षष्ठीतत्पुरुषः । अत्र व्याख्याने वार्तिकस्थकालपदार्थयोः स्वरसत ऐक्यं प्रतीयमानं भज्येतेत्यत आह—अथवेति । अत्र पक्षे 'कालपरिमाण'मिति बहुव्रीहिः । तद्यस्येति । तत्—कालसामान्यम् ॥ जातमपि प्रतीति । जननक्रियापरिच्छेदद्वारेत्यर्थः । तरुतृणेति । पदार्थानामनन्यथासिद्धवृद्ध्यपेक्षयानुमेयः काल इति भाष्याशय इति भावः । प्रत्ययान्तरम्—कारणान्तरम् । तस्यैकत्वादिति । अखण्डकालाभिप्रायमिदम् । वस्तुतस्तु एकत्वे तस्य कार्यवैचित्र्यनियामकत्वानुपपत्तिरिति भाष्योक्तलक्षणानुपपत्त्या 'क्षणधारारूपः काल' इति युक्तम् । क्षणानां चाशुविनाशित्वात्कथमहरादिविभाग इति चाक्षरणं

कालमाहुः। तस्यैव हि कयाचित्क्रियया युक्तस्याहरिति च भवति, रात्रिरिति

प्र०-यत्कृतः स काल इत्यर्थः। यद्येवं तस्यैकत्वात्कथमहरादिविभाग इत्याह—तस्यैवेति। परोपाधिक एव सर्वस्य भेदः। तथा चोक्तं हरिणा[†] कालसमुद्देशे—

'तस्यात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयः।
न हि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते ॥१॥
नैको न चाप्यनेकोऽस्ति न शुक्लो नापि चासितः।
द्रव्यात्मा स तु संसर्गादेवंरूपः प्रकाशते ॥२॥
संसर्गिणां तु ये भेदा विशेषास्तस्य ते मताः।
संभिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते' ॥३॥

उ०-युक्तं कैयटेऽपि। नित्यः-प्रवाहनित्यतया, एकः-समूहरूपेण, विभुः-क्षणस्य विभुत्वात्, तस्य समूहस्यैकत्वादित्यर्थ' इत्यन्ये। इत्याहेति। इति हेतोराहेत्यर्थः। भाष्ये—तस्यैवेति। बुद्धिविषयलक्षणसमूहस्येत्यर्थः। क्रिययेति। क्रियासमूहेनेत्यर्थः। नन्वौपाधिकत्वेऽपरमार्थता स्यादत आह—परोपाधिक एवेति। व्यवहारमात्रस्यौपाधिकत्वाद्यावद्बाधं प्रामाण्यमङ्गीकार्यमिति भावः। तत्रार्थे वृद्धसम्मतिमाह—तथा चेति। तस्य—क्षणसमूहरूपकालस्य, आत्मा—स्वरूपं, धर्म्यन्तराश्रयैः—धर्मी सूर्यस्तद्वृत्ति अन्तरं धर्मान्तरं, धर्मविशेषः क्रियारूपः, स आश्रयो येषां तैः—क्रियाश्रितैः। भेदैः—विशेषैः। बहुधा—अहरादिभेदेन। न केवलं कालस्यैव भेद औपाधिकः किं तु सर्वस्यापीत्याह—न हीति। भेदाभेदौ—एकत्वानेकत्वे, शुक्लत्वकृष्णत्वे इत्यादिसर्वमपि न कस्यचित्स्वाभाविकमित्यर्थः। तदुक्तं—'न हि गौः स्वरूपेण गौः, नाप्यगौः, गोत्वाभिसम्बन्धात्तु गौ'रिति। किं त्वौपाधिकमेवेत्याह—द्रव्यात्मेति। द्रव्यपदार्थः। तत्तत्संसर्गादेकत्वानेकत्वादिनानाव्यवहारविषय इत्यर्थः। एवं च ब्रह्मैव कल्पिततत्तत्पदार्थसंसर्गाद्भेदाभेदैकत्वानैकत्वशुक्लत्वकृष्णत्वादिना भासते इति भावः। वस्तुतस्तु सर्वधर्मविनिर्मुक्तमिति बोध्यम्। प्रकृते आह—संसर्गिणां त्विति। आदित्यक्रियादीनां ये भेदा विशेषास्त एव तस्य कालस्य विशेषा अहरादिविशेषव्यवहारहेतव इत्यर्थः। तैर्भिन्नस्वरूपः

१—"कालो हि नाम स्वयम्भुरनादिमध्यनिधनः। अत्र रसव्यापत्सम्पत्ती जीवितमरणे च मनुष्याणामायत्ते। स सूक्ष्मामपि कलां न लीयत इति कालः, संकलयति कालयति वा भूतानीति कालः।" (सुश्रुते सूत्र० ६।२)

दक्षिणायने = वर्षाशरद्धेमन्तेषु सर्वप्राणिनां बलमभिवर्धते। उत्तरायणे = शिशिरवसन्तग्रीष्मेषु सर्वप्राणिनां बलमपहीयते इत्यपि सुश्रुते द्रष्टव्यम् (६।७)।

† वाक्यप्रदीये ३ काण्डे काल० ६—८ कारिकाः।

च। कया क्रियया? [1]आदित्यगत्या। तयैवासकृदावृत्तया 'मास' इति भवति 'संवत्सर' इति च। यद्येवं भवति जातस्य मासः परिमाणम्।

## एकवचनद्विगोश्चोपसंख्यानम् ॥ ३ ॥

'एकवचनान्ताना'मिति वक्तव्यम्। इह मा भूत्—मासौ जातस्य मासा जातस्येति॥ द्विगोश्चेति वक्तव्यम्। इहापि यथा स्यात्—द्विमासजातः त्रिमासजातः।

## उक्तं वा ॥ ४ ॥

किमुक्तम्? एकवचने तावदुक्तम् 'अनभिधाना'दिति* ॥ द्विगोः

प्र०- कया क्रिययेति। क्रियाया एकत्वात्तस्या अपि भेदकत्वं नास्तीति प्रश्नः। आदित्यगत्येति। आदित्यादिसाधनादिभेदाद्भिन्नैव क्रिया। आख्यातेन तु सा निवृत्तभेदोच्यते, शब्दशक्तिस्वाभाव्यान्न तु तस्या भेदो नास्ति। यद्येवमिति। जातस्य जननक्रियावधिर्मासेन परिच्छिद्यते, न च मासव्यतिरिक्तः कश्चित्त्रिंशद्रात्रोऽस्ति यस्य मासः परिमाणं स्यात्। न च कालसामान्यं परिच्छेद्यं, काल एव हि संसर्गिभेदा-दाप्तमासादिभेदव्यवहारः क्रियायाः परिमाणं न वस्त्वन्तरस्य।

अनभिधानादिति। समासे द्वित्वादेरनवगमात्। एकत्वं त्वत्र प्रातिपदिकार्थस्य

उ०-कालो व्यवस्थानाम्–अहरादिव्यवहाराणां भेदाय-विशेषाय कल्पत इत्यर्थः। क्रियाया एकत्वादिति। 'गच्छती'त्यादितस्तथाप्रतीतेरिति भावः। आख्यातेन त्विति। स्वतो निवृत्त-भेदैवेत्यर्थः। अन्ये तु दिनपर्यन्तस्थायिक्रियानुपलम्भात्प्रश्नः—कयेति। आदित्यगत्येति उत्तरम्। तत्क्रियासमूहस्य तावत्कालं धारारूपेणानुस्यूतत्वादित्यर्थं इत्याहुः।

ननु क्रियापरिच्छेदकत्वमेव कालस्य, न तु द्रव्यपरिच्छेदकत्वं, द्रव्यस्य हि वितस्त्याद्येव परिच्छेदकमत आह—जातस्य जननक्रियावधिरिति। 'मासो जातस्ये'त्यस्य जननक्रियाया ऊर्ध्वमस्य मासो जात इत्यर्थं इत्यभिप्रायः। एवं च जननक्रियापरिच्छेदद्वारा जातपरिच्छेदक-त्वमिति तात्पर्यम्। मासस्य परिच्छेद्यान्तरमुक्तं निराकरोति—न च मासेति। 'त्रिंशद्रात्र' इति बहुव्रीहिः। पद्मनाभवत्पृषोदरादित्वेनाकारन्तता। समूहोऽन्यपदार्थः। समाहारद्विगौ 'संख्यापूर्वं रात्रं क्लीब'मिति नपुंसकतापत्तेः। न च कालसामान्यमिति। तस्य नित्यत्वा-द्विभुत्वाच्चेति भावः। क्षणपक्षे तद्धाराविच्छेदेन तस्यानन्तत्वादपरिच्छेद्यत्वमिति भावः। युक्त्यन्तरमप्याह—न वस्त्वन्तरस्येति। एवं च क्रियाद्वारैव कालपरिच्छेदकत्वं वाच्यमिति तद्द्वारा जातपरिच्छेदकत्वमेवेति भावः।

ननु संख्याविशेषैकत्वावगतिरपि नेत्यत आह—एकत्वं त्विति। तथाभूतत्वात्–नियत-

१–"तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षिनिमेषकाष्ठाकलामुहूर्ताहोरात्रपक्ष-मासर्त्वयनसंवत्सरयुगप्रविभागं करोति। (सुश्रुते० सूत्र० ६।४) * ३. २. १ वा० ५.

किमुक्तम् ? 'उत्तरपदेन परिमाणिना द्विगोः समासवचन'मिति[†] ॥५॥

## नञ् ॥ २ । २ । ६ ॥

किंप्रधानोऽयं समासः ? उत्तरपदार्थप्रधानः । यद्युत्तरपदार्थप्रधानः,

प्र०—तथाभूतत्वात् प्रतीयते, वस्त्वन्तरानपेक्षत्वाच्च । द्वित्वादिका तु संख्या वस्त्वन्तरापेक्षत्वाद् बहिरङ्गा । तदुक्तं हरिणा—

'शौर्पिके मासजाते च परिमाणं स्वभावतः ।
उपाधिभूतमाश्रित्य संख्या भेदेन वर्तते' ॥ इति ।

उत्तरपदेनेति । 'तद्धितार्थे'त्यत्रेदमुक्तं तदेव शिष्यानुग्रहाय स्मारितम् ॥५॥

नञ् । इहाब्राह्मणादिना क्षत्रियादेरभिधानं लोके दृश्यते तत्र प्रक्रियागतगुणदोषनिरूपणाय प्रश्नः—किंप्रधान इति । त्रयश्चात्र पक्षा अन्यपदपूर्वपदोत्तरपदार्थप्राधान्यलक्षणाः संभवन्ति । यदा जातौ ब्राह्मणशब्दो वर्ततेऽविद्यमानं ब्राह्मण्यं यस्य सोऽब्राह्मणः क्षत्रियादिस्तदान्यपदार्थः प्रधानम् । यदा त्वसत्सामान्यवृत्तिर्नञ्ब्राह्मणादभिविशिष्यते ब्राह्मणत्वेनासन्, अन्यथा तु सन्नर्थः क्षत्रियादिरब्राह्मणशब्देनोच्यते तदा पूर्वपदार्थप्रधानः । यदा तु दुरुपदेशान्मिथ्याज्ञानाद्वा ब्राह्मणशब्दः क्षत्रिये प्रयुज्यते ब्राह्मणपदार्थनिवृत्तिश्च स्वाभाविकी नञा द्योत्यते तदोत्तरपदार्थप्रधानः ।

उ०—परिच्छेदकपरिमाणवाचित्वात् । अन्यथा 'जातस्यास्य कियान्काल' इतिप्रश्नेऽस्योत्तरत्वं न स्यादिति भावः ॥ नन्वेवं सति तात्पर्ये द्वित्वाद्यवगतिरपि स्यादत आह—बहिरङ्गेति । द्वित्वादिप्रतीतेरनुभवविरुद्धत्वाच्चेत्यपि बोध्यम् । शौर्पिक इति । परिमाणम्—अक्तपरिमाणत्वमुपाधिमाश्रित्य, संख्या—एकत्वरूपा, भेदेन—तद्रूपेण, भासते इत्यर्थः । अक्तपरिमाणवाचकशब्दस्थले तथैव व्युत्पत्तिरिति तात्पर्यम् । वस्तुतः समासे एकत्वमपि नैव भासते, किं तु मासत्वेनैकमासस्यैव भानं न त्वनेकस्यानभिधानादिति भाष्याशयः । एवं शौर्पिकताबकीनादावपीदं बोध्यम् । इदमनभिधानं 'समर्थ'सूत्रे उक्तमेकार्थीभाव—कृतविशेषनिरूपणावसरे । तुल्यन्यायादक्षशलाकेतिसूत्रस्थम् 'एकवचनान्तयोः' इत्यपि प्रत्याख्यातं बोध्यम् ॥५॥

नञ् । शब्दार्थावगतेर्वृद्धव्यवहाराधीनत्वेऽपि न्यायव्युत्पादनाय विचार इत्याह–इहेति । प्रक्रियागतेति । लिङ्गसंख्यादिसिद्धितदभावरूपगुणदोषेत्यर्थः । असत्सामान्यम्—अभावो भेदः । तस्यासत्त्वं—निरूपयितुमशक्यत्वात् । तथा हि—भिन्नाभ्यां हि धर्मिप्रतियोगिभ्यां स निरूप्यः । तत्रायमेव स चेदात्माश्रयः । तृतीयादेरन्यस्य स्वीकारे चक्रकमनवस्था चेति तन्त्रान्तरे स्फुटं, सामान्यत्वं च केवलान्वयित्वात् । तद्वृत्तिः—तद्वद्वृत्तिः । एवं च ब्राह्मणभिन्न इत्यर्थः फलितः । दुरुपदेशः—'अमुष्मिन्नवकाशे ब्राह्मण' इत्यादिः । मिथ्याज्ञानम्—

† २. १. ५१ वा० ९.

'अब्राह्मणमानये'त्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति ॥ अन्यपदार्थप्रधानस्तर्हि भविष्यति । यद्यन्यपदार्थप्रधानः, 'अवर्षा हेमन्त' इति हेमन्तस्य यल्लिङ्गं वचनं च तत्समासस्यापि प्राप्नोति ।

पूर्वपदार्थप्रधानस्तर्हि भविष्यति । यदि पूर्वपदार्थप्रधानोऽव्ययसंज्ञा प्राप्नोति ।

---

प्र०—यद्यपीहार्थो न निर्दिष्टस्तथाप्यभिधानशक्तिस्वाभाव्याल्लभ्यते । द्वन्द्ववत्तु स्वतन्त्रपदार्थद्वयानवगमादुभयपदार्थप्राधान्यं नाशङ्कितम् । एवं पक्षत्रयसम्भवेऽल्पप्रतिविधेयपक्षमाश्रयितुमाह—उत्तरपदार्थप्रधान इति । ब्राह्मणमात्रस्येति । इहानियतगुणस्य गुणविशेषप्रतिपादनाय विशेषणं प्रवर्तते न तदुपघाताय । यदि च नञा ब्राह्मणार्थः प्रतिषिध्यते तदा सर्वात्मना तदर्थस्याभावात्कथं प्राधान्यं स्यात्तस्मात्तद्गतविशेषावचनान्नञनर्थक एवेति ब्राह्मणाब्राह्मणशब्दयोः पर्यायता प्रसज्येत । अन्वाख्यानाद्धि साधुत्वमेवंभूतस्याथेवदनर्थकावयवस्य समासस्य स्यात् ।

अवर्षा इति । न चात्र परवल्लिङ्गताऽस्ति । यस्मान्न्यासभेदेन द्वन्द्वैकदेशिसमासयोरेव सोक्ता । वचनदोषस्तु यथान्यासेऽप्यपरिहार्य्य एव । किञ्च नञ्समासस्यान्यपदार्थप्रधानत्व आश्रीयमाणेऽपवादत्वादनेन बहुव्रीहेर्बाधनादब्राह्मणको देश इत्यादि न सिद्ध्यति । 'असः' 'असर्वस्मा'यिति चोत्तरपदार्थस्योपसर्जनत्वात्त्यदादिसर्वनामकार्याप्रसङ्गः । 'सर्वादीनि सर्वनामानी'त्यत्र संज्ञोपसर्जनप्रतिषेधाभिधानात् ।

अव्ययसंज्ञेति । 'अलिङ्गमसङ्ख्यमव्यय'मित्यर्थाश्रयेणाव्ययसंज्ञाविधानादिति

---

उ०—प्रकारान्तरेण भ्रमः । ब्राह्मणपदार्थो ब्राह्मण्यम्, तस्य स्वाभाविकी निवृत्तिर्मुख्यब्राह्मण्याभावो द्योत्यते इति वक्रोक्त्या आरोपिततद्वत्ताद्योतको नञित्युक्तं भवति । यद्यपीहेति । इह सूत्रेऽत्रार्थे तत्पुरुषसंज्ञेति न निर्दिष्टमित्यर्थः । यदि च नञेति । यदि नञा ब्राह्मणार्थः प्रतिषिध्यते—स्वार्थप्रतिषेधरूपाभावविशिष्टो बोध्यते—तदाभावप्रतियोगी ब्राह्मण इत्यर्थे सर्वात्मना ब्राह्मणेतरव्यावृत्तस्य नञर्थस्याभावात् किंनिरूपितं परिच्छेद्यत्वरूपप्राधान्यं स्यात्, अभावप्रतियोगित्वादेः केवलान्वयित्वात् । तदेवाह—तद्गतविशेषावचनान्नञनर्थक एवेत्यादि । नञनर्थकत्वे साधुत्वं न स्यादत आह—अन्वाख्यानाद्धीति ।

द्वन्द्वैकदेशिसमासयोरिति । उपमितसमासः समानलिङ्गयोरेवेति भावः । अब्राह्मणको देश इत्यादि न सिध्यतीति । न हि प्रवृत्तिनिमित्तमात्रनिष्ठेषु ब्राह्मणादिशब्देष्वेवायं समासो, न तद्विशिष्टेष्वित्यत्र नियामकमस्तीति भावः । 'नञोऽस्त्यर्थाना'मिति तत्सूत्रस्थवार्त्तिकाद्विषयविभागो लप्स्यते । 'एतत्तदो'रिति सूत्रेऽनञ्समासग्रहणाल्लिङ्गान्नञिति सूत्रविहितसमासे उपसर्जनत्वप्रयुक्तकार्याभाव इति भाष्याशय इत्यन्ये ।

अव्ययं ह्यस्य पूर्वपदमिति। नैष दोषः। पाठेनाव्ययसंज्ञा क्रियते† न च नञ्समासस्तत्र पठ्यते। यद्यपि नञ्समासो न पठ्यते, नञ् तु पठ्यते। पाठेनाप्यव्ययसंज्ञायां सत्यामभिधेयवल्लिङ्गवचनानि भवन्ति, यश्चेहार्थोऽभिधीयते न तस्य लिङ्गसंख्याभ्यां योगोऽस्ति।

नेदं वाचनिकमलिङ्गतासंख्यता वा। किं तर्हि ? स्वाभाविकमेतत्। तद्यथा—'समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्तेऽपरे न। न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुं कश्चिद्वानर्थक इति सर्वैरनर्थकैः। तत्र किमस्माभिः शक्यं कर्तुम्। यन्नञः प्राक्समासाल्लिङ्गसंख्याभ्यां योगो नास्ति समासे च भवति, स्वाभाविकमेतत्।

अथवाश्रयतो लिङ्गवचनानि भविष्यन्ति। गुणवचानानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति। तद्यथा—शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति। यदसौ द्रव्यं श्रितो भवति गुण-

प्र०—भावः। 'पक्षान्तराश्रयेणापि परिहारा भवन्ती'ति पाठमाश्रित्याह—नैष दोष इति। पाठेनापीति। पाठाभावात्समासस्य मा भूदव्ययसंज्ञा, लिङ्गसङ्ख्यायोगस्तु नञर्थप्रधानत्वान्न प्राप्नोतीत्यर्थः। नेदं वाचनिकमिति। वचनं प्रयोजनमस्येति वाचनिकम्। एतदुक्तं भवति—शब्दशक्तिस्वाभाव्यादसत्त्वरूपमर्थं वाक्ये नञाह, समासे तु सत्त्वरूपम्। केचिदर्थैरिति। धर्माधर्मवशात्।

अथवेति। ब्राह्मणाभावस्य गुणत्वात्तद्युक्तद्रव्याभिधायित्वाच्च समासस्य क्षत्रियाद्याश्रयगते लिङ्गसंख्ये भविष्यत इत्यर्थः। पूर्वत्र स्वाभाविकदर्शने साक्षादेव लिङ्गसंख्या-

उ०— ननु नञः पाठेऽपि तदन्तत्वाभावादव्ययत्वाप्राप्तिस्तत्राह भाष्ये—पाठेनापीति। एवं च नञः पाठेनाव्ययतया तदर्थस्य लिङ्गसंख्यानन्वयित्वेन समासेऽपि तदर्थस्य प्राधान्ये स न स्यादिति भावः। भाष्ये—नेदं वाचनिकम्। नेदं वचनप्रयोज्यमित्यर्थः। कैयटेऽपि प्रयोजनमिति करणे ल्युट्।

ब्राह्मणाभावस्येति। ब्राह्मणभेदस्येत्यर्थः। गुणत्वादिति। आश्रितत्वमत्र गुणत्वम्। तद्युक्तेति। तद्युक्तद्रव्येऽभेदेनान्वयित्वादित्यर्थः। तद्वक्ष्यति–'यदसौ द्रव्यं श्रित' इति भाष्ये। अयं भावः—भेद एव नञर्थः, तस्य चाश्रयेण गुणस्येव तादात्म्यं सम्बन्धः। 'अब्राह्मणः क्षत्रियः' 'ब्राह्मणभेदः क्षत्रिये' इत्युभयविधव्यवहारदर्शनात्। गुणवचनानां—गुणोपसर्जनद्रव्यवाचिनाम्, आश्रयतः—आश्रयविशेषतो, लिङ्गवचनानीत्यर्थः। जात्याश्रयबोधकानां तु नियतलिङ्गतैवेति भावः। इह त्वाश्रयेति। साक्षाल्लिङ्गसंख्यानाश्रयत्वमेवासत्त्वमिति भावः। भाष्ये—यदसौ द्रव्यं श्रित इति। यद्द्रव्यान्वयीत्यर्थः। उत्तरपदार्थप्राधान्यपरिग्रहस्तुल्य-

† स्वरादिनिपातमव्ययम् १. १. ३७.

स्तस्य यल्लिङ्गं वचनं च तद् गुणस्यापि भवति । एवमिहापि यदसौ द्रव्यं श्रितो भवति समासस्तस्य यल्लिङ्गं वचनं च तत्समासस्यापि भविष्यति ।

अथवा पुनरस्तूत्तरपदार्थप्रधानः । ननु चोक्तम् 'अब्राह्मणमानये'त्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोतीति । नैष दोषः । इदं तावदयं प्रष्टव्यः—अथेह 'राजपुरुषमानये'त्युक्ते पुरुषमात्रस्यानयनं कस्मान्न भवति ? अस्त्यत्र विशेषः । राजा विशेषकः प्रयुज्यते तेन विशिष्टस्यानयनं भवति । इहापि तर्हि नञ्

---

प्र०—योगः, इह त्वाश्रयद्वारक इति विशेषः । समास इति । समासार्थ इत्यर्थः । अत्रापि पक्षे दोषः—यदि तावत् स्वाभाविकदर्शनमाश्रीयते तदानेनापवादत्वादव्ययीभावस्य बाधनप्रसङ्गादमक्षिकमित्यादि न सिद्ध्यति । तस्य तु निर्मक्षिकमित्यादिरवकाशः । 'असर्वस्मै' 'अस' इत्यादौ च पूर्ववत्स्मायाद्यसिद्धिः स्यात् ।

आश्रयद्वारकलिङ्गसङ्ख्याभ्युपगमेऽप्यवर्षा हेमन्तोऽनर्थः स्त्रीत्यादौ हेमन्ताद्याश्रयश्रयगतिलिङ्गसङ्ख्याप्रसङ्ग इत्यालोच्याह—अथवेति । 'एतत्तदोः सुलोप' इत्यत्रानञ्समासग्रहणं लिङ्गमुत्तरपदार्थप्रधानत्वस्य । अन्यथैतत्तदोरर्थद्वारेण संबन्धिनः सुशब्दस्य लोपो विधीयमानोऽनेषो ददात्यसो ददातीत्यत्र कथं प्राप्नुयात् ।

---

उ०-विकल्पाभिप्रायेण न भवतीत्या-हअत्रापीति । अव्ययीभावस्येति । परे तु नञा स नेष्ट एव । असंहितमित्यत्रारोपितं संधानम्—परः संनिकर्षः—तदभावादद्रुतायां वृत्तौ संहितासंज्ञाप्रयुक्तं कार्यं न प्राप्नोतीत्यर्थ इति न दोषः । अत्यन्ताभावार्थकनञः क्रियागुणमात्रान्वयित्वेनामक्षिकमित्यादावसंहितमित्यादावुत्तरपदार्थाभावप्रतीत्याऽव्ययीभावाप्राप्तेश्च । अनञ्समासग्रहणात्स्मायादिसिद्धिरप्युक्तेति तुल्यविकल्पाभिप्रायेणैव भाष्यम् । 'अवर्षा हेमन्त' इत्यपि प्रतियोगिरूपाश्रयगतलिङ्गादिग्रहणात्सिद्धम् । अभावेन प्रतियोगिनोऽपि स्वज्ञानायाश्रयणेन तस्याप्याश्रयत्वात्स्वघटितसमासघटकत्वेनोपस्थितत्वाच्चास्यैवाश्रयस्य ग्रहणम्, अन्यथा तद्दोषदूषितपक्षोर्ध्वमाश्रितेऽपि तद्दोषानुवृत्तौ भाष्यस्य निर्दलतापत्तिः । 'अथवा पुनरस्तूत्तरपदार्थप्रधान' इति समकक्षतया पक्षान्तरकथनस्यासंगतिश्चेति वदन्ति । 'अनेक'मित्यादौ वचनदोषं तु भाष्यकृदेवाग्रे वक्ष्यति ।

भाष्ये—ब्राह्मणमात्रस्येति । अभावो नञर्थः, स विशेषणं चेदभावप्रतियोगी, भेदप्रतियोगी वा ब्राह्मण इति बोधस्तथासति यत्किञ्चिन्निष्ठाभावप्रतियोगिनस्तादृशभेदप्रतियोगिनो वा ब्राह्मणस्यैवानयनं प्राप्नोतीत्यर्थः । 'मात्र'शब्देन न शौचाचारादिहीनब्राह्मणस्य, नापि क्षत्रियादेरित्यर्थबोधनम् । राजा विशेषक इति । यद्यपि पुरुषमात्रस्यैवानयनं दृश्यते न राजविशिष्टस्य, तथापि राजसंबन्धिन एवानयनं न यत्किंचित्संबन्धिन इति राजा पुरुषस्य विशेषक

विशेषकः प्रयुज्यते, तेन नञ्विशिष्टस्यानयनं भविष्यति । कः पुनरसौ ? निवृत्तपदार्थकः ।

यदा पुनरस्य पदार्थो निवर्तते किं स्वाभाविकी निवृत्तिः, आहोस्विद्वाचनिकी । किं चातः ? यदि स्वाभाविकी, कि नञ् प्रयुज्यमानः करोति । अथ

प्र०-नञ्विशिष्टस्येति । आरोपितब्राह्मण्यस्य क्षत्रियादेरित्यर्थः । कः पुनरसाविति । भावाभावयोर्विरोधान्नञ्विशिष्टो ब्राह्मणार्थो नोपपद्यत इति भावः । निवृत्तपदार्थक इति । निवृत्तः पदार्थो मुख्यं ब्राह्मण्यं यस्मिन्स क्षत्रियादिरर्थः । सादृश्यादिनाध्यारोपितब्राह्मण्यो नञ्द्योतिततदवस्थ इत्यर्थः ।

इदानीं नञो वाचकत्वद्योतकत्वपरीक्षणायाह—यदा पुनरिति । किं स्वयं निवृत्तस्य ब्राह्मणपदार्थस्य नञा निवृत्तिर्द्योत्यते, अथ स्थितस्यैव नञा निवृत्तिः क्रियते [1]मन्त्रेणेव विषादिसामर्थ्यस्येति प्रश्नः । किं नञिति । ब्राह्मणशब्द एवाराच्छब्द इव दूरमदूरं च विद्यमानब्राह्मण्यमविद्यमानब्राह्मण्यं च क्षत्रियादिकं वक्ष्यतीति नास्ति नञो व्यापार इत्यर्थः । अर्थात । नञः पदार्थनिवृत्तौ सामर्थ्यास्याप्रसिद्धत्वादपूर्वमेत-

उ०-इति भावः । नञ्विशिष्टस्येति । नञ्द्योत्यारोपितब्राह्मण्यविशिष्टस्येत्यर्थः ।

कः पुनरिति । अभावस्यैव नञर्थत्वेन प्रसिद्धत्वात्प्रमितोत्तरपदार्थव्यतिरिक्तः कोऽसौ नञ्विशिष्ट उत्तरपदार्थ इत्याशयः । ननु नञर्थस्य विशेषणत्वे किं भेदप्रतियोगी ब्राह्मण इत्यर्थः, उत भेदानुयोगी ब्राह्मण इति । भेदे प्रतियोगी चोपस्थितब्राह्मण एवेति । नाद्यः । ब्राह्मणमात्रस्यानयनापत्तेः । नान्त्य इत्याह—भावाभावयोरिति । ब्राह्मणत्वब्राह्मणप्रतियोगिकभेदयोरित्यर्थः । कप्प्रत्ययप्रयोगसूचितबहुव्रीहिसूचितमर्थमाह-निवृत्त इति । सर्वथा निवृत्तपदार्थत्वे विशेषणमेव न युज्येतेत्यत आह—सादृश्यादिनेति । आदिना साहचर्यादि । निवृत्तमुख्यब्राह्मण्यादिरारोपिततद्वानिति भाष्याक्षरार्थः । तदाह—नञ्द्योतिततदवस्थ इति । एवं चारोपितस्वप्रवृत्तिनिमित्तवानुत्तरपदार्थ इत्यत्र तात्पर्यग्राहको नञिति तात्पर्यम् । उत्तरपदार्थस्य प्राधान्यमप्येतदेवेति बोध्यम् ।

यदा पुनरिति । यास्योत्तरपदस्य मुख्यार्थप्रत्ययत्यागपूर्वकमारोपितप्रवृत्तिनिमित्तकार्थबोधकता सा स्वभावसिद्धा, उत नञ्वचनेन शक्त्यारोपितत्वस्य वाचकः सन्मुख्यपदार्थप्रत्ययं निवर्तयतीति प्रश्नस्तद् ध्वनयन्नाह—इदानीमिति । कि स्वयमिति । निवृत्तस्य मुख्यब्राह्मणपदार्थस्य ब्राह्मणत्वस्य निवृत्तिस्तत्पूर्वकमारोपिततद्बोधकत्वं द्योत्यते, अथ स्थितस्यैव मुख्यब्राह्मण्यस्य बोधनिवृत्तिस्तत्पूर्वकं तद्वृत्त्यारोपितत्वं नञा शक्त्योच्यत इत्यर्थ । ननु नञ आरोपितत्वे शक्तावपि ब्राह्मणादिपदैर्बोध्यस्य मुख्यब्राह्मण्यादेः कथमबोधोऽत आह—मन्त्रेणेवेति । नञ्सामर्थ्यादेव तन्निवृत्तिरित्यर्थः ।

नास्ति नञ इति । प्रकरणादिकं च तात्पर्यग्राहकं भविष्यतीति भावः । पदार्थनिवृत्ता-

१-'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' (न्याय० २।१।६८) इति सूत्रभाष्ये वात्स्यायनः—'मन्त्रपदानां च विषभूताशनिप्रतिषेधार्थानां प्रयोगेऽर्थस्य तथा भावः ।'

वाचनिकी, तद्वक्तव्यं 'नञ् प्रयुज्यमानः 'पदार्थं निवर्तयती'ति । एवं तर्हि स्वाभाविकी निवृत्तिः । ननु चोक्तं 'किं नञ् प्रयुज्यमानः 'करोती'ति । नञ् प्रयुज्यमानः पदार्थं निवर्तयति । कथम् ? कीलप्रतिकीलवत् । तद्यथा—कील आहन्यमानः प्रतिकीलं निर्हन्ति । यद्येतन्नञो माहात्म्यं स्यान्न जातुचिद्राजानो हस्त्यश्वं बिभृयुर्नेत्येव राजानो ब्रूयुः ।

प्र०–द्वक्तव्यमिति सोत्प्रासमुपहसति । नञ्प्रयुज्यमान इति । ननु स्वभाविकनिवृत्तिदर्शने कथं पदार्थं नञ्निवर्तयेत्, वाचनिकनिवृत्तिदर्शने ह्येतद्युज्यते वक्तुम् । एवं तर्हि पदार्थप्रत्यय एवोपचारात्पदार्थशब्देदोच्यते, यथा 'सिंहमध्यापये'दिति सिंहशब्देन माणवक इत्यदोषः । अयमत्रार्थः—केवलो ब्राह्मणशब्दः प्रयुज्यमानः प्रसिद्धिवशान्मुख्य एव ब्राह्मणार्थे प्रत्ययमादधाति, नञ्प्रयोगे तु निवृत्तपदार्थकता ब्राह्मणशब्दस्य प्रतीयते । यथा 'प्रतिष्ठते' इत्यत्र यद्यपि तिष्ठतिरेव गतिवचनस्तथापि तस्मिन्केवले प्रयुज्यमाने प्रस्थानं न गम्यत इति द्योतकत्वेन प्रशब्दोऽपेक्ष्यते तथेह नञ् । पदार्थशब्देन पदार्थप्रत्यय उपचारादुच्यते । कथं पुनः स्वहेतोरुत्पद्यमानः पदार्थप्रत्ययो नञा निवर्त्येत इत्याह—कीलप्रतिकीलवदिति । यथा महता कीलेन प्रतिकील उत्खन्यते तथा क्षत्रिये सादृश्यादिनिमित्तोत्पन्नस्य ब्राह्मणप्रत्ययस्य नञ्प्रयोगे निवृत्तिरित्यर्थः । इतरो यथोक्तमभिप्रायमप्रतिपद्य पदार्थ एव नञा निवर्त्येत इति ज्ञात्वा पर्यनुयुङ्क्ते—यद्येतदिति । प्रतिपक्षनिवारणाय नञमेव प्रयुञ्जीरन्न तु तदर्थं हस्त्यश्वादि बिभ्रीरन्नित्यर्थः ।

उ०–विति । पदार्थप्रत्ययनिवृत्ताविरयर्थः । स्वशक्त्यारोपितत्वबोधेऽपि ब्राह्मणादिपदानां स्वशक्त्यार्थबोधकत्वनिवृत्तिर्वचनं विना न शक्या । किं च वचनेनापि तत्कर्तुमशक्यमित्युपहासः । भाष्ये—'पदार्थान्निवर्तयती'त्यस्य पदार्थप्रत्ययानित्यर्थः । अमुमेवार्थं शङ्कापूर्वकं दर्शयति—नन्वित्यादिना । ननु शब्दस्य पदार्थनिवृत्तिकरत्ववत्तत्प्रत्ययनिवृत्तिकरत्वमप्यनुपपन्नम्, किं चैवमुत्तरपदार्थप्रत्यय एव न स्यादित्यत आह—अयमत्रार्थ इति । निवृत्तपदार्थकतेति । निवृत्तमुख्यप्रवृत्तिनिमित्तप्रत्यायकत्वस्यारोपितप्रवृत्तिनिमित्तकप्रत्यायकतेत्यर्थः । पुनर्दाक्यमेव स्मारयति—पदार्थशब्देनेति । ब्राह्मणप्रत्ययस्य । मुख्यब्राह्मणप्रत्ययस्येत्यर्थः । अनेन द्योतकानां प्रसिद्धार्थशक्त्यनुद्बोधपूर्वकमर्थान्तरशक्त्युद्बोधकत्वं स्वभाव इति बोधितम् । तच्छक्त्यनुद्बोधेनैव तत्पदार्थप्रत्ययनिवृत्तिरिति बोध्यम् । अभिप्रायमप्रतिपद्येति । केचित्तु यदि नञः शब्दस्य बोधकतासामर्थ्यनिवृत्तिद्योतकत्वं स्यात्तदा तदर्थगतयोद्धृत्वादिसामर्थ्यनिवृत्तिद्योतकत्वमपि स्यादिति भाष्याशयमाहुः ।

१—'पदार्थान्' पा० ।

एवं तर्हि स्वाभाविकी निवृत्तिः। ननु चोक्तं किं नञ् प्रयुज्यमानः करोतीति। नञ्निमित्ता तूपलब्धिः। तद्यथा—समन्धकारे द्रव्याणां समवस्थितानां प्रदीपनिमित्तं दर्शनम्, न च तेषां प्रदीपो निर्वर्तको भवति।

यदि पुनरयं निवृत्तपदार्थकः किमर्थं ब्राह्मणशब्दः प्रयुज्यते ? एवं यथा विज्ञायेतास्य पदार्थो निवर्तते इति। 'ने'त्युक्ते सन्देहः स्यात् 'कस्य पदार्थो निवर्तत' इति। तत्रासन्देहार्थं ब्राह्मणशब्दःप्रयुज्यते। एवं वैतत्[1]।

प्र०- इदानीमभिप्रायं स्पष्टयितुमाह—एवं तर्हीति। नञ्निमित्तेति। क्षत्रियादौ सादृश्यनिमित्ताध्यारोपितं ब्राह्मण्यं न तु तात्त्विकमिति नञ्प्रयोगेण द्योत्यत इत्यर्थः।

यदि पुनरिति। अर्थप्रत्यायनाय शब्दः प्रयुज्यते, स चेन्निवृत्तः किमर्थमसौ प्रयुज्यते। एवं यथेति। प्रतिषेधविषयप्रदर्शनाय बुद्ध्या ब्राह्मणार्थं निरूप्य तस्य क्षत्रियादौ मुख्यसत्ताविरहप्रतिपादनाय नञ्सहितो ब्राह्मणशब्दः प्रयुज्यत इत्यर्थः।

उ०- ब्राह्मण्यनिवृत्तेर्नञानभिधानात् 'नञ्निमित्ते'त्यनुपपन्नमित्यत आह—क्षत्रियादाविति। तादृशब्राह्मण्यप्रवृत्तिनिमित्तकोऽस्माद्बोध इति भावः। अयमाशयः—तत्तदर्थकाः शब्दा भिन्ना एव। नञ्समभिव्यावहारे तु तदर्थकोऽयमिति ज्ञायते, इदमेव नञो द्योतकत्वम्। 'नञ्निमित्ता तूपलब्धि'रिति भाष्यस्य तत्समभिव्याहारे मुख्यब्राह्मणार्थको नायं, किं तु आरोपिततदर्थकोऽयमित्युपलब्धिर्निर्णय इत्यर्थः। तदर्थगतयोद्भूतत्वादिसामर्थ्यनिवृत्तिद्योतकता तु नास्य, स्वभावादेवेति तात्पर्यम्। आरोपितत्वस्य नञ्वाच्यत्वे तु मुख्यब्राह्मणत्ववति गृहीतशक्तिकब्राह्मणपदार्थे तदन्वयो दुरुपपाद इति तदर्थप्रत्ययत्यागो वाच्यः। स चाशक्यः, शब्दार्थसंबन्धस्य नित्यताहानिश्चेति दिक्।

अमुमेवार्थं पुनः प्रश्नप्रतिवचनाभ्यां स्पष्टीकरोति—यदि पुनरित्यादिना। स चेन्निवृत्त इति। ब्राह्मणपदशक्यं यन्मुख्यं ब्राह्मण्यं तस्य निवृत्तौ स्वशक्यस्य बोध्यस्याभावात्तत्प्रयोगो व्यर्थः। अशक्यबोधने तु नञ्मात्रेणापि तदर्थबोधसंभव इति भावः। प्रतिषेधविषयेति। नञो द्योतकतया समभिव्याहृतपदशक्त्युद्बोधकत्वं वाच्यं, तच्च पदान्तरप्रयोगं विना न संभवतीति तत्पदोपादानमिति तात्पर्यार्थः। अस्य पदस्य मुख्योऽर्थः प्रवृत्तिनिमित्तरूपो निवृत्तः, गौणश्चोपजात इति विज्ञायेतेति तु भाष्याक्षरार्थः। भाष्ये–नेत्युक्ते संदेहः स्यादिति। समभिव्याहृतपदस्य बोधकस्याभावान्निवृत्तिरूपार्थस्य प्रतियोग्याकाङ्क्षाया अनिवृत्तेरबोधकत्वेन च तदप्रयोग एव स्यात्। नन्वस्तु वाचकत्वमेवेति चेदेवमपि सन्देहः स्यादिति भावः। तदाकारं दर्शयति—कस्य पदार्थ इति। कस्य पदस्य पदार्थ इत्यर्थः। अभिधेयपरः पदार्थशब्द इति तात्पर्यम्। सन्देहपदेन निर्णयाभावो विवक्षित इति तत्त्वम्। एवं चैतदिति। एवमेवैतदित्यर्थः। लक्षणाप्यस्मन्नये इयमेव, यत आरोपितप्रवृत्तिनिमित्तकस्य बोधः। तत्र

१–'एवं चैतत्' पा०।

अथवा सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति ।

तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥

प्र०- सर्व इति। तत्र यस्यैव गुणस्य स्वाभाविकी निवृत्तिस्तस्यैवासौ नञा द्योत्यते, अवशिष्टानां तु गुणानामर्थात्सद्भावो गम्यते । गुणशब्देन चात्र धर्ममात्रं पराश्रयमुच्यते ।

स्मृतिशास्त्राश्रयेण निदर्शनाय ब्राह्मणस्य गुणनाह—तप इति । [1]तपः चान्द्रायणादिकर्म । श्रुतं—वेदवेदाङ्गादीनामध्ययनम् । योनिः—ब्राह्मणाद् ब्राह्मण्यां जन्म । ब्राह्मणकारकमिति । शेषषष्ठीसमासः । ब्राह्मणव्यपदेशस्यैतत्कारकं निमित्तमित्यर्थः । गुणसमुदायाभावेऽपि तदेकदेशे प्रयोगदर्शनादाह तपःश्रुताभ्यामिति ।

उ०—नञ्समभिव्याहारे निवृत्तमुख्यब्राह्मण्यको ब्राह्मणशब्दार्थ इति बुद्धे आरोपिततत्कार्थकत्वं फलतीति बोध्यम् ।

इदानीं प्रकारान्तरेणापि नञो द्योतकत्वं व्युपादयति भाष्ये—अथवा सर्वे एते इति । अवशिष्टानामिति । तथा च तद्गुणप्रतिपादनाय ब्राह्मणशब्दप्रयोगः, निवृत्तगुणानां निवृत्तिप्रतिपादनाय च नञ्प्रयोग इत्यर्थः । अयमेव 'एवमयं समुदाये' इत्यादिभाष्यार्थः । एवं च गुणसमुदायवति शक्तस्य ब्राह्मणशब्दस्यार्थे कतिपयगुणाभावप्रतिपादको नञिति भावः । तपः—श्रुतादिसंग्रहायाह—गुणशब्देनेति ।

याजनादिसंग्रहायाह—निदर्शनायेति । 'कर्तरि च'ेति समासनिषेधमाशङ्क्याह—शेषषष्ठीसमास इति । एषां ब्राह्मणोत्पादकत्वाभावादाह–व्यपदेशस्येति । गुणसमुदायाभाव इति । तत्र गौणः प्रयोग इत्यत्र जातिपदवन्नञपि क्वचित्तात्पर्यग्राहक इति भावः । बाहुल्ये-

१—'तपो द्वन्द्वसहनम् । द्वन्द्वं च जिघत्सापिपासे शीतोष्णे स्थानासने काष्ठमौनाकारमौने च । व्रतानि चैषां यथायोगं कृच्छ्रचान्द्रायणसांतपनादीनि ।" ( योग० २।३२ व्यासभाष्यम् )

"देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् । ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६॥

तदपि सत्त्वरजस्तमोभेदेन त्रिविधमिति गीतायां १७ अध्याये द्रष्टव्यम् ।

२—जातिब्राह्मणः=असद्ब्राह्मण इत्यर्थः । जातिशब्दोऽसत्पर्यायः । तद्यथा—'शिष्यबुद्धिपरीक्षार्थं जात्युत्तरं ददाति' (प्रदीपे १ ४. ८४. पृ० ४५८) । 'जात्युत्तरम्—असदुत्तर'-मित्यत्र नागेशः । एवं च ब्राह्मणाद्ब्राह्मण्यामुत्पन्नोऽपि यस्तपःश्रुताभ्यां हीनः स न परिपूर्णब्राह्मणः । तपःश्रुतसमन्वितस्त्वन्ययोनिजोऽपि भवति ब्राह्मणो व्यासविश्वामित्रादिवत् ।

तथा 'गौरः शुच्याचारः पिङ्गलः कपिलकेश' इत्येतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान्कुर्वन्ति। समुदायेषु च वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते। तद्यथा—पूर्वे पञ्चालाः। उत्तरे पञ्चालाः। तैलं भुक्तम्। घृतं भुक्तम्। शुक्लः नीलः कपिलः कृष्ण इति। एवमयं समुदाये ब्राह्मणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते जातिहीने गुणहीने च॥ गुणहीने तावत्—'अब्राह्मणोऽयं यस्तिष्ठन्मूत्रयति'। 'अब्राह्मणोऽयं यो [2]गच्छन् भक्षयति'॥ जातिहीने सन्देहाद्दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते। सन्देहात्तावत्—गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वाध्यवस्यति 'ब्राह्मणो-

प्र०— अधुना लोकप्रसिद्धान्बाहुल्येन तथादृष्टान्गुणानाह—गौर इति। पूर्वे पञ्चाला इति। अवयवे समुदायरूपारोपाच्छब्दप्रवृत्तिर्विज्ञेया न तु शब्दः स्वार्थं परित्यज्यार्थान्तरं वक्तुं समर्थः, शब्दार्थसंबन्धस्यानित्यताप्रसङ्गात्। तैलमिति। यदा संस्कारादियुक्तं विशिष्टमात्रापरिमितं समुदायमाह—तैलशब्दस्तदा समुदायवचनोऽन्यदा तु जातिशब्द एवायम्। शुक्ल इति। स्वयमशुक्लोऽप्यवयवः शुक्लावयवान्तरासादितशौक्ल्यसमुदायरूपारोपेण शुक्लशब्दाभिधेयस्तदेदमुदाहरणम्। स्वयं त्ववयवस्य शौक्ल्ये मुख्य एव शुक्लशब्दः। यस्तिष्ठन्निति। तपः श्रुतयोरभावान्निन्दयात्राब्राह्मणशब्दप्रयोगस्तत्र जातिमात्रेऽवयवे समुदायरूपारोपाद् ब्राह्मणशब्दप्रयोगो नञा तु स्वाभाविकी तपःश्रुतनिवृत्तिर्द्योत्यते। न च भिन्नविषयत्वं पूर्वपदोत्तरपदयोराशङ्कनीयम्। द्वयोरपि समुदायविषयत्वात्तदेकशेषनिवृत्तिसद्भावप्रतिपादनद्वारेण। जातिहीने इति। तत्र स्तुत्या ब्राह्मणशब्दस्य प्रवृत्तिरध्ययनादिगुणसद्भावप्रतिपादनाय। संदेहादिति। संदेहनिमित्तं गुणः सन्देहशब्देनोक्तः। गुणैकदेशदर्शनाच्च गुणसमुदायस्य संनिधि-

उ०—नेति। तथा चैते गुणा व्यभिचारिण इति भावः। 'पिङ्गलकपिलकेश' इति भाष्ये पृथक् पदं, पिङ्गलाः कपिलाः केशा यस्येत्यर्थः। यद्वा पिङ्गल इति वर्णः। गौर इत्यस्य तु

'अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते।
सा गौरी, तत्सुतो यस्तु स गौरः[1] परिकीर्तितः'॥ इत्यर्थः।

ब्राह्मण्ये—ब्राह्मणशब्दार्थगुणसमुदाये। कुर्वन्ति—केचिल्लौकिका इत्यर्थः। 'पूर्वे पञ्चाला' इत्यादि ग्रन्थः परम्परायां व्याख्यातः। भाष्ये—'जातिहीने' इत्यादि सामान्येनैकवचनम्। तेनावयवेष्विति प्रागुक्तेन सामानाधिकरण्यमुपपन्नम्। न च भिन्नविषयत्वमिति।

१—अवद्योऽयं नागेशानुमतो गौरशब्दार्थः शास्त्रविरुद्धत्वात्। तद्यथाह धन्वन्तरिः—
अथास्मै पञ्चविंशतिवर्षाय षोडशवर्षां पत्नीमावहेत् पित्र्यधर्मार्थकामप्रजाः प्राप्स्यतीति।
ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्। यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः। तस्मादत्यन्तबालायां गर्भाधानं न कारयेत्॥
(सुश्रुते शारीर० अ० १० श्लो० ५३-५५) २—'यस्तिष्ठन्' पा०।

## अमैवाऽव्ययेन ॥ २ । २ । २० ॥

एवकारः किमर्थः ? नियमार्थः । नैतदस्ति प्रयोजनम् । सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकारं नियमार्थो भविष्यति ।

इष्टतोऽवधारणार्थस्तर्हि भविष्यति । यथैवं विज्ञायेत—'अमैवाव्ययेने'ति । मैवं विज्ञायि—'अमाव्ययेनैवे'ति । अस्ति चेदानीं कश्चिदनव्ययमम्शब्दो यदर्थो विधिः स्यात् ? अस्तीत्याह—खशयं* ब्राह्मणकुलमिति । नैतदस्ति प्रयोजनम् । अन्तरङ्गत्वादत्र समासो भविष्यति ।

इदं तर्हि प्रयोजनम् 'अमैव यत्तुल्यविधानमुपपदं तत्रैव यथा स्यादमा चान्येन च यत्तुल्यविधानमुपपदं तत्र मा भू'दिति† । अग्रे भोजम् । अग्रे भुक्त्वा ॥ अग्रादिष्वप्राप्तविधेः समासप्रतिषेधं चोदयिष्यति‡ स न वक्तव्यो भवति ॥२०॥

प्र०— अमैवाऽव्ययेन । यदर्थ इति । यन्निवृत्त्यर्थो नियमः स्यादित्यर्थः । खशयमिति । 'अधिकरणे शेते'रित्यच् । 'अतोऽ'मिति सोरम्भावः । अनेनानव्ययेनामा समासो मा भूदित्येवमर्थोऽयं नियमः स्यात् । अन्तरङ्गत्वादिति । अनुत्पन्न एव सावुपपदसमासेन भाव्यं, पश्चात् सुपेति समासविधानकालेऽनव्ययस्यामोऽसंभवान्नियमान्तरे च तस्य चरितार्थत्वाद्विपरीतनियमो न भविष्यतीत्यर्थः ।

अमैवेति । एवकारसामर्थ्यादमेत्यस्यावृत्तिराश्रीयते । ततो येन वाक्येऽमैव केवलो विधीयते न प्रत्ययान्तरसहितस्तेन वाक्येन यद्विधीयते उपपदं तत्र सप्तमीनिर्देशात्तदमा समस्यते नान्यदित्यर्थः । अग्रे भोजमिति । 'विभाषाग्रेप्रथमपूर्वेष्वि'ति द्वयोः क्त्वाणमुलोर्विधानादत्र समासो न भवति ॥ अग्रादिष्विति । यतोऽप्राप्तविभाषा ततः प्रत्ययोत्पत्तावग्रादीनां निमित्तत्वान्निमित्तस्योपपदत्वात्समासप्रसङ्गः । प्राप्तविभाषायां त्वग्रादीनां प्रत्ययोत्पत्तावनिमित्तत्वात्तन्निवृत्तावेव हेतुत्वात्तस्यानुपपदत्वमित्यर्थः ॥२०॥

उ०— अमैवा । नन्वेवं वचनवैयर्थ्यमतस्तत्सामर्थ्यात्सुब्रुत्पत्त्यनन्तरमपि समासो ज्ञाप्यते इत्यत आह—नियमान्तरे इति । वक्ष्यमाणे इत्यर्थः ।

अमेत्यस्यावृत्तिरिति । चिन्त्यमेतत् । आवृत्तौ मानाभावात् । अमैव तुल्यविधानं यदुपपदं तदमाव्ययेन समस्यते इत्यर्थे 'अग्रे भुक्त्वे'त्यत्र समासापत्तिरव्ययग्रहणवैयर्थ्यापत्तिश्च । किं च 'कालो भोक्तु'मित्यत्र समासापत्तिः । तस्मादमैव तुल्यविधानं यदुपपदं तदव्ययेनेनेति नियमेन सर्वेष्टसिद्धिः । अत एव भाष्ये'ऽग्रे भुक्त्वे'त्यप्युदाहृतम्, 'अग्रादिष्वप्राप्ते'ति वार्तिकप्रत्याख्यानं च सङ्गच्छते इत्याहुः ॥ 'अप्राप्तविधे'रिति विशेषणव्यावर्त्यमुपपादयति—प्राप्तविभाषायां त्विति । 'आभीक्ष्ण्य' इत्यनुवृत्त्या हि सा, तस्मिश्च सत्येव प्रत्यय इत्यागुक्तेः प्रत्ययोत्पत्तिसंनियोगेनैवोपपदसंज्ञास्वीकारादिति भावः ॥२०॥

* अधिकरणे शेतेः ३.२.१५; अतोऽम् ७.१.२४. † स्वादुमि णमुल् विभाषाग्रे प्रथमपूर्वेषु ३.४.२६;२४. ‡ अग्रादिष्वप्राप्तविधेः समासप्रतिषेधः ३.४.२४ वा० १.

## शेषो बहुव्रीहिः ॥ २ । २ । २३ ॥

'शेष' इत्युच्यते कः शेषो नाम ? येषां पदानामनुक्तः समासः स शेषः ।

**शेषवचनं पदतश्चेन्नाभावात् ॥ १ ॥**

शेषवचनं पदतश्चेत्तन्न । किं कारणम् ? 'अभावात्' । न हि सन्ति तानि पदानि येषां पदानामनुक्तः समासः ।

अर्थस्तर्हि शेषग्रहणम् । येष्वर्थेष्वनुक्तः समासः स शेषः ।

**अर्थतश्चेदविशिष्टम् ॥ २ ॥**

अर्थतश्चेदविशिष्टमेतद्भवति । कुतः ? पदतः । न हि सन्ति तेऽर्था येष्वर्थेष्वनुक्तः समासः ॥ त्रिकतस्तर्हि शेषग्रहणम् । यस्य त्रिकस्यानुक्तः समासः स शेषः । कस्य चानुक्तः ? प्रथमायाः ॥२३॥

श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

---

प्र०- शेषो बहुव्रीहिः । पदस्यार्थस्य च सर्वस्योपयुक्तत्वाच्छेषमसंभाव्य पृच्छति— शेष इति । पदतश्चेदिति । पदेन 'पदत' इत्याद्यादित्वात्तसिः । न हीति । सर्वेषां सामान्यविशेषरूपेणोपयुक्तत्वादित्यर्थः । न हि सन्ति तेऽर्था इति । पूर्वोत्तरान्यपदार्थेषु तत्पुरुषाव्ययीभावविधानात् । प्रथमाया इति । द्वितीयादीनां प्रतिपदं समासविधानात्प्रथमायाः शेषत्वम् । ततश्च प्रथमान्तानां पदानां बहुव्रीहिरित्यर्थात्समानाधिकरणानां भवति । 'कण्ठेकाल' इत्यादौ 'सप्तमीविशेषणे' इति पूर्वनिपातविधानाज्ज्ञापकाद्भवति ॥२३॥

इत्युपाध्यायजैय्यटपुत्रकैयटकृते भाष्यप्रदीपे द्वितीयस्याध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

---

उ०- शेषो बहु । उपयुक्तादन्यः शेषः । सामान्यम् । 'सह सुपे'त्यादिः । विशेषः—'द्वितीयाश्रिते'त्यादिः । पूर्वोत्तरेति । यद्यप्यन्यपदार्थवत् पूर्वोत्तरपदार्थयोस्तद्विधानं नास्मच्छास्त्रे तथाप्यव्ययीभावादिमहासंज्ञाबलेन पूर्वाचार्यपरिगृहीतार्थस्य निमित्तत्वमस्त्येवेत्यभिप्रायः । 'विशेषणं विशेष्येणे'त्यादौ प्रथमाया अप्युपयुक्तत्वमित्यत आह—द्वितीयादीनामिति । 'गतार्थे प्रथमये'त्यादि तु व्याख्यानभूतं, न स्वतन्त्रविधायकमिति भावः । यद्वा शेष इत्यस्य प्रथमान्तत्वात्प्रथमान्तगृहीतत्रिकस्य प्रतिपदमुच्चारितस्यैव ग्रहणमिति सर्वेष्टसिद्धिः ॥२३॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते द्वितीयस्याध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

# अनेकमन्यपदार्थे ॥ २ । २ । २४ ॥

पदग्रहणं किमर्थम् ? 'अनेकमन्यार्थे' इतीयत्युच्यमाने वाक्यार्थेऽपि बहुव्रीहिः स्यात्—'यथा मे माता तथा मे पिता सुस्नातं भो' इति । पदग्रहणे पुनः क्रियमाणे न दोषो न भवति ।

अथान्यग्रहणं किमर्थम् ? 'अनेकं पदार्थे' इतीयत्युच्यमाने स्वपदार्थेऽपि

---

प्र०- अनेकम । अनेकग्रहणस्य वार्तिककारः प्रयोजनं वक्ष्यतीति भाष्यकारः पदग्रहणस्यान्यग्रहणस्य च प्रयोजनमाचष्टे । बहुवक्तव्यत्वाच्च पश्चादन्यग्रहणस्य विचारः । पदग्रहणमिति । 'अन्यार्थे' इत्युच्यमाने स्वपदार्थव्यतिरिक्तेऽर्थान्तर आश्रीयमाणेऽन्यपदार्थो लभ्यते । वर्तिपदानां च क्रियालक्षणे वाक्यार्थे वृत्त्यसंभवात्तन्निवृत्त्यर्थमपि पदग्रहणं नोपयुज्यत इति प्रश्नः । यथा मे मातेति । कश्चित्केनचित्पृष्टः 'कीदृशः कुलशीलादिना तव पिते'ति, स आह—'यथा मे माते'ति । एतानि पदानि 'तथा मे पिते'त्यन्यस्य वाक्यस्यार्थं गमयन्तीति, समासप्रसङ्गः । अथवा 'स्नाही'ति कश्चित्केनचिदुक्तस्तं प्रत्याह—'यथा मे माते'त्यादि । यथा शुद्धकुला मे माता तथा पितापीत्यभिजनशुद्धिरपि स्नानं, किं बाह्येन स्नानेनेत्यर्थः । ततः 'सुस्नातं भो' इत्येतद्वाक्यार्थे वर्तमानानां यथाप्रभृतीनां पदानां समासाभावार्थं पदग्रहणम् । अश्रुतवाक्यार्थे च पदानां वृत्तिर्दृश्यते, यथा नद्यां सिष्णासुः कश्चिदुच्यते—'नद्यां ग्राहाः सन्ती'ति । तस्माच्च 'मा स्नासी'रिति वाक्यार्थः प्रतीयते ।

अथान्यग्रहणमिति । अन्तरङ्गत्वात्स्वपदार्थे समासे सिद्धे पदार्थग्रहणसामर्थ्यादन्यपदार्थो लप्स्यत इति प्रश्नः । स्वपदार्थेऽपीति । अपिशब्दादन्यपदार्थेऽपीत्यर्थः । पदार्थग्रहणं व्याप्तिसमाश्रयणार्थं स्यादिति स्वपदार्थान्यपदार्थयोः समासः स्यात् ।

---

उ०- अनेकम । भाष्ये क्रमोल्लंघनेऽभिप्रायमाह—अनेकेति । अन्यपदार्थो लभ्यते इति । 'अन्यार्थे' इत्यस्य भिन्नेऽर्थे इत्यर्थः । भेदप्रतियोगी चोपस्थितः स्वपदार्थ एव । पर्युदासविधया च स पदार्थ एवेति भावः । वाक्यव्यावर्तकं युक्त्यन्तरमाह—वर्तीति । तेषां सुबन्तत्वादित्यभिमानः । एतानि पदानीति । समानाधिकरणानामित्यनपेक्ष्येदम् । वस्तुतोऽर्थपरमेतत्, 'यथा मदीया माते'त्यत्र समासप्रसङ्ग इति बोध्यम् । 'सुस्नातं भो' इतिपाठे आह—अथवेति । अत्र सर्वत्रान्यार्थो व्यङ्ग्य इति बोध्यम् । 'अभिजनशुद्धिरपी'त्यपिरेवार्थे । भाष्ये 'वाक्य'शब्देन पदसमूहमात्रम् ।

व्याप्तिसमाश्रयणेति । पदार्थग्रहणसामर्थ्याद्व्याप्तिन्यायस्यैवानुसरणं, नान्तरङ्गन्यायस्येत्यर्थः । राजानं पुरुषमित्यर्थे सावकाशस्तत्पुरुषः, बहुव्रीहिरपि बहुपदके सावकाश इति प्रथमान्तपदद्वयेन विग्रहे परत्वात्स्वपदार्थेऽपि बहुव्रीहिः प्राप्नोतीति तद्व्यावृत्त्यर्थमन्यग्रहणम् ,

बहुव्रीहिः स्यात्—राजपुरुषः तक्षपुरुष इति । नैतदस्ति प्रयोजनम् । तत्पुरुषः स्वपदार्थे बाधको भविष्यति । भवेदेकसंज्ञाधिकारे सिद्धम्, परंकार्यत्वे तु न सिध्यति । आरम्भसामर्थ्याच्च तत्पुरुषः, परंकार्यत्वाच्च बहुव्रीहिः प्राप्नोति ।

परंकार्यत्वे च न दोषः । शेष* इति वर्तते, अशेषत्वान्न भविष्यति ।

**शेषवचन उक्तम् ॥ १ ॥**

किमुक्तम् ? 'तत्र शेषवचनाद्दोषः संख्यासमानाधिकरणनञ्समासेषु बहुव्रीहि-प्रतिषेध' इति† ॥ अथैकसंज्ञाधिकारे नार्थोऽन्यग्रहणेन ? एकसंज्ञाधिकारे च कर्तव्यम् । अक्रियमाणे ह्यन्यग्रहणे यथैव तत्पुरुषः स्वपदार्थे बहुव्रीहिं बाधत एवमन्यपदार्थेऽपि बाधेत ।

अथानेकग्रहणं किमर्थम् ? 'अन्यपदार्थे' इतीयत्युच्यमान एकस्यापि पदस्य

प्र०—तत्पुरुष इति । बहुव्रीहेस्त्वन्यपदार्थोऽवकाशः । परंकार्यम्बाध्येति । ततश्च संज्ञयोः समावेशात्स्वरसमासान्तप्रसङ्गः । शेषवचन इति । शेषग्रहणप्रत्याख्यानं स्मारयति । संख्येति । द्वीरावतीको वीरपुरुषकोऽब्राह्मणको देश इति समासविधावुपयोगादशेष-त्वाद्बहुव्रीहिर्न प्राप्नोति, तस्माच्छेषग्रहणं न कर्तव्यम् । ततः स्वपदार्थे बहुव्रीहिनिवृत्त्यर्थ-मन्यग्रहणं कर्तव्यमिति स्थितम् ॥ अक्रियमाण इति । 'नीलोत्पलं सर' इत्यत्रापि विशेषानुपादानादन्यपदार्थेऽपि स्वपदार्थ इव तत्पुरुषो बहुव्रीहिं बाधेत, 'कण्ठेकाल' इत्यादिश्च व्यधिकरणपदो बहुव्रीहेरवकाशः स्यात् । अन्यग्रहणे तु सति स्वपदार्थे सावकाशं तत्पुरुषं परत्वाद्बहुव्रीहिर्बाधत इति न कश्चिद्दोषः ।

अथेति । एकनिवृत्त्यर्थं तावदनेकग्रहणं नोपपद्यते । पदविधित्वात्सामर्थ्ये सति

उ०—त्रिकतश्चात्र शेष इति भावः । भाष्ये—एकदेश्याह—नैतदस्तीत्यादि । तत्पुरुषः,—समा-नाधिकरणतत्पुरुषः, राजपुरुष इत्यादिरपि कर्मधारय एव । इतर एकदेश्याह—भवेदित्यादि । स्वरसमासान्तेति । पर्यायेणेत्यर्थः । यद्वा कस्यचित्स्वरः, कस्यचित्समासान्त इत्यर्थः । भाष्ये—अशेषत्वान्न भविष्यतीति । पदतोऽर्थतो वा शेष इत्यभिमानः । एतदर्थकं शेषग्रहणं प्रत्याख्यातमित्याह—प्रत्याख्यानमिति । आकडारसूत्रोक्तमित्यर्थः । पदतोऽर्थतश्च शेषे द्वीरावतीके दोषः, पदत एव शेषे वीरपुरुषकादौ दोषः । समासविधाविति । 'संख्या वंश्येन', 'नदीभिश्च', 'अन्यपदार्थे च संज्ञायाम्', 'मध्यमध्यमवीराश्च', 'न'मित्यत्रेति भावः । पदतोऽर्थ-तश्च शेषार्थकस्य तस्य प्रत्याख्याने 'परंकार्य'मिति पाठेऽन्यग्रहणमावश्यकमित्याह—तत्र इति ॥ नीलोत्पलं सर इति । इदमुपलक्षणं बहुपदकबहुव्रीहिः स्वपदार्थेऽपि स्यादित्यपि बोध्यम् । परिनिष्ठितविभक्त्या समासमजानतो भाष्ये—'अक्रियमाणे' इत्याद्युक्तिरिति बोध्यम् । कण्ठेकाल इत्यादिश्चेति । बहुपदके बहुव्रीहिविधानं सावकाशमिति वक्तुं युक्तम् ।

ततश्चेति । न चैकसंज्ञाधिकाराद्बहुव्रीहिसंज्ञया कर्मप्रवचनीयत्वबाधे सत्त्वं स्यात् । किं च

* शेषो बहुव्रीहिः २. २. २३. † १. ४. १ वा० १९.

बहुव्रीहिः स्यात्—सर्पिषोऽपि स्यात्, मधुनोऽपि स्यात्, गोमूत्रस्यापि स्यात्*। नैतदस्ति प्रयोजनम्। 'सुप्सुपे'ति† वर्तते ॥ इदं तर्हि प्रयोजनं बहूनामपि समासो यथा स्यात्—

'सुसूक्ष्मजटकेशेन सुनताजिनवाससा[1]।

उत्तरार्थं चानेकग्रहणं कर्तव्यम्। 'चार्थे द्वन्द्वः' [ २.२.२९ ] 'अनेक'-मिति। इहापि यथा स्यात्—'प्लक्षन्यग्रोधधवखदिरपलाशा[2]' इति। एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति 'बहूनामपि समासो भवतीति यदयमुत्तरपदे द्विगुं शास्ति‡। तत्पुरुषोऽपि तर्हि बहूनां प्राप्नोति। नैष

प्र०—बहुव्रीहिसंज्ञाविधानादनेकाधिष्ठानत्वाच सामर्थ्यस्य। नापि बहूनां समासार्थमनेकग्रहणं, 'तद्धितार्थे'त्यनेन उत्तरपदे परतः समाससंज्ञाविधानाज्ज्ञापकाद्बहूनां बहुव्रीहेः सिद्धत्वादिति प्रश्नः। सर्पिषोऽपि स्यादिति। अपिशब्दो बिन्द्वर्थे वर्तते इति तस्यापि बहुव्रीहिसंज्ञाप्रसङ्गः। ततश्च कप्समासान्तप्रसङ्गः। पदान्तरेण 'स्या'दित्यनेन चास्य सामर्थ्यमस्तीति समर्थपरिभाषापि न व्यावृत्तिं करोतीत्येवं केचिद्व्याचक्षते। अन्ये त्वाहुः—'अपिः पदार्थे'त्यत्राप्यर्थता बिन्द्वादेर्निराकृता। तस्मात्स्यादितिपदं बिन्द्वर्थे वर्तत इति तस्य बहुव्रीहिसंज्ञाप्रसङ्गः। अतिङ्ग्रहणेन च पूर्वमेव 'सुप्सुपे'त्यस्य विच्छिन्नत्वादेकस्यापि तिङन्तस्य प्राप्तिः स्यात्। नैतदिति। योगद्वय एवातिङ्ग्रहणेन सुप्सुपेत्यस्यासंबन्धो ज्ञापितोऽन्यत्र सुप्सुपेत्यनुवर्तत एवेत्यर्थः। बहूनामपीति। अन्यथा 'सुप्सुपे'ति गुणे संख्याया विवक्षितत्वाद्द्वयोरेव स्यात्। उत्तरपद इति। द्विगुग्रहणं 'तद्धितार्थे'त्यनेन विहितस्य समासस्योपलक्षणम्। तेन दिशः समानाधिकरणेनोत्तरपदे समासावयवविशेषे परतः समासविधानं बहूनां समासस्य ज्ञापकमित्यर्थः। द्विगुस्तु द्व्यहजावादौ सावकाशत्वान्न ज्ञापकः। तत्पुरुषोऽपीति। ज्ञापक-

उ०—कर्मप्रवचनीयसञ्ज्ञाया निरवकाशत्वेन तया बाधाद्बहुव्रीहिसंज्ञैव न भविष्यतीति वाच्यम्, उपसर्गसंज्ञाया अपि तद्रीत्या बाधात्। परंकार्यत्वपक्षे समावेशसंभवाच्चेत्यभिमानः। केचिदिति। अन्यापितु 'स्या'दित्यनेन व्यपेक्षासत्त्वेऽप्येकार्थीभावाभावः। स्यादिति पदमिति। प्रकृतिप्रत्ययार्थयोरेकार्थीभावः स्यादित्यभिमानः। अत्र व्याख्यानेऽपि एकसंज्ञाधिकारेऽप्युक्तदोषो न, संज्ञयोर्भिन्नाश्रयत्वात्। विच्छिन्नत्वादिति। अतिङ्ग्रहणं तु नानुवर्तते, व्याख्यानादिति भावः। योगद्वये एवेति। तत्रैवातिङ्पदसंबन्धादिति भावः। गुणे संख्याया इति। 'सुबन्तत्वस्य प्रत्येकसमाप्तत्वा'दिति तु वक्तुं युक्तम्। 'समासविधानं चे'ति पाठे पञ्चम्यर्थे। द्व्यहजावादाविति। 'काण्डाः परिमाणिने'ति सूत्रस्थेनोत्तरपदेन परिमाणिना द्विगोः

* अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु १. ४. ९६. † सुबामन्त्रिते पराङ्गवत् स्वरे; सह सुपा २. १. २; ४. १—'समन्तशितिरन्ध्रेण द्वयोर्वृचौ न सिध्यति ॥' इत्यधिकं क्वचित्। २—'धव' इति क्वचिन्न। ‡ तद्धितार्थोत्तरपदसमाहारे च २. १. ५१.

दोषः[1] । ग्रहणेन तत्पुरुष उच्यते, तेन बहूनां न भविष्यति ॥ अत उत्तरं पठति

अनेकवचनमुपसर्जनार्थम् ॥ २ ॥

अनेकग्रहणं क्रियत उपसर्जनार्थम् । 'प्रथमानिर्दिष्टं समास उपसर्जनम्' [ १. २. ४३ ] इत्यनेकस्य सुप उपसर्जनसंज्ञा यथा स्यात्—चित्रगुः शबलगुरिति[†] ।

प्र०–फलस्य विषयविभागाभावादनिष्टप्रसङ्गो महत्कष्टं श्रित इत्यत्रापि तत्पुरुषप्रसङ्गात् ।

ग्रहणेनेति । विशिष्टपूर्वोत्तरपदनिर्देशेनेत्यर्थः । तत्र द्वितीयान्तस्य श्रितादिभिः समासविधानात्प्रत्ययग्रहणपरिभाषोपस्थानात्समुदायस्याद्वितीयान्तत्वादत्र तत्पुरुषाभावः । यद्येवमिहापि सुप्सुपेत्यनुवर्तनात्कथं बहूनां बहुव्रीहिः । अथ ज्ञापकेन संख्याविवक्षा बाध्यते तदा द्वितीयादिष्वपि संख्याया अविवक्षा स्यात् । नैष दोषः, तत्पुरुषविधौ सुप्सुपेति सङ्ख्या प्रतीयते, द्वितीयेत्यपि । द्वन्द्वबहुव्रीह्योस्तु सुप्सुपेत्यत्रैव सङ्ख्याप्रतीतिः । तत्र ज्ञापकेनैकैनैव सङ्ख्याप्रतीतिर्बाध्यते । तावता चरितार्थत्वाद्द्वितीयादिषु सङ्ख्याया अबाधः ।

चित्रगुरिति । सत्यनेकग्रहणे सुबित्येवानुवर्तते न तु सुपेति । तन्निवृत्त्यर्थत्वात्तस्य । ततश्चोत्तरपदमपि तेन प्रत्याय्यत इति समासशास्त्रे गोशब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वाद्ध्रस्वसिद्धिः ।

उ०–सिद्धय इति वार्तिकेन सिद्धे बहूनां तत्पुरुषे इत्यर्थः । तदपि वचनमेतज्ज्ञापकसिद्धमेव नापूर्वमित्याशयेन भाष्ये द्विगुग्रहणम् । 'तत्पुरुषोऽपी'त्यस्य 'कालाः परिमाणिने'त्येतद्विहितोऽपि तत्पुरुष इत्यर्थ इत्यन्ये । ज्ञापकफलस्येति । संख्याविवक्षारूपस्येत्यर्थः । यद्वा यथाकथंचित्सुबन्तत्वादिग्रहणरूपस्येत्यर्थः ।

सर्वस्यापि समासस्य ग्रहणेन विधानादाह—विशिष्टेति । संख्याविवक्षेति । मुख्यसुबन्तत्वपर्याप्त्यधिकरणग्रहणविवक्षेत्यपि बोध्यम् । संख्याया अविवक्षेति । यथा कथंचिद्द्वितीयान्तग्रहणविवक्षेत्यपि बोध्यम् । अबाध इति । अन्यत्र मुख्यद्वितीयाद्यन्तग्रहणम्, सुप्सुपेत्यत्र तु ज्ञापकेन यथाकथंचित्सुबन्तग्रहणमिति तत्त्वम् । अत्र तदपि द्वन्द्वबहुव्रीहिविधायके एवेष्टानुरोधात्, परिमाण्युत्तरपदकसमासविधौ चेति बोध्यम् । 'ग्रहणेन तत्पुरुष' 'इत्यत्र तत्पुरुषपदमव्ययीभावस्याप्युपलक्षणम् ।

तन्निवृत्त्यर्थत्वादिति । इदं चिन्त्यम्, तदनुवृत्तावपि द्वयोः समासाभावार्थं तदित्यस्यापि वक्तुं शक्यत्वात्तन्निवृत्तिं विना सर्वेषामुपसर्जनत्वासंभवो द्वयोः समासालाभश्चेति व्याख्यानात्तन्निवृत्तिरिति तत्त्वम् ।

१–'नैष दोषः' इति क्वचिन्न । † गोस्त्रियोरुपसर्जनस्य १. २. ४८.

न वैकविभक्तित्वात् ॥ ३ ॥

न वैतदपि प्रयोजनमस्ति । किं कारणम् ? 'एकविभक्तित्वात्' 'एकविभक्ति चापूर्वनिपाते' [ ४४ ] इत्युपसर्जनसंज्ञा भविष्यति—चित्रगुः शबलगुरिति । चित्रा [1]यस्य गावश्चित्रगुस्तिष्ठति । चित्रा [1]यस्य गावश्चित्रगुं पश्य । चित्रा [1]यस्य गावश्चित्रगुणा कृतम् । चित्रा [1]यस्य गावश्चित्रगवे देहि । चित्रा [1]यस्य गावश्चित्रगोरानय । चित्रा यस्य गावश्चित्रगोः स्वम् । चित्रा यस्य गावश्चित्रगौ निधेहि । चित्रा यस्य गावो हे चित्रगो इति ।

यदि तर्हि यतः कुतश्चिदेव किंचित्पदमध्याहृत्यैकविभक्त्या योगः क्रियते, एतदप्येकविभक्तियुक्तं भवतीहापि प्राप्नोति—राजकुमारी तक्षकुमारी । राज्ञो या कुमारी राजकुमारी तिष्ठति । राज्ञो या कुमारी राजकुमारीं पश्य । राज्ञो या कुमारी राजकुमार्या कृतम् । राज्ञो या कुमारी राजकुमार्यै देहि । राज्ञो या कुमारी राजकुमार्या आनय । राज्ञो या कुमारी राजकुमार्याः स्वम् । राज्ञो या कुमारी राजकुमार्यां निधेहि । राज्ञो या कुमारी हे राजकुमारि इति ।

प्र०- न वेति । अन्यपदार्थस्य प्राधान्याद्दर्शनाद्यनेकक्रियायोगादनेकविभक्तित्वेऽपि वर्तिपदानामेकविभक्तित्वादित्यर्थः ।

यदि तर्हीति । अयं भावः—चित्रा गावोऽस्येत्यस्मिन्विग्रहवाक्ये न कस्यचिदनेकविभक्तित्वं यदपेक्षया वर्तिपदानामेकविभक्तित्वं स्यात् । अथ यथाकथंचिदन्यस्यानेकविभक्तित्वमाश्रित्य वर्तिपदस्यैकविभक्तित्वं व्यवस्थाप्यते तदातिप्रसङ्गो राज्ञो या कुमारी तां पश्य, तया कृतं, तस्यै देहीत्याश्रयेण कुमारीशब्दस्यैकविभक्तित्वादुपसर्जनह्रस्वत्वं स्यात् ।

उ०- वर्तिपदानामेकविभक्तित्वादिति । 'समासापेक्षये'ति शेषः ।

यदपेक्षयेति । 'विग्रहे यदेकविभक्तिक'मित्युक्तौ प्रत्यासत्त्या विग्रहीयपदान्तरापेक्षया यत्तादृशमिति लभ्यते । न हि 'चित्रा गाव' इत्येतत्तथेति भावः । अथेति । यथाकथंचित्—पर्यायेण, अन्यस्य—समासस्य समासपदाद्यत्किञ्चिदेकविभक्तिकमित्यर्थं इति भावः । भाष्ये कुतश्चिदेव—समासार्थविग्रहे इत्युक्तिरूपहेतोः, किंचित्पदं समासरूपम् । अध्याहृत्येत्यस्य ज्ञानविषयीकृत्येत्यर्थः । 'तदपेक्ष' इति च शेषः । अनेनोक्तेऽप्यर्थे प्रत्यासत्तिमूलकत्वं दर्शितम् । अत एव 'सभार्य' इत्यादावुपसर्जनत्वेन ह्रस्वसिद्धिः । अन्यथा विग्रहीयसहपदे विभक्तेरेवाभावेन तदपेक्षया नियतविभक्तित्वाभावाच्चदप्राप्तिः । मम त्वनियतविभक्तिकसमासान्तस्थं सूपपादं, लुका विभक्त्यनुत्पत्तेरेवान्याख्यानाच्च । राज्ञो या कुमारीति । प्रथमान्तेनैव समास इति दूषणम् ।

१-'अस्य' पा० ।

एकविभक्तियुक्तमेव यन्नित्यं न चैतन्नित्यमेकविभक्तियुक्तमेव । राज्ञः कुमारीं पश्य राजकुमारीं पश्येत्यपि भवति । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? एकग्रहणसामर्थ्यात् । यदि हि यदेकविभक्तियुक्तं चानेकविभक्तियुक्तं च तत्र स्यादेकग्रहणमनर्थकं स्यात् । 'विभक्तियुक्तं 'चापूर्वनिपात' इत्येव ब्रूयात् ।

**पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात् ॥ ४ ॥**

पदार्थस्याभिधानेऽनुप्रयोगस्यानुपपत्तिः—चित्रगुर्देवदत्त इति । किं कारणम् ? 'अभिहितत्वात्' । चित्रगुशब्देनाभिहितः सोऽर्थ इति कृत्वानुप्रयोगो न प्राप्नोति ।

**न वानभिहितत्वात् ॥ ५ ॥**

न वैष दोषः । किं कारणम् ? 'अनभिहितत्वात्' । 'चित्रगुशब्देनानभिहितः सोऽर्थ इति कृत्वानुप्रयोगो भविष्यति ॥ कथमनभिहितो 'यावतेदानीमेवोक्तं 'पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वा'दिति ।

**सामान्याभिधाने हि विशेषानभिधानम् ॥ ६ ॥**

प्र०- एकविभक्तियुक्तमेवेति । अयं भावः—नायं नियमः, 'प्रत्ययान्तस्यैव कुमारीशब्दस्य षष्ठीसमासेन भाव्यम्' । किं तर्हि ? द्वितीयाद्यन्तस्यापि । ततश्च समासे विधीयमाने एकविभक्तित्वाभावात् कुमारीशब्दस्योपसर्जनह्रस्वत्वाभावः । एकग्रहणसामर्थ्यादिति । एकैकस्मिन्प्रयोगे सर्वस्यैव एकविभक्तित्वादेकविभक्तिग्रहणं पर्यायेणानेकविभक्तेर्निरासार्थमित्यर्थः । विभक्तियुक्तमिति । एतदपि किमर्थमुच्यत इति चेत्संज्ञिनिर्देशार्थम् । अन्यथा 'अपूर्वनिपात' इत्येतावदुच्यमाने संज्ञ्यनिर्दिष्टः स्यात् ।

पदार्थाभिधान इति । देवदत्तपदस्य यावानर्थस्तावान् बहुव्रीहिणा वक्तव्योऽन्यपदार्थे तस्य विधानात्, ततो गतार्थत्वादनुप्रयोगो न प्राप्नोतीत्यर्थः । यथा चार्थे द्वन्द्वविधानात् द्वन्द्वे चशब्दस्य प्रयोगो न भवति एवमिहापि देवदत्तादिपदानां न स्यात् ।

उ०- किं तर्हीति । वाक्यसंस्कारे परिनिष्ठितविभक्त्यापि समास इति समाधानम् । ततश्चेति । तस्य चेत्यर्थः । पर्यायेणेति । प्रयोगभेदेनापि यद्येकविभक्तिकत्वमेव तत्र यथा स्यादित्येवमर्थमिति भावः । तदेवं प्रत्यासत्त्याश्रयणेन 'समासापेक्षया विग्रहे यन्नियतविभक्तिक'मित्यर्थमाश्रित्यानेकग्रहणं भगवता प्रत्याख्यातम् । ज्ञापकवचनेनं परिहर्तुमनेकग्रहणं सुग्रहतां कृतमिति दिक् ।

१—'मपूर्वनिपाते' पा० । २—'यदिदानीमेव' पा० ।

सामान्ये ह्यभिधीयमाने विशेषोऽनभिहितो भवति । तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः । चित्रगुः । कः ? देवदत्त इति ।

भवेत्सिद्धं यदा सामान्ये वृत्तिः, यदा तु खलु विशेषे वृत्तिस्तदा न सिध्यति—चित्रा गावो देवदत्तस्य चित्रगुर्देवदत्त इति । तदापि सिद्धम् । कथम् ? नेदमुभयं युगपद्भवति वाक्यं च समासश्च । यदा वाक्यं न तदा समासः, यदा समासो न तदा वाक्यम् । यदा समासस्तदा सामान्ये वृत्तिः । तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः । चित्रगुः । कः ? देवदत्त इति ।

सामान्यस्यैव तर्ह्यनुप्रयोगो न प्राप्नोति—चित्रगु तत्, चित्रगु किञ्चित्, चित्रगु सर्वमिति । सामान्यमपि यथा विशेषस्तद्वत् । [1]तत्र चित्रग्वित्युक्ते सन्देहः स्यात् सर्वं वाविश्वं वेति । तत्रावश्यं सन्देहनिवृत्त्यर्थं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः[2] ।

प्र०- सामान्याभिधान हीति । चित्रगुशब्देन तद्वन्मात्रमुच्यते, न तु विशेषः ॥ यदा सामान्य इति । चित्रा गावोऽस्येत्येवं विग्रहे कृतेऽन्यपदार्थसामान्यस्य बहुव्रीहिणाभिधानाद्विशेषस्यानुप्रयोगो भवतु यदा विशिष्टेऽन्यपदार्थे बहुव्रीहिः क्रियते तदानुप्रयोगासिद्धिः । नेदमुभयमिति । लौकिके प्रयोगे वृत्तिवाक्ययोर्युगपत्प्रयोगाभावादेकेनैवार्थस्य प्रत्यायितत्वादितरप्रयोगायोगात् । यदा समास इति । शब्दशक्तिस्वाभाव्यादन्यमेवाभिधातुं समर्थः समासो न विशेषणमिति प्रक्रियायामपि सामान्येन विग्रहः कार्य इत्यर्थः ।

सामान्यस्यैव तर्हीति । सामान्यस्य समासेनैवाभिधानात् । सामान्यमपीति । यथा विशेषो विशेषान्तरस्य निवर्तकस्तद्वत्सामान्यमपि विशेषाणां निवर्तकं सद्विशेष एवेत्यर्थः । चित्रग्विति । लिङ्गसर्वनाम्ना नपुंसकत्वेन निर्देशः सामान्यवृत्तितामेव प्रकाशयितुं कृतः । 'सर्वं वाविश्वं वे'त्यत्राकारप्रश्लेषः कृतः । अन्यथा पर्यायप्रयोगः स्यात् । तत्रावश्यमिति । 'चित्रगु सर्वं'मित्युक्ते न त्वेकमेवेति विशेषावगतिर्भवतीत्यर्थः ।

उ०- वाक्यमुपमृद्य समासप्रवृत्तेस्तस्यापि दुर्ध्याख्यत्वमस्तीत्यत आह—लौकिके प्रयोगे इति । लोके सर्वेषां चित्रगुपदश्रवणत्वेन तस्य सामान्यशब्दत्वमिति सामान्येनैव विग्रहः कार्य इति विशेषवाक्यं न बुद्धिस्थमिति 'यदा समासः, सामान्येन तदा वृत्ति'रिति भाष्यार्थ इति भावः ।

सद्विशेष एवेति । इतरभेदकत्वमेव विशेषत्वमिति भावः । अविश्वमित्यस्य असर्वमित्यर्थः । चित्रा गावो देवदत्तस्येति विग्रहेऽपि न देवदत्तः समासवाच्यः किं तर्हि, विग्रहत्यर्थं

---

1–क्वचिन्न । 2–'इतः परं 'चित्रगु सदिति' इत्यधिकं क्वचित् ।

अथवा विभक्त्यर्थोऽभिधीयते। एतच्चात्र युक्तं यद्विभक्त्यर्थोऽभिधीयते, तत्र हि सर्वपश्चात्पदं वर्ततेऽस्येति।

**विभक्त्यर्थाभिधानेऽद्रव्यस्य लिङ्गसंख्योपचारानुपपत्तिः ॥ ७ ॥**

विभक्त्यर्थाभिधानेऽद्रव्यस्य लिङ्गसंख्याभ्यामुपचारोऽनुपपन्नः। बहुयवम् बहुयवा, बहुयवः बहुयवौ बहुयवा इति।

अपर आह—'विभक्त्यर्थाभिधाने द्रव्यस्य लिङ्गसंख्योपचारानुपपत्तिः'। विभक्त्यर्थाभिधाने द्रव्यस्य ये लिङ्गसंख्ये ताभ्यां विभक्त्यर्थस्योपचारोऽनुपपन्नः। बहुयवम् बहुयवा, बहुयवः बहुयवौ बहुयवा इति। कथं ह्यन्यस्य लिङ्गसंख्याभ्यामन्यस्योपचारः स्यात्।

**सिद्धं तु यथा गुणवचनेषु ॥ ८ ॥**

सिद्धमेतत्। कथम्? [1] 'यथा गुणवचनेषु'। गुणवचनेषूक्तं[2]—'गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ती'ति। तद्यथा—शुक्लं वस्त्रम्

---

प्र०- अथवेति। कृत्स्नपदार्थाभिधानेऽनुप्रयोगासिद्धिश्चोदिता परिहृता च। यदा तु विभक्त्यर्थः सम्बन्धादिरभिधीयते समासेन तदा तद्वाचिनी विभक्तिर्मानुप्रयोजि, द्रव्यं त्वनभिहितमिति तद्वाची शब्दोऽवश्यानुप्रयोक्तव्यः। कथं पुनरन्यपदार्थ इत्युच्यमाने विभक्त्यर्थ एव गृह्यत इत्याह—तत्र हीति। पदेन प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोऽभिधीयत इति विभक्त्यर्थस्यैव प्राधान्यादन्यपदार्थग्रहणेन ग्रहणमित्यर्थः। सर्वपश्चादिति—भाष्यकारवचनप्रामाण्यादव्ययेनापि षष्ठीसमासः।

अद्रव्यस्येति। असत्त्वभूतस्य विभक्त्यर्थस्य लिङ्गसंख्याभ्यां व्यवहारो नोपपद्यत इत्यर्थः। अपर इति। अकारप्रश्लेषोऽत्र व्याख्याने नास्ति।

आश्रयत इति। यदा पदावधिकमन्वाख्यानं तदा शुक्लो गुणोऽस्येति मतुब्लुका सामान्यमात्रे पदं संस्क्रियत इत्येकत्वनपुंसकत्वाश्रयेण पदप्रयोगे प्राप्ते 'विशेषणानां चाजाते'रिति सूत्रेण गुणवचनानामाश्रयतो लिङ्गवचनानि प्रतिपादितानि। वक्ष्या-

---

उ०-एषेति भाष्ये पक्षान्तरमाह—अथवा विभक्त्यर्थ इति। तद्व्याचष्टे—कृत्स्नेति। गृह्यत इति। स्वतन्त्रः सन् समासशक्य इत्यर्थः। प्रकृत्यर्थोपसर्जनः प्रत्ययार्थ इति। स च संबन्धरूपः। सांसर्गिकविषयतानिरूपिता च तत्सत्त्वे प्रकारतेति भावः। अव्ययेनापीति। अन्यथा 'पूरणगुणे'ति निषेधः स्यादित्यर्थः। 'अव्यय'शब्देन कृदव्ययमेव गृह्यत इति युक्त्यन्तरमप्युक्तं तत्रैव मयेति दिक्।

लिङ्गसंख्याभ्यामिति। इदमुपलक्षणं चित्रगुर्देवदत्त इति सामानाधिकरण्येन व्यवहारो न स्यादित्यपि बोध्यम्। न्यायसिद्धानीति। अत्र चेदमेव भाष्यं मानम्। अन्यथा गुणवचनेष्वस्य वाचनिकतया समासस्याकडारसूत्रोक्तरीत्या गुणवचनत्वाभावेन वचनाप्रवृत्ताव-

---

१-'कथं गुणवचनेषु?' इत्यधिकं क्वचित्। २-'किमुक्तम्?' इत्यधिकं क्वचित्।

शुक्ला शाटी शुक्लः कम्बलः शुक्लौ कम्बलौ शुक्लाः कम्बला इति । यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति । एवमिहापि यदसौ द्रव्यं श्रितो भवति विभक्त्यर्थस्तस्य यल्लिङ्गं वचनं च तत्समासस्यापि भविष्यति ।

यदि तर्हि विभक्त्यर्थोऽभिधीयते कृत्स्नः पदार्थः कथमभिहितो भवति सद्रव्यः सलिङ्गः ससंख्यश्च ? अर्थग्रहणसामर्थ्यात् । इहानेकमन्यपद इतीयता सिद्धम् । कथं पुनः पदे नाम वृत्तिः स्यात् । शब्दो ह्येषः, शब्देऽसंभवादर्थे कार्यं विज्ञास्यते । सोऽयमेवं सिद्धे सति यदर्थग्रहणं करोति तस्यैतत्प्रयोजनं

---

प्र०—संस्कारे तु न्यायसिद्धानि, आश्रयविशेषाश्रयेणैव पदसंस्कारात् । तत्र यद्यपि चित्रगुशब्देन संबन्धोऽभिधीयते तथाप्यभेदोपचारात्संबन्ध्यभिधीयते । तत्र द्विष्ठत्वेऽपि संबन्धस्य प्रधानत्वात्स्वामिनः एवाश्रयत्वं व्यवस्थाप्यत इति तद्गते लिङ्गसंख्ये भवतो न तु गवाश्रये ।

यदि तर्हीति । यथा शुक्लशब्देन कदाचिद्गुण उच्यते कदाचिद्गुणी, तथा चित्रगुशब्देन केवलस्यापि संबन्धस्याभिधानं प्राप्नोति, संबन्धिन एव तु सर्वदेष्यते तन्न सिध्यतीत्यर्थः । 'कृत्स्न' इत्युक्तं तदेव कार्त्स्न्यं प्रतिपाद्यते—सद्रव्य इति । द्रव्यशब्देन सत्त्वरूपोऽर्थ उच्यते । अर्थग्रहणसामर्थ्यादिति । यदि विभक्त्यर्थस्यैव प्रधानस्य ग्रहणमभिमतं स्यात्तदार्थग्रहणं न कुर्यात्, अन्तरेणाप्यर्थग्रहणमर्थस्यैव लाभादित्यर्थः ।

---

उ०—सङ्गतिः । गुणवचनत्वे तु यथातथाशब्दासङ्गतिः स्पष्टैव । अभेदोपचारादिति । आश्रयाभेदमापन्नविभक्त्यर्थ एव चित्रग्वादिपदैरुच्यत इति भावः । संबन्ध्यभिधीयत इति । विशेष्यतया आश्रीयते चित्रगुर्देवदत्त इत्यादावित्यर्थः । ननु गवामपि संबन्धित्वात्तद्गतलिङ्गसंख्ये किं न स्यातां, तत्राह—तत्र द्विष्ठत्वेऽपीति । गवादिरूपस्वनिरूपितसंबन्धस्यैव बोधनेन स्वामिन एवाश्रयत्वात्तद्गतलिङ्गसंख्ये एव भवत इत्यर्थः । एवं च बहुव्रीहेः सामान्यशब्दत्वमेवेति विशेषज्ञानायानुप्रयोग आवश्यक इति भावः ।

ननु बहुव्रीहेः संबन्धिपरत्वस्योक्तत्वेन 'यदि तर्ही'ति भाष्यानुत्थानमाशङ्क्याह—यथेति । एवं च 'कथमभिहित' इति भाष्यस्य 'सर्वदे'त्यादिर्बोधः । द्रव्यशब्देनेति । तत्रैव दर्शितं भाष्ये 'सलिङ्ग' इत्यादिना । अर्थस्यैव लाभादिति । स चार्थः प्राधान्याद्विभक्त्यर्थ एव ग्रहीष्यत इति भावः । अर्थग्रहणसामर्थ्याच्च संबन्धादिर्विभक्त्यर्थं आश्रयाभिन्न एव बुध्यत इति तत्त्वम् । एवं च पट्वादिशब्दवन्नियमेन गुणिपर एवायं न कदाचिदपि गुणपर

'कृत्स्नः पदार्थो यथाभिधीयेत सद्रव्यः सलिङ्गः ससंख्यश्चे'ति ॥ यदि तर्हि कृत्स्नः पदार्थोऽभिधीयते लैङ्गाः सांख्याश्च विधयो न सिध्यन्ति ।

उक्तं वा ॥ ६ ॥

किमुक्तम् १ लैङ्गेषु तावदुक्तं 'सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादय' इति* । सांख्येष्वप्युक्तं कर्मादीनामनुक्ता एकत्वादय इति कृत्वा सांख्या भविष्यन्ति† ।

प्रथमा तर्हि न प्राप्नोति १ समयाद्भविष्यति‡ । यदि सामयिकी न नियो-

---

प्र०- यदि तर्हीति । यथा बहुव्रीहिणा विभक्त्यर्थस्याभिधानात्षष्ठ्यादयो न भवन्ति, एवं लिङ्गसंख्ययोरप्यभिधानात्तयोर्वाचकाः प्रत्यया न प्राप्नुवन्ति ।

सिद्धं त्विति । स्त्रियां यत्प्रातिपदिकं वर्तते तस्माट्टाबादयो भवन्तीत्यर्थः । ततश्च समासेनाभिहितेऽपि स्त्रीत्वे द्योतकाष्टाबादयो भवन्तीति दोषाभावः । कर्मादीनामिति । चित्रगुरिति समासेन प्रातिपदिकार्थामात्रस्य कर्मादिशक्तिरहितस्यैकत्वादय उक्तास्ततः कर्मादिगतैकत्वप्रतिपादनाय वचनानि भवन्ति—'चित्रगुं पश्य' 'चित्रगुणा कृत'मिति ।

प्रथमेति । समासेन संख्याया अभिधानात् । समयादिति । परश्चेति नियमार्थमारब्धं—'न' केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय' इति । न स्त्रियोगत इति । नियमेन । प्रनियतैव यदि न भवति विभक्तिः ततः समयपरिपालनाय

---

उ०-इति भावः । 'यदि तर्ही'त्यादि भाष्यमेकदेशिनः, घटादिशब्देष्विव तदुपपत्तेः पञ्चकस्य सर्वत्र प्रातिपदिकार्थत्वात् । न प्राप्नुवन्तीति । उक्तार्थनामप्रयोगादिति भावः ।

कर्मादिगतैकत्वेति । साख्यादिनिरूपितकर्मादिशक्तिविशिष्टप्रातिपदिकार्थगतैकत्व इत्यर्थः ॥ समासेनेति । प्रथमा हि प्रातिपदिकार्थगतसंख्यामात्राभिधायिनीति तत्सूत्रानुवृत्तमनभिहित इति तस्या एव विशेषणमिति भावः । नियोगत इत्यस्यार्थो—नियमेनेति ।

---

* ४. १. ३. वा० ५. १-'किमुक्तम् ?' इत्यधिकं क्वचित् ।

† २. ३. १ भाष्ये । ‡ ३. १. २. वा० ११.

२-"न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्ययः" वाक्यमिदं भाष्ये (१. २. ६४ वा० ५); (२. ३. १ वा० ६); (३. १. ६४, वा० ३) त्रिषु स्थानेषु वर्तते । सर्वत्रैव भाष्यकारेण 'समयः कृतः' इत्येव प्रयुक्तं न क्वचिद्वर्तमानकालता दृश्यते । ३. १. २ वा० ११ भाष्ये नियामकवाक्यं त्वेवं पठ्यते---उभयनियमोऽयम् । 'प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः प्रत्ययपरैव च प्रकृतिरिति ।' मन्ये नियमस्यास्यार्थापत्त्यानुवादात्मकं वाक्यं पूर्वलिखितं नर्तते ।

एवमेवाद्यापि शास्त्रेष्वविद्यमानम् 'ऋते ज्ञानान्न मुक्तिः' इति वाक्यमपि 'ज्ञानान्मुक्तिः' ॥२३॥ 'बन्धो विपर्ययात्' ॥२४॥ (सांख्य० अ० ३) इत्यस्यार्थापत्तिमूलकमेव प्रयुञ्जते लोकाः ।

गतोऽन्याः कस्मान्न भवन्ति ? कर्मादीनामभावात् ।

षष्ठी तर्हि प्राप्नोति । शेषलक्षणा* षष्ठ्यशेषत्वान्न भविष्यति ।

एवमपि व्यतिकरः प्राप्नोति । एकस्मिन्नपि द्विवचनबहुवचने प्राप्नुतो द्वयोरप्येकवचनबहुवचने बहुष्वप्येकवचनद्विवचने । अर्थतो व्यवस्था भविष्यति ।

अथवा संख्या नामेयं परप्रधाना । संख्येयमनया विशेष्यम् । यदि चात्र प्रथमा न स्यात् संख्येयमविशेषितं स्यात् ।

प्र०–द्वितीयादयोऽपि प्राप्नुवन्ति, नियमकारणाभावादित्यर्थः । कर्मादीनामभावादिति । 'कर्मण्येव द्वितीये'त्येवं कर्मादिषु द्वितीयादीनां नियतत्वात्तदभावे तासामभावः ।

षष्ठी तर्हीति । कर्मादीनामभावः शेषः, स चात्रास्तीति भावः । अशेषत्वादिति । प्रातिपदिकार्थमात्रस्य प्रथमाविधावुपयोगान्नास्ति शेषत्वमित्यर्थः ।

एवमपीति । समयात् प्रथमायामिष्यमाणायां वचनस्य व्यतिकरप्रसङ्गः । अर्थत इति । यथान्यत्रैकत्वादिष्वेकवचनादीनि दृष्टानि तथैवात्रापि भवन्ति । एवं हि समयश्च परिपालितो भवत्यर्थश्चानुसृतः ।

अथवेति । असङ्करं प्रथमाविधानं [ च ] प्रकारान्तरेण प्रतिपादयति । यदा चित्रगुरित्येकत्वविशिष्टः प्रातिपदिकार्थः प्रतिपिपादयिषितस्तदा विभक्त्या विनासौ न शक्यते प्रत्याययितुमिति प्रथमैकवचनं विधेयम् । एवं द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधिः । परप्रधानेति । संख्येयप्रधानेत्यर्थः ।

उ०–नियमाभावमुपपादयति—प्रतिनियतैवेति । समयो हि सामान्यतो विभक्तिं बोधयति न प्रतिनियतां कांचिदिति भावः । यदीति । यत इत्यर्थः । यतः प्रतिनियतैव समयान्न भवति तद्घटितसमयाभावादित्यर्थः । द्वितीयादयोऽपीति । अर्थाभावेऽपि नियमपरिपालनाय, 'विभक्तिश्चेत्प्रथमैवे'ति नियमाभावादिति भावः ।

प्रातिपदिकेति । कर्मादिप्रातिपदिकार्थव्यतिरिक्तो हि शेष इत्यर्थः ॥ व्यतिकरो—व्यत्यासः । अर्थाभावेऽपि समयान्नविष्यतीत्युक्तत्वादर्थतो व्यवस्थेत्युक्तिरसङ्गतेत्यत आह—यथान्यत्रेति । विरुद्धविभक्त्यपेक्षयानुवादकविभक्तेर्न्याय्यत्वमिति भावः ।

भाष्ये—अथवा संख्या नामेयमिति । इयं—यद्वैशिष्ट्येन प्रातिपदिकार्थः प्रतिपिपादयिषितः सा, परप्रधाना—इतरपरिच्छेदिकैव । तदेवाह—संख्येयमनया विशेष्यमिति । संख्येयं—द्रव्यं प्रातिपदिकार्थः, अनया—संख्यया विशेष्यं—परिच्छेद्यतया बोधनीयम् । एवं च यावत्संख्यं संख्येयं तावत्संख्याप्रतिपादिका विभक्तिरुचिता । विभक्तिमन्तरा तस्या अप्रतिपत्तेरिति भावः । यदि चात्र प्रथमा न स्यादिति । असङ्करेणेत्यर्थः । तदाह—यदा

* षष्ठी शेषे २. ३. ५०.

अथवा वक्ष्यत्येतत्तत्र वचनग्रहणस्य प्रयोजन'मुक्तेष्वप्येकत्वादिषु प्रथमा यथा स्या'दिति† ।

एवमपि षष्ठी प्राप्नोति । किं कारणम् ? व्यभिचरत्येव ह्ययं समासो लिङ्गसंख्ये, षष्ठ्यर्थं पुनर्न व्यभिचरति । अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्नस्तत्र 'प्रातिपदिकार्थे प्रथमे'ति* प्रथमा भविष्यति ।

न तर्हीदानीमिदं भवति 'चित्रगोर्देवदत्तस्ये'ति ? भवति बाह्यमर्थमपेक्ष्य षष्ठी ॥ परिगणनं कर्तव्यम् ।

## बहुव्रीहिः समानाधिकरणानाम् ॥ १० ॥

प्र०– एवमपीति । षष्ठ्यर्थस्यात्र भावात् । व्यभिचरतीति । लिङ्गान्तरसंख्यान्तरयोगेऽन्यलिङ्गसंख्यापरित्यागात् । अभिहित इति । संबन्धस्य प्रातिपदिकार्थरूपत्वात् षष्ठ्यर्थता नास्तीत्यर्थः ॥ सर्व एवात्र संबन्धोऽन्तर्भूतत्वात् प्रातिपदिकार्थतां गत इति मत्वा पृच्छति—न तर्हीति । भवति बाह्यमिति । गोभिरन्यपदार्थस्य यः संबन्धः स एव समासेऽन्तर्भूतो न तु सर्वः ।

बहुव्रीहिरिति । भाष्यकारेण त्रिकतः शेषो गृह्यत इत्ययमर्थः साधितः, वार्तिक-

उ०–चित्रगुरिति । द्वावित्यादौ यथानुवादकं वचनं नियमेन तथात्रापीति भावः ।

भाष्ये—अथवा वक्ष्यतीति । एवं चोक्तेषु तेष्वसङ्करेणैव सेति भावः ।

षष्ठ्यर्थस्येति । अयं भावः—प्रथमाया समभिव्याहृतप्रातिपदिकस्य चित्रगोरूपस्य प्रवृत्तिनिमित्ततदाश्रयरूपस्वार्थबोधनसामर्थ्येऽप्यतथाभूतसंबन्धबोधे सामर्थ्यं नेति तद्बोधाय सम्बन्धस्योक्तत्वेऽप्यनुवादिका षष्ठ्येव स्यान्न प्रथमा, प्रातिपदिकार्थमात्राभावादिति । लिङ्गान्तरेति । एवं च षष्ठ्यर्थस्य चित्रगुरित्येवंरूपे बहुव्रीहावव्यभिचरितत्वेन नियमेन षष्ठ्येव प्राप्नोतीत्यर्थ इति भावः । प्रातिपदिकार्थरूपत्वादिति । तत्र चाभिहितत्वं हेतुः । एवं च प्रातिपदिकार्थत्वात्तद्बोधिका प्रथमेति भावः । एतद् ध्वनयितुमेवाभिहितः सोऽर्थ इत्युक्तम् । तेन च षष्ठ्यप्राप्तिबीजमप्युक्तम्, अनभिहिते शेष एव षष्ठीविधानात् । अत एव घटशब्दान्न षष्ठी, अन्यथा घटत्वसम्बन्धस्य नियमेन भानात् षष्ठी स्यात् । 'अन्तर्भूत' इत्यस्य प्रवृत्तिनिमित्तत्वं तदाश्रयत्वं वा प्रतिपन्न इत्यर्थः । ननु षष्ठ्या एवापत्तिः कथं, 'प्राप्तोदक' इत्यादौ द्वितीयादीनामप्यापत्तेरिति चेन्न । तेषु प्राप्तोदककर्मत्वेव बोधस्तत्र विशेष्ये तन्निरूपकत्वबाधेन विशेषणमादाय पर्यवसानमिति द्वितीयादिप्रयोजककर्मत्वादेरबोधेन तदप्राप्तेः । षष्ठ्यर्थस्य तु षष्ठीप्रयोजकरूपेणैव भानमित्याशयात् ।

† २.३.४६. वचनग्रहणप्रयोजनभाष्ये । * प्रातिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २.३.४६.

समानाधिकरणानां बहुव्रीहिर्वक्तव्यः । किं प्रयोजनम् ? व्यधिकरणानां मा भूदिति । पञ्चभिर्भुक्तमस्येति ।

अव्ययानां च ॥ ११ ॥

अव्ययानां च बहुव्रीहिर्वक्तव्यः । [[1]उच्चैर्मुखमस्येति] उच्चैर्मुखः नीचैर्मुखः ।

सप्तम्युपमानपूर्व[2]पदस्योत्तरपदलोपश्च ॥ १२ ॥

सप्तमीपू[3]र्वस्योपमानपूर्वस्य च बहुव्रीहिर्वक्तव्यः, उत्तरपदस्य च लोपो वक्तव्यः । कण्ठेस्थः कालोऽस्य कण्ठेकालः । उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः । खरमुखः ।

समुदायविकारषष्ठ्याश्च ॥ १३ ॥

समुदायषष्ठ्या विकारषष्ठ्याश्च बहुव्रीहिर्वक्तव्यः, उत्तरपदस्य च लोपो वक्तव्यः । केशानां समाहारश्चूडा [4]अस्य केशचूडः । सुवर्णविकारोऽलङ्कारोऽस्य[4] सुवर्णालङ्कारः ।

प्र०—कारेण तु वचनेन प्रतिपाद्यते । उच्चैर्मुख इति । उच्चैःशब्दस्याधिकरणप्रधानत्वाद्वैयधिकरण्यमिति वचनम् ।

कण्ठेस्थ इति । 'सुपि स्थ'इति कः । 'अमूर्धमस्तका'दित्यलुक् । समासेऽत्र सिद्धे वचनमुत्तरपदलोपार्थम् । उष्ट्रमुखमिवेति । अवयवधर्मेण समुदायस्य व्यपदेशादुष्ट्रस्योपमानतेति उपमानपूर्व उष्ट्रमुखशब्द उपमानोपमेयवृत्तित्वात् पदयोर्वैयधिकरण्यमत्रेति वचनमुत्तरपदलोपार्थं च ।

समुदायविकारषष्ठ्या इति । समुदायावयवसंबन्धे, प्रकृतिविकारसंबन्धे च या षष्ठी तदन्ताद्यत्परं तदन्तस्य शब्दान्तरेण सह बहुव्रीहिरित्यर्थः ।

उ०— वचनेनेति । 'समानाधिकरणानाम्' 'अप्रथमार्थे' इति वचनाभ्यां त्रिकतः शेषपक्षीयोऽर्थः प्रतिपाद्यत इत्यर्थः । शेषग्रहणं तु पदतोऽर्थतो वा शेषबोधकं स्यात्, तत्र फलाभावो दोषश्चेति वार्त्तिकतात्पर्यम् ।

अमूर्धेति । 'स्थे च भाषाया'मिति तु अनन्तरस्येति न्यायेन 'तत्पुरुषे कृती'त्यस्यैव बाधकमिति भावः । उत्तरपदलोपार्थमिति । कण्ठेस्थकालनिवृत्त्यर्थमित्यर्थः । मुखस्यैवोपमानत्वेनोष्ट्रमुखशब्दस्योपमानपूर्वत्वं कथमत आह—अवयवधर्मेणेति । मुखगतोपमानत्वेनोष्ट्रस्यापि व्यवहारादिति भावः । वैयधिकरण्यमिति । वाक्ये समासे च सादृश्यसंबन्धेनान्वयः । इवशब्दस्तथासंबन्धेनान्वयस्यैव द्योतक इत्यभिमानः । 'उपमानानी'ति सूत्रभाष्योक्तरीत्या समानाधिकरण्यमस्त्येवेत्यत आह—उत्तरपदेति ।

समुदायविकारवाचकपदस्य षष्ठ्यन्तस्योत्तरपदेन समास इत्यर्थभ्रमं वारयति—समु-

१—क्वचिन्न । २—'पूर्वस्योत्तर' पा० । ३—'पूर्वपदस्य' पा० । ४—'यस्य' पा० ।

## प्रादिभ्यो धातुजस्य वा ॥ १४ ॥

प्रादिभ्यो धातुजस्य बहुव्रीहिर्वक्तव्यः, उत्तरपदस्य च वा लोपो वक्तव्यः। प्रपतितपर्णः प्रपर्णः। प्रपतितपलाशः प्रपलाशः।

## नञोऽस्त्यर्थानां च[1] ॥ १५ ॥

नञोऽस्त्यर्थानां बहुव्रीहिर्वक्तव्यः, उत्तरपदस्य च वा लोपो वक्तव्यः। [ अविद्यमानः पुत्रोऽस्य ] अविद्यमानपुत्रः अपुत्रः। अविद्यमानभार्यः अभार्यः।

तत्तर्हीदं बहु वक्तव्यम्?

## न वानभिधानादसमानाधिकरणे[3] [समास]संज्ञाभावः ॥ १६ ॥

न वा वक्तव्यम्। असमानाधिकरणानां बहुव्रीहिः कस्मान्न भवति— पञ्चभिर्भुक्तमस्येति? अनभिधानात्।

तच्चावश्यमनभिधानमाश्रयितव्यम्। क्रियमाणेऽपि वै परिगणने यत्राभिधानं नास्ति न भवति तत्र बहुव्रीहिः। तद्यथा—पञ्च भुक्तवन्तोऽस्येति।

अथैतस्मिन्सत्यनभिधाने यदि वृत्तिपरिगणनं क्रियते तर्हि वर्तिपरिगणनमपि कर्तव्यम्। तत्कथं कर्तव्यम्?

## अर्थनियमे मत्वर्थग्रहणम् ॥ १७ ॥

अर्थनियमे मत्वर्थग्रहणं कर्तव्यम्। 'मत्वर्थे यः स बहुव्रीहि'रिति

प्र०- अथैतस्मिन्निति। अनभिधानमभ्युपगम्यापि यदि मन्दबुद्धिव्युत्पादनाय परिगणनं क्रियते तदार्थपरिगणनमपि कर्तव्यम्। वर्तनं वर्तः—समासः, स विद्यते यस्मिन्नर्थे स वर्ती।

मत्वर्थग्रहणमिति। षष्ठ्यर्थः सप्तम्यर्थश्च मत्वर्थः॥ संख्ययेति। संख्येयस्य

उ०-दायावयवसंबन्ध इति। भाष्ये—यथा पञ्चभुक्तवन्तोऽस्येति। अनेन 'त्रिकस्तः शेषः' इत्यर्थेऽपि शेषग्रहणं प्रत्याख्यातं, तुल्यन्यायादिति बोध्यम्।

इदानीमनभिधाने सत्यपि 'समानाधिकरणाना'मित्यादिवचनारम्भेऽन्यस्यापि कर्तव्यत्वमापादयति भाष्ये—अथैतस्मिन्नित्यादिना। वृत्तिपरिगणनं—वृत्त्याश्रयाणां परिगणनम्।

१-'च' क्वचिन्न। २-क्वाचित्कः पाठः। ३-'समानाधिकरणेषु' पा०।

वक्तव्यम् । इह मा भूत्—कष्टं श्रितमनेनेति ।

**तथा चोत्तरस्य वचनार्थः ॥ १८ ॥**

एवं च कृत्वोत्तरस्य योगस्य वचनार्थ उपपन्नो भवति । केचित्तावदाहु-[1]र्यद्वृत्तिसूत्र इति । 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' [२.२.२५] इति । अपर [2]आह यद्वार्तिक इति ।

**कर्मवचनेनाप्रथमायाः ॥ १९ ॥**

कर्मवचनेनाप्रथमाया बहुव्रीहिर्वक्तव्यः । ऊढो रथोऽनेनोढरथोऽनड्वान् । उपहृतः पशू रुद्रायोपहृतपशू रुद्रः । उद्धृत ओदनः स्थाल्या उद्धृतौदना स्थाली ॥ यदि कर्मवचनेनेत्युच्यते कर्तृवचनेन कथम्—प्राप्तमुदकं ग्रामं प्राप्तोदको ग्रामः । आगता अतिथयो ग्राममागतातिथिर्ग्रामः ।

---

प्र०—वार्थस्य चान्यपदार्थत्वात् सिद्धे समासे उत्तरसूत्रमनर्थकं स्यात् । यदा त्वनेन मत्वर्थे समासस्तदा सार्थकमित्यर्थः । व्याख्यानान्तरमाह—अपर इति ।

कर्मवचनेनाप्रथमाया इति । प्रथमार्थं वर्जयित्वा सर्वत्रान्यपदार्थे कर्मवाचिना समासो भवतीत्यर्थः । इदं च वार्तिकमेवमुपपद्यते यदि मत्वर्थे बहुव्रीहिर्भवति, अन्यथैतदवक्तव्यं स्यात् । आद्यमेव तु युक्तं व्याख्यानम् । न हि वार्तिककारः स्ववचनमेव ज्ञापकत्वेनोपन्यस्यति ॥ ऊढरथ इति । रथशब्दः कर्मवचन, ऊढशब्देन सामानाधि-

---

उ०— कष्टं श्रितमनेनेति । 'गत्यर्थे'ति वा, 'आदिकर्मणी'ति वा भावे क्तः । यदि कर्तरि कर्मणि वा क्तः स्यात्तदोत्तरवचनाभ्यामत्र समासः स्यादेव ऊढरथादाविवेति बोध्यम् । 'मत्वर्थे वर्तमानमनेक'मित्युक्ते सामानाधिकरण्यमपि लब्धमेवेति बोध्यम् ॥ 'तथा चोत्तरस्ये'ति वाक्यं केनचित्संख्येति सूत्राभिप्रायतया व्याख्यातं तन्निरस्यति भाष्ये—केचिदिति । अत्र प्रथमान्तरसंख्यापदं 'समानाधिकरणाना'मित्युक्तावपि व्यर्थं स्यात्, द्वौ वा त्रयो वेत्यादावेकत्रैव समुदाये द्वित्वत्रित्वविकल्पप्रतीतेर्यथाकथंचित्सत्त्वात् । एवं 'द्विदशा' इत्यत्राप्यूह्यम् । अस्य कल्पस्य पक्षे उत्तरस्य योगस्य यद्वचनं करणं तस्यार्थः फलमुपपन्नमित्यक्षरार्थः । अस्य कल्पस्य भावार्थमावश्यकत्वमभिप्रेत्य स्वयमाह—यद्वार्तिके इति ।

तदेव दर्शयति—कर्मवचनेनेति । कर्मवचनेनेत्यस्यायमर्थः—प्रथमाभिन्नविभक्त्यर्थे कर्मबोधकेन शब्देन प्रत्यासत्त्या कर्मवाचकस्य समास इति । तेन व्यधिकरणे न दोषः । अन्यथा—'मत्वर्थ' इत्यस्याभावे । अवक्तव्यमिति । सूत्रेणैव सिद्धेरिति भावः । 'आद्यमेव त्वि'त्यादि'दपन्यस्यती'त्यन्तः कैयटग्रन्थस्तु चिन्त्यः । अस्यापि वार्तिककारीयत्वात्, 'इष्टान्यायातेषु च वचनप्रामाण्या'दिति 'समर्थ'सूत्रस्थवार्तिकस्य 'वार्तिकवचनप्रामाण्या'दिति भाष्ये व्याख्यानाच्च ।

---

१—'आहुः' पा० । २—'येन' पा० ।

## कर्तृवचनेनापि ॥ २० ॥

कर्तृवचनेनापीति वक्तव्यम् ॥ अप्रथमाया इति किमर्थम् ? वृष्टे देवे गतः ॥ अथाप्रथमाया इत्युच्यमान इह कस्मान्न भवति—वृष्टे देवे गतं पश्येति । बहिरङ्गात्राप्रथमा ।

## सुबधिकारेऽस्तिक्षीरादिवचनम् ॥ २१ ॥

सुबधिकारेऽस्तिक्षीरादीनामुपसंख्यानं कर्तव्यम् । अस्तिक्षीरा ब्राह्मणी ॥ तत्तर्हि वक्तव्यम् ?

## न वाऽव्ययत्वात् ॥ २२ ॥

न वा वक्तव्यम् । किं कारणम् ? अव्ययत्वात् । अव्ययमेषोऽस्तिशब्दो नैषोऽस्तेर्लट्[१] । कथमव्ययत्वम् ? 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपातसंज्ञा भवन्ती'ति* निपातसंज्ञा, 'निपातोऽव्यय'मित्यव्ययसंज्ञा† ।

अथ किंसब्रह्मचारीति कोऽयं समासः ? बहुव्रीहिरित्याह । कोऽस्य विग्रहः ? के सब्रह्मचारिणोऽस्येति । यद्येवं 'कठ' इति प्रतिवचनं नोपपद्यते । न ह्यन्यत्पृष्टेनान्यदाख्येयम् ।

एवं तर्ह्येवं विग्रहः करिष्यते केषां सब्रह्मचारी 'किंसब्रह्मचारी'ति । प्रति-

प्र०—करणयात् ॥ बहिरङ्गेति । वर्तिपदार्थनिमित्तान्तरङ्गा, बाह्यपदार्थापेक्षा तु बहिरङ्गेति न गृह्यते असिद्धत्वादित्यर्थः ।

उपसर्गविभक्तीति । स्वरादिष्वस्तिशब्दपाठमनपेक्ष्यैतदुक्तम् । प्रतिवचनमिति । वर्तिपदार्था बहुत्वसंख्यायुक्ताः पृष्टास्ततश्चैकसंख्यायुक्तेनान्यपदार्थविशेषणेन प्रतिवचनं नोपपद्यत इत्यर्थः ।

इष्टसमासस्थापनाय दिगन्तराणि निराकर्तुमुपन्यस्यति—एवं तर्हीति ।

उ०—एवं च सर्वथा पञ्चभिर्भुक्तवन्तोऽस्येत्यत्र समासवारणायानभिधानस्यावश्यकतया 'पञ्चभिर्भुक्तमस्य' 'वृष्टे देवे गतस्तत्र गतं पश्ये'त्यादावप्यनभिधानमाश्रित्य वार्तिकानां शेषग्रहणस्य च प्रत्याख्यानमेव युक्तमिति भाष्याशयः । 'अव्ययानां चे'त्यपि न कार्यम्, उच्चैरादीनां वृत्तिविषये शक्तिमत्प्रधानत्वाङ्गीकारेण सूत्रेण सिद्धेः । अन्यान्यप्यनिष्टांशोऽनभिधानमाश्रित्य प्रत्याख्येयानीति दिक् । 'अस्ती'ति तिङन्तमेवेति मत्वा भाष्ये—सुबधिकार इति ।

अनपेक्ष्येति । सोऽप्रामाणिक इति तत्त्वम् । एवं च तस्यातिङन्तत्वात्प्रातिपदिकत्वेन सुबन्तत्वमिति सूत्रेणैव सिद्धमिति भावः ॥ अन्यपदार्थविशेषणेनेति । अन्यपदार्थो विशेष्यते विशेषेऽवस्थाप्यतेऽनेन तादृशेन 'कठ' इति शब्देनोत्तरं नोपपद्यते इत्यर्थः । दिगन्तराणि—

१—'नैषोऽस्ते' पा० । * १. ४. ५७ ग० सू० † स्वरादिनिपातमव्ययम् १. १. ३७.

वचनं चैवं हि नोपपद्यते स्वरे च दोषो भवति । किंसब्रह्मचारीत्येवं स्वरः प्रसज्येत† किंसब्रह्मचारीति चेष्यते‡ ।

एवं तर्ह्येवं विग्रहः करिष्यते कः सब्रह्मचारी किंसब्रह्मचारीति । भवेत्प्रतिवचनमुपपन्नं स्वरे तु दोषो भवति ॥ एवं तर्ह्येवं विग्रहः करिष्यते कः सब्रह्मचारी तव किंसब्रह्मचारी त्वमिति ।

अथवा पुनरस्त्वयमेव विग्रहः के सब्रह्मचारिणोऽस्येति । ननु चोक्तं 'कठ इति प्रतिवचनं नोपपद्यत' इति । नैष दोषः । अग्नौकरवाणिन्यायेन भविष्यति । तद्यथा—कश्चित्कंचिदाह—'अग्नौ करवाणी'ति । कुर्विति कर्तर्यनुज्ञाते कर्माप्यनुज्ञातं भवति । अपर आह—'अग्नौ [1]करिष्यत' इति । 'क्रियता'मिति कर्मण्यनुज्ञाते कर्ताप्यनुज्ञातो भवति । यथैव खल्वपि के सब्रह्मचारिणोऽस्येति 'कठा' इत्युक्ते संबन्धादेतद्गम्यते '[2]नूनं सोऽपि कठ' इति,

प्र०-प्रतिवचनमिति । 'कठाना'मिति प्रतिवचनेन भाव्यं, न तु 'कठ' इत्यनेनेत्यर्थः । स्वरे चेति । अन्तोदात्तः स्यादाद्युदात्तश्चेष्यत इत्यर्थः ॥ कः सब्रह्मचारीति । सुप्सुपेति समासं मन्यते विशेषणविशेष्यभावाभावात्तु विशेषणसमासो नास्ति । कः सब्रह्मचारी तवेति । एकस्मिन्पृष्टे एकवचनेन प्रतिवचनमुपपद्यते ।

अत्रापि पक्षे 'कठ' इति प्रतिवचनं व्यधिकरणं प्राप्नोति । 'अहं कठ' इति समानाधिकरण्यं दृश्यत इति विशेषाभावं मत्वाह—अथवेति । अग्नौ करवाणिन्यायेनेति । 'अग्नौ करवाणी'ति यद्वाक्यं तदनुकरणमेतत् । कर्मापीति । सकर्म-

उ०-प्रकारान्तराणि । विशेषणविशेष्यभावाभावात् त्विति । परिच्छेद्यपरिच्छेदकभावो विशेष्यविशेषणभाव इत्यभिमानः । वस्तुतो विषयताविशेषस्वरूपमेव तत्र तन्निविष्टमिति तेनापि समास इति चिन्त्यम् ।

व्यधिकरणं प्राप्नोतीति । 'प्रश्नविषयेणे'ति शेषः । तत्र हेतुमाह—अहं कठ इति । प्रतियतोऽहमित्यनेन सामानाधिकरण्यमतस्तेन व्यधिकरणमित्यर्थः । विशेषाभावमिति । प्रतिवचनानुपपत्तिपरिहाररूपस्य विशेषस्याभावमित्यर्थः । अनुकरणमिति । एवं च तद्विषयो न्याय इति मध्यमपदलोपी समासः । यत्त्वनुकरणस्य गतित्वात्समास इति तन्न, कृत्वस्तियोग एव तत्प्रवृत्तेः । भाष्ये—'अग्नौ करवाणी'त्यस्याग्नौ हविः करवाणीत्यर्थः । कर्तर्यनुज्ञात इति । 'कुरु' इत्यत्र कर्तरि लोट् । एवं च तात्पर्यतः प्रधानस्य कर्तुरेवानुज्ञा भवतीति भावः । कर्मापीति । कर्म कारकमित्यर्थः । तदाह—सकर्मत्वादिति । दृष्टान्तान्तरमप्याह भाष्ये—

† समासस्य ६. १. २२३. ‡ बहुव्रीहौ प्रकृत्या पूर्वपदम् ६. २. १.

१—'करिष्य' पा० । २—'नूनमयमपि' पा० ।

एवं 'कठ' इत्युक्ते संबन्धादेतद्गन्तव्यं स्या'न्नूनं तेऽपि कठा' इति ॥ न खल्वपि ते शक्याः समासेन प्रतिनिर्देष्टुम्। उपसर्जनं हि ते भवन्ति।

अथार्धतृतीया इति कोऽयं समासः ? बहुव्रीहिरित्याह। कोऽस्य विग्रहः ? अर्धं तृतीयमेषामिति। कः समासार्थः ? समासार्थो नोपपद्यतेऽन्यपदार्थो हि नाम स भवति। येषां पदानां समासस्ततोऽन्यस्य पदस्यार्थोऽन्यपदार्थः।

एवं तर्ह्येवं विग्रहः करिष्यतेऽर्धं तृतीयमनयोरिति। एवमपि कः षष्ठ्यर्थः ? षष्ठ्यर्थो नोपपद्यते। किं हि तयोरर्धं भवति।

अस्तु तर्ह्ययमेव विग्रहोऽर्धं तृतीयमेषामिति। ननु चोक्तं 'समासार्थो

प्र०–कृत्वात्करोतिक्रियायाः। एवं कठ इति। न हि तेषां कठत्वेन विना तस्य कठत्वोपपत्तिः। तथा हि—समाने ब्रह्मणि व्रतचारी सब्रह्मचारी कथ्यते। ततश्च तस्यैकचरणाध्ययनापेक्षं सब्रह्मचारित्वम्। न खल्वपीति। वर्तिपदार्थानामुपसर्जनत्वात्तदुपलक्षितस्यान्यपदार्थस्य प्राधान्यात्किंसब्रह्मचारिशब्देन समासेन तेषामभिधानाभावात्कठा इति बहुवचनान्तं प्रतिवचनं न कदाचिद्भवतीत्यर्थः। यदा तु के सब्रह्मचारिणोऽस्येति वाक्येन प्रश्नः क्रियते न तु समासेन तदा 'कठा' इत्येव प्रतिवचनम्।

कः समासार्थ इति। वर्तिपदार्थव्यतिरिक्तेनान्यपदार्थेन भाव्यम्। इह च बहुत्वान्यथानुपपत्त्या क्रियायां च वर्तिपदार्थस्याप्यन्तर्भावादन्यपदार्थो नोपपद्यते।

किं हि तयोरिति। तृतीयस्य हि तदर्धमिति द्वाभ्यां तस्यावयवावयविभावलक्षणः संबन्धो नास्ति, स्वस्वामिसंबन्धे चात्रानभिधानाद्बहुव्रीहिर्न भवति। समास-

उ०–यथैव खल्वपीति। दार्ष्टान्तिकमाह—एवमिति। न हि तेषामिति। 'कठ' इत्यस्य कठशाखाध्येतेत्यर्थादिति भावः। चरणं—शाखा। तथा च तस्य प्रश्नस्यार्थमिदमुत्तरमिति बोध्यम्। नन्वसमासेन प्रश्न इव समासेन प्रश्नेऽपि बहुवचनान्तमुत्तरं कुतो नेत्यत आह भाष्ये—न खल्वपीति। सब्रह्मचारिणः समासेन प्रतिनिर्देष्टुं प्राधान्येन बोधयितुमशक्या अतः समासेन प्रश्ने 'कठा' इत्युत्तरं नेत्यर्थः। प्रश्नवाक्ये यत्प्रधानं तद्विषयं यथाकथञ्चिज्जिज्ञासानिवर्तकमुत्तरमिति तात्पर्यम्। तदाह—वर्तिपदेति।

'कः समासार्थ' इति वाक्यं न कोऽपीत्यर्थाभिप्रायेण भगवान्विवृणोति—समासार्थो नोपपद्यत इति। वर्तिपदार्थस्याप्यन्तर्भावादिति। बहुत्वान्यथानुपपत्त्या क्रियायां वर्तिपदार्थस्याप्यन्वयादित्यर्थः। अन्यपदार्थशब्दस्यान्यपदस्यैव योऽर्थो न तु स्वपदस्यापीत्यर्थ इति भावः।

अत्र—'अर्धतृतीया' इत्यत्र। 'द्विवचनं स्यादि'ति कुतो नोक्तमत आह—समासस्येति।

नोपपद्यत' इति । नैष दोषः । अन्वयवेन विग्रहः समुदायः समासार्थः । यद्य-वयवेन विग्रहः समुदायः समासार्थः—

'असिद्वितीयोऽनुसार पाण्डवम्' 'सङ्कर्षणद्वितीयस्य बलं कृष्णस्य वर्धता'-मिति द्वयोर्द्विवचनमिति* द्विवचनं प्राप्नोति ।

अस्तु तर्ह्यन्वयमेव विग्रहोऽर्थं तृतीयमनयोरिति । ननु चोक्तं 'षष्ठ्यर्थो नोपपद्यत' इति । नैष दोषः । इदं तावदयं प्रष्टव्यः—अथेह देवदत्तस्य भ्रातेति कः षष्ठ्यर्थ इति ? तत्रैतत्स्यादेकस्मात्प्रादुर्भाव इति । एतच्च वार्तम् । तद्यथा—सार्थिकानामेकप्रतिश्रये उषितानां प्रातरुत्थाय प्रतिष्ठमानानां न कश्चित्परस्परं संबन्धो भवति । एवंजातीयकं भ्रातृत्वं नाम । अत्र चेद्युक्तः षष्ठ्यर्थो दृश्यत इहापि युक्तो दृश्यताम् ।

प्र०—स्यानुपपत्तिचोदनान्मूलाभावाद् द्विवचनप्रसङ्गो न चोदितः । अवयवेनेति । अर्धस्य द्वयोश्च यः समुदायः स समासार्थः । समुदायावयवानां च कदाचिदभेदविवक्षा कदाचिद्भेदविवक्षा । यथा—ब्राह्मणानां संघः, संघीभवन्ति ब्राह्मणा इति ।

असिद्वितीय इति । द्वयोः पूरणो द्वितीयः । स च द्व्यात्मकस्य समुदायस्यावयवो भवतीति तदवयवस्य समुदायस्य समासेनाभिधानाद्द्विवचनप्रसङ्गः ।

अथेति । न ह्यत्र स्वस्वामिभावादिः संबन्धोऽस्तीति भावः । एतच्च वार्तमिति । असारवाची वार्तशब्दः । मातापितृभ्यामेव पुत्रयोर्जन्यजनकभावः संबन्धो न तु परस्परेण कश्चिदित्यर्थः । अत्र चेदिति । परस्परोपकाराभावेऽपि यदि समानोदर-

उ०—अन्वयवेन विग्रह इति । अवयवार्थेन वाक्यमित्यर्थः । वर्तिपदार्थोऽवयव इति यावत् । नन्वर्धस्य द्वयोश्चेत्यनुपपन्नं समुदायस्यावयवानतिरिक्ततया आर्धं द्वयं च समुदाय इत्येवोचितम्, अवयवेन विग्रहः समुदायः समासार्थ इति चायुक्तमत आह—समुदायावयवानां चेति । समुदायश्चान्यपदस्यैवार्थो न तु समस्यमानपदस्य । स चावयवेभ्यो भिन्नोऽन्यपदार्थः । अवयवगतबाहुल्यस्य च तत्रारोपाद्बहुवचनमिति भावः । द्विवचनप्रसङ्ग इति । उद्भूतावयवभेदस्य समुदायस्य समासार्थत्वात् । तत्र बहुवचनमिवात्रापि द्विवचनं स्यादिति भावः ।

स्वस्वामीति । साक्षात्संबन्धोपलक्षणम् । क्वचिद्वार्तशब्दस्य दुःखपर्यायत्वदर्शनादाह—असारेति । अनेकार्थोऽयमिति भावः । अन्वस्थानादिनिमित्त इति । सर्वत्र संबन्धस्य क्रियाकारकभावपूर्वकत्वमित्युभयत्रापि कालतनिकोऽवयवावयविभावो व्यवहारनियामक इति भावः । यद्वा संबन्धत्वेन सम्बन्धोऽसन्नपि विकल्पात्मकज्ञानविषयः पुरुषस्य चैतन्यमितिवत्षष्ठी-

* द्व्येकयोर्द्विवचनैकवचने १. ४. २२.

इह तर्ह्यर्धतृतीया आनीयन्तामित्युक्तेऽर्धस्यानयनं न प्राप्नोति ।

अस्तु तर्ह्ययमेव विग्रहोऽर्धं तृतीयमेषामिति । ननु चोक्तमसिद्वितीयोऽनुसार पाण्डवम् सङ्कर्षणद्वितीयस्य बलं कृष्णस्य वर्धतामिति द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोतीति । नैष दोषः । अयं तीयान्तः शब्दोऽस्त्येव पूरणमस्ति सहायवाची । तद्यः सहायवाची तस्येदं ग्रहणम् । असिद्वितीयः असिसहाय इति गम्यते ।

एवमप्यर्धतृतीया इत्येकस्मिन्नेकवचनं प्राप्नोति । एकार्था हि समुदाया भवन्ति । तद्यथा शतम् यूथम् वनमिति ।

अस्तु तर्ह्ययमेव विग्रहोऽर्धं तृतीयमनयोरिति । ननु चोक्तमर्धतृतीया आनीयन्तामित्युक्तेऽर्धस्यानयनं न प्राप्नोतीति । नैष दोषः । भवति बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा—शुक्लवाससमानय लोहितोष्णीषा ऋत्विजः प्रचरन्तीति तद्गुण आनीयते तद्गुणाश्च प्रचरन्ति ।

अथवा पुनरस्त्वयमेव विग्रहोऽर्धं तृतीयमेषामिति । ननु चोक्तमेकवचनं

प्र०-शायित्वमात्रेण काल्पनिकः संबन्धस्तदार्धस्य द्वाभ्यामेकप्रदेशावस्थानादिनिमित्तः संबन्धो युक्त इत्यर्थः ।

इह तर्हीति । अर्धं तृतीयमनयोरिति द्वयोरेव समासार्थत्वादानयनं स्यान्नार्धस्येत्यर्थः ।

अस्ति सहायवाचीति । अव्युत्पन्न एवेत्यर्थः ॥ भवति बहुव्रीहाविति । उपलक्षणार्थसहितयोर्द्वयोरानयनं भविष्यतीत्यर्थः । संयोगसमवायलक्षणे संबन्धे यदा बहुव्रीहिस्तदा तद्गुणसंविज्ञानं भवति—'शुक्लवासाः' 'लम्बकर्णः' इति । स्वस्वामिभावादिके तु संबन्धे बहुव्रीहौ तद्गुणसंविज्ञानाभावो यथा चित्रगुरिति संक्षेपेण विषयभागः ।

द्विवचनप्रसङ्गाद्दुष्टोऽयं पक्ष इति मत्वाह—अथवेति । संख्या

उ०-प्रयोगनिमित्तमिति भावः ॥ नार्धस्येति । एवं च द्विवचनप्रसङ्गोऽपि नोदित इति बोध्यम् ।

भाष्ये-अस्ति सहायेति । एवं चैकस्यैवान्यपदार्थत्वं न तु द्व्यवयवसमुदायस्येति भावः । संयोगसमवायेति । एवं च प्रकृते तद्गुणसंविज्ञानस्य वक्तुमशक्यत्वाल्लोहितोष्णीषमानय इत्यादावुपलक्षणार्थसाहित्यप्रयुक्तवचनादर्शनेन द्विवचनप्रसङ्गाच्च दुष्टोऽयं पक्ष इति भावः ।

अयमर्थ इति । प्राग्व्याख्यात एतद्भाष्याक्षरार्थः । एवं च विग्रह उद्भूतावयवभेदस्य समुदायस्यान्यपदार्थत्वात्तादृश एव समासशक्त्य इति तत्प्रत्यायनाय बहुवचनमेवेति तात्पर्यम् ।

प्राप्नोतीति । नैष दोषः । संख्या नामेयं परप्रधाना । संख्येयमनया विशेष्यम् । यदि चात्रैकवचनं स्यात्संख्येयमविशेषितं स्यात् ।

इह तर्ह्यर्धतृतीया द्रोणा इत्ययं द्रोणशब्दः समुदाये प्रवृत्तोऽवयवे नोपपद्यते । नैष दोषः । समुदायेष्वपि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते । तद्यथा—पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तम्, घृतं [1]भुक्तम्, शुक्लः नीलः [2]कृष्ण इति । एवमयं समुदाये द्रोणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते ।

कामं तर्ह्यनेनैव हेतुना यदा द्वौ द्रोणावर्धाढकं च तदा कर्तव्यमर्धतृतीया द्रोणा इति । न कर्तव्यम् । समुदायेष्वपि हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते । केष्ववयवेषु ? योऽवयवस्तं समुदायं न व्यभिचरति । कं च समुदायं न व्यभिचरति ? अर्धद्रोणो द्रोणम् । अर्धाढकं पुनर्व्यभिचरति ॥२४॥

## संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये ॥२।२।२५॥

द्वित्राः चित्रतुरा इति कोऽयं समासः ? बहुव्रीहिरित्याह । कोऽस्य

---

प्र०—नामेयमिति । अयमर्थः—अर्धं तृतीयमेषामिति बहुत्वसंख्याविशिष्टोऽन्यपदार्थो वाक्य उपात्त इति तथाभूतस्यैव समासो वाचक इति अवश्यं प्रत्याय्यं बहुत्वम् । यथा च 'वृक्षा' इति बहुत्वसंख्यायुक्तः समुदायः प्रतीयते, धवखदिरपलाशा इति च, तथार्धतृतीया इत्यपीत्यर्थः ।

इह तर्हीति । अर्धस्य द्वयोश्च द्रोणयोर्यः समुदायः स समासार्थस्तत्रार्थस्य द्रोणत्वाभावाद्द्रोण इति नोपपद्यत इत्यर्थः । नैष दोष इति । अर्धेऽपि द्रोणत्वोपचाराद्द्रोणशब्दस्य प्रवृत्तिरित्यर्थः । न कर्तव्यमिति । स्वावयव एव समुदायरूपोपचारो नान्यदीयेऽवयव इत्यर्थः । अर्धद्रोणो द्रोणमिति । द्रोणेन विनास्याभावादित्यर्थः । अर्धाढकमिति । चतुराढको द्रोणः । ततश्च विनापि द्रोणेनैकाढकसद्भावेऽप्यस्य भावः ॥२४॥

संख्यया । द्वित्रा इति । बहुव्रीहिनिमित्तस्य डचो दर्शनादात्त्वाभावाच्च निश्चिते बहुव्रीहित्वे विग्रहनिश्चयाय प्रश्नः । कोऽयं समास इति । स्वाभिप्रायं प्रकाशयितमाह—कोऽस्येति । यदि तावद्द्वौ त्रय एषामुन्मुग्धानामिति तदा मत्वर्थत्वात् पूर्वेण बहुव्रीहिः

---

उ०— भाष्ये—कर्तव्यमर्धतृतीया इति । प्रयोक्तव्यमित्यर्थः ॥ भाष्ये—योऽवयवस्तं समुदायं न व्यभिचरतीति । यदवयवबुद्धिस्तद्बुद्धिं न व्यभिचरतीत्यर्थः । अन्यथा द्रोणाभाववद् वृत्तित्वरूपो व्यभिचारोऽर्धद्रोणेऽप्यस्त्येवेति तदसङ्गतिः स्पष्टैव । अर्धाढकं पुनर्व्यभिचरतीत्यस्य 'द्रोण'मिति शेषः । अर्धाढकं कर्तृ । द्रोणेन विनेति । द्रोणबुद्ध्या विनेत्यर्थः । द्रोणेन—द्रोणबुद्ध्या । एकाढकसद्भावे—तद्बुद्धिसद्भावे ॥२४॥

संख्यया । आत्त्वाभावाचेति । 'द्व्यष्टन' इत्यात्त्वस्य बहुव्रीहौ निषेधात्सोऽपि बहुव्रीहि-

---

१—'घृतं भुक्त'मिति क्वचित् । २—'कपिल' पा० ।

चेद्विंशत्यादिषु वचनप्रसङ्ग इति । नैष दोषः । सर्वो द्वन्द्वो विभाषैकवद्भवति । यदा तर्ह्येकवचनं तदा नपुंसकलिङ्गं प्राप्नोति । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ॥२९॥

## उपसर्जनं पूर्वम् ॥ २ । २ । ३० ॥

किमर्थमिदमुच्यते ?

**उपसर्जनस्य पूर्ववचनं परप्रयोगनिवृत्त्यर्थम् ॥ १ ॥**

उपसर्जनस्य पूर्ववचनं क्रियते परप्रयोगो मा भूदिति ।

**न वानिष्टादर्शनात् ॥ २ ॥**

न वैतत्प्रयोजनमस्ति । किं कारणम् ? अनिष्टादर्शनात् । न हि किंचिदनिष्टं दृश्यते । न हि कश्चिद्राजपुरुष इति प्रयोक्तव्ये पुरुषराज इति प्रयुङ्क्ते । यदि चानिष्टं [1]दृश्येत ततो यत्नार्हं स्यात् ।

अथ यत्र द्वे षष्ठ्यन्ते भवतः कस्मात्तत्र प्रधानस्य पूर्वनिपातो न भवति—राज्ञः पुरुषस्य राजपुरुषस्येति* ?

---

प्र०- सर्वो हीति । 'तिष्यपुनर्वस्वो'रित्यत्र बहुवचनग्रहणेनैतज्ज्ञापितम् । लिङ्गमशिष्यमिति । 'स नपुंसक'मिति न कर्तव्यमित्यर्थः ॥२९॥

उपसर्जनं । परप्रयोगनिवृत्त्यर्थमिति । वाक्यवत्समासे पदानामनियते प्रयोगे प्राप्ते नियमार्थमेतदित्यर्थः ॥ न वेति । नित्येषु शब्देषु प्रयोगसङ्करे स्थिते गाव्यादिप्रयोगनिवारणायेदं शास्त्रम् । इह तु विपर्ययप्रयोगो नैव दृश्यत इति किं तन्निवृत्त्यर्थं न यत्नेनेत्यर्थः ॥ इदानीमारब्धे सूत्रे दोषमुद्भावयति—अथ यत्रेति । राज्ञः पुरुषस्येति ।

---

उ०-क्तेस्तदभावकल्पने मानाभावात् । तिष्यपुनर्वस्वोरिति । एकविंशत्यादावितरेतरयोगस्तु न, अनभिधानादिति बोध्यम् । द्वन्द्वतत्पुरुषाभ्यां स्वरभेदस्त्विष्यत एवेति केचित् । परे तु तत्पुरुषत्वे स्वरो न सिध्यतीत्याशङ्क्यास्तु तर्हि द्वन्द्व इति भाष्योक्तेः स्वरभेदो नेष्टः । उपक्रमे 'कोऽयं समासः ? द्वन्द्व' इति सिद्धान्त्युक्तेरत्र द्वन्द्व एवेत्येवार्थः । सिद्धं त्विति तु सिद्धान्त्येकदेशयुक्तिरित्याहुः ॥२९॥

उपसर्जनं । विपर्ययप्रयोग इति । पदयोर्विपर्ययेण प्रयोग इत्यर्थः । सूत्रप्रत्याख्याने

---

१–'प्रसज्येव' पा० । * षष्ठी २. २. ८.

षष्ठ्यन्तयोः समासेऽर्थाभेदात्प्रधानस्यापूर्वनिपातः ॥ ३ ॥

षष्ठ्यन्तयोः समासेऽर्थाभेदात्प्रधानस्य पूर्वनिपातो न भविष्यति । एवं न चेदमकृतं भवत्युपसर्जनं पूर्वमित्यर्थश्चाभिन्न इति कृत्वा प्रधानस्य पूर्वनिपातो न भविष्यति ॥३०॥

## अल्पाच्तरम् ॥ २ । २ । ३४ ॥

किमयं तन्त्रं तरनिर्देश आहोस्विदतन्त्रम् । किं चातः ? यदि तन्त्रं द्वयोर्नियमो बहुष्वनियमः । तत्र को दोषः ? 'शंखदुन्दुभिवीणाना'मिति न

प्र०–द्वयोरपि 'षष्ठी'ति समासशास्त्रे प्रथमानिर्दिष्टत्वादुपसर्जनत्वात् पूर्वनिपातानियमप्रसङ्गः ॥ अर्थभेदादिति । उपसर्जनसंज्ञान्वर्थत्वादप्रधानस्यैव भवति । पुरुषश्चात्र राजापेक्षया प्रधानमेवेति पुरुषार्थो न भिद्यते राजपेक्षया न व्यतिरिच्यत इत्यर्थः । न चेदमिति । अबुधभ्रान्तिनिराकरणायाश्रितमेवेत्यर्थः ॥३०॥

अल्पाच्तरम् । किमयमिति । किं तरबर्थः प्रकर्ष आश्रीयते, अथ स्वार्थेऽत एव निपातनात्तरः कृत इति प्रश्नः । द्वयोरिति । प्लक्षन्यग्रोधावित्यादावेव स्यान्न्यग्रोधशब्दस्याल्पाच्त्वात्तदपेक्षया प्लक्षशब्दस्याल्पाच्तरत्वात् । बहुषु तु सन्निहितेषु द्विवचनोप-

उ०–उत्तरग्रन्थानुत्थानमाशङ्क्याह–इदानीमिति ॥ न भिद्यते इति । वाक्यापेक्षयाप्रधानस्वरूपभेदवान्न भवतीत्यर्थः । तदाह–राजापेक्षया न व्यतिरिच्यते इति । व्यतिरेकोऽत्र भेदमूलकसंबन्धः । एवं च राजनिरूपितभेदनिबन्धनसंबन्धवान्न भवतीत्यर्थः । विशेषणनिष्ठ एव संबन्ध इति भावः । परे तु 'षष्ठी सुबन्तेन समस्यत' इत्युक्ते प्रत्यासत्त्या येन सुबन्तेन समासस्तन्निरूपितसंबन्धार्थकषष्ठ्येव गृह्यते इति तदेव षष्ठ्यन्तं प्रथमानिर्दिष्टं न प्राधानमिति । एवं चार्थात्पूरणगुणेति सूत्रस्थसमानाधिकरणेनेत्यपि प्रत्याख्यातप्रायमेव । समानाधिकरणेन षष्ठीसमासाप्राप्तेः । 'षष्ठी'तिसूत्रे प्रत्यासत्त्याश्रयणात् । अर्थाभेदादिति भाष्यस्यायमर्थः—अर्थस्य—पुरुषस्य, राज्ञा भेदाभावात्—राजनिरूपितभेदबन्धनसंबन्धवत्त्वाभावात्, किंतु धनादिनिरूपितसंबन्धवत्त्वादिति । संबन्धस्य विशेषणनिष्ठत्वादित्याहुः । ये तु—अर्थाभेदादिति अप्रधानपदोपसर्जनपदयोरिति शेष इत्याहुः, तन्न, 'प्रथमानिर्दिष्ट'मिति सूत्रस्थभाष्यविरोधात् । बाह्यसम्बन्धिनिरूपिताप्राधान्यस्यात्रापि सत्त्वाच्च । पूर्वकायासिद्ध्या तयोः पर्यायताया अशक्यस्वीकाराच्च ॥३०॥

अल्पाच्तरम् । तरपः श्रवणाद्विचारानुपपत्तिमाशङ्क्याह—किमिति । तन्त्रे तरनिर्देशे प्लक्षन्यग्रोधावित्यादिसिद्ध्यर्थं यत्किंचिदपेक्षयाल्पाच्त्वम् । अतिशयस्तूपात्तापेक्षया, अतन्त्रे स्वल्पत्वमेवोपात्तापेक्षयेति बोध्यम् । अत एव 'शङ्खदुन्दुभिवीणाना'मित्यस्य सिद्धिस्तत्पक्षे ।

सिध्यति । दुन्दुभिशब्दस्यापि पूर्वनिपातः प्राप्नोति । अथातन्त्रम्—

'मृदङ्गशङ्खतूणवाः पृथङ्नदन्ति संसदि' 'प्रासादे धनपतिरामकेशवानाम्' इत्येतन्न सिध्यति । यथेच्छसि तथास्तु ।

अस्तु तावत्तन्त्रम् । ननु चोक्तं द्वयोर्नियमो बहुष्वनियम इति तत्र 'शङ्खदुन्दुभिवीणानामिति न सिध्यति दुन्दुभिशब्दस्यापि पूर्वनिपातः प्राप्नोतीति । नैष दोषः । यदेतदल्पाच्तरमिति तदल्पाजिति वक्ष्यामि ।

अथवा पुनरस्त्वतन्त्रम् । ननु चोक्तं मृदङ्गशङ्खतूणवाः पृथङ्नदन्ति संसदि प्रासादे धनपतिरामकेशवानामित्येतन्न सिध्यतीति ।

**अतन्त्रे तरनिर्देशे शंखतूणवयोर्मृदङ्गेन समासः ॥ १ ॥**

अतन्त्रे तरनिर्देशे शङ्खतूणवयोर्मृदङ्गेन सह समासः करिष्यते । शङ्खश्च

प्र०–पदत्वाभावात्तरपोऽनुत्पत्तिरिति तत्रानियमप्रसङ्गः । ततश्च 'शङ्खदुन्दुभिवीणाना'-मित्यत्र दुन्दुभिशब्दस्यापि कदाचित्पूर्वनिपातः स्यात् ॥ अतन्त्रे तरपि दुन्दुभिशब्दापेक्षयाल्पाच्त्वसद्भावाच्छङ्खवीणाशब्दयोरन्यतरस्य पूर्वनिपातो भवति, न तु दुन्दुभिशब्दस्येति दोषाभावः । मृदङ्गशंखतूणवा इति । शङ्खशब्दस्याल्पाच्त्वात्पूर्वनिपातः प्राप्नोति । तन्त्रे तु तरपि पूर्वोक्तेन न्यायेन बहुष्वनियमादेतद्रूपं सिध्यति । यदेतदिति । तन्त्रे दोषप्रसङ्गात्प्रयोजनाभावाच्च तरनिर्देशो न कर्तव्य इत्यर्थः ।

अतन्त्रे तु तस्मिंस्तरपः स्वार्थिकत्वज्ञापनमेव तरनिर्देशस्य प्रयोजनम् । शंखतूणवाविति । नियतद्रव्यविवक्षायां जातिपरत्वाभावादेकवद्भावाभावः । तूर्याङ्गाणा-

उ०–तत्रान्त्यो युक्तः । द्वयोरित्यस्याविवक्षावदतिशयस्याप्यविवक्षौचित्यादित्याहुः । भाष्ये—दुन्दुभिशब्दस्यापीति । न चैतत्प्रवृत्त्यभावेऽपि 'द्वन्द्वे घी'त्यस्य प्रवृत्त्या दुन्दुभिशब्दस्यैव पूर्वनिपातः प्राप्नोतीत्यपरिसङ्गत इति वाच्यम्, पूर्वयोः पूर्वं द्वन्द्वे ततो वीणाशब्देन द्वन्द्वे तस्य पूर्वनिपाताप्राप्त्या तदुक्तेः । तद् ध्वनयन्नाह–कदाचिदिति । अथातन्त्रमितिभाष्याशयमाह—अतन्त्रे इति । अल्पाच्त्वेति । परत्वादस्यैव प्रवृत्तेरिति भावः । 'मृदङ्गशङ्खतूणवा' इति पक्षद्वयेऽपि भाष्योक्तरीत्यैव साध्यम् । अतन्त्रपक्षे स्वारोपितातिशये तरप्पारायणे दृष्टार्थः । 'स्वरिता'दिति सूत्रेऽनुदात्तानामिति बहुवचननिर्देशवत् । तन्त्रे तरनिर्देशो बहुषु नियमाय भाष्ये उक्तम् 'अल्पाजिति वक्ष्यामी'ति । यतः कुतश्चित्सर्वस्याप्यल्पाच्त्वात्सामर्थ्यादतिशयप्रतीतिः । एवं च द्वयोरित्यंशाभावाच्छङ्खदुन्दुभीत्यादिसिद्धिः । एवं च द्वयोरित्यंशत्यागपूर्वकमतिशयो विवक्षित इति तात्पर्यम् । 'मृदङ्गे'त्यादौ त्रयाणां समासे तु शङ्खस्यैव पूर्वनिपात इति बोध्यमिति परे ।

नियतद्रव्येति । जातिप्राधान्ये हि तदाश्रयसर्वव्यक्तीनां विनिगमनाविरहेण जात्यरीप-

तूणवश्च शङ्खतूणवौ । मृदङ्गश्च शङ्खतूणवौ च मृदङ्गशङ्खतूणवाः । रामश्च केशवश्च रामकेशवौ । धनपतिश्च रामकेशवौ च धनपतिरामकेशवास्तेषां धनपतिरामकेशवानामिति ।

अथ यत्र बहूनां पूर्वनिपातप्रसङ्गः किं तत्रैकस्य नियमो भवत्याहोस्विदविशेषेण ?

**अनेकप्राप्तावेकस्य नियमोऽनियमः शेषेषु ॥ २ ॥**

अनेकप्राप्तावेकस्य नियमो भवति शेषेष्वनियमः । पटुमृदुशुक्लाः पटुशुक्लमृदव इति* ।

**ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणाम् ॥ ३ ॥**

ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणां पूर्वनिपातो वक्तव्यः । शिशिरवसन्तावुदगयनस्थौ । कृत्तिकारोहिण्यः ।

**अभ्यर्हितम् ॥ ४ ॥**

अभ्यर्हितं पूर्वं निपततीति वक्तव्यम् । मातापितरौ श्रद्धामेधे ।

प्र०-मित्यपि न भवति । शङ्खस्यातूर्याङ्गत्वादित्येके । तूर्यशिल्पोपजीविन एव तूर्याङ्गत्वेन गृह्यन्ते । तेषां हि मुख्यं तूर्याङ्गत्वमित्यपरे । अथ यत्रेति । यदि जातिपदार्थपक्ष आश्रीयते तदा लक्षणावृत्त्यभावादेकस्यैव नियमे सति शेषाणामनियमेन भाव्यम् । अथ व्यक्तिपक्षस्तदा पुनः पुनर्लक्षणप्रवर्तनात्सर्वेषां नियमेन भाव्यमिति मत्वा पृच्छति । उत्तरं तु लक्ष्यदर्शनवशाज्जातिपक्षाश्रयेण ।

उदगयनस्थाविति । उत्तरायणस्थौ । लौकिकप्रयोगप्रदर्शनपरमिदम् । मातापितराविति । गर्भधारणादिना पित्रपेक्षया माताभ्यर्हिता । श्रद्धामेधे इति । सत्यां

उ०-कत्वाद्दोष इति भावः । तदा लक्षणेति । एतदुदाहरणावच्छिन्नघित्वजात्यवच्छिन्ने कृत्स्नप्रवृत्त्या चरितार्थत्वात्, एकस्य युगपदवध्यवधिमद्भावासंभवाच्च, अन्यस्यावधित्वेऽप्येकस्य व्यवधानाच्च पुनस्तत्रैवाप्रवृत्तेरिति भावः । व्यक्तिपक्ष इति । एतदुदाहरणावच्छिन्नतत्तद्घिघव्यक्तिनिष्ठफलक्षणभेदेन तेषामचारितार्थ्यात्पुनः पुनः प्रवृत्तिरस्त्येवेति भावः । वस्तुतो वाचनिकमेवेदं, जातिपक्षेऽप्यावृत्तिं विनैव तज्जात्याश्रयसर्वविषयकत्वासंभवात् ।

उदगयनस्थावित्यस्यानुपयोगादाह—लौकिकेति । वेददर्शनेति । 'ब्राह्मणोऽस्य मुखं-

* द्वन्द्वे घि २. २. ३२.

### लघ्वक्षरम् ॥ ५ ॥

लघ्वक्षरं पूर्वं निपततीति वक्तव्यम् । कुशकाशकम् शरचापम्[1] ।

अपर आह—सर्वत एवाभ्यर्हितं पूर्वं निपततीति वक्तव्यम् । लघ्वक्षरादपीति । श्रद्धातपसी । दीक्षातपसी ।

### वर्णानामानुपूर्व्येण ॥ ६ ॥

वर्णानां चानुपूर्व्येण पूर्वनिपातो भवतीति वक्तव्यम् । ब्राह्मणक्षत्रियविट्शूद्राः ।

### भ्रातुश्च ज्यायसः ॥ ७ ॥

भ्रातुश्च ज्यायसः पूर्वनिपातो भवतीति वक्तव्यम् । युधिष्ठिरार्जुनौ ।

### संख्याया अल्पीयसः[2] ॥ ८ ॥

संख्याया अल्पीयसः[3] पूर्वनिपातो भवतीति वक्तव्यम् । एकादश द्वादश ।

### धर्मादिषूभयम् ॥ ९ ॥

धर्मादिषूभयं पूर्वं निपततीति वक्तव्यम् । धर्मार्थौ अर्थधर्मौ । कामार्थौ अर्थकामौ । गुणवृद्धी वृद्धिगुणौ । आद्यन्तौ अन्तादी ॥३४॥

---

प्र०-श्रद्धायामर्थक्रियाकारिणी मेधेति श्रद्धाया अभ्यर्हितत्वम् । लघ्वक्षरादपीति । पूर्वविप्रतिषेधेन । दीक्षातपसी इति । दीक्षार्थं तपश्चरणमिति दीक्षाया अभ्यर्हितत्वं, स्वरूपेण वा । वर्णानामिति । वेददर्शनाश्रयेणोत्पत्तिक्रमेण वर्णानामानुपूर्व्यम् । अल्पीयस[3] इति । 'अर्थस्य वाचिकाया' इति शेषः । एतच्च द्वन्द्वाद्वन्द्वविषयमित्याहुः । 'द्व्येकयो'-रिति तु सौत्रो निर्देशः ॥३४॥

---

उ०-मासी'रित्यादिवेददर्शनम्* । 'अल्पीयस्या' इत्युचितमत आह—अर्थस्येति । एतच्चेति : अत एव तत्पुरुषेऽप्येकादशेत्येव । बहुव्रीहौ 'द्वित्रा' इत्यादिसिद्धिश्चेत्याहुः ॥३४॥

---

१–'शरशीर्यम्' पा० ।  २–'पूर्वनिपातो वक्तव्यः' पा० ।  ३–'अल्पीयस्याः' पा० ।

* यजु० ३१. ११.

## सप्तमीविशेषणे बहुव्रीहौ ॥ २ । २ । ३५ ॥

### बहुव्रीहौ सर्वनामसङ्ख्ययोरुपसङ्ख्यानम् ॥ १ ॥

बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानं कर्तव्यम् । विश्वदेवः विश्वयशाः । द्विपुत्रः द्विभार्यः ॥ अथ यत्र संख्यासर्वनाम्नोरेव बहुव्रीहिः कस्य तत्र पूर्व-निपातेन भवितव्यम् ? परत्वात्संख्यायाः । द्व्यन्याय त्र्यन्याय ।

### वा प्रियस्य ॥ २ ॥

वा प्रियस्य [१]पूर्वनिपातो भवतीति वक्तव्यम् । प्रियगुडः गुडप्रियः ।

### सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनम् ॥ ३ ॥

सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परा सप्तमी भवतीति वक्तव्यम् । गडु-कण्ठः गडुशिराः ॥३५॥

## निष्ठा ॥ २ । २ । ३६ ॥

### निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम् ॥ १ ॥

निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परा निष्ठा भवतीति वक्तव्यम् । शार्ङ्गजग्धी पलाण्डुभक्षिती । मासजाता संवत्सरजाता । सुखजाता दुःखजाता ।

---

प्र०— सप्तमी । विश्वदेव इति । यदा विश्वस्य विशेष्यत्वं तदेदमुदाहरणम् । विशेषण-त्वे तु सूत्रेणैव सिद्धः पूर्वनिपातः । द्विपुत्र इति । दिक्प्रदर्शनमेतत् । अत्र हि विशेषणत्वादेव सिद्धः संख्यायाः पूर्वनिपातः । तस्माद्द्विशुक्ल इत्याद्युदाहरणम् । परत्वात्संख्याया इति । शब्दपरविप्रतिषेधात् । एवमर्थमेव च संख्यासर्वनाम्नोरिति न कृतम् ॥३५॥

निष्ठा । प्रतिषेधे त्विति । 'अकृतमितप्रतिपन्ना' इति कृतादीनामन्तोदात्तत्वप्रति-

---

उ०— सप्तमी । यदा विश्वस्येति । 'देव' इत्युपक्रमे तस्य तत्त्वसंभवः । विश्वं देवो यस्येति विग्रहः । 'न संज्ञाया'मिति कश्चिन्नेयः । द्विशुक्ल इति । द्वौ शुक्लगुणौ यस्येत्यर्थः । अत्र हि द्वयोर्गुणवाचित्वादनियमो विशेषणत्वस्य । पुत्रभार्याशब्दावपि गुणवचनाविति भाष्याशयः । अन्यपुंस्त्वधर्मभोग्यस्त्रीत्वयोर्गुणत्वादित्यन्ये ॥३५॥

निष्ठा । यदयमिति—भाष्ये । बहुव्रीहौ आच्छादनभिन्नजात्यादिभ्यः परमुत्तरपदं

---

१—'पूर्वनिपातो वक्तव्यः' पा० ।

**न वोत्तरपदस्यान्तोदात्तवचनं ज्ञापकं परभावस्य ॥ २ ॥**

न वा वक्तव्यम् । किं कारणम् ? उत्तपरपदस्यान्तोदात्तवचनं ज्ञापकं परभावस्य । यदयं जातिकालसुखादिभ्यः परस्या निष्ठाया उत्तरपदस्यान्तोदात्तत्वं शास्ति* तज्ज्ञापयत्याचार्यः 'परात्र निष्ठा भवती'ति ।

**प्रतिषेधे तु पूर्वनिपातप्रसङ्गस्तस्माद्राजदन्तादिषु पाठः ॥ ३ ॥**

प्रतिषेधे तु पूर्वनिपातः प्राप्नोति—'अकृतमितप्रतिपन्ना' इति । तस्माद्राजदन्तादिषु† पाठः कर्तव्यः ।

**[ न वा प्रतिषेधवचनं ज्ञापकं परभावस्य[१] ॥ ]**

न वा कर्तव्यः । अत्रापि प्रतिषेधवचनं ज्ञापकं 'परा निष्ठा भवती'ति ।

**प्रहरणार्थेभ्यश्च ॥ ४ ॥**

प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम् । अस्युद्यतः मुसलोद्यतः । असिपाणिः दण्डपाणिः ।

**द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन ॥ ५ ॥**

द्वन्द्वे घि [ २. २. ३२ ] इत्यस्मादजाद्यदन्तम् [ ३३ ] इत्येतद्भवति विप्रतिषेधेन । 'द्वन्द्वे घी'त्यस्यावकाशः—पटुगुप्तौ । 'अजाद्यन्त'मित्यस्यावकाशः—उष्ट्रखरौ । इहोभयं प्राप्नोति—इन्द्राग्नी । 'अजाद्यन्त'मित्येतद्भवति विप्रतिषेधेन ।

**उभाभ्यामल्पाच्तरम् ॥ ६ ॥**

उभाभ्यामल्पाच्तरम् [ ३४ ] इत्येतद्भवति विप्रतिषेधेन ।

'द्वन्द्वे घी'त्यस्यावकाशः—पटुगुप्तौ । 'अल्पाच्तर'मित्यस्यावकाशः—वाग्दृषदौ । इहोभयं प्राप्नोति–वागग्नी । 'अल्पाच्तर'मित्येतद्भवति विप्रतिषेधेन ।

'अजाद्यन्त'मित्यस्यावकाशः–उष्ट्रखरौ । 'अल्पाच्तर'मित्यस्यावकाशः–स एव । इहोभयं प्राप्नोति–वागिन्द्रौ । 'अल्पाच्तर'मित्येतद्भवति विप्रतिषेधेन ॥३६॥

प्र०–षेधादन्तोदात्तविधानाज्ज्ञापितः परनिपातोऽपि न स्यादित्यर्थः । न वेति । उत्तरपदान्तोदात्तत्वे प्रसक्ते प्रतिषेधः क्रियते । यदि च परनिपातस्तत्प्रसङ्गो नान्यथा ॥३॥

उ०–क्तान्तमन्तोदात्तं कृतादीन्वर्जयित्वेति सूत्रार्थः ॥३६॥

* जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ६. २. १७०.

† राजदन्तादिषु परम् २. २. ३१. १–क्वाचित्कः पाठः ।

# कडाराः कर्मधारये ॥ २ । २ । ३८ ॥

[1]कडारादय इति वक्तव्यम् । इहापि यथा स्यात्—गड्डुलशाण्डिल्यः शाण्डिल्यगड्डुलः । खण्डवात्स्यः वात्स्यखण्डः ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । बहुवचननिर्देशात्कडारादय इति विज्ञास्यते ॥३८॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ।

९।३।०९ समाप्त

---

प्र०- कडाराः । बहुवचननिर्देशादिति । कडारशब्दस्यैकत्वादेकवचने कर्तव्ये साहचर्यादारोपितकडाररूपगड्डुलादिशब्दगतबहुत्वापेक्षो बहुवचननिर्देशो यथा छत्त्रिणो यान्तीति ॥३८॥

इत्युपाध्यायजैय्यटपुत्रकैयटकृते महाभाष्यप्रदीपे द्वितीयस्याध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम् ॥ द्वितीयः पादः समाप्तः ।

---

उ०- कडाराः कर्म । कडारशब्दस्येति । बहुवचनसामर्थ्यादजहल्लक्षणा छत्त्रिण इतिवदाश्रयणीयेत्यर्थः ॥३८॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्योते द्वितीयस्याध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ।

---

१—इतः पूर्वं 'कडारादयः' इति वार्तिकं क्वचिद् दृश्यते ।

# अथ तृतीयः पादः

## अनभिहिते ॥ २ । ३ । १ ॥

अनभिहित इत्युच्यते किमिदमनभिहितं नाम ? उक्तं निर्दिष्टमभिहितमित्यनर्थान्तरम् । यावद् ब्रूयादनुक्तेऽनिर्दिष्ट इति तावदनभिहित इति ।

**अनभिहितवचनमनर्थकमन्यत्रापि विहितस्याभावादभिहिते ॥१॥**

अनभिहितवचनमनर्थकम् । किं कारणम् ? अन्यत्रापि विहितस्याभावादभिहिते । अन्यत्राप्यभिहिते विहितं न भवति ॥ क्वान्यत्र ? चित्रगुः शबलगुः । बहुव्रीहिणोक्तत्वान्मत्वर्थस्य मत्वर्थीयो न भवति ॥ गर्गाः वत्साः, विदाः

---

प्र०– अनभिहिते । प्रत्याख्यानवादी स्ववाचानभिहितशब्दार्थमारम्भवादिनं संजल्पयितुं पृच्छति—किमिदमिति । अभिपूर्वस्तावद्धाञ् बन्धनोच्चारणप्रतिपादनेषु वर्तते । 'अश्वाभिधानीमादत्ते' इत्यत्र बन्धनवृत्तिः । 'अभिहितः श्लोक' इत्युच्चारणवृत्तिः । 'अभिहितोऽर्थ' इति प्रतिपादनवृत्तिः । हिनोतेरपि गतिवृद्ध्यर्थस्याभिहितमिति भवति, तत्र वक्ष्यमाणानां कर्मादीनामर्थानां बन्धनाद्यर्थचतुष्टयासंभवात्प्रतिपादवचन एवाभिहितशब्द आश्रयणीयस्ततः प्रयोजनाभावादनर्थकं सूत्रमिति भावः । पूर्वोक्तेनाभिप्रायेणाह—उक्तमिति । प्रतिपादितमित्यर्थः । यथा 'उक्तार्थानामप्रयोग' इति । यावद् ब्रूयादिति । यावत्तावच्छब्दौ निपातावभिन्नार्थत्वं प्रतिपादयतः ।

अनभिहितवचनमिति । अर्थप्रत्यायनाय लोके शब्दः प्रयुज्यते, स चार्थो यदा शब्दान्तरेण प्रतिपादितो भवति तदा प्रयोजनाभावाच्छब्दान्तरस्य प्रयोगेण न भाव्यम् । अक्षिनिकोचादिभिरव्यवगतेऽर्थे शब्दो न प्रयुज्यते, किं पुनः शब्दान्तरप्रतिपादितेऽर्थे ।

---

उ०– अनभिहिते । स्ववाचेति । प्रयोजकशब्देनेत्यर्थः । करणभूतयेत्यर्थो वा । स्वशब्देनारम्भवादी । स्वरूपार्थयोः प्रसिद्धत्वेऽपि तस्यानेकार्थत्वात्सिद्धान्त्यभिमतमर्थं तन्मुखेन वाचयित्वा सूत्रं प्रत्याख्यातुं प्रश्न इति भावः । अर्थचतुष्टयासंभवादिति । तद्विषयत्वासंभवादित्यर्थः ।

भाष्ये—विहितस्याभावादभिहिते इति । लौकिके प्रयोगे लाघवानादरेण भवत्येव

उर्वाः* । यञञ्भ्यामुक्तत्वादपत्यार्थस्य न्याय्योत्पत्तिर्न भवति† ॥ सप्तपर्णः अष्टापदमिति । समासेनोक्तत्वाद्वीप्साया द्विर्वचनं‡ न भवति ।

यत्तावदुच्यते 'चित्रगुः शबलगुः बहुव्रीहिणोक्तत्वान्मत्वर्थस्य मत्वर्थीयो न भवती'ति । अस्तिसामानाधिकरण्ये मतुब्विधीयते†† न चात्रास्तिना[१] सामानाधिकरण्यम् ।

यदप्युच्यते 'गर्गाः वत्साः, विदा उर्वाः यञञ्भ्यामुक्तत्वादपत्यार्थस्य

प्र०-यञञ्भ्यामिति । यञन्तेनाञन्तेन चेत्यर्थः । यञञोस्तु लुप्तत्वादर्थाभिधानं न संभवति । न्याय्योत्पत्तिरिति । उत्सर्गः पूर्वाचार्यप्रसिद्ध्या 'न्याय्य' उच्यते । बहुवचनोदाहरणं गार्ग्यौ गार्ग्याविति, अत्र यञैव परदेशस्यावरुद्धत्वादण उत्पत्त्यभावात् । बहुवचने तु यञञोर्लुप्तत्वाद्विरोधकाभावादुक्तार्थत्वाश्रयेणैवाणोऽनुत्पत्तिः प्रतिपाद्या । सप्तपर्ण इति । वीप्सायां विषये द्विर्वचनमुच्यते, अस्ति चेह वीप्सा सप्त सप्त पर्णान्यस्येति । समासेन तु शब्दशक्तिस्वाभाव्याद्वीप्साया गमितत्वाद् द्विर्वचनाभावः ।

आरम्भवादी दृष्टान्तेष्वन्यथासाध्यसिद्धिं प्रतिपादयितुमाह—यत्तावदिति । न चात्रास्तिनेति । वर्तिपदयोरन्यपदार्थ उपसंक्रान्तत्वादस्त्यर्थस्य तत्रैवान्तर्भूतत्वात्स्वार्थस्य संसृष्टत्वादस्तिसामानाधिकरण्याभावः । यदा त्वन्यपदार्थेन तद्वत्ता प्रतिपिपादयिषिता

उ०-तथा प्रयोगो विहितस्य तु नेत्याशयेन तदुक्तं—न संभवतीति । 'ताभ्या'मिति शेषः । कस्यापि तद्धितस्यान्यायेनोत्पत्त्यसंभवादव्यर्थं विशेषणमत आह—उत्सर्ग इति । विरोधाभावादिति । परदेशरोधकाभावादित्यर्थः । अण इति । इदमुपलक्षणमिञ इति बोध्यम् । सप्तपर्णशब्दे समासे द्वित्वाभावात्कथं वीप्सावगतिस्तत्राह—समासेन त्विति ।

ननु सर्वथोक्तार्थानामप्रयोग इति न्याये सति सूत्रारम्भानुपपादनात्किं यत्तावदिति ग्रन्थेनात आह—आरम्भवादीति । तथा च तन्न्याये फलाभावेन तन्न्यायसत्त्वे न मानमित्यभिमानः । भाष्ये—न चात्रास्तिनेति । वर्तिपदार्थानामन्यपदार्थेन संसृष्टत्वात्पृथक्त्वाभावेन बहिर्भूतास्तिसामानाधिकरण्याभाव इति भावः । यत्तु कैयटेनास्त्यर्थस्य तत्रैवान्यपदार्थे एवान्तर्भूतत्वादित्युक्तं तदनुपयुक्तं बहुव्रीहावस्त्यर्थान्तर्भावस्य मतुप्सूत्रे भाष्ये उक्तत्वात् । तत्र हि—तद्धितार्थद्विग्वपेक्षया पञ्चगुरित्यादौ बहुव्रीहेरन्तरङ्गत्वमुक्तं 'विशिष्टस्य षष्ठ्यर्थस्य तद्धितार्थत्वादस्त्यर्थोऽवश्यापेक्ष्यो द्विगुना । षष्ठ्यर्थमात्रापेक्षस्तु बहुव्रीहि' इति कैयटः । स्वार्थस्य संसृष्टत्वादिति । 'अन्यपदार्थेने'ति शेषः । स्वार्थो—वर्तिपदार्थः । अत्रोपसंक्रान्तत्वं

* गर्गादिभ्यो यञ्; अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४.१.१०५; १०४; यञञोश्च २.४.६४.
† प्राग्दीव्यतोऽण्; अत इञ् ४. १. ८३; ९५. ‡ नित्यवीप्सयोः ८. १. ४.
१—'अस्तिना' पा० । †† तदस्यास्त्यस्मिन्निति मतुप् ५. २. ९४.

न्याय्योत्पत्तिर्न भवतीति । 'समर्थानां प्रथमाद्वा [ ४. १. ८२ ] इति वर्तते न चैतत्समर्थानां प्रथमम् । किं तर्हि द्वितीयमर्थमुपसङ्क्रान्तम् ।

यदप्युच्यते 'सप्तपर्णः अष्टापदमिति समासेनोक्तत्वाद्वीप्साया द्विर्वचनं न भवती'ति । यदत्र वीप्सायुक्तं नादः प्रयुज्यते । किं पुनस्तत् ? पर्वणि पर्वणि सप्त पर्णान्यस्य । पङ्क्तौ पङ्क्तावष्टौ पदानीति ।

श्नम्बहुजकक्षु तर्हि । श्नम्—भिनत्ति छिनत्ति । श्नमोक्तत्वात्कर्तृत्वस्य कर्तरि शब्न भवति† । बहुच्—बहुकृतम् बहुभिन्नमिति । बहुचोक्तत्वादीषदसमाप्तेः कल्पबादयो न भवन्ति* । अकच्—उच्चकैः नीचकैरिति । अकचोक्तत्वात्कुत्सादीनां कादयो न भवन्ति‡ ।

ननु च श्नम्बहुजकचोऽपवादास्तेऽपवादत्वाद्बाधका भविष्यन्ति ।

**श्नम्बहुजकत्तु नानादेशत्वादुत्सर्गाप्रतिषेधः ॥ २ ॥**

समानदेशैरपवादैरुत्सर्गाणां बाधनं भवति नानादेशत्वान्न प्राप्नोति ।

प्र०–तदा चित्रगुमानिति भवत्येव ॥ न चैतदिति । 'समर्थानां प्रथमाद्वे'त्यधिकारादपत्यवद्वाचिनः षष्ठ्यन्तात्प्रत्ययेन भाव्यं न त्वपत्यवाचिनः । यञञोस्तु लुकि कृते प्रकृतिरेवापत्यार्थाभिधायिनीत्यण्न भवतीत्यर्थः ॥ यदत्रेति । वीप्स्यमानार्थाभिधायिनः पदस्य द्विर्वचनं विधीयते । पर्वार्थस्य वीप्सया योगो न चात्र पर्वशब्दस्य प्रयोगः ।

श्नमोक्तत्वादिति । 'भावकर्मकर्तारो विकरणार्था' इति पूर्वाचार्यदर्शनमाश्रित्यैवमुक्तम् ॥ अत्राप्यन्यथासिद्धिमाह—नन्विति । ततश्चोक्तत्वस्य दृष्टान्ताभावादहेतुत्वम् ।

नानादेशत्वादिति । विरोधो बाधकारणं न विशेषविधानमेव । वार्तिककारस्य

उ०–हेतुः । तच्च नियमेन विशेषणत्वम् ॥ भाष्ये 'द्वितीयमर्थमुपसंक्रान्त'मित्यस्य 'तस्यापत्य'मितिसूत्रस्थद्वितीयपदवाच्यमर्थमित्यर्थ इत्याशयेनाह—समर्थानामिति । न चात्रेति । 'सप्तपर्ण'शब्दस्तु तादृशे वृक्षविशेषे रूढ इति भावः । भाष्ये—पङ्क्तौ पङ्क्ताविति । 'अष्टापदं शारिफल'मित्यमरः ।

पूर्वाचार्येति । स्वमते तु विकरणा द्योतका इत्यभिमानः । वस्तुतो बहुजकचोरपि द्योतकत्वाद्द्योतकविषयेऽप्ययं न्यायः । द्योतकविषयेऽपि एकेन द्योतिते उक्तार्थानामिति न्यायेनापरद्योतकाभाव इति बोध्यम् ।

† रुधादिभ्यः श्नम्; कर्तरि शप् ३. १. ७८; ६८.

* विभाषा सुपो बहुच् पुरस्तात्तु; ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५. ३. ६८; ६७.

‡ अव्ययसर्वनाम्नामकच् प्राक् टेः; प्रागिवात् कः ५. ३. ७१; ७०.

किं पुनरिहाकर्तव्योऽनभिहिताधिकारः क्रियत आहोस्विदन्यत्र कर्तव्यो न क्रियते ? इहाकर्तव्यः क्रियते । एष एव हि न्याय्यः पक्षो यदभिहिते विहितं न स्यात् ।

**अनभिहितस्तु विभक्त्यर्थस्तस्मादनभिहितवचनम् ॥ ३ ॥**

प्र०—चेदं दर्शनम् । भाष्यकारस्तु विरोधाभावेऽपि विशेषविधानमात्रेणैव बाधकत्वमन्यत्रावोचत् । तक्रदानं च दधिदानस्य विरोधाभावेऽपि लोके बाधकं दृश्यते । तदेवं अमादिदृष्टान्तावष्टम्भेन हेतुत्वमुक्तत्वस्य व्यवस्थापितम् ।

इदानीमारम्भवादी पक्षान्तरमाश्रयिष्यामीति पृच्छति—किं पुनरिति । आहोस्विदन्यत्रेति । 'अपूपौ द्वा'वित्यभिहितेऽपि प्रत्ययेन द्वित्वे द्विशब्दस्य प्रयोगदर्शनात् अमादिभिरभिहिते शबादिनिवृत्त्यर्थः कर्तव्यः सन्न क्रियत इत्यर्थः । प्रत्याख्यानवाद्याह—इहाकर्तव्य इति । अपूपौ द्वावित्यादौ तु गतार्थस्यापि द्विशब्दस्य लोके प्रयोगो दृश्यते । अन्यस्य तु गतार्थस्य प्रयोगाभावः प्रयोजनाभावादेव सिद्धः ।

इदानीमेकत्वादीनां विभक्त्यर्थत्वमाश्रित्य सूत्रं समर्थयितुमाह—अनभिहितस्त्विति । 'कर्मणि द्वितीये'त्यादे'र्बहुषु बहुवचन'मित्यादिनैकवाक्यता । तत्र यदैकत्वादीनि विशेषणानि, कर्मादीनि विशेष्याणि, एकस्य यत्कर्म तत्र द्वितीयैकवचनमिति, तदा कर्म द्वितीयार्थः संपद्यते । तच्च यदा कृदादिभिरभिहितं भवति तदा गतार्थत्वाद् द्वितीयायाः प्राप्तिरेव नास्तीति नार्थोऽनभिहिताधिकारेण । यदा तु कर्मादीनां

उ०— भाष्यकारस्त्विति । 'येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवाद' इति लक्षणानुसारेण तक्रकौण्डिन्यन्यायमूलकेन सत्यपि सम्भवे बाधनमिति तद्भावः । तन्मतेऽप्ययं न्याय आवश्यकः । यथोक्तं 'समासेनाभिहितः सुजर्थ इति द्विदशा इत्यादौ सुज् ने'ति ।

इदानीमिति । दृष्टान्तानामन्यथासिद्धिपरिहारे जात इत्यर्थः । अन्यस्य त्विति । शास्त्रविहितस्येत्यर्थः । लौकिके प्रयोगे लाघवानादरादिति भावः । एवमेव व्यतिलुनीत इत्यत्रापि समावेशः । तत्र हि पूर्वमात्मनेपदं ततः स्पष्टं तत्प्रतीतये व्यतिप्रयोगोऽपि । अपूपावित्यत्र द्विवचनं तु विरुद्धविभक्त्यपेक्षयानुवादकविभक्तेन्यायसिद्धत्वात्कृतम् । भाष्ये—विहितं न स्यादिति । न भवितुमर्हतीत्यर्थः । 'अर्हे कृत्यतृचश्चे'ति चादर्हे लिङ् ।

एकत्वादीनामिति । संख्यावाक्यविभक्तिविधानयोरेकवाक्यत्वपक्षे एकत्वादीनां विशेष्यत्वमवलम्ब्येत्यर्थः । आदिना द्वित्वादि । तदाह—कर्मणीति । एकस्य यदिति । एकत्वस्याश्रयो यत्कर्मेत्यर्थः । 'द्व्येकयो'रिति षष्ठीति भावः । परे त्विदं चिन्त्यं, बहुष्वित्यत्र सप्तमीदर्शनेन द्व्येकयोरित्यस्यापि सप्तमीत्वौचित्यात् । तस्मात्प्रातिपदिकार्थस्यैकत्वे सति तद्गतकर्मत्वशक्तौ द्वितीयैकवचनमित्यर्थं उचितः । अयं च संख्यान्तं चतुष्कं प्रातिपदिकार्थं इति पक्षे । त्रिकपक्षे तु कर्मणि द्वितीया भवतीत्येवार्थोऽस्य सूत्रस्य, ततः कर्मण एकत्वे तदेकवचनमित्यर्थः संख्याबोधकस्य । इदमेवाभिप्रेत्याग्रे एतन्मते 'कर्मण एकत्वे' इत्यादिक्रमेणार्थं दर्शयिष्यति भगवानित्याहुः ॥ नार्थ इति । प्रधानार्थस्योक्तत्वेन विशेषणीभूतार्थानुक्तावपि

अनभिहितस्तु विभक्त्यर्थः । कः पुनर्विभक्त्यर्थः ? एकत्वादयो विभक्त्यर्थास्तेष्वनभिहितेषु कर्मादयोऽभिहिता विभक्तीनामुत्पत्तौ निमित्तत्वाय मा भूवन्निति । तस्मादनभिहितवचनम् । तस्मादनभिहिताधिकारः क्रियते ।

अवश्यं चैतदेवं विज्ञेयमेकत्वादयो विभक्त्यर्था इति ।

प्र०—विशेषणत्वमेकत्वादीनां विशेष्यत्वं, कर्मणो यदेकत्वादि तत्र द्वितीयेति तदैकत्वादयो विभक्त्यर्थाः संपद्यन्ते । ते चाभिहितेष्वपि कृदादिभिः कर्मादिष्वनभिहिता इति तदभिधानाय द्वितीयादीनां प्रसङ्गे तन्निवारणाय कर्तव्योऽनभिहिताधिकारः । 'कर्मणि द्वितीये'त्यादौ कर्मादीनां श्रुतत्वात्तेषामेव विभक्त्यर्थत्वेन भाव्यमिति मत्वा पृच्छति—कः पुनरिति । एकत्वादय इति । 'कर्मणि द्वितीये'त्यादिसप्तमीनिर्देश एकत्वाद्यपेक्षः—कर्मणि यदेकत्वादि तत्र द्वितीयेति न त्वभिधेयप्रतिपादनाय । निमित्तत्वायेति । कर्माद्याश्रितानामेकत्वादीनामपि विभक्त्यर्थत्वे पारम्पर्येण कर्मादीनां निमित्तभावोऽस्त्येवेत्यभिप्रायेणैतदुक्तम् ।

उ०—तेन न्यायेनातिप्रसङ्गविरहात्तन्मात्रबोधनस्य प्रथमया सिद्धत्वाच्चेति भावः । तदभिधानायेति । उक्तार्थानामिति न्यायस्तु प्रधानार्थविषय इति भावः । तेषामेवेति । तथा च संख्याया विभक्त्यर्थत्वमसम्भावितमिति भावः । सप्तमीनिर्देश इति ॥ ननु द्वितीयायाः सूत्रे श्रुतत्वात्तदपेक्षयैव सप्तमी उचिता न त्वेकत्वापेक्षया, किं च संख्यायाः प्रायेण विशेषणत्वस्यैव दृष्टत्वादेकत्वविशिष्टे कर्मणीत्येवार्थ उचित इति चेन्न, कारकस्य प्रातिपदिकार्थत्वेन तत्र विधानानुपयोगाच्छुद्धनियमार्थत्वापेक्षया एकत्वविशेषणतया विधित्वद्वारा आर्थनियमस्यापि सिद्धिरिति विधित्वाय तथैवान्वय उचित इत्याशयात् । तत्र पक्षे यथा प्रातिपदिकेनोक्ते द्वितीयादयो भवन्ति तथा तिङाद्यभिहितेऽपि स्युरित्येतदर्थं स आवश्यकः ॥ 'एकत्वादय' इत्यस्य ते एवेत्यर्थः । एवं च 'संख्यारहितं चतुष्कं प्रातिपदिकार्थं' इति पक्षे सूत्रमावश्यकमित्युक्तं भवति, तदितरपक्षेषु च न कर्तव्यमिति । पञ्चकपक्षेऽपि सूत्रमावश्यकमिति बहुष्वितिसूत्रे भाष्यकैयटयोः स्पष्टम् । पञ्चकपक्षे सुपां द्योतकत्वाद्वाचकद्योतकयोर्द्योतकयोश्च समुच्चयस्य दृष्टत्वादन्याभिहितेऽपि स्यादतः स आवश्यकः । वस्तुतस्तु 'एकत्वादयो विभक्त्यर्था' इत्यस्य सूत्रे प्राधान्येन विभक्तिद्योत्यत्वेन बोधिता इत्यर्थः । एवं 'कर्मादयो विभक्त्यर्था' इत्यस्यापि । यद्यपि द्योतकविषये क्वचिद् द्विर्बद्धं सुबद्धमिति न्यायेन समावेशो दृष्टस्तथापि प्रकृते लक्ष्यानुसारादुक्तार्थानामित्येवाश्रीयते । परन्त्वयं न्यायः सूत्रोक्तप्रधानविषय इति भावः । उक्तार्थानामिति न्यायस्य द्योतकविषयेऽपि सञ्चारो दृश्यते 'ऽधिपरी' इति सूत्रे भाष्ये । 'अपूर्वो द्वा'वित्यादौ व्यभिचारश्च तत्रैवोक्तः । ननु प्राधान्यादेकत्वादीनामेव निमित्तत्वं न कर्मादीनामत आह—कर्माद्याश्रितानामिति । मा भूवन्निताति । वाक्यसमाप्ताविति शब्दः ।

## अभिहिते प्रथमाभावः ॥ ४ ॥

यो हि मन्यते 'कर्मादयो विभक्त्यर्थास्तेष्वभिहितेषु सामर्थ्यान्मे विभक्तीनामुत्पत्तिर्न भविष्यती'ति प्रथमा* तस्य न प्राप्नोति । क्व ? वृक्षः प्लक्षः । किं कारणम् ? प्रातिपदिकेनोक्तः प्रातिपदिकार्थ इति ।

न क्वचित्प्रातिपदिकेनानुक्तः प्रातिपदिकार्थ उच्यते च प्रथमा सा वचनाद्भविष्यति ॥ तवैव तु खल्वेष दोषो यस्य त एकत्वादयो विभक्त्यर्था अभिहिते प्रथमाभाव इति । प्रथमा ते न प्राप्नोति । क्व ? पचत्योदनं देवदत्त इति । किं कारणम् ? तिङोक्ता एकत्वादय इति । अनभिहिताधिकारं च त्वं करोषि

प्र०- अभिहित इति । यदा वक्ष्यमाणानां कर्मादीनां विभक्त्यर्थत्वं तदा प्रातिपदिकार्थेनापि प्रथमार्थेन भाव्यं, तस्य च प्रातिपदिकेनैवोक्तत्वाद्वृक्ष इत्यादौ प्रथमा न प्राप्नोति । एकत्वादीनां तु विभक्त्यर्थत्वे तदभिधानाय प्रथमा प्रवर्तत एवेति दोषाभावः ।

प्रत्याख्यानवाद्याह—न क्वचिदिति । वचनसामर्थ्यात्प्रातिपदिकेनोक्तेऽपि तदर्थे प्रथमा भविष्यति । द्वितीयादयस्त्वनभिहिते कर्मादौ सावकाशत्वादभिहिते न भविष्यन्ति । तिङोक्ता इति । अनभिहितैकत्वाद्यभिधानाय तव विभक्तिविधानम् । पच-

उ०- भाष्ये—तेष्वभिहितेषु सामर्थ्यादिति । सामर्थ्यमन्त्रोक्तार्थनामप्रयोगरूपम् । स्वपक्षे नायं दोष इत्याह—एकत्वादीनां त्विति ।

द्वितीयादिषु वैषम्यं दर्शयति—द्वितीयादयस्त्विति । अनभिहितैकत्वाद्यभिधानयेति । प्रातिपदिकार्थसूत्रे उपस्थितानभिहित इत्यस्य प्रातिपदिकार्थविशेषणत्वासम्भवेनैकत्वादिविशेषणत्वमिति भावः । कर्तुरेकत्वमिति । येऽपि क्रियायामेव तिङ्वाच्यकारकगतसंख्यामारोप्य तत्रैव तिङर्थसंख्यान्वय इति वदन्ति, तेषामपि आरोपमूलतया सोक्तप्रायैवेति बोध्यम् । अन्यथा तिङर्थाश्रयगताया उक्तत्वेऽपि चैत्रत्वविशिष्टरूपनामार्थगताया अनुक्तत्वेन तदसङ्गतिरेव स्यात् । न च क्रियायाः स्वत एकत्वेन तदारोपानपेक्षत्वेन कर्तृगतैकत्वस्य कथमुक्तत्वम् । तस्यापि साधने द्वित्वाद्यभावबुद्धिनिमित्तके तदनारोपे सत्त्वात् । अन्यथा 'पचत' इत्यादौ द्विवचनाद्यनापत्तिः । मम तु आरोपितयाप्युत्तरसंख्यया पूर्वसंख्याया बाधान्न दोषः । आवृत्तिगतसंख्यारोपेण सहस्रदक्षिणत्वादिवत् । एवं च द्वित्वाद्यभावबुद्धौ द्रव्यस्य निःसंख्यस्वाभावेन साधने एकत्वमवगतमेवेति भाष्याशयात् ॥ ननु तिङ्सुपोर्युग-

१—इदं भाष्यमिति केचित् ।

* प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २. ३. ४६.

परिगणनं च ।

न क्वचित्तिङैकत्वादीनामनभिधानमुच्यते च प्रथमा सा वचनाद्भविष्यति । ननु चेहानभिधानं 'वृक्षः प्लक्ष' इति । अत्राप्यभिधानमस्ति । कथम् ? वक्ष्यत्येतत्—'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ती'ति† । वृक्षः प्लक्षः । 'अस्ती'ति गम्यते ।

तवैव तु खल्वेष दोषो यस्य ते कर्मादयो विभक्त्यर्था अभिहिते प्रथमाभाव इति । प्रथमा ते प्राप्नोति । क्व ? 'कटं करोति भीष्ममुदारं शोभनं दर्शनीय'मिति । कटशब्दादुत्पद्यमानया द्वितीययाभिहितं कर्मेति कृत्वा भीष्मादिभ्यो द्वितीया न प्राप्नोति । का तर्हि प्राप्नोति ? प्रथमा । तद्यथा—'कृतः

प्र०-तीति च कर्तुरेकत्वं तिङाभिहितमिति प्रथमा न स्यादित्यर्थः । परिगणनं चेति । तिङ्कृत्तद्धितसमासैरित्येतत् । अत्र च तिङास्त्वेकत्वस्याभिधानमिति प्रथमाया अप्रसङ्गः ।

आरम्भवाद्याह—न क्वचिदिति । सर्वत्र च पदमपेक्षितक्रियापदमेव प्रयुज्यते । उच्यते चेति । प्रातिपदिकार्थसूत्रेणेत्यर्थः । भवन्तीपर इति । लट्पर इत्यर्थः । ततश्च 'वृक्ष' इत्यत्रापि तिङैकत्वस्याभिधानादनवकाशत्वात्तिङाभिहितेऽप्येकत्वादौ प्रथमा भवति ।

एवमारम्भवादी स्वपक्षे दोषं परिहृत्य परपक्षे समुद्भावयति—तवैवेति । भीष्ममिति । भीष्मादिविशेषणविशिष्टस्य कटस्य करोतिक्रिययेप्सिततमत्वात्कर्मत्वं, तच्च कटशब्दादुत्पन्नया द्वितीययाभिहितमिति भीष्मादिभ्यो द्वितीयाया अप्रसङ्गात्प्रथमा प्राप्नोति । आरम्भवादिनस्तु परिगणनारम्भात् कटशब्दादुत्पन्नया द्वितीययाभिहितेऽपि कर्मणि भीष्मादिभ्यो द्वितीया सिध्यतीति न दोषः ।

उ०-पदप्रवृत्तेर्वक्तुं शक्यत्वेन 'तिङोक्ता' इत्यसङ्गतमत आह भाष्ये-परिगणनं चेति । तथा च तिङ्कृदित्यादिपरिगणनबोधितापवादविषयपर्यालोचनया तिङुत्पत्तिपर्यन्तं सुप्प्रतीक्षत इत्यर्थः ।

'अस्तिर्भवन्तीपर' इत्यस्य न्यायसिद्धत्वमाह-सर्वत्र चेति । द्व्येकयोरिति सूत्रस्यान्यत्र सावकाशत्वात्सामर्थ्यासिद्धिमाशङ्क्याह—प्रातिपदिकार्थसूत्रेणेति । 'अभिहिते प्रथमाभाव' इति भाष्यस्याभिहिते प्रथमाया भावस्य प्रवृत्तेस्त्वयाङ्गीकारादित्यर्थः ।

भीष्मादीनामपि कर्मत्वात्कथं प्रथमाप्राप्तिरत आह—विशेषणविशिष्टस्य कटस्येति । प्रधानगतकर्मत्वोक्तौ विशिष्टगतमपि तदुक्तमेव, विशिष्टस्य तदपेक्षयातिरिक्तत्वाभावादिति शङ्कितुरभिमानः । आरम्भे दोषाभावमाह—आरम्भवादिनस्त्विति ।

† २. ३. १. वा० ११.

कटो भीष्म उदारः शोभनो दर्शनीय' इति करोतेरुत्पद्यमानेन क्तेनाभिहितं कर्मेति कृत्वा भीष्मादिभ्यो द्वितीया न भवति । का तर्हि ? प्रथमा भवति ।

नैष दोषः । न हि ममानभिहिताधिकारोऽस्ति नापि परिगणनम् । सामर्थ्यान्मे विभक्तीनामुत्पत्तिर्भविष्यत्यस्ति च सामर्थ्यम् । किम् ? कर्मविशेषो वक्तव्यः ।

अथवा कटेऽपि कर्म भीष्मादयोऽपि तत्र 'कर्मणी'त्येव सिद्धम् ।

प्र०- कर्मविशेष इति । भीष्मादियुक्तकटसंबन्धि कर्मत्वं प्रतिपाद्यम् । तत्र च यथा कटशब्देन भीष्मत्वादीनामनभिधानात्तदभिधानाय भीष्मादिशब्दप्रयोगस्तथा द्वितीयापि तेभ्यो भविष्यति । न ह्यन्यथा तद्विशिष्टत्वं कटस्य प्रत्याययितुं शक्यते ।

अथवेति । यद्यत्करोतिक्रिययाप्तुमिष्टतमं तत्सर्वं कर्म द्रव्यं गुणाश्च । न ह्यसौ कटमात्रेण संतुष्यति । तत्र करोतिक्रियायां पृथक्सर्वेषां कर्मत्वे प्रत्येकं द्वितीयोत्पत्तिः, पश्चात्त्वेकवाक्यतया विशेषणविशेष्यभावः ।

यद्यपि गुणद्रव्ययोः करोतिना संबन्धस्तथापि तमप्श्रुत्या प्रकर्षस्याश्रितत्वाद् द्रव्यस्यैव क्रियान्तर उपयोक्ष्यमाणत्वादीप्सिततमत्वात्तस्यैव कर्मसंज्ञा, न गुणस्येति

उ०- भाष्ये—सामर्थ्यादिति । भीष्मादिपदानामपि द्वितीयोत्पादकसामर्थ्यसत्त्वादित्यर्थः । विशिष्टस्य कर्मत्वे विशेषणस्यापि द्वितीयोत्पादककर्मत्वशक्तिरूपसामर्थ्यवत्त्वम् । अन्यथा विशिष्टं कर्मेत्युक्तिव्याघातः । तच्च न कटपदोत्तरद्वितीययाभिहितमिति भावः । तदाह—तत्र च यथेत्यादिना । विशिष्टगतैककर्मत्वप्रतिपादनेच्छायामयं प्रयोगः, तत्प्रतिपादनं च नोभयत्र द्वितीयां विनेति भावः । अत्र पक्षे भीष्मपदात्कर्मत्वाद्यनालिङ्गितशुद्धगुणस्यैवोपस्थितिरितरस्य तद्वैशिष्ट्यप्रतीतौ पश्चाद्विशिष्टस्यैककर्मत्वशक्तिमत्तयोपस्थितिः । तथोपस्थितौ च भीष्माद्युत्तरद्वितीयापि सहकारिणीति तात्पर्यम् । तदाह—न ह्यन्यथेति । 'तद्विशिष्टत्वं कटस्ये'त्यनन्तरं 'विशिष्टस्य कर्मत्वं चे'ति शेषः । यथा कटं करोतीत्यत्र विशिष्टकर्मत्वं न प्रतीयते । एवं 'भीष्मः कटं करोती'त्यत्रापि विभिन्नविभक्तित्वाद्विशिष्टाप्रतीत्या तन्न प्रतीयत इति भावः ।

पश्चादिति । तथा च न विशिष्टस्य कर्मत्वं किं तु क्रियायां कर्मत्वेनान्वितयोर्मनसा विशेषणविशेष्यभावबोध इति भाव इत्येके । परे तु साक्षात्फलाश्रयादेरिव द्रव्यद्वारा फलाश्रयादेरपि कर्मत्वादिकम् । एवं च भीष्मस्यापि पृथक्कर्मशक्तिविशिष्टस्यैव बोधनं भीष्मपदात् । द्रव्येणाभेदान्वयात्तु तस्याः शक्तेर्वाक्यार्थबोधे विशिष्याग्रहः, भीष्मकटयोर्बोधश्च विशेषण विशेष्यभावेनैव । 'कारकाणां भावनान्वय' इत्यस्य च साक्षात्स्वशक्तिनियामकाश्रयद्वारा वेत्यर्थान्न तद्विरोधः । तदेव ध्वनयन्कैयट आह—

'क्रियायां पृथक् सर्वेषां कर्मत्वे प्रत्येकं द्वितीयोत्पत्तिः । पश्चात्त्वेकवाक्यतया विशे-

अथवा कट एव कर्म तत्सामानाधिकरण्याद्भीष्मादिभ्यो द्वितीया भविष्यति। अस्ति खल्वपि विशेषः 'कटं करोति भीष्ममुदारं शोभनं दर्शनीय'मिति च, 'कृतः कटो भीष्म उदारः शोभनो दर्शनीय' इति च। करोतेरुत्पद्यमानः क्तोऽनवयवेन सर्वं कर्माभिधत्ते, कटशब्दात्पुनरुत्पद्यमानया द्वितीयया यत्कटस्थं कर्म तच्छक्यमभिधातुं न हि कर्मविशेषः।

---

प्र०-मत्वाह—अथवेति। तत्सामानाधिकरण्यादिति। भीष्मादीनां स्वयमकर्मत्वेऽपि विशेष्यसंबन्धिन्यैव विभक्त्या भाव्यम्। तदेकयोगक्षेमत्वात्। केवलानां च प्रातिपदिकानां 'परश्चे'ति नियमादप्रयोगार्हत्वात्। ततो यथेश्वरसुहृदः स्वयं निर्धना अपि तदीयेन धनेन तत्फलभाज एवं गुणा अपि।

क्तप्रत्ययेन द्वितीयाया वैधर्म्यं दर्शयति—अस्ति खल्वपीति। अनवयवेनेति। साकल्येन। सर्वमिति। भीष्मादिगुणगतमपीत्यर्थः। कटस्थमिति। प्रातिपदिकार्थगताया एव कर्मशक्तेर्वाचिका द्वितीयेत्यर्थः। न कर्मविशेष इति। भीष्मादिगुणगतं कर्मत्वमभिधातुं न शक्यमित्यर्थः।

---

उ०-षणविशेष्यभाव' इति। पश्चादित्यस्य द्वितीयोत्पत्त्यनन्तरमित्यर्थः। अक्षरस्वारस्यात्। 'पृथक्सर्वेषां कर्मत्वे' इत्यस्य च 'साक्षात्परम्परया वे'ति शेषः। 'द्रव्यगुणयोः करोतिना संबन्ध' इत्यत्रापि स एव शेषः पूरणीयः। संबन्धश्च तदर्थफलाश्रयत्वरूपः। एतेनात्र पक्षे प्रथमं सर्वेषां भावनान्वयः पश्चात्पार्ष्णिकः परस्परं मनसा विशेषणविशेष्यभावबोध इति परास्तम्॥ ज्ञानद्वयकल्पनागौरवाच्चाननुभवाच्च। एकवाक्यतयेति कैयटेन शाब्दस्यैव विशेष्यविशेषणभावस्य स्वीकाराच्चेत्याहुः।

क्रियान्तरे—तद्विशेषे आसनशयनादिरूपे। ईप्सिततमत्वादिति। साक्षात् क्रियान्वय्येव हीप्सिततमम्। एवं करणसंज्ञापि साधनतमत्वाद् द्रव्यस्यैवेत्यादि बोध्यम्। परंत्विदं चिन्त्यम्, 'अश्वेन पथा दीपिकया व्रजती'त्यादौ सर्वेषां करणत्वानापत्त्या कारकान्तरापेक्षयैव प्रकर्षो न तु स्वकक्षायामपीति स्वयमेवोक्तत्वात्। 'गां पयो दोग्धी'त्याकडारसूत्रभाष्यासङ्गतेश्चेति दिक्।

अथवेति। सामानाधिकरण्यं नाम अनेकस्य पदस्य विशेष्यतयैकार्थबोधकत्वं, यदि भिन्नशक्तिकत्वं स्यात्तदा शक्तिभेदेनार्थस्यापि भेदादेकार्थत्वं भज्येत। तस्माद्विशेष्यसमानशक्तिकत्वं तदभिन्नविशेषणानामिति नियमात्तत्समानविभक्तिकत्वमेव। फलाश्रयत्वादिवत्तत्समानाधिकरणत्वमपि विभक्त्युत्पत्तौ नियामकमिति तदुपपादयति—ततो यथेति। यथा मैत्रीभङ्गभिया सधनो निर्धनस्य स्वधनेन स्वसमानवासोऽलङ्कारादीन् करोति एवं सामानाधिकरण्यभङ्गभिया स्वशक्तिं तत्रारोप्य स्वसमानविभक्तिकत्वं संपादयतीति भावः।

नन्वेवमेव 'कृतः कट' इत्यादावपि भीष्मादिभ्यो द्वितीया स्यादत आह भाष्ये—अस्ति खल्वपीति। भीष्मादिगुणगतमित्यस्य तद्गुणविशिष्टगतमित्यर्थः। गुणगतं कर्मत्वमिति।

तवैव तु खल्वेष दोषो यस्य त एकत्वादयो विभक्त्यर्था अभिहिते प्रथमा-भाव इति । प्रथमा ते न प्राप्नोति । क्व ? एकः द्वौ बहव इति । किं कारणम् ? प्रातिपदिकेनोक्ता एकत्वादय इति ।

कर्मादिष्वपि वै विभक्त्यर्थेष्ववश्यमेकत्वादयो निमित्तत्वेनोपादेयाः—कर्मण एकत्वे कर्मणो द्वित्वे कर्मणो बहुत्व इति । न चैकत्वादीनामेकत्वादयः सन्ति । अथ सन्ति, ममापि सन्ति । तेष्वनभिहितेषु प्रथमा भविष्यति ।

प्र०— एवं युक्त्या प्रत्यख्यानवादी स्वपक्षे दोषं परिहृत्य परपक्षे दूषणमाह—तवैवेति । एष दोष इति । वक्ष्यमाणः । प्रातिपदिकेनोक्ता इति । अनभिहितैकत्वाद्यभिधानाय तव विभक्तिविधानं, तानि चैकादिभिरेवोक्तानीति प्रथमाया अप्राप्तिः ।

आरम्भवादी परस्य तुल्यदोषतामाह—कर्मादिष्वपीति । यस्यापि कर्मादयो विभक्त्यर्थास्तेनाप्येकवाक्यता 'बहुषु बहुवचन'मित्यादेः 'कर्मणि द्वितीये'त्यादीनां चाभ्युपगन्तव्या । गुणप्रधानभाव एव तु तस्य विपरीतः । तत्र प्रातिपदिकार्थगतैक-त्वादिविशिष्टे कर्मणि द्वितीयेत्येवामादेर्वाक्यार्थस्तस्य संपद्यते । कर्मण एकत्वे इति । नन्वेकत्वादीनां विशेषणत्वमभिधानीयं कर्मादीनां च विशेष्यत्वं तत्र कस्मात्कर्मणो विशेषणत्वं प्रतिपाद्यते । नैष दोषः । प्रातिपदिकार्थस्यैकत्वे सति तद्विशिष्टस्य कर्मणो वाचिका द्वितीयेत्ययमत्रार्थो विवक्षितः । ततश्च प्रातिपदिकार्थव्यतिरेकेणान्येषामेकत्वा-दीनां विशेषणीभूतानामभावादेक इत्यादौ भवतोऽपि प्रथमा न स्यादित्यर्थः । अथ सन्तीति । व्यतिरिक्तानीत्यर्थः । तदुक्तं हरिणा—

उ०—भाष्ये कर्मशब्दः शक्तिपर इति भावः । अयं भावः—क्तस्य धातोरुत्पत्त्या प्रकृतिगतकर्मा-भावादन्यगते तत्राभिधातव्ये यद्यत्प्रकृतिवाच्यक्रियानिरूपितकर्मत्वशक्तिमत्तत्सर्वंगता साभि-धीयत इति युक्तम् । द्वितीयायाः प्रातिपदिकादुत्पत्त्या स्वप्रकृतिभूतप्रातिपदिकार्थकर्मत्व-लाभात्तदेव बोध्यं नान्यदिति ।

'भीष्मं कट'मित्यादौ आरम्भवादे पूर्वोक्तप्रथमाप्राप्तिरूपदोषाभावादेष इत्यनुपपन्नमत आह—वक्ष्यमाण इति । तिङभिहिते वचनसामर्थ्याद्दोषपरिहारेऽपि प्रकृत्यभिहिते दोषः, तथानभिहितैकत्वादिके वृक्ष इत्यादौ तस्याश्चारितार्थ्यादित्याह—अनभिहितैकत्वादीति । 'एकं पश्ये'त्यादौ द्वितीया तु कर्मणोऽनभिहितत्वादेकत्वे उक्तेऽपि भविष्यतीति मत्वा प्रथमा-भावापत्तिरेव कृता ।

ननु कर्मादीनां विभक्त्यर्थत्वे एकत्वादीनां निमित्तत्वं कथमतस्तदुपपादयति—यस्या-पीति । प्रातिपदिकार्थगतैकत्वादिविशिष्टे कर्मणीति । सामानाधिकरण्यसम्बन्धेनैकत्व-विशिष्टकर्मशक्तावित्यर्थः । वाचिकेति । बोधिकेत्यर्थः । द्योतकत्वपक्षस्यैवोचितत्वात्, एक-त्वादीनां विशेषणतयैव भानात् । एवं चैकत्वविशिष्टे प्रातिपदिकार्थे प्रथमेत्यर्थे तदपेक्षयाति-रिक्तं यत्रैकत्वं वृक्ष इत्यादौ तत्रैव स्यान्न त्वेक इत्यादावित्याह—ततश्चेति । 'उक्तार्थाना'-मित्यत्र प्रधानार्थविषयत्वादेकत्वे उक्तेऽपि प्रधानकर्माभिधानाय द्वितीयादीनामेतन्मतेऽपि सिद्धिरिति तदनापत्तिर्नाकारि । एतद्भाष्यं हरिणाप्यवमेव व्याख्यातमित्याह—तदुक्तमिति ।

अथवोभयवचना ह्येते। द्रव्यं चाहुर्गुणं च। यत्स्थोऽसौ गुणस्तस्यानुक्ता एकत्वादय इति कृत्वा प्रथमा भविष्यति।

अथवा संख्या नामेयं परप्रधाना। संख्येयमनया विशेष्यम्। यदि चात्र प्रथमा न स्यात् संख्येयमविशेषितं स्यात्'॥ अथवा वक्ष्यति तत्र वचनग्रहणस्य प्रयोजन'मुक्तेष्वप्येकत्वादिषु प्रथमा यथा स्या'दिति*।

अथवा समयाद्भविष्यति†। यदि सामयिकी न नियोगतोऽन्याः कस्मान्न

प्र०— निमित्तमेक इत्यत्र विभक्त्या नाभिधीयते।
तद्गतस्तु यदेकत्वं विभक्तिस्तत्र वर्तते'॥ इति।

यथा शतमित्यत्र प्रवृत्तिनिमित्तं शतसंख्यान्या, अन्या च विभक्तिवाच्या प्रातिपदिकार्थगतैकत्वसंख्या, तथैक इत्यत्रापि प्रवृत्तिनिमित्तविभक्तिवाच्ये द्वे एकत्वे।

एवं शब्दशक्त्याश्रयेणैकत्वादिभेदेनैव समाधायाभेदपक्षेऽपि समाधातुमाह—अथवेति। गुणोपसर्जनं द्रव्यं प्रातिपदिकेनाभिधीयते। द्रव्योपसर्जनस्तु गुणो विभक्त्यर्थः। यथा शौक्ल्यमिति गुणोपसर्जनद्रव्याभिधायिनः शुक्लशब्दाद् द्रव्योपसर्जने तस्मिन्नेव गुणे भावप्रत्ययः। यत्स्थोऽसाविति। यस्मिन्नेव द्रव्ये स्थित एकत्वादिगुणस्तस्य द्रव्यस्यानुक्ता एकत्वादयः प्राधान्येनेति भावः। संख्येयमविशेषितमिति। केवलस्य प्रातिपदिकस्य प्रयोगाभावात्प्रथमाया अभावे एकादिशब्दानुच्चारणात्।

एवं युक्त्या प्रथमोत्पत्तिं प्रतिपाद्य वचनेन प्रतिपादयितुमाह—अथवेति। समयादिति। 'परश्चे'त्यस्मात्प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या न केवलेत्येवंरूपादित्यर्थः।

उ०—निमित्तम्—प्रवृत्तिनिमित्तम्। द्वे एकत्वे इति। द्वयोरपि तयोर्ब्राह्मणौ द्वावित्यादाविवैकरूपेणैव भानान्न बोधावृत्त्यनुभवविरोधौ।

इयं च कल्पना शब्दशक्त्याश्रयेत्याह—एवं शब्देति। अत्रापि पक्षे प्रातिपदिकेनैकत्वविशिष्टद्रव्याभिधानाद्दोषस्तदवस्थोऽत आह—गुणोपसर्जनमिति। द्रव्योपसर्जन इति। गुणगुणिनोरभेदाच्चैकः पट इति सामानाधिकरण्यम्।

ननु प्रातिपदिकस्यैकत्वादिविशिष्टे शक्त्या तेनैव द्रव्यं विशेषयितुं शक्यं, किं तत्र विभक्त्येत्यत आह—केवलस्येति। अयं भावः—वृद्धव्यवहाराच्छक्तिग्रहः वृद्धव्यवहारश्च विभक्त्यन्तेनैवेति विभक्तिसमभिव्याहृते गृहीतायाः शक्तेस्तदभावेऽनुद्बोधात्पदार्थानुपस्थित्या संख्येयमविशेषितम्। एवं च पदार्थोपस्थित्यन्यथानुपपत्त्याभिहितेऽपि विभक्त्युत्पत्तिरिति। लोकव्यवहारे प्रयुज्यमानानामेव साधूनां साधुत्वाम्वाख्यायकमिदं शास्त्रमिति वृद्धव्यवहारे एव किं मूलमिति न शङ्क्यम्।

भाष्ये—न नियोगत इति। न नियमत इत्यर्थः। प्रातिपदिकार्थस्याशेषत्वात्कथं तत्र

* २. ३. ४६. भाष्ये। † ३. १. २. भा० ११.

भवन्ति ? कर्मादीनामभावात् ॥ षष्ठी तर्हि प्राप्नोति । शेषलक्षणा† षष्ठ्यशेषत्वान्न भविष्यति ।

एवमपि व्यतिकरः प्राप्नोति । एकस्मिन्नपि द्विवचनबहुवचने प्राप्नुतः । द्वयोरप्येकवचनबहुवचने प्राप्नुतः । बहुष्वप्येकवचनद्विवचने प्राप्नुतः । अर्थतो व्यवस्था भविष्यति ।

परिगणनं कर्तव्यम् ।

## तिङ्कृत्तद्धितसमासैः परिसंख्यानम् ॥ ५ ॥

तिङ्कृत्तद्धितसमासैः परिसंख्यानं कर्तव्यम् । तिङ्—क्रियते कटः । कृत्—

प्र०—कर्मादीनामिति । 'कर्मण्येव द्वितीये'त्येवं द्वितीयादीनां नियतत्वात् । षष्ठी तर्हीति । कर्माद्यभावः शेष इति भावः । अशेषत्वादिति । प्रातिपदिकार्थस्य प्रथमाविधावुपयोगात्तस्य चाऽव्यतिरिक्तस्येह सद्भावात् ।

अर्थतो व्यवस्थेति । सामर्थ्यादित्यर्थः । 'एक' इत्यत्रैकमेवैकत्वं तच्च प्रातिपदिकेनाभिहितमित्यप्राप्ता प्रथमा समयवशेन प्राप्यते । तत्र यथा समयश्च पालितो भवत्येकत्वानुगुणं चान्यत्र तदभिधाने दृष्टसामर्थ्यं वचनं भवति, तथा कर्तव्यमित्यर्थः । तदेवं संख्या विभक्त्यर्था इति दर्शनाश्रयेण सूत्रं स्थापितम् ।

उ०—षष्ठीत्यत आह—कर्मादीति । तावन्मात्रमेव शेष इत्यभिमानः । अव्यतिरिक्तस्येति । अतिरिक्तेन विशिष्टो व्यतिरिक्तस्तदभिन्नस्येत्यक्षरार्थः । एवं च 'कारकप्रातिदिकार्थव्यतिरिक्तः शेष' इति नात्र षष्ठी तदतिरिक्तस्य कस्याप्यप्रतीतेरिति भावः ।

अर्थाभावेऽपि समयपरिपालनाय विभक्तौ कथमर्थतो व्यवस्थेत्यत आह—सामर्थ्यादिति । तदेवोपपादयति-एक इत्यत्रेति । विरुद्धविभक्त्यपेक्षयानुवादकविभक्तिर्न्याय्येति भावः । पक्षद्वयेऽपि दोषाभावप्रतिपादनात्सङ्ख्या सुबर्थ इति दर्शने सूत्रं कार्यं दर्शनान्तरे नेति स्थितम् । तत्रारम्भपक्षे परिगणनाद्धिप्रवृत्तिं बोधयितुमाह—तदेवमिति । संख्या विभक्त्यर्थ इति । सूत्रे प्राधान्यात्तस्या विभक्तिद्योत्यता, कारकं तु तद्विशेषणत्वेन तथेति दर्शनमित्यर्थः ।

भाष्ये—तिङ्-क्रियते कट इति । न चात्र सङ्ख्याकारकयोरुभयोरप्युक्तेः 'संख्या विभक्त्यर्थ' इति पक्षेऽपि नेदमनभिहिताधिकारप्रयोजनमिति तिङ्ग्रहणं व्यर्थमिति वाच्यम् । सङ्ख्यायाः क्रियायामेवान्वयेन कारकगतसङ्ख्याया: शब्देनानभिधानादित्याशयः । एवं च 'पचत्योदनं देवदत्त' इत्यादौ 'तिङोक्ता एकत्वादय' इति प्रथमा न प्राप्नोतीति पूर्वोक्तभाष्य-

† षष्ठी शेषे २. ३. ५०.

कृतः कटः । तद्धित—औपगवः कापटवः । समास—चित्रगुः शबलगुः ।

**उत्सर्गे हि प्रातिपदिकसामानाधिकरण्ये विभक्तिवचनम् ॥ ६ ॥**

उत्सर्गे हि प्रातिपदिकसामानाधिकरण्ये विभक्तिर्वक्तव्या । क ? कटं करोति भीष्ममुदारं शोभनं दर्शनीयमिति । कटशब्दादुत्पद्यमानया द्वितीयया-

---

प्र०— औपगव इति । अपत्यापत्यवत्संबन्धस्य तद्धिते[1]नोक्तत्वात्षष्ठी न भवति । चित्रगुरिति । समासेन स्वस्वामिसंबन्धस्याभिधानात्षष्ठ्यभावः ।

उत्सर्ग इति । अनभिहित इति सामान्येनोच्यमान इत्यर्थः । यत्र बहूनि प्रातिपदिकानि समानाधिकरणानि विवक्षितानि तत्रैकयोगक्षेमत्वादेकत उत्पन्नया द्वितीयया

---

उ०- मेकदेशयुक्तिरिति यथाकथंचिद् व्याख्येयमिति सूचितम् । तिङ्कृतोरिव तद्धितसमासयोः कस्मिंश्चिद्विभक्त्यर्थेऽविधानादाह—अपत्यापत्यवदिति । तद्धितोक्तत्वादिति । तद्धितान्तोक्तत्वादित्यर्थः । नन्वेतयोः संबन्धस्य प्रातिपदिकार्थत्वेनाशेषत्वान्न षष्ठीप्राप्तिः । कारकप्रातिपदिकार्थव्यतिरिक्तो हि तत्र शेषः । न च कर्मादिव्यतिरिक्त एव शेष इत्याशयेनैते उदाहरणे । यद्वा संबन्धो न प्रातिपदिकार्थः, प्रवृत्तिनिमित्ततदाश्रयभिन्नत्वादिति वाच्यम्, घटपदाद्घटघटत्वयोः संबन्धस्य भानेन तत्र षष्ठ्या दुर्वारतापत्तेः । तत्र हि नैतदन्यतमेनाभिधानमिति चेत्सत्यम्, वाक्येऽस्य संबन्धस्य षष्ठ्यर्थत्वं दृष्ट्वात्राप्यप्रातिपदिकार्थत्वमित्यभिमानात् । किं च 'का तर्हि स्यात् ? शेषलक्षणा षष्ठी, अशेषत्वान्न, समयाच्च द्वितीयैवे'त्यग्रिमग्रन्थेन 'कटं भीष्म'मित्यादावभिहितत्वादप्राप्तद्वितीयासाधनार्थं परिगणनमित्येतत्खण्डनपरेण परिगणनप्रत्याख्यानवदेतयोरुदाहरणत्वाभावस्यापि कथनेन तद्धितसमासोदाहरणमधिकमित्यर्थस्यापि कथनात् । 'अनेकमन्यपदार्थे' इति सूत्रे भाष्येऽप्यनयोरनुदाहरणत्वं सूचितम् । न च शतेन क्रीतः शत्यः, प्राप्तमुदकं यं प्राप्तोदक इत्यादि तद्धितसमासोदाहरणमिति वाच्यम् । 'प्राप्तोदक' इत्यादौ प्राप्तोदककर्मेत्यादिप्रकारेणैव बोधः । तत्र विशेष्ये तन्निरूपकत्वबाधेन विशेषणमादाय तात्पर्यावसानमिति द्वितीयादिप्रयोजककर्मत्वादेः शब्दादबोधेन द्वितीयाद्यप्राप्तेः । एवं च विशेषणत्वव्यत्यासोऽपि न । उपजीव्यस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य च न बाधः । 'चित्रगु'रित्यादौ चित्राणां गवामयमित्यादौ यथा तस्य षष्ठीप्रयोजकता तथात्रापि स्यात् तेनैव रूपेण भानादिति बोध्यम् । एवं यथा क्रीतशब्दे धातुना क्रियोपस्थाप्यते न तेन रूपेण शत्यशब्देनेति न तदर्थे इतरकारकान्वयः । इदं च 'कर्तृकर्मणो'रित्यत्र भाष्ये ध्वनितम् । अतो न तदर्थकर्मणो विभक्तिप्राप्तियोग्यता । एवं च सांप्रतमित्यादिनिपातैरपि न तेन रूपेण क्रियायाः कारकस्य चोक्तिरिति न तदन्वयिनि विभक्तिप्रसक्तिः । अतो निपातेनाभिहितत्वाद्विभक्त्यनुत्पत्तिरित्यपि चिन्त्यमेव । 'नारद इत्यबोधि स' इत्यत्रापि 'नारद इती'त्यनेन श्रीकृष्णीयज्ञानाकारानुवादात्तत्र न द्वितीयादिप्रसक्तिरित्यलम् । परिगणनफलमाह भाष्ये—उत्सर्गे हीति । तद्व्याचष्टे—सामान्येनेति । एकयोगक्षेमत्वादिति । एकार्थबोध-

---

1—'तद्धितोक्तत्वा'दित्युद्द्योतसम्मतः पाठः ।

भिहितं कर्मेति कृत्वा भीष्मादिभ्यो द्वितीया न प्राप्नोति ॥ का तर्हि स्यात् ? षष्ठी । शेषलक्षणा षष्ठ्यशेषत्वान्न भविष्यति ॥ अन्या अपि न प्राप्नुवन्ति । किं कारणम् ? कर्मादीनामभावात् ॥ समयश्च कृतो 'न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्यय' इति न चान्या उत्पद्यमाना एतमभिसंबन्धमुत्सहन्ते वक्तुमिति कृत्वा द्वितीया भविष्यति ।

अथवा कटोऽपि कर्म भीष्मादयोऽपि तत्र 'कर्मणी'त्येव सिद्धम् । अथवा कट एव कर्म तत्सामानाधिकरण्याद्भीष्मादिभ्यो द्वितीया भविष्यति ॥ तस्मान्नार्थः परिगणनेन ।

**द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहिते विभक्त्यभावप्रसङ्गः ॥७॥**

द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहिते विभक्तिर्न प्राप्नोति । क्व ? प्रासाद

---

प्र०–सर्वप्रातिपदिकार्थगतं कर्मत्वमभिहितमित्यन्येभ्यो द्वितीया न स्यात् ।

परिगणनमन्तरेणाप्येतं दोषं परिहर्तुं पृच्छति—का तर्हीति ।

'अनभिहित' इति पर्युदासे प्रसज्यप्रतिषेधे च दोषदर्शनात्तन्निराकरणायादोषोद्भावनं कर्तुमाह—द्वयोरिति । प्रासाद आस्त इत्यत्र सदिक्रियाया आसिक्रियायाश्चैकमधिकरणं प्रासादाख्यम् । तच्चान्यतरेण सदिप्रत्ययेन घञाभिहितमित्यभिहिते नेति सप्तमी न प्राप्नोति । अभिहितादन्यत्रेत्यत्रापि पक्षेऽभिहितत्वादधिकरणस्याभिहितादन्यत्वं नास्तीति न प्राप्नोति । द्रव्यं च कारकं मन्यते, तद्व्यतिरेकेण शक्तिसद्भावे प्रमाणाभावात् । न तावत्प्रत्यक्षं द्रव्यव्यतिरिक्तस्वरूपपरिच्छेदि समुपजायते । द्रव्य-

---

उ०–कत्वस्यैव सामानाधिकरण्यपदार्थत्वादिति भावः ।

भाष्ये—कर्मादीनामभावादिति । अनभिहितकर्मादीनामभावादित्यर्थः । अन्येति । प्रथमेत्यर्थः । एतमभिसंबन्धं–सामानाधिकरण्यरूपम् । इतरसंबन्धानवच्छिन्नविशेष्यविशेषणभावः सामानाधिकरण्यम् । द्वितीया भविष्यतीति । अस्याशय उक्तः । तस्मान्नार्थ इति । भीष्मादिभ्यो द्वितीयादेः प्रकारान्तरेण वारणाद्व्यावर्त्यान्तरस्याभावाच्चेति भावः । यत्तु एतद्बलेन निपातेनाप्यभिधानमिति वदन्ति, तदुक्तम्, उक्तरीत्या निष्फलं च, विभक्त्यर्थे बद्व्ययं तेन समासविधायकासङ्गतिश्चेति दिक् ।

तन्निराकरणायेति । न तु परिगणनप्रत्याख्यानमूलकोऽयं दोषः । घञः कृत्त्वेन परिगणनेऽपि दोषतादवस्थ्यादिति भावः । नास्तीति । अभिहितत्वावच्छिन्नप्रतियोगिताको भेदो नास्तीत्यर्थः । ननु क्रियाभेदे शक्तेर्भिन्नत्वात्सदिनिरूपितस्याभिहितत्वेऽपि आसिनिरूपितस्याभिहितत्वाभिहितिरिस्यत आह—द्रव्यं चेति । तद्व्यतिरेकेणेति । गुणसमूहो द्रव्यमिति

आस्ते, शयन आस्त इति । किं कारणम् ? सदिप्रत्ययेनाभिहितमधिकरणमिति* कृत्वा सप्तमी† न प्राप्नोति ।

### न वान्यतरेणानभिधानात् ॥ ८ ॥

न वैष दोषः । किं कारणम् ? अन्यतरेणानभिधानात् । अन्यतरेणानभिधानम् । सदिप्रत्ययेनाभिधानमसिप्रत्ययेनानभिधानम् । यतोऽनभिधानं तदाश्रया सप्तमी भविष्यति ॥ कुतो नु खल्वेतत्सत्यभिधाने चानभिधाने चानभिहिताश्रया सप्तमी भविष्यति न पुनरभिहिताश्रयः प्रतिषेध इति ?

### अनभिहिते हि विधानम् ॥ ९ ॥

अनभिहिते हि सप्तमी विधीयते नाभिहिते प्रतिषेधः ॥ यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रान्या चान्या च क्रिया, यत्र तु खलु सैव क्रिया तत्र कथम्—आसन आस्ते, शयने शेत इति ? अत्राप्यन्यत्वमस्ति । कुतः ? काल-

---

प्र०—स्वरूपातिरेकेण शक्तिरूपानुपलम्भात् । प्रत्यक्षाप्रवृत्तौ च तत्पूर्वकस्यानुमानस्यापि शक्तिसद्भावावेदने नास्ति प्रवृत्तिः । कार्यं च द्रव्यस्वरूपायत्तमेवेति कार्यव्यतिरेकादपि नास्ति शक्तिसद्भावावगमः ।

पर्युदासं शक्तिसाधनपक्षं चाश्रित्याह—न वेति ॥ प्रसज्यप्रतिषेधवाद्याह—कुतो नु खल्विति ॥ पर्युदासमाश्रित्याह—अनभिहिते हीति ॥ पर्युदासेऽपि दूषणमाह—यद्यपि तावदिति । आसन आस्त इत्यत्रैकैवासनक्रिया, तस्याश्चाधिकरणं ल्युटाभिहितमिति सप्तम्या अप्राप्तिरित्यर्थः ।

अत्राप्यन्यत्वमिति । भिन्नपदप्रत्याय्ये भिन्ने आसनक्रिये इत्यर्थः । एकपदोपात्ते

---

उ०—भावः । न तावत्प्रत्यक्षमिति । शक्तेरतीन्द्रियत्वादित्यर्थः । स्वरूपेति । शक्तिस्वरूपेत्यर्थः । अत एव संबन्धस्य दुर्ग्रहत्वात्तत्पूर्वकमनुमानमपि नेत्याह—तत्पूर्वकस्येति । ननु यथा दाहके सत्यपि दाहादिकार्यस्य कादाचित्कत्वानुपपत्त्या शक्तिरवगम्यते तद्वदिहाप्यस्त्वत आह—कार्यं चेति । द्रव्यस्वरूपेति । न तु तद्व्यतिरिक्तशक्त्यायत्तमित्यर्थः ।

शक्तिसाधनपक्षं चेति । एकस्यैव परस्परविरुद्धकर्तृकर्मादिव्यपदेशः शक्तिं गमयति । एवं चैकनिरूपितशक्तेरभिधाने तच्छक्त्यन्तरस्यानुक्तमेवेत्येतदाशयः । पर्युदासपक्षे कुत इति प्रश्नानुपपत्तिरत आह—प्रसज्येति । द्रव्यं कारकमित्यपि बोध्यम् । एकैवासनक्रियेति । तथा च तन्निरूपिता शक्तिरप्येकैवेति भावः ।

प्रत्यभिज्ञयैकत्वावगतेः कथमन्यत्वमत आह—भिन्नपदेति । प्रत्यभिज्ञा तु साजात्यनिबन्धनेति भावः । नन्वेवमनभिहित इति सूत्रं व्यर्थमत आह—एकपदेति । अत एव गोन्नाय

---

* अकर्तरि च कारके संज्ञायाम् ३. ३. १९. † सप्तम्यधिकरणे च २. ३. ३६.

१—'आसि' पा० ।

भेदात्साधनभेदाच्च एकस्यात्रासेरासिः साधनं सर्वकालश्च प्रत्ययः। अपरस्य बाह्यं साधनं वर्तमानकालश्च प्रत्ययः।

किं पुनर्द्रव्यं साधनमाहोस्विद्गुणः। किं चातः? यदि द्रव्यं साधनं

प्र०-क्रियासाधनसंबन्धे अनेन विभक्तयो निवार्यन्ते न तु वाक्योपात्ते। आसिः साधनमिति। 'आसन'मित्यत्र यासिक्रिया तस्या आसिक्रिया साधनम्। कथमेतदिति चेत्। उच्यते—आस्यतेऽस्मिन्नित्यासनमुच्यते। यदि चासनक्रियास्ते संनिधीयते ततस्तदपेक्षं तदासनमुच्यते। एवं सामर्थ्यादासेरासिः कर्ता भवति। नन्वेवं सत्यासनमित्यत्र यासिक्रिया सान्यस्या आसिक्रियायाः साधनं भवति। न त्वस्या अन्या। एवं तर्ह्यर्थान्तरेऽस्य ग्रन्थस्य तात्पर्यम्। तदयमत्र परमार्थः—आसनशयनकरणापादानसंप्रदानादिशब्दैरासनादिक्रियायोग्यं वस्तुमात्रमनुद्भूतशक्तिकमभिधीयते। तत्र शक्त्युद्भवप्रतिपादनाय विभक्तिरवश्योत्पाद्या। ततश्चासिः साधनमिति साधनान्तरनिरासः क्रियते। शब्दव्युत्पत्तये केवलमत्रासिक्रियोपादीयत इत्यर्थः। सर्वकालश्च प्रत्यय इति। कालविशेषानुपादानेन ल्युटो विधानात्। बाह्यमिति। देवदत्तादिकमित्यर्थः।

किं पुनरिति। यदि द्रव्यं साधनं तदा तदेकमेव, तच्चाभिहितमिति पूर्वोक्तपरि-

उ०-हन्ति, कृतं कटमानय, भीमाद्बिभेतीत्यादौ चतुर्थ्यादय इति भावः। तथा च पदभेदकृतभेदमर्थे आरोप्य तन्निरूपितशक्तिभेदोऽपीत्यभिप्रायः। एकस्येत्यस्यार्थमाह—आसनमित्यत्रेति। आसनत्वसिद्ध्यनुपपत्तिलक्षणसामर्थ्येनासिसाधनत्वमाह—आस्यत इति। आस्ते इति स्वोक्तस्य व्याख्यानं-संनिधीयत इति। अस्मिन्निति प्रत्ययार्थत्वेन निर्दिष्टवस्तुन आसिक्रियासन्निधानमन्तरेणासनत्वायोगादासिक्रियासाधनत्वं कृत्प्रकृत्यर्थस्यासेः स्वाधिकरणद्रव्यद्वारेष्टव्यम्। तदाह-एवं सामर्थ्यादिति। 'कर्ता भवती'त्यस्य कारकं साधनं भवति, स्वप्रकृतिकल्युडन्तार्थद्वारेत्यर्थः। एकस्यात्रासेरिति भाष्ये-आसिः शेतेरप्युपलक्षणम्। नन्वेवं ल्युट्प्रकृतिभूतासिक्रियायास्तिङन्तोपात्ता आसिक्रिया साधनमिति भाष्योक्तं न सिद्धमित्याशङ्कते—नन्विति। केचित्तु आसनक्रिया आस्तेऽस्मिन्नित्यासनमिति व्युत्पत्तिः। प्रकृतिभूत आस्तिरस्त्यर्थः। तदर्थस्यापि लोके प्रयोगदर्शनात्। एवं शेतिरपि तिष्ठत्यर्थो 'जलाशय' इत्यादौ। उभयत्राप्यासिग्रहणमुपलक्षणम्। एवं च भाष्यं समञ्जसमेवेत्याहुः। वस्तुमात्रमिति। नासनादिक्रियाधिकरणत्वेन तद्बोधः किं त्वासनत्वेनेत्यर्थः। तदेवाह—अनुद्भूतशक्तिकमिति। शब्दव्युत्पत्तये इति। अनुलोमादिवद्रूढा एवेत्यर्थः। अत एव पङ्क इत्यादौ केनेति कर्त्राकाङ्क्षावदासनमित्युक्ते न तदाकाङ्क्षा। 'अत एव आसिः साधन'मित्यस्य साधनान्तरनिरासे तात्पर्यमुक्तम्।

प्रयोजनं वदन् विचारस्य प्रकृते सङ्गतिमाह—यदि द्रव्यमिति। अत्र द्रव्यमित्यस्य शक्त्यनाविष्टं द्रव्यमित्यर्थः।

नैतदन्यद्भवत्यभिहितात्। अथ हि गुणः साधनं भवत्येतदन्यदभिहितात्। अन्यो हि सदिगुणोऽन्यश्चासिगुणः।

किं पुनः साधनं न्याय्यम्? गुण इत्याह। कथं ज्ञायते? एवं हि कश्चित्कंचित्पृच्छति—'क्व देवदत्त' इति। स तस्मा आचष्टे—'असौ वृक्ष' इति। कतरस्मिन्? यस्तिष्ठतीति। स वृक्षोऽधिकरणं भूत्वान्येन शब्देनाभिसंबध्यमानः कर्ता संपद्यते। द्रव्ये पुनः साधने सति यत्कर्म कर्मैव स्याद् यत्करणं करणमेव यदधिकरणमधिकरणमेव।

**अनभिहितवचनमनर्थकं प्रथमाविधानस्यानवकाशत्वात् ॥ १० ॥**

अनभिहितवचनमनर्थकम्। किं कारणम्? 'प्रथमाविधानस्यानवकाशत्वात्'। अनवकाशा प्रथमा सा वचनाद्भविष्यति*।

प्र०–हारो न सङ्गच्छते। अथ शक्तिः साधनं, तदा तस्या भेदादभिहितत्वसंभवाद्भवति संसाधानमिति मन्वानस्य प्रश्नः। आश्रितत्वाच्छक्तिरेवात्र गुणशब्देन विवक्षिता।

स एव पृच्छति–किं पुनरिति। गुण इत्याहेति। अयं भावः—यदि द्रव्यं साधनं स्यात्तदा तस्यैकरूपत्वात्तन्निबन्धनाबाधितप्रत्यभिज्ञाविषयत्वान्नानार्थक्रियाकरणनिबन्धनो व्यपदेशभेदो न स्याद् दृश्यते चासाविति नानाशक्तिसद्भावावगमः सिद्धः।

सूत्रं प्रत्याख्यातुमाह—अनभिहितवचनमिति। 'क्रियते कटः' 'कृतः कट' इत्यादिषु द्वितीयादिनिवारणायानभिहिताधिकारः क्रियते। यदि चात्र द्वितीयादयः स्युस्ततः प्रथमा निरवकाशैव स्यात्। तस्मादनवकाशत्वात्प्रथमैव द्वितीयादीनां बाधिका

उ०– ननु वृक्षशब्दोपात्तस्याधिकरणत्वेऽपि यच्छब्दोपात्तस्य कर्तृत्वं भविष्यति शब्दभेदेन भेदादत आह–अयं भाव इति। शब्दभेदमात्रेणार्थभेदासिद्धिरिति भावः। 'वृक्षे देवदत्तस्तिष्ठति' 'वृक्षं पश्ये'त्यादौ दोषाच्च। द्रव्यमिति। शक्तिरहितं शुद्धं द्रव्यमित्यर्थः। तन्निबन्धनेति। एकरूपत्वनिबन्धनेत्यर्थः। नानार्थक्रियेति। अर्थक्रियानिरूपितभिन्नकारणत्वनिबन्धन इत्यर्थः। नानाशक्तीति। एवं च प्रसज्यप्रतिषेधेऽपि न दोष इति ध्वनितम्। अत्र हि पक्षे अभिहितायां शक्तौ नेत्यर्थः। तत्र या शक्तिरभिहिता तस्यां मा भूत्प्रत्ययः, या त्वनभिहिता तद्बोधनाय स्यादेव प्रत्यय इति बोध्यम्।

सूत्रं प्रत्याख्यातुमिति। '[1]कत्वादयो विभक्त्यर्था' इति पक्षेऽपीत्यर्थः। भाष्ये—अनवकाशत्वादिति। नन्वेवं कृतः कट इत्यादावेव न कटं करोतीत्यादावित्यत्र किं विनिगमकमिति चेन्न, मात्रग्रहणेनानभिहितविभक्त्यर्थाधिक्ये प्रथमाया अप्रवृत्तेः। 'कृत' इत्यादौ तद्घटकप्रत्ययेनाभिधानेनाधिक्याभाव इति भावः।

१–'तस्मायाचष्टे' पा०। * प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २. ३. ४६.

सावकाशा प्रथमा । कोऽवकाशः ? अकारकम्—वृक्षः प्लक्ष इति ।

**अवकाशोऽकारकमिति चेन्नास्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति ॥ ११ ॥**

अवकाशोऽकारकमिति चेत् तन्न । किं कारणम् ? अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते । वृक्षः प्लक्षः । अस्तीति गम्यते ।

**विप्रतिषेधाद्वा प्रथमाभावः ॥ १२ ॥**

अथवा द्वितीयादयः क्रियन्तां प्रथमा वेति प्रथमा भविष्यति विप्रतिषेधेन । द्वितीयादीनामवकाशः—'कटं करोति भीष्ममुदारं शोभनं दर्शनीय'-मिति । प्रथमाया अवकाशः—अकारकम् । वृक्षः प्लक्ष इति । इहोभयं प्राप्नोति—कृतः कटो भीष्म उदारः शोभनो दर्शनीय इति । प्रथमा भविष्यति विप्रतिषेधेन ।

न सिध्यति । परत्वात् षष्ठी प्राप्नोति† । शेषलक्षणा षष्ठ्यशेषत्वान्न भविष्यति ।

प्र०—भविष्यतीति नार्थोऽनभिहिताधिकारेणेत्यर्थः ॥ वृक्ष इति । क्रियापदमत्र न श्रूयत इति विभक्त्यन्तराप्राप्तिं मन्यते ।

अस्तिर्भवन्तीपर इति । ज्ञातं वस्तु परं प्रतिपादयितुं शब्दः प्रयुज्यते, ज्ञानं च सत इति यत्र क्रियापदान्तरस्याप्रयोगस्तत्रोत्सर्गतः सत्ताप्रतीतिरित्यस्तीति क्रियापदानुषङ्गात्कर्तरि तृतीयाप्रसङ्गादनवकाशा प्रथमेत्यर्थः ।

विप्रतिषेधाद्वेति । सावकाशत्वमभ्युपगम्येदमुच्यते ॥ षष्ठीति । क्रियाकारकसंबन्धसद्भावात् । अशेषत्वादिति । प्रातिपदिकार्थस्य व्यतिरेकाभावात् ।

उ०— अस्तिर्भवन्तीपर इति । प्रथमाया अपि 'कर्मणि द्वितीये'त्यादिसाहचर्येण क्रियायोग एव प्रवृत्तेरिति भावः । ज्ञानं च सत इति । बुद्धिसत इत्यर्थः ।

अनवकाशत्वमुक्त्वा विप्रतिषेधोपन्यासोऽसङ्गत इत्यत आह—सावकाशत्वमभ्युपगम्येति । 'नीलमिदं न तु रक्त'मित्यादौ रक्तत्वादिनिवृत्तिपरे वाक्ये सत्ताया अनावश्यकत्वादस्तिर्भवन्तीपर इत्यस्याभावात् । साहचार्यं च सर्वत्र न व्यवस्थापकमित्यभिमानः । वैतण्डिकोक्तिरियमिति तात्पर्यम् । अनेन वस्तुतो निरवकाशत्वमेवेति सूचितम् । उक्तरीत्या तत्रापि सत्ताक्षेपात् । अत एव 'तिङ्समानाधिकरणे प्रथमे'ति न्यासः सङ्गच्छत इति बोध्यम् । स्पष्टं चैवं प्रातिपदिकार्थसूत्रे भाष्ये ॥ अशेषत्वादिति । 'अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः

† षष्ठी शेषे २. ३. ५०.

**कृत्प्रयोगे तु परं विधानं षष्ठ्यास्तत्प्रतिषेधार्थम् ॥ १३ ॥**

कृत्प्रयोगे तु परत्वात्षष्ठी[†] प्राप्नोति तत्प्रतिषेधार्थमनभिहिताधिकारः कर्तव्यः । कर्तव्यः कट इति ॥ स कथं कर्तव्यः ? यद्येकत्वादयो विभक्त्यर्थाः । अथ हि कर्मादयो विभक्त्यर्था नार्थोऽनभिहिताधिकारेण ॥१॥

## कर्मणि द्वितीया ॥ २ । ३ । २ ॥

**समयानिकषाहायोगेषूपसंख्यानम् ॥ १ ॥**

समयानिकषाहायोगेषूपसंख्यानं कर्तव्यम् । समया ग्रामम् । निकषा ग्रामम् । हायोगे—हा देवदत्तम् । हा यज्ञदत्तम् ।

अपर आह—'द्वितीयाविधानेऽभितःपरितःसमयानिकषाध्यधिधिग्योगेषूपसंख्यानम्' ॥ द्वितीयाविधानेऽभितःपरितःसमयानिकषाध्यधिधिग्योगेषूप-

प्र०- कर्तव्यः कट इति । प्रथमां परत्वाद्बाधित्वा 'कर्तृकर्मणोः कृती'ति षष्ठी प्राप्नोतीति तद्बाधनार्थोऽनभिहिताधिकारः ॥१॥

कर्मणि । समया ग्राममिति । सामीप्यसंबन्धे षष्ठ्यां प्राप्तायां द्वितीयाविधिः । एवं निकषायोगे । हाशब्दः शोकादिवृत्तिरिति तद्योगे षष्ठ्येव प्राप्नोति ।

उ०-संपन्न' इत्यनेकमिति सूत्रोक्तरीत्या प्रातिपदिकार्थत्वेन प्रातिपदिकार्थकारकव्यतिरिक्तस्वरूपशेषत्वाभावादिति भावः ।

षष्ठी प्राप्नोतीति । न च 'कृत्याना'मिति विभक्तेन षष्ठीनिषेधात्कथं तत्प्राप्तिः । न च मात्रोभयप्राप्तिः तदधिकाराभावे उभयप्राप्तेरपि सत्त्वादिति वाच्यम्, एकसूत्रपक्षे दोषात् । योगविभागस्तु भाष्यकृता वक्ष्यते, न वार्तिककारेण । यद्येकत्वादय इति । प्राधान्येन विभक्तिद्योत्या सङ्ख्यैव, कारकं तु तद्विशेषणत्वेन, तदेदं सूत्रं कार्यमित्यर्थः । एवमग्रेऽपि व्याख्येयम् । 'उक्तार्थाना'मिति न्यायः शास्त्रोपात्तप्रधानार्थविषय एव, कारकस्य प्राधान्येन तत्त्वे तु व्यर्थम् । ननु तदापि द्योतकसमावेशस्य दृष्टत्वात् कृतः कट इत्यादौ क्रियते कट इत्यादौ च तद्वारणाय स आवश्यक इति चेन्न, आद्ये विशेष्यत्वेन भानेन तस्य द्योत्यत्वासंभवात् । अन्त्ये क्रियां प्रति तस्य विशेषणत्वेऽपि कटपदार्थे तत्त्वाभावेन तदुत्तरद्वितीयाद्योत्यताया असंभवाच्चेति दिक् ॥१॥

कर्मणि । सामीप्यसंबन्धे इति । समयाशब्दशक्यस्यापि सामीप्यस्य तत्प्रधानार्थनिरूपितं संबन्धत्वमपि । यथा 'राज्ञः स्व'मित्यत्र स्वत्वस्येति भावः । सामीप्यानन्तर्यादीनां न षष्ठ्यर्थत्वमिति तु समभिव्याहृतपदार्थभिन्नसामीप्यादिपरम् ।

[†] कर्तृकर्मणोः कृतिः २. ३. ६५.

संख्यानं कर्तव्यम् । अभितो ग्रामम् । परितो ग्रामम् । समया ग्रामम् । निकषा ग्रामम् । अध्यधि ग्रामम् । धिग् जाल्मम् । धिग् वृषलम् ।

अपर आह—

'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते' ॥

उभय[1] सर्व इत्येताभ्यां तसन्ताभ्यां योगे द्वितीया वक्तव्या । उभयतो ग्रामम् । सर्वतो ग्रामम् ॥ धिग्योगे—धिग् जाल्मम् । धिग् वृषलम् ॥ उपर्यादिषु त्रिष्वाम्रेडितान्तेषु द्वितीया वक्तव्या । उपर्युपरि ग्रामम् । अध्यधि ग्रामम् । अधोऽधो ग्रामम् ॥ ततोऽन्यत्रापि दृश्यते । न देवदत्तं प्रतिभाति किंचित् । बुभुक्षितं न प्रतिभाति किंचित् ॥२॥

प्र०— अभितो ग्राममिति । 'पर्यभिभ्यां चे'ति तसिलन्तावभितःपरितःशब्दावुभयतः सर्वत इत्यनयोरर्थयोर्वर्तेते । तद्योगे षष्ठ्येव प्राप्नोति । आभिमुख्यवृत्तिरपि विभक्तिप्रतिरूपको निपातोऽभितःशब्दोऽस्ति सोऽपीह गृह्यते, तद्योगेऽपि षष्ठी प्राप्नोति । अध्यधि ग्राममिति । 'उपर्यध्यधसः सामीप्ये' इति द्विर्वचनम् । अधिशब्दोऽत्रोपर्यर्थे वर्तते इति षष्ठी प्राप्नोति । धिग्जाल्ममिति । धिक्शब्दस्य निन्दार्थत्वात्तद्योगे षष्ठ्याः प्राप्तिः । हा तातेत्यादौ त्वन्तरङ्गत्वात्संबोधनविभक्तिरेव भवति ।

उभसर्वतसोरिति । उभसर्वयोस्तसाविति षष्ठीसमासः । उभयशब्दावयवस्योभशब्दस्यानुकरणमुभशब्द इत्युभयशब्दो गृह्यते, द्विवचनटाब्विषयत्वादुभशब्दस्य तसन्तस्याभावात् । दृश्यत इति । दृषिग्रहणं प्रयोगानुसरणार्थम् । न देवदत्तं प्रतीति । षष्ठ्यत्र प्राप्नोति । प्रतिशब्दश्चात्र क्रियाविशेषक उपसर्गो न तु कर्मप्रवचनीय इत्युदाहृत । केनचित्किंचित्स्मृतमिति दर्शनायानेकस्मृत्युपन्यासः ॥२॥

उ०— उपर्यर्थे वर्तते इति । उपरि सामीप्ये वर्तत इत्यर्थः । संबोधनेति । संबोधनविभक्तेः पदान्तरानपेक्षत्वादित्यर्थः ।

उभ सव इत्येताभ्यामिति । भाष्यस्य—एतत्प्रकृतिकाभ्यामित्यर्थः । उभशब्दात्तसोऽनुत्पत्त्यास्यायुक्तत्वं परिहरन्नुक्तस्यार्थस्य वार्तिकाद्यथा लाभस्तथा दर्शयति—उभसर्वयोरिति । ननु वृत्तिविषये पूर्वमेवायचः प्रवृत्तेरुभप्रकृतिकत्वं न तस इत्यत आह—उभयेति । उभेति तद्घटितोभयशब्दलाक्षणिकमिति भावः । न तु कर्मप्रेति । अन्यथा 'कर्मप्रवचनीययुक्ते' इत्येव सिद्धं स्यादित्यर्थः ॥२॥

1—'उभ' पा० ।

# तृतीया च होश्छन्दसि ॥ २ । ३ । ३ ॥

किमर्थमिदमुच्यते ? तृतीया यथा स्यात् । अथ द्वितीया सिद्धा ? सिद्धा[1] 'कर्मणी'त्येव* ॥ तृतीयापि सिद्धा । कथम् ? सुपां सुपो भवन्तीत्येव । असत्येतस्मिन् 'सुपां सुपो भवन्ती'ति तृतीयार्थोऽयमारम्भः । यवाग्वाग्निहोत्रं जुहोति ।

एवं तर्हि तृतीयापि सिद्धा । कथम् ? 'कर्तृकरणयो'रित्येव† । अयमग्निहोत्रशब्दोऽस्त्येव ज्योतिषि वर्तते । तद्यथा—'अग्निहोत्रं प्रज्वलयती'[2]ति । अस्ति हविषि वर्तते । तद्यथा—'अग्निहोत्रं जुहोती'ति । जुहोतिश्चास्त्येव प्रक्षेपणे वर्ततेऽस्ति प्रीणात्यर्थे वर्तते । तद्यदा तावद्यवागूशब्दात्तृतीया तदाग्निहोत्रशब्दो ज्योतिषि वर्तते जुहोतिश्च प्रीणात्यर्थे । तद्यथा—'यवाग्वाग्निहोत्रं जुहोति' । अग्निं प्रीणाति । यदा यवागूशब्दाद् द्वितीया तदाग्निहोत्रशब्दो

प्र०— तृतीया च । किमर्थमिति । अन्तरेणाप्येतत्सूत्रं द्वितीयातृतीये सिद्धे इति प्रश्नः । तृतीयेति । देवतोद्देशेनाग्नौ हविःप्रक्षेपो जुहोत्यर्थः, तत्र यवाग्वा द्वितीया प्राप्नोति तृतीया विधीयते । अथ द्वितीयेति । किमप्राप्ता द्वितीया चकारेण विधीयतेऽथ तृतीयया मा बाधीति पक्षे चकारेणाभ्यनुज्ञायत इति प्रश्नः । असत्येतस्मिन्निति । न हि पाणिनेः सूत्रकरणकाले कात्यायनवचनस्य भावः ।

अग्निहोत्रमिति । अग्निर्ज्वलित इत्यर्थः । अग्निं प्रीणातीति । 'अग्निषु हूयमाने'-

उ०— तृतीया च । अस्योदाहरणेऽग्निहोत्रशब्दो हविःपरस्तत्र द्वितीया, तत्समानाधिकरणयवागूशब्दादनेन तृतीयापि, विरुद्धविभक्त्यर्थानवरुद्धत्वाच्च सामानाधिकरण्यमिति सूत्रमतम्, भाष्यमतं च । 'एवं तर्हि तृतीयापि सिद्धे'त्यादेर्भाष्यस्योक्तिप्रत्युक्तिक्रमेण पूर्वपक्षयुक्तित्वात् । ननु जुहोतेः प्रीणात्यर्थत्वेऽग्निहोत्रशब्दस्याग्न्यर्थत्वे करणत्वात्तृतीयासिद्धिमाशङ्क्याह—देवतेति । अग्निहोत्रशब्दो हविःपरः, तद्विशेषणं यवागूरिति भावः । यद्यपि अग्नौ हविरिति चिन्त्यं, पदे जुहोति अग्नौ जुहोतीत्यादिश्रुतिविरोधात् । तस्माद्द्वैधे आधारे प्रक्षेप इत्येव युक्तम्, तथापि प्रकृताभिप्रायमेतत् । तत्र यवाग्वाः कर्मत्वाद्द्वितीया प्राप्तेत्यर्थः । चकारेण द्वितीयाविधानात्प्रश्नानुपपत्तिमाशङ्क्याह—किमप्राप्तेति । प्रयोजनान्तरसिद्धये तस्यावश्यकत्वादसत्येतस्मिन्नित्ययुक्तमत आह—न हीति । एवं च सुत्रावसति तस्मिन्नुपायान्तरपरं सूत्रमिति भावः ।

'एवं तर्हि तृतीयापी'त्यादि भाष्यं पूर्वपक्षयुक्तिः । अर्थभेदात्सा न युक्तेति स्फुटत्वान्नाख्ये

१—'सिद्धा । कथम् ? कर्मणीत्येव ।' पा० । * कर्मणि द्वितीया २. ३. २.

† कर्तृकरणयोस्तृतीया २. ३. १८ २—'प्रज्वलितमिति' पा० ।

हविषि वर्तते जुहोतिश्च प्रक्षेपणे। तद्यथा—'यवागूमग्निहोत्रं जुहोति'। यवागूं हविरग्नौ प्रक्षिपति ॥३॥

## अन्तरान्तरेणयुक्ते ॥ २ । ३ । ४ ॥

इह कस्मान्न भवति—किं ते बाभ्रवशालङ्कायनानामन्तरेण गतेनेति ? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यै'वेति ॥ अथवा यद्यपि तावदयमन्तरेणशब्दो दृष्टापचारो[1] निपातश्चानिपातश्चायं तु खल्वन्तराशब्दोऽदृष्टापचारो निपात एव तस्यास्य कोऽन्यो द्वितीयः सहायो भवितुमर्हत्यन्यदतो निपातात्। तद्यथा—

प्र०–ऽग्निवति प्रीणात्यर्थे जुहोतेः प्रयोगदर्शनात् ॥३॥

अन्तरा। अन्तरेण गतेनेति। अन्तरशब्दोऽत्र विशेषवाची। 'विशेषेण ज्ञातेन किं ते प्रयोजन'मिति वाक्यार्थः। लक्षणप्रतिपदोक्तयोरिति। तृतीयान्तो लाक्षणिकः, विभक्तिप्रतिरूपकस्तु निपातः प्रतिपदोक्तः ॥ दृष्टापचार इति। दृष्टव्यभिचारः, अनिपातस्यापि भावात्। अन्तराशब्द इति। नन्वन्तराशब्दोऽप्यनिपातष्टाबन्तोऽस्ति 'अन्तरायां पुरि वसती'ति, तत्कथमसावदृष्टापचारः ? एवं तर्हि टाबन्तस्य लाक्षणिक-

उ०–नोक्तम्। अग्निष्विति बहुवचनेन सामानाधिकरण्यावगतेरर्थान्तरासम्भवात्प्रीणात्यर्थत्व-मित्यर्थः। यत्तु मीमांसका 'अग्निहोत्र'शब्दस्य कर्मनामधेयत्वं तत्प्रख्यन्यायात्, 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासा'विति दर्शनाच्च। एवं च करणभूते होमे समानाधिकरण-त्वाग्निहोत्रस्य करणत्वात् तृतीयायां प्राप्तायां पक्षे द्वितीयार्थमिदम्। यवाग्वा अपि करणत्वा-देव तृतीया सिद्धेति। तन्न सूत्रानुगुणं, नापि भाष्यानुगुणं, 'कर्मणी'त्यनुवृत्तेः। पाणिनीय-स्मृतेर्वचनरूपत्वेन जैमिनीयाया न्यायरूपत्वेन तद्बाधकताया अस्या उचितत्वाच्च। एवं च 'यवाग्वाग्निहोत्रं जुहोती'त्यादिवाक्ये नामधेयत्वाभावः। अत एव यवागूमग्निहोत्रं जुहोती-त्यादिसिद्धिरिति दिक् ॥३॥

अन्तरा। अन्तरेणेति तृतीयान्ताभिप्रायेण प्रश्न इत्याह—अन्तरेति। गतशब्दो ज्ञातार्थक इति भावः। बहिरङ्गत्वादिति। अर्थकृतबहिरङ्गत्वस्य शास्त्रेऽनाश्रयणाच्चिन्त्य-मिदम्। लाक्षणिकत्वेन परिहारे तेनैवान्तरेणेत्यस्य व्यावृत्तौ भाष्यानुपपत्तिस्तदवस्था पूर्वस्माद्-विशेषश्चेत्यत आह—अथवेति। साहचर्यमत्र सादृश्यम्। 'कोऽन्यः सहाय' इति भाष्ये 'प्रयोगे' इति शेषः। यथा कार्ये सदृशस्यैव सहायत्वं तथा प्रयोगेपीऽति भावः। परस्परेति। अन्तरा साहचर्यादन्तरेणेत्यतृतीयान्तं, तत्साहचर्यात्तदटाबन्तमेवेति निपातयोरेव ग्रहणसिद्धि-रिति भावः। न च परस्परसाहचर्यादनव्ययोरेव ग्रहणं कुतो नेति वाच्यम्। व्याख्यानात्। यत्तु अव्ययोः स्वरादौ चादौ वा पाठेन परस्परसाहचर्यसंभवेऽप्यनव्ययोः पाठाभावात्साह-

१–'दृष्टापचारो' पा०।

'अस्य गोर्द्वितीयेनार्थ' इति गौरेवानीयते नाश्वो न गर्दभः ।

**अन्तरान्तरेणयुक्तानामप्रधानवचनम् ॥ १ ॥**

अन्तरान्तरेणयुक्तानामप्रधानग्रहणं कर्तव्यम् । अप्रधाने द्वितीया भवतीति वक्तव्यम् । अन्तरा त्वां च मां च कमण्डलुरिति । कमण्डलोर्द्वितीया मा भूदिति । कः पुनरेताभ्यां कमण्डलोर्योगः ? यत्त्वां च मां चान्तरा तत्कमण्डलोः स्थानम् ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । कमण्डलोर्द्वितीया कस्मान्न भवति ?

---

प्र०—त्वात्स्त्रीत्वापेत्तटाबाश्रयत्वाद्बहिरङ्गत्वाच्चाग्रहणं मन्यते । अथवा परस्परसाहचर्यान्निपातयोर्ग्रहणमिति वाच्यम् ।

अप्रधान इति । युष्मदस्मदर्थस्य विशेषणत्वादप्राधान्यं, कमण्डलोस्तु विशेष्यत्वात्प्रधानता । कः पुनरिति । अन्तरान्तरेणशब्दाभ्यामाधेयप्रधानमध्यवचनाभ्यां युष्मदस्मदर्थस्यैवावधेर्योगो न तु कमण्डलोरिति मत्वा प्रश्नः । यत्तदिति । 'मध्ये' इत्येतस्मिन्नर्थे तयोर्वर्तनादवधेरपि ताभ्यां योगोऽस्ति, आधारार्थत्वादाधेयस्य कमण्डलोः । अन्तरा तदिति । अत्र भाष्यकारेण मध्यमात्रवचनोऽन्तराशब्दः प्रयुक्तो न त्वाधाररूपमध्यवाची । अन्यथा तत्स्थानमिति सामानाधिकरण्यं न स्यात् । कमण्डलुयोगप्रतिपादनाय चैवं प्रयोगः । लौकिके तु प्रयोगे मध्य इत्युद्भूताधारशक्तिके मध्येऽन्तराशब्दो वर्तते ।

---

उ०—पर्यस्य वक्तुमशक्यत्वादिति तन्न, उक्तभाष्येण सादृश्यस्य सहप्रयोगे नियामकताया उक्तत्वात् । वस्तुतस्तु युक्तग्रहणात्संम्बन्धिनि नित्यसाकाङ्क्षयोरेवैतयोर्ग्रहणम् । न च टाबन्तोन्तराशब्दस्तथा, अनावृतदेशत्वेन, परिधानीयत्वेनैव च तेन बोधादिति भाष्याशयः । अस्य गोर्द्वितीयेनेति । द्वितीयशब्दोऽत्र सहायवाची ।

'मध्ये' इत्यर्थकेनान्तरेणेत्यादिना कमण्डलोरपि योगात्प्रश्नानुपपत्तिरत आह—अन्तरेति । अन्तरेत्यादेर्मध्यवर्तीत्यर्थः । न तु कमण्डलोरिति । अभेदस्य सत्त्वेऽपि तस्य षष्ठीप्रयोजकत्वाभावेन तदपवादविभक्तिप्रयोजकत्वमपि नेति भावः । आधारार्थत्वादिति । आधारपरतन्त्रत्वादित्यर्थः । तस्य तत्परतन्त्रत्वे समानन्यायेनाधेयपरतन्त्र आधार इति कमण्डलोरपि तद्योग इति भावः । न त्वाधाररूपेति । आधारशक्तिप्रधानेत्यर्थः । तत्स्थानमिति । अन्यथा तत्र स्थानमिति वक्तव्यं स्यादिति भावः । कमण्डलुयोगेति । अत्यन्तभेदप्रतिपादनद्वारेत्यर्थः । उद्भूताधारेति । तस्य चाधेये आधाराधेयभावेनैवान्वये साधुत्वं, न तु केनचिदभेदान्वये इति भावः ।

'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति प्रथमा भविष्यति ॥४॥

## कालाध्वनोरत्यन्तसंयोगे ॥ २ । ३ । ५ ॥

### अत्यन्तसंयोगे कर्मवल्लाद्यर्थम् ॥ १ ॥

अत्यन्तसंयोगे कालाध्वानौ कर्मवद्भवत इति वक्तव्यम् । किं प्रयोजनम् ? लाद्यर्थम् । लादिभिरभिधानं यथा स्यात्* । 'आस्यते मासः । शय्यते क्रोशः ।

अथ वत्करणं किमर्थम् ? स्वाश्रयमपि यथा स्यात् । आस्यते मासम् । शय्यते क्रोशम् । 'अकर्मकाणां भावे लो भवती'ति* भावे लो यथा स्यात् ।

प्र०- उपपदविभक्तेरिति । अस्तीति क्रियानुषङ्गात्कमण्डलोः कर्तृत्वम् । तच्च तिङा-भिहितमिति प्रथमा कारकविभक्तिः । सा चान्तरङ्गा, क्रियाकारकयोः संबन्धस्यान्त-रङ्गत्वात् । उपपदार्थेन तु क्रियाद्वारकः संबन्ध इति तन्निमित्ता बहिरङ्गा विभक्तिः ॥ ॥

कालाध्वनो । पाणिनीये सूत्रन्यासे सति 'मासमास्यते देवदत्ते'नेति भाव एव लादयः स्युर्न तु कर्मणि । ततश्चास्यते मासः, आसितो मासः, आसितव्यो मासः, स्वासो मास इति प्रयोगानुपपत्तिरिति वार्तिकारम्भः–अत्यन्तसंयोग इति । अनत्यन्त-संयोगे तु अधिकरणसप्तम्येव भवति 'अमावास्यायां यजत' इति । लाद्यर्थमिति । आदिशब्देन निष्ठादीनां ग्रहणम् । तथा चोदाहृतम् । कर्मातिदेशेनैव च 'मासमास्ते देवदत्त' इति द्वितीयायाः सिद्धत्वान्नार्थः सूत्रेणेति भावः ।

स्वाश्रयमपीति । यथा 'ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्य'मिति ब्राह्मणकार्याणि

उ०- 'उपपदविभक्ते'रिति न्यायमूलकं, न वाचनिकमित्याह–सा चेति । क्रियाद्वारक इति । सर्वत्र संबन्धस्य यत्किञ्चित्क्रियाकारकभावमूलकत्वात्, यथा स्वत्वं क्रयादिनिबन्धन-मिति भावः । युक्तिरत्र शिथिला, सर्वत्र प्रथमाया एवापत्तेः, युष्मदाद्यर्थेऽपि सत्ताकर्तृत्वस्या-व्यभिचारात् । न चवं सूत्राणां वैयर्थ्यं, न्यायानुगतेऽर्थे किं कुर्मः । तस्माद्वचनमेवेदम् । अत एव 'नमस्यति देवा'नित्यत्रानेन न्यायेन द्वितीयां वक्ष्यति भाष्यकृत् । तत्र हि क्रियाकारक-भावेनैवान्वयादित्यन्ये । न च विशेषणे संबन्धस्योद्भूततया प्रतीतेस्तत्रैव षष्ठ्यपवादत्वेन सम्बन्धार्थिकैव द्वितीयेति वाच्यम् । प्रथमापवादत्वस्यापि सम्भव इत्याशयात् । 'उपपद-विभक्ते'रिति वचनात्तु षष्ठ्यपवादत्वमेव न प्रथमापवादत्वमित्युत्तराशयः । प्रथमाया अपि कारकविभक्तित्वं, क्रियाजनकेऽर्थे तस्या अपि विधानादिति बोध्यम् । तदुक्तं कमण्डलोः कर्तृत्वं तिङाभिहितमिति ॥४॥

कालाध्वनो । लाद्यर्थमित्युत्तरं 'लादिभिरभिधानं यथा स्या'दिति भाष्ये पाठमभि-प्रेत्याह–न तु कर्मणीति । 'अकर्मकधातुभिर्योग' इति तु न विधायकमिति प्रागेव निरू-पितम् । लाद्यर्थमित्युत्तरं भाष्ये पाठान्तरं–'लादिभिरभिहिते द्वितीया मा भू'दिति । तत्त्व-

* लः कर्मणि च भावे चाकर्मकेभ्यः ३. ४. ६९.

१–अस्मात्पूर्वं [ लादिभिरभिहिते द्वितीया मा भूत् ] इत्यधिकं क्वचित् 'तत्त्वयुक्त'मिति नागेशः ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । प्राकृतमेवैतत्कर्म यथा कटं करोति शकटं करोतीति ।

एवं मन्यते । यत्र कश्चित्क्रियाकृतो विशेष उपजायते तन्न्याय्यं कर्मेति । न चेह कश्चित्क्रियाकृतो विशेष उपजायते ।

नैवं शक्यम् । [1]इहापि न स्यात्–आदित्यं पश्यति, हिमवन्तं शृणोति, ग्रामं गच्छति । तस्मात्प्राकृतमेवैतत्कर्म यथा कटं करोति शकटं करोतीति ।

प्र०–त्त्रिये क्रियन्ते न तु स्वाश्रयाणि निवर्त्यन्ते, तद्वदत्रापि कर्मकार्याण्यतिदिश्यन्ते न स्वाश्रयाणि निवर्त्यन्ते । यद्येवमन्तरेणापि वतिं स्वाश्रयाणि कार्याणि भविष्यन्ति । नैतदस्ति । स्वाश्रयकार्यनिवृत्तये तद्रूपासङ्ग आशङ्क्येत ।

प्राकृतमेवेति । सकर्मकव्यापनादिधात्वर्थाङ्गे आसनादावास्यादीनां वर्तनात् स्वाभाविकमेतत्कर्मेत्यर्थः । ततश्च 'मासमास्ते' इत्यस्य मासमासनेन व्याप्नोतीत्यर्थः । नियतत्वाच्च प्रयोगस्य कट आस्त इत्यादौ आसनमात्रेऽनङ्गीकृतक्रियान्तरे आसिर्वर्तत इति अतिप्रसङ्गो नोद्भावनीयः ।

किमर्थं तर्हि वार्तिककारेणातिदेश आरब्ध इत्याह-एवं मन्यत इति । यत्र कश्चिदिति । यथा 'काण्डानि लुनाती'त्यादौ ।। आदित्यमिति । न हि दर्शनक्रियया-

उ०–युक्तम्, प्रकारान्तरेण लप्राप्तेरभवात् । नन्विदं वार्तिकं सकर्मकाकर्मकविषयम्, अकर्मकविषयं वा ? नाद्यः । 'मासं पठति वेदं देवदत्त' इत्यादौ मासादिकर्मण्यपि लाद्यापत्तौ मासः पठ्यते वेदं देवदत्तेनेत्यादिप्रयोगापत्तेः । नान्त्यः । सङ्कोचे मानाभावात् । सकर्मकार्थं 'कालाध्वनो'रित्यस्यावश्यकत्वेन न तर्हीदानीमिदं सूत्रं कर्तव्य'मिति भाष्यविरोधापत्तेश्चेति चेत्, उच्यते । सर्वविषयं वार्तिकं, सूत्रं च न कार्यमित्येव तात्पर्यम् । न च 'मासः पठ्यते वेदं देवदत्तेने'त्यस्याप्यापत्तिः । उभयसन्निधावन्तरङ्गे मुख्ये च द्रव्यकर्मण्येव लप्रवृत्तिरिति न दोषः । द्रव्यकर्मणोऽन्तरङ्गत्वं च धात्वन्तरार्थानङ्गस्वार्थकर्मत्वेन । वार्तिकप्रामाण्येन 'गौणे कर्मणि दुह्यादे'रित्यादिवद्भाष्यप्रामाण्येनात्राप्येवंविधकल्पनाश्रयणाच्च । एवं च 'प्राकृतमेवे'ति पक्षेऽपि न दोषः । अत्र पक्षे 'आस्यते मास' इति कर्मणि ले 'यत्र क्रियये'ति वक्ष्यमाणरीत्यावश्यकेनाप्यनेन द्वितीया तु न, अत्यन्तसंयोगस्य व्याप्तिरूपस्य धातुनोक्तत्वात् ।

यद्येवमिति । अकर्मणि कर्मशब्दप्रयोगेण वत्यर्थावगतावतिदेशत्वाव्यादेव स्वाश्रयसिद्धेरिति भावः । तद्रूपासङ्ग इति । कर्मशब्दरूपस्यासङ्गः–सम्बन्धः, संज्ञात्वमित्यर्थः ।

धात्वर्थाङ्गे इति । आसनपूर्वके व्यापने धातोर्वृत्तिरित्यर्थः । नन्वनया रीत्या 'कटमास्ते' इत्यपि स्यादत आह—नियतत्वाच्चेति ।

भाष्ये एकदेशी वार्तिकाशयमाह—एवं मन्यते इत्यादिना ।। तद्दूषयति–नैवं शक्यमिति ।। पुनर्वार्तिकारम्भ आवश्यक एवमपीत्याशङ्कते-यदि तर्हीत्यादिना ।। तर्हि तद्वक्तव्यं कर्मवदिति यदुक्तं तदित्यर्थः ।

1 –'इह हि दोषः स्यात्' पा० ।

यदि तर्हि प्राकृतमेवैतत्कर्माकर्मकाणां भावे लो भवतीति भावे लो न प्राप्नोति—आस्यते मासं देवदत्तेनेति ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'अकर्मकाणा'मित्युच्यते न च केचित्कालभावाध्वभिरकर्मकाः । त एवं विज्ञास्यामः—'क्वचिद्ये अकर्मका' इति ।

अथवा येन कर्मणा सकर्मकाश्चाकर्मकाश्च भवन्ति तेनाकर्मकाणां न चैतेन कर्मणा कश्चिदप्यकर्मकः ।

अथवा यत्कर्म भवति न च भवति तेनाकर्मकाणां न चैतत्कर्म क्वचिदपि न भवति ।

प्र०—दित्यै प्रत्यक्षानुमानसमधिगम्यः कश्चिद्विशेष उत्पद्यते । केवलं दर्शनक्रिययाप्तुमिष्टतमत्वादादित्यः कर्म, तद्वन्मासामास्त इति मासोऽपीत्यर्थः ।

न च केचिदिति । यद्यपि क्रियामात्रप्रतिपादने कालादीनामभावात्तदभावनिबन्धनमपि संभवत्यकर्मकत्वं, तथापि धातूनामन्यपदार्थत्वेनाश्रयणात्तेषां प्रयोगान्तरे तदर्थानामेव कालादिसंबन्धदर्शनात्तैरकर्मत्वासंभवात्सामर्थ्याद्विशेषाङ्गीकरणमिति द्रव्यकर्मणाकर्मकत्वं विज्ञायत इत्यर्थः । क्वचिदिति । द्रव्य इत्यर्थः ॥ अथवेति । अन्तरङ्गत्वाद् द्रव्यकर्मणो बहिरङ्गस्य कालादेस्तिरोभावात्तदपेक्षः सकर्मकाकर्मकव्यपदेशो न प्रवर्तत इत्यर्थः । यत्र त्वन्तरङ्गस्यासन्निधिस्तत्र कालादिनिमित्तः सकर्मकव्यपदेशो भवत्येवेत्यास्यते मास इति कर्मणि लकारो भवति ॥ अथवा यत्कर्मेति । संभवव्यभिचाराभ्यां विशेषणविशेष्यभावात् ।

उ०— उत्तरयति सिद्धान्ती—न वक्तव्यमिति । अकर्मकाणामित्युच्यते इति । 'गत्यादिसूत्रे' इति शेषः । तत्र योगविभागेन सजातीयापेक्षनियमेन सिद्धे तत्सूत्रेऽकर्मकग्रहणात्कालादिभिन्नकर्मरहितार्थबोधकानामेव शास्त्रेऽकर्मकग्रहणेन ग्रहणमिति बोध्यत इति भावः । अकर्मकग्रहणं सामर्थ्यादत्यन्ताविद्यमानकर्मकग्रहणार्थमेव स्यादत आह—न चेति । एवं च तदर्थाऽसम्भव इति भावः । तस्मात्तत्सामर्थ्यान्निषेधप्रतियोगिसमर्पककर्मशब्देन मासादीनामग्रहणं, तदाह—त एवमित्यादि । क्वचिदिति । कालादीनां कर्मत्वप्रयोजकव्याप्त्यादिरहितेऽर्थे इत्यर्थः । इदं गतिसूत्रे निरूपितम् । यद्यपीति । 'अकर्मकाणा'मित्यस्य—कर्मानन्वय्यर्थप्रतिपादकानामित्यर्थ इत्यभिप्रायः । तथापि धातूनामिति । धातूनामन्यपदार्थत्वात् क्वचित्कर्मस्पर्शेऽप्यकर्मकत्वहानेः सामर्थ्यान्न विद्यते द्रव्यकर्म येषामिति विग्रह इति भावः । अर्थानामन्यपदार्थत्वेऽपि भाष्योपपत्तिरुक्तैवेति चिन्त्यम् । तदर्थानामेवेति । अधिकार्थे वृत्तावपि तदर्थस्यात्यागादिदमुक्तम् । द्रव्ये इति विषयसप्तमीयम् । सामर्थ्याद् द्रव्यरूपकर्मरहिता इत्यर्थ इति भावः । शिष्टं भाष्यं कैयटश्च गत्यादिसूत्रे व्याख्यातौ । एतद्भाष्यस्य वास्तवार्थोऽपि तत्रैवोक्तः । ननु तुल्यन्यायेन कालकर्मणा सकर्मकव्यवहारस्याप्यभावे तत्र कर्मणि लो न स्यादत आह—यत्र त्विति । तत्संनिधौ तु न तेन व्यवहार इति 'मासः पच्यते वेद'मिति न प्रयोगः ।

१—'भावादिभि' पा० ।

न तर्हीदानीमिदं सूत्रं वक्तव्यम् । वक्तव्यं च । किं प्रयोजनम् ? यत्रा-क्रिययात्यन्तसंयोगस्तदर्थम्—क्रोशं कुटिला नदी । क्रोशं रमणीया वनराजिः ॥ ५॥

## अपवर्गे तृतीया ॥ २ । ३ । ६ ॥

[1]क्रियापवर्ग इति वक्तव्यम् । साधनापवर्गे मा भूत्—मासमधीतोऽनुवाको न चानेन गृहीत इति ॥६॥

## सप्तमीपञ्चम्यौ कारकमध्ये ॥ २ । ३ । ७ ॥

[2]क्रियामध्य इति वक्तव्यम् । इहापि यथा स्यात्—अद्य देवदत्तो भुक्त्वा द्व्यहाद्भोक्ता द्व्यहे भोक्ता । 'कारकमध्य' इतीयत्युच्यमान इहैव स्यात्—

प्र०— वार्तिकं दूषयित्वा सूत्रं स्थापयितुं पृच्छति—न तर्हीति । क्रोशं कुटिलेति । गुणेनात्रात्यन्तसंयोगो न तु क्रिययेति कर्मत्वाभावः ॥५॥

अपवर्गे । अपवर्गो निष्ठा । स कदाचित्फलावाप्तौ सत्यां प्रयोजनाभावाच्च क्रियाया भवति, कदाचिदशक्त्यादिना साधनानानुपरमाद्भवतीति वार्तिकारम्भः—क्रियापवर्ग इति । यद्यपि साधनापवर्गे क्रियापवर्गोऽस्ति तथापि विशेषणोपादान-सामर्थ्याद्विशेष आश्रीयते क्रियाया एव योऽपवर्गो न तु साधनानामशक्त्यादिनिमित्त-स्तत्रेत्यर्थः ॥६॥

सप्तमी । अद्य देवदत्त इति । द्रव्यं कारकं तच्चात्रैकमेवेति भेदनिबन्धनो मध्य-

उ०— तर्ह्यनयैव कल्पनया सर्वत्र द्वितीयादिसिद्धौ सूत्रं न कार्यमिति पृच्छति भाष्ये—न तर्हीति । उत्तरयति-यत्राक्रिययेति । न च 'मासमास्ते' इत्यादौ प्राकृतकर्मणः शेषत्व-विवक्षायां षष्ठीबाधनार्थं तत्राप्यावश्यकत्वेनाक्रिययेति असङ्गतम् । क्रियाकारकभावेन यत्रान्वयाभावस्तदर्थमित्यर्थात् ॥५॥

अपवर्गे । निष्ठा—समाप्तिः । साधनापवर्गे इति । साधनोपरमकृतक्रियात्यागेऽपीत्यर्थः । क्रियाया एवेति । स्वत एवेत्यर्थः । स च फलप्राप्तावेव भवतीत्यर्थः । साधने आलस्यादि-रहिते सत्यपि प्रयोजनलाभेन क्रियायाः समाप्तिः स क्रियापवर्गः । प्रयोजनालाभेन क्रियाया आनुरूप्यावश्यकत्वेऽपि आलस्यादिना क्रियातो निवृत्तिः साधनापवर्ग इति भेद इति भावः ॥६॥

सप्तमीपञ्चम्यौ । प्रदेशादिति । स चेह इहेति सप्तम्या निर्दिष्ट इति यद्यपि तस्य स्थितिक्रियायामधिकरणत्वं तथापि वेधक्रियायामपादानत्वमित्यभिप्रेत्य भाष्ये 'यत' इति

१—'क्रियापवर्गे' इति वार्तिकं केचित् पठन्ति ।
२—'क्रियामध्ये [ इति च ]' इति वार्तिकं केचित् पठन्ति ।

इहस्थोऽयमिष्वासः क्रोशाल्लक्ष्यं विध्यति, क्रोशे लक्ष्यं विध्यति । यं च विध्यति यतश्च विध्यत्युभयोस्तन्मध्यं भवति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नान्तरेण साधनं क्रियायाः प्रवृत्ति-र्भवति । क्रियामध्यं चेत्कारकमध्यमपि भवति तत्र 'कारकमध्य' इत्येव सिद्धम् ॥७॥

## कर्मप्रवचनीययुक्ते द्वितीया ॥ २ । ३ । ८ ॥

### कर्मप्रवचनीययुक्ते प्रत्यादिभिश्च लक्षणादिषूपसंख्यानं सप्तमीपञ्चम्योः प्रतिषेधार्थम् ॥ १ ॥

कर्मप्रवचनीययुक्ते प्रत्यादिभिश्च लक्षणादिषूपसंख्यानं कर्तव्यम्* । वृक्षं प्रति विद्योतते विद्युत् । वृक्षं परि [विद्योतते विद्युत्¹] । वृक्षमनु [विद्योतते विद्युत्¹] । साधुर्देवदत्तो मातरं प्रति । [¹साधुर्देवदत्तो] मातरं परि । [साधुर्देव-दत्तो] मातरमनु । किं प्रयोजनम् ? 'सप्तमीपञ्चम्योः प्रतिषेधार्थम्' । सप्तमीपञ्चम्यौ मा भूतामिति । 'साधुनिपुणाभ्यामर्चायां सप्तमी'† ति सप्तमी ; 'पञ्चम्यपाङ्परिभिः' [ २. ३. १० ] इति पञ्चमी । तत्रायमप्यर्थोऽप्रतेरिति† न वक्तव्यं भवति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

### उक्तं वा ॥ २ ॥

किमुक्तम् ? एकत्र तावदुक्तमप्रतेरिति† । इतरत्रापि यद्यपि तावदयं

प्र०—व्यपदेशो नास्तीति भावः । यं चेति । लक्ष्यम् । यतश्चेति । प्रदेशात् । ततश्च लक्ष्य-प्रदेशयोः कर्मापादानयोर्भेदान्मध्यव्यपदेशसद्भावः ॥ 'शक्तिः कारक'मिति पक्षाश्रयेण वार्तिकं प्रत्याचष्टे—नान्तरेण साधनमिति । शक्तिमित्यर्थः । कालभेदभिन्नभुजि-क्रियानुमितशक्तिभेदाश्रयो मध्यव्यपदेशोऽस्त्येवेत्यर्थः ॥७॥

कर्मप्रवचनीय । यदि सामान्येन 'कर्मप्रवचनीययुक्ते द्वितीये'ति लक्षणं क्रियते, तदा 'वृक्षं परि विद्योतते' इत्यत्र विशेषविहितत्वात् 'पञ्चम्यपाङ्परिभि'रिति पञ्चमी प्राप्नोति । 'साधुर्देवदत्तो मातरं प्रती'त्यत्र च 'साधुनिपुणाभ्या'मिति परत्वात्सप्तमी प्राप्नोति, तत्राप्रतेरिति वक्तव्यं भवतीति मत्वाह—प्रत्यादिभिश्च लक्षणादिष्विति ।

उ०—पञ्चमीति बोध्यम् । 'क्रोशाल्लक्ष्य'मित्यस्यैतः क्रोशादूर्ध्वं विद्यमानं लक्ष्यमित्यर्थः । तद् ध्वनयन्नाह—कर्मापादानयोरिति ॥ भाष्ये साधनशब्देन तद्गता शक्तिरुच्यते इत्याह—शक्तिरिति । शक्तेरतीन्द्रियत्वादाह—क्रियानुमितशक्तीति ॥७॥

कर्मप्र । पुनर्द्वितीयेति । 'वार्तिकेने'ति शेषः । भाष्ये—तावदुक्तमप्रतेरिति । तत्रत्यः

* लक्षणेत्थंभूत॰ प्रतिपर्यनवः १ ४. ९०. १—काचित्कः पाठः ।

† साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः २. ३ ४३.

परिदृष्टापचारो वर्जने चावर्जने चायं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव, तस्य कोऽन्यो द्वितीयः सहायो भवितुमर्हत्यन्यदतो वर्जनार्थात्। तद्यथा—अस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते नाश्वो न गर्दभः ॥८॥

## यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ २ । ३ । ९ ॥

कथमिदं विज्ञायते—यस्य चैश्वर्यमीश्वरतेश्वरभावस्तस्मात्कर्मप्रवचनीययुक्तादिति, आहोस्विद्यस्य स्वस्येश्वरस्तस्मात्कर्मप्रवचनीययुक्तादिति। कश्चात्र विशेषः ?

**यस्य चेश्वरवचनमिति कर्तृनिर्देशश्चेदवचनात्सिद्धम् ॥ १ ॥**

यस्य चेश्वरवचनमिति कर्तृनिर्देशश्चेदन्तरेण वचनं सिद्धम्। अधि ब्रह्मदत्ते पञ्चालाः। आधृतास्ते तस्मिन्भवन्ति†। सत्यमेवमेतत्। नित्यं परिग्रहीतव्यं

प्र०—ततश्च पुनर्द्वितीयाविधानात् पूर्वोक्तदोषानवतारः। शिष्टं स्पष्टम् ॥८॥

यस्मादधि। इहाधि ब्रह्मदत्ते पञ्चाला अधि पञ्चालेषु ब्रह्मदत्त इति स्वस्वामिवाचिनोः पर्यायेण सप्तमीष्यते, अन्यतरस्यैव तु प्राप्नोतीति विचारः क्रियते। कथमिति। तत्र यदान्तरेणापि भावप्रत्ययमीश्वरशब्देनैश्वर्यमुच्यते। अथवेश्वर उच्यते अनेनेतीश्वरवचनम्—ऐश्वर्यमुच्यते तदा स्वामिनः सप्तमीत्ययमर्थो भवति। यदा यस्येत्यनेन स्वं निर्दिश्यते यस्य संबन्धीश्वर उच्यते तत्र स्वात् सप्तमीत्युक्तं भवति।

कर्तृनिर्देशश्चेति। ईशितात्र कर्तृत्वेनाभिमतः, तेन स्वामिनः सप्तमीत्युक्तं भवति। अवचनादिति। एतत्सूत्रारम्भेण विनापीत्यर्थः। आधृता इति। स्वामिन्याधारे पञ्चालाः स्थिता इत्यर्थः। ततश्चाधिकरणलक्षणा सप्तमी सिद्धेत्यर्थः। 'सप्तमी शौण्डै'रिति विकल्पेन समासविधानादधिब्रह्मदत्त इति ब्रह्मदत्ताधीना इति च भवति। विभक्त्यर्थवृत्तित्वे त्वधेरधिब्रह्मदत्तमिति च भवति। सत्यमिति। अधिकरणत्वं संमन्यते।

उ०—प्रतिलक्षणेत्थमिति सूत्रस्थप्रतिपर्यनूनामुपलक्षणमित्यर्थः। भाष्ये वर्जनार्थ एवेति। तत्रैवार्थे तस्य कर्मप्रवचनीयत्वादिति भावः ॥८॥

यस्मादधिकं। अन्यतरस्यैवेति। 'अधिरीश्वरे' इति ईश्वरसंबन्धेऽधेः कर्मप्रवचनीयत्वविधानेन संबन्धस्य च स्वस्वामिनिष्ठत्वेनोभयोः कर्मप्रवचनीययुक्तत्वेऽपि 'यस्य चेश्वरवचन'मित्यस्यावृत्तौ मानाभावेनान्यतरस्यैव प्राप्नोतीति भावः। तात्पर्यग्राहकाभावाद्भावप्रधानत्वेऽपरितुष्यन्नाह—अथवेति। प्रवृत्तिनिमित्तेनैश्वर्येण हि ईश्वर उच्यते इति ईश्वरवचनशब्देनैश्वर्यमुच्यत इत्यर्थः। यद्गतमैश्वर्यं तद्वाचकात्सप्तमी। तत्रेति। तदेति पाठ उचितः।

एतत्सूत्रेति। तदेकदेश 'यस्य चेश्वरवचन'मित्येतदित्यर्थः। ब्रह्मदत्ताधीना इति। 'अषडक्षे'त्यादिनाध्युत्तरपदत्वात् खः। अत एव 'परिग्रहीत्रधीन'मिति वक्ष्यमाणभाष्यप्रयोगोपपत्तिः। नन्वेवमधिनाव्ययीभावं न स्यादत आह—विभक्त्यर्थेति। संमन्यत इति। तृतीय उक्तोऽर्थं उपपत्तियुक्त इत्यनुमोदत इत्यर्थः। अनुमोदनाकारमाह भाष्ये—नित्य-

† सप्तम्यधिकरणे च २. ३ ३६.

परिग्रहीत्रधीनं भवति ?

**प्रथमानुपपत्तिः ॥ २ ॥**

प्रथमा नोपपद्यते । कुतः ? पञ्चालेभ्यः । का तर्हि स्यात् ? षष्ठीसप्तम्यौ—'स्वामीश्वराधिपति' [ २. ३. ३९ ] इति । न तत्राधिशब्दः पठ्यते । यद्यपि न पठ्यतेऽधिरीश्वरवाची । न तत्र पर्यायवचनानां ग्रहणम् । कथं ज्ञायते ? यदयं कस्यचित्पर्यायवचनस्य ग्रहणं करोति—'अधिपतिदायादे'ति ।

षष्ठी तर्हि प्राप्नोति । शेषलक्षणा† षष्ठ्यशेषत्वान्न भविष्यति ।

द्वितीया तर्हि प्राप्नोति 'कर्मप्रवचनीययुक्ते द्वितीया' [ २. ३. ८ ] इति* । सप्तम्योक्तत्वात्तस्याभिसम्बन्धस्य द्वितीया न भविष्यति । भवेद्योऽधे-

प्र०— प्रथमानुपपत्तिस्त्विति । सप्तमीविधानमनर्थकं प्रथमा च स्यान्न प्राप्नोतीति दोषद्वयोपन्यासः । अधिरीश्वरवाचीति । 'स्वामीश्वरे'त्यर्थग्रहणात्पर्यायाणामपि ग्रहणं मन्यते । षष्ठी तर्हीति । स्वस्वामिसंबन्धसद्भावात् । अशेषत्वादिति । प्रातिपदिकार्थमात्रनिष्ठत्वाद्व्यतिरेकाभावात् । द्वितीया तर्हीति । 'अधिरीश्वर' इत्यधेः कर्मप्रवचनीयत्वात् । सप्तम्येति । ब्रह्मदत्तशब्दादनेन द्वितीयापवादेन विधीयमानया सप्तम्योभयगतस्य संबन्धस्याभिधानात्पञ्चालशब्दाद् द्वितीया न भवतीत्यर्थः । भवेदिति । 'अधिरीश्वर' इत्यत्रेश्वरेणेशितव्यस्याप्याक्षेपादीशितव्यस्याप्यधिना योगोऽस्तीति भावः ।

उ०-मित्यादि । परिग्रहीत्रधीनम् । परिग्रहीत्राधारकमित्यर्थः ।

प्रथमा चेति । भाष्ये तुशब्दश्चार्थे इति भावः । सूत्रारम्भे तस्य वैयर्थ्यं प्रथमानुपपत्तिश्चेति दोषद्वयमिति तृतीयो वदतीति तात्पर्यम् । एतत्सूत्रसत्त्वे हि 'अधिरीश्वरे' इति कर्मप्रवचनीयसंज्ञाविधायकं कार्यम् । तथा चाधेः कर्मप्रवचनीयत्वात्तद्योगस्योक्तरीत्या स्ववाचकेऽपि सत्त्वाद् द्वितीया प्राप्नोतीति दोषः । एतत्सूत्राभावे तु ऐश्वर्यविषयाधेः क्रियायोगाभावेन गत्यादिसंज्ञाबाधकफलाभावात्कर्मप्रवचनीयसंज्ञाया अप्यभावेन कर्मप्रवचनीययोगाभावाद् द्वितीयाप्राप्तौ प्रथमा सिध्यतीति भावः ।

भाष्ये 'का तर्हि स्यात्षष्ठीसप्तम्या'वित्यादिरेकदेश्युक्तिः । अधिपतिदायादेति । यस्य यो दायादः स तद्धनादिस्वामित्वात् स्वामीति लोके व्यवह्रियत इति ईश्वरपर्यायाविमाविति भावः । व्यतिरेकाभावादिति । भेदसंबन्धेनेतरान्वयित्वाभवादित्यर्थः । ननु ईश्वरत्वद्योतकस्येश्वरापेक्षया कर्मप्रवचनीयस्याधेः कथं पञ्चालसंबन्धद्योतकत्वं येन ततो द्वितीया स्यादत आह—अधिरीश्वर इत्यधेरिति । ऐश्वर्यविषयार्थद्योतकस्याधेरिति तदर्थं इति भावः । एवं च परस्परप्रतियोगिकसंबन्धस्य परस्परनिष्ठस्य तेन द्योतनादस्येव तत्प्राप्तिरिति भावः । उभयगतस्य संबन्धस्येति । विशेषणादुत्पन्नया षष्ठ्यैवेति भावः । भाष्ये—अधेर्ब्रह्मदत्तस्य चेति । अधिद्योत्यो

† षष्ठी शेषे २. ३. ५०. * अधिरीश्वरे १. ४. ९७ १—'तस्यार्थस्य' पा० ।

र्ब्रह्मदत्तस्य चाभिसंबन्धः स सप्तम्योक्तः स्याद् यस्तु खल्वधेः पञ्चालानां चाभिसंबन्धस्तत्र द्वितीया प्राप्नोति ।

**स्ववचनात्[1] सिद्धम् ॥ ३ ॥**

अस्तु 'यस्य स्वस्येश्वरस्तस्मात्कर्मप्रवचनीययुक्ता'दिति ॥ एवमप्यमन्तरेण वचनं सिद्धम् । अधि ब्रह्मदत्तः पञ्चालेषु । आधृतः स तेषु भवति । सत्यमेवमेतत् । नित्यं परिग्रहीता परिग्रहीतव्याधीनो भवति ।

[2]प्रथमानुपपत्तिस्तु । प्रथमा तु नोपपद्यते । कुतः ? ब्रह्मदत्तात् । का तर्हि स्यात् ? षष्ठीसप्तम्यौ—'स्वामीश्वराधिपती'ति । न तत्राधिशब्दः पठ्यते । यद्यपि न पठ्यतेऽधिरीश्वरवाची । न तत्र पर्यायवचनानां ग्रहणम् । कथं ज्ञायते ? यदयं कस्यचित्पर्यायवचनस्य ग्रहणं करोति—'अधिपतिदायादे'ति ।

षष्ठी तर्हि प्राप्नोति । शेषलक्षणा षष्ठ्यशेषत्वान्न भविष्यति ।

द्वितीया तर्हि प्राप्नोति 'कर्मप्रवचनीययुक्ते द्वितीये'ति । सप्तम्योक्तत्वात्तस्याभिसंबन्धस्य द्वितीया न भविष्यति । भवेद्योऽधेः पञ्चालानां चाभिसंबन्धः स सप्तम्योक्तः स्याद् यस्तु खल्वधेर्ब्रह्मदत्तस्य चाभिसंबन्धस्तत्र द्वितीया प्राप्नोति ।

एवं तर्हि 'स्ववचनात् सिद्धम्' । अधिः स्वं प्रति कर्मप्रवचनीयसंज्ञो भवतीति वक्तव्यम् * ।

प्र०– इदानीं द्वितीयं वाक्यार्थं दर्शयितुमाह–स्ववचनादिति । 'यस्येश्वरवचन'मित्यनेन स्वस्य सप्तमीप्रकृतित्वेन वचनात्प्रतिपादनात् । 'स्ववचनात्तु सिद्ध'मित्येतदप्यन्यथाव्याख्यातुमाह–एवं तर्हीति । 'अधिरीश्वरे' इत्यत्रेश्वरग्रहणमपनीय 'अधिः

उ०–ब्रह्मदत्तनिष्ठः संबन्ध इत्यर्थः । एवमग्रेऽपि । चस्तूभयत्रापि वाक्यालङ्कारे । ईशितव्यस्येति । ऐश्वर्यविषयाधेः कर्मप्रवचनीयत्वमिति तदर्थः । षष्ठी तु विशेषणादुत्पन्नाप्युभयगतं संबन्धं सामर्थ्याद्बोधयति । परत्र तद्बोधकविभक्त्यविधानात् । अत्र तु परत्रापि तद्बोधकविभक्तिप्राप्त्या विशेष्यनिष्ठसंबन्धबोधकत्वं न विशेषणविभक्तेरिति तात्पर्यम् । द्वितीया प्रथमापवादिकापीत्यभिमानः ।

सूत्रे स्वपदानुपादाने कथ स्ववचनात्प्राप्तिरत आह—यस्येति । तत्र 'द्वितीया प्राप्नोति'त्यन्तं भाष्यं पूर्ववदेव व्याख्येयम् ।

अत्र पक्षे द्वितीयावारणायाह भाष्ये—एवं तर्हीति । 'स्ववचना'दिति वर्तिकमेवैतद्दोषवारकमपीति व्याचष्ट इत्याह–अन्यथाव्याख्यातुमिति ।

१–'स्ववचनात्' पा० । २–इदं वार्तिकमिति केचित् । * अधिरीश्वरे १. ४. ९७.

एवमपि यदा ब्रह्मदत्तेऽधिकरणे सप्तमी तदा पञ्चालेभ्यो द्वितीया प्राप्नोति[1] 'कर्मप्रवचनीययुक्ते द्वितीये'ति। 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति प्रथमा भविष्यति ॥९॥

## गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥२।३।१२॥

### अध्वन्यर्थग्रहणम् ॥ १ ॥

अध्वन्यर्थग्रहणं कर्तव्यम्। इह मा भूत्-पन्थानं गच्छति। वीवधं गच्छतीति।

प्र०-स्वे' इति वक्तव्यम्। तत्र स्वमेव प्रत्यधिः कर्मप्रवचनीयसंज्ञः, तस्मादेवानेन सप्तमी विधीयते। तेन स्वामिनं प्रत्यधेः कर्मप्रवचनीयत्वाभावात्ततो द्वितीयाया अभावः। तेनाधिपञ्चालेषु ब्रह्मदत्त इति सिद्धम्। 'अधिब्रह्मदत्ते पञ्चाला' इत्येतदधिकरणसप्तम्या सिद्धम्।

अत्र तु दोषमुद्भाव्य परिहरति-एवमपीत्यादिना भविष्यतीत्यन्तेन। तिष्ठन्ति सन्ति वेति स्थानादिक्रियापेक्षया पञ्चालानां कर्तृत्वात्कारकविभक्तिः प्रथमेति भावः। कर्मप्रवचनीयसंज्ञा त्वधिपञ्चालेषु ब्रह्मदत्त इत्यत्र चरितार्था। यथाधिकरणत्वं द्वयोरपि स्वस्वामिनोर्दर्शितं तथाधिरीश्वर इति 'यस्य चेश्वरवचन'मिति च न कर्तव्यम्। ऐश्वर्यविषयस्य चाधेः क्रियायोगाभावाद् गत्युपसर्गसंज्ञाबाधनार्थोऽपि संज्ञाविधिर्नोपयुज्यते॥९॥

गत्यर्थे। 'स्वं रूप'मिति वचनात्स्वरूपस्यैव ग्रहणं प्राप्तमित्याह-अध्वन्यर्थग्रहणमिति। तेनाध्वपर्यायेभ्योऽपि चतुर्थी प्रतिषेधो भविष्यति। द्वितीया तु 'कर्मणि

उ०- भाष्ये-एवपीति। अधेः स्वं प्रति कर्मप्रवचनीयत्वादिति भावः। ननु संज्ञाविधानसामर्थ्याद् द्वितीया प्रथमां बाधेतेत्यत आह-कर्मप्रवचनीयसंज्ञा त्विति। तद्योगेऽपवादविधेस्तस्याः संज्ञाया द्वितीयाविधावनुपस्थानमित्यर्थः। 'उपपदविभक्ते'रिति न्यायेनैव 'षष्ठी शेष' इतिसूत्रे वक्ष्यमाणया पुरुषादिप्रधानपदात्षष्ठीवारकयुक्त्याप्यत्र द्वितीया वारयितुं शक्येति बोध्यम्। यथाधिकरणत्वमिति। केचित्तु अधिकरणसप्तम्यां संज्ञासूत्राभावेन द्वितीयायाः प्राप्त्यभावेन सूत्रप्रत्याख्याने तात्पर्ये सति स्वं प्रति कर्मप्रवचनीयत्वं नोपन्यस्येत्। तस्मात्स्वस्वामिभावविवक्षायामाधारत्वाविवक्षायां सप्तम्यर्थं 'यस्य चेश्वरवचनमधिरीश्वर इति च सूत्रद्वयं कार्यम्। विनिगमनाविरहेण च सूत्रद्वयस्योभयत्रार्थे तात्पर्यमित्येव भाष्यतात्पर्यं लभ्यते न तु प्रत्याख्याने। 'अधिरीश्वरे' इत्येतदीश्वरत्वे द्योत्ये ईश्वरे द्योत्य इति वा व्याख्येयम्। अन्त्ये स्वं प्रति कर्मवचनीयत्वं लभ्यते। किं चाधिकरणसप्तम्यां पञ्चालेषु द्वितीयावारकयुक्त्यैव पञ्चालेषु सप्तम्यां ब्रह्मदत्तादपि वारयितुं शक्यत्वेन 'स्ववचनात्तु सिद्ध'मित्यस्यायुक्तत्वे एव भाष्यतात्पर्यमित्याहुः॥ ९॥

गत्यर्थे। तर्ह्यध्वादिभ्यो द्वितीयापि न स्यादत आह-द्वितीयेति। भाष्ये-वीवध-

१-'प्राप्नोति। कथम्? कर्मप्रवचनीय' पा०।

## आस्थितप्रतिषेधश्च ॥ २ ॥

आस्थितप्रतिषेधश्चायं वक्तव्यः। यो ह्युत्पथेन पन्थानं गच्छति 'पथे गच्छती'त्येव तत्र भवितव्यम्।

किमर्थं पुनरिदमुच्यते? चतुर्थी यथा स्यात्। अथ द्वितीया सिद्धा? सिद्धा 'कर्मणी'त्येव†। चतुर्थ्यपि सिद्धा। कथम्? 'संप्रदान' इत्येव‡। न सिध्यति। 'कर्मणा यमभिप्रैति स संप्रदानम्' [१.४.३२] इत्युच्यते क्रियया चासौ ग्राममभिप्रैति। कया क्रियया? गमिक्रियया। क्रियाग्रहणमपि तत्र चोद्यते*।

प्र०-द्वितीये'ति भवति। आस्थितप्रतिषेध इति। आस्थित आक्रान्तः सन् यदा पन्था गम्यते तदानध्वनीति प्रतिषेधः। यदा तूत्पथेन पन्था आक्रमितुमिष्यते तदा भवत्येव चतुर्थी॥ किमर्थमिति। अन्तरेणाप्येतत्सूत्रं द्वितीयाचतुर्थ्योः सिद्धत्वादिति प्रश्नः।

क्रियाग्रहणमपीति। यद्यपि तत्र क्रियाग्रहणं प्रत्याख्यातं तथापि तत्रैव न्यायस्योक्तत्वाद्वचनमाश्रित्यास्य सूत्रस्य प्रत्याख्यानं कृतम्। अथवा तत्रत्यन्यायस्मरणार्थमिदमुक्तम्। तत्र यदा गमनस्य संदर्शनादीनां च भेदो विवक्ष्यते तदा संदर्शनादिभिः क्रियाभिराप्यमानत्वात् कर्मणा गमनेनाभिप्रेयमाणस्य संप्रदानत्वाच्चतुर्थी भवति। यदा त्वभेदविवक्षा तदा गमनस्य कर्मत्वाभावाद् ग्रामः कर्मैव भवतीति द्वितीया भवति। भेदाभेदविवक्षा च लौकिकप्रयोगानुसारेण नियतविषयेत्यारम्भप्रत्याख्यानयोर्नास्ति फलभेदः। अत एवापवादविषयेऽपि द्वितीयाविधानार्थं 'चतुर्थी वे'ति वक्तव्ये द्वितीयाग्रहणं प्रत्याख्यानेन भिन्नफलत्वादव्याख्यानीयम्।

उ०-मिति। 'पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ' इत्यमरः। 'पर्याहाराध्वभारेषु समौ विवधवीवधौ' इति नानार्थकोशः। भाष्ये—पथे गच्छतीत्येव तत्र भवितव्यमिति। एवकारो भिन्नक्रमः। इति तत्र भवितव्यमेवेत्यर्थः।

प्रत्याख्यातमिति। तथा चैतन्मात्रफलसाधकतद्वचनारम्भेणैतद्वचनप्रत्याख्यानं न चमत्कारीति भावः। न्यायस्येति। तत्फलस्यान्यथा साधनेन तद्वचनप्रत्याख्यानान्नात्रापूर्वं तत्कर्तव्यं भवतीति भावः। तदेव ध्वनयन्व्याख्यान्तरमाह—अथवेति। न्यायमेव दर्शयति—तत्र यदेति। भेदे इति। संयोगानुकूलव्यापाराद्यदा भेदो विवक्ष्यत इत्यर्थः। एतच्च 'कर्तरि कर्मे'ति सूत्रे, संप्रदानसंज्ञासूत्रे च निरूपितं तत एवावधार्यम्। संयोगश्च कर्तृनिष्ठ एव फलत्वेन विवक्ष्यते इत्यपि बोध्यम्। अन्यथा परत्वात्कर्मत्वमेव स्यादित्याहुः। यदा त्वभेदेति। ग्रामनिष्ठसंयोगानुकूलत्वेनैव यदा विवक्षेत्यर्थः। अत एवेति। 'चतुर्थी वे'ति वक्तव्ये द्वितीया-

† कर्मणि द्वितीया २. ३. २ ‡ चतुर्थी सम्प्रदाने २. ३. १३.
* क्रियाग्रहणमपि कर्तव्यम् १. ४. ३२. भाष्ये पृ० ४०१.

**चेष्टायामनध्वनि स्त्रियं गच्छत्यजां नयतीत्यप्रसङ्गः ॥ ३ ॥**

चेष्टायामनध्वनि स्त्रियं गच्छत्यजां नयतीत्यतिप्रसङ्गो भवति ।

**सिद्धं त्वसंप्राप्तवचनात् ॥ ४ ॥**

सिद्धमेतत् । कथम् ? असंप्राप्ते कर्मणि द्वितीयाचतुर्थ्यौ भवत इति वक्तव्यम् ।

**अध्वनश्चानपवादः ॥ ५ ॥**

एवं च कृत्वानध्वनीत्येतदपि न वक्तव्यं भवति । संप्राप्तं ह्येतत्कर्माध्वानं गच्छतीति ॥१२॥

## चतुर्थी संप्रदाने ॥ २ । ३ । १३ ॥

**चतुर्थीविधाने तादर्थ्य उपसंख्यानम् ॥ १ ॥**

चतुर्थीविधाने तादर्थ्य उपसंख्यानं कर्तव्यम् । यूपाय दारु । कुण्डलाय हिरण्यम् ।

प्र०– इदानीं सूत्रस्यातिव्याप्त्युद्भावनायाह–चेष्टायामिति । सिद्धं त्विति । असंप्राप्तं यद्वस्तु गमनेन संप्रेप्स्यते तस्मिन् कर्मणीत्यर्थः । स्त्री तु संप्राप्तेति चतुर्थ्यभावः । 'अजां नयती'त्यत्राप्यजायाः संप्रापणाच्चतुर्थ्यभावः । अथवा नयतिर्गत्यर्थ एव न भवति । प्रतीयते ह्यत्र गतिः, न ह्यसौ नयतेरर्थः, तस्य प्रापणवाचित्वादित्याहुः ।

अध्वनश्चेति । यदा त्वसंप्राप्तोऽध्वा भवति तदा भाव्यमेव चतुर्थ्या–अध्वने गच्छतीति प्रागेवोक्तम् ॥१२॥

चतुर्थी सं० । तादर्थ्य इति । तच्छब्देन कार्यं निर्दिश्यते । तस्मायिदं तदर्थमिति समासेन विशिष्टकार्यप्रयोजनं कारणमभिधीयते । तदर्थस्य भावस्तादर्थ्यमिति कार्यकारणसंबन्ध उच्यते, 'समासकृत्तद्धितेषु भावप्रत्ययेन संबन्धाभिधान'मिति वचनात् । तत्र द्विष्ठत्वेऽपि संबन्धस्य यथा षष्ठी विशेषणादेव भवति न विशेष्याद् 'राज्ञः पुरुष' इति, तथा चतुर्थी–यूपाय दार्विति । हेताविति तृतीयापि दारुशब्दान्न भवति, हेतु-

उ०–ग्रहणमपवादकर्तृकर्मणोरितिषष्ठीविषये कृद्योगेऽपि द्वितीयार्थमिति न व्याख्यानीयं, प्रत्याख्यानेन भिन्नफलत्वादित्यन्वयः । 'अप्रत्याख्यानीय'मिति पाठान्तरे तु 'चतुर्थी वे'ति वक्तव्ये द्वितीयाग्रहणमपवादविषयेऽपि द्वितीयाविधानार्थमिति न भवति । तस्य तथात्वे हि प्रत्याख्यानेन सह भिन्नफलत्वादिदं सूत्रमप्रत्याख्यानीयं स्यादिति योजना । एवं च भाष्यमते 'ग्रामस्य गन्ते'त्यादौ षष्ठ्येवेति भावः । अथवा नयतिरिति । एतन्नगतीत्यत्र निरूपितम् ॥१२॥

चतुर्थी सं० । तादर्थ्यशब्दार्थमाह–तच्छब्देनेति । कार्यप्रयोजनमिति बहुव्रीहिः । कार्यप्रयोजकमित्यर्थः । 'ब्राह्मणाय दधी'त्यादौ दध्नो ब्राह्मणकारणत्वाभावादुक्तं–विशिष्टकार्येति । भोजनविशिष्टो ब्राह्मणस्तत्रापि कार्यमिति भावः । सोऽर्थो यस्येति बहुव्रीहिस्तु नोक्तः, तत्पुरुषस्यान्तरङ्गत्वात । यथा षष्ठीति । विशेषणनिष्ठतयैव सम्बन्धस्योद्भूततया प्रतीतेरिति

किमिदं तादर्थ्यमिति ? तदर्थस्य भावस्तादर्थ्यम् । तदर्थं पुनः किम् ? सर्वनाम्नोऽयं चतुर्थ्यन्तस्यार्थशब्देन सह समासः । कथं चात्र चतुर्थी ? अनेनैव । यद्येवमितरेतराश्रयं भवति । केतरेतराश्रयता ? निर्देशोत्तरकालं चतुर्थ्या भवितव्यं चतुर्थ्या च निर्देशस्तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्यर्थशब्देन योगे चतुर्थी'ति यदयं 'चतुर्थी तदर्थार्थ' [ २. १. ३६ ] इति चतुर्थ्यन्तस्यार्थशब्देन सह समासं शास्ति ॥ न खल्वप्यवश्यं चतुर्थ्यन्तस्यैवार्थशब्देन सह समासो भवति । किं तर्हि ? षष्ठ्यन्तस्यापि भवति ? तद्यथा—गुरोरिदं गुर्वर्थमिति ।

प्र०—हेतुमद्भावस्य चतुर्थ्यैव गमितत्वात् । प्रातिपदिकार्थव्यतिरेके च हेतुतृतीयाया विधानात्, इह च प्रातिपदिकार्थव्यतिरेकाभावात् ।

तस्मायित्युपकार्यं हि कार्यं प्रत्यवमृश्यते ।
तदर्थशब्दात्संबन्धे भावप्रत्यय इष्यते ॥
गम्यमानविभक्तित्वाच्चतुर्थी कार्यवाचिनि ।
गुणे कृतास्पदा तस्मात्कारणं नावगाहते ॥

किमिदमिति । तस्मा इदमिति सत्यां चतुर्थ्या समासः, सति समासे तदनुवादेन चतुर्थीविधानमितीतरेतराश्रयत्वं मत्वा प्रश्नः । षष्ठ्यन्तस्यापीति । संबन्धसामान्यविवक्षायां षष्ठ्यस्त्येव ।

उ०—भावः । विभक्त्याभिधानेऽपि तिङादिभिरनभिधानाद्धेतौ तृतीया स्यादेवेत्यत आह—प्रातिपदिकार्थव्यतिरेके चेति । षष्ठीविषये हेतुतृतीयाविधानादिति भावः । प्रातिपदिकार्थेति । हेतुत्वेनेतरान्वये च तृतीया भवति । एतदर्थस्य च क्वचिदर्थे तेनान्वयाभावादिति भावः ।

उक्तमर्थं श्लोकाभ्यां संगृह्णाति—तस्मायीति । उपकार्यं हीति । विद्यमानमेव यत्किंचिदुपकारविशिष्टं कार्यमित्यर्थः । तेन 'घटाय दण्ड' इत्यादि नेत्याहुः । 'मोक्षाय हरिं भजती'त्यादौ 'क्रियया य'मिति संप्रदाने चतुर्थी बोध्या । गम्यमानविभक्तित्वादिति । 'चतुर्थी तदर्थे'ति सूत्रेण ज्ञाप्यमानविभक्तित्वादित्यर्थः । तद्धि ज्ञापकं कार्यवाचकाच्चतुर्थ्यां सत्यामेव सङ्गच्छते इति भावः ।

तदनुवादेनेति । तदर्थानुवादेनेत्यर्थः । नित्यशब्दत्वेनान्यत्रोक्तेनात्रापीतरेतराश्रयपरिहारः सुकरस्तथापि कार्यवादेऽपि परिहर्तुमाह—तत्तर्हीति । चतुर्थीविधायकमन्यद्वचनमित्यर्थः । वस्तुत इतरेतराश्रयत्वमेव नेत्याह—न खल्वपीति । यदि चतुर्थीसमासं विनान्यः समासो न स्यात्, स्यादेवेतरेतराश्रयः । अस्ति चात्र षष्ठीसमास इत्याशयः । नन्वत्र षष्ठी कथमित्यत आह—सम्बन्धसामान्येति । तादर्थ्येन बोधे चतुर्थी, सम्बन्धत्वेन बोधे षष्ठीति भावः । षष्ठीसमासोऽप्येतद्विषये शब्दशास्त्रस्वाभाव्यान्नित्यसमास इत्याशयेनाह भाष्ये—गुरोरिदमिति ।

यदि तादर्थ्य उपसंख्यानं क्रियते नार्थः संप्रदानग्रहणेन । योऽपि ह्युपाध्यायाय गौर्दीयत उपाध्यायार्थः स भवति, तत्र तादर्थ्य इत्येव सिद्धम् ॥ अवश्यं संप्रदानग्रहणं कर्तव्यं यान्येन लक्षणेन संप्रदानसंज्ञा तदर्थम् । छात्राय रुचितम् । छात्राय स्वदितमिति* ।

तत्तर्ह्युपसंख्यानं कर्तव्यम् ? न कर्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति 'भवति तादर्थ्ये चतुर्थी'ति यदयं 'चतुर्थी तदर्थार्थे'ति चतुर्थ्यन्तस्य तदर्थेन सह समासं शास्ति ।

## क्लृपि संपद्यमाने ॥ २ ॥

क्लृपि संपद्यमाने चतुर्थी वक्तव्या । मूत्राय कल्पते यवागूः । उच्चाराय कल्पते यवान्नमिति ।

## उत्पातेन ज्ञाप्यमाने ॥ ३ ॥

उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या ।

प्र०- क्लृपीति । संपत्तिरभूतप्रादुर्भाव उत्पत्तिरिह गृह्यत इति विकाराच्चतुर्थी । विकारस्य च प्रकृतिरूपारोपात्सामानाधिकरण्यम् । यच्च रूपमुपजायते ततश्चतुर्थीति प्रकृतेर्न

उ०- भाष्ये—यान्येनेति । 'रुच्यर्थाना'मित्यादिना । 'कर्मणा यमभिप्रैती'ति संज्ञाविधानं तु 'दाशगोघ्नौ संप्रदान' इत्यर्थम्, तत्संप्रदानकं दानमिति बोधार्थं च । दानकर्मणो गवादेः संप्रदानार्थत्वेऽपि दानक्रियायास्तदर्थत्वाभावे चतुर्थ्यन्तार्थस्य दानक्रियान्वयानापत्तिरिति तदन्वयार्थं चेति दिक् ।

भाष्ये—यदयमिति । यद्यपि समासः प्रकृतिविकृतिभाव एव, तथापि तज्ज्ञाप्या चतुर्थी सर्वत्रेति भावः ।

क्लृपि । 'सम्पत्ति'शब्देन अभूतप्रादुर्भावरूपा उत्पत्तिरुच्यत इत्याह—सम्पत्तिरिति । नन्वेवं प्रकृतिविकृत्योर्भेदसत्त्वेनाभेदान्वयोऽनुभवसिद्धो भज्येतेत्यत आह—विकारस्य चेति । तथा च प्रकृतिवाचकसमानाधिकरणत्वात्प्राप्तप्रथमाविभक्तेरपवादोऽयमिति भावः । विरुद्धार्थकविभक्तिराहित्याच्च सामानाधिकरण्येनान्वय इति बोध्यम् । ननु सामानाधिकरण्ये प्रकृतेरपि चतुर्थी स्यादत आह—यच्च रूपमिति । अपादानविवक्षेति । अपादानपदेन शक्तिः । कल्पेरुत्पत्त्यर्थत्वे इदम् । अत्र वदन्ति—कल्पत इत्यादेः परिणमत इत्यर्थः । परिणामश्च रूपान्तरप्राप्तिः । तदेकदेशे रूपान्तरे मूत्रादेर्विकारस्याभेदेनान्वयेन ततो द्वितीयायां प्राप्तायां तद्बाधेन चरितार्था चतुर्थी अभेदविवक्षायां परत्वात्प्रथमया बाध्यते । 'यवागूर्मूत्रं

* रुच्यर्थानां प्रीयमाणः १. ४. ३३.

वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता[1] भवति सस्याय दुर्भिक्षाय सिता भवेत् ॥

मांसौदनाय व्याहरति मृगः ।

**हितयोगे च ॥ ४ ॥**

हितयोगे चतुर्थी वक्तव्या । हितमरोचकिने । हितमामयाविने ॥१३॥

## नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ॥ २ । ३ । १६ ॥

**स्वस्तियोगे चतुर्थी कुशलार्थैराशिषि वाविधानात् ॥ १ ॥**

स्वस्तियोगे चतुर्थी कुशलार्थैराशिषि वाविधानाद्भवति विप्रतिषेधेन* । स्वस्तियोगे चतुर्थ्या अवकाशः—स्वस्ति जाल्माय । स्वस्ति वृषलाय । कुशलार्थैराशिषि वाविधानस्यावकाशः—अन्ये कुशलार्थाः । कुशलं देवदत्ताय । कुशलं देवदत्तस्य । इहोभयं प्राप्नोति—स्वस्ति गोभ्यः । स्वस्ति ब्राह्मणेभ्य इति । चतुर्थी भवति विप्रतिषेधेन ।

**अलमिति पर्याप्त्यर्थग्रहणम् ॥ २ ॥**

प्र०-भवति । यदा तु प्रकृतेरपादानविवक्षा तदा विकाराच्चतुर्थी न भवतीति केचिदाहुः । अन्ये तु विरोधाभावात्तत्रापि चतुर्थीमिच्छन्ति ॥१३॥

नमःस्वस्ति । स्वस्तियोग इति । पूर्वविप्रतिषेधार्थं वचनम् । स्वस्ति जाल्मायेति । तत्त्वकथनमिदं जाल्मत्वादाशीरभावः । अलमिति । भूषणप्रतिषेधवाचिनोऽलंशब्दस्य निरासार्थं वचनम् । तेनालङ्कुरुते कन्याम्, अलं रोदनेनेति

उ०-कल्पते' इत्येव हि तदा । ध्वनितं चेदं हरदत्तेन । कल्पेरुत्पत्त्यर्थत्वे 'जनिकर्तु'रिति प्रकृतेः पञ्चम्यामपि विकृतिवाचकात्परत्वादुपपदविभक्तेरिति न्यायाच्च प्रथमैवेति दिक् ॥ अन्ये त्वित्यत्रैयमेवारुचिः । 'प्रकृत्यादिभ्य' इति तृतीयावत्प्रथमापवादोऽप्येषेत्यपरे । यद्यपि दारुयूपयोरिव यवागूमूत्रयोः प्रकृतविकारभावोऽस्ति, तथापि यवाग्वा मूत्रार्थत्वाभावान्न तादर्थ्यचतुर्थ्यास्य गतार्थता । एवमुत्पातेन ज्ञापिते इति वचनस्य सार्थक्यमूह्यम् ।

हितयोगे चेति । इदं 'तस्मै हित'मिति निर्देशाज्ज्ञापकात्सिद्धमित्याहुः । अरोचके 'रोगाख्याया'मिति ण्वुल् । लोकतो नपुंसकत्वम् । ततो मत्वर्थ इनिः । 'सर्वत्रामयस्योपसंख्यान'मित्यामयशब्दादिनिः । 'अन्यत्रापी'ति दीर्घः ॥१३॥

नमःस्वस्ति । पूर्ववीति । पुनर्विधानार्थेन चेनेदं सिद्धमिति कश्चित् । अलं रोदनेनेति ।

१-'कृष्णा सर्वविनाशाय' पा० । 'पीता वर्षाय विज्ञेया' इति काशिकापाठः ।
* चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः २. ३. ७३.

अलमिति पर्याप्त्यर्थग्रहणं कर्तव्यम् । इह मा भूत्—अलंकुरुते कन्यामिति ।

अपर आह—अलमिति पर्याप्त्यर्थग्रहणं कर्तव्यम् । इहापि यथा स्यात्—अलं मल्लो मल्लाय । प्रभुर्मल्लो मल्लाय । प्रभवति मल्लो मल्लायेति ॥१६॥

## मन्यकर्मण्यनादरे विभाषाप्राणिषु ॥ २ । ३ । १७ ॥

अप्राणिष्वित्युच्यते तत्रेदं न सिध्यति—न त्वा श्वानं मन्ये । न वा शुने मन्य इति ॥ एवं तर्हि योगविभागः करिष्यते—'मन्यकर्मण्यनादरे विभाषा' । ततो'ऽप्राणिषु' । अप्राणिषु च विभाषेति । इहापि तर्हि प्राप्नोति—न त्वा काकं मन्ये । न त्वा शुकं मन्य इति ।

यदेतदप्राणिष्वित्येतदनावादिष्विति वक्ष्यामि । इमे च नावादयो भविष्यन्ति । न त्वा नावं मन्ये यावत्तीर्णं न नाव्यम् । न त्वान्नं मन्ये यावद्भुक्तं न श्राद्धम् । अत्र येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्ति ।

प्र०–चतुर्थी न भवति । नन्वत्रोपपदविभक्तेः कारकविभक्तिर्बलीयसीति चतुर्थी न भविष्यतीत्यत आह—अपर आहेति । सूत्रेऽलंशब्दमपनीय पर्याप्त्यर्थग्रहणं कर्तव्यम् । तेन तत्पर्यायाणामपि ग्रहणं सिध्यति । अन्यथा स्वरूपस्यैव ग्रहणं स्यात् । अथवालमित्यर्थग्रहणं व्याख्येयमित्यर्थः ॥१६॥

मन्यकर्म । एवं तर्हीति । योगविभागेन प्राणिविषया विभाषा क्रियते—'न त्वा शुने मन्ये', 'न त्वा श्वानं मन्य' इति । 'अप्राणिष्वि'त्यनेन त्वप्राणिविषया—'न त्वा तृणाय मन्ये', 'न त्वा तृणं मन्य' इति । इहापीति । आद्येन योगेनेति भावः । तदेवं योगविभागेऽपि दोषदर्शनान्न्यासान्तराश्रयणेनेष्टं साधयितुमाह—यदेतदिति ।

उ०–रोदनं मा कुर्वित्यर्थः । एवं चात्र तृतीया कथं तस्माद्रोदनेन साध्यं नास्ति, अतस्तन्मा कुर्वित्यर्थः । भाष्ये 'पर्याप्त्यर्थग्रहण'मिति वार्तिकस्य द्विधा व्याख्यानेन प्रभ्वादियोगे षष्ठ्यपीति ध्वनितम् ॥ १६ ॥

मन्यकर्म । भाष्ये—इहापीति । यद्यपि प्राण्यप्राणिषु उभयत्राप्याद्येनैव सिद्धे उत्तरयोगेनाद्यस्यानित्यताज्ञापनात्क्वचिदेव प्रवृत्तिरिति 'न त्वां काक'मित्यादौ नातिप्रसङ्गस्तथापि योगविभागं विनापि सर्वसमाधानं वक्तुमयमुपक्रमः । अत्र भाष्ये 'येषु प्राणिषु नेष्यते' इत्यत्र बहुवचनेन शुककाकातिरिक्तप्राणिष्वपि निषेधो ध्वनितः, तदभिप्रेत्यैव वृत्तौ शृगालशब्द उदाहृतः । भाष्ये—न त्वा नावं मन्ये यावत्तीर्णं न नाव्यमिति । यावत्—यतः, नाव्यं नावा स्वल्पनौकया तार्यमपि त्वया महत्यापि न तीर्णमतस्त्वां नावमुडुपमपि न मन्ये इत्यर्थः । 'नौ'शब्देनोडुपं स्वल्पनौकोच्यते । 'त्वा'शब्दार्थस्तु महती नौः । एवं ह्यनादरो भवतीत्याहुः । एवं 'न त्वान्नं मन्ये यावद् भुक्तं न श्राद्ध'मित्यस्य यतः श्राद्धं श्राद्धीयैर्विप्रैर्न भुक्तमतस्त्वामपूपमन्नमोदनमपि न मन्ये इत्यर्थः ।

## मन्यकर्मणि प्रकृष्यकुत्सितग्रहणम् ॥ १ ॥

मन्यकर्मणि प्रकृष्यकुत्सितग्रहणं कर्तव्यम्। इह मा भूत्—त्वां तृणं मन्य इति ॥१७॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्।

# कर्तृकरणयोस्तृतीया ॥ २ । ३ । १८ ॥

## तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम् ॥ १ ॥

तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानं कर्तव्यम्। प्रकृत्याभिरूपः। प्रकृत्या दर्शनीयः। प्रायेण [1]याज्ञिकाः। प्रायेण [2]वैयाकरणाः। माठरोऽस्मि गोत्रेण। गार्ग्योऽस्मि गोत्रेण। समेन धावति। विषमेण धावति। द्विद्रोणेन

प्र०- प्रकृष्यकुत्सितग्रहणमिति। यद्वाचिनश्चतुर्थी विधीयते ततः प्रकर्षेण यदि कुत्सा प्रतिपाद्यते तदा चतुर्थी भवति न तु साम्यविवक्षायाम्। तेन प्रतिषेधयुक्तायां कुत्सायां चतुर्थीविधानं संपद्यते। क्वचित्प्रतिकृष्येति पाठस्तत्राप्ययमर्थः। तृणादेरपि निकृष्टत्वं यदा प्रतिपिपादयिषितं भवति तदा चतुर्थी, न तु साम्यविवक्षायाम्। प्रतिकृष्येति। निकृष्येत्यर्थः। 'मन्यकर्मण्यनादर उपमाने विभाषाप्राणिष्वि'त्यापिशलिरधीते स्म ॥१७॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे द्वितीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्।

कर्तृकरणयोः। प्रकृत्याभिरूप इति। क्रियापदाश्रवणात्कर्तृकरणयोरभावात् षष्ठ्यत्र प्राप्नोति। प्रायेणेति। 'प्राय'शब्दो बह्वर्थवाची। बहवो याज्ञिका इत्यर्थः। तत्र प्रथमा प्राप्नोति। गोत्रेणेति। प्रथमा षष्ठी वात्र प्राप्नोति। समेनेति। द्वितीया प्राप्नोति। द्विद्रोणेनेति। द्वयोर्द्रोणयोः समाहारो द्विद्रोणम्। पात्रादित्वात्स्त्रीत्वाभावः। अत्रापि

उ०- प्रकृष्यकुत्सितेति। 'परावरयोगे चे'ति क्त्वा। अतिशयविशिष्टकुत्सितत्वे प्रतिपाद्ये इत्यर्थः। तदाह—यद्वाचिन इति। त्वां तृणमिव मन्य इत्यादावप्यनादरस्य सत्त्वाद्वार्तिकारम्भ इति भावः। 'आपिशलि'वाक्येनोपमानवाचकात्ततोऽपि तिरस्कारे चतुर्थ्युच्यते ॥१७॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्योते द्वितीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्।

कर्तृकरणयोः। क्रियापदेति। क्रियानध्याहारे विभक्त्यन्तरबाधनाय वार्तिकमिति भावः। अभिरूपादिकं तु गुणो न क्रियेति तात्पर्यम्। षष्ठ्यत्रेति। प्रकृतिसम्बन्धी अभिरूप इति बोधादिति भावः। प्रथमा षष्ठी वेति। गोत्राभिन्नगर्गापत्यमिति बोधे आद्या, सामान्य-

१-'याज्ञिकः'। २-'वैयाकरणः' पा०।

धान्यं क्रीणाति । त्रिद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् क्रीणाति । साहस्रेणाश्वान् क्रीणाति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'कर्तृकरणयोस्तृतीये'त्येव सिद्धम् ।

इह तावत्प्रकृत्याभिरूपः प्रकृत्या दर्शनीय इति, प्रकृतिकृतं तस्याभिरूप्यम् ॥ प्रायेण याज्ञिकाः प्रायेण वैयाकरणा इति, एष तत्र प्रायो येन तेऽधीयते ॥ माठरोऽस्मि गोत्रेण गार्ग्योऽस्मि गोत्रेणेति, एतेनाहं संज्ञाये ॥ समेन धावति विषमेण धावतीति, इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते समेन पथा धावति विषमेण पथा धावतीति ॥ द्विद्रोणेन धान्यं क्रीणाति त्रिद्रोणेन धान्यं क्रीणातीति, तादर्थ्यात्ताच्छब्द्यम् । द्विद्रोणार्थं द्विद्रोणम् । । द्विद्रोणेन हिरण्येन धान्य क्रीणातीति ॥ पञ्चकेन पशून् क्रीणातीति, अत्रापि तादर्थ्यात्ताच्छब्द्यम् । पञ्चप-

प्र०-द्वितीया प्राप्नोति । पञ्चकेनेति । पञ्च परिमाणमस्य पञ्चकः संघः । तत्र द्वितीया प्राप्ता । पशूनित्यनेनैतत्समानाधिकरणम् । संघसंघिनोरभेदस्य विवक्षणात् । साहस्रेणेति । सहस्रपरिमाणः संघः साहस्रः । 'शतमानविंशतिके'त्यण् । पूर्ववदत्र द्वितीयाप्राप्तिः ।

प्रकृतिकृतमिति । गम्यमानापि क्रिया करणादिव्यपदेशनिमित्तं भवति । यथा 'प्रविश पिण्डी'मित्यत्र । इह च करणान्तरव्युदासाय प्रकृतेरेव करणत्वं विवक्षितम् । स्वभावेनायं कृतोऽभिरूपो न तु वस्त्रालङ्करणादिनेत्यर्थः । एष तत्र प्राय इति । बाहुल्यमित्यर्थः । तत्राध्ययनस्य करणत्वेन विवक्षितम् । इदमत्रेति । प्रतीयमानत्वाद्

उ०-विशेषभावसम्बन्धेन गोत्रसम्बन्धिगार्ग्यस्त्ववानिति बोधेऽन्येति भावः । गोत्रशब्देनागस्त्याष्टम'-सहर्ष्यपत्यम् । अत्रापीति । परिच्छेद्यपरिच्छेदकयोरभेदोपचारेण द्विद्रोणाभिन्नमित्यर्थात् । पञ्चके 'संख्याया अतिशदन्ताया' इति कन् ।

एष तत्र प्राय इति । तत्रोदाहरणे एष प्रायपदार्थो—येन हेतुना तेऽधीयत इत्यर्थः । तत्राध्ययनस्येति । अधीयत इति क्रियाध्याहार इति भावः । बहुभिरध्ययने ग्रहणधारणयोः सौकर्यं भवतीति बाहुल्यं तत्त्वेन विवक्षितमिति बोध्यम् । एतेनाहं संज्ञाये इति । अहं 'माठर' इति गोत्रेण परैः संज्ञाये इत्यर्थः । अप्रयोगे हेतुमाह—प्रतीयेति । अत्र केचित्—एवं रीत्या करणत्वादिव्युत्पादने हेताविति सूत्रस्येत्थंभूतलक्षण इत्यस्य च वैयर्थ्यापत्तिः । यदि तत्र द्रव्याद्यन्वयविवक्षायां सार्थक्यं तर्ह्यत्रापीति प्रत्याख्यानमत्रासिद्धान्त्येकदेश्युक्तिरेव ।

१–गोत्रावयवात् ४. १. ७९. सूत्रभाष्ये ५३९ तमे पृष्ठे टिप्पणी २ द्रष्टव्या ।

श्चर्थः पञ्चकः । पञ्चकेन पशून् क्रीणातीति ॥ साहस्रेणाश्वान् क्रीणातीति, सहस्रपरिमाणं साहस्रम् । साहस्रेण हिरण्येनाश्वान् क्रीणातीति ॥१८॥

## सहयुक्तेऽप्रधाने ॥ २ । ३ । १९ ॥

किमुदाहरणम् ? तिलैः सह माषान् वपतीति । नैतदस्ति[1] । तिलैर्मिश्रीकृत्य माषा उप्यन्ते तत्र 'करण' इत्येव सिद्धम्* । इदं तर्हि—'पुत्रेण सहागतो देवदत्त' इति । अप्रधाने कर्तरि तृतीया यथा स्यात् । एतदपि नास्ति प्रयोजनम् । प्रधाने कर्तरि लादयो भवन्तीति प्रधानकर्ता क्तेनाभिधीयते, यश्चाप्रधानं सिद्धा तत्र 'कर्तरि'त्येव तृतीया* ।

प्र० द्विद्रोणपञ्चकसाहस्रशब्दास्तत्क्रयार्थे मूल्ये उपचाराद्वर्तन्त इति करणत्वात्तृतीयासिद्धिः ॥१८॥

सहयुक्तेऽप्रधाने । किमुदाहरणमिति । सूत्रान्तरेण तृतीयासिद्धिं मत्वा पृच्छति । तिलैः सहेति । अत्र माषा उप्यमानत्वात् प्रधानं कर्म । तिलास्तु तथायुक्ततया वृक्षमूलानीवोपसर्पणेऽप्रधानकर्माणीति द्वितीयायां प्राप्तायां तृतीयाविधिः । तिलैर्मिश्रीकृत्येति । अन्तरङ्गत्वात्पूर्वं मिश्रणक्रियायां तिलाः करणत्वं प्रतिपद्यन्ते । पश्चाद्वपनक्रियायां कर्मत्वमिति सिद्धा तृतीयेत्यर्थः । पुत्रेण सहागत इति । पितुरेवात्रागमनक्रियायां शाब्दं कर्तृत्वं न तु पुत्रस्येत्यप्राप्ता तृतीया विधीयते ।

लादय इति । आदिशब्देन क्तादीनां ग्रहणम् । तत्रैकेन शब्देन भिन्नकक्षत्वाद् गुणप्रधानयोः कर्त्रोरभिधानासंभवात्प्रधाने कार्यसंप्रत्ययात्प्रधानस्यैवाभिधानं न्याय्य-

उ०-सम्बन्धसामान्यविवक्षायां षष्ठीबाधनार्थमावश्यकत्वाच्चेत्याहुः । अनभिधानेन भगवता प्रत्याख्यातमित्यन्ये ॥१८॥

सहयुक्तेऽप्रधाने । ननु माषाणामिव तिलानामपि वापक्रिययेप्सितत्वादप्राधान्यमसिद्धमत आह—तथायुक्ततयेति । वस्तुतः सहार्थविशेषणत्वमप्राधान्यमिति न दोषः । ननु वापापेक्षया कर्मत्वेन मिश्रीकरणस्य च तदर्थत्वेनाप्राधान्यान्न्यायविरुद्धा तृतीयेत्याशङ्क्याह—अन्तरङ्गत्वादिति । अन्तरङ्गत्वोपपादनमेव—पूर्वमित्यादि । पूर्वं मिश्रणक्रियासम्बन्धे तदर्थत्वमपि न स्यादिति भावः । न तु पुत्रस्येतीति । तस्य सहार्थबलादनुमीयमानं कर्तृत्वमिति तृतीयाया अप्राप्तिरिति भावः ।

एकेन शब्देन—क्तेन । गुणप्रधानयोरिति । प्रतीयमानोपात्तक्रियापेक्षत्वेन तादृशयोः कर्त्रोरित्यर्थः । भाष्ये—अप्रधाने इत्यस्य प्रतीयमानक्रियाकर्तरीत्यर्थः । प्रधानकर्तरीत्य-

१-निर्णयसागरीये संस्करणे इदं नास्ति । * कर्तृकरणयोस्तृतीया २. ३. १८.

इदं तर्हि—'पुत्रेण सहागमनं देवदत्तस्ये'ति । षष्ठ्यत्र बाधिका भविष्यति† ।

इदं तर्हि—'पुत्रेण सह स्थूलः' । 'पुत्रेण सह पिङ्गल' इति ।

इदं चाप्युदाहरणं 'तिलैः सह माषान् वपती'ति । ननु चोक्तं 'तिलैर्मिश्रीकृत्य माषा उच्यन्ते तत्र 'करण' इत्येव सिद्ध'मिति । भवेत्सिद्धं यदा तिलैर्मिश्रीकृत्योप्येरन् । यदा तु खलु कस्यचिन्माषबीजावाप उपस्थितस्तदर्थं च क्षेत्रमुपार्जितं तत्रान्यदपि किंचिदुप्यते 'यदि भविष्यति भविष्यती'ति तदा न सिध्यति ।

प्र०–मित्यप्रधानस्य प्रतीयमानगमिक्रियापेक्षकर्तृत्वाश्रयेण तृतीया सिद्धेत्यर्थः । पुत्रेण सहागमनमिति । ल्युटा कर्तुरनभिहितत्वादुभयत्र तृतीयाप्रसङ्गे नियमार्थमिदम्—'अप्रधान एव तृतीया भवति न तु प्रधान' इति । षष्ठ्यत्रेति । 'कर्तृकर्मणोः कृती'त्यनेन । सा च प्रधानयोरेव कर्तृकर्मणोः प्राधान्यादेव स्मर्यत इत्यप्रधाने कर्तरि न भविष्यति । यदा तु कृद्ग्रहणमप्रधानकर्तृप्रतिपत्त्यर्थं 'भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठाना'मिति, तदा षष्ठीबाधनाय तृतीयाविधानमत्रापि भवत्येव । पुत्रेण सह स्थूल इति । गुणसंबन्धप्रतिपादनपरत्वादत्र क्रियाया अभावात्पुत्रस्य कर्तृत्वाभावः । यदि भविष्यतीति । अनेन मिश्रीकरणाभावात्तिलानां करणत्वाभावमाह । एकक्षेत्रे च वापात्सहयोगः कालभेदेऽप्यविरुद्धः ।

उ०–स्योच्चारितशब्दबोध्यक्रियाकर्तरीत्यर्थः । तदेवाह–प्रतीयमानगमीति । साहित्यानुपपत्त्येत्यर्थः । 'प्रविश पिण्डी'मित्यादौ प्रतीयमानक्रियापेक्षविभक्तेर्दृष्टत्वादिति भावः । लादयस्तु न तथा धातोर्विधानादिति स्पष्टमेवेति ध्येयम् । एकान्वयित्वादिसमानाधिकरणसाहित्यं हि पुत्रस्याध्याहृतागमनसम्बन्धज्ञा । एव बोद्धुं शक्यं न त्वन्यथेति तात्पर्यम् । 'षष्ठ्यत्र बाधिके'त्युत्तरदर्शनादेवदत्ते तृतीयार्थं सूत्रमिति भाति, तदनिष्टमित्यत आह—ल्युटेति । भाष्ये—षष्ठ्यत्रेति । एवं चोभयोस्तृतीयाप्रसक्त्यभावेन नियमार्थत्वानुपपत्तिरिति भावः । ननु षष्ठीबाधनार्थमेव तर्हीदमावश्यकमत आह—सा च प्रधानेति । प्रधाने चारितार्थ्यसम्भवादिति भावः । भवत्येवेति । अत्र वदन्ति—तृतीयाषष्ठ्योः को विशेषो यत्तृतीयाप्रधानेऽपि षष्ठी नेति । एवं च 'पुत्रेण सहागमन'मित्यादौ षष्ठीबाधनेन तृतीयार्थं सूत्रमावश्यकमिति । अन्ये तु—कृद्योगे षष्ठी कृद्योगश्च तत्प्रकृत्यर्थान्वयमात्रेण । एवं च शाब्दकृत्प्रकृत्यर्थान्वयिनोः कर्तृकर्मणोरेव षष्ठी, न प्रतीयमानतत्संबन्धयोरिति भाष्योपपत्तिमाहुः । क्रियाया अभावादिति । अस्तिक्रियासत्त्वेऽपि साहित्यबलात्स्थौल्यमेव पुत्रे प्रतीयते न तु तत्क्रियाकर्तृत्वमिति भावः ।

† कर्तृकर्मणोः कृति २. ३ ६५.

सहयुक्तेऽप्रधानवचनमनर्थकमुपपदविभक्तेः कारकविभक्तिबलीयस्त्वादन्यत्रापि ॥ १ ॥

सहयुक्तेऽप्रधानवचनमनर्थकम् । किं कारणम् ? 'उपपदविभक्तेः कारकविभक्तिबलीयस्त्वात्' । अन्यत्रापि [ उपपदविभक्तेः ] कारकविभक्तिर्बलीयसीति प्रथमा [ भवति, एवमत्रापि 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति प्रथमा ] भविष्यति । क्वान्यत्र ? गाः† स्वामी व्रजतीति ॥१९॥

प्रधान में तृतीया ही होगी

## येनाङ्गविकारः ॥ २ । ३ । २० ॥

इह कस्मान्न भवति—अक्षि काणमस्येति ?

प्र०– सहयुक्त इति । अप्रधानवचनं प्रधाननिवृत्त्यर्थं क्रियते । प्रधानस्य चान्तरङ्गत्वात्कारकविभक्तिर्भविष्यतीति नार्थस्तन्निवृत्त्यर्थेनाप्रधानवचनेनेत्यर्थः । 'शिष्येण सहोपाध्यायस्य गौ'रित्यत्रापि गवा संबन्धोऽन्तरङ्ग इति उपाध्यायात्षष्ठ्येव भविष्यति न तृतीया । गाः स्वामी व्रजतीति । अत्रापि व्रजिक्रियायां गवां कर्मत्वात्तन्निबन्धना द्वितीया 'स्वामीश्वरे'ति प्राप्ते उपपदविभक्ती षष्ठीसप्तम्यौ बाधित्वा प्रवर्तते ॥१९॥

येनाङ्गविकारः । अङ्गशब्दोऽवयववाचित्वेन प्रसिद्धः । ततो येन गुणेनाङ्गस्य विकारो लक्ष्यते ततस्तृतीयेति सूत्रार्थमवगत्याह—इह कस्मादिति । इहैव कस्मान्नेत्यर्थः । अक्षि काणमिति । 'कण निमीलने' इत्यस्य चौरादिकस्याचि घञि वा रूपम् । काणगुणयोगादभेदोपचाराद् गुणवचनेभ्यो लुगिति मतुपो लुग्विधानाद्वाक्षि काणशब्देनोच्यते । तत्र काणशब्दात्तृतीया प्राप्नोति । काणेन हि गुणेनाक्ष्णो विकारो लक्ष्यते । 'अक्ष्णा काण' इत्यत्र त्वत्तिशब्दान्न प्राप्नोति ।

उ०– कारकविभक्तिरिति । तिष्ठत्यादिक्रियानुषङ्गात्स्थूल इत्यादेरपि कर्तृत्वमस्तीति भावः । सहयोगश्च विशेष्यतया विशेषणतया वेति तात्पर्यम् । अन्तरङ्गत्वादिति । तदपवादत्ववारणायेदं वचनमेवेति चिन्त्यम् । गवा सम्बन्धोऽन्तरङ्ग इति । एकान्वयित्वादिसमानाधिकरणाखण्डोपाधिरूपसाहित्यस्य सहशब्दार्थतया पूर्वमन्वयिज्ञानावश्यकत्वादिति भावः । बाधित्वेति । स्वामित्वमपि गोनिरूपितमेवेति स्वामिशब्दयोगोऽपि गवामिति भावः ॥१९॥

येनाङ्गविकारः । अङ्गशब्दस्यार्शआद्यजन्तत्वे शङ्कानुपपत्तेराह—अङ्गशब्द इति । अप्रसिद्धत्वात्स न गृह्यत इति भावः । अचि घञि वेति । उभावपि भावे इति भावः । 'एर'जित्यच् । नन्वेवं काणशब्देऽक्षिसामानाधिकरण्यमनुपपन्नमत आह—काणगुणेति । लुग्विधानाद्वेति । इदं चिन्त्यम् । गुणगुण्युभयभिधानसमर्थ एव तत्प्रवृत्तेः । न ह्यक्षणः काणमिति कदाचिद्भवति । कर्मघञन्तः काणत्वगुणविशिष्टाक्षिवाचीति परे । न प्राप्नोतीति । शब्दतोऽङ्गविकाराप्रतीतेरिति भावः ।

१–कीलहार्नभाष्ये इदं न विद्यते ।

† कर्मणि द्वितीया; ( स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ) २. ३. २; ( ३९ ).

**अङ्गाद्विकृतात्तद्विकारतश्चेदङ्गिनो वचनम् ॥ १ ॥**

अङ्गाद्विकृतात्तृतीया वक्तव्या, तेनैव चेद्विकारेणाङ्गी द्योत्यत इति वक्तव्यम्। तत्तर्हि वक्तव्यम्? न वक्तव्यम्। अङ्गशब्दोऽयं समुदायशब्दो 'येने'ति च करण एषा तृतीया। येनावयवेन समुदायोऽङ्गी द्योत्यते तस्मिन् भवितव्यं न चैतेनावयवेन समुदायो द्योत्यते ॥२०॥

## इत्थंभूतलक्षणे ॥ २ । ३ । २१ ॥

**इत्थंभूतलक्षणे तत्स्थे प्रतिषेधः ॥ १ ॥**

इत्थंभूतलक्षणे तत्स्थे प्रतिषेधो वक्तव्यः। अपि भवान् कमण्डलुपाणिं छात्रमद्राक्षीदिति।

---

प्र०— अङ्गाद्विकृतादिति। अङ्गवाचिनोऽक्षिपदादेस्तृतीया भवति न काणादेर्गुणवचनादित्यर्थः। एतावत्युच्यमानेऽक्षि काणमस्येत्यत्राप्यक्षिशब्दात्प्राप्नोतीत्याह—तद्विकारतश्चेदिति। यदि देवदत्तादिरवयवी विकृतेनाङ्गेन विकारवान्प्रकाश्यत इत्यर्थः। अङ्गशब्द इति। अङ्गान्यस्य सन्तीत्यर्शआदित्वादच्प्रत्ययान्तोऽत्राङ्गशब्दो निर्दिष्टः। 'येने'त्यनेन विकृतमङ्गं निर्दिश्यते। न ह्यविकृतेनाङ्गेनाङ्गिनो विकारो द्योतयितुं शक्यते। न चैतेनेति। 'अक्षि काणकस्ये'त्यत्र काणशब्देनाक्षिसमानाधिकरणेनावयवी नोच्यते, किं तर्ह्यवयव एवेत्यर्थः। अवयवश्चात्रावयविना विशेष्यत इति तस्यैव प्राधान्याद्विकारप्रतिपत्तिः ॥२०॥

इत्थंभूत। यदा लक्षणवाची शब्दो लक्ष्यवाचिसमासावयवस्तदा तृतीया मा भूदिति वचनम्—इत्थंभूतलक्षणे तत्स्थ इति। लक्ष्यवाचिशब्दस्थ इत्यर्थः। कमण्डलुपाणिमिति। बहुव्रीहौ कृते कमण्डलुशब्दात्तृतीया प्राप्नोति। न च प्रत्ययलक्ष-

---

उ०— अच्प्रत्ययान्त इति। असिद्धस्यापि व्याख्यानाद् ग्रहणमिति भावः। विकृतमङ्गमिति। सामर्थ्यादिति भावः। तदेवोपपादयति—न हीति। 'समुदायोऽङ्गी द्योत्यते' इति भाष्ये 'विकृत' इत्यर्थः। तस्यैव—अवयवस्यैव। विकारप्रतिपत्तिरिति। शाब्दीति भावः। आर्थी तत्प्रतीतिस्तु न तृतीयानिमित्तमिति ध्येयम् ॥२०॥

इत्थंभूत। इत्थंभूतलक्षणे इति। इत्थंभूतस्य लक्षणबोधके शब्दे तत्स्थे लक्ष्यवाचिपदघटितपदस्थे सति लक्षणवाचकात्तृतीयाप्रतिषेधो वक्तव्य इत्यर्थः। तदाह—यदा लक्षणवाचीति। लक्ष्यवाचिनः शब्दस्य लक्षणवाचिनः समासं विना लक्षणवाचिनस्तत्स्थत्वं न सम्भवतीत्यत आह—लक्ष्यवाचिसमासेति। लक्ष्यवाचिघटकसमासेत्यर्थः। 'कमण्डलुपाणि'शब्दो बहुव्रीहिणा लक्ष्यच्छात्रवाची, तत्र पाणिशब्दस्य लक्षणत्वायोगात्पारिशेष्यादाह—कमण्डलुशब्दादिति। इत्थंभूतश्छात्रत्वं प्राप्तश्छात्रस्तस्य लक्षणं कमण्डलुरिति भावः। बहु-

## न वेत्थंभूतस्य लक्षणेनापृथग्भावात् ॥ २ ॥

न वा वक्तव्यम्। किं कारणम् ? 'इत्थंभूतस्य लक्षणेनापृथग्भावात्'। यत्रेत्थंभूतस्य पृथग्भूतं लक्षणं तत्र भवितव्यं न चात्रेत्थंभूतस्य पृथग्भूतं लक्षणम्।

किं वक्तव्यमेतत् ? न हि। कथमनुच्यमानं गंस्यते ? तथा ह्ययं प्राधान्येन लक्षणं प्रतिनिर्दिशति—इत्थंभूतस्य लक्षणमित्थंभूतलक्षणम्, तस्मिन्नित्थंभूतलक्षण इति ॥२१॥

प्र०-णेनाप्रत्यय इति प्रातिपदिकसंज्ञानिषेधो 'न ङिसंबुद्ध्योः'रिति नलोपप्रतिषेधाज्ज्ञापकात्। न च तृतीयाया लुक्प्राप्नोति, समासप्रातिपदिकानवयवत्वात्, तस्याः कृते समास उत्पादनात्।

लक्षणेनेति। पृथग्विनेति तृतीया। तथा ह्ययमिति। षष्ठीतत्पुरुषस्योत्तरपदार्थप्रधानत्वात्। इत्थंभूतस्य यल्लक्षणं प्रधानमप्राप्तोपसर्जनभावं तत्र तृतीया, यथा 'कमण्डलुना छात्रमद्राक्षी'दिति। बहुव्रीहौ तु स्वार्थोपसर्जनान्यपदार्थाभिधायित्वाद्वर्तिपदानां नास्ति लक्षणस्य प्राधान्यम् ॥२१॥

उ०-व्रीहौ समुदायस्य संबन्धित्वेन संबन्धी बोध्यः, तत्र चेतरपदार्थान्वय इति व्यपेक्षावादे शङ्क्यम्। तत्र हि तृतीयायामपि कमण्डलोर्ज्ञाप्यत्वेनान्वयः सुवचः। पाण्यधिकरणकमण्डलुज्ञाप्यश्छात्र इत्यर्थः स्यादिति भावः। ज्ञापकादिति। एतेन नलोपविषयमेव तज्ज्ञापकमित्यपास्तम्। 'तत्स्थे इत्थंभूतलक्षणे' इति वार्तिकस्वारस्येनात्रयवात्तृतीयापपत्तेः प्रतीयमानत्वात्। एतेन समुदायात्तृतीयापत्तौ तात्पर्यमिति मन्दोक्तमपास्तम्। प्रातिपदिकानवयवत्वादिति। तन्मध्यपतितन्यायादकजन्तत्तद्ग्रहणेन ग्रहणेऽपि कपूमुमादिवच्छास्त्रेणावयवत्वबोधनादवयवत्वे मानाभावादिति भावः। पूर्वं लक्षणत्वाविवक्षया प्रथमान्तत्वेन समासे जाते पश्चाल्लक्षणत्वविवक्षायामत्र तृतीयापादनं 'कृतपूर्वी कट'मितिवदिति बोध्यम्। केचित्तु कमण्डलुपाणिशब्दादत्र तृतीयापत्तिः। कमण्डलुपाणित्वस्यैव लक्षणत्वात् 'सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवती'ति 'अनुर्लक्षण' इति सूत्रे भाष्यात्। तदेवेत्यस्य—कमण्डलुपाणित्वमेवेत्यर्थः। अन्यथा 'स एवे'ति वदेत्। कमण्डलुयुक्तपाणिज्ञाप्यस्तदवयवीति बोधः स्यात्। कमण्डलुयुक्तार्थकमण्डलुपदेन समानाधिकरणो बहुव्रीहिः। अन्यथा तन्मध्यपतितन्यायेन तद्ग्रहणेऽपि तदवयवत्वं नेत्यस्यापातरमणीयत्वेन लुग्दुर्वार एव। अत एव 'इष एकाचो'ऽमिति सूत्रे भाष्ये—'नरंमन्य' इत्यादौ समासप्रातिपदिकसंज्ञोत्तरं जातस्याप्यमः 'सुपो धात्वि'ति लुक्—अम्विधिसामर्थ्यान्नेत्युक्तमित्याहुः।

भाष्ये—अपृथग्भावादिति। एकार्थीभावे इतरविशेषणस्यैव कमण्डलोरुपस्थित्या तस्य लक्षणत्वेन छात्रेऽन्वयासंभव इति भावः। तदेतद्ध्वनयति कैयटः—'नास्ति लक्षणस्य प्राधान्य'मिति। विशेषणत्वानाक्रान्तोपस्थितिरित्यर्थः। प्रागुक्ताशयानभिज्ञः शङ्कते—किं वक्तव्यमिति। अत्रार्थे सूत्रारूढामभ्युच्चययुक्तिमप्याहैकदेशी भाष्ये—प्राधान्येनेति ॥२१॥

# संज्ञोऽन्यतरस्यां कर्मणि ॥ २ । ३ । २२ ॥

## संज्ञः कृत्प्रयोगे षष्ठी विप्रतिषेधेन ॥ १ ॥

'संज्ञोऽन्यतरस्यां कर्मणी'त्येतस्मात्कृद्योगे षष्ठी* भवति विप्रतिषेधेन। 'संज्ञोऽन्यतरस्या'मित्यस्यावकाशः—मातरं संजानीते। मात्रा संजानीते। कृत्प्रयोगे षष्ठ्या अवकाशः–इध्मप्रव्रश्चनः पलाशशातनः†। इहोभयं प्राप्नोति–मातुः संज्ञाता। पितुः संज्ञातेति। षष्ठी भवति विप्रतिषेधेन।

## उपपदविभक्तेश्चोपपदविभक्तिः ॥ २ ॥

उपपदविभक्तेश्चोपपदविभक्तिर्भवति विप्रतिषेधेन। 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' [२.३.२९] इत्यस्यावकाशः—अन्यो देवदत्तात्। 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च' [३९] इत्यस्यावकाशः–गोषु स्वामी। गवां स्वामी। इहोभयं प्राप्नोति—अन्यो गोषु स्वामी। अन्यो गवां स्वामीति। 'स्वामीश्वराधिपती'त्येतद्भवति विप्रतिषेधेन।

नैष युक्तो विप्रतिषेधः। न ह्यत्र गावोऽन्ययुक्ताः। कस्तर्हि? स्वामी।

एवं तर्हि 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् [७२] इत्यस्यावकाशः—तुल्यो देवदत्तस्य। तुल्यो देवदत्तेनेति। 'स्वामीश्वराधिपती'त्यस्यावकाशः—स एव। इहोभयं प्राप्नोति—तुल्यो गोभिः स्वामी। तुल्यो गवां स्वामीति। 'तुल्यार्थैरतुलोपमाभ्या'मित्येतद्भवति विप्रतिषेधेन ॥२२॥

---

प्र०– संज्ञोऽन्यतरस्यां। मात्रा संजानीत इति। 'संप्रतिभ्यामनाध्याने' इत्यात्मनेपदम्। अन्यो गवां स्वामीति। एकस्मिन्वाक्ये सहप्रयोगादस्त्यन्ययोगो गवामिति मन्यते। न ह्यत्र गाव इति। युक्तग्रहणाद्यदपेक्षमन्यत्वं तद्वाचिनः पञ्चमी। न चात्र गवापेक्षमन्यत्वं स्वामिनः प्रतिपाद्यं व्यभिचाराभावात्। किं तर्हि? पूर्वस्वाम्यपेक्षम्। कस्तर्हि स्वामीति। भूतपूर्वो यः स्वामी सोऽन्ययुक्त इत्यर्थः। तुल्यो गोभिः स्वामीति। गवां यः स्वामी स गोभिर्जाड्यादिना धर्मेण सदृश इत्यर्थविवक्षायामस्ति गवा पदद्वयार्थयोगः ॥२२॥

---

उ०– संज्ञोऽन्यतरस्यां। अन्यपदार्थेन योगे स्वामिनः पञ्चमी स्यादत आह—भूतपूर्वेति। अन्ययुक्त इति। अन्यत्वप्रतियोगीत्यर्थः। पूर्वस्वाम्यपेक्षयेदानीमन्यो गवां स्वामीत्युदाहरणार्थः। उभयप्राप्तये तुल्येन च स्वामिनः संबन्धमुपपादयति—गवां य इति ॥२२॥

---

* कर्तृकर्मणोः कृति: २. ३. ६५. † कृद्योगा च २. २. ८ वा० १.

# हेतौ ॥ २ । ३ । २३ ॥

## निमित्तकारणहेतुषु सर्वासां प्रायदर्शनाम् ॥

निमित्तकारणहेतुषु सर्वा विभक्तयः प्रायेण दृश्यन्त इति वक्तव्यम् । किं निमित्तं वसति । केन निमित्तेन वसति । कस्मै निमित्ताय वसति ॥ कस्मान्निमित्ताद्वसति । कस्य निमित्तस्य वसति । कस्मिन्निमित्ते वसति ॥ किं कारणं वसति । केन कारणेन वसति । कस्मै कारणाय वसति । कस्मात्कारणाद्वासति । कस्य कारणस्य वसति । कस्मिन् कारणे वसति ॥ को हेतुर्वसति । कं हेतुं वसति । केन हेतुना वसति । कस्मै हेतवे वसति । कस्माद्धेतोर्वसति । कस्य हेतोर्वसति । कस्मिन् हेतौ वसति ॥२३॥

# अपादाने पञ्चमी ॥ २ । ३ । २८ ॥

## पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम् ॥ १ ॥

पञ्चमीविधाने ल्यब्लोपे कर्मणि पञ्चम्या उपसंख्यानं कर्तव्यम् । प्रासादमारुह्य प्रेक्षते प्रासादात्प्रेक्षते ।

---

प्र०- हेतौ । योग्यतामात्रयुक्तोऽनाश्रितव्यापारोऽर्थो द्रव्यगुणक्रियाविषयो हेतुः । निमित्तेति । असर्वनाम्नोऽपि विधानार्थमत्र सूत्र इदं पठितं न तु 'सर्वनाम्नस्तृतीया च'त्यत्र । तत्र प्रायग्रहणात्सर्वनाम्नः प्रथमाद्वितीये न भवतोऽन्यास्तु यथादर्शनं भवन्ति । पर्यायोपादानं केचित्पर्यायान्तरनिवृत्त्यर्थमिच्छन्ति । अन्ये तूपलक्षणार्थमिच्छन्तः प्रयोजनादिप्रयोगेऽप्येतद्विभक्तिविधानं मन्यन्ते ॥२३॥

अपादाने । ल्यब्लोप इति । यत्र ल्यबन्तस्याप्रयोगेऽप्यर्थो गम्यते तत्र द्वितीय-

---

उ०- हेतौ । व्यापारानाविष्टत्वे द्रव्यगुणक्रियाविषयत्वे च हेतुः—'योग्यतामात्रयुक्त' इति । व्यापाराविष्टं क्रियामात्रविषयं च करणं, व्यापारावेशो च क्रियाविषयत्वमेव फलोपधानमेवेति ततो भेद इति भावः । न त्विति । वृत्तिकारवदिति भावः । अन्ये त्विति मतेऽनुग्राहकाभावोऽरुचिबीजम् ॥२३॥

अपादाने । ननु ल्यब्लोपविधायकस्यात्र शास्त्रेऽदर्शनाल्ल्यब्लोप इत्यसङ्गतमत आह—यत्रेति । वाक्यैकदेशन्यायेनेति भावः । ल्यब्ग्रहणं क्त्व उपलक्षणम् । 'आसनात्प्रेक्षत' इत्यस्यासने स्थित्वेत्यर्थात् । तत्रेति । ल्यबन्ताभावेऽपि गम्यमानक्रियापेक्षकर्मत्वादिति भावः ।

---

१-काशिकायां त्विदं सर्वनाम्नस्तृतीया च २. ३. २७. इत्यत्र पठितम् । २-कचिन्न ।

## अधिकरणे च ॥ २ ॥

अधिकरणे चोपसंख्यानं कर्तव्यम् । आसनात् प्रेक्षते । शयनात् प्रेक्षते ।

## प्रश्नाख्यानयोश्च ॥ ३ ॥

प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या ॥ कुतो भवान् ? पाटलिपुत्रात् ।

## यतश्चाध्वकालनिर्माणम् ॥ ४ ॥

यतश्चाध्वकालनिर्माणं तत्र पञ्चमी वक्तव्या । [1]गवीधुमतः [2]साङ्काश्यं चत्वारि योजनानि । कार्तिक्या आग्रहायणी मासे ।

## तद्युक्तात्काले सप्तमी ॥ ५ ॥

तद्युक्तात्काले सप्तमी वक्तव्या । कार्तिक्या आग्रहायणी मासे ।

प्र०-यायां प्राप्तायां पञ्चमी विधीयते । अधिकरणे चेति । 'ल्यब्लोप' इत्यपेक्ष्यते । सप्तम्यपवादोऽत्र पञ्चमी ।

प्रश्नाख्यानयोश्चेति । विशिष्टे प्रश्नाख्याने गृह्येते—यत्र लोके पञ्चमी प्रयुज्यते । तेन 'कस्यायमश्वो' 'देवदत्तस्यायमश्व' इत्यादौ पञ्चमी न भवति । कुतो भवानिति । क्रियाया अभावादनपादानत्वं मन्यते । यतश्चेति । यदाश्रित्याध्वकालौ परिच्छिद्येते तत्र पञ्चमीमित्यर्थः । गवीधुमत इति । गवीधुमन्नाम नगरम् । तद्युक्तात्काल इति । काले—विषये । तेन पञ्चम्यन्तार्थेन यो युक्तो मासादिस्तद्वाचिनः सप्तमीमित्यर्थः । अथवा पञ्चमीयुक्तार्थात्परे काल इत्यर्थः ।

उ०- गम्यमानक्रियापेक्षयापादानत्वं भविष्यतीत्यत आह—क्रियाया इति । यदाश्रित्येति । यदवधित्वेनाश्रित्येत्यर्थः । तत्रेति । तत्र वर्तमानाच्छब्दादित्यर्थः । तद्युक्तात्कालादित्युचितमत आह—काले विषये इति । युक्तो मासादिरिति । मासकार्तिक्योश्चावध्यवधिमद्भावः संबन्धः । आग्रहायण्यास्तु न तद्युक्तत्वमिति भावः । अथवा पञ्चमीति । तच्छब्देन पञ्चमी

१–द्रष्टव्यं "एपिग्राफिया इण्डिका" प्रथमो भागः पृ० १८०. पुरा 'गवीधुमान्' इति लब्धप्रतिष्ठं "रम्यं सन्ततवेदविद्याव्याख्यानघोषबधिरीकृतदिङ्मुखं" नगरं सम्प्रति नष्टविभवं "कुदारकोट" इति नामान्तरं विधत्ते । ( महर्षिदयानन्दकृताष्टाध्यायीभाष्ये प्रथमभागे ( प्रथम सं० पृ० २८८ ) डा० रघुवीरस्य टिप्पणी ) ।

२-नगरमिदमिक्षुमत्यास्तीरे फर्रुखाबादमण्डले साम्प्रतं 'संकिसा' इति प्रसिद्धम् । पुरा यत्र जनकस्य यवीयभ्रातुः कुशध्वजस्य राजधानी बभूव । तद्यथा रामायणे बालकाण्डे ७० तमसर्गे—'भ्राता मम महातेजा यवीयानतिधार्मिकः । कुशध्वज इति ख्यातः पुरीमध्यवसच्छुभाम् ॥२॥ वार्याफलकपर्यन्तां पिबन्निक्षुमतीं नदीम् । सांकाश्यां पुण्यसंकाशां विमानमिव पुष्पकम् ॥३॥

## अध्वनः प्रथमा च ॥ ६ ॥

अध्वनः प्रथमा च सप्तमी च वक्तव्या। गवीधुमतः साङ्काश्यं चत्वारि योजनानि। [ गवीधुमतः साङ्काश्यं[1] ] चतुर्षु योजनेषु।

तत्तर्हीदं बहु वक्तव्यम् ? न वक्तव्यम्। 'अपादान' इत्येव सिद्धम्।

इह तावत् प्रासादात्प्रेक्षते शयनात्प्रेक्षत इत्यपक्रामति तत्तस्माद्दर्शनम्। यद्यपक्रामति किं नात्यन्तायापक्रामति ? संततत्वात्। अथवान्यान्यप्रादुर्भावात्। [ 'अन्या चान्या च प्रादुर्भवति। ]

प्रश्नाख्यानयोश्च पञ्चमी वक्तव्येति, इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कुतो भवानागच्छति, पाटलिपुत्रादागच्छामीति।

---

प्र०– अध्वन इति। तद्युक्तादित्यपेक्षते। अपक्रामति तत्तस्मादिति। दर्शनं चक्षुरिन्द्रियं तेजोरूपं प्राप्य विषयग्राहित्वात्प्रासाददेशादपक्रम्य विषयं गच्छतीत्यर्थः। क्षणिकपक्षावष्टम्भेन भेदमाश्रित्याह—अथवान्यान्यप्रादुर्भावादिति। अन्यस्यान्यस्य तेजोरूपस्येन्द्रियस्योत्पादादित्यर्थः। भाष्यकारवचनप्रामाण्यादन्यान्यशब्दस्य साधुत्वं द्रष्टव्यम्। इदमत्रेति। प्रतीयमानत्वादर्थस्य शब्दाप्रयोगः।

---

उ०–परामृश्यते तद्युक्तश्च तत्प्रकृत्यर्थः, तस्मात्परे परावयवके कालेऽभिधेये कालवाचिनः सप्तम्यर्थः। आग्रहायण्याश्चार्थं परत्वं न शाब्दं तत्तु मासस्यैवेति भावः।

दर्शनं चक्षुरिति। करणे ल्युडिति भावः। तेजोरूपमिति। अपक्रमणसामर्थ्यमनेन दर्शितम्। विषयग्राहिणो नयनरश्मयः सूर्यरश्मिवत्प्रासाददेशस्थपुरुषनयनादपक्रम्य यावद्विषयदेशं गच्छन्तीत्यर्थः। एवं च प्रासादात्प्रेक्षते चक्षुः प्रासादादपक्रम्य विषयं जानीते इत्यर्थः। प्रासादस्थपुरुषान्निर्गमनं प्रासादादिति व्यवह्रियते इति बोध्यम्। 'प्रासादमारुह्य भुङ्क्ते' इत्याद्यर्थे प्रासादाद् भुङ्क्त इत्यादिनामनभिधानमिति बोध्यम्। प्रासादस्थपात्रान्निर्गतमन्नं भुङ्क्ते इति भाष्यरीत्यार्थं इत्यन्ये। प्राप्यविषयग्राहित्वादिति। 'परावरयोगे चे'ति क्त्वा। बौद्धो यथाकथंचिद्विभागो बोध्यः। भाष्ये—अन्या चान्या चेति। दर्शनक्रियेत्यर्थः। 'अपक्रामति तस्माद्दर्शन'मिति दर्शनपदेन वृत्तिरेवाभिमता। कैयटोक्तव्याख्याने तु चक्षुर्व्यक्तिरिति विशेष्यं बोध्यम्। वृत्तिपरत्वेन व्याख्याने चिरं ज्ञानानुभवानापत्तिरिति पूर्वपक्षः। तावत्कालं स्थिरत्वेनाद्यमुत्तरं द्वितीयं तु स्पष्टमेवेति। ध्येयम्। सत्यपि द्वित्वे विभक्त्यन्तस्यैव द्वित्वापत्तेः

---

१–क्वचिन्न।

यतश्चाध्वकालनिर्माणं तत्र पञ्चमी वक्तव्येति, इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते गवीधुमतो निःसृत्य साङ्काश्यं चत्वारि योजनानि ।

कार्तिक्या आग्रहायणी मासे इति, इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृत्याग्रहायणी मास इति ।

तद्युक्तात्काले सप्तमी वक्तव्येति, इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्या आग्रहायणी गते मास इति ।

अध्वनः प्रथमा च सप्तमी चेति, इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते गवीधुमतो निःसृत्य यदा चत्वारि योजनानि गतानि भवन्ति ततः साङ्काश्यम् । चतुर्षु योजनेषु गतेषु साङ्काश्यमिति ॥२८॥

## अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ॥२।३।२९॥

अञ्चूत्तरपदग्रहणं किमर्थं न दिक्शब्दैर्योग इत्येव सिद्धम् ? 'षष्ठ्यतसर्थप्रत्ययेन' [ २. ३. ३० ] इति वक्ष्यति तस्यायं पुरस्तादपकर्षः ॥२९॥

---

प्र०- कार्तिक्याः प्रभृतीति । तत आरभ्येत्यर्थः । भाष्यकारवचनात्प्रभृतियोगे पञ्चमी । गते मास इति । ततश्च 'यस्य च भावेने'ति सिद्धा सप्तमी । चत्वारीति । तत्र प्रातिपदिकार्थस्याव्यतिरेकात्सिद्धा प्रथमा ॥२८॥

अन्यारा । तस्यायमिति । अथ सङ्ख्यदेवदत्तेनेत्यदिक्शब्दार्थमञ्चूत्तरपदग्रहणं कस्मान्न विज्ञायते ? उच्यते—दिक्शब्दसाहचर्यादञ्चूत्तरपदस्यापि दिक्शब्दस्यैव ग्रहणं नान्यस्य ॥२९॥

---

उ०—कर्मव्यतिहाराभावेन समासवद्भावाप्राप्तेरेकशेषेण बाधाच्च द्वन्द्वाप्राप्तौ कथमन्यान्येतीत्यत आह—भाष्यकारेति । तत्प्रामाण्यात्कर्मव्यतिहाराभावेऽपि बहुलग्रहणात्क्वचित्समासवद्भाव इत्यर्थः । कृतवीप्साद्विर्वचनस्यान्यस्येत्यस्य प्रादुर्भावशब्देन षष्ठीसमास इति परे ।

प्रभृतिपदप्रयोगेऽपि तदर्थयोगेऽपि वा कथं पञ्चमीत्यत आह—भाष्यकारवचनादिति । 'इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते' इत्येवंरूपात्प्रभृतियोगे पञ्चमीति वचनमनुमीयते इति भावः । 'न प्रयुज्यते' इत्युक्त्या प्रभृत्यर्थयोगे पञ्चमीति सूचितम् । तदप्यवधिमादायेत्येवंरूपप्रभृत्यर्थयोगे एव प्रवर्तते । प्रभृतिशब्दस्य आरभ्येत्यस्य च तमादायेत्यर्थः । अधिकरणत्वाभावात्कथं सप्तमीत्यत आह—ततश्चेति । कार्तिकीमादाय मासे गते आग्रहायणी भवतीति वाक्यार्थ इति भावः । तत्र प्रातीति । एतदर्थमेव ततः साङ्काश्यमिति वाक्यभेद इति भावः ॥२८॥

## षष्ठ्यतसर्थप्रत्ययेन ॥ २ । ३ । ३० ॥

अर्थग्रहणं किमर्थम् ? 'षष्ठ्यतस्प्रत्ययेने'त्युच्यमान इहैव स्यात्—दक्षिणतो ग्रामस्य । उत्तरतो ग्रामस्येति* । इह न स्यात्—उपरि ग्रामस्य । उपरिष्टाद्ग्रामस्येति† । अर्थग्रहणे पुनः क्रियमाणेऽतस्प्रत्ययेन च सिद्धं भवति यश्चान्यस्तेन समानार्थः ।

अथ प्रत्ययग्रहणं किमर्थम् ? इह मा भूत्—प्राग्ग्रामात् । प्रत्यग्ग्रामात्‡ । अञ्चूत्तरपदस्याप्येतत्प्रयोजनमुक्तं**, तत्रान्यतरच्छक्यमवक्तुम् ॥३०॥

## पृथग्विनानानाभिस्तृतीयान्यतरस्याम् ॥ २ । ३ । ३२ ॥

### पृथगादिषु पञ्चमीविधानम् ॥ १ ॥

पृथगादिषु पञ्चमी विधेया । पृथग्देवदत्तात् । किमर्थम् ? न प्रकृतं पञ्चमीग्रहणमनुवर्तते । क्व प्रकृतम् ? 'अपादाने पञ्चमी' [ २. ३. २८ ] इति ।

प्र०- षष्ठ्यतस । अर्थग्रहणमिति । अतस्शब्द प्रत्ययत्वं न व्यभिचरतीति प्रत्ययग्रहणादतस्शब्दस्तदर्थोपलक्षणं विज्ञास्यत इति प्रश्नः । षष्ठ्यतस्प्रत्ययेनेति । अतस्शब्दस्यार्थस्याश्रयितुमशक्यत्वात् ।तस्यतेर्नञ्पूर्वस्य क्विप्यतसिति रूपसंभवाच्च । प्राग्ग्रामादिति । प्रत्ययग्रहणमधिकं क्रियमाणं श्रूयमाणप्रत्ययग्रहणार्थं विज्ञास्यत इति लुप्तेऽस्तातौ षष्ठ्यभावः । तत्रान्यतरदिति । एकप्रयोजनत्वात् ॥३०॥

पृथग्विना । अन्यतरस्यांग्रहणेन पक्षे यथाप्राप्ताभ्यनुज्ञानं क्रियते । न चात्र पञ्चमी प्राप्नोति मत्वाह—पृथगादिष्विति । पक्ष इति वाक्यशेषः । न प्रकृतमिति ।

उ०- षष्ठ्यतस । तदर्थोपलक्षणमिति । मध्यमपदलोपिसमासादिति भावः । अतस्शब्दस्यार्थस्येति । व्यधिकरणपष्ठ्योराश्रयणाशक्यत्वे हेतुं दर्शयन्नतसूशब्दे प्रत्ययत्वव्यभिचारं दर्शयति—तस्यतेरिति । न च 'प्रत्ययाप्रत्ययर्यो'रिति परिभाषयाङ्गस्येति सूत्रभाष्यपठितया प्रतिपदोक्तपरिभाषया च प्रत्ययस्यैव लाभे सिद्धे प्रत्ययग्रहणेन सामर्थ्यात्तदर्थलाभ इति वाच्यम् । तदनित्यत्वज्ञापनेनापि चारितार्थ्यात् । संभवाच्चेति । चो हेतौ । भाष्ये—'अन्यस्तेन समानार्थ' इत्यस्य 'तेनापि योगे सिद्ध'मिति शेषः । अथ प्रत्ययेति । परिभाषयैव सिद्धे इत्यर्थः । लुप्तेऽपि प्रत्ययलक्षणेन प्रत्ययान्तत्वमस्त्येवेत्यत आह-प्रत्ययग्रहणमिति । 'अञ्चेर्लु'गिति लुक् ॥३०॥

पृथग्विना । नञः प्रतिषेधार्थत्वेऽसङ्गतिरत आह—काकेति । अनधिकारत्वेऽन्यारा-

* दक्षिणोत्तराभ्यामतसुच् ५. ३. २८. † उपर्युपरिष्टात् ५. ३. ३१.
‡ अञ्चेर्लुक् ५. ३. ३०. ** २. ३. २९ भाष्ये ।

अनधिकारात् ॥ २ ॥

अनधिकारः सः ।

अधिकारे हि द्वितीयाषष्ठीविषये प्रतिषेधः ॥ ३ ॥

अधिकारे हि द्वितीयाषष्ठीविषये† प्रतिषेधो वक्तव्यः स्यात् । दक्षिणेन ग्रामम् । दक्षिणतो ग्रामस्य ।

एवं तर्ह्यन्यतरस्यांग्रहणसामर्थ्यात्पञ्चमीं भविष्यति । अस्त्यन्यदन्यतरस्यां-ग्रहणस्य प्रयोजनम् । किम् ? यस्यां नाप्राप्तायां तृतीयारभ्यते सा यथा स्यात् । कस्यां च नाप्राप्तायाम् ? अन्ततः षष्ठ्याम्* ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'अपादाने पञ्चमी'ति । ननु चोक्तमनधिकारः सः, अधिकारे हि द्वितीयाषष्ठीविषये प्रतिषेध

प्र०–नशब्दः काका प्रयुक्तः । प्रकृतमेवेत्यर्थः । अनधिकार इति । अन्याराद् इति योगात्परेषु योगेषु नाधिक्रियत इत्यर्थः । एवं तर्हीति । अन्यतरस्यांग्रहणं पक्षे विभक्त्यन्तरप्रापणार्थं सद्व्यवहितामपि पञ्चमीं प्रापयिष्यतीत्यर्थः । अस्त्यन्यदिति । यथाप्राप्ताभ्यनुज्ञानं हि विकल्पेन कार्यं न तु यस्य कस्यचिदिति भावः । अन्तत इति । अवसानत इत्यर्थः । यत्र ह्यन्या विभक्तिर्न विहिता स शेषत्वात्षष्ठ्या विषयः ।

यथाप्राप्ताभ्यनुज्ञानं विकल्पेन विधीयते ।
प्राप्त्यभावे भवेत्षष्ठी सा हि शेषनिबन्धना ॥

उ०–दिव्यस्यासङ्गतिरत आह—योगात्परेष्विति । भाष्ये—द्वितीयषष्ठीविषये इति । 'एनपा' 'षष्ठ्यतसर्थे'त्यत्र चेत्यर्थः । सौत्रक्रमत्यागे न्यायसिद्धपूर्वनिपातत्यागे च बीजं चिन्त्यम् । केचित्तु 'एनपा द्वितीया' 'षष्ठ्यतसर्थेने'त्येवाष्टाध्यायीपाठः । एवं च 'पृथग्विने'त्यनेन द्वितीयाविधानमपीति, एनपेति योगविभागात्षष्ठ्यपीति च वृत्त्युक्तं चिन्त्यमित्याहुः । अन्यतरस्यांग्रहणमिति । अव्ययानामनेकार्थत्वात्समुच्चयबोधनद्वारेत्यर्थः । आशयानभिज्ञः शङ्कते भाष्ये—अस्त्यन्यदिति । यद्यपि संबन्धानुवृत्तौ मण्डूकानुवृत्तौ वानुवृत्तिसामर्थ्यादेव पञ्चम्यामपि सिद्धायामन्यतरस्यांग्रहणं चिन्त्यप्रयोजनं, षष्ठी तु नेष्यते भाष्यकृता, तथापि तद्विना तयोर्दुर्ज्ञेयत्वात्तद्बोधनायैव तद् ग्रहणमिति बोध्यं, तद् ध्वनयन्नेवाथवान्येत्यादिपक्ष-

† एनपा द्वितीया; षष्ठ्यतसर्थप्रत्ययेन २. ३. ३१; ३०. * षष्ठी शेषे २. ३. ५०.

इति । एवं तर्हि संबन्धमनुवर्तिष्यते—'अपादाने पञ्चमी' [२८]। 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' [ २९ ] पञ्चमी । 'षष्ठ्यतसर्थप्रत्ययेन' [ ३० ] अन्यारादिभिर्योगे पञ्चमी । 'एनपा द्वितीया' [३१] अन्यारादिभिर्योगे पञ्चमी । 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' । पञ्चमीग्रहणमनुवर्तते-ऽन्यारादिभिर्योग इति निवृत्तम् ।

अथवा मण्डूकगतयोऽधिकाराः । तद्यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ।

अथवान्यवचनाच्चकाराकरणात्प्रकृतस्यापवादो विज्ञायते यथोत्सर्गेण प्रसक्तस्य । अन्यस्या विभक्तेर्वचनाच्चकारस्यानुकर्षणार्थस्याकरणात्प्रकृतायाः पञ्चम्या द्वितीयाषष्ठ्यौ बाधिके भविष्यतो यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति ।

अथवा वक्ष्यत्येतत्—अनुवर्तन्ते च नाम विधयो न चानुवर्तनादेव भवन्ति । किं तर्हि ? यत्नाद्भवन्तीति† ॥३२॥

## दूरान्तिकार्थेभ्यो द्वितीया च ॥ २ । ३ । ३५ ॥

### दूरान्तिकार्थेभ्यः पञ्चमीविधाने तद्युक्तात्पञ्चमीप्रतिषेधः ॥ १ ॥

दूरान्तिकार्थेभ्यः पञ्चमीविधाने तद्युक्तात्पञ्चम्याः‡ प्रतिषेधो वक्तव्यः ।

---

प्र०— सम्बन्धमिति । अन्यादिग्रहणसंबद्धमित्यर्थः । यथोत्सर्गेणेति । पञ्चमी किमुत्तरार्थेतिहार्थापीति संदिग्धा षष्ठीद्वितीयाभ्यामसंदिग्धाभ्यां बाध्यत इत्यर्थः ॥३२॥

दूरान्तिकार्थेभ्यः । तद्युक्तादिति । दूरान्तिकार्थैर्युक्तं यदपेक्षया दूरान्तिकत्वं

---

उ०—ह्यमाह । बाध्यते इति । इह तु तृतीया न बाध्यते, चस्थानीयान्यतरस्यांग्रहणादिति भावः । भाष्ये—यत्नादिति । अत्र चान्यतरस्यांग्रहणं यत्नोऽस्तीति भावः ॥३२॥

दूरान्तिकार्थेभ्यः । भाष्ये—पञ्चमीविधाने तद्युक्तादिति । पञ्चम्यन्तदूरान्तिकार्थैर्युक्तादित्यर्थः । सामान्यतो दूरान्तिकार्थयुक्तात्प्रतिषेधे पूर्वसूत्रस्थान्यतरस्यांग्रहणस्य वैयर्थ्यापत्तिः । अत एवात्र वार्तिके 'पञ्चमीविधान' इति सार्थकं, दूरान्ति-

---

† ५. २. ४ वा० २ भाष्ये पृ० १०४. ‡ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् २. ३. ३४.

दूराद्ग्रामस्य ।

न वा तत्रापि दर्शनादप्रतिषेधः ॥ २ ॥

'न वा, तत्रापि दर्शनात्पञ्चम्याः प्रतिषेधोऽनर्थकः । तत्रापि पञ्चमी दृश्यते—

दूरादावसथान्मूत्रं दूरात्पादावसेचनम् † ।
दूराच्च भाव्यं दस्युभ्यो दूराच्च कुपिताद्गुरोः ॥३५॥

## सप्तम्यधिकरणे च ॥ २ । ३ । ३६ ॥

सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ॥ १ ॥

सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानं कर्तव्यम् । अधीती व्याकरणे । परिगणिती याज्ञिक्ये । आम्नाती छन्दसि ।

प्र०—तद्वाचिन इत्यर्थः । दूराद्ग्रामस्येति । पूर्वसूत्रेण षष्ठ्येव ग्रामाद्भवति । दूरादावसथादिति । आवसथस्य दूर इत्यर्थः । पूर्वसूत्रेणावसथादेः पञ्चम्यपि भवति ॥३५॥

सप्तम्यधि । क्तस्येन्विषयस्येति । इन्नन्तस्येत्यर्थः । अधीतीति । अधीतमनेनेतीष्टादिभ्य इतीनिः । अत्र व्याकरणस्य कर्मत्वाद् द्वितीया प्राप्नोति यथा 'कृतपूर्वी कट'मिति । ततस्तदपवादः सप्तमी विधीयते । अधिकरणविवक्षायां सिद्धेति चेत् कर्मविवक्षायां द्वितीयापि स्यादिति तन्निवृत्त्यर्थं कर्तव्यमेव वचनम् । 'मासमधीती व्याकरणे' इति कालकर्मणो बहिरङ्गत्वादिहाग्रहणात्सप्तम्यभावः ।

उ०—कार्थैरिति पूर्वसूत्रेण षष्ठीपञ्चम्योः प्राप्तिः । पूर्वसूत्रेण—'दूरान्तिकार्थैः षष्ठी'त्यनेन । षष्ठ्येवेति । न तु पञ्चमी, अनेन निषेधादिति भावः । दूरादावसथादित्यनयोः सामानाधिकरण्यभ्रमं निराकरोति—आवसथस्येति । दूरात् ग्रामस्येत्यादौ त्वनभिधानात्पञ्चमी नेति भावः ॥३५॥

सप्तम्यधि । 'इन्विषयस्ये'त्यस्य इनो विषयस्येति समासः । प्रकृतित्वेन च स इनो विषयस्तदाह—इन्नन्तस्येति । क्तान्तप्रकृतिकेनन्तस्येत्यर्थः । अत्रव्याकरणस्येति । पूर्वमविवक्षितकर्मतया भावे क्ते पश्चात्कर्मसंबन्धेन कर्मणोऽनभिहितत्वाद् द्वितीया प्राप्तेत्याशयः । कर्मणि क्तप्रत्ययान्तात्तु न इनिः, अव्यविकन्यायात् । एतेन कर्मणि क्तप्रत्यये व्याकरणशब्दात् प्रथमैवेति निरस्तम् । अधिकरणत्वविवक्षायामिति । अस्तीत्यध्याहारेण कर्तृद्वारा व्यापाराश्रयत्वविवक्षायामित्यर्थः । बहिरङ्गत्वादिति । तच्चोपपादितं 'कालाध्वनो'रित्यत्र ।

१–'अनर्थकः प्रतिषेधोऽप्रतिषेधः' इत्यधिकं क्वचित् । † मनुस्मृतौ ४ १५१. त्वेवं पठ्यते—'दूरादावस्थान्मूत्रं दूरात्पादावसेचनम् । उच्छिष्टान्ननिषेकं च दूरादेव समाचरेत् ॥'

साध्वसाधुप्रयोगे च ॥ २ ॥

साध्वसाधुप्रयोगे च सप्तमी वक्तव्या । साधुर्देवदत्तो मातरि । [1]असाधुः पितरि ।

कारकार्हाणां च कारकत्वे ॥ ३ ॥

कारकार्हाणां च कारकत्वे सप्तमी वक्तव्या । ऋद्धेषु भुञ्जानेषु दरिद्रा आसते । ब्राह्मणेषु तरत्सु वृषला आसते ।

अकारकार्हाणां चाकारकत्वे ॥ ४ ॥

अकारकार्हाणां चाकारकत्वे सप्तमी वक्तव्या । मूर्खेष्वासीनेषु ऋद्धा भुञ्जते । वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति ।

तद्विपर्यासे च ॥ ५ ॥

तद्विपर्यासे च सप्तमी वक्तव्या । ऋद्धेष्वासीनेषु मूर्खा भुञ्जते । ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति ।

---

प्र०— साध्वसाधुप्रयोगे चेति । 'साधुनिपुणाभ्यां' सप्तम्यां सिद्धायामनर्चार्थमत्र साधुग्रहणम् । तेन तत्त्वकथनेऽपि साधुयोगे सप्तमी भवति । अर्चाग्रहणं तु तत्र निपुणविशेषणार्थमेव । साधुर्भृत्यो राज्ञ इति तु भृत्यापेक्षा षष्ठी, न तु साध्वपेक्षेति वाक्यार्थज्ञा आहुः ।

कारकार्हाणां चेति । कारकशब्दो भावप्रधानः । तेन कारकत्वमर्हन्तीत्यर्थः । ऋद्धेष्विति । ऋद्धा भोजनक्रियामर्हन्तीति कारकार्हाः । लक्ष्यलक्षणभावाविवक्षायामपि यथा स्यादिति वचनम् । तद्विवक्षायामुत्तरसूत्रेण सिद्धत्वात् । मूर्खेष्विति । मूर्खा भोजनानर्हत्वादकारकार्हाः ।

तद्विपर्यास इति । यदा कारकार्हाणां नास्ति कारकत्वमकारकार्हाणां चास्ति कारकत्वं तदेत्यर्थः ।

---

उ०— उभयत्रानेनैव सप्तम्यां सिद्धायामर्चाग्रहणं तत्र व्यर्थमत आह—अर्चाग्रहणं त्विति । तत्र साधुग्रहणं तु साधुप्रयोगेऽप्यर्चायां प्रत्यादियोगे निषेधार्थम् । न चानेन दुर्वारा । तत्सामर्थ्येनास्याप्यप्रवृत्तेरिति केचित् ।

क्रियाया एव कारकार्हत्वादसङ्गतिमाशङ्कयाह—कारकशब्द इति । शक्तिपरः स इति परे । उत्तरसूत्रेण—'यस्य च भावेने'त्यनेन । भाष्ये—'ऋद्धा' इत्यस्य विद्यादिगुणसमृद्धा इत्यर्थः ।

---

१—'असाधुर्मातुले कृष्णः' पा० ।

## निमित्तात्कर्मसंयोगे ॥ ६ ॥

निमित्तात्कर्मसंयोगे सप्तमी वक्तव्या ।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि [1]पुष्कलको हतः ॥३६॥

## यस्य च भावेन भावलक्षणम् ॥ २ । ३ । ३७ ॥

### भावलक्षणे सप्तमीविधानेऽभावलक्षण उपसङ्ख्यानम् ॥ १ ॥

भावलक्षणे सप्तमीविधानेऽभावलक्षण उपसंख्यानं कर्तव्यम् । अग्निषु हूयमानेषु प्रस्थितो[2] हुतेष्वागतः । गोषु दुह्यमानासु प्रस्थितो दुग्धास्वागतः । किं पुनः कारणं न सिध्यति ? लक्षणं हि नाम तद्भवति येन पुनः पुनर्लक्ष्यते, सकृच्चासौ कथंचिदग्निषु हूयमानेषु प्रस्थितो हुतेष्वागतः, गोषु दुह्यमानासु प्रस्थितो दुग्धास्वागतः ।

### सिद्धं तु भावप्रवृत्तौ यस्य भावारम्भवचनात् ॥ २ ॥

सिद्धमेतत् । कथम् ? यस्य भावप्रवृत्तौ द्वितीयो भाव आरभ्यते तत्र

---

प्र०- निमित्तादिति । क्रियाफलमिह निमित्तत्वेन विवक्षितम् । यत्क्रियायाः प्रयोजकं यदर्थः क्रियारम्भस्ततो 'हेता'विति तृतीयायां प्राप्तायां सप्तमी विधीयते । तस्य निमित्तस्य यदि कर्मणा संयोगः संबन्धस्ततो 'वेतनेन धान्यं लुनाती'ति सप्तमी न भवति । वेतनस्य धान्येन संयोगाभावात् ॥३६॥

यस्य च । अभावलक्षण इति । भूयो दर्शनाश्रयो हि लक्ष्यलक्षणभावो यथाग्नि-धूमयोः । इह त्वग्निषु हूयमानेषु प्रस्थित इत्यग्निहवनं प्रस्थानेन सह यदा पुनः पुनर्

---

उ०- क्रियाफलमिति । व्याख्यानादिति भावः । 'संयोग' इत्यस्य व्याख्यानं 'संबन्ध' इति समवायस्यापि संग्रहाय ॥३६॥

यस्य च । भूय इति । अनुमापकत्वं—लक्षणत्वम् । तत्प्रकारको बोध इति पूर्वपक्ष इति भावः । यथाग्नीति । तथा च—'उदयति सवितरि तमो नष्टम्' 'धूमे सति वह्निर्भवती'-त्यादावेव स्यादिति भावः ॥ भाष्ये—द्वितीयो भाव आरभ्यत इत्यस्योच्यत इत्यर्थः ।

---

१–'पुष्कलकः शंकुः, स सीम्नि सीमाज्ञानार्थं हतो निखात इत्यर्थः' इति पदमञ्जरी ।
"दुर्गवाक्यप्रबोधे तु कुलचन्द्रस्त्वाह—सीमा-अण्डकोषः । पुष्कलको गन्धमृगः" इति कौस्तुभे दीक्षितः । 'कस्तूरिया मृग' इति कारकीये । (वै० यं० अजमेर)
'सीमाघाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम्' इति मेदिनी । 'अथ पुष्कलको गन्धमृगे क्षपणकीलयोः' इति च । २–'गतोः' पा० ।

सप्तमी वक्तव्या । सिध्यति सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'भावलक्षणे सप्तमीविधानेऽभावलक्षण उपसंख्यान'मिति । नैष दोषः । न खल्ववश्यं तदेव लक्षणं भवति येन पुनः पुनर्लक्ष्यते । सकृदपि यन्निमित्तत्वाय कल्पते तदपि लक्षणं भवति । तद्यथा—अपि भवान्कमण्डलुपाणिं छात्रमद्राक्षीदिति । सकृदसौ कमण्डलुपाणिर्दृष्टश्छात्रस्तस्य तदेव लक्षणं भवति ॥३७॥

## पञ्चमी विभक्ते ॥ २ । ३ । ४२ ॥

इह कस्मान्न भवति—कृष्णा गवां संपन्नक्षीरतमेति ? विभक्त इत्युच्यते न चैतद्विभक्तम् । विभक्तमेतत् । गोभ्यः कृष्णा विभज्यते । विभक्तमेव यन्नित्यं तत्र भवितव्यं न चैतन्नित्यं विभक्तम् । किं वक्तव्यमेतत् ? न हि कथमनुच्यमानं गस्यते ? विभक्तग्रहणसामर्थ्यात् । यदि हि यद्विभक्तं चाविभक्तं च तत्र स्याद्विभक्तग्रहणमनर्थकं स्यात् ॥४२॥

---

प्र०—दृष्टं तदा न तत्तस्य लक्षणमिति वचनारम्भः । सकृदपीति । लक्षणशब्दः क्रियानिमित्तकः लक्ष्यते अनेनेति लक्षणम् । यच्च निर्ज्ञातकालं हवनादिकमनिर्ज्ञातकालस्य सकृदपि कालपरिच्छेदनिमित्तं भवति तत्तस्य लक्षणमित्यर्थः ॥ ७॥

पञ्चमी । कृष्णा गवामिति । गोमण्डलात्कृष्णा गौः पृथक् क्रियत इत्यस्ति विभक्तत्वम् । न चैतदिति । कृष्णाया गोर्गोत्वेन गोष्वन्तर्भावात् । विभक्तग्रहणमिति । सर्वत्रैव निर्धारणे विभागसद्भावात्पूर्वत्रैव पञ्चमीग्रहणं कुर्यात् । तस्माद्विभक्तग्रहणसामर्थ्यादवधारणमाश्रीयत इत्यर्थः ॥४२॥

---

उ०—लक्षणशब्द इति । नायं शब्दोऽनुमापकत्वेनाभिमतलिङ्गपर्यायः, किन्तु 'वृक्षं प्रति विद्योतत' इत्यादाविवानिर्ज्ञातज्ञापनवृत्तिरिति भावः । भाष्ये—सकृदपि यन्निमित्तत्वायेति । तत्कालादिपरिच्छेदनिमित्तत्वायेत्यर्थः । तदेव—कमण्डलुपाणित्वमेव । अनिर्ज्ञातकालस्येति । अनेन मानान्तरेण यस्य स्वरूपं ज्ञातं तस्य कालविशेषज्ञापनार्थं शब्दप्रयोगे एकस्य प्रवृत्तिं सूचयति । 'राहूपरागे स्नाया'दित्यादौ कालवाचकादधिकरणे एव ॥३७॥

पञ्चमी विभक्ते । विभागो—भेदः । गोभ्यो गोरेव कथं विभक्तत्वमत आह—गोमण्डलादिति । पृथक् क्रियते—भेदेन बोध्यते । अवधारणमाश्रीयत इति । 'माथुराः पाटलिपुत्रकेभ्य' इत्यादौ माथुराणां पाटलिपुत्रकेषु प्राणित्वेनान्तर्भावेऽपि शब्दोपात्ताकारापेक्षयानन्तर्भावाद्विभाग एवेति भावः ॥४२॥

## साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ २ । ३ । ४३ ॥

'अप्रत्यादिभिरिति वक्तव्यम्* । इहापि यथा स्यात्—साधुर्देवदत्तो मातरं परि । मातरमनु ॥४३॥

## प्रसितोत्सुकाभ्यां तृतीया च ॥ २ । ३ । ४५ ॥

प्रसित इत्युच्यते कः प्रसितो नाम ? यस्तत्र नित्यं प्रतिबद्धः । कुत एतत् ? सिनोतिरयं बध्नात्यर्थे वर्तते । बद्ध इवासौ तत्र भवति ॥४४॥

## नक्षत्रे च लुपि ॥ २ । ३ । ४५ ॥

इह कस्मान्न भवति—अद्य पुष्यः, अद्य मघा इति ? अधिकरण† इति वर्तते ॥४५॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ।

---

प्र०- साधुनि । अप्रत्यादिभिरिति । प्रतिपर्यनवः प्रत्यादयः ॥४३॥

प्रसितो । कः प्रसित इति । किं प्रकृष्टः शुक्लः प्रसितः, उत स्यतेः सिनोतेर्वा कारकमिति प्रश्नः । यस्तत्रेति । उत्सुकशब्दसाहचर्यात्तदर्थसदृशोऽर्थो गृह्यते । बद्ध इवेति । मुख्यस्य व्यतिषङ्गरूपस्य बन्धनस्याभावात्सादृश्याद् गौणार्थपरिग्रहः ॥४४॥

नक्षत्रे च । अद्य पुष्य इति । पुष्येण युक्तः काल इत्यणो 'लुबविशेषे' इति लुप् । ननु परत्वादत्र प्रथमा भविष्यति । नैतदस्ति । सर्वविभक्त्यपवादोऽयं विज्ञायेत । अन्तरङ्गत्वाद्वा प्रातिपदिकार्थमात्र एवेदं विधानं स्यात् ॥४५॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे द्वितीयस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ।

---

उ०- साधुनि । प्रतिपरीति । कर्मप्रवचनीयसंज्ञासूत्रस्थाः प्रत्यादय इति भावः ॥४३॥

प्रसितो । स्यतेरिति । 'द्यतिस्यती'त्वे कृतेऽस्य सितमिति । कारकं—कर्मकारकम् । व्यतिषङ्गो—रज्ज्वादिभिः सम्बन्धनम् । गौणार्थः—तत्परत्वरूपः । अत एव पूर्वमुत्सुकसाहचर्यादित्युक्तम् । 'तत्परे प्रसितासक्तौ' इत्यमरः ॥४४॥

नक्षत्रे च । एतत्सूत्रप्राप्तये प्रक्रियामाह—पुष्येण युक्त इति । सर्वेति । ततश्च 'पुष्यं प्रतीक्षते' 'पुष्याय स्पृहयति' 'पुष्यस्य समीप' इत्यादि प्रयोगा न सिध्येरन्निति भाव इति सर्वं निर्मलम् ॥४५॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते द्वितीयस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ।

---

१–'अप्रत्यादिभिः' इति वार्तिकमधिकं क्वचित् ।

* लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः १.४.९०. † सप्तम्यधिकरणे च २.३.३६.

# प्रातिपदिकार्थलिंगपरिमाणवचनमात्रे प्रथमा ॥२।३।४६॥

प्रातिपदिकग्रहणं किमर्थम् ? उच्चैः नीचैरित्यत्रापि यथा स्यात् । किं पुनरत्र प्रथमया प्रार्थ्यते ? पदत्वम्* । नैतदस्ति । षष्ठ्यात्र पदत्वं भविष्यति† ।

प्र०– प्रातिपदिकार्थे । प्रातिपदिकग्रहणमिति । ङ्याप्प्रातिपदिकाद्विहितानां स्वादीनां प्रकरणमिदं नियमार्थमित्यन्तरेणापि प्रातिपदिकग्रहणं प्रातिपदिकार्थ एव प्रथमा भविष्यतीति प्रश्नः । उच्चैरिति । असति प्रातिपदिकग्रहणे अव्ययात्प्रथमा न स्यात् । 'बहुषु बहुवचन'मित्यादिनास्यैकवाक्यतायां संख्यायुक्त एव प्रातिपदिकार्थे स्यात् । प्रातिपदिकग्रहणात्तु यस्मात्संख्यारहितेऽप्यव्ययार्थे प्रथमा सिध्यति । अथवा लिङ्गग्रहणात्सर्वत्र प्रथमा सिध्यतीति प्रश्नः । अत एव 'प्रातिपदिकार्थग्रहणं किमर्थ'मिति क्वचित्पाठः । अलिङ्गेऽप्यव्ययार्थे यथा स्यादित्युत्तरम् । प्रातिपदिकार्थश्चेह भाष्यकारेण न विचारितः । अन्वयव्यतिरेकाभ्यां यस्य यो जात्यादिरर्थः प्रतीतस्तस्य सर्वस्येहाभिमतत्वाद्विचारे प्रयोजनाभावात् ।

किं पुनरिति । अव्ययादाप्सुप इति लुग्विधानात्प्रथमाया: श्रवणाभावादिति भावः । पदत्वमिति । 'प्रत्ययलोपे प्रत्ययलक्षण'मिति प्रथमोत्पत्तिनिबन्धनं पदत्वं प्रार्थ्यते । तन्निबन्धनं स्वरादिकमित्यर्थः । षष्ठ्यात्रेति । यस्मिन्नर्थे द्वितीयादयो न विहिताः स शेष इति मन्यते । नन्वसंख्यत्वादव्ययार्थस्य कथं षष्ठी स्यात् ? नैष दोषः । एकत्वाद्यर्थनियमे षष्ठ्याः संख्यायानियमात् । प्रत्ययनियमेऽपि वा तुल्यजातीयापेक्षत्वान्नियमस्यैकत्वादिभिः परस्परस्य व्यावर्तनात् ।

उ०– प्रतिपदिकार्थे । तद्ग्रहणमन्तरा तदर्थे प्रथमानियमालाभात् प्रश्नानुपपत्तिरत आह—ङ्याबिति । अन्तरेणापीति । 'अर्थे' इत्युक्त्वापि कस्यार्थे इत्याकाङ्क्षायां यतः स्वाविविधिस्तदर्थे इति लाभादिति भावः । तत्सत्त्वेऽपि लिङ्गविशिष्टपरिभाषया व्यन्तार्थे तल्लाभः । नन्वव्ययानामप्यर्थवत्त्वात्तेनैव सिद्धमत आह—असतीति । यस्मादिति । प्रातिपदिकग्रहणसामर्थ्यादस्य संख्यावाक्यैरेकवाक्यतायामपि प्रकृतार्थापेक्षन्नियमाश्रयणादर्थनियमाश्रयणाद्वासंख्याद्व्ययाद्वचनसिद्धिरिति भावः ॥ अथवेति । लिङ्गे वर्तमानात्प्रातिपदिकादिति सूत्रार्थः । सर्वत्र लिङ्गं प्रकृत्यर्थ इति भावः । इदं चिन्त्यं, प्रातिपदिकार्थग्रहणाभावे लिङ्गमात्रे इत्यर्थापत्तौ स्त्री पुमानित्यादावेव स्यान्न 'वृक्ष' इत्यादौ, जात्यादेरप्यधिकस्य भानात् । तस्मादाद्यव्याख्यैव ज्यायसी । जात्यादिरिति । आदिना आश्रयः । जातिपदं च प्रवृत्तिनिमित्तोपलक्षणम् ।

यस्मिन्नर्थे इति । प्रातिपदिकार्थे प्रथमाविधानाभावात्तद्व्यतिरिक्तः शेष इति न लभ्यत इति भावः । नन्वसंख्येति । षष्ठीविधायकस्यापि द्व्येकयोरित्यादिभिरेकवाक्यत्वादिति भावः । वस्तुतो द्वितीयादीनां विषयाभावः शेषः प्रातिपदिकार्थरूपः प्रथमाया विषयः सर्वत्रेति न तदपेक्षः शेष इत्याशयेनैकदेश्याह—षष्ठ्यात्रेति । एवं चाद्यव्याख्यानेऽपि नास्य

---

* सुप्तिङन्तं पदम् १. ४. १४. † षष्ठी शेषे २. ३. ५०.

इदं तर्हि प्रयोजनम्। ग्राम उच्चैस्ते स्वम्। ग्राम उच्चैस्तव स्वम्। 'सपूर्वायाः प्रथमाया विभाषा' [ ८. १. २६ ] इत्येष विधिर्यथा स्यात्।

अथ लिङ्गग्रहणं किमर्थम्? 'स्त्री' 'पुमान्' 'नपुंसक'मित्यत्रापि यथा स्यात्। नैतदस्ति प्रयोजनम्। एष एवात्र प्रातिपदिकार्थः।

इदं तर्हि—'कुमारी' 'वृक्षः' 'कुण्ड'मिति।

प्र०- अथ लिङ्गग्रहणमिति। सत्त्वभूतार्थाभिधायीनि यानि प्रातिपदिकानि तेषां लिङ्गमप्यर्थ इति प्रश्नः। मात्रग्रहणात्संबोधने चेति सूत्रारम्भाच्चाधिकविशेषसद्भावे प्रथमा न स्यादिति मत्वाह—स्त्री पुमानिति। द्रव्यमत्र स्त्रीत्वाद्यधिकमभिधीयते। एष एवेति। यमर्थं प्रातिपदिकं न व्यभिचरति स प्रातिपदिकार्थः। स्त्रीत्वादिना च विना स्त्र्यादिशब्दानां प्रयोगाभावः।

कुमारीति। विनापि स्त्रीत्वेन 'कुमारो देवदत्त' इति कुमारशब्दस्य प्रयोगदर्शनात् स्त्रीत्वं न प्रातिपदिकार्थः। वृक्ष. कुण्डमिति। पुंनपुंसकोपलक्षणमेतत्। तटस्तटमित्येतत्तूदाहरणम्। वृक्षकुण्डशब्दयोस्तु पुंनपुंसकत्वेन विना प्रयोगाभावाल्लिङ्गस्य प्रातिपदिकार्थता। कुण्डशब्दस्तु जीवति भर्तरि परेण जाते वर्तमानः पुँल्लिङ्ग इति नपुंसकत्वेन विनापि तस्य प्रयोगात्, 'कुण्डी'ति च स्त्रियामपि वर्तनात् कुण्डमित्येतदुदाहरणमित्यपरे। जातिरेवात्र प्रातिपतिकार्थो न तु लिङ्गमित्यन्ये ब्रुवते।

उ० भाष्यस्यासङ्गतिः। पर एकदेश्याह—इदं तर्हीति। इदं सर्वमेकदेश्युक्तिरित्यग्रे स्फुटीभविष्यति। 'उच्चैर्नीचै'रित्यप्येकदेश्युक्तिः, 'अव्ययादाप्सुप' इति ज्ञापकात् सिद्धेरिति बोध्यम्।

ननु प्रातिपदिकत्वेऽप्यव्ययानां लिङ्गाबोधकत्वेन व्यभिचाराच्च तत्प्रातिपदिकार्थ इत्यत आह—सत्त्वभूतेति। 'प्रातिपदिकार्थ' इत्यस्य हि तत्तत्प्रातिपदिकार्थे इत्यर्थो न तु प्रातिपदिकत्वावच्छिन्नार्थे इति, असंभवादिति भावः। अधिकविशेषेति। द्रव्यजातिभ्यामधिकेत्यर्थः। स्त्रीत्वाद्यधिकमिति। स्त्रीत्वादिकमधिकं यत्रेत्यर्थः। यमर्थमिति। अन्वयव्यतिरेकाभ्यां यस्य प्रातिपदिकस्य योऽर्थोऽवधारितः प्रवृत्तिनिमित्ततदाश्रयरू. स्तदधिकव्यावृत्त्यर्थं मात्रग्रहणमिति भावः। द्रव्यमात्रापेक्षयाधिकव्यावृत्तौ 'घट' इत्यादावपि न स्यादिति तात्पर्यम्।

न प्रातिपदिकार्थ इति। कुमारत्वस्यैव नियमेन भानात्तदर्थता न तु लिङ्गस्येति भावः। अत्र स्त्रीत्वं न प्रवृत्तिनिमित्तमिति भाव इति तत्त्वम्। तटस्तटमिति। अस्य त्रिलिङ्गत्वेन प्रातिपदिकात्कस्यापि लिङ्गस्य नियमेनानुपस्थित्या तस्य प्रातिपदिकार्थत्वाभाव इति भावः। जातिरेवात्रेति। अत्र—प्रकृतसूत्रे। जातिग्रहणं प्रवृत्तिनिमित्तपरम्। प्रातिपदिकार्थः—प्रातिपदिकार्थशब्देन विवक्षितः। 'जाति'पदमाश्रयस्याप्युपलक्षणम्। एवं च भाष्योक्तान्यप्युदाहरणानीति तद्भावः। अन्तरङ्गत्वाच्च तयोरेव प्रातिपदिकार्थशब्देन ग्रहणम्। लिङ्गादीनां तु प्रायेण द्योतकसापेक्षप्रतीतिकतया बहिरङ्गत्वमिति तदाशयः। एतदेवाभिप्रेत्य 'प्रातिपदिकार्थः सत्ते'ति वृत्तावुक्तम्। उक्तव्याख्याद्वयं चिन्त्यमेव। अनेकलिङ्गत्वेऽपि 'स्वमोर्नपुंसका'-दिति शास्त्रबलेन लिङ्गे प्रातिपदिकवाच्यत्वस्यैव सर्वसम्मतत्वेन तटादिशब्देऽपि प्रातिपदिकार्थ-

अथ परिमाणग्रहणं किमर्थम् ? 'द्रोणः' 'खारी' 'आढक'मित्यत्रापि यथा 'स्यात्।'

प्र०- अथेति। द्रोणादयः परिमाण एव वर्तन्त इति प्रातिपदिकार्थग्रहणेनैव प्रथमा सिद्धेति प्रश्नः। द्रोण इति। यदा मानमेयसंबन्धाद्व्रीह्यादौ द्रोणादयो वर्तन्ते तदा व्यभिचारान्नास्ति मेयस्य प्रातिपदिकार्थत्वम्।

उ०-ग्रहणेन सिद्धिः। अत एव द्वितीयाद्यन्ते लिङ्गबोधः। न हि समाने प्रातिपदिकवाच्यत्वे वृक्षादिशब्दवाच्यं प्रातिपदिकार्थशब्देन गृह्यते, न तटादिवाच्यमित्यत्र 'जातिरेवात्रे'त्युक्तातिरिक्तं निमित्तमस्ति। एवं चालिङ्गाव्ययानि, लिङ्गप्रवृत्तिनिमित्तकाः शब्दाः प्रातिपदिकार्थ इत्यस्योदाहरणानि, अन्ये तु लिङ्गाद्याधिक्यस्येति बोध्यम्। येऽपि 'गौर्वाहीक' इत्यादौ गोसदृशे लक्षणां वदन्ति तेषां मते तदेव प्रवृत्तिनिमित्तम्। तदुत्तर'त्व'प्रत्ययेनाभिधीयमानत्वस्यैव प्रवृत्तिनिमित्तत्वस्य विवक्षितत्वात्। अस्माकं तु शक्यतावच्छेदकारोपेणैव तत्तद्बोधः, पदे एव लक्षणेति वादिनां शङ्कैव न।

भाष्ये—अथ परिमाणेति। द्रोणादयो यदि परिमाणवचनास्तदा प्रातिपदिकार्थत्वात्सिद्धिरिति प्रश्नाशयः। उत्तरं तु लक्षणया परिमेयवृत्तिता यदा तदर्थमितीत्याह—यदा मानमेयेति। व्यभिचारादिति। मेयस्यापि द्रोणत्वारोपेण द्रोणादिपदेभ्यो बोधेन तद्बोधेऽपि परिमाणस्य भानास्स नियतः। परिमाणे वृत्तौ मेयार्थत्वाभावेन व्यभिचारी स इति भावः। प्रातिपदिकेन नियतोपस्थितिविषयो हि प्रातिपदिकार्थः। 'परिमाण'शब्दे च कर्मणि ल्युट्, परिमेये इत्यर्थ इति तात्पर्यम्। एवं हि 'सिंहो माणवक' इत्यादौ सा न स्यात्, सिंहसदृशार्थस्य व्यभिचारेणाप्रातिपदिकार्थत्वात्। तस्मात् 'द्रोणः खारी आढकमित्यत्रापि यथा स्या'दिति भाष्यस्य विभक्त्यर्थस्य परिमाणस्य परिच्छेद्यपरिच्छेदकभावेन व्रीह्यादौ मेयेऽन्वयो यथा स्यादित्यर्थः। प्रातिपदिकार्थे प्रथमायां तु नामार्थयोरभेदान्वयव्युत्पत्तिविरोधेन तथान्वयो न स्यात्। कैयटादिमतेऽपि—इत्यत्र मेयवृत्तित्वेऽपि यथा स्यादिति लक्षणया भाष्यव्याख्याया आवश्यकत्वाच्च। सूत्रभाष्यकृतोः 'सिंहो माणवक' इत्यादेरज्ञानकल्पना चाधिका। 'यदा यो नियतोपस्थितिकः स तदा प्रातिपदिकार्थ' इति स्वीकृत्य तदकरणस्यैव न्याय्यत्वं च। मद्व्याख्यायां शाब्दबोधवैलक्षण्याय सूत्रे तद्ग्रहणम्। न च 'परिमाणं प्रातिपदिकार्थ' इति तत एव तल्लाभात्तत्र प्रथमाविधानं व्यर्थं, द्रोणत्वादिना तस्य तदर्थत्वेऽपि परिमाणत्वेन तदर्थत्वाभावात्। न च तव मते 'द्रोणो व्रीहिमानये'त्यपि स्यात्। प्रातिपदिकार्थसाहचर्यात्प्रातिपदिकार्थयोः सम्बन्धे समानविभक्तिकनामान्तरार्थेऽन्वये एव परिमाणे प्रथमायाः साधुत्वबोधनात्। अत एवाभिहिते प्रथमेत्यादिलक्षणैः समफलता। मन्मते हि 'सिंहो माणवक' इति वद्द्रोणो व्रीहिरित्यपि लक्षणया साधु, शब्दबोधकृतवैलक्षण्यानादरेणापि तत्र तत्र वार्तिकप्रवृत्तेर्दर्शनादिति नव्याः॥ प्रवृत्तिनिमित्तं मुख्यं तदाश्रयश्चेति द्वावेव प्रातिपदिकार्थशब्देनात्र विवक्षितावस्यन्तरङ्गत्वात्। अतः परिमाणग्रहणं लक्ष्यार्थोपलक्षणमिति कैयटाशयमन्ये।

अपरे तु 'प्रातिपदिकग्रहणं किमर्थ'मित्यस्य ज्ञापकात्सिद्धिरित्याशयः। तदजानान एकदेश्याह— उच्चैरित्यादि। एकदेशयुक्तित्वादेव 'तिङ्समानाधिकरणे प्रथमे'ति वार्तिकेन, तद्भाष्येणैतत्सूत्रस्थेनाव्ययादाविति सूत्रस्थेन 'ज्ञापकादव्ययेभ्यः सर्वा विभक्तय' इत्यादि भाष्येण

अथ वचनग्रहणं किमर्थम्? इह समुदाये वाक्यपरिसमाप्तिर्दृश्यते। तद्यथा—गर्गाः शतं दण्ड्यन्तामिति। अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति। सत्येतस्मिन् दृष्टान्ते यत्रैतानि समुदितानि भवन्ति तत्रैव स्यात्—द्रोणः खारी आढकमिति। इह न स्यात्—कुमारी वृक्षः कुण्ड-

प्र०— अथ वचनग्रहणमिति। अर्थे कार्यासंभवात्प्रातिपदिकार्थादिवचनात्प्रथमा भविष्यतीति प्रश्नः। इहेति। प्रथमा विधीयमानत्वात्प्रधानम्। न च गुणभेदे प्रधानस्य भेदो भवतीति यत्रैतत् त्रयं समुदितं तत्रैव प्रथमा स्यात्। वचनग्रहणे तु प्रत्येकं संबध्यमाने वाक्यत्रयं संपद्यत इति न दोषो भवति।

उ०—च न विरोधः। तस्मात्प्रातिपदिकग्रहणस्य फलान्तरं न कल्प्यमित्येव भाष्यतात्पर्यम्। एवं प्रत्याख्यातप्रायं प्रातिपदिकग्रहणम्। ज्ञापकात्सर्वविभक्त्युत्पत्तौ प्रथमाया अपि सत्त्वेन च तत्प्रयुक्तकार्यसिद्धिः। 'तिङ्समानाधिकरणे प्रथमैवे'ति च नियमान्न वार्तिकमतेऽपि दोषः। 'अथ लिङ्गे'त्यादे'र्वृक्षः कुण्ड'मितीत्यन्तस्य 'इत्यन्ये ब्रुवत' इति मतेन कैयटोक्त एवार्थः। एतद्रीत्यैव च द्रोणादिशब्दे न सिध्यति। ते हि द्रोणत्वादिप्रवृत्तिनिमित्तका अपि द्रव्य-निष्ठलिङ्गमिव परिमाणत्वमपि बोधयन्तीत्यधिकार्थाः, अतः परिमाणग्रहणम्। न च तेषां तन्निष्ठपरिमाणत्वबोधकत्वे प्रमाणाभावः। सूत्रभाष्यप्रामाण्येनानुभवादिना च तदङ्गीकारात्। तच्चोन्मानादीनामप्युपलक्षणम्। तद् ध्वनयन्नुदाहरति—द्रोणः खारी आढकमिति। अत्र कैयटव्याख्याने, नव्यव्याख्याने च भाष्येऽन्वयिव्रीह्यादिपदानुपादानेन न्यूनता। नव्यव्याख्याने द्रोणो व्रीहिमानये'ति प्रयोगापत्तिश्च। आनुमानिकसाधुत्वबोधकवचनकल्पने गौरवं च। प्रातिपदिकार्थलिङ्गसाहचर्येण परिमाणस्यापि प्रातिपदिकार्थत्वौचित्यं च। अत एव द्वन्द्वो-पपत्तिः। कैयटव्याख्याने 'यदा यो नियतोपस्थितिक' इत्याश्रित्य तदकरणापत्तिश्च। जाति-तदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणेन भेयपरत्वेऽपि सिद्धिश्च। किं च 'यत्रैतानि समु-दितानि भवन्ति तत्रैव स्या'दित्यनुपदवक्ष्यमाणभाष्यविरोधः। तस्य हि यत्र स्वादि-विध्युद्देश्ये एतानि—समुदितानि वाच्यत्वेन भवन्ति तत्रैव स्यादित्यर्थोऽक्षरस्वारस्येन लभ्यते। 'पदस्यैव लक्षणे'ति सिद्धान्ते 'द्रोणो व्रीहि'रित्यस्य कैयटरीत्यानुदाहरणत्वाच्च। न च द्रोणादिशब्दानामियत्ताविशेषावच्छिन्नपलादिपरिमितव्रीह्यादिपरिच्छेदकद्रोणत्ववदादि-बोधजनकत्वात्परिच्छेदकत्वस्यापि प्रातिपदिकत एव लाभात्तत्र प्रथमाविधानवैयर्थ्यमिति वाच्यम्। लाघवेन तत्समानाधिकरणत्वादेरखण्डोपाधिरूपस्य जातिरूपस्यैव वा प्रवृत्ति-निमित्तत्वात्। तत्तु भासमानमपि लिङ्गवद्विशेष्यान्वय्येव। 'द्रोणः परिमाण'मिति तु द्रोणादि-शब्दानामनेकार्थत्वान्निर्णयाय द्वौ ब्राह्मणावितिवद्बोध्यमिति वदन्ति।

नन्नु शब्दे कार्यसिद्ध्यर्थं वचनग्रहणमत आह—अर्थे इति। प्रातिपदिकार्थादिवचना-दिति। सूत्रे तु प्रकृतेरधिकरणत्वविवक्षया सप्तमीति भावः। 'गर्गाः शत'मित्यत्र शतस्य प्राधान्यात्तदावृत्तेरनुचितत्वेनास्तु समुदाये वाक्यपरिसमाप्तिः, प्रकृते कथमत आह—प्रथमेति।

मिति । नैतदस्ति प्रयोजनम् । प्रत्येकमपि वाक्यपरिसमाप्तिर्दृश्यते । तद्यथा—गुणवृद्धिसंज्ञे प्रत्येकं भवतः ।

इदं तर्हि प्रयोजनमुक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यात्—एकः द्वौ बहव इति ।

अथ मात्रग्रहणं किमर्थम् ? एतन्मात्र एव प्रथमा यथा स्यात् कर्मादिविशिष्टे मा भूदिति—कटं करोति ।

प्र०— प्रत्येकमिति । प्रथमा सिद्धैव, केवलं नियमाय तदनुवादेन प्रातिप्रतिकार्थादिभिस्तस्याः संबन्धो विधीयते, स च संबन्धिभेदाद्भिन्नः । अथवा न्यायद्वयसंभवे लक्ष्यदर्शनवशात् 'प्रत्येकं वाक्यपरिसमाप्ति'रिति पक्ष इहाश्रयिष्यते इति भावः ।

उक्तेष्वपीति । अनभिहिताधिकारा'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचन'मित्यादिनास्य प्रकरणस्यैकवाक्यत्वात्परिगणनस्य च प्रत्याख्यातत्वादेकादिभिः शब्दैरेकत्वादीनामभिहितत्वादनभिहिताधिकारस्य प्रत्याख्यान उक्तार्थत्वाद्वा प्रथमा न स्यात् । वचनग्रहणात्तु भवति वचनग्रहणस्य पूर्वाचार्यप्रसिद्ध्याश्रयेण संख्यावाचित्वात्तेनाभिहिते वचने प्रथमा भवतीत्यर्थः संपद्यते ।

कर्मादिविशिष्ट इति । 'कर्मण्येव द्वितीये'ति प्रत्ययनियमे कर्मादीनामनियमात्तेषु प्रथमा स्यात् । मात्रग्रहणात्त्ववधारणान्न भवति । तेन प्रातिपदिकार्थमात्र एव प्रथमा भवति न त्वधिककर्मादिसद्भावे ।

उ०- प्रथमा सिद्धैवेति । तथा चाविधीयमानत्वात्प्राधान्यासिद्ध्या पूर्वन्यायानवतार इति भावः । नियमायेति । 'कर्मण्येव द्वितीये'त्यादिनियमेऽनियतकर्मादिषु प्राप्तप्रथमावारणाय प्रातिपदिकार्थमात्रेण तत्संबन्धबोधनमित्यर्थः । ननु प्राधान्याप्राधान्ये निर्णेतुमशक्ये, विधीयमानस्योद्देश्यार्थतयोद्देश्येऽपि प्राधान्यस्य वक्तुं शक्यत्वात् । अत एव यागोद्देशेन विधीयमाना अपि व्रीह्यादयो गुणत्वेन व्यवह्रियन्तेऽत आह—अथवेति ।

नन्वनभिहिताधिकारेऽपि संख्याविधेस्तन्मध्यपतितत्वाभावोऽत आह—बहुष्विति । इहाधिकृतेनानभिहित इत्यनेन प्रातिपदिकार्थादेः सर्वस्य प्रातिपदिकेनाभिहिततया संख्यैव विशेष्यत इति भावः । ननु परिगणनान्न दोष इत्यत आह—परिगणनस्य चेति । वचनग्रहणादिति । एवं चात्र सूत्रेऽनभिहित इत्यस्यासंबन्ध एवेति भावः ।

मात्रग्रहणादिति । 'मात्र'ग्रहणं कुर्वतः सूत्रकृतः प्रत्ययनियम एवाभिप्रेतः न च प्रत्ययनियमेऽपि 'प्रातिपदिकार्थ एवे'ति नियमेन कर्मादिषु तद्वारणसंभवात्तद्वैयर्थ्यमिति वाच्यम्, यथा 'कर्मण्येव द्वितीये'ति नियमेन कर्मत्वाभावसमानाधिकरणार्थान्तरस्यैव व्यावृत्तिर्न तु तत्समानाधिकरणार्थान्तरस्य । अत एव 'गां दोग्धि पय' इत्यादावपादानत्वादिशक्तिबोधोऽपि द्वितीया भवति । एवं च 'कर्मणि सत्येव द्वितीया न तु तदसत्त्वे' इत्येवं नियमाकारः । तथा 'प्रातिपदिकार्थसत्त्वे एव प्रथमा, न तु तदसत्त्वे' इति नियमेन निरर्थकस्यैव व्यावृत्तिर्न तु प्रातिपदि-

# क्तस्य च वर्तमाने ॥ २ । ३ । ६७ ॥

## क्तस्य च वर्तमाने नपुंसके भाव उपसंख्यानम् ॥ १ ॥

क्तस्य च वर्तमाने नपुंसके भावे† उपसंख्यानं कर्तव्यम् । छात्रस्य हसितम् । नटस्य भुक्तम् । मयूरस्य नृतम् । कोकिलस्य व्याहृतमिति ।

[[1]तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।]

## शेषविज्ञानात्सिद्धम् ॥ २ ॥

शेषलक्षणात्र षष्ठी‡ भविष्यति । शेष इत्युच्यते कश्च शेषः ? कर्मादीनामविवक्षा शेषः । कथं पुनः सतो नामाविवक्षा स्याद् यदा छात्रो हसति, नटो भुङ्क्ते, मयूरो नृत्यति, कोकिलो व्याहरति ? सतोऽप्यविवक्षा भवति । तद्यथा—अलोमिकैडका । अनुदरा कन्येति । असतश्च विवक्षा—समुद्रः कुण्डिका । विन्ध्यो[3] वर्धितकमिति ।

यद्येवमुत्तरत्र* चातुःशब्द्यं प्राप्नोति इदमहेः सृप्तम्** । इहाहिना सृप्तम् ।

प्र०— क्तस्य च । छात्रस्य हसितमिति । हासो हसितमिति नपुंसके भावे क्तः । तत्र कर्तृत्वाच्छात्रस्य कर्तृत्वात्तृतीयाप्रसङ्गे षष्ठीविधानार्थं वचनम् । शेषश्च क इति । कर्तृत्वसद्भावान्नास्ति शेषत्वमिति प्रश्नः । कर्मादीनामिति । सदपि छात्रस्य कर्तृत्वमविवक्षयापाक्रियते । संबन्धित्वमात्रं ह्यत्र विवक्षितम् । छात्रस्य संबन्धि हसितमित्यर्थः । उत्तरत्रेति । 'अधिकरणवाचिनश्च'त्यत्र । इदमिति । अत्राधिकरणे क्तः । तेनाभिहित-

उ०— क्तस्य च । नपुंसके भाव इति । इदं वार्तिकं 'लक्षणप्रतिपदोक्त'परिभाषया कालोदासीन—'नपुंसके भावे क्त' इतिसूत्रविहितक्तयोग एव । तेन भूते भावे क्तेन योगे तृतीयैवेति वार्तिकमतम् । यद्यपि शेषत्वविवक्षयापि सिद्धं तथापि कर्तृत्वप्रकारके बोधे षष्ठ्यर्थमिदमिति वार्तिकाशयः । भाष्यकारस्तु तादृश एवार्थे साधुत्वमङ्गीकृत्य प्रत्याचख्यौ ।

भाष्ये—यद्येवमिति । एवं—शेषत्वविवक्षया षष्ठ्यङ्गीकारे । अधिकरणवाचिनश्चेत्यत्रेति । एतत्सूत्रोदाहरणविषयीभूतगत्यर्थे इत्यर्थः । तत्र हि 'क्तोऽधिकरणे' च ध्रौव्यगती'ति ! विशेषविधानान्नपुंसके भावे क्त इत्यस्याप्रवृत्तिरेवेति वार्तिकमते वार्तिकेन षष्ठी न प्राप्नोति । शेषत्वविवक्षायाश्च भावविषयेऽभाव एवेति वार्तिकमते त्रैशब्द्यम् । प्रत्याख्यातृमते च शेष षष्ठी स्यादिति चातुःशब्द्यमित्यर्थः । तदेवाह—तत्र शेषेति । कर्माविवक्षयाकर्मकत्वे

† नपुंसक भावे क्तः ३. ३ ११४. १–क्वाचित्कोऽयं पाठः ।
२–इदं भाष्यमिति P. S. Subrahmanya Shastri. ‡ षष्ठी शेषे २. ३ ५०.
३–३.२.११० सूत्रभाष्ये २६७ पृष्ठे ४ टिप्पणी द्रष्टव्या । * अधिकरणवाचिनश्च २.३.६८.
**क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ३. ४. ७६.

इहाहिः सुप्तः । इहाहेः सुप्तं ग्रामस्य पार्श्वे ग्रामस्य मध्य इति । इष्यत एव चातुःशब्द्यम् ॥६७॥

## न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥ २ । ३ । ६९ ॥

### लादेशे सल्लिङ्ग्रहणं किकिनोः प्रतिषेधार्थम् ॥ १ ॥

लादेशे सल्लिङ्ग्रहणं कर्तव्यम् । सल्लिटोः प्रयोगे नेति वक्तव्यम् । किं प्रयोजनम् ? किकिनोः प्रतिषेधार्थम् । किकिनोरपि प्रयोगे प्रतिषेधो यथा स्यात्—'पपिः सोमं ददिर्गाः'* ॥ किं पुनः कारणं न सिध्यति ?

### तयोरलादेशत्वात् ॥ २ ॥

न हि तौ लादेशौ ॥ अथ तौ लादेशौ स्यातां स्यात्प्रतिषेधः ? बाढं

प्र०-मधिकरणमिति इदंशब्दात्प्रथमा कृता, अहिशब्दात्त्वधिकरणवाचिनश्चेति षष्ठी। इहाहिना सुप्तमिति । अत्र भावे क्तः । इहाहिः सुप्त इति । तत्र कर्तरि क्तः । इहाहेः सुप्तमिति । भाव एव क्तः । तत्र शेषविवक्षायां षष्ठी स्यादिति चोद्यम् । इष्यत एवेति—परिहारः । 'ग्रामस्य पार्श्वे' इति सप्तमीप्रयोगेण नायमधिकरणे क्तः कृतः, किं तर्हि भाव इति दर्शयति ॥६७॥

न लोकाव्यय । लादेश इति । लग्रहणमपनीय सल्लिङ्ग्रहणं कर्तव्यम् । तत्र सद्ग्रहणेन शतृशानचौ गृह्येते । लिङ्ग्रहणेन च कानच्क्वसू, लिट्संज्ञाविधानात्किकिनौ च । लग्रहणे तु किकिनोरलादेशत्वाद् ग्रहणाप्रसङ्गः । अथ ताविति । लिट्कार्यातिदेशाल्लादेशतुल्यावित्यर्थो विवक्षितः । परस्तु यथोक्तमभिप्रायमप्रतिपद्य लादेशत्वमेवानयोर्विप्रतिपन्नमिति मत्वाह—बाढं स्यादिति । वक्ष्यामीति । व्याख्यास्यामीत्यर्थः ।

उ०-इमानि चत्वारि रूपाणि, सकर्मकत्वे तु अहिना सुप्तो ग्राम इति पञ्चममपि बोध्यमिति केचित् । सप्तमीप्रयोगेणेति । इहेति सप्तमीप्रयोगेणैवेदं दर्शितम् । इहपदार्थस्यैव चेदं विवरणं भाष्ये इति बोध्यम् । किं तर्हि भाव इति । 'इदमिहाहिः सुप्त' इत्युदाहरणे कर्तरीत्यस्योपलक्षणम् ॥६७॥

न लोकाव्यय । अपनीयेति । सल्लिङ्ग्रहणे तस्य फलाभावादित्यर्थः । लग्रहणेनैव शत्कानच्क्वसूनां सिद्धत्वात्किं सल्लिङ्ग्रहणेनेत्यत आह—किकिनौ चेति । 'ले'त्यस्य लादेशयोग इत्येवार्थः । लयोग इति तु न शङ्क्यम् । आदेशो लत्वस्याल्विधित्वेन स्थानिवत्त्वायोगात् । लिट्कार्यातिदेशादिति । द्वित्वविधानेनैव सिद्धौ तद्वदतिदेशाल्लिडादेशतुल्यावित्यर्थं इति भावः । व्याख्यास्यामीति । संज्ञां न व्याख्यास्यामि किं त्वतिदेशं व्याख्यास्यामीत्यर्थः ।

* ऋ० सं० ६. २३. ४.

स्यात् । लादेशौ तर्हि भविष्यतः । तत्कथम् ? 'आदृगमहनजनः किकिनौ लिट च' [ ३. २. १७१ ] इति 'लिड्वदिति वक्ष्यामि । स तर्हि वतिनिर्देशः कर्तव्यो न ह्यन्तरेण वतिमतिदेशो गम्यते । अन्तरेणापि वतिमतिदेशो गम्यते । तद्यथा—एष ब्रह्मदत्तः । अब्रह्मदत्तं ब्रह्मदत्त इत्याह ते मन्यामहे ब्रह्मदत्तवदयं भवती'ति । एवमिहाप्यलिटं लिडित्याह लिट्वदिति विज्ञास्यते ।

उकारप्रयोगे नेति वक्तव्यम् । कटं चिकीर्षुः । ओदनं बुभुक्षुः ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । उकारोऽप्यत्र निर्दिश्यते । कथम् ? प्रश्लिष्टनिर्देशोऽयम्—उ उक ऊक, ल ऊक लोकेति ।

**उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः ॥ ३ ॥**

उकप्रतिषेधे कमेर्भाषायां प्रतिषेधो न भवतीति वक्तव्यम् । दास्याः कामुकः । वृषल्याः कामुकः ।

**अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः ॥ ४ ॥**

अव्ययप्रतिषेधे तोसुन्कसुनोः प्रतिषेधो न भवतीति वक्तव्यम् । पुरा सूर्यस्योदेतोराधेयः[†] । पुरा वत्सानामपाकर्तोः । पुरा क्रूरस्य विसृपो विरप्शिन्[‡] ।

प्र०—परस्त्वपूर्वो वतिनिर्देशः कर्तव्यत्वेनानेन चोदित इति मत्वाह—स तर्हीति । विशेषातिदेशे च सामान्यातिदेशः प्रवर्तत एव, विशेषस्य सामान्याव्यभिचारात् । तेन लमात्रनिबन्धनः षष्ठीप्रतिषेधः किकिनोः प्रवर्तते, तदत्र लिट्संज्ञा किकिनोर्विधीयत इति मत्वा वार्तिकारम्भः । कार्यातिदेशाश्रयेण तत्प्रत्याख्यानम् ।

उकारप्रयोग इति । उकारान्तप्रत्ययप्रयोगे इत्यर्थः । उप्रत्ययोऽपि चान्तवद्भावाद् गृह्यते । उकारोऽपीति । उश्चोकश्चेति द्वयोर्द्वन्द्वः पूर्वं क्रियते ततोऽन्येषाम् । अन्यथा

उ०—ननु लिड्वदतिदेशेऽपि कथं लमात्राश्रयषष्ठीनिषेधोऽत आह—विशेषेति । संज्ञाप्रकरणभावादिति मत्वेत्युक्तम् ।

भाष्ये—उकारेति । कारप्रयोगेण वर्णग्रहणमिति ध्वनितम् । तत्फलमाह—उकारान्तेति । शब्दरूपं विशेष्यमादाय तदन्तविधिः । स च प्रत्यय एव साहचर्यादिति भावः । तेन 'कन्यामलङ्करिष्णु'रित्यादि सिद्धम् । 'प्रत्ययाप्रत्यययो'रिति तु वर्णग्रहणे न प्रवर्तत इति बोध्यम् ।

† काठक सं० ८ । ३.

‡ यजु० वा० सं० १. २८. काठक० १. ६. मैत्रा० १. १. १०. तै० १. १. ६. ३.

## शानंश्चानश्शतॄणामुपसंख्यानम् ॥ ५ ॥

शानंश्चानश्शतॄणामुपसंख्यानं कर्तव्यम् । सोमं पवमानः । [१]नडमाघ्नानः । अधीयन् पारायणम्* । 'लप्रयोगे ने'ति प्रतिषेधो न प्राप्नोति । मा भूदेवं तृनित्येवं भविष्यति । कथम् ? 'तृ'निति नेदं प्रत्ययग्रहणम् । किं तर्हि ? प्रत्याहारग्रहणम् । क्व संनिविष्टानां प्रत्याहारः ? 'लटः शत्रि'त्यतः प्रभृत्यातृनो नकारात्† ।

यदि प्रत्याहारग्रहणं 'चौरस्य द्विषन्' 'वृषलस्य द्विषन्' अत्रापि प्राप्नोति‡ ।

## द्विषः शतुर्वावचनम् ॥ ६ ॥

द्विषः शतुर्वेति वक्तव्यम् । तच्चावश्यं वक्तव्यं प्रत्ययग्रहणे सति प्रतिषेधार्थम् । तदेव प्रत्याहारग्रहणे सति विध्यर्थं भविष्यति ॥६९॥

# अकेनोर्भविष्यदाधमर्ण्ययोः ॥ २ । ३ । ७० ॥

## अकस्य भविष्यति ॥ १ ॥

अकस्य भविष्यतीति वक्तव्यम् । यवाल्लँावको व्रजति । ओदनं भोजको व्रजति । सक्तून्पायको व्रजति†† ।

प्र०-'लवुके'ति स्यात् । लप्रयोगे नेति । एतेषां चालादेशत्वात् ॥६९॥

अकेनोः । यथासंख्यापवादार्थं वचनम्—अकस्येति । स्वरितत्वाप्रतिज्ञानाद्यथासंख्याभावव्याख्यानं चेदमित्याहुः । अकस्य त्वाधमर्ण्ये नास्ति विधानमिति भविष्य-

उ०- एतेषां चेति । पूङ्यजोः शानन्नित्यादीनामित्यर्थः । भाष्ये—प्रतिषेधार्थमिति । षष्ठ्याः सिद्धत्वेन प्रतिषेधमात्रफलकं वार्तिकमिति भावः । तदेव विध्यर्थमिति । नित्यं प्रतिषेधे प्राप्ते पक्षे षष्ठीविध्यर्थमित्यर्थः ॥६९॥

अकेनो । स्वरितत्वेति । 'यथासंख्य'सूत्रे 'स्वरितेने'त्यनुवृत्तेरिति भावः । भविष्यद-

१—'नडस्तु धमनः पोटगलः' इत्यमरः । 'नरसल' 'नरकट' 'नरई' इति भाषायाम् । ६. १. ३२ वा० ६ पृ० ३४३ भाष्ये टिप्पणी द्रष्टव्या । 'नटमाध्मानः' पा० ।

* पूङ्यजोः शानन् ; ताच्छील्यवयोवचनशक्तिषु चानश् ; इङ्धार्योः शत्रकृच्छ्रिणि ३. २. १२८-१३०. † लटः शतृशानचाव० ३.२ १२४ इत्यारभ्य तृन् ३.२.१३५ पर्यन्तम् ।

‡ द्विषोऽमित्रे ३. २. १३१. †† तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३. ३. १०.

इन आधमर्ण्ये च ॥ २ ॥

तत इन आधमर्ण्ये च भविष्यति चेति वक्तव्यम् । शतं दायी । सहस्रं दायी** । ग्रामं गमी† ॥७०॥

## कृत्यानां कर्तरि वा ॥ २ । ३ । ७१ ॥

कर्तृग्रहणं किमर्थम् ? कर्मणि[1] मा भूदिति । नैतदस्ति प्रयोजनम् । भावकर्मणोः कृत्या विधीयन्ते‡ तत्र कृत्यैरभिहितत्वात्कर्मणि षष्ठी न भविष्यति ।

अत उत्तरं पठति—

भव्यादीनां कर्मणोऽनभिधानात्कृत्यानां कर्तृग्रहणम् ॥ १ ॥

भव्यादीनां* कर्म कृत्यैरनभिहितम् । गेयो माणवकः साम्नाम् । भव्यादीनां कर्मणोऽनभिधानात्कृत्यानां कर्तृग्रहणं क्रियते ॥ किमुच्यते 'भव्यादीनां कर्म कृत्यैरनभिहित'मिति । नेहाप्यनभिहितं भवति—आक्रष्टव्या ग्रामं शाखेति ।

प्र०—दधिकारविहितस्यैव तस्य ग्रहणम् । शतं दायीति । 'आवश्यकाधमर्ण्ययोर्णिनि'रिति णिनिः । ग्रामं गमीति । 'भविष्यति गम्यादय' इति वचनाद्भविष्यति गमेरिनिः । 'गत्यर्थकर्मणी'त्यत्र चतुर्थी वेत्येव पक्षे द्वितीयायां सिद्धायां द्वितीयाग्रहणमपवादविषयेऽपि विधानार्थं 'ग्रामं गन्ते'ति यत्कैश्चिदुक्तं तद्भाष्यकारस्य नाभिमतमिति ग्रामं गमीत्युदाहरणोपपत्तिः ॥७०॥

कृत्यानां । नेहापीति । काका नञ्प्रयोगादिहाप्यनभिधानमित्यर्थः । आक्रष्टव्येति ।

उ०—धिकारेति । इदं च 'तुमुन्ण्वुला'वित्यत्र भाष्ये स्पष्टम् । भविष्यदर्थकस्यापि ग्रहणमिति पक्षान्तरमपि तत्र स्पष्टम् ॥७०॥

कृत्यानां । भाष्ये—भावकर्मणोरिति । तत्र भावेऽकर्मकाद्विधानेन कर्मणोऽभाव एव, कर्मणि तु सकर्मकाद्विधानेऽपि तस्याभिधानमेवेति भावः । न च 'कर्तव्यपूर्वी कट'मित्यादावविवक्षितकर्मतया भावे तव्ये पश्चात्कर्मसन्निधाने भावेऽपि संभव इति वाच्यम् । भाष्यप्रामाण्येन कृत्यविषये तथा विवक्षाया अभावादित्याहुः ।

भव्यादीनामिति । तत्र हि कर्तरि कृत्यः, 'गेयो माणवकः साम्ना'मित्यत्र कर्मणि

** आवश्यकाधमर्ण्ययोर्णिनिः ३. ३. १७०. † भविष्यति गम्यादयः ३. ३. ३.

१—[ किं प्रयोजनम् ? संख्यातानुदेशो मा भूदिति । ] इत्यधिकं क्वचित् ।

‡ तयोरेव कृत्यक्तखलर्थाः ३. ४. ७०.

* भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ३. ४. ६८.

१०६

एवं तर्हि योगविभागः करिष्यते—'कृत्यानाम्' । कृत्यानां प्रयोगे षष्ठी न भवतीति । किमुदाहरणम् ? ग्राममाक्रष्टव्या शाखा । ततः 'कर्तृरि वे'ति ।

इहापि तर्हि प्राप्नोति—गेयो माणवकः साम्नामिति । 'उभयप्राप्ता'विति* वर्तते । ननु चोभयप्राप्तिरेवैषा[1]—गेयो माणवकः साम्नामिति च, गेयानि माणवकेन सामानीति च भवति । उभयप्राप्तिर्नाम सा भवति यत्रोभयस्य युगपत्प्रसङ्गोऽत्र च यदा कर्मणि न तदा कर्तरि, यदा कर्तरि न तदा कर्मणीति ॥७१॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम् ॥ पादश्च समाप्तः ।

---

प्र०—कृषेर्द्विकर्मकत्वात्प्रधानकर्मणः कृत्येनाभिधानं न त्वप्रधानकर्मण इति तन्निवृत्त्यर्थमपि कर्तृग्रहणं कस्मान्न भवतीति भावः । एवं तर्हीति । 'कृत्याना'मित्येतावत्सूत्रं क्रियते । तत्र चो'भयप्राप्ता'विति 'ने'ति च वर्तते । तेन कर्तृकर्मणोर्द्वयोरप्युभयप्राप्तौ कृत्ये षष्ठी प्रतिषिध्यते । उभयप्राप्तिरेवैषेति । पर्यायेणेति मन्यते । उभयप्राप्तिर्नामेति । बहुव्रीहिसमासाश्रयणाद्यत्र कृत्ये युगपदुभयोः प्राप्तिस्तत्रैव षष्ठी निषिध्यत इत्यर्थः ॥७१॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटविरचिते भाष्यप्रदीपे द्वितीयस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम् ॥ समाप्तश्चायं तृतीयः पादः ।

---

उ०—विकल्पाभावायेत्यर्थः । तन्निवृत्त्यर्थमपीति । 'कृत्यानां प्रयोगे कर्तर्येव षष्ठी न कर्मणि, सा च वे'ति कस्मान्न व्याख्यायत इत्यर्थः । यद्यप्येवं व्याख्याने 'गेयो माणवकः साम्ना'मिति न सिध्यति, तथापि उभयप्राप्तावित्यनुवर्त्य तत्र दोषाभाव इति भावः । अत्र पक्षे विधिसम्भवे नियमानुपपत्तिमनुभयप्राप्तिविषये 'भवतः कटः कर्तव्यः' 'भवता कटः कर्तव्य' इत्यादावसिद्धिं च मनसि निधाय भाष्ये उक्तम्—एवं तर्हीति । कर्तृकर्मणोर्द्वयोरपीति । विकल्पस्त्वनुभयप्राप्तिविषयः, 'आक्रष्टव्या ग्रामं शाखा देवदत्तेने'त्यस्यैवेष्टेरित्याशयः । वृत्तिस्वरसोऽप्येवमेव । भाष्ये 'ग्राममाक्रष्टव्ये'त्यस्य 'देवदत्तेने'ति शेषः । 'उभयप्राप्ता'वित्यस्य सम्बन्धाज्ञानेन वा तन्मात्रमुदाहृतम् । 'देवदत्तस्य देवदत्तेन वा कर्तव्य'मिति 'कर्तरि वे'त्यस्योदाहरणम् । ननु चोभयप्राप्तिरिति । उभयप्राप्ताविति तत्पुरुष इति भावः । बहुव्रीहिरित्युत्तरम् । पर्यायेणेति । कर्तरि भव्यादीनां विकल्पेन विधानादित्यर्थः । बहुव्रीहीति । कदाचित्कर्तरि कदाचित्कर्मणि कृत्यसत्त्वेन कृत्यप्रत्ययभेदादेकत्र कृत्ये युगपदुभयप्राप्तिर्नास्तीति भावः । अनेन भाष्येण यत्रोभयोः प्रयोगस्तत्रैवोभयप्राप्तिरिति सूचितम् ॥७१॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्द्योते द्वितीयस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम् ॥ पादश्च समाप्तः ।

---

* उभयप्राप्तौ कर्मणि २. ३. ६६. [1]—'प्राप्तिरेषा' पा० ।

# अथ चतुर्थः पादः

## द्विगुरेकवचनम् ॥ २ । ४ । १ ॥

किमर्थमिदमुच्यते ?

**प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च द्विगोरेकवचनविधानम् ॥ १ ॥**

प्रत्यधिकरणं वचनोत्पत्तिर्भवति । किमिदं प्रत्यधिकरणमिति ? अधिकरणमधिकरणं प्रति प्रत्यधिकरणम् । संख्यासामानाधिकरण्याच्च । संख्यया बह्वर्थया चास्य सामानाधिकरण्यम् । प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च 'बहुषु बहुवचनम्' [ १. ४. २१ ] इति बहुवचनं प्राप्नोति । इष्यते चैकवचनं स्यादिति तच्चान्तरेण यत्नं न सिध्यतीति द्विगोरेकवचनविधानम् । एवमर्थमिदमुच्यते ॥ अस्ति प्रयोजनमेतत् ? किं तर्हीति ।

---

प्र०— द्विगुरेकवचनम् । किमर्थमिति । इह समाहारद्विगोरेव ग्रहणमिष्यते । समाहरणं समाहारः । स चैक एवेति सिद्धमेकवचनमिति प्रश्नः । प्रत्यधिकरणमिति । समाह्रियत इति समाहार इति यदा कर्मणि घञ् तदानेकस्यार्थस्य समाह्रियमाणस्य वाचको द्विगुरिति एकत्वाभावादप्राप्तमेकवचनं विधीयत इत्यर्थः । अधिकरणशब्देन द्रव्यमुच्यते । यत्संख्यद्रव्याभिधानं तत्संख्याश्रयं वचनमुत्पद्यत इत्यर्थः । पञ्चपूलीशब्देनात्र पञ्च पूलाः समाह्रियमाणा उच्यन्ते । ततो बहुवचनप्रसङ्ग एकवचनविधानम् । संख्यासामानाधिकरण्याच्चेति । एतेन कर्मसाधनत्वं समाहारशब्दस्य दर्शयति । भावसाधने हि वैयधिकरण्यं पञ्चानां पूलानां समाहार इति । संख्याशब्देनात्र संख्यावाची शब्द उच्यते । संख्यया बह्वर्थयेति । एकत्वनिरासपरमेतत् । तेन द्व्यर्थापि गृह्यते संख्या द्विग्रामीति ।

---

उ०— द्विगुरेकवचनम् । 'तद्धितार्थे'त्यत्र विहितस्य द्विगुत्वात्समाहारद्विगोरेव ग्रहणे मानाभावः, तन्मात्रग्रहणेऽपि समाहारशब्दस्य कर्मसाधनत्वे बहुवचनप्राप्तेर्वक्ष्यमाणमद्रीत्या भावसाधनत्वेऽपि तत्प्राप्तेः प्रश्नानुपपत्तिरत आह—इहेति । कर्मसाधनस्य ग्रहणं तु तत्रैव भाष्ये निराकृतम् । द्रव्यमिति । गुणादीनामाधारत्वादित्यर्थः । एकद्रव्यवाचकत्वरूपसामानाधिकरण्यस्य शब्दधर्मत्वादाह—संख्याशब्देनेति । उच्यते इति । अत एव द्विगुपदेन

## तत्रानुप्रयोगस्यैकवचनाभावोऽद्विगुत्वात् ॥ २ ॥

तत्रानुप्रयोगस्यैकवचनं न प्राप्नोति—'पञ्चपूलीय'मिति । किं कारणम् ? अद्विगुत्वात् । द्विगोरेकवचनं[1]मित्युच्यते न चात्रानुप्रयोगो द्विगुसंज्ञः ।

## सिद्धं तु द्विग्वर्थस्यैकवद्वचनात् ॥ ३ ॥

सिद्धमेतत् । कथम् ? द्विग्वर्थ एकवद्भवतीति वक्तव्यम् ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नेदं पारिभाषिकस्य वचनस्य ग्रहणम् । किं तर्हि ? अन्वर्थग्रहणम् । उच्यते वचनम् । एकस्यार्थस्य वचनमेकवचनमिति ।

## एकशेषप्रतिषेधश्च ॥ ४ ॥

एकशेषस्य च प्रतिषेधो वक्तव्यः । पञ्चपूली च पञ्चपूली च पञ्चपूली च पञ्चपूल्यः ।

## न वान्यस्यानेकत्वात् ॥ ५ ॥

न वा वक्तव्यः । किं कारणम् ? अन्यस्यानेकत्वात् । नैतद् द्विगोरनेकत्वम् । कस्य तर्हि ? द्विग्वर्थसमुदायस्य ।

---

प्र०- तत्रानुप्रयोगस्येति । द्विगुः समास एकवचनं प्रत्ययं प्रतिपद्यत इति पारिभाषिकैकवचनाश्रयेण दोषोपन्यासः । उच्यते वचनमिति । 'कृत्यल्युटो बहुल'मिति कर्मणि ल्युट् । एकस्यार्थस्येति । वाच्यवाचकसंबन्धे षष्ठी । एकस्यार्थस्य वाचको द्विगुः समास एवार्थत इत्यर्थः । तत्र सामर्थ्यादयमतिदेशः संपद्यते । यो ह्यनेकस्यार्थस्य वाचकः स कथमेकस्य वाचकस्तस्मादेकत्वाश्रयकार्यप्राप्तये द्विग्वर्थस्यैकवद्भावो विधीयते । ततश्च तस्मिन्नर्थे प्रयुज्यमानस्याद्विगोरप्येकवचनं सिध्यति ।

एकशेषप्रतिषेधश्चेति । एकशेषविषय एकवद्भाव उपचारादेकशेषशब्देनोक्तः । पञ्चपूल्य इति । अत्रैकशेषे कृतेऽपि द्विगुत्वात्तदर्थस्यैकवद्भावः प्राप्तः प्रतिषिध्यते ॥ न वेति । प्रथमस्य द्विग्वर्थस्यानेकसङ्ख्यायुक्तस्यानेनैकवद्भावः कृतः । तत एकशेषे कृते

---

उ०-सामानाधिकरण्यं, पारिभाषिकग्रहणे हि द्विगोरिति पञ्चमी स्यादिति भावः । 'वचन'मिति च सामान्ये नपुंसकं बोध्यम् ।

द्विग्वर्थस्येति । एवं चानुप्रयोगेऽपि सिद्धिरिति भावः । षष्ठीसमासेऽर्थानुपपत्तिमाशङ्क्याह—एकशेषविषय इति । 'एकशेषे चे'ति भाष्ये विषयसप्तमी । भाष्यस्वारस्यात्तु विषयसप्तम्यन्तेन 'सुप्सुपे'ति समास इति लभ्यते ॥ भाष्ये—नैतद्द्विगोरिति । द्विग्वर्थस्ये-

---

[1]—'द्विगुरेकवचन'मिति पा० ।

**समाहारग्रहणं च तद्धितार्थप्रतिषेधार्थम् ॥ ६ ॥**

समाहारग्रहणं च कर्तव्यम्। किं प्रयोजनम्? तद्धितार्थप्रतिषेधार्थम्। तद्धितार्थे यो द्विगुस्तस्य मा भूदिति—पञ्चकपालौ पञ्चकपाला इति*।

किं पुनरयं पञ्चकपालशब्दः प्रत्येकं परिसमाप्यत आहोस्वित्समुदाये वर्तते। किं चातः? यदि तावत्प्रत्येकं परिसमाप्यते पुरस्तादेव चोदितं परिहृतं च। अथ समुदाये वर्तते।

**न वा समाहारैकत्वात् ॥ ७ ॥**

न वैतत्समाहारैकत्वादपि सिध्यति। एवं तर्हि प्रत्येकं परिसमाप्यते। पुरस्तादेव चोदितं परिहृतं च।

---

प्र०—द्विग्वर्थसमुदायस्याद्विग्वर्थत्वाद् बहिरङ्गत्वाच्च प्राथमकल्पिकेऽन्तरङ्गे द्विग्वर्थे चरितार्थत्वाच्चैकवद्भावो न प्रवर्तत इत्यर्थः।

पञ्चकपालाविति। संस्कृतार्थे विहितस्याणो 'द्विगोर्लुगनपत्ये' इति लुक्।

किं पुनरिति। यदि तावदेकस्मिन् संस्कृते प्रत्ययमुत्पाद्य लुकि कृते एकशेषः क्रियते तदा 'पञ्चपूल्य' इत्यनेन 'पञ्चकपाला' इति समानम्।

अथ प्रथममेव पञ्चसु कपालेषु संस्कृता इति बहुत्वसङ्ख्यायुक्ता अर्था विवक्ष्यन्ते तदा तेषां समाह्रियमाणत्वात् समाहाररूपतास्तीति क्रियमाणेऽपि समाहारग्रहणे निवृत्तिर्न सिध्यतीत्यर्थः। एवं तर्हीति। न हि द्वयोर्बहूनां वा पुरोडाशानां पञ्चसु कपालेषु संस्कारः क्रियते, अपि तु प्रत्येकमिति भावः।

---

उ०—त्यर्थः। समुदायस्येति। उद्भूतावयवभेदस्येत्यर्थः। यद्यपि 'शिष्यमाणं लुप्यमानार्थाभिधायी'त्ययमपि द्विग्वर्थ एव तथापि न दोष इत्याह—बहिरङ्गत्वाच्चेति। बहुवचनसमभिव्याहारेणैवास्य प्रतीत्या जातसंस्कारानिवृत्तिरित्याशयमन्ये।

पञ्चकपालशब्दस्य प्रत्येकं समुदाये वा परिसमाप्तौ तद्धितार्थे द्विगुत्वानपायात्कि विचारेणेत्यत आह—यदि तावदिति। समानमिति। अयमेव 'पुरस्तादेव चोदितं परिहृतं चे'ति भाष्यस्यार्थः।

समाह्रियमाणत्वादिति। समुदायरूपत्वादित्यर्थः। समुदायसमाहारौ च पर्यायाविति भावः। निवृत्तिर्न सिध्यतीति। समाहारानुवादेनैकत्वविधानादप्येतन्न सिध्यतीति भाष्याक्षरार्थः। 'प्रत्येकमेव समाप्ति'रित्यत्र विनिगमकमाह—न हीति। एवं च 'न वा समाहारैकत्वा'दिति निष्फलम्। किं च समासे संख्याविशेषानवगतेः समुदायमादाय बहुवचनोपपत्तिरपि नेति भाष्याशयः।

---

* संस्कृतं भक्षाः ४. २. १६; द्विगोर्लुगनपत्ये ४. १. ८८.

अपर आह—'न वा समाहारैकत्वात्'। न वा योगारम्भेणैवार्थः। किं कारणम्? समाहारैकत्वात्। एकोऽयमर्थः समाहारो नाम तस्यैकत्वादेकवचनं भविष्यति ॥१॥

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ २ । ४ । २ ॥

### प्राणितूर्यसेनाङ्गानां तत्पूर्वपदोत्तरपदग्रहणम् ॥ १ ॥

प्राणितूर्यसेनाङ्गानां तत्पूर्वपदोत्तरपदग्रहणं कर्तव्यम्। प्राण्यङ्गानां प्राण्यङ्गैरिति वक्तव्यम्। तूर्याङ्गानां तूर्याङ्गैः[1]। सेनाङ्गानां सेनाङ्गैरिति[2]। किं प्रयोजनम्? व्यतिकरो मा भूदिति॥ तत्तर्हि वक्तव्यम्? न वक्तव्यम्।

प्र०— अपर आहेति। 'न वा समाहारैकत्वा'दित्येतद्वार्तिकं सूत्रप्रत्याख्यानार्थमित्येतद्व्याचष्टे। अयं भावः—तिरोहितावयवभेदः समूहरूपः समाहारो द्विग्वर्थस्तस्यैकत्वाद्वनयूथादिवत्सिद्धमेकवचनमिति नार्थः सूत्रेण। तस्मिंश्चासति समाहारग्रहणं न कर्तव्यम्। क्रियमाणे तु सूत्रे समाहारग्रहणं तद्धितार्थद्विगुव्यावृत्त्यर्थं कर्तव्यमेव। तेन समाहारेण व्यपदिष्टस्य द्विगोर्ग्रहणं भवति। यस्तु तद्धितार्थे तस्य न भवति। तेन पञ्चभिर्गोभिः क्रीताः पञ्चगवः पटा इत्यादौ द्विग्वर्थस्यैकवद्भावाभावः। यदा बहूनां पटानां पञ्चगुत्वं न तु प्रत्येकं तदैकशेषस्यायमविषयः। एतदेव मन्यमानेन भाष्यकारेण पूर्वं व्याख्यानेऽसमाश्वसता प्रत्याख्यानत्वेन वार्तिकं व्याख्यातम्। उत्तरपदे तु यो द्विगुस्तदर्थस्यार्थान्तरे गुणभावादस्वातन्त्र्यात्सत्यपि प्रातिपदिकत्वे ततः प्रत्ययानुत्पादादेकवद्भावातिदेशः प्रयोजनाभावान्न प्रवर्तते ॥१॥

द्वन्द्वश्च। तत्पूर्वपदोत्तरपदग्रहणमिति। यदङ्गवाचि पूर्वपदं तदङ्गवाच्येव यद्युत्तरपदं भवति तथा सत्येकवद्भावो नान्यथेत्यर्थः। व्यतिकरो मा भूदिति।

उ०— तिरोहितेति। लक्ष्यानुरोधादिति भावः। अत्र पक्षे द्रव्यानयनं तु नान्तरीयकत्वात्, द्रव्याकृत्योरभेदन्यायेन वा। अवश्यं च भावसाधन एव समाहारशब्दस्तत्राश्रयणीयः, अन्यथा 'पञ्चखट्वी'त्यादावनुपसर्जनत्वाद्ध्रस्वो न स्यात्। एवं च न्यायसिद्धार्थानुवादकमेवेदं सूत्रमिति बोध्यम्। समुदाये शब्दसमाप्तौ 'पञ्चगवः पटा' इत्यादौ तद्धितार्थेऽपि समाहारसम्भवात्कथं तेनापि तद्व्यावृत्तिरत आह-समाहारेण व्यपदिष्टस्येति। प्रतिपदोक्तपरिभाषया तद्धितार्थद्विगोश्च तत्त्वाभावादिति भावः। 'पञ्चपूल्य' इत्यनेन नेदं तुल्यमित्याह—यदा बहूनामिति। असमाश्वसतेति। वस्तुतः समासेऽन्तर्वर्तिविभक्त्यर्थसंख्यानवगमेन सर्वत्र समासादेकशेषेणैव बहुवचनादीति भाष्याशयः। अत एवैवं तर्हीत्यादि परिहृतं चेत्यन्तं भाष्यं सङ्गच्छते। अन्यथा तदसङ्गतिरित्यन्ये। उत्तरपदद्विगुस्तु न समाहारग्रहणस्य व्यावर्त्यं इत्याह-उत्तरपदत्वे त्विति। सत्यपि प्रातिपदिकत्वे इति। तत्त्वे सत्यपि स्वगतसंख्याद्यभावान्न ततः प्रत्यय इति भावः। 'पञ्चगवप्रिय' इत्यादौ प्रत्ययान्तत्वाभावाच्च न प्रातिपदिकत्वमित्यपिना सूचितम् ॥१॥

द्वन्द्वश्च। पूर्वपक्षेऽपि प्रत्येकमङ्गशब्दसम्बन्धे युक्तिमाह-न हीति। एवं च पूर्व-

१—'तूर्याङ्गैरिति वक्तव्यम्' पा०। २—'सेनाङ्गैरिति वक्तव्यम्' पा०।

योगविभागात्सिद्धम् ॥ २ ॥

योगविभागः करिष्यते—'द्वन्द्वश्च प्राण्यङ्गानाम्' । ततस्तूर्याङ्गानाम्' । ततः 'सेनाङ्गाना'मिति ॥ स तर्हि योगविभागः कर्तव्यः ? न कर्तव्यः । प्रत्येकमङ्गशब्दः परिसमाप्यते ॥२॥

## अनुवादे चरणानाम् ॥ २ । ४ । ३ ॥

इह कस्मान्न भवति—'नन्दन्तु कठकालापाः । वर्धन्तां कठकौथुमाः' ।

स्थेणोः ॥ १ ॥

स्थेणोरिति वक्तव्यम् ॥ एवमपि 'तिष्ठन्तु कठकालापा' इत्यत्रापि प्राप्नोति ।

अद्यतन्यां च ॥ २ ॥

अद्यतन्यां चेति वक्तव्यम् । 'उदगात्कठकालापम्' । 'प्रत्यष्ठात्कठकौथुमम्' । उदगान्मौदपैप्पलादम्[1] ॥३॥

प्र०—'पाणिमार्दङ्गिकाश्वारोहा' इत्यादावेकवद्भावो मा भूदित्यर्थः । प्रत्येकमिति । बहुवचनान्तोऽङ्गशब्दः प्रत्येकमभिसंबध्यत इति भावः । पूर्वपक्षेऽपि प्रत्येकमेवाङ्गशब्दस्य संबन्धः । स त्वन्यथा प्राण्यङ्गतूर्याङ्गसेनाङ्गवाचिनां द्वन्द्व एकवदिति । न हि प्राणितूर्यसेनानामेकमङ्गं संभवतीति सामर्थ्यादेव प्रत्येकपरिसमाप्तिरङ्गशब्दस्य सिद्धा । तस्मादन्यथा प्रत्येकं परिसमाप्तिर्बहुवचनान्तस्य सतः प्रतिपाद्यते । तेनास्माद् ग्रहणकवाक्याल्लक्ष्यसंस्कारकं वाक्यत्रयमुपप्लवत इति संकरो न भवति ॥२॥

अनुवादे । यदा प्रतिपत्ता प्रमाणान्तरावगतमप्यर्थं कार्यान्तरार्थं प्रयोक्त्रा प्रतिपाद्यत तदानुवादो भवति ॥३॥

उ०—पक्षात्सिद्धान्ते को विशेष इत्यत आह—तस्मादन्यथेति । 'अङ्गाना'मित्येवंरूपबहुवचनान्तस्य सतः प्रत्येकं समाप्तिरित्यर्थः । पूर्वपक्षे प्राण्यङ्गस्य तूर्याङ्गस्येत्यादिवचनव्यक्त्या व्यतिकरः शङ्कितः । सिद्धान्ते तु प्राण्यङ्गानामित्यादिबहुवचनान्तलक्ष्यसंस्कारकवाक्यत्रयलाभात् प्राण्यङ्गानां प्राण्यङ्गैरेव समास एकवद्भाव इति विशेष इति भावः । केवलप्रातिपदिकस्य पदान्तरेणान्वयायोगाद्विभक्त्यन्तस्यैवान्वयो वाच्यः, तथा च श्रूयमाणविभक्तिं त्यक्त्वा विभक्त्यन्तरकल्पने गौरवाद्बहुवचनान्तस्यैवाङ्गशब्दस्यान्वय इति तात्पर्यम् । वाक्यत्रयमिति । बहुवचनान्ताङ्गशब्दघटितामित्यर्थः । अत्र तूर्याङ्गशब्देन वादका एव गृह्यन्ते, 'मृदङ्गशङ्खतूणवा' इत्यल्पाच्तरमिति सूत्रे भाष्यप्रयोगात् । तत्साहचर्याच्च सेनाङ्गशब्देन रथाद्यारूढानामेव ग्रहणम् । 'संग्रामं हस्त्यश्वरथपदातिभि'रिति 'येन विधि'रिति सूत्रस्थभाष्यस्वरसाच्च 'फलसेने'त्यत्र तु सेनाशब्देन हस्तिरथादय एवेत्याहुः ॥२॥

अनुवादे । प्रतिपत्ता—श्रोता । अद्यतन्यामिति । अद्यतनीति लुङः संज्ञा ॥३॥

१—'उदगात्कौमोदपैप्पलादम्' पा० ।

## विशिष्टलिङ्गो नदीदेशोऽग्रामाः ॥ २ । ४ । ७ ॥

### ग्रामप्रतिषेधे नगरप्रतिषेधः ॥ १ ॥

अग्रामा इत्यत्रानगराणामिति वक्तव्यम् । इह मा भूत्—[1]मथुरापाटलिपुत्रमिति ।

### उभयतश्च ग्रामाणाम् ॥ २ ॥

उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः । इह मा भूत्—शौर्यं च केतवता च शौर्यकेतवते । जाम्बवं च [2]शालुकिनी च जाम्बवशालुकिन्यौ ॥७॥

## क्षुद्रजन्तवः ॥ २ । ४ । ८ ॥

क्षुद्रजन्तव इत्युच्यते के पुनः क्षुद्रजन्तवः ? क्षोत्तव्या जन्तवः क्षुद्रजन्तवः । यद्येवं यूकालिक्षम् कीटपिपीलिक[3]मिति न सिध्यति । एवं तर्ह्यनस्थिकाः क्षुद्रजन्तवः । अथवा येषां स्वं शोणितं नास्ति ते क्षुद्रजन्तवः । अथवा येषामासहस्रादञ्जलिर्न पूर्यते ते क्षुद्रजन्तवः । अथवा येषां गोचर्ममात्रं राशिं हत्वा न पतितो भवति ते क्षुद्रजन्तवः । अथवा नकुलपर्यन्ताः †क्षुद्रजन्तवः ॥८॥

प्र०- विशिष्ट । जनपदविशेषो ग्रामः । 'ग्रामे नाध्येयम्' 'अभक्ष्यो ग्राम्यकुक्कुट' इत्यादौ ग्रामग्रहणे नगरस्यापि ग्रहणदर्शनाद्वचनम्—अग्रामा इत्यत्रेति । उभयत इति । ग्रामनगरोभयावयवे द्वन्द्वे ग्रामसंबध्येव प्रतिषेधो वक्तव्यः । शौर्यम्—नगरम् । केतवता—ग्रामः । जाम्बवम्—नगरम् । शालूकिनी—ग्रामः ॥७॥

क्षुद्रजन्तवः । स्मृतीनां विरुद्धार्थानां दर्शनात्प्रश्नः—के क्षुद्रजन्तव इति । क्षोत्तव्या इति । अर्हार्थे कृत्यः । ये क्षुद्यमाना अपि न म्रियन्ते जलौकःप्रभृतयः । ये तु म्रियन्ते ते पापनिमित्तत्वादक्षोदनार्हाः । नकुलपर्यन्ता इति । एतदेव दर्शनमत्र व्यापित्वाद्गृह्यते । अत एतैतत्पश्चादुपन्यस्तम् ॥८॥

उ०- विशिष्ट । जनपदविशेष इति । जनवासस्थानविशेष इत्यर्थः । ग्रामप्रतिषेध इति । 'ग्राम'ग्रहणेन नगराणां ग्रहणं नेत्यर्थः । भाष्ये-उभयतश्चेति । यो ग्रामाणां प्रतिषेधः स उभयतः ग्रामसर्वावयवकस्य ग्रामान्यतरावयवकस्य चेत्यर्थः । नगरसर्वावयवके चानगराणामिति प्रतिषेध इति भावः । तदाह-ग्रामनगरेत्यादि ॥७॥

क्षुद्रजन्तवः । अर्हार्थे इति । अनेन क्षुद्रशब्दे रगपि अर्हार्थः, तेन जन्तुशब्दस्य कर्मधारय इति ध्वनितम् । स्वं शोणितं नास्तीति । यथा जलौकःप्रभृतीनाम् ॥८॥

१–'मधुरा' पा० । २–'शालूकिनी' पा० । ३–क्वचिन्न पा० । ४–'दंशमशक'मित्यधिकं क्वचित् । † 'क्षुद्रजन्तुरनस्थि स्यादथवा क्षुद्र एव यः । शतं वा प्रसृतौ येषां केचिदानकुलादपि ॥' इति लक्षणसंग्राहकपद्यं काशिकादिषु विद्यते ।

## येषां च विरोधः शाश्वतिकः ॥ २ । ४ । ९ ॥

किमर्थश्चकारः ? एवकारार्थश्चकारः । येषां विरोधः शाश्वतिकस्तेषां द्वन्द्व एकवचनमेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत्प्राप्नोति ? 'पशुशकुनिद्वन्द्वे विरोधिनां पूर्वविप्रतिषिद्ध'मित्युक्तं* स पूर्वविप्रतिषेधो न वक्तव्यो भवति ॥९॥

## शूद्राणामनिरवसितानाम् ॥ २ । ४ । १० ॥

'अनिरवसिताना'मित्युच्यते कुतोऽनिरवसितानाम् ? आर्यावर्तादनिरवसितानाम् । कः पुनरार्यावर्तः ? '[1]प्रागदर्शनात्प्रत्यक्कालकवनाद् दक्षिणेन हिम-

प्र०- येषां च । यदन्यदिति । चकारेण यत्नेन परो विकल्पो बाध्यते । तेनाश्वमहिषं काकोलूकमिति नित्य एकवद्भावो भवति ॥९॥

शूद्राणाम । निरवसिता बहिष्कृता उच्यन्ते । तत्रावधिप्रश्नः—कुत इति । प्रागादर्शादिति । आदर्शादयः-पर्वतविशेषाः । दक्षिणेनेति । एनबन्तः । 'एनपा

उ०- येषां च । यत्नेनेति । पुनर्विधानार्थेनेत्यर्थः ॥९॥

शूद्राणाम । प्रत्यय इति । 'दिक्शब्देभ्य' इत्यादिनास्तातिः, तस्य च लुगिति भावः ।

* २. ४. १२ वा० २.

१–'प्रागादर्शात्' 'प्रागदर्शात्' पा० । 'आर्यावर्तः प्रागादर्शात्प्रत्यक्कालकवनादुदक्पारियात्राद् दक्षिणेन हिमवतः ॥८॥ उत्तरेण च विन्ध्यस्य ॥९॥" इति श्रीवासिष्ठधर्मशास्त्रे प्रथमाध्याये पाठः । तत्र च 'प्राग्विनशनात्प्रत्यक्कालकवना'दित्यपि पाठः ।

"प्रागदर्शनात् प्रत्यक्कालकवनाद् दक्षिणेन हिमवन्तमुदक्पारियात्रमेतदार्यावर्तं तस्मिन् य आचारः स प्रमाणम् ।" ( बौधायनधर्मसूत्रम् १. २. १० )

अत्र चेयं चिन्नस्वामिशास्त्रिणां टिप्पणी—"बहुषु बौधायनधर्मसूत्रपुस्तकेषु हस्तलिखितेषु मुद्रितेषु च "प्रागदर्शनात्" इत्येव पाठः समुपलभ्यते । अतः 'यत्प्राग्विनशनादपि' इति मनुवचनानुरोधेन च सूत्रे "अदर्शनात्" इत्येव पाठस्समुचितः, तस्य च यत्र सरस्वती नदी अदर्शनं गता स देशः विनशनाख्य एवार्थं इत्युचितं प्रतिभाति ।"

"आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥"

इति मनुः ( २ । २२ ) इदमेवार्यावर्तलक्षणं महर्षिदयानन्देन सत्यार्थप्रकाशेऽष्टमसमुल्लासे स्वीकृतम् ।

"इसकी अवधि उत्तर में हिमालय, दक्षिण में विन्ध्याचल, पश्चिम में अटक और पूर्व में ब्रह्मपुत्र नदी है, इन चारों के बीच में जितना देश है उसको "आर्यावर्त' कहते हैं ।" ( स्वमन्तव्यामन्तव्यप्रकाश ३० )

मनूक्ता विस्तृतार्यावर्तसीमा पतञ्जलिकाले सङ्कोचमापद्यत । अत एव मनुना यो मध्यदेशः प्रकीर्तितः स एव सूत्रकारभाष्यकारप्रभृतिभिरार्यावर्तत्वेन निर्दिष्टः ।

वन्तमुत्तरेण पारियात्रम्' । यद्येवं किष्किन्धगन्धिकम्[1] शकयवनम् शौर्यक्रौञ्चमिति न सिध्यति ।

एवं तर्ह्यार्यनिवासादनिरवसितानाम् । कः पुनरार्यनिवासः ? ग्रामो घोषो नगरं संवाह इति । एवमपि य एते महान्तः संस्त्यायास्तेष्वभ्यन्तराश्चण्डाला मृतपाश्च वसन्ति तत्र 'चण्डालमृतपा' इति न सिध्यति ।

एवं तर्हि [2]याज्ञात्कर्मणोऽनिरवसितानाम् । एवमपि 'तक्षायस्कारम्' 'रजकतन्तुवाय'मिति न सिध्यति ।

एवं तर्हि पात्रादनिरवसितानाम् । यैर्भुक्ते पात्रं संस्कारेण शुध्यति तेऽनिरवसिताः । यैर्भुक्ते पात्रं [3]संस्कारेणापि न शुध्यति ते निरवसिताः ॥१०॥

---

प्र०–द्वितीया' । प्रागादिभ्यः प्रथमान्तेभ्यो देशवृत्तिभ्यः प्रत्ययो विहितः । एतत्पर्वतचतुष्टयमध्य आर्यावर्तो देश इत्यर्थः । यद्येवमिति । एतेषामार्यावर्ताद् बाह्यत्वादिति भावः । ग्राम इति । एतेष्वार्या निवसन्तीति भावः । तत्र ग्रामः–प्रसिद्धः । घोषो–गोमहिष्यादिनिवासः । संवाहो–वणिक्प्रधानः । संस्त्याया इति । निवासविशेषा इत्यर्थः । मृतपाः—डोम्बा इत्याहुः । याज्ञादिति । शूद्राणां पञ्चयज्ञानुष्ठानेऽधिकारोऽस्तीति भावः । तक्षायस्कारमिति । तक्षादीनां यज्ञेऽधिकाराभावादिति भावः । संस्कारेणेति । यः संस्कारः स्मृतिकारैर्द्रव्यशुद्धौ पठितस्तेनैव न तदधिकेनेत्यर्थः ॥१०॥

---

उ०–डोम्बा इति । श्मशाननिकटे ये वसन्ति मृतवस्त्रचितिकाष्ठादिसंग्राहकाश्चण्डालसदृशास्ते 'डोम्बा' इत्युच्यन्ते । 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्त' इति श्रुतेः शूद्राणां यज्ञकर्मणोऽबहिष्कृतत्वं विरुद्धमित्यत आह–शूद्राणामिति । पूर्वोक्तश्रुतिस्त्वग्निहोत्रादिविषयेति भावः । तक्षादीनामिति । तेषां प्रतिलोमत्वादिति भावः । शूद्रशब्दोऽत्र सूत्रे त्रैवर्णिकेतरपर इति बोध्यम् । स्मृतिकारैरिति । 'भस्मना शुध्यते कांस्य'मित्यादि ॥१०॥

---

"हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥"
( मनुः २ । २१ ) "विनशनात् सरस्वत्यन्तर्धानदेशात्" इति कुल्लूकभट्टः । मनुनेह योऽर्थो विनशनशब्देनोक्त स एव भाष्य 'अदर्शन'शब्देनाभिहित इति दृढं विश्वसीमि ।

६. ३. १०९. सूत्रभाष्येऽपीदमेवार्यावर्तलक्षणविधायकसूत्रं वर्तते । तत्र 'आदर्शादयः पर्वतविशेषाः' इति कैयटः । "आदर्शः कुरुक्षेत्रे पर्वतः" इति नागेशः । "आदर्शः ('नारनौल') 'ढोसी'ति प्रसिद्धः पर्वतः" इति गुरुप्रसादशास्त्री । 'सर्वेऽप्यशुद्धपाठमाश्रित्य भ्रान्ताः शास्त्रविरुद्धं लोकविरुद्धं चार्थापयाञ्चक्रुः । १–'किष्किन्धगन्दिकम्' पा० ।
२–'यज्ञात्' पा० । ३–भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति '
"मलसंयोगजं तज्जं यस्य येनोपहन्यते । तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत् ॥"
"त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः । भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य तु ॥"
(याज्ञ० आचाराध्यायः १९०) मनुस्मृतौ पञ्चमाध्याये विस्तरेण द्रष्टव्या शुद्धिः ।

## गवाश्वप्रभृतीनि च ॥ २ । ४ । ११ ॥

### गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तम् ॥ १ ॥

गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तं द्रष्टव्यम् । गवाश्वम् गवाविकम् गवैडकम् ॥११॥

## विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ॥ २ । ४ । १२ ॥

### बहुप्रकृतिः फलसेनावनस्पतिमृगशकुन्तक्षुद्रजन्तुधान्यतृणानाम् ॥१॥

'फलसेनावनस्पतिमृगशकुन्त[1]क्षुद्रजन्तुधान्यतृणानां द्वन्द्वो विभाषैकवद्भवति बहुप्रकृति'रिति वक्तव्यम् । फल—बदरामलकम् बदरामलकानि ॥ सेना—

---

प्र०- गवाश्वप्र । यथोच्चारितमिति । गणे यादृशाः कृतावङः पठिता द्वन्द्वास्तादृशानामेवेदं कार्यमेकवद्भावलक्षणं भवतीत्यर्थः । यदा त्ववङ्नास्ति विकल्पितत्वात्तदा पशुद्वन्द्वे विभाषा भवति, गोऽश्वं गोऽश्वा इति । एतेन गणपाठरूपं विवक्षितमित्युक्तं भवति ॥११॥

विभाषा वृक्ष । बहुप्रकृतिरिति । बहवो—बहुत्वसङ्ख्यायुक्ता वर्तिपदार्थाः प्रकृतयः—कारणानि यस्य स बहुप्रकृतिः । बदरामलकमिति । 'जातिरप्राणिना'-

---

उ०- गवाश्वप्र । भाष्ये—यथोच्चारितं द्वन्द्ववृत्तमिति । द्वन्द्वप्रयुक्तमिदं कार्यं गणे यथोच्चारितशब्दविषयमित्यर्थः । तत्फलमित्याह—गणे इति । 'यथोच्चारित'मित्यस्य फलमाह—यदा त्विति ॥११॥

विभाषा वृक्ष । द्वन्द्वप्रकृतिः—वर्तिपदानि, तेषां बहुत्वे त्रिप्रभृतिष्वेव स्यादत आह—बहव इति । पदार्थास्तादृशपदार्थप्रतिपादकाः शब्दाः, तदर्थानां बहुत्वगमकश्चैकवद्भाव एव । यद्वा बदरत्वेनैवानेकेषां भानमेकवद्भावबलादिति नैकार्थीभावविरोधः । एतत्सूत्रानुपात्तफल-द्वन्द्वस्येहोपादानं बहुप्रकृतित्वनियमायेत्याह—जातिरिति । न च—जातिप्राधान्य एव 'जाति'-रित्यस्य प्राप्तिः । तत्र च न बहुवचनं तस्या एकत्वात् । अत एव 'क्षीरोदके संपृक्ते' इ'त्यन्ता-द्विवच'ने'ति सूत्रस्थभाष्यप्रयोगः सङ्गच्छते, 'जात्याख्याया'मिति सूत्रं च भगवता प्रत्याख्यात-मिति वाच्यम्, जातिप्राधान्ये एव जातौ व्यक्तिद्वारकपरम्परया संख्यान्वये तत्सम्भवात् तदेवं जातिप्राधान्ये व्यक्तिद्वारकपरम्परया संख्यान्वये 'बदरामलक'मित्येव । पाठान्तरे आद्य-

---

१–'शकुनि' पा० ।

हस्त्यश्वम् हस्त्यश्वाः ॥ वनस्पति—प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधाः ॥ मृग—रुरुपृषतम्। रुरुपृषताः ॥ [1]शकुन्त—हंसचक्रवाकम् हंसचक्रवाकाः ॥ क्षुद्र-जन्तु—यूकालिक्षम् यूकालिक्षाः ॥ धान्य—व्रीहियवम् व्रीहियवाः। माष-तिलम् माषतिलाः ॥ तृण—कुशकाशम् कुशकाशाः। [2]शरशीर्यम् शरशीर्याः। किं प्रयोजनम्? बहुप्रकृतिरेव यस्तत्र यथा स्यात्। क मा भूत्? बदरामलके तिष्ठतः।

किं पुनरनेन या प्राप्तिः सा नियम्यत आहोस्विदविशेषेण? किं चातः? यद्यनेन या प्राप्तिः सा नियम्यते प्लक्षन्यग्रोधौ 'जातिरप्राणिनाम्' [२.४.६]

प्र०–मित्येकवद्भावः। कचित्तु 'बदरामलकानी'त्यपि पठ्यते। तत्रैवं व्याचक्षते—नित्य एकवद्भावे प्राप्ते विकल्पोऽनेन वचनेन क्रियते। अन्ये तु 'बदरामलकानी'त्येवं प्राप्ते जातिलक्षणो नित्य एकवद्भावो बहुप्रकृतेर्भवतीति प्रदर्श्यत इत्याहुः। हस्त्यश्वमिति। सेनाङ्गत्वेऽपि परत्वात्पशुलक्षणो विकल्पो भवति।

किं पुनरिति। अस्मिन्प्रदेशे पठितत्वात्किमेतत्सूत्रविहित एव एकवद्भावो नियत-

उ०–व्याख्यायां 'बदरामलकानी'त्यपि। व्यक्तिप्राधान्ये तु 'बदरामलकानी'त्यपि। जातौ साक्षात्संख्यान्वये 'बदरामलके' इत्येव। व्यक्तिप्राधान्ये व्यक्तेरेकत्वविवक्षायां 'बदरामलके' 'बदरामलक'मित्युभयमिति लभ्यते इति बोध्यम्। व्याचक्षत इति। अन्यत्रत्यस्येह पाठ-सामर्थ्याद्विकल्पो बहुप्रकृतित्वं चानेन विधीयत इति तदाशयः। अत एव वार्तिकव्याख्यानभाष्ये 'विभाषे'त्युक्तम्। अन्ये त्विति। वार्तिकव्याख्यानभाष्ये विकल्पो न वाचनिकः, किं तु 'विभाषा वृक्षे'ति सूत्रप्राप्तिविषयानुवादकः। तस्मादेषां य एकवद्भवति यश्च विभाषा एकवद्भवति स सर्वोऽपि बहुप्रकृतिरेवेति वाच्यमिति वार्तिकव्याख्यानभाष्यार्थः। एवमेव 'यूकालिक्षा' इत्यपि भाष्यं व्याख्येयम्। अत एवाग्रे 'बहुप्रकृतिरेव यस्तत्र यथा स्या'दित्येव प्रयोजनमुक्तम्, न तु फल-क्षुद्रजन्त्वंशे विकल्पोऽपि प्रयोजनत्वेनोक्त इति तदाशयः। अत्राद्यव्याख्यैव युक्ता। भाष्यकारेण फलक्षुद्रजन्त्वोर्विभाषाप्रकरणे पाठः कर्तव्य इत्युच्यते, अतो न वार्तिकप्रयोजनकथनभाष्य-विरोधः। यथोत्तरं मुनीनां प्रामाण्याच्चैवमेव युक्तमित्याहुः। सेनाङ्गत्वेऽपीति। इदं चिन्त्यं, तत्र सेनाङ्गशब्देन हस्त्यश्वारोहादीनामेव ग्रहणात्। अत्र तु सेनाशब्देन हस्त्यश्वादीनां ग्रहणं, भाष्यप्रामाण्यात्। अत एव 'संग्रामं हस्त्यश्वरथपदातिभि'रिति भाष्यप्रयोगः सङ्गच्छते। बहुप्रकृतित्वाभावान्नैकवदिति तु न युक्तं बहुभिरेव तैः संग्रामस्य निष्पाद्यत्वात्। 'वनस्पति'-शब्देन वार्तिके वृक्षग्रहणम्।

एतत्सूत्रानुपात्तानामपि पाठात्प्रकरणविषयत्वनिश्चयेन सन्देहानुपपत्तिरत आह—

१–'शकुनि' पा०। २–'शरशीर्षम् शरशीर्षाः' पा०।

इति नित्यो द्वन्द्वैकवद्भावः प्राप्नोति। अथाविशेषेण न दोषो भवति। यथा न दोषस्तथास्तु।

## पशुशकुनिद्वन्द्वे विरोधिनां पूर्वविप्रतिषिद्धम् ॥ २ ॥

पशुशकुनिद्वन्द्वे [ विरोधिनां ] 'येषां च विरोधः शाश्वतिकः' [२.४.९] इत्येतद्भवति पूर्वविप्रतिषेधेन। पशुशकुनिद्वन्द्वस्यावकाशः—महाजोरभ्रम् महाजोरभ्राः। हंसचक्रवाकम् हंसचक्रवाकाः। 'येषां च विरोधः [1]शाश्वतिक' इत्यस्यावकाशः—श्रमणब्राह्मणम्। इहोभयं प्राप्नोति—काकोलूकम् श्वशृगालमिति। 'येषां च विरोधः [1]शाश्वतिक' इत्येतद्भवति पूर्वविप्रतिषेधेन।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः। उक्तं [1]तत्र चकारकरणस्य प्रयोजनं 'येषां च विरोधः शाश्वतिकस्तेषां द्वन्द्व एकवचनमेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भू'दिति*।

## अश्ववडवयोः पूर्वलिङ्गत्वात्पशुद्वन्द्वनपुंसकम् ॥ ३ ॥

अश्ववडवयोः पूर्वलिङ्गत्वात्पशुद्वन्द्वनपुंसकं भवति पूर्वविप्रतिषेधेन†।

अश्ववडवयोः पूर्वलिङ्गत्वस्यावकाशः—विभाषा पशुद्वन्द्वनपुंसकम्, यदा न पशुद्वन्द्वनपुंसकं सोऽवकाशः—अश्ववडवौ। पशुद्वन्द्वनपुंसकस्यावकाशः—अन्ये पशुद्वन्द्वाः—महाजोरभ्रम् महाजोरभ्राः। पशुद्वन्द्वनपुंसकप्रसङ्ग उभयं प्राप्नोति—अश्ववडवम्। पशुद्वन्द्वनपुंसकं भवति पूर्वविप्रतिषेधेन।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः।

---

प्र०–विषयो व्यवस्थाप्यतेऽथ प्रकरणविहित इति प्रश्नः। येषां सूत्रान्तरेणानेन च प्राप्तिर्वनस्पत्यादीनां तद्विषय एव संशयो न त्वन्यतरप्राप्तिविषयः। यथा न दोष इति। व्यापित्वात्प्रकरणापेक्षोऽयं विषयनियम इत्यर्थः॥ अश्ववडवयोरिति। पशुत्वाद्वि-

---

उ०–येषामिति। एतत्सूत्रोपात्तविषय एव सन्देह इति भावः। भाष्ये—नित्यो द्वन्द्वैकवद्भावः प्राप्नोतीति। अस्य नियमेन वारणेऽपि नित्यं प्राप्नोतीत्यर्थः। अविशेषेणेति। एष्वेकवचनद्वन्द्वविषयं यद्यच्छास्त्रं प्राप्नोति तद्बहुप्रकृतेरेवेत्यर्थं इति भावः। एतेन 'बदरामलके' इत्यत्र 'जाति'रित्यस्याप्रवृत्तावपि 'चार्थे' इति विभाषा स्यादित्यपास्तम्। पशुत्वेनैव सिद्धेऽश्ववडग्रहणं न कार्यमित्याशयेन वार्तिकमित्याह—पशुत्वादिति॥ नात्रेति। पूर्वविप्रतिषेधादश्ववडव-

---

१-कचिन्न। * २. ४. ९. सूत्रभाष्यारम्भ एव पृ० ८४९ पं० १।

† पूर्ववदश्ववडवौ; स नपुंसकम् २. ४. २७; १७.

## प्रतिपदविधानात्सिद्धम् ॥ ४ ॥

प्रतिपदमत्र नपुंसकं विधीयते—'अश्ववडवपूर्वापरे'ति ।

## एकवचनमनर्थकं समाहारैकत्वात् ॥ ५ ॥

एकवद्भावोऽनर्थकः । किं कारणम् ? समाहारैकत्वात् । एकोऽयमर्थः समाहारो नाम तस्यैकत्वादेकवचनं भविष्यति ।

इदं तर्हि प्रयोजनम् । एतज्ज्ञास्यामीह नित्यो विधिरिह विभाषेति । नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति 'सर्वो द्वन्द्वो विभाषैकवद्भवती'ति यदयं 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्' [१.२.६३] इत्याह ।

इदं तर्हि प्रयोजनम् । स नपुंसकम्' [२. ४. १७] इति वक्ष्यामीति । एतदपि नास्ति प्रयोजनम् । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' ।

---

प्र०–भाषैकवद्भावः । तत्रैकवद्भावपक्षे नपुंसकत्वमपि प्राप्नोति 'पूर्ववदश्ववडवा'वित्यतिदेशात्पुंस्त्वमपि । तत्र परत्वात्पुंस्त्वे प्राप्ते पूर्वविप्रतिषेध उच्यते ॥ प्रतिपदविधानादिति । नात्र पशुग्रहणेनैकवद्भावो विधीयते, किं तर्ह्यश्ववडवग्रहणेन, तत्र प्रतिपदविधानात् 'स नपुंसक'मित्येतद्भवति । तच्छब्देन ह्येकवद्भावभाजं परामृश्य नपुंसकत्वं विधीयते । ततश्च यथैकवद्भावोऽत्र प्रतिपदं विधीयते तथा नपुंसकत्वमिति भावः ।

समाहारैकत्वादिति । तिरोहितावयवभेदो हि समाहारः, स च वनयूथादिवदेक इत्यर्थः ॥ इह नित्य इति । 'द्वन्द्वश्चे'त्यारभ्यास्माद्योगात् प्राग् नित्यो विधिः, अनेन योगद्वयेन विभाषेत्यर्थः । यदयमिति । यद्येतत्प्रकरणोपात्तानामेवैकवद्भावः स्यात्तदा तिष्यपुनर्वसुशब्दयोरत्रापठितत्वादेकवद्भावस्याभावात्तन्निवृत्तये बहुवचनग्रहणमनर्थकं स्यादित्यर्थः ।

---

उ०–ग्रहणमेव न्याय्यमित्याशयः । नपुंसकत्वस्य प्रतिपदविधित्वं समर्थयते—तच्छब्देनेति ।

भाष्ये—'ज्ञास्यामी'त्यन्तर्भावितण्यर्थम् । ज्ञापयिष्यामीत्यर्थः । इह नित्य इति । विनिगमनाविरहात्प्राण्यङ्गादीनामेव समाहारस्तेषां समाहार एवेत्येवं द्विविधोऽपि नियम इति भावः । अन्यथा एतत्प्रयोजनखण्डनपरभाष्येणैषामेव समाहार इति नियमस्यैव लाभादेतद्विषय इतरेतरयोगाव्यावृत्त्या 'द्वन्द्वश्चे'त्यारभ्यैतत्पर्यन्तं 'नित्यो विधि'रित्यादिकैयटासङ्गतिः स्यात् । भाष्यमपि विशिष्टप्रयोजनखण्डनपरम् । भाष्ये—यदयमिति । एवं चैकवभावप्रकरणं व्यर्थमिति भावः । 'सर्व'शब्दोऽसंकुचद्वृत्तिरित्यभिमानः । लिङ्गमशिष्यमिति । शास्त्रोक्तलिङ्गानुशासनस्य व्यभिचारदर्शनादिति भावः ।

न तर्हीदानीमिदं वक्तव्यम् ? वक्तव्यं च । किं प्रयोजनम् ? पूर्वत्र नित्यार्थमुत्तरत्र व्यभिचारार्थं 'विभाषा वृक्षमृगे'ति ॥१२॥

## विभाषा समीपे ॥ २ । ४ । १६ ॥

किमुदाहरणम् ? उपदशं पाणिपादम् । उपदशाः पाणिपादाः । नैतदस्ति प्रयोजनम् । अयं द्वन्द्वैकवद्भाव आरभ्यते तत्र कः प्रसङ्गो यदनुप्रयोगस्य स्यात् ।

---

प्र०— पूर्वत्रेति । 'प्राण्यङ्गादीनां समाहार एवे'त्येवमर्थमित्यर्थः । उत्तरत्रेति । क्वचिज्जातिरप्राणिनामिति प्राप्ते विभाषा । मृगादीनां तु व्यतिकरनिरासार्थम् ॥१२॥

विभाषा स । अनुप्रयोगे दोषदर्शनात्प्रश्नः—किमुदाहरणमिति । कः प्रसङ्ग इति । नन्वर्थस्यैकवद्भावादनुप्रयोगस्यापि सेत्स्यति । नैतदस्ति । यदि तावदव्ययीभाव एवानुप्रयुज्यते तदा तस्याव्ययत्वाद् बहुत्वाभावाद् बहुवचनं न स्यात् । सत्यपि वा तस्मिन्नम्भावे कृते 'उपदशा' इति न स्यात् । अथ बहुव्रीहिरेवानुप्रयुज्यते तदोपदशस्य

---

उ०— एवं चान्यतरनियमस्य ज्ञापकान्निरासेऽन्यतर एव स्थित इत्याशयेनाह—प्राण्यङ्गादीनामिति । 'सर्वो द्वन्द्व' इत्यत्र सर्वशब्द एतत्प्रकरणस्थसूत्रानुपात्तविषय इति भावः । भाष्ये—उत्तरत्र व्यभिचारार्थमिति । नित्यैकवद्भावस्य व्यभिचारार्थमित्यर्थः । स च क्वचिदेकवद्भावाभावेन, क्वचिन्नित्यत्वाभावेन । एवं च मृगादीनां व्यतिकरे इतरेतयोग एव, उत्तरसूत्रविषये अधिकरणवाचिनामितरेतरयोग एवेति ध्वनितम् । तदुपपत्तिस्तु 'यो विभाषा एकवचनो द्वन्द्वः स मृगाणां मृगैरेव द्वन्द्वेऽन्यत्र ने'ति वचनव्यक्त्या अन्यत्र विशेष्यभूतैकवचनद्वन्द्वस्यैव निषेधे इतरेतरयोग एवेति फलितत्वात् । एवं 'विप्रतिषिद्धं चे'त्यत्रापि य एकवचनो विभाषा द्वन्द्वः च यदि विरुद्धानां चेदद्रव्यवाचिनामेवेति वचनव्यक्त्या द्रव्यवाचिनामितरेतरयोग एव फलति ॥१२॥

विभाषा स । समाहारविषय 'उपदशं पाणिपाद'मित्येव, इतरेतरे तु 'उपदशाः पाणिपादा' इत्येवेष्यते, विपरीतमपि प्राप्नोतीत्याशयेन प्रश्न इत्याह—अनुप्रयोगे इति । भाष्ये—नैतदस्ति । सूत्रेण द्वन्द्वस्यैकवद्भावविधानेऽपि अनुप्रयोगानियमस्तदवस्थ एवेति नेदं सूत्रप्रयोजनमित्यर्थः । प्रश्ने 'उदाहरण'शब्दोऽपि प्रयोजनपर एवेति भावः । नन्वर्थस्येति । एवञ्च समाहारद्वन्द्वपक्षेऽव्ययीभावस्य बहुव्रीहेर्वानुप्रयोगेऽपि द्वन्द्वार्थस्यैकवत्त्वादुपदशमित्येव भविष्यतीति भावः । अव्ययत्वादिति । अव्ययत्वेनासङ्ख्यत्वादित्यर्थः । सत्यपि वेति । 'नाव्ययीभावात्' 'तृतीयासप्तम्यो'रित्याद्यारम्भादसङ्ख्यत्वमव्ययीभावातिरिक्ताव्ययविषयमिति भावः ।

अथेति । अर्थस्यैकवत्त्वाश्रित्य बहुवचनान्तस्याप्युपदशशब्दस्यैकवचनान्तत्वसम्पत्तावपि पाणिपादस्येति षष्ठ्यन्तसमभिव्याहारे उपदशस्येति अम्भावमनापन्ना षष्ठी श्रूयेतेति भावः । वस्तुतो नियमे मानाभावेनोभयत्राप्युभयानुप्रयोगः स्यात् । तथा चेतरेतरयोगे 'उपदशं पाणि-

एवं तर्ह्यव्ययस्य संख्ययाव्ययीभावोऽप्यारभ्यते बहुव्रीहिरपि* । तद्यदा तावदेकवचनं तदाव्ययीभावोऽनुप्रयुज्यत एकार्थस्यैकार्थ इति । यदा बहुवचनं तदा बहुव्रीहिरनुप्रयुज्यते बह्वर्थस्य बह्वर्थ इति ॥१६॥

## तत्पुरुषोऽनञ्कर्मधारयः ॥ २ । ४ । १६ ॥

किमर्थमिदमुच्यते ? 'संज्ञायां कन्थोशीनरेषु' [ २. ४. २० ] इति वक्ष्यति तदतत्पुरुषस्य नञ्समासस्य कर्मधारस्य वा मा भूदिति । नैतदस्ति प्रयोजनम् । न हि संज्ञायां कन्थान्त उशीनरेष्वतत्पुरुषो नञ्समासः कर्मधारयो वास्ति ।

उत्तरार्थं तर्हि—'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' [ २१ ] इति वक्ष्यति तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति । एतदपि नास्ति प्रयोजनम् । न हि तदाद्याचिख्यासायामुपज्ञोपक्रमान्तोऽतत्पुरुषो नञ्समासः कर्मधारयो वास्ति ।

उत्तरार्थमेव तर्हि—'छाया बाहुल्ये' [ २२ ] इति वक्ष्यति तदतत्पुरुषस्य

प्र०—पाणिपादस्येति षष्ठी स्यात्, उपदशमिति चेष्यते । एतदेव मनसिकृत्याह—एवं तर्हीति । अव्ययीभावः—'अव्ययं विभक्ती'ति विहितः । बहुव्रीहिस्तु 'सङ्ख्ययाव्यये'ति । तद्यदेति । अव्ययीभावस्याव्ययत्वादसङ्ख्यत्वादेकवचनस्य तूत्सर्गत्वादिति भावः । एकार्थ इति । अभेदैकत्वाश्रयादित्याहुः । यदेति । बहुव्रीहेः समीपिप्रधानत्वाद् बह्वर्थत्वमिति भावः ॥१६॥

तत्पुरुषो । उत्तरेषु केषुचिद्योगेष्वन्यथासिद्धिं दृष्ट्वा पृच्छति—किमर्थमिति । शिष्यबुद्धिपरीक्षार्थमन्यथासिद्धमपि तावत्प्रयोजनमाह । पश्चात्त्वनन्यथासिद्धं दर्शयिष्यति । न हीति । अनादिरत्र संज्ञा गृह्यते न त्विदानीन्तनीति भावः । न हीति । षष्ठीतत्पुरुषा-

उ०—पादा' इत्यपि स्यादिति भाष्यार्थः । एकवचनस्य त्विति । तावतैव 'नाव्ययीभावा'दित्याद्युपपन्नं न संख्यासम्बन्धज्ञापकमिति भावः । पञ्चमीतृतीयासप्तमीग्रहणं तु स्पष्टार्थमेव पूर्वाचार्यानुरोधाद्वा । तदनुरोधफलं च तेषां प्रमादबोधनं क्वचित्, स्वकृतेः प्रामाण्याबोधनं क्वचिदिति बोध्यम् । नन्वव्ययार्थे संख्याया अभावादेकार्थं इत्यनुपपन्नमत आह—अभेदैकत्वेति । तथा च भेदसहचरितद्वित्वाद्यभावरूपमैकार्थ्यं समीपप्रधानाव्ययीभावस्येत्यर्थः । एतेन समासे विशेष्यांशेऽपि अन्तर्वर्तिसंख्याया अभानं सूचितम् । बहुवचनादि त्वेकदेशेनेति बोध्यम् ॥ १६॥

तत्पुरुषोऽनञ् । इदानीन्तनसंज्ञायामतत्पुरुषादेरपि सम्भवादाह—अनादिरिति ।

* अव्ययं विभक्तिसमीप······साकल्यान्तवचनेषु २. १. ६; संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये २. २. २५.

नञ्समासस्य कर्मधारयस्य वा मा भूदिति । [1]एतदपि नास्ति प्रयोजनम् । न हि च्छायान्तो बाहुल्येऽतत्पुरुषो नञ्समासः कर्मधारयो वास्ति ।

उत्तरार्थमेव तर्हि—'सभा राजामनुष्यपूर्वा' [२३] 'अशाला च' [२४] इति वक्ष्यति तदतत्पुरुषस्य नञ्समासस्य वा मा भूदिति । एतदपि नास्ति प्रयोजनम् । न हि सभान्तोऽशालायामतत्पुरुषो नञ्समासः कर्मधारयो वास्ति ।

इदं तर्हि—'विभाषा सेनासुरा' [२५] इति वक्ष्यति तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति ।

तत्पुरुष इति किमर्थम् ? दृढसेनो राजा ॥ अनञिति किमर्थम् ? असेना ॥ अकर्मधारय इति किमर्थम् ? परमसेना उत्तमसेना ॥१९॥

## परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ २ । ४ । २६ ॥

किमर्थमिदमुच्यते ? द्वन्द्वोऽयमुभयपदार्थप्रधानस्तत्र कदाचित्पूर्वपदस्य यल्लिङ्गं तत्समासस्यापि स्यात् कदाचिदुत्तरपदस्य । इष्यते च परस्य यल्लिङ्गं तत्समासस्य

प्र०—द्विना तदादित्वासंप्रत्ययः । न हि च्छायान्त इति । पूर्वपदार्थधर्मो बाहुल्यम्, न च षष्ठीतत्पुरुषाद्विना बाहुल्यं गम्यते । न हि सभान्त इति । अशालेति वचनात्संघाववचनः सभाशब्दो ग्राह्यो न च समूहिभिर्विना समूहोपपत्तिरिति षष्ठीतत्पुरुषस्यैव ग्रहणमिति भावः । इदं तर्हीति । अत्र तु प्रदेशे मन्दबुद्ध्यनुग्रहायाधिकारः कृतः ॥१९॥

परवत् । द्वन्द्वापेक्षया किमिदं विध्यर्थम्, आहोस्विन्नियमार्थम् । तथा—किं षष्ठीनिर्देशेन समासार्थस्य लिङ्गातिदेशः, अथ सप्तम्याश्रयेण पूर्वपदस्येति संशयानः पृच्छति—किमर्थमिति ।

उ०—अत्रेति । शास्त्रे, शास्त्रस्यानादित्वादिति भावः । न च समूहिभिरिति । तदंशो नित्यसाकाङ्क्षत्वादिति भावः ॥१९॥

परवल्लिङ्गं । तत्पुरुषे विधित्वेन चारितार्थ्यसम्भवादाह—द्वन्द्वेति । विध्यर्थमिति । 'अवयवार्थातिरिक्तः समुदायोऽलिङ्गवा'निति पक्षे इदम् । नियमार्थमिति । षष्ठीति । 'उद्भूतावयवभेदः समूहः समासार्थः । स चावयवार्थलिङ्गेनैव लिङ्गवा'निति पक्षे इदम् । इदं पक्षद्वयं षष्ठ्यन्तत्वपक्षे । सप्तम्यन्तत्वे तु विध्यर्थत्वमेवेति बोध्यम् । इदं द्वन्द्वांशे न समाहारविषयं, तस्य विशिष्य नपुंसकत्वविधानात् । किन्तु इतरेतरयोगविषयम् ।

[1] 'नैतदस्ति' पा० ।

यथा स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयो'-रिति। एवमर्थमिदमुच्यते।

तत्पुरुषश्चापि कः प्रयोजयति ? यः पूर्वपदार्थप्रधान एकदेशिसमासः अर्धपिप्पलीति* ॥ यो ह्युत्तरपदार्थप्रधानो दैवकृतं तस्य परवल्लिङ्गम्।

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति चेत्प्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः ॥ १ ॥**

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति चेत्प्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नो जीविकामापन्नजीविकः॥ 'अलंपूर्व—अलं जीविकायै अलंजीविकः ॥ गतिसमास—निष्कौशाम्बिः निर्वाराणसिः† ।

**पूर्वपदस्य च ॥ २ ॥**

प्र०- द्वन्द्वोऽयमिति।

षष्ठीनिर्देशो नियमश्चेति भावः। तत्रावयवार्थव्यतिरिक्तः समुदायो नास्तीत्युभयपदार्थप्रधान इत्यनेन दर्शितं भवति। तत्र यदापेक्षितपरस्परौ विरुद्धलिङ्गाववयवर्थावेव समुदायार्थस्तदा पर्यायेण लिङ्गद्वयप्रसङ्गे नियमार्थमिदं संपद्यते। यद्येवं परस्यैव संबन्धि लिङ्गं क्रियते इति सादृश्याभावाद्वतिनिर्देशो नोपपद्यते। नैष दोषः। केवलाकेवलावस्थाभेदाश्रयेण भेदमाश्रित्य वतिनिर्देशः कृतः। तत्पुरुषापेक्षया विध्यर्थत्वं दर्शयितुमाह—तत्पुरुषश्चापीति। दैवकृतमिति। अयत्नसिद्धमित्यर्थः। पूर्वपदस्य चेति। सप्तमीनिर्देशाश्रयेण दोषोद्भावनम्। तत्र ह्ययमर्थो भवति—'द्वन्द्वे तत्पुरुषे च यत्परं तद्वल्लिङ्गं भवति'। तत्र कार्यिणोऽनुपादानात्परशब्दस्य संबन्धिशब्दत्वात्तदाक्षिप्तं पूर्वपदमेव कार्यभाक् प्राप्नोति। तत्र 'मयूरीकुक्कुटा'विति पूर्वपदस्य पुंस्त्वातिदेशे स्त्रीप्रत्ययनिवृत्ति-

उ०- षष्ठीति। 'द्वन्द्वतत्पुरुषयो'रित्यत्रायं सन्देहः। तत्र षष्ठीपक्षे उद्भूतावयवभेदसमुदायस्य समासार्थत्वादवयवभेदकृतवचनवत्तन्निमित्तानेकलिङ्गप्राप्तौ नियमोऽयमित्याह—नियमश्चेतीति। समुदायार्थो नास्तीति। उद्भूतावयवभेदस्य तस्य द्वन्द्वार्थतया नावयवार्थादत्यन्तातिरिक्तः स इत्यर्थः। 'अपेक्षितपरस्परा'वित्यनेन समूहरूपता समासार्थस्योक्ता, 'विरुद्धलिङ्गावयवार्थो'-वित्यनेनोद्भूतावयवभेदता तस्य सूचिता। स चावयवसंख्यावदवयवलिङ्गग्राहीति मते नियमार्थत्वमुक्तम्। पर्यायेणेति। विरुद्धलिङ्गावयवद्वन्द्वस्थले इत्यर्थः। यद्येवमिति। परस्यैव लिङ्गं न पूर्वस्येत्यर्थाद्वतिर्नोपपद्यत इति भावः। केवलाकेवलेति। समस्तासमस्तेत्यर्थः। भाष्ये—दैवकृतमिति। उपमितसमासः समानलिङ्गपदयोरेवेति तत्रापि न दोष इति भावः। सप्तमीति। अवयवषष्ठ्यभिप्रायेणेत्यन्ये। स्त्रीप्रत्ययनिवृत्तीति। अतिदेशविरुद्धत्वात्

* अर्धं नपुंसकम् २. २. २. १—क्वचिन्न।

† प्राप्तापन्ने च द्वितीयया २. २. ४; निरादयः क्रान्ताद्यर्थे पञ्चम्या २. २. १८ वा०।

पूर्वपदस्य च प्रतिषेधो वक्तव्यः । मयूरीकुक्कुटौ ॥ यदि पुनर्यथाजातीयकं परस्य लिङ्गं तथाजातीयकं समासादन्यदतिदिश्येत[1] ।

**समासादन्यल्लिङ्गमिति चेदश्ववडवयोष्टाब्लुग्वचनम् ॥ ३ ॥**

समासादन्यल्लिङ्गमिति चेदश्ववडवयोष्टापो लुग्वक्तव्यः । अश्ववडवौ† ।

**निपातनात्सिद्धम् ॥ ४ ॥**

निपातनात्सिद्धमेतत् । किं निपातनम् ? 'अश्ववडवपूर्वापरे'ति* ।

**उपसर्जनह्रस्वत्वं वा ॥ ५ ॥**

अथवोपसर्जनस्येति‡ ह्रस्वत्वं भविष्यति ।

---

प्र०–प्रसङ्गः । कुक्कुटमयूर्यावित्यत्र स्त्रीप्रत्ययप्रसङ्गः । तथार्धपिप्पलीत्यादावपीति प्रतिषेध उच्यते । पूर्वपदप्रतिषेधे च कृते सामर्थ्याद् द्वन्द्वतत्पुरुषयोरेव कार्यित्वं संपद्यते ॥ यदि पुनरिति । षष्ठीनिर्देशो व्यतिरिक्तसमुदायदर्शनं चाश्रीयते । व्यतिरिक्तसमुदायपक्षे हि मुख्यसादृश्योपपत्तिरिति भावः । समासादन्यदिति । समासार्थलिङ्गमुपचारात्समासशब्देनोच्यते । तेनोत्तरपदार्थलिङ्गसदृशं समासार्थस्य स्वलिङ्गबाधनाय लिङ्गान्तरमतिदिश्यते इत्युक्तं भवति ।

अश्ववडवाविति । परवल्लिङ्गे प्राप्ते 'पूर्ववदश्ववडवा'विति पूर्वपदार्थलिङ्गसदृशं पुंलिङ्गं समासार्थस्य विधीयते न तूत्तरपदार्थस्येति स्त्रीत्वस्यानिवर्तनाट्टापः श्रवणे प्राप्ते लुग्वक्तव्यः ॥ निपातनादिति । टाब्निवृत्त्या रूपमेतदित्यर्थः । 'पूर्ववदश्ववडवा'विति निपातनमाश्रयितुं न युज्यते, वचनान्तरे पूर्वपदलिङ्गातिदेशाप्रसङ्गादश्ववडवानश्ववडवैरिति मत्वा पृच्छति–किं निपातनमिति । अश्ववडवपूर्वापरेति । 'अश्ववडवापूर्वापरे'ति वक्तव्ये टापोऽनुच्चारणं निपातनमित्यश्ववडवयोर्द्वन्द्वे टाब्निवर्त्यते ।

उपसर्जनह्रस्वत्वमिति । 'अनेक'मिति प्रथमानिर्दिष्टत्वात्समुदायार्थे चावयवार्थस्य

---

उ०- स्वाश्रयस्यापि निवृत्तिरित्यर्थः । अतिदिश्यमानधर्मप्रयुक्तकार्यविशेषमप्याह—कुक्कुटेति । नन्वेवं सूत्रवैयर्थ्यमत आह—पूर्वपदप्रतिषेधे चेति । व्यतिरिक्तसमुदायेति । तथा च परपदार्थलिङ्गसदृशं लिङ्गं समुदायरूपार्थस्येत्यर्थाद्वृत्त्युपपत्तिरिति भावः । समासात्स्वत एव लिङ्गस्यान्यत्वाद् व्यर्थं विशेषणं, समासस्यातिदिश्यत इति च वक्तुं युक्तमत आह—समासार्थेति । स्वलिङ्गबाधनायेति । स्वलिङ्गं च नपुंसकमित्यभिमानः । यदि तु वनं सेना संघ इतिवत्तस्यानेकलिङ्गत्वं तदात्रापि पक्षे नियमार्थत्वमेवेति बोध्यम् ।

वचनान्तरे इति । द्विवचनविषयमेव निपातनं स्यात्, तत्साहचर्याल्लिङ्गातिदेशोऽपि तत्रैव स्यादित्यभिमानः ॥ समुदायार्थे चेति । इतरेतरयोगेऽपि उद्भूतावयवभेदः समुदाय

---

१–'दिश्यते' पा० । † पूर्ववदश्ववडवौ २. ४. २७. * विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् २. ४. १२. ‡ गोस्त्रियोरुपसर्जनस्य १. २. ४८.

इहापि तर्हि प्राप्नोति—'कुक्कुटमयूर्या'विति । अस्तु ।

**परवाल्लिङ्गमिति शब्दशब्दार्थौ ॥ ६ ॥**

'परवल्लिङ्ग'मिति शब्दशब्दार्थावतिदिश्येते । तत्रौपदेशिकस्य ह्रस्वत्वमातिदेशिकस्य श्रवणं भविष्यति ।

इदं तर्हि—दत्ता च कारीषगन्ध्या च दत्ताकारीषगन्ध्ये । दत्ता च गार्ग्यायणी च दत्तागार्ग्यायण्यौ । द्वौ ष्यङौ द्वौ ष्फौ च प्राप्नुतः* । स्ताम् । पुंवद्भावेनैकस्य निवृत्तिर्भविष्यति† ।

इदं तर्हि—दत्ता च युवतिश्च दत्तायुवती । द्वौ तिशब्दौ प्राप्नुतः‡ । तस्मान्नैतच्छक्यं वक्तुं 'शब्दशब्दार्थावतिदिश्येते' इति । ननु चोक्तं 'समासादन्यलिङ्गमिति चेदश्ववडवयोष्टाब्लुग्वचन'मिति । परिहृतमेतत् 'निपातनात्सिद्ध'मिति ।

प्र०–गुणभावादुपसर्जनत्वमिति भावः । इहापीति । ततश्च 'कुक्कुटमयूरी' इति प्राप्नोति।

शब्दशब्दार्थाविति । लिङ्गशब्देन लिङ्गाभिधायी प्रत्ययोऽर्थश्च तन्त्रेणैकशेषेण वोच्यत इत्यर्थः । आतिदेशिकस्य श्रवणमिति । तस्यानुपसर्जनत्वात्तदन्तस्य चाप्रातिपदिकत्वाद्ध्रस्वत्वाभावत् । द्वौ ष्यङाविति । तत्र 'यस्येति चे'त्याकारलोपे कृते द्वौ यकारौ श्रूयेयाताम् । 'हलो यमा'मिति विकल्पितो लोपः । यद्यपि 'यणो मय' इति द्विर्वचनेनात्र भाव्यं तथापि पक्षे यकारत्रयश्रवणप्रसङ्गः । पुंवद्भावेनेति । 'भस्याढे तद्धित' इत्यनेनेति भावः । द्वौ तिशब्दाविति । अत्र ह्यभत्वान्नास्ति पुंवद्भावः ॥ तस्मान्नैतदिति । उपसर्जनह्रस्वत्वं तु न भवति, अन्वर्थसंज्ञाविज्ञानादप्रधानस्योपसर्जनसंज्ञाविधानात्सकलपदार्थप्रधानत्वाच्च द्वन्द्वस्य । व्यतिरिक्तसमुदायरूपद्वन्द्वार्थाभ्युपगमेऽप्यवयवानां कार्यसंबन्धात् फलतः प्राधान्यमेव ।

उ०–एव समासार्थ इति भावः । कुक्कुटमयूरी इति । अन्तरङ्गत्वात्पूर्वं ह्रस्वत्वे कृते 'दीर्घा'-दितिनिषेधानवतारात्पूर्वसवर्णदीर्घापत्तिरिति भावः । 'द्वन्द्वे ने'ति निषेधे त्वश्ववडवेत्यत्रापि तदनापत्तिरिति तात्पर्यम् ।

तस्यानुपसर्जनत्वादिति । समुदायास्तस्यातिदेशादित्यर्थः । अत एव तदन्तस्याप्रातिपदिकत्वमपि बोध्यम् । अयं हेतुर्लिङ्गविशिष्टपरिभाषासत्त्वाच्चिन्त्यः । यकारत्रयश्रवणेति । न च पुनर्द्वित्वप्रवृत्त्या तदपि इष्टमेव, लक्ष्ये लक्षणस्य सकृत्प्रवृत्त्या पुनर्द्वित्वाप्रवृत्तेरिति भावः । भस्याढ इति । ष्यङ्ष्फयोस्तद्धितत्वादिति भावः । अन्वर्थेति । अप्रधानस्यैव प्रथमानिर्दिष्टस्योपसर्जनसंज्ञाविधानादित्यर्थः ॥ अवयवानां कार्यसम्बन्धादिति । व्यक्त्या-

* अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे; प्राचां ष्फ तद्धितः ४. १. ७८; १७.

† भस्याढे तद्धिते ६. ३. ३५ वा० ११. ‡ यूनस्तिः ४. १. ७७.

अथवा नैवं विज्ञायते परस्यैव परवदिति। कथं तर्हि ? परस्येव परवदिति। यथाजातीयकं परस्य लिङ्गं तथाजातीयकं समासस्यातिदिश्यते।

अथ पूर्वपदस्य न प्रतिषिध्यते प्राप्तादिषु कथम् ?

**प्राप्तादिषु चैकदेशिग्रहणात्सिद्धम् ॥ ७ ॥**

'द्वन्द्वैकदेशिनो'रिति वक्ष्यामि ॥ तदेकदेशिग्रहणं कर्तव्यम् ? न कर्तव्यम्।

---

प्र०– अथवेति। नायं नियमः किं तु विधिरित्यर्थः। परस्यैवेति। एवशब्दप्रयोगेण नियमं निषेधाय दर्शयति, न त्वेवार्थे वतिर्विहितः। यथा च नियमपक्षे वतिरुपपद्यते तथा पूर्वमेव प्रतिपादितम्। इह त्रीणि दर्शनानि, अवयवावेवापेक्षितपरस्परौ द्वन्द्वार्थो न तु व्यतिरिक्तः समुदायोऽस्ति। अत्र दर्शने नियमार्थमिदम्। अवयवार्थव्यतिरिक्तो वा समुदायो द्वन्द्वार्थः, स चावयवलिङ्गेनैव लिङ्गवानित्यत्रापि दर्शने पर्यायेण लिङ्गप्राप्तौ वचनं नियमार्थम्। यदा तु समुदायो द्वन्द्वार्थः स चालिङ्ग इति दर्शनं तदा विध्यर्थमिदम्॥ अथ पूर्वपदस्येति। अतः पूर्वपदस्येत्यर्थः। एतेन मयूरीकुक्कुटाविति परिहृतं षष्ठ्याश्रयेण दर्शनत्रयेऽपि। मध्यमे तु दर्शने आश्रयभेदाश्रयेण परवदिति सादृश्याश्रयो वतिः।

---

उ०–कृत्योरिव समाहारसमाहारिणोरभेदेनेति भावः। अन्वर्थत्वानङ्गीकारे तु ह्रस्वविधायके 'द्वन्द्वे ने'तिवचनकरणाच्च दोष इति भावः।

न तु तद्व्यतिरिक्त इति। अत्यन्तं व्यतिरिक्तः। व्यतिरिक्त एवेत्यर्थः। अत एवापेक्षितपरस्पराविति सङ्गच्छते। तेन समूहरूपतावयवयोः सूच्यते। अत एव पक्षत्रये बोधाविशेषः। अन्यथा फलभेदः स्यात्। एतेनायं कैयटः—साहित्यमितरेतरयोगे विशेषणमित्येवं पर इति वदन्तः परास्ताः। नियमार्थमिति। पर्यायेण लिङ्गद्वयप्राप्ताविति भावः। अवयवार्थव्यतिरिक्तो वेति। व्यतिरिक्त एवेत्यर्थः। स चावयवलिङ्गेनेति। अवयवसंख्यया संख्यावानित्यपि बोध्यम्। स चालिङ्ग इति। उद्भूतावयवभेदत्वेऽपि तल्लिङ्गत्वे मानाभाव इति भावः। 'नपुंसकलिङ्ग' इति वक्तुमुचितम्। 'अथवे'त्यादि भाष्यं च 'यदिपुनर्यथाजातीय'मित्यादिनोक्तार्थस्यैवानुवादपरमिति बोध्यम्। 'यदि पुन'रित्यादिग्रन्थस्यापि विधिपरत्वात्। 'स्वलिङ्गबाधनाये'ति व्याचक्षतोपाध्यायेन विधित्वमुक्तप्रायमेव। अन्ये तु 'यदि पुन'रितिभाष्यस्य 'समासस्ये'तिपदकर्तव्यतापरता, 'द्वन्द्वतत्पुरुषयो'रिति पदावृत्तिपरता वा, 'अथवे'त्यादेश्च तत्प्रत्याख्यानपरतेति वदन्ति। अतः पूर्वपदस्येति। अप्राप्तेरित्यर्थः। आश्रयभेदादिति। समुदायरूपस्य केवलस्य चाश्रयस्य भेदादित्यर्थः। एषु द्वन्द्वविषयदर्शनत्रयेषु आद्य 'उभयपदार्थप्रधान' इति भाष्यसंमत एव। विधित्वपरभाष्यसंमतोऽन्त्योऽपि। मध्ये तु पक्षे भाष्यानुग्रहश्चिन्त्यः।

एकदेशिसमासो* नारभ्यते[1] । कथमर्धपिप्पलीति ? समानाधिकरणसमासो भविष्यति†—अर्धं च सा पिप्पली चार्धपिप्पलीति । न सिध्यति । परत्वात्षष्ठी-समासः प्राप्नोति‡ । अथ पुनरयमेकदेशिसमास आरभ्यमाणः षष्ठीसमासं बाधते । इष्यते च षष्ठीसमासोऽपि । तद्यथा—अपूपार्धं मया भक्षितम्, ग्रामार्धं मया लब्धमिति । एवं पिप्पल्यर्धमिति[1] भवितव्यम् । कथमर्धपिप्पलीति ? समा-नाधिकरणो भविष्यति ॥२६॥

## रात्राह्नाहाः पुंसि ॥ २ । ४ । २६ ॥

### अनुवाकादयः पुंसि ॥ १ ॥

अनुवाकादयः पुंसि भाष्यन्त इति वक्तव्यम् । अनुवाकः शंयुवाकः सूक्तवाकः ॥२६॥

प्र०- एकदेशिसमासो नारभ्यत इति । 'पूर्वापराधरे'ति योगत्रयं नारभ्यते । 'परव-लिङ्गं द्वन्द्वस्ये'त्येतावच्च क्रियते सूत्रमित्यर्थः । अर्धं च सा पिप्पली चेति । अवयवे समुदायोपचारात्सामानाधिकरण्यम् । तत्रोत्तरपदार्थस्य प्राधान्यात्तदीयमेव लिङ्गं तत्पुरुषस्यापि भवतीति नार्थस्तत्पुरुषग्रहणेनेत्यर्थः । परत्वादिति । अयमर्थः 'नर्ते प्रयोजनादिष्टं मुख्यशब्दार्थलंघन'मिति भेदाश्रयणमेव परं मुख्यं प्रधानम् । ततश्च षष्ठी समास एव प्राप्नोति, भिन्नविषयत्वात्तु शास्त्रापेक्षं परत्वमत्र न विवक्षितम् । समानाधिकरणो भविष्यतीति । एवमादिप्रयोगसिद्धिरेवोपचाराश्रयणस्य प्रयोजनम् । मुनिद्वयाच्च भाष्यकारः प्रमाणतरम्, अधिकलक्ष्यदर्शित्वात् ॥२६॥

रात्रा । अनुवाक इति । अनूच्यत इत्यनुवाकः । तत्र विशिष्टं वाक्यमभिधेयमिति नपुंसकत्वे प्राप्ते पुंल्लिङ्गविधिः ॥२९॥

उ०- एकदेशिसमासानारम्भेऽपीह तत्पुरुषग्रहणे प्रासादिषु दोषस्तदवस्थोऽत आह—द्वन्द्वस्येत्येतावदिति । भेदविवक्षायां षष्ठीसमासस्य, अभेदे समानाधिकरणसमासस्येति विषयभेदात्परत्वादित्यनुपपन्नमत आह—अयमर्थ इति । एवं च परत्वादित्यस्योत्कृष्टत्वा-दित्यर्थ इति भावः । एवमादीति । भेदाश्रयणस्य मुख्यत्वेऽपीदृशप्रयोगसिद्ध्यर्थमेवोपचारा-श्रयणमिति भावः । मुनिद्वयाच्चेति । एवं च सूत्रत्रयविषयेऽपि षष्ठीसमासस्य साधुत्वं, कर्म-धारयस्य चेति भावः । 'पिप्पल्यर्धं'मित्यतीत्यपिना सूत्रत्रयोदाहरणसंग्रहो बोध्यः ॥२६॥

रात्राह्ना । अनुवाकादय इति । 'अनुवाक्यो वाक्य'मिति प्रयोगसिद्ध्ये इदमित्याह—तत्र विशिष्टमिति ॥२९॥

* पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे; अर्धं नपुंसकम्; द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् २. २. १-३. १—'नारप्स्यते' इति कीलहार्नपाठः ।

† विशेषणं विशेष्येण बहुलम् २. १. ५७. ‡ षष्ठी २. २. ८. १—'मित्यपि' पा० ।

## अपथं नपुंसकम् ॥ २ । ४ । ३० ॥

### पुण्यसुदिनाभ्यामह्नः ॥ १ ॥

पुण्यसुदिनाभ्यामह्नो नपुंसकत्वं वक्तव्यम् । पुण्याहम् सुदिनाहम् ।

### पथः संख्याव्ययादेः ॥ २ ॥

पथः संख्याव्ययादेरिति वक्तव्यम् । द्विपथम् त्रिपथम् चतुष्पथम् । उत्पथम् विपथम् ।

### द्विगुश्च ॥ ३ ॥

द्विगुश्च समासो नपुंसकलिङ्गो भवतीति वक्तव्यम् । पञ्चगवम् दशगवम् ।

### अकारान्तोत्तरपदो द्विगुः स्त्रियाम् ॥ ४ ॥

अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति वक्तव्यम् । पञ्चपूली दशपूली ।

प्र०- अपथम् । पुण्याहमिति । 'रात्राह्नाहाः पुंसी'ति प्राप्ते वचनम् । सुदिनाहमिति । सुदिनशब्दोऽत्र प्रशंसामात्रवाची । तेन दिनाहःशब्दयोर्युगपदविरुद्धः प्रयोगः । दृश्यते च प्रशंसार्थस्य प्रयोगः—'सुदिनासु सभासु कार्यमेतत्प्रविचिन्वीत विशेषतः स्वयं चे'ति । चतुष्पथमिति षष्ठीतत्पुरुषः । समाहारद्विगौ तु 'द्विगुश्चे'ति सिद्धमेव नपुंसकत्वम् । उत्पथमिति । 'कुगतिप्रादय' इति तत्पुरुषः । अव्ययादित्वादपथशब्दस्य नपुंसकत्वे सिद्धे किं सूत्रेणेति चेत् पूर्वकालत्वात्सूत्रस्य नायं दोषः ।

द्विगुश्च समास इति । 'स नपुंसक'मित्यस्यानन्तरं प्रक्रान्तो द्वन्द्व एव 'स' इत्यनेन परामृश्यते इति द्विगोरप्राप्ते नपुंसकत्वमिति वचनम् । यथा 'सामन्त्रित'मित्यत्र संबोधनप्रथमैव परामृश्यते । समाहारद्विगोश्चेह ग्रहणं न तु तद्धितार्थद्विगोः । पञ्चगवमिति । यदा पञ्च गावः समाहृता इत्यत्रार्थे द्विगुस्तदोत्तरपदार्थस्य प्राधान्यात्तदीयं

उ०- अपथं नपुंसकम् । उत्तरपदार्थप्राधान्यात्परवल्लिङ्गत्वाच्च सूत्रेणैव सिद्धमत आह— रात्राह्नाहा इति ॥ 'पथः संख्ये'ति वार्तिके कृतसमासान्तपथशब्दस्यैव ग्रहणं साहचर्यादिति बोध्यम् । तेनातिपन्था इत्यादौ न दोषः । 'सत्पथ'इत्यादौ तु 'स्वतिभ्यामेवे'ति नियमात्समासान्तोऽस्त्येव । तदेव 'संख्याव्ययादे'रित्यस्य व्यावर्त्यमित्याहुः । पूर्वकालत्वादिति । सूत्रप्रत्याख्यानपरमेव वार्तिकमिति भावः ।

द्विगोरप्राप्तमिति । वस्तुतो व्यवहितद्विगुग्रहणस्य तत्र सम्बन्धबोधकमिदम् । सम्बोधनप्रथमैवेति । न प्रथमामात्रमित्यर्थः । समाहारद्विगोश्चेति । समूहसमूहिनोरत्यन्तभेदाभावात्स्वपदार्थप्रधानत्वेनान्तरङ्गत्वाद् व्याख्यानाच्च तस्यैव ग्रहणमिति भावः । यदा पञ्च गाव इति । अयं पक्षस्तु तत्रैव भाष्ये दूषितः । चार्थबोधकसमाहारपदेऽपि कर्मसाधनतापत्तौ बहूपप्लव इति चिन्त्यमेतत् ।

१—इदं वार्तिकं कीलहार्नपुस्तके नास्ति ।

**वाबन्तः ॥ ५ ॥**

वाबन्तः स्त्रियां भाष्यत इति वक्तव्यम् । पञ्चखट्वम् पञ्चखट्वी । दशखट्वम् दशखट्वी ।

**अनो नलोपश्च ॥ ६ ॥**

अनो नलोपश्च वा च स्त्रियां भाष्यत इति वक्तव्यम् । पञ्चतक्षम् पञ्चतक्षी । दशतक्षम् दशतक्षी ।

**पात्रादिभ्यः प्रतिषेधः ॥ ७ ॥**

पात्रादिभ्यः प्रतिषेधो वक्तव्यः । द्विपात्रम् पञ्चपात्रम् ॥३०॥

## अर्धर्चाः पुंसि च ॥ २ । ४ । ३१ ॥

अर्धर्चादय इति वक्तव्यम् । अर्धर्चम् अर्धर्चः । कार्षापणम् कार्षापणः । गोमयम् गोमयः । [2]सारम् सारः ।

---

प्र०–लिङ्गं प्राप्नोति । यदा तु समूहोऽभिधेयस्तदा तस्या वनं सेना संघ इत्यादिवदनियतलिङ्गत्वं प्राप्तमिति वचनम् ।

पञ्चखट्वीति । टाप उपसर्जनह्रस्वत्वे कृते द्विगोरिति ङीप् । यदा तु समूहोऽभिधेयस्तदोपसर्जनह्रस्वत्वं सिद्ध्यति न तु समाह्रियमाणेऽभिधेये इति तत्रैव सूत्रे उक्तम् । 'पञ्चखट्वमित्यत्रासत्युपसर्जनत्वे नपुंसकह्रस्वत्वं सिध्यति । उपसर्जनत्वे तु परत्वात्तदाश्रयं ह्रस्वत्वम् ।

अनो नलोपश्चेति । चशब्देन 'वा स्त्रियां भाष्यते' इति समुच्चीयते । नलोपस्तु नित्यमेव क्रियते । 'उत्तरपदत्वे चापदादिविधा'विति प्रत्ययलक्षणनिषेधात्पदत्वाभावाल्लोपो न प्राप्नोतीति वचनम् । पात्रादिभ्य इति । तादर्थ्ये चतुर्थीयम् । आकृतिगणश्च पात्रादिः ॥३०॥

अर्धर्चाः । कार्षापणादिसंग्रायाह—अर्धर्चादय इति वक्तव्यमिति । बहुवचन-

---

उ०– कृते इति । अन्यथादन्तत्वाभावान्न स्यादिति भावः । न तु समाह्रियमाण इति । एवं च कर्मसाधनव्युत्पत्तिरसङ्गतेति तामवष्टभ्य स्त्रियां 'पञ्चखट्वे'त्यपि रूपमिति न वाच्यमिति बोध्यम् । परत्वादिति । यौगपद्यासंभवरूपविरोधाभावाच्चिन्त्यमिदम् ॥ सन्नियोगशिष्टत्वे 'पञ्चतक्ष'मित्युदाहरणानुपपत्तिरत आह—चशब्देनेति । 'नलोपः प्रातिपदिके'ति नलोपसिद्धिमाशङ्क्याह—उत्तरेति । तादर्थ्ये इति । पात्रान्तादिप्रयोगसिद्ध्यर्थमित्यर्थः । अत एव वृद्धिसूत्रे सूत्रशब्दस्य पात्रादित्वे कैयटसंमतेऽपि न 'त्रिसूत्री'त्यादिप्रयोगविरोध इति बोध्यम् ॥३०॥

---

[1]–इदं वार्तिकं कील० नास्ति । २–'सरकम् सरकः' इति पा० । 'सरकोऽस्त्री शीधुपाने शीधुपात्रेक्षुशीधुनोः । अच्छिन्नाध्वगपंक्तौ चे'ति मेदिनी ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'बहुवचननिर्देशात्सिद्धम्' । बहुवचननिर्देशादाद्यर्थो गम्यते ॥३१॥

## इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥ २ । ४ । ३२ ॥

### अन्वादेशे समानाधिकरणग्रहणम्

अन्वादेशे समानाधिकरणग्रहणं कर्तव्यम् । किं प्रयोजनम् ?

**देवदत्तं भोजयेमं चेत्यप्रसङ्गार्थम् ॥ १ ॥**

इह मा भूत्—देवदत्तं भोजयेमं च यज्ञदत्तं भोजयेति ।

**अन्वादेशश्च कथितानुकथनमात्रम् ॥ २ ॥**

अन्वादेशश्च कथितानुकथनमात्रं द्रष्टव्यम् । तद् द्वेष्यं विजानीयादिदमा कथितमिदमैव यदानुकथ्यत इति । तदाचार्यः सुहृद्भूत्वान्वाचष्टेऽन्वादेशश्च कथितानुकथनमात्रं द्रष्टव्यमिति ।

अथ किमर्थमशादेशः क्रियते न 'तृतीयादि'ष्वित्येवोच्येत । तत्र टायामोसि चैनेन* भवितव्यमन्याः सर्वा हलादयो विभक्तयस्तत्रेद्रूपलोपे कृते† केवलमिदमोऽनुदात्तत्वमेव वक्तव्यम् ।। अत उत्तरं पठति—

प्र०–निर्देशात्सिद्धमिति । साहचर्यादर्धर्चशब्देनान्येषामभिधानात् ॥३१॥

इदमो । पश्चात्कथनमात्रमन्वादेशः प्रसिद्ध इति व्यधिकरणप्रसङ्गनिवारणायाह–अन्वादेशे इति । इमं चेति । एनादेशः प्राप्तो निवार्यते ॥ अन्वादेशश्चेति । प्रत्यासत्त्येदमैव कथितं यदानुकथ्यते तेनैव तदान्वादेशो भवतीति भ्रान्तिनिवारणाय वार्तिकम् । तत्र समानाधिकरणग्रहणाच्छब्दान्तरेणेदमा वा कथितं यदानुकथ्यते तेनैव तदान्वादेशो भवति । द्वेष्यमिति । विपरीतत्वादनभिमतमेवेत्यर्थः ।

उ०– इदमोऽन्वा । कथितानुकथनस्यान्वादेशत्वे वार्तिकानुत्थानादाह—पश्चादिति । तृतीयादौ विहितादेशस्य द्वितीयादावप्रसक्तेराह—एनादेश इति । सूत्रत्रयस्याप्यन्वादेशविषयत्वादित्यर्थः । एवं च समानाधिकरणग्रहणेन कथितानुकथनमेवान्वादेश इति बोध्यते ॥ एवं चोत्तरवार्तिकं व्यर्थमत आह—प्रत्यासत्त्येति । तदेवाह भाष्ये—तद्द्वेष्यमिति । तथा च स्वतात्पर्यं वार्तिककृता वार्तिकान्तरेण व्याख्यातमिति भावः । कथितमित्यस्याज्ञातं सत्कथितमित्यर्थः । तेनैतमातमित्यादौ नादेश इति बोध्यम् ।

१–कीलहार्नपुस्तके नास्ति । अन्यत्र त्वस्य वार्तिकत्वेन पाठ उपलभ्यते ।
२–वार्तिकस्य पूर्वार्धभागः । ३–'कथितानुकथितमात्रम्' पा० ।
* द्वितीयाटौस्स्वेनः २. ४. ३४. † हलि लोपः ७. २. ११३

**'अशादेशवचनं साकच्कार्थम् ॥ ३ ॥**

'अशादेशवचनं साकच्कार्थं क्रियते । साकच्कस्यापीदम आदेशो यथा स्यात्—इमकाभ्यां छात्राभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतमिति ।

अथ किमर्थं शित्करणम् ?

**शित्करणं सर्वादेशार्थम् ॥ ४ ॥**

शित्करणं क्रियते सर्वादेशार्थम् । शित्सर्वस्येति† सर्वादेशो यथा स्यात्—इमकाभ्यां छात्राभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतमिति । अक्रियमाणे हि शित्करणेऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत‡ ।

**न वान्त्यस्य विकारवचनानर्थक्यात् ॥ ५ ॥**

न वा कर्तव्यम् । किं कारणम् ? अन्त्यस्य विकारवचनानर्थक्यात् । अकारस्याकारवचने प्रयोजनं नास्तीति कृत्वान्तरेणापि शकारं सर्वादेशो भविष्यति ।

**अर्थवत्त्वादेशप्रतिषेधार्थम् ॥ ६ ॥**

अर्थवत्त्वकारस्याकारवचनम् । कोऽर्थः ? आदेशप्रतिषेधार्थम् । येऽन्येऽकारस्यादेशाः प्राप्नुवन्ति तद्बाधनार्थम् । तद्यथा—'मो राजि समः क्वौ' [ ८. ३. २५ ] इति मकारस्य मकारवचने प्रयोजनं नास्तीति कृत्वानुस्वारादयो बाध्यन्ते ।

**तस्माच्छित्करणम् ॥ ७ ॥**

तस्माच्छकारः कर्तव्यः ॥ न कर्तव्यः । प्रश्लिष्टनिर्देशोऽयम्—'अ अ'

प्र०— साकच्कार्थमिति । साकच्कस्येद्रूपलोपो नास्त्यक इत्यधिकारात् । नापि चेद्रूपलोपेनाभ्यामिति सिध्यति । अन्त्यस्येति । त्यदादित्वादकारकस्येत्यर्थः ।

अ अ इति । समुदायाद्विभक्तिरर्थवत्त्वाद्भवति । ततोऽकारस्यापदान्तत्वा'दतो

उ०— नापि चेति । अभ्युपेत्यवादेनेदम् । भाष्ये—रात्रिरधीतेति । द्रव्यकर्मणोऽविवक्षितत्वात्कालकर्मणि क्तः । सम्बन्धस्याविवक्षणादत्यन्तसंयोगाविवक्षणाद्वा षष्ठ्यपवादः कालाध्वनोरिति द्वितीया न कृता । मकारस्यादेशे विकारवचनानर्थक्यानुपपत्तिरित्याह—त्यदादित्वादिति । परत्वात्त्यदाद्यत्वं मन्यते ।

भाष्ये—येऽन्ये इति । दीर्घत्वादयः पररूपं चेत्यर्थः । भाष्ये—अनुस्वारादय इति । 'प्रशाम्म्यलयती'त्यादौ 'मो नो धातो'रिति नत्वाभाव आदिशब्दार्थः । अ अ इति निर्देशे

१—'आदेशवचनं' पा० । † अनेकाल्शित् सर्वस्य १.१.५५. ‡ अलोऽन्त्यस्य १.१.५२.

इति । 'अनेकाल्शित्सर्वस्य' [ १. १. ५५ ] इति सर्वादेशो भविष्यति ।

अथवा विचित्रास्तद्धितवृत्तयः । नान्वादेशेऽकज्जुत्पत्स्यते ॥३२॥

## एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥ २ । ४ । ३३ ॥

किमर्थं त्रतसोरनुदात्तत्वमुच्यते ? उदात्तौ* मा भूतामिति । नैतदस्ति प्रयोजनम् । लित्स्वरे कृते निघाते† एतदोऽनुदात्तत्वेन सिद्धम् । इदमिह संप्रधार्यम्—अनुदात्तत्वं क्रियतां लित्स्वर इति किमत्र कर्तव्यम् ? परत्वाल्लित्स्वरः । नित्यमनुदात्तत्वम् । कृतेऽपि लित्स्वरे प्राप्नोत्यकृतेऽपि । तत्र नित्य-

प्र०–गुण' इति पररूपं क्रियते । तत्रादेशप्रवृत्तिकाले समुदायः—'अ अ' इति प्रवर्तते । तत्रानेकाल्त्वात्सर्वादेशे प्रवृत्ते पररूपं प्रवर्तते ।

अथवेति—आदेशस्यैव प्रत्याख्यानं क्रियते । अनुदात्तत्वमात्रमेव विधेयमित्यर्थः । नान्वादेश इति । महाविभाषाधिकाराद् व्यवस्थितविभाषाविज्ञानात् । किं चाकचि कृतेऽनेन चाशादेशे कृतेऽज्ञाताद्यर्थगतिः प्रकरणाद्यधीना, तद्वरमनुत्पत्तिरेवाकचोऽस्तु । एवं ह्यादेशो न विधातव्यो भवति ॥३२॥

एतदः । अत्रात इत्यत्र त्रल्तसिलोः कृतयोः प्रकृतेर्लित्स्वरे कृते शेषनिघातेन प्रत्ययानुदात्तत्वे सत्यशनुदात्तः करिष्यते । तत्रैतदस्त्रतसोरित्येतावत्सूत्रं कर्तव्यमिति प्रश्नः—किमर्थमिति । उदात्ताविति । प्रत्ययस्वरेण । नित्यमिति । लित्स्वरस्त्वनु-

उ०–विपरीतं गौरवमत आह—समुदायादिति । तस्याः 'सुपां सुलुगिति लुक् । वस्तुतः सौत्रत्वाद्विभक्त्यनुत्पत्तिरेव वक्तुमुचिता । कृतैकादेशस्यादेशत्वे विवक्षितासिद्धिरत आह—तत्रेति । कृतैकादेशनिर्देशसामर्थ्यादिति भावः । अत्र 'न कर्तव्य' इत्यादिरेकदेश्युक्तिः, व्याख्यानसापेक्षत्वात्प्रक्रियागौरवाच्च शकारस्यैव लघुत्वात् ।

व्यवस्थितेति । अयमेव भाष्ये वैचित्र्यशब्दार्थं इति भावः । वस्तुतो 'अभिधानलक्षणाः कृत्तद्धितसमासा' इत्यकर्तरि चेति सूत्रभाष्योक्तेरनभिधानादकज्नेत्येव भाष्यार्थः । किं चेति । निष्फलमप्यन्वादेशेऽकज्विधानमिति भावः । 'किं चे'त्याद्यपि चिन्त्यं, तदर्थं कुत्सितपदघटितस्याकच्घटितस्य वा साधुत्वेन तदुत्पत्तिपूर्वकमादेशस्यैवावश्यकत्वात् । अनभिधाने तु नास्ति दोषः, कुत्सिताभ्यामाभ्यामित्यर्थस्य वाक्यैकदेशन्यायेन बोधादित्याहुः ॥३२॥

एतदस्त्रतसो । तद्विनापि सर्वानुदात्तत्वसिद्धिं दर्शयति—अत्रेति । अनेन भाष्येऽग्रे 'लित्स्वरे' इत्यस्य 'प्रकृतेः प्रत्ययनिमित्तके' इत्यादिः, 'निघाते' इत्यस्य 'प्रत्ययस्ये'त्यादिः, 'एतदोऽनुदात्तत्वेने'त्यत्र 'एत'दित्यस्याश इति शेष इति दर्शयति । अन्यथैतद आदेशेनापहारात्तस्यानुदात्तत्वासंभव इति बोध्यम् । 'एतदनुदात्तत्वेने'ति क्वचित्पाठः । तदाऽनुदात्तत्वेने-

१–'जुत्पद्यते' पा० । * आद्युदात्तश्च ३. १. ३. † पञ्चम्यास्तसिल्; सप्तम्यास्त्रल् ५. ३. ७; १०; लिति; अनुदात्तं पदमेकवर्जनम् ६. १. १९३; १५८.

त्वादनुदात्तत्वे कृते लिति पूर्वं उदात्तभावी नास्तीति कृत्वा यथाप्राप्तः प्रत्ययस्वरः प्रसज्येत । तद्यथा—'गोष्पदप्रं वृष्टो देव' इत्यूलोपे कृते† पूर्वं उदात्तभावी नास्तीति कृत्वा यथाप्राप्तः प्रत्ययस्वरो भवति । तस्मात् त्रतसोरनुदात्तत्वं वक्तव्यम् ॥३३॥

## द्वितीयाटौस्स्वेन ॥ २ । ४ । ३४ ॥

कस्यायमेनो विधीयते ? एतदः‡ प्राप्नोति । इदमोऽपि त्विष्यते तदिदमो ग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' [ २. ४. ३२ ] इति ।

यदि तदनुवर्तत 'एतदस्त्रतसोस्त्रतसौ चानुदात्तौ' [ ३३ ] इतीदमश्चेतीदमोऽपि प्राप्नोति । नैष दोषः । संबन्धमनुवर्तिष्यते । 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' । 'एतदस्त्रतसोस्त्रतसौ चानुदात्तौ' इदमोऽन्वादेशेऽशनुदात्त-

प्र०-दात्तत्वे कृते न प्रवर्तते, अनुदात्तविधानसामर्थ्यात् । एतच्चोत्सर्गापवादभावमनपेक्ष्योक्तम् । लिति पूर्वं इति । औपश्लेषिकाधिकरणविवक्षायां सप्तमी । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति दिग्योगलक्षणपञ्चम्यभावः । प्रत्ययस्वरः प्रसज्येतेति । अपवादाप्रवृत्तावुत्सर्गस्यावश्यं प्रवर्तनात् । गोष्पदप्रमिति । 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्या'मिति । णमुलूलोपौ सह विधीयेते, ततो लित्स्वराभावात्प्रत्ययाद्युदात्तत्वे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदं भवति ॥३३॥

द्वितीया । उभयोरादेशस्येष्टत्वादेतद एवानन्तर्यात्तत्प्रसङ्गात्पृच्छति—कस्येति । 'न कर्तव्य'मित्युत्तरम् । इदमोऽपीति । इदंशब्दाच्च त्रलो हप्रत्ययेन बाधितस्यादेश-

उ०-त्यर्थः । येन नाप्राप्तिन्यायेनाशनुदात्तत्वस्य लित्स्वरापवादत्वाल्लित्यस्योक्तिरसङ्गतेत्यत आह—एतच्चेति । भाष्ये—उदात्तभावी नास्तीति । अनुदात्तविधानसामर्थ्यादिति भावः । अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेः कथं प्रत्ययस्वरोऽत आह—अपवादाप्रवृत्ताविति णमुलूलोपाविति । 'पूरे'रिति शेषः ॥३३॥

द्वितीया । ननु 'इदमोऽपि त्विष्यत' इत्यनेन 'तदुपायः कः' इति प्रश्नस्य प्रतीयमानत्वात्तदुत्तरं वाच्यं, न तु 'इदमो ग्रहणं कर्तव्यम् ? न कर्तव्य'मिति विप्रतिपत्तिरुचिता, अग्रे विधिनिषेधयोरभावादत आह—न कर्तव्यमित्युत्तरमिति । एवं च नेयं विप्रतिपत्तिः, अपि तु सामान्याकारेण प्रतीयमानं प्रश्नं 'तदिदमो ग्रहणं कर्तव्य'मिति विशेषाकारेण कृत्वा तस्योत्तरमाहेत्यर्थः । इदंशब्दादिति । एतेनेदमस्त्रलोऽभावादेतद इत्यत्र तत्सम्बन्धाभाव इत्यपास्तम् । हप्रत्ययेन—'इदमो ह' इति विहितेन । तथा तसिल्विषयेऽपि इदम इशं

† वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ३.४.३२. ‡ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ २.४.३३.

स्तृतीयादावश् भवति। ततो 'द्वितीयाटौस्स्वेन' इदम एतदश्च। 'तृतीयादा'-विति निवृत्तम्।

अथवा मण्डूकगतयोऽधिकाराः। तद्यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः।

अथवैकयोगः करिष्यते। इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादावेतदस्त्रतसोस्त्र-तसौ चानुदात्तौ'। ततो 'द्वितीयाटौस्स्वेन' इदम एतदश्च। [ 'तृतीयादाविति निवृत्तम्। ]

अथवोभयं निवृत्तं तदपेक्षिष्यामहे।

**एनदिति नपुंसकैकवचने ॥ १ ॥**

एनदिति नपुंसकैकवचने कर्तव्यम्। कुण्डमानय प्रक्षालयैनत् परिवर्तयैनत्।

यद्येनत्क्रियत एनो न वक्तव्यः। का रूपसिद्धिः अथो एनम् अथो एने अथो एनानीति। त्यदाद्यत्वेन सिद्धम्*॥ यद्येवमेनश्रितको न सिध्यति। एनच्छ्रितक इति प्राप्नोति। 'यथालक्षणमप्रयुक्ते' ॥३४॥

प्र०–विधानमेव सत्तानुमानं स्यात्। मण्डूकगतय इति। इह केवलस्यादेशस्योपादानाद-वश्याक्षेप्यः स्थानी, न तु पूर्वत्र साक्षात्स्थानिनो निर्देशादिति भावः।

अथवैकयोग इति। एकं ग्रहणकवाक्यमित्यर्थः। तदपेक्षिष्यामह इति। लौकिकोऽधिकारोऽपेक्षालक्षण आश्रीयते न तु शास्त्रीयः। अपेक्षा च लक्ष्यवशात्समु-दायविषयैवेति भावः।

एनदिति। यद्येनादेशः क्रियते तदातोऽमित्यम्भावे सत्येनमिति प्राप्नोति, एन-दिति चेष्यते इति वार्तिकारम्भः। एनच्छ्रितक इति प्राप्नोतीति। 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत' इति त्यदाद्यत्वमकृत्वा लुक् क्रियते। लुकि च कृते प्रत्यय-लक्षणनिषेधात्त्यदाद्यत्वाभाव इति भावः। यथालक्षणमिति। यस्य प्रयोगो नोपलभ्यते तल्लक्षणानुसारेण संस्कर्तव्यम्। तत्र यदा 'न लुमताङ्गस्ये'त्यत्राङ्गाधिकारो निर्दिश्यते

उ०–बाधित्वायमेव स्यात्। एकं ग्रहणकेति। इदमस्तृतीयादौ एतदस्त्रतसोश्चाशनुदात्तो भवती-त्येवंरूपमित्यर्थः।

एनो न वक्तव्य इति—भाष्ये। तथा च सूत्र एवैनद्वक्तव्यः, तकारोच्चारणसाम-र्थ्याच्च नपुंसके लुग्विषयेऽपि भविष्यति। तकारोच्चारणसामर्थ्यान्त्यदाद्यत्वबाधापेक्षया क्लृप्तबाधस्य 'न लुमते'ति निषेधस्य बाध एवोचित इति भावः। न चैनदस्त्यदाद्यत्वापवाद-त्वात्तत्र कृते त्यदाद्यत्वं दुर्लभम्, 'द्वितीये'त्यादिसप्तम्या 'आर्धधातुक' इति साहचर्येण विषय-सप्तमीत्वेनापवादत्वस्यैवाभावात्। वस्तुतो 'यद्येन'दित्यादिः पूर्वपक्ष्युक्तिरिति विषयसप्तम्यां मानाभावेनैनादेशः कार्य एवेति बोध्यम्। इत्याहुरिति। अत्रार्षबीजं तु नपुंसकलुकीवात्रापि

१–क्वचिन्न। * त्यदादीनामः ७. २. १०२.

# आर्धधातुके ॥ २ । ४ । ३५ ॥

**जग्ध्यादिष्वार्धधातुकाश्रयत्वात्सति तस्मिन्विधानम् ॥ १ ॥**

जग्ध्यादिष्वार्धधातुकाश्रयत्वात्सति तस्मिन्नार्धधातुके जग्ध्यादिभिर्भवितव्यम् ॥ किमतो यत्सति भवितव्यम् ?

**तत्रोत्सर्गलक्षणप्रतिषेधः ॥ २ ॥**

तत्रोत्सर्गलक्षणं कार्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः । भव्यम् प्रवेयम् आख्येयमिति* । ण्यत्यवस्थितेऽनिष्टे[†] प्रत्यय आदेशः स्यात् । ण्यतः श्रवणं प्रसज्येत[‡] ।

नैष दोषः । '[1]सामान्याश्रयत्वाद्विशेषस्यानाश्रयः' । सामान्ये ह्याश्रीयमाणे विशेषो नाश्रितो भवति । तत्रार्धधातुकसामान्ये [2]जग्ध्यादिषु कृतेषु[3] यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति ।

**सामान्याश्रयत्वाद्विशेशस्यानाश्रय इति चेदुवर्णाकारान्तेभ्यो ण्यद्विधिप्रसङ्गः ॥ ३ ॥**

प्र०—तदा प्रत्ययलक्षणेनैनच्छित्वक इति भाव्यम् । अथानङ्गाधिकारविहितमपि अङ्गकार्यं निषिध्यते तदादेशाभावादेतच्छित्वक इति भाव्यमित्याहुः ॥३४॥

आर्धधातुके । जग्ध्यादिष्विति । व्यक्तौ पदार्थे परसप्तम्यां सत्यां परस्मिन् व्यवस्थिते आर्धधातुके आदेशेन भाव्यम् । तत्र विशिष्टार्धधातुकाश्रयेषु जग्ध्यादिषु यद्यपि दोषाभावस्तथापि भूवीख्याञ्सु दोषः । तत्रेति । उत्सर्गशब्देन स्थानी विवक्षितः, आदेशेनापवादेन बाध्यमानत्वात् ॥ सामान्याश्रयत्वादिति । आकृतिपदार्थाश्रयेणोत्तरम् ।

जातिपक्षस्य दोषवत्तां प्रतिपादयितुमाह—उवर्णाकारान्तेभ्य इति ।

उ०—लुकि सामर्थ्यादेनदादेशप्रवृत्तिरङ्गाधिकारानिर्देशेऽपि भविष्यतीति भाष्याशयः । बहिरङ्गत्वं तु न लुग्विषये दुर्बलतानियामकमिति दिक् । वस्तुतोऽप्रयुक्तत्वाल्लक्षणस्यायमविषय इति भाष्यार्थ इति बोध्यम् ॥३४॥

आर्धधातुके । व्यक्ताविति । परसप्तम्या उचिततया तत्पक्षस्यैवाश्रयणमुचितमिति भावः । तथापि भूवीति । अत एव 'जग्ध्यादिष्वि'त्युक्त्वापि 'भव्य'मित्याद्येव भाष्ये उदाहृतम् । वचेरप्युपलक्षणमेतत् । ण्यतो यदुत्सर्गत्वाभावादाह—उत्सर्गशब्देनेति । भाष्ये—ण्यतः श्रवणमिति । ण्यत्कार्यस्य वृद्ध्यादेरित्यर्थः ॥ आकृतीति । एवं चार्धधातुकत्वजातिविषये आदेशा न तु प्रत्यये परे इति भ्वाद्यादेशेषु कृतेषु पश्चाद्यदेव भविष्यतीति भावः ।

जातिपक्षस्येति । सर्वेषां निमित्तवाचकशब्दानां जातिपरत्वं स्यादित्यभिप्रायेण दोषदान-

* अस्तेर्भूः; अजेर्व्यघञपोः; चक्षिङः ख्याञ् २. ४. ५२; ५६; ५४.

† ऋहलोर्ण्यत् ३ १ १२४. ‡ अचो ञ्णिति ७.२.११५. आतो युक् चिण्कृतोः ७ ३ ३३

१—वार्तिकमित्यन्ये । २ 'जग्ध्यादिष्वादेशेषु' पा० । ३—क्वचिन्न ।

सामान्याश्रयत्वाद्विशेषस्यानाश्रय इति चेदुवर्णाकारान्तेभ्यो ण्यत्प्राप्नोति। लव्यम् पव्यमिति—आ 'र्धधातुकसामान्ये गुणे कृते यि प्रत्ययसामान्ये च वान्तादेशे 'हलन्ता'दिति ण्यत्प्राप्नोति† । इह च दित्स्यम् धित्स्यम्—आर्धधातुकसामान्ये-ऽकारलोपे कृते 'हलन्ता'दिति ण्यत्प्राप्नोति‡ ।

**पौर्वापर्याभावाच्च सामान्येनानुपपत्तिः ॥ ४ ॥**

पौर्वापर्याभावाच्च सामान्येन जग्धादीनामनुपपत्तिः । न हि सामान्येन पौर्वापर्यमस्ति ।

**सिद्धं तु सार्वधातुके प्रतिषेधात् ॥ ५ ॥**

सिद्धमेतत् । कथम् ? अविशेषेण जग्ध्यादीनुक्त्वा 'सार्वधातुके ने'ति प्रतिषेधं वक्ष्यामि । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'जग्ध्यादिष्वार्धधातुकाश्रयत्वात्सति तस्मि-न्विधानमिति । परिहृतमेतत् 'सामान्याश्रयत्वाद्विशेषस्यानाश्रय' इति । ननु चोक्तं 'सामान्याश्रयत्वाद्विशेषस्यानाश्रय इति चेदुवर्णाकारान्तेभ्यो ण्यद्विधि-प्रसङ्ग' इति । नैष दोषः । वक्ष्यति तत्राज्ग्रहणस्य प्रयोजनम् 'अजन्तभूत-पूर्वमात्रादपि यथा स्या'दिति* ।

---

प्र०- इदानीमाकृतिपक्षाश्रयणस्यासंभवमाह—पौर्वापर्याभावाच्चेति । सामान्यस्य व्यापकत्वान्नित्यत्वाच्च देशकालकृतं पौर्वापर्यं नास्ति । सप्तम्या चेह परत्वं प्रतिपादि-तम् । तस्माद् व्यक्तिपक्षः परत्वोपपत्तय आश्रयणीयः । तत्र च भव्याद्यसिद्धिः । वक्ष्यति तत्रेति । हलन्ताण्ण्यतो विधानादज्ग्रहणमन्तरेणाप्यजन्तादेव यति सिद्धे-

---

उ०-मिति भावः । दित्स्यधित्स्ययोर्यति 'यतोऽनाव' इत्याद्युदात्तत्वम्, ण्यति 'तत्स्वरित'मिति स्वरितत्वमिति भेदः ।

व्यापकत्वादिति । सर्वदेशस्थाश्रयाश्रितत्वादिति भावः । तत्र व्यापकत्वाद्देशकृतं, नित्यत्वात्कालकृतमिति विभागः । सप्तम्या चेहेति । तस्मिन्निति शास्त्रबलादत्र शास्त्रे विषय-

---

† सार्वधातुकार्धधातुकयोः ७ ३.८४; वान्तो यि प्रत्यये ६.१.७९; ऋहलोर्ण्यत् ३ १.१२४.

‡ अतो लोपः ६. ४. ४८; ऋहलोर्ण्यत् ३. १. १२४.

* 'इदं तर्हि प्रयोजनम्, अजन्तभूतपूर्वमात्रादपि यथा स्यात्' । भाष्यम् ३. १. ९७ पृ० २०२ पं० ८.

यदप्युच्यते 'पौर्वापर्याभावाच्च सामान्येनानुपपत्ति'रिति । अर्थसिद्धिरेवैषा यत्सामान्येन पौर्वापर्यं नास्ति । असति पौर्वापर्ये विषयसप्तमी विज्ञास्यते—'[1]आर्धधातुके विषय' इति । तत्रार्धधातुके विषये जग्ध्यादिषु कृतेषु यो यतः प्राप्नोति प्रत्ययः स ततो भविष्यति ।

अथवार्धधातुकास्विति वक्ष्यामि । कास्वार्धधातुकासु ? उक्तिषु युक्तिषु रूढिषु प्रतीतिषु श्रुतिषु संज्ञासु ॥३५॥

प्र० ऽग्रहणं भूतपूर्वस्याप्यजन्तस्य परिग्रहार्थमित्यर्थः । अर्थसिद्धिरिति । एषैव प्रयोजनसंपत्तिरित्यर्थः । विषये इति । बुद्धिस्थ इत्यर्थः । अभिव्यङ्क्ष्यते तत्रार्धकातुकत्वमित्येवं बुद्ध्या निरूपित इति भावः ।

अथवेति । व्यक्तिपक्षाश्रयणेऽपि न दोष इत्युक्तं भवति । नित्यानां भव्यादीनां शब्दानामनेन साधुत्वमात्रं प्रतिपाद्यते । तत्रार्धधातुकं विद्यते यासु ता भव्यादय आर्धधातुकावयवाः शब्दसंहतय आर्धधातुकशब्देनार्शआदित्वादच्प्रत्ययान्तेनोच्यन्ते । उक्तिष्विति । उच्यन्ते उच्चार्यन्त इत्युक्तयस्ता एव शब्दसंहतयः । अन्ये तु 'उच समवाये' इत्यस्य क्तिन् । युक्तिशब्दः संहतिपर्याय इत्याहुः । समवायो हि संहतिः । युक्तिष्विति । अर्थेन संबद्धास्वित्यर्थः । रूढिष्विति । परमार्थतो नित्यास्वित्यर्थः । प्रतीतिष्विति । अनेन नित्यत्वेऽपि व्यवहारानित्यत्वं प्रतिपाद्यते । तदेव दर्शयति—श्रुतिष्विति । एवंभूतानामेव व्यवहारे श्रूयमाणत्वादित्यर्थः । संज्ञास्विति । बालव्युत्पत्तये प्रकृत्यादिविभागेन संज्ञायमानास्वित्यर्थः । ततश्च 'यस्य च भावेने'ति सप्तमी । 'आर्धधातुकासु संहतिषु व्युत्पाद्यमानासु अस्त्यादीनां भ्वादय आदेशा' इत्युक्तं भवति ॥३५॥

उ०—सप्तम्यभावं मन्यते । भूतपूर्वस्येति । अङ्गत्वस्य विधानप्रतिबद्धतयाङ्गाधिकारे सामान्याश्रयत्वस्य वक्तुमशक्यतया 'य्यल्लोपावियङ्यण्गुणे'त्यादिपूर्वविप्रतिषेधवार्तिकभाष्येण अतो लोपादीनां स्थानिवत्त्वपरभाष्यविरोधेन चास्य भाष्यस्य प्रौढिवादपरत्वमिति केचित् । वस्तुतो विषयसप्तम्यामपि परनिमित्तत्वं वक्तुं शक्यमिति न दोषः । अङ्गसंज्ञासूत्रेऽपि यस्माद्यस्य प्रत्ययस्य विधानं तस्मिन् विवक्षित एवाङ्गत्वविधानेऽपि न दोष इति भाष्याशयः । भाष्ये—असति पौर्वापय इति । न च व्यक्तिद्वारकं पौर्वापर्यम्, अत एव 'हलन्ताच्चे'ति सूत्रे व्यक्तिद्वारकं सामीप्यं कैयटेनोक्तम्, अतः कथमिदं भाष्यमिति वाच्यम्; तस्य कैयटस्य तत्रैव सूत्रेऽप्रयोजकत्वस्य मया बोधितत्वात् । परम्परासम्बन्धस्यासम्बन्धतया 'अनेकमन्यपदार्थे' इति सूत्रे भाष्ये उक्तेः । आर्धधातुकावयवा इति । अत एवैषां यङ्लुगन्ते प्रयोगा नेत्याहुः । लुकि आर्धधातुकावयवत्वाभावात् । प्रतीतिष्विति । प्रयुज्यमानास्वित्यर्थः । 'न केवले'ति संकेतात् प्रकृतिप्रत्ययसमुदाय एव प्रयुज्यते । एवं च तस्य व्यावहारिकत्वादनित्यत्वं संपन्नमित्याह—व्यवहारेति ॥३५॥

[1]—'आर्धधातुकविषय' पा० ।

# अदो जग्धिर्ल्यप्ति किति ॥ २ । ४ । ३६ ॥

ल्यब्ग्रहणं किमर्थं न 'ति किती'त्येव सिद्धम् ? ल्यपि कृते† न प्राप्नोति । इदमिह संप्रधार्यम्—ल्यप् क्रियतामादेश इति किमत्र कर्तव्यम् ? परत्वाल्ल्यप् । अन्तरङ्ग आदेशः । एवं तर्हि सिद्धे सति यल्ल्यब्ग्रहणं करोति तज्ज्ञापयत्याचार्यो'ऽन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधत' इति । किमेतस्य ज्ञापने प्रयोजनम् ? 'ल्यबादेश उपदेशिवद्वचनमनादिष्टार्थं बहिरङ्गलक्षणत्वा'दिति वक्ष्यति‡ तन्न वक्तव्यं भवति ।

[1]'जग्धिविधिर्ल्यपि यत्तदकस्मात्सिद्धमदस्ति कितीति विधानात् ।
हिप्रभृतींस्तु* सदा बहिरङ्गो ल्यब्भरतीति कृतं तदु विद्धि ॥

एष एवार्थः—

जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते ।
ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥३६॥

प्र०— अदो जग्धि । अन्तरङ्ग आदेश इति । तकारादिप्रत्ययमात्रापेक्षत्वात् ल्यबादेशस्तु पूर्वपदापेक्षसमासाश्रयत्वाद् बहिरङ्गः । अनादिष्टार्थमिति । प्रधाय प्रस्थायेत्यादौ हित्वादिष्वकृतेष्वेव ल्यब्यथा स्यादित्यर्थः । कथं न प्राप्नोतीत्याह—बहिरङ्गलक्षणत्वादिति । अयमेवार्थो [1]व्याघ्रभूतिनाप्युक्त इत्याह—जग्धिविधिरिति । अकस्मादिति । निष्प्रयोजनमित्यर्थः । सिद्धमद इति । जग्धिविधानं सिद्धमित्यर्थः । ज्ञापनार्थं ल्यपि जग्धिविधानमित्याह—हिप्रभृतीनिति । ल्यब्भरतीति । ल्यबादेशो हरति अपनयति बाधत इत्यर्थः । तदु इति । 'उ'शब्दो निपातोऽवधारणार्थः । तद्विद्ध्येवेत्यर्थः ॥३६॥

उ०— अदो जग्धि । तकारादिप्रत्ययमात्रेति । सूत्रे विषयसप्तमीति युक्तं वक्तुम् । भाष्ये—उपदेशिवद्वचनमिति । उपदेशी-क्त्वा, तद्वत् ल्यपो वचनं कार्यमित्यर्थः । भाविन्येव समासे क्त्वो ल्यबादेश इति भावः । अनादिष्टार्थम् । हित्वाद्यादेशाभावार्थमित्यर्थः । प्रधायेत्यादि । हित्वेत्यादिष्वनादिष्टेषु अकृतेषु यथा स्यादित्येषोऽनादिष्टार्थमित्यस्यार्थ इति भावः । हित्वादिष्विति । आदिना हित्वदत्त्वेत्त्वदीर्घत्वानि गृह्यन्ते । वार्तिके यदिति सामान्ये नपुंसकम् । 'जग्धि'रिति यः स इत्यर्थः । अकस्मात् । न कस्माच्चित्प्रयोजनादित्यर्थः । अनर्थक इति भावः । कुतस्तत्राह—सिद्धमिति । 'अद' इति सामान्ये नपुंसकम् । 'यतोऽत' इति च शेषः । एष एवार्थ इति । 'अन्येन निबद्ध' इति शेषः । मया निबध्यते इति वा ॥३६॥

† समासेऽनञ्पूर्वे क्त्वो ल्यप् ७. १. ३७. ‡ ७. १. ३७ वा० १–२ पृ० ४१–४२.
* दधातेर्हिः ७. ४. ४२.
१–व्याघ्रभूतेरियं कारिकेति कैयटाशयः ।

## लुङ्सनोर्घस्लृ ॥ २ । ४ । ३७ ॥

### घस्लृभावेऽच्युपसंख्यानम् ॥ १ ॥

घस्लृभावेऽच्युपसंख्यानं कर्तव्यम् । प्रात्तीति प्रघसः ॥३७॥

## हनो वध लिङि ॥२।४।४२॥ लुङि च ॥२।४।४३॥

किमयं वधिर्व्यञ्जनान्त आहोस्विददन्तः । किं चातः ? यदि व्यञ्जनान्तः–

### वधौ व्यञ्जनान्त उक्तम् ॥ १ ॥

किमुक्तम् ? 'वध्यादेशे वृद्धितत्वप्रतिषेध इड्विधिश्चे'ति* । अथादन्तो न दोषो भवति । यथा न दोषस्तथास्तु ॥४२॥४३॥

## इणो गा लुङि ॥ २ । ४ । ४५ ॥

### इणवदिकः ॥ १ ॥

इणवदिक इति वक्तव्यम् । इहापि यथा स्यात्—अध्यगात् अध्यगाताम् अध्यगुः ॥४५॥

प्र०– हनो वध । किमयमिति । किं कार्यार्थोऽकारोऽथोच्चारणार्थ इति प्रश्नः । वृद्धितत्वप्रतिषेध इति । 'अवधी'दित्यत्रातो हलादेर्लघोरिति हलन्तलक्षणा वृद्धिः प्राप्नोति । 'वधक' इति ण्वुलि वधादेशे औपसंख्यानिके कृते'ऽत उपधाया' इति वृद्धिः प्राप्नोति, सा 'जनिवध्योश्चे'ति प्रतिषिध्यते । स्थानिवद्भावात्तु तत्वं प्राप्तम् । इड्विधिश्चेति । 'अवधी'दित्यादावेकाच्त्वादिट्प्रतिषेधः प्राप्नोतीतीड्विधेयः । अदन्तत्वे त्वल्लोपस्य स्थानिवत्त्वाद्वृद्धितत्वाभावः । तत्वं त्वलोऽन्त्यस्य क्रियते । तत्राकारो लुप्तत्वात्स्थानी न भवति, धकारोऽपि अल्लोपस्य स्थानिवत्त्वादन्त्यो न भवतीति तत्वाभावः । उपदेशेऽनेकाच्त्वाच्च प्रतिषेधाभावादिट्सिद्धिः ॥४२॥४३॥

उ०– हनो वध । हलन्तलक्षणेति । हलन्तलक्षणायाः प्रतिप्रसवभूतेत्यर्थः । औपसंख्यानिके इति । 'बहुलं तणी'त्यनेनेति भावः । स्थानिवद्भावादिति । 'स्थानिवदादेश' इत्यनेन । अल्लोपस्येति । 'अचः परस्मि'न्नित्यनेन । एवं च 'जनिवध्यो'श्चेति सूत्रे वधिग्रहणं न कार्यमिति भावः । स्वतन्त्रो वधधातुस्तु नास्त्येव, अत एव व्यञ्जनान्तेऽवधीदित्यादौ 'वृद्धिप्रतिषेधो वक्तव्य' इति सङ्गच्छते । अन्यथा तस्य वृद्धेर्दुर्वारत्वेन तदसङ्गतिः । लुप्तत्वाच्चत्स्थानी न भवतीति । अतिदेशेनाहार्यबुद्धिसत्त्वेऽपि षष्ठ्यर्थस्योच्चारणरूपप्रसङ्गस्य वक्तुमशक्यत्वात् । उपदेश इति । वध्युपदेशे इत्यर्थः । उपदेशत्वाच्छेदेनैकाच्त्वस्य विवक्षणादिति भावः ॥४२॥४३॥

* १. १. ५६ वा० २२-२३ पृ० ४१७.

## णौ गमिरबोधने ॥ २ । ४ । ४६ ॥

'इणवदिक' इत्येव । अधिगमयति अधिगमयतः अधिगमयन्ति ॥४६॥

## सनि च ॥ २ । ४ । ४७ ॥

'इणवदिक' इत्येव । अधिजिगमिषति अधिजिगमिषतः अधिजिगमिषन्ति ॥४७॥

## गाङ् लिटि ॥ २ । ४ । ४९ ॥

ङित्करणं किमर्थम् ?

**गाङ्यनुबन्धकरणं विशेषणार्थम् ॥ १ ॥**

गाङ्यनुबन्धकरणं क्रियते विशेषणार्थम् । क्व विशेषणार्थेनार्थः ? 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' [ १. २. १ ] इति । 'गाकुटादिभ्योऽञ्णिन्ङि'दितीयत्युच्यमान इणादेशस्यापि प्रसज्येत* ।

**ज्ञापकं वा सानुबन्धकस्यादेशवचन इत्कार्याभावस्य ॥ २ ॥**

अथवैतज्ज्ञापयत्याचार्यः 'सानुबन्धकस्यादेश इत्कार्यं न भवती'ति ।

किमेतस्य ज्ञापने प्रयोजनम् ?

प्र०— गाङ् लिटि । स्थानिवद्भावात्सिद्धमात्मनेपदं मत्वाह—ङित्करणमिति । इणादेशस्यापीति । ततश्चागासातां ग्रामौ देवदत्तेनेत्यादौ ङित्त्वादीत्वप्रसङ्गः । गाङ्कुटादिभ्य इति तूच्यमानेऽस्यैव ग्रहणं भवति न तु गाङ्गताविस्यस्य । एतन्ङकारस्यात्मनेपदविधौ चरितार्थत्वादादेशेनानन्यार्थङकारेण तुल्यताभावात् ।

ज्ञापकं वेति । सानुबन्धाद्यत्र षष्ठ्युच्चार्यते तत्राकृतायामेवेत्संज्ञायामादेशः प्रवर्तते, कृतायां वेत्संज्ञायां तन्निबन्धनानि कार्याणि न प्रवर्तन्त इति ज्ञापनार्थं ङकारोच्चारणमित्यर्थः ।

उ०— गाङ् लिटि । ङित्त्वादीत्वेति । 'घुमास्थे'त्यनेनेति भावः । इणः परस्मैपदित्वेन लुङि 'गातिस्थे'ति सिचो लोपादातिदेशिकङित्त्वभाजोऽभावात्कर्मणि चिण्वदिडभावपक्षे उदाहृतम् । न तु गाङ्गताविति । तस्यापि ग्रहणे तु सामान्यग्रहणार्थमिति वदेत्र तु विशेषणार्थमितीति भावः । तुल्यताभावादिति । वस्तुतो भाष्यप्रामाण्येन व्याख्यानादेवास्याग्रहणम् । अत एव 'घटायोन्मीलित'मिति न्यायविरोधो न ।

सानुबन्धादिति । 'गाङ्कुटादिभ्य' इत्यत्र व्याख्यानादिकादेशस्यैव ग्रहणं भविष्यतीत्याशयेन ज्ञापकोपन्यासः । कृतायाश्चेति । 'अनल्विधा'विति प्रतिषेधस्तु स्थान्यकाश्रये

* इणो गा लुङि २. ४. ४५; (घुमास्थागापाजहातिसां हलि ६. ४. ६६).

**प्रयोजनं चक्षिङः ख्याञ्† ॥ ३ ॥**

[ 'चक्षिङः ख्याञ्प्रयोजनम्। चख्यौ ख्यास्यतीति। ] 'ङित'‡ इत्यात्मनेपदं [ नित्यं' ] न भवति।

**लटः शतृशानचौ ॥ ४ ॥**

लटः शतृशानचौ* प्रयोजनम्। पचमानः यजमान इति। 'टित'+ इत्येत्वं न भवति।

**युवोरनाकौ ॥ ५ ॥**

युवोरनाकौ× च प्रयोजनम्। नन्दनः कारकः, नन्दना कारिकेति। उगिल्लक्षणौ ङीब्नुमौ÷ न भवतः।

**मेश्चाननुबन्धकस्याम्वचनम् ॥ ६ ॥**

मेश्चाननुबन्धकस्याम्वक्तव्यः†† । अचिनवम् अकरवम् असुनवम्‡‡ ।

अत्यल्पमिदमुच्यते 'मे'रिति। 'तिप्सिब्मिपा'मिति वक्तव्यम्। इहापि यथा स्यात्—वेद वेत्थ** ।

---

प्र०- शतृशानचाविति। सूत्रे सहनिर्दिष्टत्वादत्रापि सहोपादानम्। शानजेव त्वात्मनेपदत्वात्प्रयोजनम्। युवोरनाकाविति। भुज्युशंयूणायुप्रभृतिष्वादेशनिवारणायानुनासिकोकारानुबन्धौ युवू सूत्रे निर्दिष्टौ। तत्रादेशप्रवृत्तावेतस्माज्ज्ञापकादुगित्कार्याप्रवृत्तिरिति ङीम्नुमोरभावः।

ज्ञापकस्यातिव्याप्तिं दृष्ट्वाह—मेश्चेति। 'तस्थस्थमिपा'मित्यत्र मिब्ग्रहणमपनीय मिग्रहणं कर्तव्यमित्यर्थः। तेन सानुबन्धः स्थानी न भवतीति पित्कार्यं प्रवर्तते। अचिनवमिति। पित्त्वात् ङित्वाभावाद्गुणो भवति। 'मा हि स्म चिनव'मिति चानुदात्तत्वम्। वार्तिककारस्याव्याप्तिमुद्भावयन्नाह—अत्यल्पमिति। णलादिविधौ तु

---

उ०-कार्ये। अनुबन्धश्च लुप्तत्वात्स्थानिनि न संनिधीयत इत्यर्थः॥ भाष्ये—नन्दनेति। 'ल्युः कर्तरि पुंसी'त्यमरस्य प्रमादः।

इति चानुदात्तत्वमिति। पित्त्वादित्यर्थः। आण्निषेधाय माङ्, लङर्थः—स्मः,

---

† चक्षिङः ख्याञ् २. ४. ५४. १–क्वचिन्न। ‡ अनुदात्तङित आत्मनेपदम् १ ३. १२.
* लटः शतृशानचावप्रथमासमानाधिकरणे ३ २.१२४. + टित आत्मनेपदानां टेरे ३.४.७९.
× युवोरनाकौ ७.१.१. ÷ उगितश्च ४.१.६; उगिदचां सर्वनामस्थानेऽधातोः ७.१.७०.
†† तस्थस्थमिपां तांतंतामः ३. ४. १०१. ‡‡ सार्वधातुकार्धधातुकयोः ७. ३. ८४; (सार्वधातुकमपित् १. २. ४; क्ङिति च १. १. ५). ** विदो लटो वा ३. ४. ८३.

अस्य ज्ञापकस्य सन्ति दोषाः सन्ति प्रयोजनानि । दोषाः समा भूयांसो वा । तस्मान्नार्थोऽनेन ज्ञापकेन । कथं यानि प्रयोजनानि ? नैतानि सन्ति । इह तावत् 'चक्षिङः ख्या'ञिति, ञित्करणसामर्थ्याद्विभाषात्मनेपदं भविष्यति× । 'लटः शतृशानचा'विति, वक्ष्यत्येतत् 'प्रकृतानामात्मनेपदानामेत्वं भवती'ति* । 'युवोरनाका'विति, वक्ष्यत्येतत् 'सिद्धं तु युवोरनुनासिकत्वा'दिति† ॥४६॥

## चक्षिङः ख्याञ् ॥ २ । ४ । ५४ ॥

किमयं [1]क्शादिराहोस्वित् [2]ख्यादिः ?

**चक्षिङः क्शाञ्ख्याञौ ॥ १ ॥**

चक्षिङः [3]ख्याञ् [1]क्शादिश्च [2]ख्यादिश्च ।

**खशादिर्वा ॥ २ ॥**

अथवा [4]खशादिर्भविष्यति । केनेदानीं [1]क्शादिर्भविष्यति ? चर्त्वेन‡ । अथ [2]ख्यादिः कथम् ?

प्र०—तिप्सिपोः सानुबन्धकयोरनुपादानान्नास्ति दोष इति चिन्त्यमेतत् ।

भूयांसो वेति । दोषबहुत्वारोपेण निन्दामाह—तस्मादिति । विशेषणार्थं तु ङित्करणं स्थितम् । विभाषात्मनेपदमिति । कर्त्रभिप्राये क्रियाफले आत्मनेपदं नान्यत्रेत्यर्थः । प्रकृतानामिति । 'तिप्तस्झी'त्यत्र यान्यात्मनेपदान्युपात्तानि तेषामित्यर्थः । सिद्धं त्विति । अनुनासिकयणोरेवादेशो नान्ययोरित्यर्थः । ततश्च स्थानिनोरेवोगित्त्वं नास्तीति कुतस्तदादेशयोरुगित्कार्यप्रसङ्गः ॥४९॥

चक्षिङः । लक्ष्ये रूपद्वयदर्शनादेकतराश्रयणे इतरासिद्धिप्रसङ्गात्पृच्छति—

उ०—निघातप्रतिषेधाय—हिः । चिन्त्यमेतदिति । वस्तुतस्तु 'परस्मैपदानां णलतुर्विंदोऽलटो वे'त्यादौ यथासंख्यनिर्वाहाय परस्मैपदानां क्रमेणोपस्थितये 'तिप्त'सित्यादिसूत्रस्थक्रमेणोपस्थितौ सानुबन्धकयोरेवोपस्थितिरिति भाष्याशयः । निन्दामाहेति । अन्यथा दोषाणामाधिक्याभावात्प्रकर्षप्रयोगोऽनुपपन्न इति भावः । 'स्वरितञित' इत्यत्र विकल्पवाचिनोऽनुपादानादाह—कर्त्रभीति । अनुनासिकयोरिति । युवोरिति विशेष्यम् । उगित्त्वं नास्तीति । उकारविशिष्टस्य स्थानित्वादिति भावः ॥४९॥

चक्षिङः ख्याञ् । रूपद्वयेति । क्शौ ख्याविततीत्यर्थः । भाष्ये—ख्यादिरिति ।

× स्वरितञितः कर्त्रभिप्राये क्रियाफले १. ३. ७२.
* 'इदं तर्ह्युक्तं प्रकृतानामात्मनेपदानामेत्वं भवतीति' ३.४.७९ वा० २ भाष्यम् पृ० ४०४ पं० ३
† ७. १. १ वा० २२. पृ० १०. १—'क्शादि' पा० । २—'ख्यादि' पा० ।
‡ खरि च ८. ४. ५५. ३—'क्शाञ् ख्याञ्' इति पा० । ४—'ख्शादि' पा० ।

**असिद्धे शस्य यवचनं विभाषा ॥ ३ ॥**

असिद्धे× शस्य विभाषा यत्वं वक्तव्यम् ॥ किं प्रयोजनम् ?

**प्रयोजनं सौप्रख्येऽवुञ्विधिः ॥ ४ ॥**

सौप्रख्य इति योपधलक्षणो÷ वुञ्विधिर्न भवति । सौप्रख्यीयः । 'वृद्धाच्छः' [ ४. २. ११४ ] इति च्छो भवति ।

**निष्ठानत्वमाख्याते ॥ ५ ॥**

आख्यात इति निष्ठानत्वं* न भवति ।

**रुविधिः पुंख्याने ॥ ६ ॥**

पुंख्यानमिति रुविधिर्न† भवति ।

**णत्वं पर्याख्याने ॥ ७ ॥**

पर्याख्यानमिति णत्वं‡ न भवति ।

प्र०–किमयमिति । असिद्ध इति । 'पूर्वत्रासिद्ध'मित्यधिकारे णत्वविधानानन्तरं शस्य यत्वं विभाषा वक्तव्यम् । तत्र यत्वस्य पूर्वत्रासिद्धत्वात्तन्निमित्तं कार्यं न प्रवर्तते, शकारनिमित्तं च प्रवर्तते । चर्त्वे तु कर्तव्ये यत्वं सिद्धमिति खस्य चर्त्वाभावादाख्यातेत्यादि सिध्यति ।

सौप्रख्येऽवुञ्विधिरिति । अकारप्रश्लेषात्सौप्रख्यशब्दे वुञ्विधिर्न भवतीत्यर्थः । सुप्रचष्ट इति सुप्रख्यः । 'आतश्चोपसर्ग' इति कः । यत्वस्यासिद्धत्वात्सुप्रख्यस्य भाव इति योपधलक्षणवुञभावात्ष्यञ्भवतीति । तथा सुप्रख्येन निर्वृत्तो देशः सौप्रख्यस्तत्र भवः सौप्रख्यीय इति 'धन्वयोपधाद्वु'ञिति वुञभावे वृद्धाच्छो भवति ।

निष्ठानत्वमिति । 'न ध्याख्ये'ति तु प्रतिषेधः 'ख्या प्रकथन' इत्यस्यैव प्रतिपदोक्तत्वात् । अस्य तु शस्य यत्वेन लाक्षणिकत्वादिति मन्यते । पुंख्यानमिति । 'पुमः खय्यम्पर' इति रुत्वं न भवति, यत्वस्यासिद्धत्वादम्परत्वाभावात् ।

णत्वमिति । 'ख्या प्रकथने' इत्यस्मादपि परस्य 'लुब्योगाप्रख्याना'दिति निपात-

उ०–खकारयकारादिरित्यर्थः । एवं 'कशादिः' 'खशादि'रित्यपि ककारशकारादिः, खकारशकारादिरित्यर्थकम् ।

अकारप्रश्लेषादिति । वस्तुतस्तु तं विनापि 'मशका धूमप्रयोजन'मित्यादेरिव वुञ्विधिर्निवर्त्यत्वेन प्रयोजनमिति वार्तिकार्थः । अग्रिमवार्तिकाणामेवमेव व्याख्येयत्वात् । अस्य वार्तिकस्य भाष्येऽनुक्तमप्यर्थं योग्यतया संभाव्याह—ष्यञ्भवतीति । 'योपधाद्गुरूपोत्तमाद्वु'ञिति प्राप्तवुञोऽभावे ब्राह्मणादित्वात्ष्यञिति भावः ।

लाक्षणिकत्वादिति । अस्य तत्राग्रहणे 'आख्यान'मित्यपि स्यादिति तद्व्यावृत्त्यर्थं खशादित्वमिति भावः । वस्तुतः स्वतन्त्रख्याधातोरार्धधातुके प्रयोगाभाव एवेष्टव्यः । अन्यथा

× पूर्वत्रासिद्धम् ८. २. १. ÷ धन्वयोपधाद् वुञ् ४. २. १२१.
* संयोगादेरातो धातोर्यण्वतः ८.२.४३. † पुमः खय्यम्परे ८.३.६. ‡ कृत्यचः ८.४.२९.

**सस्थानत्वं नमः ख्यात्रे ॥ ८ ॥**

नमःख्यात्र इति सस्थानत्वं† न भवति ।

**वर्जने प्रतिषेधः ॥ ९ ॥**

वर्जने प्रतिषेधो वक्तव्यः । अवसंचक्ष्याः परिसंचक्ष्याः ।

**असनयोश्च ॥ १० ॥**

असनयोश्च प्रतिषेधो वक्तव्यः । नृचक्षा रक्षः । विचक्षण इति ।

**बहुलं तणि ॥ ११ ॥**

बहुलं तणीति वक्तव्यम् । किमिदं तणीति ? संज्ञाछन्दसोर्ग्रहणम् । किं प्रयोजनम् ?

**अन्नवधकगात्रविचक्षणाजिराद्यर्थम् ॥ १२ ॥**

अन्न—अन्नम् । वधक—वधकम् । गात्र—गात्रं पश्य । विचक्षण—विचक्षणः । अजिर—[1]अजिरे तिष्ठति* ॥५४॥

प्र०–नाणत्वाभावः ॥ सस्थानत्वमिति । जिह्वामूलीयस्येयं पूर्वाचार्यसंज्ञा । शपरे विसर्जनीय इत्येवात्र भवति ॥ नृचक्षा रक्ष इति प्रयोगश्छान्दसः । भाषायां तु नृचक्षो रक्ष इति भवति । विचक्षणे इति । 'अनुदात्तेतश्च हलादे'रिति युच् ।

बहुलमिति । सर्वप्रकरणापेक्षमेतदुच्यते । 'अन्न'शब्दे जग्ध्यभावः । वधकमिति । ण्वुलि वधादेशः । गात्रमिति । इण औणादिके ष्ट्रनि गादेशः । विचक्षणे ख्याञभावः । अजिरे—वीभावाभावः । 'अजिरशिशिरे'ति निपातनमनपेक्ष्यैतदुक्तम् ॥५४॥

उ०–तमादाय सौप्रख्यादौ वुनादि दुर्वारमेव स्यादित्यस्य खशादित्ववैयर्थ्यापत्तेः । न च पाक्षिकयकारादिसिद्धिरेव फलम्, 'सस्थानत्वं नमःख्यात्रे' इति भाष्यस्य सर्वथासङ्गतेः । जिह्वामूलीयस्य वैकल्पिकत्वेन विसर्गसिद्धेर्जिह्वामूलीयस्य दुर्वारत्वाच्च । एवं च 'न ध्याख्ये'त्यत्र तद्ग्रहणे फलभावात्तदपि न कर्तव्यमेवेति भाष्याशयः । 'ख्याधातुरपि खशादि'रिति मिश्रोक्तं तु न युक्तं, भाष्यस्वारस्येनादेशस्यैव यत्वमिति लाभात् । निपातनादिति । सौत्रप्रयोगस्यादेशोनोपपत्तेश्चिन्त्यमेतत् । णत्वेति । 'कृत्यच' इति प्राप्तिः । इयं—'जिह्वामूलीयत्व'मित्येषा । 'नृचक्षा' इति प्रयोगे रक्षोविशेषणत्वे नपुंसकत्वेन दीर्घानुपपत्तिरत आह—छान्दस इति । नन्वत्र विचक्षणशब्दादन्येषामुपयोगं न पश्याम इत्यत आह–सर्वप्रकरणेति । अनपेक्ष्येति । तेषां सूत्राणामाधुनिकत्वादनपेक्षेति भावः ॥५४॥

† कुप्वोः ≍क≍पौ च ८. ३. ३७.

१–अजति गृहान्निःसरति यत्र तदजिरम् । 'आँगन' इति भाषायाम् । 'अङ्गणं चत्वराजिरे' इत्यमरः । 'अजिरं प्राङ्गणे वाते विषये दर्दुरे तनौ' इति मेदिनी ।

* अदो जग्धिर्ल्यप्ति किति; हनो वध लिङि; इणो गा लुङि; चक्षिङः ख्याञ्; अजेर्व्यघञपोः २. ४. ३६; ४२; ४५; ५४; ५६.

# अजेर्व्यघञपोः ॥ २ । ४ । ५६ ॥

## घञपोः प्रतिषेधे क्यप उपसङ्ख्यानम् ॥ १ ॥

घञपोः प्रतिषेधे क्यप उपसंख्यानं कर्तव्यम् । इहापि यथा स्यात्—समजनं समज्येति* ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । अपीत्येव भविष्यति । कथम् ? अपीति नेदं प्रत्ययग्रहणम् । किं तर्हि ? प्रत्याहारग्रहणम् । क्व सन्निविष्टानां प्रत्याहारः ? अपोऽकारात्प्रभृत्याक्यपः पकारात्[†] । यदि प्रत्याहारग्रहणं संवीतिर्न सिध्यति[‡] ।

एवं तर्हि नार्थ उपसंख्यानेन नापि घञपोः प्रतिषेधेन । इदमस्ति 'चक्षिङः ख्याञ्' 'वा लिटि' [ २. ४. ५४; ५५ ] इति । ततो 'वक्ष्यामि[1]—अजेर्वी भवति वा व्यवस्थितविभाषा चेति । तेनेह च भविष्यति प्रवेता प्रवेतुम् प्रवीतो रथः संवीतिरिति । इह च न भविष्यति समाजः उदाजः समजः उदजः समजनम् उदजनम् समज्येति । तत्रायमप्यर्थ इदमपि सिद्धं भवति प्राजितेति । किं च भो इष्यत एतद्रूपम् ? बाढमिष्यते । एवं हि कश्चिद्वैयाकरण आह—कोऽस्य रथस्य प्रवेतेति । सूत आह—आयुष्मन्नहं[2] प्राजितेति । वैयाकरण आह—'अपशब्द' इति । सूत आह—प्राप्तिज्ञो देवानांप्रियो न त्विष्टिज्ञ

प्र०- अजेर्व्य । इदमपीति । वलादावार्धधातुके विकल्पः सिध्यतीति भावः । सूत आहेति । प्रयोगदर्शनेन विकल्पं द्रढयति । प्राप्तिज्ञ इति । सौत्रीमेव प्राप्तिं भवाञ्जानाति न त्वाचार्याणामिष्टिमित्यर्थः । देवानांप्रिय इति । देवशब्दो मूर्खवाची । मूर्खाणां च प्रिया मूर्खा एवं भवन्ति । अथवा सुखासक्ततया शास्त्रेऽनभियोगोऽनेन प्रतिपाद्यते ।

उ०- अजेर्व्य । क्यप उपसंख्यानमिति—भाष्ये । अधिकरणस्य शेषत्वविवक्षायां षष्ठी । वलादाविति । यद्यपि भाष्ये तृच्येव विकल्पो लभ्यते, तथापि 'पादस्य पदाज्याती'ति निर्देशेन 'इह च न भविष्यति समाज' इत्यपि भाष्यस्योपलक्षणताया आवश्यकत्वेनेदमपि तथैव, वृत्त्यादिप्रामाण्यादिति भावः । वर्तमाने क्त इति । तेन 'रथं सूत' इति न भवति । न

* "अत्र जयादित्यादिभिर्विकल्पानुवृत्तिर्नैव बुद्धा, किन्तु विकल्पार्थं 'वलादावार्धधातुके विकल्प इष्यते' इति स्वकीयकल्पना कृता, सा प्रमाण्यास्ति (इत्यष्टाध्यायीभाष्ये महर्षिदयानन्दः).

† ऋदोरप् ; व्रजयजोर्भावे क्यप् ३. ३. ५७-६८. ‡ स्त्रियां क्तिन् ३. ३. ९४.

१-'वक्ष्यामि "अजेर्वी" 'अजेर्वीभावो भवति वा । व्यवस्थितविभाषा "वा" इति' पा० ।

२-'अहमस्य रथस्य प्राजितेति' पा० ।

इष्यत एतद्रूप'मिति । वैयाकरण आह—'आहो खल्वनेन दुरुतेन बाध्यामह इति । सूत आह—न खलु वेञः सूतः सुवतेरेव सूतः । यदि सूवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम् ।

न तर्हीदानीमिदं 'वा यौ' [ २. ४. ५७ ] इति वक्तव्यम् । वक्तव्यं च । किं प्रयोजनम् ? नेयं विभाषा । किं तर्हि ? 'आदेशोऽयं विधीयते । 'वा' इत्ययमादेशो भवत्यजेर्यौ परतः—वायुरिति ॥५६॥

## ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥ २ । ४ । ५८ ॥

### अणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसङ्ख्यानम् ॥ १ ॥

अणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसंख्यानं कर्तव्यम् । बौधिः पिता, बौधिः पुत्रः । औदुम्बरिः पिता, औदुम्बरिः पुत्रः* ।

अपर आह-['[3]अणिञोर्लुकि क्षत्रियगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् ।']

प्र०-पराजितत्वादमर्षेणाह—'अहो नु खल्विति । वेञ उत इति यद्रूपं सास्य संज्ञा । पूजायां च सुशब्द इति मत्वा कुत्साप्रतिपादनायाह—दुरुतेनेति । सूत आहेति । 'षू प्रेरणे' इत्यस्माद्बहुलवचनात्कर्तरि गत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने क्तः । रथवाहस्य रथप्रेरणात्सूत इति संज्ञा । वायुरिति । 'यजिमनीति'बाहुलकाद्युचि रूपम् ॥५६॥

ण्यक्षत्रिया । तद्राजादिति । 'ते तद्राजा' इति तद्राजसंज्ञकप्रत्ययान्तात्परस्येत्यर्थः । बौधिरिति । बुधोदुम्बरशब्दाभ्यां साल्वावयवलक्षण इञ् । तदन्ताद्यूनि 'यञिञोश्चे'ति

उ०-तर्हीदानीं वायाविति वक्तव्यमिति । व्यवस्थितविभाषयैव यौ वीभावविकल्पस्य सिद्धत्वादिति भावः । वायुरिति । यदि वातेरुणि वायुः प्रकारान्तरेण सिध्यति, तर्हि घञपयग्रहणवदिदमपि व्यर्थमिति कश्चित् ॥५६॥

ण्यक्षत्रियार्ष । अत्रत्यवार्तिकानि अनणिञर्थानीत्याहुः । पैलादिदर्शनादिमानि सिद्धा-

१-'अहो नु' पा० ।

२-प्राचीनवृत्त्यनुरोधाज्जयादित्यस्त्वाह—'पूर्वेण नित्ये प्राप्ते विकल्प उच्यते' इति ।

"जयादित्येनास्य सूत्रस्यायमर्थः कृतः—यौ ल्युटि प्रत्ययेऽज—धातोर्विकल्पेन 'वी'इत्यादेशो भवति । तत्र रूपद्वयं साधितम् । तदिदं पूर्वसूत्रे विकल्पानुवर्तनेनैव सिद्धं, पुनर्महाभाष्यविरुद्धत्वाज्जयादित्यस्य व्याख्यानमत्यन्तमसङ्गतम् ।" (इत्यष्टाध्यायीभाष्ये २. ४. ५७ महर्षिदयानन्दः)

३-कोष्ठकबद्धः पाठो न सार्वत्रिकः ।

* कम्बोजाल्लुक्; यञिञोश्च ४. १. १७३; १०१.

अणिञोर्लुकि क्षत्रियगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानं कर्तव्यमिति । जाबालिः पिता, जाबालिः पुत्रः† ।

अपर आह-['अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम्' ।] अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योसंख्यानं कर्तव्यम् । किं प्रयोजनम् ? इदमपि सिद्धं भवति-भाण्डिजङ्घिः पिता, भाण्डिजङ्घिः पुत्रः । कार्णखरकिः पिता, कार्णखरकिः पुत्रः† ॥५८॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य
चतुर्थे पादे प्रथममाह्निकम् ।

## तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ २ । ४ । ६२ ॥

### तद्राजादीनां लुकि समासबहुत्वे प्रतिषेधः ॥ १ ॥

तद्राजादीनां लुकि समासबहुत्वे प्रतिषेधो वक्तव्यः । प्रिय आङ्ग एषां त इमे प्रियाङ्गाः । प्रियो वाङ्ग एषां त इमे प्रियवाङ्गा इति ।

प्र०-फक् । तस्य लुक् । जाबालिरिति । जबालस्यापत्यम् । 'अत इञ्' । स च तद्राजो न भवतीति द्वितीयं वचनमारब्धम् । तेनेञन्तात्फको लुक् ।

अब्राह्मणगोत्रमात्रादिति । तेन वैश्यगोत्रादपि सिध्यति । व्यापकत्वाच्चेदमेव वचनं प्रमाणम् । भण्डिजङ्घकर्णखरकौ वैश्यौ ॥५८॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे द्वितीयस्याध्यायस्य
चतुर्थे पादे प्रथममाह्निकम् ।

तद्राज । इह 'तेनैव'ग्रहणाद् बहुशब्देन बहुवचनमुच्यत इति लक्ष्यते । संज्ञानां चैकदेशपदप्रयोगो दृश्यते । यथा भीमसेनो 'भीम' इति । अर्थग्रहणे तु 'तेनैवे'ति न

उ०-र्मीति वृत्तिः ॥५८॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्द्योते द्वितायस्याध्यायस्य
चतुर्थे पादे प्रथममाह्निकम् ।

तद्राजस्य । ननु बहुत्ववदर्थप्रतिपादकतद्राजस्यानेन लुग्विधानात् 'प्रियाङ्गा' इत्यादावस्य प्राप्तिरेव नेत्यत आह—इहेति । बहुवचनशब्दस्य प्रत्ययविशेषे संकेतिततया बहुशब्देन तत्प्रतीतिः कथमत आह—संज्ञानां चेति । 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोप' इति

† अत इञ्; यञिञोश्च ४. १. ६५; १०१ सत्यकामजाबालस्याख्यायिका छान्दोग्योपनिषदि (४.४.१) वर्तते । "जाबालो नाम वेश्यापुत्रोऽभूद् । स चाब्राह्मणः, तस्मादिञ् । तदन्तात् फको लुक् ।" (अ० भा० २. ४. ५८ दयानन्दः) । १-अयं क्वाचित्कः पाठः ।

किमुच्यते 'समासबहुत्वे प्रतिषेध' इति 'यावता 'तेनैव चेत्कृतं बहुत्व'-मित्युच्यते न चात्र तेनैव कृतं बहुत्वम्? भवति वै किंचिदाचार्याः क्रियमाणमपि चोदयन्ति। तद्वा कर्तव्यं तेनैव चेद् बहुत्वमिति, समासबहुत्वे वा प्रतिषेधो वक्तव्य इति।

**अबहुत्वे लुग्वचनम् ॥ २ ॥**

अबहुत्वे च लुग्वक्तव्यः। अतिक्रान्तोऽङ्गानत्यङ्ग इति। बहुवचने परतो यस्तद्राज इत्ये च कृत्वा चोद्यते।

---

प्र०—वक्तव्यं 'प्रियवाङ्गा' इत्यत्र बहुत्वे तद्राजस्य वृत्त्यभावाल्लुकः प्रसङ्गाभावात्। बहुवचनं तु 'पर'मिति लुक्प्रसङ्गे तन्निवृत्तये 'तेनैव'ग्रहणं कर्तव्यम्॥ 'अस्त्रिया'मिति तु प्रतिषेधो बहुवचनग्रहणेऽनुपपन्नः। 'आङ्भ्यः स्त्रिय' इत्यादौ स्त्रीप्रत्ययेन बहुवचनस्य व्यवधानाल्लुकः प्रसङ्गाभावात्। अर्थग्रहणे तु लुक्प्रसक्तोऽस्त्रियामिति निषिध्यते। तदेवं पक्षद्वयस्यापि लिङ्गदर्शनात्तद्गुणदोषनिरूपणाय विचारः क्रियते। तत्र पूर्वं प्रत्ययपक्षो विचार्यते। 'तद्राजादीना'मित्यादिशब्देन वक्ष्यमाणा लुग्भाजो गृह्यन्ते। समासबहुत्व इति। समासार्थबहुत्व इत्यर्थः। न चात्रेति। अन्यपदार्थकृतत्वादत्र बहुत्वस्य। भवति वै किंचिदिति। एतावदेकं वाक्यम्। एवंविधं किंचिद्भवतीत्यर्थः। किं तदित्याह—आचार्या इति। सूत्रे क्रियमाणमपि कुर्वन्तीत्यर्थः। बहुवचनपक्षे सर्वथा वचनेनैव दोषो निराकार्य इति प्रतिपादनमस्योपन्यासस्य फलम्।

प्रत्ययपक्षे दोषोद्भावनेनार्थग्रहणं स्थापयति—अबहुत्व इति। समासार्थस्या-

---

उ०—वचनादिति भावः। प्रत्ययग्रहणपक्षे तद्राजार्थेनैव कृतं यद्बहुत्वं तत्प्रतिपादके बहुवचने परत इत्यर्थः। तत्पदेन तद्राजपरामर्शिना तदर्थो लक्ष्यत इति बोध्यम्। अर्थग्रहणपक्षे बहुषु वर्तमानस्य तद्राजस्येत्यर्थः। प्रत्ययग्रहणपक्षस्य 'तेनैवे'ति लिङ्गमुक्त्वा अर्थग्रहणपक्षस्य लिङ्गमाह—अस्त्रियामिति। तत्र पूर्वमिति। निषेध्यत्वादिति भावः। 'प्रियवाङ्गा' इति समासस्यैकत्वादाह—समासार्थेति। तेनैव चेत्कृतं बहुत्वमिति भाष्ये। तन्मात्रार्थगतबहुत्वार्थके वचने परत इत्यर्थः। अन्येति। अन्यपदार्थश्च न तद्राजान्तमात्रार्थः, किन्तु समुदायार्थ इति भावः। एकवाक्यत्वासम्भवादाह—एतावदिति। प्रश्नरूपार्थानुपपत्तेश्चुदेः क्रियामात्रे लक्षणेत्याशयेनाह—कुर्वन्तीत्यर्थ इति। सर्वथा वचनेनैवेति। अत्र पक्षे 'तेनैवे'त्यवश्यं कार्यमिति वार्तिकतात्पर्यमित्यर्थः।

'अबहुत्वे' इत्यस्य बहुवचनपरत्वाभावे इत्यर्थं इत्याह—समासेति। सोऽबहुवचन-

---

१—'यदा' पा०।

अथ किमर्थं पुनरिदं न बहुवचन इत्येव सिद्धम् ? न सिध्यति । बहुवचन इत्युच्यते न चात्र बहुवचनं पश्यामः* । प्रत्ययलक्षणेन 'भविष्यति'† । 'न लुमता तस्मि'न्निति‡ प्रत्ययलक्षणस्य प्रतिषेधः । 'न लुमताङ्गस्य' [१.१.६३] इति वक्ष्यामि । नैवं शक्यम् । इह हि दोषः स्यात्—पञ्चभिर्गार्गीभिः क्रीतः पटः पञ्चगार्ग्यः दशगार्ग्य इति× ।

प्र०—बहुत्वाद् बहुवचनपरत्वाभावेऽपि लुग्वक्तव्यः । प्रत्ययश्चेद् बहुत्व उत्पन्न इत्यर्थः । न बहुवचन इत्येवेति । शसमेवाश्रित्यान्तरङ्गत्वात्पूर्वं तद्राजस्य लुक् करिष्यत इति भावः ॥ न चात्रेति । अन्तरङ्गानपि विधीन् 'सुपो धातुप्रातिपदिकयो'रित्ययं लुक् 'प्रत्ययोत्तरपदयोश्चे'ति ज्ञापकादस्यैवात्र संभवाद् बाधत इति भावः । न लुमताङ्गस्येति वक्ष्यामीति । यथास्थितमेव न्यासमेवं व्याख्यास्यामि—'लुमता लुप्ते यः प्रत्ययस्तस्मिन् यदङ्गं तस्य यत्कार्यमङ्गाधिकारविहितमन्यद्वा तन्न भवति' । लुक् च प्रत्ययस्य कार्यम्, न समस्तस्याङ्गस्येति प्रत्ययलक्षणेन भविष्यति । पञ्चभिरिति । क्रीतार्थस्यार्हीयस्य ठकोऽध्यर्धपूर्वेति लुक् । 'लुक्तद्धितलुकी'ति स्त्रीप्रत्ययस्य लुक् । तत्र प्रत्ययलक्षणेन भिसमाश्रित्यात्र पक्षे 'यञञोश्चे'ति लुक् प्राप्नोति । न हि यञ्लुक् अङ्गस्य कार्यमिति पञ्चगर्ग इति स्यात् । पञ्चगार्ग्य इति चेष्यत इत्यर्थः । 'अस्त्रिया'मिति चात्र प्रतिषेधो न भवति, अर्थान्तरे पुंसि संक्रान्तत्वाद्वृत्तिपदार्थस्येत्याहुः ।

उ०—स्वाभावादसङ्गतिमाशङ्क्याह—शसमेवेति । भाष्ये—न चात्रेति । लुका लुप्तत्वादिति भावः । अन्तरङ्गानपीति न्यायादिति तात्पर्यम् । नन्वन्तरङ्गानिति न्यायेनास्यापि लुको ग्रहणेनेदमनुपपन्नमत आह—अस्यैवात्रेति । ज्ञापकस्य विशेषापेक्षत्वादिति भावः । वस्तुतश्चिन्त्यमेतत् । 'एकहल्स्वात्संबुद्धे'रित्यादिसूत्रस्थभाष्यविरोधादिति स्पष्टं शब्देन्दुशेखरे । अनेनापि न्यायेन कार्यान्तरनिमित्तविनाशकलुक एतदपेक्षया प्राबल्यं बोध्यते, तत एव ज्ञापकादिति नायं लुक्—सुब्लुगपेक्षया बलवानिति तु भाष्याशयः । यथास्थितमेवेति । एवं चानङ्गाधिकारविहितकार्ये प्रतिषेधाय वार्तिककृता न्यासान्तरमारब्धम्, तस्यार्थस्य सूत्रेणैव लाभे वार्तिकं न कार्यम् । सूत्रस्य च न प्राप्तिः, अङ्गोद्देश्यककार्याभावादिति भावः । न समस्तस्येति । न संपूर्णस्येत्यर्थः । इति चेष्यत इति । तस्मादङ्गस्य तदवयवस्य वा कार्ये निषेध इत्यर्थः । अस्त्रियामिति चात्रेति । एतदर्थमेवास्त्रियामिति करणे तु गौरवमिति भावः । न च स्त्रीलुकः स्थानिवत्त्वाद् बहुवचनपरत्वाभावः । लुकि तन्निषेधाभावात् । गार्ग्यश्चेति । युगपद-

* सुपो धातुप्रातिपदिकयोः २. ४. ७१. १—कश्चिन्न ।

† प्रत्ययलोपे प्रत्ययलक्षणम् १. १. ६२.

‡ न लुमता तस्मिन्निति चेद्धनिण्डिादेशास्तलोपे १. १. ६३ वा० १३ पृ० ५०१.

× सुपो धातुप्रातिपदिकयोः २. ४. ७१; अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ५. १. २८; लुक् तद्धितलुकि १. २. ४९; (यञञोश्च २. ४ ६४)

## द्वन्द्वेऽबहुषु लुग्वचनम् ॥ ३ ॥

द्वन्द्वेऽबहुषु लुग्वक्तव्यः । गर्गवत्सवाजा इति ॥ इह च लुग्वक्तव्यः–गर्गेभ्य आगतं गर्गरूप्यं गर्गमयमिति ॥ इह च 'अत्रय' इत्युदात्तनिवृत्तिस्वरः प्राप्नोति[†] ।

## सिद्धं तु प्रत्ययार्थबहुत्वे लुग्वचनात् ॥ ४ ॥

सिद्धमेतत् । कथम् ? प्रत्ययार्थबहुत्वे लुग्वक्तव्यः ।

यदि प्रत्ययार्थबहुत्वे लुगुच्यतेऽस्त्रियामिति वक्तव्यम् । इह मा भूत्— आङ्ग्यः स्त्रियः, वाङ्ग्यः स्त्रिय इति । यस्य पुनर्बहुवचने परतो लुगुच्यते तस्यैकारेण व्यवहितत्वान्न भविष्यति । यस्यापि बहुवचने परतो लुगुच्यते तेनाप्यस्त्रियामिति वक्तव्यम् । आम्बष्ठ्याः स्त्रियः, सौवीर्याः स्त्रिय इत्येवमर्थम्[‡] । अत्रापि चापा व्यवधानम् । एकादेशे कृते नास्ति व्यवधानम् ।

---

प्र०– 'द्वन्द्वेऽबहुष्वि'त्यत्राकारप्रश्लेषः । गार्ग्यश्च वात्स्यश्च वाज्यश्चेति द्वन्द्वः । अत्रैकैकस्य बहुवचनपरत्वं नास्ति, यच्च समासाद् बहुवचनमुत्पद्यते तदन्त्यादेव परं न सर्वेभ्यः । प्रत्ययनिर्देशपक्षे 'तस्मिन्निति निर्दिष्ट' इति परिभाषोपस्थानाद् व्यवहितस्य लुकोऽप्रसङ्गः । गर्गरूप्यमिति । सुबन्तेन केवलं वाक्यं क्रियते । प्रत्ययस्तु प्रातिपदिकाधिकारात्प्रातिपदिकादेवोत्पद्यत इति बहुवचनपरत्वाभावाल्लुक् न प्राप्नोति ॥ अत्रय इति । अत्रेरपत्यानि । 'इतश्चानिञ' इति ढक् । 'कित' इत्यन्तोदात्तत्वम् । तत्र यदि जसि परतो लुक् क्रियते तदा 'अनुदात्तस्य च यत्रोदात्तलोप' इति जस उदात्तत्वप्रसङ्गः । अर्थनिर्देशाश्रयेण परिहारमाह—सिद्धं त्विति । लुग्वचनात् । लुग्व्याख्यानादित्यर्थः । आम्बष्ठ्या इति । आम्बष्ठस्यापत्यानि बह्व्यः स्त्रिय इति 'वृद्धेत्कोसलाजादाञ्ञ्य'ङिति ञ्यङ् । यङश्चाबिति चाप् । एकादेशः । स चान्तवद्भावान्न व्यव-

---

उ०–धिकरणवचनताया दूषितत्वादेकवचनान्तेन विग्रहः । अबहुष्विति भाष्यस्य न विद्यते बहुवचनं परं येभ्यस्तेषु वर्तिपदेष्वित्यर्थः । सुबन्तात्तद्धिते बहुवचनपरत्वसत्त्वादाह—प्रातिपदिकादेवेति । न लुमतेति निषेधात्प्रत्ययलक्षणाभावेन लुकि न सिध्येदित्येव भाष्याशय इत्यपि कश्चित् । तत्तु 'सामर्थ्यं च सुबन्तेने'त्युत्तरभाष्यविरुद्धम् । जसि परत इति । उदात्तलोपशब्देन चोदात्तघटितलोप उच्यते इति भावः ।

अपूर्ववचनत्वशङ्कां वारयति—व्याख्यानादिति । अम्बष्ठस्येति । क्षत्रियनामेदम्, अतो 'वा नामधेयस्ये'ति वृद्धत्वम् । 'आम्बष्ठस्ये'ति पाठे तु सम्यगेव । अचः परस्मिन्नि-

---

† इतश्चानिञः ४. १. १२२; कितः ६. १ १६५; अत्रिभृगु···गोतमाङ्गिरोभ्यश्च २. ४. ६५; (अनुदात्तस्य च यत्रोदात्तलोपः ६. १. १६१).

‡ वृद्धेत्कोसलाजादाञ्ञ्यङ्; ते तद्राजाः ४. १. १७१; ७४.

'एकादेशः पूर्वविधौ स्थानिवद्भवती'ति+ स्थानिवद्भावाद् व्यवधानमेव ।

**द्वन्द्वेऽबहुषु लुग्वचनम् ॥ ५ ॥**

द्वन्द्वेऽबहुषु लुग्वक्तव्यः । गर्गवत्सवाजा इति ।

**गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् ॥६॥**

गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्यः । बिदानामपत्यं माणवको बैदः । बैदौ* ।

किमर्थमिदं नाचीत्येवालुक्सिद्धः† ? 'अची'त्युच्यते न चात्राजादिं पश्यामः । प्रत्ययलक्षणेन । 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' ।

**एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि ॥ ७ ॥**

प्र०-धायक इति लुक्प्रसङ्गे प्रत्ययपक्षवादिनाप्यस्त्रियामिति प्रतिषेधो वक्तव्य इत्यर्थः । एकादेश इति । 'अचः परस्मिन्नि'ति स्थानिवद्भावः । तदेवमर्थनिर्देशपक्ष एवास्त्रियामिति वक्तव्यम् ॥ द्वन्द्व इति । एकस्मिन्नेवार्थे प्रत्ययोत्पत्तौ सत्यां बहुत्वाभावात् । प्रत्ययपक्षे त्वन्त्यस्य तावत्सिध्यतीति मन्यते ।

अर्थपक्ष एव दोषमाह—गोत्रस्येति । अपत्यप्रत्ययो लोपभाग्यदा बहुष्वर्थेषूत्पन्नो युवापत्यविवक्षायामर्थान्तरे द्वित्वविशिष्टे एकत्वविशिष्टे वा संक्रामति तदा बहुषु तस्योत्पन्नत्वाल्लुक्प्राप्तावलुग्वक्तव्यः । प्रत्ययपक्षे तु बहुवचनपरत्वाभावाल्लुक् न भवति । द्व्येकयोरिति । द्व्येकशब्दौ द्वित्वैकत्ववृत्ती उपात्तौ । अन्यथा बहुवचनं स्यात् । बैद इति । बिदस्यापत्यानि बहूनि—इत्यञ्प्रत्ययः । तदन्ताद्यून्यत इञितीञ् । तस्य 'ण्यक्षत्रियार्षञित' इति लुक् । नाचीत्येवेति । 'गोत्रेऽलुगची'त्यनेन ।

उ०-तीति । यद्यप्यन्तवद्भावेन चाबन्तस्यायं विधिरिति न पूर्वविधित्वं, तथापि पूर्वविधावित्यस्य पूर्वोद्देश्यकविधावित्यर्थादस्त्येव । यद्यपि 'य'शब्दोऽपि स्थान्येव, स कथं ततः पूर्वस्तथापि यत्किञ्चित्स्थानिभूतपूर्वत्वमस्त्येव । स्थानिभूतादचः पूर्वोऽस्थानिभूत एव गृह्यते इत्यत्र न मानं, स्थानिनि पृथग्भूते सत्यभवतो लुक एकादेशेऽप्यभावातिदेशो बोध्यः । एतेन चाबन्तस्य कथं चापा व्यवधानमित्यपास्तम् । तदेवमिति । 'अस्त्रिया'मित्येवार्थनिर्देशपक्षस्य ज्ञापकमिति भावः ॥ नन्वयं दोषो बहुवचनग्रहणेऽपीति कथं परं प्रत्ययस्योपन्यासोऽत आह—अन्त्यस्य तावदिति । एवं चार्थपक्षे त्रयाणामपि लुग्वाच्यः, प्रत्ययपक्षे त्वनन्त्ययोरेवेति भावः ।

बहुष्वर्थेषूत्पन्न इति । यदा विशेष्यांशेऽपि न संख्याभानं तदैकशेषेण बहुष्वर्थेषु स्थित इत्यर्थो बोध्यः । तस्य—गोत्रप्रत्ययस्य । बहुवचनपरत्वाभावादिति । प्रत्ययलक्षणं तु 'न

+ एकादेशस्योपसंख्यानम् १. १. ५७ वा० ११ पृ० ४४०.

* अनृष्यानन्तर्ये बिदादिभ्योऽञ्; अत इञ् ४. १. १०४; ६५; ण्यक्षत्रियार्षञितो यूनि लुगणिञोः, (यञञोश्च) २. ४. ५८; (६४). † गोत्रेऽलुगचि ४. १. ८९.

एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि वक्तव्यः। बैदस्यापत्यं बहवो माणवका बिदाः। बैदयोर्वा बिदाः। अञो बहुषु यञो बहुष्विति उच्यमानो† लुग् न प्राप्नोति। मा भूदेवम्। 'अञन्तं यद्बहुषु यञन्तं यद्बहुष्वि'त्येवं भविष्यति। नैवं शक्यम्। इह हि दोषः स्यात्—काश्यपप्रति-

---

प्र०— अञन्तमिति। प्रत्ययग्रहणपरिभाषया तदन्तत्वे स्थिते बहुष्विति विशेषणं तदन्तस्यैवेति मन्यते। काश्यपा इति। कश्यपस्यापत्यं गोत्रमिति विदादित्वादञ्। ततः काश्यप इव तत्प्रतिकृतय इत्यत्रार्थे 'इवे प्रतिकृता'विति कन्प्रत्ययः। तस्य 'जीविकार्थे चापण्ये' इति वा 'देवपथादिषु' 'अर्चासु पूजनार्थासु चित्रकर्मध्वजेष्वि'ति पाठाद्वा लुप्। एतदञन्तं बहुषु वर्तत इति लुक्प्रसङ्गः। अञ्प्रत्ययस्त्वेकस्मिन्नेवापत्य उत्पन्न इत्यञो बहुष्विति विज्ञायमाने नास्ति लुक्प्राप्तिः। तस्मात्तदन्तविधिर्नाभ्युपगन्तव्यः। प्रत्ययादर्शनस्यैव लुगादिसंज्ञाविधानात्प्रत्यया एव कार्यभाक्त्वाद् बहुष्वित्यनेन विशेष्यन्ते।

---

उ०—लुमते'ति निषिद्धमिति भावः। नन्वस्त्रियामित्यस्य यथार्थान्तरानुपसंक्रान्तस्त्रीविषयता तथा बहुष्वित्यस्यार्थान्तरानुपसंक्रान्तबहुत्वविषयकत्वान्नात्र दोषः, द्व्येकयोस्तस्योपसंक्रान्तत्वादिति चेन्न; बहुष्विति बहुवचनेन सर्वस्यापि बहुत्वस्य ग्रहादित्याशयः। अत एवात्यङ्ग इत्यादिसिद्धिः। इदमेव ध्वनयितुं सूत्रकृतास्त्रियामिति विभिन्नविभक्तिनिर्देशः कृतः। प्रकृतसूत्रे वार्तिककरणादेतदुदाहरणाविषयीभूतमङ्गानामपत्यं माणवक 'आङ्ग' इत्यप्युदाहरणं बोध्यम्। 'गोत्रेऽलुगची'ति समाधानमपि साधारणमेव, एतत्सूत्रविहितस्यापि तेनालुग्विधानात्। यत्तु तत्र 'लक्षणप्रतिपदोक्त'परिभाषया 'यस्कादिभ्यो गोत्र' इत्येतत्प्रकरणस्थस्यैवालुगिति, अस्य नालुगिति तन्न, अस्यापि तत्प्रकरणस्थत्वात्। अत एव तत्र बहुष्वित्यादीनामनुवृत्तेः श्रोतृवक्तृबुद्धिस्थताया एव प्रकरणत्वात्। अत एव 'गोत्रेऽलुगची'ति सूत्रे 'भूम्नि प्राप्तस्य लुकोऽलु'गिति भगवता वक्ष्यते। उत्तरसूत्रोदाहरणं तु 'उत्तरसूत्रविषयेऽप्ययं विचारस्तुल्य' इति बोधयितुम्। अत एवोपक्रमे 'तद्राजादीना'मित्युक्तम्। भाष्ये—न चात्राजादिमिति। 'यस्मिन्विधि'रिति परिभाषालब्धमेतत्। वर्णाश्रये इति। 'अजादिप्राग्दीव्यतीयविषये' इत्यर्थेऽपि लुका विषयस्यापहाराद्दोष एवेति बोध्यम्। भाव्युच्चारणमेव हि विषयः।

अतिव्याप्तिमुक्त्वा तत्रैव पक्षेऽव्याप्तिमाह भाष्ये—एकेति। बहुषु लोपी यस्तद्धितस्तदन्तप्रकृतिकैकवचनाद्यन्तस्य युवबहुत्वविषयकप्रत्ययविषये प्रकृतित्वेन प्रवृत्तौ सत्यां तदवयवस्य तद्धितस्य लुग्वक्तव्य इत्यर्थः। इति पाठाद्वेति। अयं चाभियुक्तानां पाठो न त्वेतावता इदमार्षमिति बोध्यम्। 'अञन्तं यद् बहुष्वि'त्यर्थे न्यायविरोधमप्याह—प्रत्ययादर्शनस्यैवेति।

---

† यञञोश्च २. ४. ६४.

कृतयः काश्यपा इति* ।

ततोऽयमाह यस्य प्रत्ययार्थबहुत्वे लुक् । 'द्वन्द्वेऽबहुषु लुग्वचन'मित्यस्य परिहारः—

**न वा सर्वेषां द्वन्द्वे बह्वर्थत्वात् ॥ ८ ॥**

न वैष दोषः । किं कारणम् ? सर्वेषां द्वन्द्वे बह्वर्थत्वात् । सर्वाणि द्वन्द्वे बह्वर्थानि । कथम् ? युगपदधिकरणविवक्षायां द्वन्द्वो भवति ।

ततोऽयमाह यस्य बहुवचने परतो लुक् । यदि सर्वाणि द्वन्द्वे बह्वर्थान्यहमपीदमचोद्यं चोद्ये 'द्वन्द्वेऽबहुषु लुग्वचन'मिति । ममापि ह्यत्र सर्वत्र बहुवचनं परं भवति । लुकि कृते न प्राप्नोति । प्रत्ययलक्षणेन । 'न लुमता तस्मि'न्निति प्रत्ययलक्षणस्य प्रतिषेधः । 'न लुमताङ्गस्ये'ति वक्ष्यामि । ननु चोक्तं 'नैवं

प्र०— इदानीं पक्षद्वयेऽपि क्रमेण परिहार उच्यते—ततोऽयमिमि ।

न वेति । एकैकं प्रत्ययान्तमनेकार्थाभिधायीति लुक्सिध्यतीत्यर्थः । यश्च तदन्तपक्षे दोषः 'काश्यपा' इति, स उत्तरत्र परिहरिष्यते ।

अचोद्यं चोद्य इति । अचोदनार्हं वस्तु त्वयाहं चोद्य इत्यर्थः । चुदिः पृच्छत्यर्थत्वाद् दुहियाचीत्यत्रार्थग्रहणाद् द्विकर्मकः । लुकि कृत इति । अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति भावः ।

उ०— ततोऽयमाहेति । 'प्रत्ययार्थबहुत्वे लु'गिति यस्य मतं सोऽयं स्वपक्षदोषकथनोत्तरमाहेत्यन्वयः । किमाह ? 'द्वन्द्वे बहुषु लुग्वचन'मित्यस्य परिहारोऽयमित्याहेत्यर्थः । पदानां बह्वर्थत्वेऽपि प्रत्ययस्य बह्वर्थत्वाभावादाह—प्रत्ययान्तमिति । स उत्तरत्रेति । ननु गोत्रग्रहणानुवृत्त्या तत्र दोषं परिहरिष्यति । एवमप्याङ्गस्य प्रतिकृतय आङ्गा इत्यत्र तदन्तग्रहणपक्षे तद्राजस्येति लुक्प्राप्नोति । न ह्यत्रापि गोत्र इति वर्तत इति चेन्न, अत्रापि सूत्रे गोत्र इत्यपकर्षणेनादोषात् । तद्राजस्यापत्यत्वादारोपितगोत्रत्वमस्त्येव । यत्तु हरदत्तेनैतदर्थं 'तेनैवेत्यवश्यं कर्तव्यमर्थग्रहणपक्षेऽपी'त्युक्तं तदेतेन परास्तं, भाष्यविरुद्धं च । वस्तुतः 'सर्वाणि द्वन्द्वे बह्वर्थानी'ति भाष्यस्यायमर्थः—आश्रयतया बहुत्ववदर्थप्रतिपादकानीति । द्वन्द्वे हि अन्यसंख्याबोधकविभक्त्यभावेन समुदायोत्तरविभक्त्या ते तेऽर्था वस्तुतो बहुत्ववन्त एवोपस्थाप्यन्ते । पर्याप्त्या बहुत्ववदर्थप्रतिपादकत्वनिवेशो न किंचिन्मानम् । 'युगपदधिकरणविवक्षाया'मित्यस्यापि-युगपद् द्रव्याणामेकत्रान्वयविवक्षायां द्वन्द्व इत्येवार्थः । युगपदधिकरणवचनतापक्षस्तु द्वन्द्वसूत्रे दूषित एवेति न तमादायास्य ग्रन्थस्य व्याख्योचिता ।

अपरस्तु युगपदधिकरणवचनतापक्षोऽनेनावलम्बित इति मत्वा स्वपक्षेऽपि दोषाभाव इत्याह भाष्ये—ततोऽयमाह यस्य बहुवचने इति । अर्थवादिकृताव्याप्तिपरिहारानन्तरमित्यर्थः । चुदिः पृच्छ्यर्थत्वादिति । व्यापारद्वयार्थत्वेन कर्तुरित्येव द्विकर्मत्वं सिद्धमित्यर्थं प्रयासो वृथेति वस्तुतत्त्वम् । न लुमताङ्गस्येति । तथा चाङ्गोद्देश्यककार्ये एव निषेध इति नात्र

* अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४ १ १०४; इवे प्रतिकृतौ; जीविकार्थे चापण्ये ५.३ ९६;९९.

शक्यमिह हि दोषः स्यात् पञ्चभिर्गार्गीभि क्रीतः पटः पञ्चगार्ग्यः दशगार्ग्यः इति। इष्टमेवैतत्सङ्गृहीतम्। पञ्चगर्गः दशगर्ग इत्येव भवितव्यम्।

तथेदमपरमचोद्यं चोद्यं गर्गरूप्यम् गर्गमयम्। अत्रापि बहुवचन इत्येव सिद्धम्। कथम्? समर्थात्तद्धित उत्पद्यते सामर्थ्यं च सुबन्तेन।

ततोऽयमाह यस्य प्रत्ययार्थबहुत्वे लुक्। यदि समर्थात्तद्धित उत्पद्यतेऽहमपीदमचोद्यं चोद्ये 'गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलु'गिति। कथम्? यस्यापि बहुवचने परतो लुक् ते नाप्यत्रालुग्वक्तव्यः। तस्यापि ह्यत्र बहुवचनं परं भवति।

न वक्तव्यः। अचीत्येवालुक् सिद्धः*। अचीत्युच्यते न चात्राजादिं पश्यामः। प्रत्ययलक्षणेन। ननु चोक्तं 'वर्णाश्रये नास्ति प्रत्ययलक्षण'मिति। यदि वा कानिचिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणेन भवन्ति तथेदमपि भविष्यति।

---

प्र०- पञ्चगर्ग इति। प्रत्ययलक्षणेन बहुवचनपरत्वाश्रयो लुक्प्रवर्तेत इत्यर्थः। समर्थादिति। 'समर्थानां प्रथमाद्वे'त्यधिकारादिति भावः। सामर्थ्यं च सुबन्तेनेति। सुबन्तेन द्वितीयस्य पदस्य संबन्धवत्त्वं पदस्यैव प्रयोगार्हत्वात्। प्रातिपदिकाधिकारस्तु वृद्धादिविशेषणार्थः॥ अहमिति। यो ह्युभयोर्दोषो न तमेकश्चोद्यः। तस्यापि ह्यत्रेति। प्रत्ययलक्षणेन। अचीत्येवेति। अयं च द्वयोरपि साधारणः परिहारः। यदि वेति। यथैवेत्यर्थः। यथातृणेडितीमागमः। अयं भावः—यत्कार्यं वर्णरूपाश्रयं न प्रत्ययत्वाश्रयं तत्प्रत्ययलक्षणेन न भवति। यथा गोहितमित्यादाववादयः। इमागमस्तु हलादिपित्सार्वधातुकाश्रयत्वात्प्रत्ययाश्रय इति प्रवर्तते। एवं 'गोत्रेऽलुगची'त्यजादिप्रत्ययाश्रयत्वादलुक्प्रत्ययलक्षणेन प्रवर्तते।

---

उ०—निषेधप्रवृत्तिरिति भावः। 'न लुमता तस्मिन्नि'ति वार्तिकन्यासेऽपि प्रत्ययाक्षिप्तप्रकृत्युद्देश्यककार्ये एव निषेधो न तु तदवयवोद्देश्यक इति तात्पर्यम्। विषयसप्तमीपक्षेऽपि प्रत्ययलक्षणप्रवृत्तौ बाधकाभाव इति न दोषः। एवं चात्यङ्ग इत्यपि सिद्धम्। अत्रेदं बोध्यं—युगपदधिकरणवचनताया दूषितत्वात् प्रत्ययपक्षेऽयं दोषः स्थित एवेति।

भाष्ये—पञ्चगर्ग इति। 'अस्त्रिया'मिति निषेधस्त्वर्थान्तरानुपसंक्रान्तस्त्रीविषय इत्युक्तम्। सुबन्तेनेति। तस्य लुक्यप्युक्तन्यायेन प्रत्ययलक्षणसत्त्वाद् बहुवचनपरत्वेन लुक्सिद्ध्या न दोष इति भावः।

---

* गोत्रेऽलुगचि ४. १. ८९.

अथवाविशेषेणालुकमुक्त्वा 'हलि ने'ति वक्ष्यामि ।

यद्यविशेषेणालुकमुक्त्वा 'हलि ने'त्युच्यते बिदानामपत्यं बहवो माणवका बिदाः अत्राप्यलुक् प्राप्नोति । अस्तु । पुनरस्य युवबहुत्वे वर्तमानस्य लुग्भविष्यति* । पुनरलुक् कस्मान्न भवति ? समर्थानां प्रथमस्य गोत्रप्रत्ययान्तस्यालुगुच्यते† न चैतत्समर्थानां प्रथमं गोत्रप्रत्ययान्तम् । किं तर्हि ? द्वितीयमर्थमुपसंक्रान्तम् ॥ अवश्यं चैतदेवं विज्ञेयम् अत्रिभरद्वाजिका वसिष्ठकश्यपिका

प्र०— हलि नेति । यथा गर्गरूप्यमिति । पुनरस्येति । अपत्याधिकारादन्यत्र लौकिकस्यापत्यमात्रस्य गोत्रस्य ग्रहणमिति युवबहुत्वे 'यञञोश्चे'ति लुग्भविष्यतीत्यर्थः ।

पुनरिति । लुक्शास्त्रवदलुक्शास्त्रस्यापि प्रवृत्तेरव्याघातादिति भावः । समर्थानामिति । प्रतियोगं 'समर्थानां प्रथमा'दित्यस्यानुवृत्तिः । तत्रायमर्थः 'समर्थानां प्रथमस्य गोत्रप्रत्ययस्यालुग्भवती'ति । प्राथमकल्पिके च प्रत्ययार्थे वर्तमानस्य तस्य प्राथम्यम् । यथा 'गार्गीया' इति । अत्र युवप्रत्ययस्य लुकि कृते युवलक्षणं द्वितीयमर्थमुपसंक्रान्तोऽञन्तः शब्द इति प्राथम्याभावः । अत्रिभरद्वाजिकेति । अत्रेरपत्यानीति 'इतश्चानिञ' इति ढक् । भरद्वाजस्यापत्यानीति बिदाद्यञ् । तत उभाभ्यां युवबहुत्वेऽत इञ् । तस्य 'ण्यक्षत्रियार्षे'ति लुक् । ढकोऽत्रिभृग्विति । अञो 'यञञोश्चे'ति भावः । ततोऽत्रिभरद्वाजानां मैथुनिकेति 'द्वन्द्वाद्'वुन्निति वुन् । तस्याकादेशः । यदि द्वितीयमर्थमुपसङ्क्रान्तस्याप्यलुक्स्यात्तदा 'गोत्रेऽलुगची'ति यथान्यासेऽप्यलुगञः प्रसज्येतेत्यर्थः । वसिष्ठकश्यपिकेति । वसिष्ठशब्दादृष्यण् । कश्यपादञ् । पूर्ववद्यून्यत इञ् । तस्य लुक् । ततो-

उ०— लुक्शास्त्रवदलुक्शास्त्रस्यापीति । तस्याप्यपत्याधिकारबहिर्भूतत्वेन लौकिकगोत्रस्यैव ग्रहणादिति भावः । ननु 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरप्रवृत्तिः । किं च 'यूनि लु'गित्युत्तरश्रोक्तेर्गोत्रेऽलुगिति सूत्रे युवातिरिक्तापत्यस्यैव गोत्रग्रहणेन ग्रहणाद्युवबहुत्वाश्रयलुकः कथमलुक् । अपि च यत्र गोत्रे वर्तमानस्य लुक्प्राप्तस्तद्व्यतिरिक्तप्राग्दीव्यतीयेऽर्थे योऽजादिस्तत्रेत्यर्थस्य शब्दमर्यादया लाभात् । न चास्यामवस्थायां यून्युपसंक्रान्तात् कश्चिद्विवक्षितोऽस्तीति चेन्न, अर्थभेदेन लक्ष्यभेदात् । गोत्रे विहितस्य प्रत्ययस्येत्यर्थाश्रयणेनाञो युवातिरिक्तगोत्रे एव विहितत्वेन द्वितीयस्याप्यभावः । अत एव न तृतीयोऽपि ॥ समर्थानां प्रथमस्येति । अत्र समर्थग्रहणानुवृत्तिप्रदर्शनस्योत्तरत्र तस्यानुवृत्तिसूचनमेव फलम् । प्रकृतोपयोगि तु 'प्रथमा'दित्येव । तस्य चानुवृत्तस्यार्थवशाद्विभक्तिविपरिणाम इति भावः । 'अवश्यं चैत'दित्यस्यार्थमाह—यथान्यासेऽपीति । ततोऽणञोरिति । 'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्चे'त्यनेनाणः, 'यञञोश्चे'त्यञ इत्यर्थः ।

* यञञोश्च २. ४. ६४. † गोत्रेऽलुगचि; समर्थानां प्रथमाद्वा ४ १. ८९; ८२.

भृग्वङ्गिरसिका कुत्सकुशिकिकेत्येवमर्थम्* ।

गर्गभार्गविकाग्रहणं† वा क्रियते‡ तन्नियमार्थं भविष्यति—'एतस्यैव द्वितीयमर्थमुपसंक्रान्तस्यालुग्भवति नान्यस्ये'ति ।

यदप्युच्यत 'एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि वक्तव्य' इति । मा भूदेवमञ्यो बहुषु यञ्यो बहुष्विति । 'अञन्तं यद् बहुषु यञन्तं यद् बहु'ष्वित्येवं भविष्यति । ननु चोक्तं 'नैवं शक्यमिह हि दोषः स्यात् काश्यपप्रतिकृतयः काश्यपा' इति । नैष दोषः । लौकिकस्य तत्र× गोत्रस्य ग्रहणं न चैतल्लौकिकं गोत्रम् ।

प्र०—ऽणञोर्लुक् । वुन् । भृग्वङ्गिरसिकेति । ऋष्यण् । यून्यत इञ्, तस्य लुक् । अणो लुक् । वुन् । कुत्सकुशिकिकेति । कुत्सादृष्यण् । कुशिकादञ् । अन्यत्पूर्ववत् ।

गर्गभार्गविकेति । गर्गशब्दाद्यञ् । तस्य लुक् । भृगुशब्दादृष्यण् तदन्ताद्यून्यत इञ् । तस्य लुक् । गर्गभृगूणां मैथुनिकेति वुन् । अत्रात्रिभृग्विति लुक् प्राप्तो गोपवनादिपाठेन प्रतिषिध्यते । यदि च द्वितीयमर्थमुपसंक्रान्तस्याप्यलुक्स्याद् गोपवनादिषु न पठ्येत, पठितस्तु यथोक्तार्थज्ञापनार्यत्यर्थः । अर्थनिर्देशवादी परिहारमाह—यदपीति । लौकिकस्येति । अपत्यस्येत्यर्थः । प्रतिकृतिबहुत्वेऽयमञन्तो वर्तते न त्वपत्यबहुत्व इत्यर्थः । न चैतदिति । यद्यपि शास्त्रीयमपि न भवति तथापि स्थितपक्षाश्रयः परिहारो वक्तव्य इत्येवमुक्तम् ।

उ०— ज्ञापनायेति । 'प्रथमा'दित्येतत्संबन्धज्ञापनायेत्यर्थः । भाष्ये—'नियमार्थ'मित्यस्य तत्संबन्धबोधनपूर्वकं नियमार्थमित्यर्थः । पूर्वं व्याख्यानात्तत्संबन्धः । इदानीं तु तत्रैवार्थे ज्ञापकमुक्तमिति भेदः । भाष्ये—अञन्तं यद् बहुष्विति । बहुष्वित्यस्याव्याप्त्यतिव्याप्तिवारकतया सारवत्त्वलाभेन तदन्तविशेषणमिति भावः ।

* इतश्चानिञः (ऋष्यन्धकवृष्णिकुरुभ्यश्च); अनृष्यानन्तर्ये बिदादिभ्योऽञ्; अत इञ् ४. १ १२२; (११४); १०४; ६५; ण्यक्षत्रियार्षञितो०; अत्रिभृगुकुत्स०; यञञोश्च २. ४. ५८; ६५; ६४; द्वन्द्वाद्वुन् वैरमैथुनिकयोः ४. ३ १२५; युवोरनाकौ ७. १. १; (गोत्रेऽलुगचि ४ १. ८९).

† गर्गादिभ्यो यञ्; ऋष्यन्धक०; अत इञ् ४. १. १०५; ११४; ९५; ण्यक्षत्रियार्षञितो० २. ४. ५८; द्वन्द्वाद्वुन् ४. ३. १२५; युवोरनाकौ ७ १. १; यञञोश्च; (अत्रिभृगु०); न गोपवनादिभ्यः २ ४ ६४; (६५); ६७.

‡ गर्गभार्गविकाग्रहणं वा नियमार्थम् ४. १. ८९ वा० ५ पृ० ५६०.

× यञञोश्च २. ४. ६४.

यस्य बहुवचने परतो लुक् समासबहुत्वे तेन[1] प्रतिषेधो वक्तव्यस्तेनैव चेत्कृतं बहुत्वमिति वा वक्तव्यम्। यस्य प्रत्ययार्थबहुत्वे लुक्तेनास्त्रियामिति वक्तव्यम्। यस्य बहुवचने परतो लुक् तस्यायमधिको दोषोऽत्रय इत्युदात्तनिवृत्तिस्वरः प्राप्नोति। तस्मात्प्रत्ययार्थबहुत्वे लुगित्येष एव पक्षो ज्यायान्।

अथेह कथं भवितव्यम्—गार्गी च वात्स्यश्च वाज्यश्चेति ? यदि तावदस्त्री विधिनाश्रीयतेऽस्त्यत्रास्त्रीति कृत्वा भवितव्यं लुका। अथ स्त्री प्रतिषेधेनाश्रीयतेऽस्त्यत्र स्त्रीति कृत्वा भवितव्यं प्रतिषेधेन। किं [2]पुनरत्रार्थसतत्त्वम् ? देवा एतज्ज्ञातुमर्हन्ति।

अथ यो लोप्यलोपिनां समासस्तत्र कथं भवितव्यम् ? उभयं हि दृश्यते—

प्र०- इदानीं पक्षद्वये दोषपरिगणनमाह—यस्येति। तस्मादिति। अर्थपक्षे लुकोऽपरनिमित्तकत्वादत्रय इत्युदात्तनिवृत्तिस्वराप्रसङ्गः। 'अस्त्रिया'मित्येतत्तु कृतमेव। गार्गी चेति। एकैकं शब्दरूपं स्त्रीपुंसात्मकसमुदायाभिधायि। तत्र पर्युदासे सर्वेषां लुका भाव्यम्, प्रसज्यप्रतिषेधे तु न भाव्यमिति संदेहात्प्रश्नः। देवा इति। दिव्यदृशो देवा इति पण्डिता इत्यर्थः। तत्र पर्युदासस्यैकवाक्यतया लाघवान्न्याय्यत्वमिति केचिदाहुः। अन्ये तु ब्रुवते—'गार्गीशब्देन स्त्रीत्वयुक्तानामर्थानामभिधानाद्यञो लुका न भाव्यम्, अन्येषां तु भाव्य'मिति।

अथेति। लोपभाजामन्येषां च यः समास इत्यर्थः। यदा लोपभाग्युगपदर्थानामभिधानाद् बह्वर्थस्तदा तदाश्रयेण किं तस्य लुक् क्रियताम्, अथ 'तेनैवे'ति वचनादलोपिसन्निधिकृतं बहुत्वमिति मा कारि लुगिति प्रश्नः। उभयं हीति। ज्ञापकद्वय-

उ०- 'तस्यायमधिको दोष' इति युगपदधिकरणवचनताया दूषितत्वाद् 'द्वन्द्वेऽबहुषु लुग्वचन'मिति दोषोऽस्त्येवेति तस्याप्युपलक्षणमिदम्। अर्थपरत्वे तु युगपदधिकरणतां विनापि तद्दोषोद्धार उक्तः। एकैकमिति। द्वन्द्वरूपसमुदायस्य स्त्रीपुंसात्मकसमुदाये शक्तौ समुदायस्य प्रत्येकानतिरेकेणैकैकस्य तदभिधायकत्वमिति भावः। यद्वा 'समुदायाभिधायी'त्यस्य समुदायगतबहुत्वाश्रयाभिधायीत्यर्थः। भाष्ये—अर्थसतत्त्वमिति। तत्त्वसतत्त्वशब्दौ पर्यायौ। पण्डितज्ञेयप्रकारं दर्शयति—तत्रेति। अन्येषां मतं तु न युक्तं न हि गार्गीशब्देन स्त्रीत्वयुक्ता बह्वयो गार्ग्य उच्यन्ते। 'गार्गी चे'त्येकवचनान्तेन भाष्ये विग्रहकरणात्समासे संख्याविशेषानवगमाच्च, युगपदधिकरणवचनतापक्षेऽपि वात्स्यादयः स्त्रीत्वयुक्ता नोच्यन्ते, अनुभवविरोधादित्याहुः। पर्युदासप्रतिषेधयोरुभयोरपि गार्गीशब्दे लुगभावोऽन्ययोर्लुगित्यर्थतत्त्वम्। द्वन्द्वार्थे उद्भूतावयवभेदे समूहे गार्ग्या उपसंक्रान्तत्वेनार्थान्तरानुपसंक्रान्तस्त्रियोऽभावादिति परे।

बह्वर्थ इति। बहुत्वाश्रयार्थ इत्यर्थः। अथ तेनैवेति वचनादिति। प्रत्ययग्रहणपक्षे

१–'तेन नेति प्रतिषेधो' पा०। २–'किं पुनरत्रार्थस्य तत्त्वम्। देवा ज्ञातुमर्हन्ति' पा०।

'शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु' [ ४.१.१०२ ] 'नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्' [ ८. ४. ६७ ] इति ॥६२॥

## यञञोश्च ॥ २ । ४ । ६४ ॥

**यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् ॥ १ ॥**

यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानं कर्तव्यम् । गार्ग्यस्य कुलं गार्ग्यकुलं गर्गकुलं वा । गार्ग्ययोः कुलं गार्ग्यकुलं गर्गकुलं वा । बैदस्य कुलं बैदकुलं बिदकुलं वा । बैदयोः कुलं बैदकुलं बिदकुलं वा ।

यञादीनामिति किमर्थम् ? आङ्गस्य कुलमाङ्गकुलम् । आङ्गयोः कुलमाङ्गकुलम्* ॥ एकद्वयोरिति किमर्थम् ? गर्गाणां कुलं गर्गकुलम् ॥ तत्पुरुष इति किमर्थम् ? गार्ग्यस्य समीपमुपगार्ग्यम्† ॥ षष्ठ्या इति किमर्थम् ? शोभनगार्ग्यः परमगार्ग्यः ॥६४॥

## बह्वच इञः प्राच्यभरतेषु ॥ २ । ४ । ६६ ॥

किमयं समुच्चयः—प्राक्षु भरतेषु चेति, आहोस्विद्भरतविशेषणं प्राग्ग्रह-

---

प्र०—सद्भावादुभयं भवतीति भावः । भृगुवत्साग्रायणेष्विति । अत्र द्वौ लोपिनौ, तृतीयस्तु नडादिफगन्तो न लोपी । द्वयोश्च लुक्कृतः । अगार्ग्यकाश्यपगालवानामिति । द्वौ लोपिनौ, गालवस्तु ऋष्यणन्तो न लोपी । न च लोपिनोर्लुक्कृतः । तदेवं ज्ञापकद्वयसद्भावात्प्रयोगद्वयोपपत्तिः ॥६२॥

यञञोश्च । यञादीनामिति । इतः प्रभृति ये प्रत्यया बहुषु लुग्भाजस्ते यञादयः, आदिशब्दस्य व्यवस्थावाचित्वात् ॥६४॥

बह्वचः । द्वन्द्वतत्पुरुषयोर्द्वयोरपि संभवाद्दोषदर्शनाच्च प्रश्नः—किमयमिति ।

---

उ०—'तेनैवे'ति वचनान्न भवति लुक्, अर्थग्रहणपक्षे तदभावात्प्राप्नोति, तथा च द्वितीयपक्षे एतदर्थमेव 'तेनैवे'ति किं कर्तव्यमिति प्रश्नाशय इति भावः । ज्ञापकद्वयेति । एवं च 'तेनैवे'ति न कार्यमिति भावः । 'तेनैवे'ति कुर्वतापि 'भृगुवत्साग्रायणेष्वि'ति प्रयोगनिर्वाहाय ज्ञापकस्यावश्याश्रयणीयत्वात् । एवं च गार्ग्यश्च वैत्रश्च मैत्रश्चेत्यादौ द्वन्द्वे यथाप्रयोगं लुगलुकोर्व्यवस्था बोध्या ॥६२॥

यञञोश्च । इतः प्रभृतीति । अतः पूर्वविषये 'आङ्गकुल'मित्येवेति भावः ॥६४॥

बह्वचः । सामान्यविशेषयोर्द्वन्द्वासंभवादाह—गोबलीति । इदमेव तयोरपि समास-

---

* तद्राजस्य बहुषु तेनैवास्त्रियाम् २. ४. ६२.

† अव्ययं विभक्तिसमीप···साकल्यान्तवचनेषु २. १. ६.

णम्—प्राञ्चो ये भरता इति । किं चातः ? यदि समुच्चयो भरतग्रहणमनर्थकं न ह्यन्यत्र भरताः सन्ति । अथ प्राग्ग्रहणं भरतविशेषणं प्राग्ग्रहणमनर्थकं न ह्यप्राञ्चो भरताः सन्ति । एवं तर्हि समुच्चयः । ननु चोक्तं 'भरतग्रहणमनर्थकं न ह्यन्यत्र भरताः सन्ती'ति । नानर्थकम् । ज्ञापकार्थम् । किं ज्ञाप्यते ? एतज्ज्ञापयत्याचार्योऽन्यत्र प्राग्ग्रहणे भरतग्रहणं न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? 'इञः प्राचाम्' [ २. ४. ६० ] भरतग्रहणं न भवति । औद्दालकिः पिता औद्दालकायनः पुत्र इति ॥६६॥

## न गोपवनादिभ्यः ॥ २ । ४ । ६७ ॥

### गोपवनादिप्रतिषेधः प्राग्हरितादिभ्यः ॥ १ ॥

गोपनादिभ्यः प्रतिषेधः प्राग्हरितादिभ्यो† द्रष्टव्यः । हारितः हारितौ । बहुषु हरिताः ॥६७॥

## उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥ २ । ४ । ६८ ॥

किमर्थमद्वन्द्व इत्युच्यते ? द्वन्द्वे मा भूदिति । नैतदस्ति प्रयोजनम् । इष्यत एव द्वन्द्वे—[1]भ्रष्ट्रककपिष्ठलाः भ्राष्ट्रकिकापिष्ठलय इति ।

अत उत्तरं पठति—

### अद्वन्द्व इति द्वन्द्वाधिकारनिवृत्त्यर्थम् ॥ १ ॥

प्र०-गोबलीवर्दवत्सामान्यविशेषवाचिनोरपि द्वन्द्वसंभवः । औद्दालकिरिति । उद्दालको नाम भरतकुलोत्पन्नः ॥६६॥

न गोपवनादिभ्यः । बिदाद्यन्तर्गणो गोपवनादिः । न च तत्समाम्नये गणे धृतकरणं पठितमिति आगणान्ताद् ग्रहणं प्राप्नोतीत्याह—गोपवनादिप्रतिषेध इति ॥६७॥

उपकादि । द्वन्द्वेऽपि लुग्विकल्पस्येष्टत्वात्प्रश्नः—किमर्थमिति । भ्राष्ट्रकिकापिष्ठलय इति । अस्मादेवोदाहरणात्तिककितवादिष्वस्य पाठोऽनार्ष इति लक्ष्यते । द्वन्द्वाधिकारनिवृत्त्यर्थमिति । अधिकारशब्देनात्र शास्त्रीयोऽधिकारः स्वरितत्वनिमित्तो न

उ०-ज्ञापकमिति भावः । वस्तुतो 'गोबलीवर्द'मित्यादौ सामान्यविशेषभाव एव नेत्येकशेषप्रकरणान्ते भाष्ये उक्तत्वेनात्र सौत्रत्वाद् द्वन्द्वः । सामान्यविशेषवाचिनोर्नैव द्वन्द्वः, 'सामान्यविशेषवाचिनोर्द्वन्द्वो नेति वक्तव्य'मिति तत्रैव भाष्योक्तेरिति बोध्यम् ॥६६॥

उपकादि । पाठोऽनार्ष इति । वृत्तिकारोक्त इत्यर्थः । आसक्तस्वरित इति । फला-

† हरितादिभ्यो ऽञः ४. १. १००. १—'भ्राष्टककपिष्ठलाः' पा० ।

'अद्वन्द्व' इत्युच्यते द्वन्द्वाधिकारनिवृत्त्यर्थम् । द्वन्द्वाधिकारो* निवर्त्यते । तस्मिन्निवृत्तेऽविशेषेण द्वन्द्वे चाद्वन्द्वे च भविष्यति ॥६९॥

# आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ २ । ४ । ७० ॥

**आगस्त्यकौण्डिन्ययोः प्रकृतिनिपातनम् ॥ १ ॥**

आगस्त्यकौण्डिन्ययोः प्रकृतिनिपातनं कर्तव्यम् । 'अगस्तिकुण्डिन'जित्येतौ प्रकृत्यादेशौ भवत इति वक्तव्यम् ॥ किं प्रयोजनम् ?

**लुक्प्रतिषेधे वृद्ध्यर्थम् ॥ २ ॥**

लुक्प्रतिषेधे† वृद्धिर्यथा स्यात् ।

**प्रत्ययान्तनिपातने हि वृद्ध्यभावः ॥ ३ ॥**

प्रत्ययान्तनिपातने हि सति वृद्ध्यभावः स्यात् । आगस्तीयाः‡ कौण्डिनाः× इति ।

यदि प्रकृतिनिपातनं क्रियते केनेदानीं प्रत्ययस्य लोपो भविष्यति ?

प्र०—गृह्यते, न हि पूर्वसूत्रोपात्तो द्वन्द्वशब्द आसक्तस्वरितः, किं तर्हि, लौकिकोऽधिकारोपेक्षालक्षणो निविवर्तयिषितः । द्वन्द्वशब्देन तद्विषयोऽधिकारोऽभिधीयते । तस्य नञा निषेधो द्योत्यते । तेनायमर्थो 'द्वन्द्व इह नापेक्ष्यते, तदनपेक्षायां सामान्येन द्वन्द्वे चाद्वन्द्वे च लुग्विकल्पसिद्धिः' ॥६९॥

आगस्त्यकौ । प्रकृतिप्रत्ययसमुदायस्य षष्ठीनिर्दिष्टत्वादादेशप्रसङ्गः । ततश्चागस्तीनां छात्रा इत्यत्रादेशे कृतेऽवृद्धत्वाच्छो न स्यादित्याह—प्रकृतिनिपातनमिति । प्रकृतेरेवादेशौ निपातनीयावित्यर्थः । लुक्प्रतिषेध इति । 'गोत्रेऽलुगची'ति लुकि प्रतिषिद्धे तत्संनियोगशिष्टस्यादेशस्याप्यभाव इत्यागस्त्यशब्दाच्छः सिध्यति । प्रत्ययान्तनिपातने हीति । यदि प्रत्ययान्तस्यादेशः क्रियेतेत्यर्थः । कौण्डिना इति ।

उ०-भावादिति भावः । स्वरितत्वासङ्गाभावस्यैवान्वाख्यानं वार्तिकमित्यन्ये ॥६९॥

आगस्त्यकौण्डिन्य । प्रकृतिनिपातनशब्दस्य विवक्षितमर्थमाह—प्रकृतेरेवेति । अर्थादेव प्रत्ययस्य लुगिति बोध्यमिति भावः । भाष्ये—वृद्ध्यभावः स्यादिति । एवं च छो न स्यादिति भावः । पूर्वं फलाभावाद् वृद्धसंज्ञाभावेन स्थानिवद्भावेन न तल्लाभ इति बोध्यम् ।

* तिककितवादिभ्यो द्वन्द्वे २. ४. ६८. † गोत्रेऽलुगचि ४. १. ८९
‡ वृद्धाच्छः ४. २. ११४. × कण्वादिभ्यो गोत्रे ४. २. १११.

## अधिकारात्प्रत्ययलोपः ॥ ४ ॥

अधिकारात्प्रत्ययलोपो भविष्यति* ।

तर्हि प्रकृतिनिपातनं कर्तव्यम् ? न कर्तव्यम् । [1]योगविभागः करिष्यते । आगस्त्यकौण्डिन्ययोर्बहुषु लुग्भवति । ततोऽगस्तिकुण्डिनजित्येतौ च प्रकृत्यादेशौ भवत आगस्त्यकौण्डिन्ययोरिति ।

एवमपि प्रत्ययान्तयोरेव प्राप्नोति प्रत्ययान्ताद्धि भवान् षष्ठीमुच्चारयति†—'आगस्त्यकौण्डिन्ययो'रिति । नैष दोषः । यथा हि परिभाषितं प्रत्ययस्य लुक्श्लुलुपो भवन्तीति‡ प्रत्ययस्यैव भविष्यत्यवशिष्टस्यादेशौ भविष्यतः ॥७०॥

## यङोऽचि च ॥ २ । ४ । ७४ ॥

## ऊतोऽचि ॥ १ ॥

ऊतोऽचीति वक्तव्यम् । इह मा भूत्—सनीस्रसः दनीध्वस इति+ ।

प्र०—'कण्वादिभ्यो गोत्र' इत्यण् । अस्य विशेषाभावप्रदर्शनायोपन्यासः । अधिकारादिति । लुग्ग्रहणमिहानुवर्तते । तत्र प्रकृतेरादेशः, प्रत्ययस्य तु लुगित्यर्थः संपद्यते ।

बहुषु लुग्भवतीति । बहुषु वर्तमानयोर्यः प्रत्ययस्तस्येत्यर्थः । प्रकृत्यादेशादिति । सामर्थ्यलभ्योऽयमर्थः । प्रत्यये हि लुप्ते प्रकृतिरेवावशिष्यते । एवमपीति । षष्ठीनिर्दिष्टस्यादेशविधानादिति भावः । ततश्च लुगादेशयोश्च पर्यायप्रसङ्गः । यथापरिभाषितमिति । तत्र स्थानिभेदात् पर्यायाभावः ॥७०॥

यङोऽचि च । सनीस्रस इति । यद्यत्र लुक् स्यात्तदा 'न लुमताङ्गस्ये'ति

उ०—अस्य विशेषेति । यद्यपि 'कौण्डिना' इति सिध्यति, तथाप्यागस्तीया इति न सिध्यतीति व्याख्येयमिति भावः ।

ननु प्रत्ययवाचकपदाभावेन बहुष्वित्यस्य प्रत्ययान्तसमुदाये एवान्वये तस्यैव लुक् स्यादत आह—बहुष्विति । यः प्रत्यय इति । लुगाक्षिप्तोऽयं प्रत्ययादर्शनस्यैव लुक्त्वादिति बोध्यम् । षष्ठीनिर्दिष्टस्येति । स्थानषष्ठी सामर्थ्यस्य प्रतिबन्धिकेति भावः । तत्रेति एतदर्थमेव तत्र प्रत्ययग्रहणं कृतम् यद्वा 'गोत्रे' इत्यनुवर्त्य 'गोत्रे कृतस्य लु'गित्यर्थान्न दोषः । पर्यायाभाव इति । विकल्पस्याष्टदोषदुष्टत्वादित्यपि बोध्यम् ॥७०॥

यङोऽचि च । यङ साहचर्याद्यङ्प्रत्यय एवात्र गृह्यते ॥ ऊतोऽचि । ऊतः परस्य यङोऽचि लुगित्यर्थः । यद्यत्रेति । 'न धातु'ति सूत्रस्थप्रत्याख्यानप्रकारस्तु लक्ष्यविशेषविषय

* यस्कादिभ्यो गोत्रे; त्रियार्षञितो यूनि लुगणिञोः २. ४. ५८. [1]—अस्मात्प्राक् 'योगविभागात् सिद्ध'मिति वार्तिकं क्वचिद् दृश्यते । † षष्ठी स्थानेयोगा १. १. ४९.

‡ प्रत्ययस्य लुक्श्लुलुपः १ १. ६१. + अनिदितां हल उपधाया क्ङिति; अतो लोपः; यस्य हलः ६. ४. २४; ४८; ४९; प्रत्ययलोपे प्रत्ययलक्षणम् १. १. ६२.

अथ 'ऊत' इत्युच्यमान इह कस्मान्न भवति—योयूयः रोरूयः÷ ? विहितविशेषणमूकारान्तग्रहणम्[1]—ऊकारान्ताद्यो विहित इति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । इष्टमेवैतत्संगृहीतम् । सनीस्रंसः दनीध्वंस इत्येव भवितव्यम्× ॥७४॥

## गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ २ । ४ । ७७ ॥

### गापोर्ग्रहण इण्पिबत्योर्ग्रहणम् ॥ १ ॥

गापोर्ग्रहण इण्पिबत्योर्ग्रहणं कर्तव्यम् । इणो यो गाशब्दः पिबतेर्यः पाशब्द* इति वक्तव्यम् । इह मा भूत्—अगासीन्नटः, अपासीद्धनमिति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । इणो ग्रहणे तावद्वार्तम् । निर्देशादेवेदं व्यक्तं 'लुग्विकरणस्य ग्रहण'मिति । पापग्रहणे चापि वार्तम् । [2]वक्तव्यमेवैतत्

---

प्र०—प्रत्ययलक्षणप्रतिषेधान्नलोपो न स्यात् । 'अतो लोपः' 'यस्य हल' इति लोपे तु प्रत्ययलक्षणं भवत्येव ॥७४॥

गाति । पिबतेरिति । पिबतेर्यः स्थानी दृष्टः—पाशब्द इत्यर्थः । शिति च पिबादेशो विहित इति 'पा पाने' इत्यस्यैव भौवादिकस्य ग्रहणम् । अगासीदिति । 'गै शब्दे' 'पा रक्षणे' अनयो'र्यमरमनमातां सक् चे'ति सगागमः । सिचश्चेट् ।

निर्देशादिति । गातीत्यादादादिकादेशानुकरणत्वाददादिलुका गातिशब्दः श्तिपा

---

उ०—एवेति निरूपितं तत्रैव भाष्ये । इत्येव भवितव्यमिति । योयूयः रोरूय इत्यत्र बाहुलकाद्यङ्लुगभाव एवेत्यपरे ॥७४॥

गातिस्था । 'इणो गा शब्द' इति भाष्ये इकोऽपीण्वद्भावात्तदादेशस्यापि सिद्धिरिति भावः । यः स्थानीति । स्थान्यादेशसम्बन्धे षष्ठीति भावः । ननु पातेरपि पिबादेशः किं नेष्यत आह—शिति चेति । अदादिलुकेति । 'श्तिपः कर्त्राद्यर्थकत्वाभावाद्विकरणो न न्यायप्राप्त' इतिवादिनां मतेऽपि तस्य गैतिरिति स्यादित्याशयः । न च 'गै' शब्दे इत्यस्य कृतात्वस्यानुकरणात् श्तिप्यपि एवमेव रूपेण निर्देशः संदिग्ध इति वाच्यं, लाक्षणिकत्वेन तस्यानुकरणात्, यस्मात् श्तिपि एवमेव रूपं तस्यैव ग्रहणाच्च । अन्यथा 'गास्थाघु' इत्येवमेव वदेदिति भावः । गाङस्तु नानुकरणं परस्मैपदपरत्वाभावात् । 'गामादाग्रहणेष्वविशेष' इति

---

÷ अकृत्सार्वधातुकयोर्दीर्घः ७. ४. २५ [1]—'मूकारग्रहणम्' पा० ।

× न लुमताङ्गस्य १. १. ६३.

* इणो गा लुङि २. ४. ४५; पाघ्राध्मास्था···शीयसीदाः ७. ३. ७८.

[2]—'उक्तमेतत्' पा० ।

'सर्वत्रैव पाग्रहणेऽलुग्विकरणस्य ग्रहण'मिति ॥७७॥

## तनादिभ्यस्तथासोः ॥ २ । ४ । ७९ ॥

### तथासोरात्मनेपदवचनम् ॥ १ ॥

तथासोरात्मनेपदस्य ग्रहणं कर्तव्यम् । आत्मनेपदं यौ तथासाविति वक्तव्यम् ।

### एकवचनग्रहणं वा ॥ २ ॥

अथवैकवचने ये तथासी इति वक्तव्यम् ॥ तच्चावश्यमन्यतरत्कर्तव्यम् ।

### अवचने ह्यनिष्टप्रसङ्गः ॥ ३ ॥

अनुच्यमाने ह्येतस्मिन्ननिष्टं प्रसज्येत । अतनिष्ट यूयम्, असनिष्ट यूयमिति ।

तत्तर्हि वक्तव्यम् ? यद्यपि तावदयं तशब्दो दृष्टापचारोऽस्त्यात्मनेपदम्, अस्त्येव परस्मैपदम्, अस्त्येकवचनम्, अस्ति बहुवचनम् । अयं तु[1] खलु थास्शब्दोऽदृष्टापचार आत्मनेपदमेकवचनमेव[2] । तस्यास्य कोऽन्यः सहायो भवितुमर्हत्यन्यदत आत्मनेपदादेकवचनाच्च । तद्यथा—'अस्य गोर्द्वितीयेनार्थ' इति गौरेवानीयते नाश्वो न गर्दभः ॥७९॥

## आमः ॥ २ । ४ । ८१ ॥

### आमो लेर्लोपे लुङ्लोटोरुपसंख्यानम् ॥ १ ॥

आमो लेर्लोपे लुङ्लोटोरुपसंख्यानं कर्तव्यम् । तां वैजैवापयो[3] विदामक्रन् । [4]अत्र भवन्तो विदांकुर्वन्तु ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । लिग्रहणं* निवर्तिष्यते । यदि निवर्तते

प्र०—निर्दिष्टः । सर्वत्रेति । 'घुमास्थागापे'त्यादावपीत्यर्थः । तेन 'पायते' इति पातेरीत्वाभावः । शोषणार्थस्य तु पायतेर्लाक्षणिकत्वात्पारूपस्य ग्रहणाभावः ॥७७॥

आमः । लिग्रहणमिति । निपातनादप्यत्र लुक्सिध्यति, तत्त्वनपेक्ष्यायं परिहार

उ०—श्तिब्रहितगादेशविषयमिति बोध्यम् । भाष्ये—अलुग्विकरणस्येति । 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्ये'त्यनयेत्यर्थः ॥७७॥

तनादिभ्यस्त । अतनिष्टेति । मध्यमपुरुषबहुवचनम् ॥७९॥

आमः । यद्यपि पूर्वसूत्रे लेरिति च्लेर्ग्रहणं तथाप्यत्र योग्यतावशाल्लिट एव ग्रहणमिति वार्त्तिकम् । निपातनादिति । 'विदाङ्कुर्वन्त्वित्यन्यतरस्या'मिति 'अभ्युत्सादया'मित्यादिनिपातनादित्यर्थः । तत्त्विति । 'ले'रित्यननुवृत्त्या सर्वेष्टसिद्धौ तदनुवृत्तिमभ्युपगम्य लुङ्लोटो-

१–क्वचिन्न । २–'मेव च' पा० । ३–'वैजवापयो' पा० । ४–'अस्य' पा० ।

* मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः २. ४. ८०.

प्रत्ययमात्रस्य लुक् प्राप्नोति । इष्यत एव प्रत्ययमात्रस्य । आतश्चेष्यते, एवं ह्याह 'कृञ्चानुप्रयुज्यते लिटि' [ ३. १. ४० ] इति । यदि च प्रत्ययमात्रस्य लुग्भवति तत एतदुपपन्नं भवति ।

**आमन्तेभ्यो णलः प्रतिषेधः ॥ २ ॥**

आमन्तेभ्यो णलः प्रतिषेधो वक्तव्यः । शशाम तमाम । वृद्धौ† कृतायामाम इति लुक् प्राप्नोति ।

"आमन्तेभ्योऽर्थवद्ग्रहणाण्णलोऽप्रतिषेधः" । आमन्तेभ्योऽर्थवद्ग्रहणाण्णलोऽप्रतिषेधः । अनर्थको प्रतिषेधोऽप्रतिषेधः । लुक्कस्मान्न भवति—शशाम तत्तामेति ? अर्थवद्ग्रहणात् । अर्थवत आम्शब्दस्य ग्रहणं न चैषोऽर्थवान् ।

**आमन्तेभ्योऽर्थवद्ग्रहणाण्णलोऽप्रतिषेध इति चेदमः प्रतिषेधः ॥३॥**

आमन्तेभ्योऽर्थवद्ग्रहणाण्णलोऽप्रतिषेध इति चेदमः[२] प्रतिषेधो वक्तव्यः । आम ।

**उक्तं वा ॥ ४ ॥**

किमुक्तम् ? 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति‡ ।

प्र०-उक्तः । प्रत्ययमात्रस्येति । तरबादेरपीत्यर्थः । एवं ह्याहेति । व्यवहितविपर्यस्त-प्रयोगनिवृत्त्यर्थमेव तद्वचनमित्यर्थः । आमन्तस्यानभिव्यक्तपदार्थत्वाच्च स्वाभाविक्ये-वानुत्पत्तिस्तरबादेर्लुग्द्वारेणान्वाख्यायत इति भावः ।

अर्थवत इति । आम्प्रत्ययो'ऽनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ती'त्यर्थवान् ॥ आम इति । 'अम गत्यादिष्वि'त्यस्य णलि वृद्धौ द्विर्वचन एकादेशे च यद्रूपमामिति

उ०-निपातनाश्रयणमयुक्तमित्यनपेक्षाबीजम् । तरबादेरिति । लावस्थायामेव लुकः प्राप्त्या कृदन्तत्वात्प्रातिपदिकत्वेन तरबुत्पत्स्यत इत्याशयः । आदिना तमप् । तदन्तादुत्पन्न आम् च ग्राह्यः । व्यवहितेति । तरबादौ सति व्यवहितत्वं स्यादिति भावः । नन्वनभिव्यक्तपदार्थक-त्वेनातिशयाद्ययोगात्तरबाद्यनुत्पत्तौ कथं लुगित्यत आह—आमन्तस्येति । प्रत्ययमात्रस्य लुक्फलमदर्शनम्, इष्यत एवानुत्पत्तिरिति भाष्याक्षरार्थं इति भावः ।

नन्वर्थवानाम्—असंभवीत्यत आह—आम्प्रत्यय इति ॥ भाष्ये—सन्निपातेति ।

† अत उपधायाः ७. २. ११६. १—वार्तिकमित्यन्ये । २—'चेदमधातोः' पा० ।
‡ न वा सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य १. १. ३९ वा० ३. पृ० ३१०.

किं पुनर्लुगादेशानामपवाद आहोस्वित् कृतेष्वादेशेषु+ भवति ?

**लुगादेशापवादः ॥ ५ ॥**

लुगादेशानामपवादः ।

**तिङ्कृताभावस्तु ॥ ६ ॥**

तिङ्कृतस्य त्वभावः । कस्य ? पदत्वस्य* ।

**सुबन्तपदत्वात्सिद्धम् ॥ ७ ॥**

'सुबन्तं पद'मिति* पदसंज्ञा भविष्यति ॥ कथं स्वाद्युत्पत्तिः ?

**लकारस्य कृत्त्वात्प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम् ॥ ८ ॥**

लकारः कृत् 'कृत्प्रातिपदिक'मिति प्रातिपदिकसंज्ञा तदाश्रयं प्रत्ययविधानम् । प्रातिपदिकाश्रयत्वात्स्वाद्युत्पत्तिर्भविष्यति† ।

[ [1]यद्येवं ] सुपः श्रवणं प्राप्नोति । 'अव्यया'दिति लुग्भविष्यति‡ । कथमव्ययत्वम् ?

प्र०–तस्यार्थवत्त्वाण्णलो लुक्प्रसङ्गः ॥ किं पुनरिति । यदा 'विशेषविधिः सामान्यविधिबाधक' इति न्याय आश्रीयते तदा लकारान्तरेषु सावकाशास्तिबादयो विशेषविहितेन लुका बाध्यन्त इत्यादेशापवादो लुक्संपद्यते । अथ त्वविरोधादस्ति च संभवो यदुभयं स्यादित्याश्रीयते तदा कृतेष्वादेशेषु लुका भाव्यमिति सन्देहात्प्रश्नः । लुगिति । सत्यपि संभवे बाधनं, तक्रदानेनेव दधिदानस्येति भावः । कस्येति । निघातादेस्तिङ्कार्यस्यानिष्टत्वात्प्रश्नः । कथमिति । आमः प्रत्ययत्वा'दप्रत्यय'इति प्रातिपदिकसंज्ञानिषेधात्प्रश्नः ।

लकारस्येति । 'अति'ङिति कृत्संज्ञाप्रतिषेधस्तिङ्भाविनो लकारस्य । अयं तु तिङ्भावी न भवतीति भावः ॥ सुपः श्रवणमिति । यद्यप्येकवचनस्य हल्ङ्यादि-

उ०–'लक्षणप्रतिपदोक्त'परिभाषया 'प्रत्ययाप्रत्यययो'रिति परिभाषया च सुसाधमेतत् ॥ तदा कृतेष्विति । विरोधाभावादेवान्तरङ्गत्वात्पूर्वं लुगित्यपि न वाच्यमिति भावः । 'विहितानां नियम' इतिपक्षाश्रयणाद्वोभयोस्तुल्यत्वम् । सत्यपीति । न चामुत्पत्तिकाले परत्वात्ततः प्रागेव वादेशाः किं न भवन्तीति वाच्यम्, अपवादविषये उत्सर्गाप्रवृत्तेः । 'प्रकल्प्य वापवादविषय'मिति न्यायात् ।

नन्वतिङिस्यनेन तिङ्स्थानित्वयोग्यस्य लस्य कृत्संज्ञा प्रतिषिध्यत इति कथं लिटः कृत्वमत आह—तिङ्भाविन इति । यद्यप्याम इत्यनेन सुपोऽपि लुक् सिध्यति 'ले'रिति

+ लस्य ३. ४. ७७. * सुप्तिङन्तं पदम् १. ४. १४.

† कृदतिङ् ३. १. ९३; कृत्तद्धितसमासाश्च १. २. ४६; स्वौजस्···ङ्योस्सुप् ४. १. २.

१–क्वाचित्कः पाठः । ‡ अव्ययादाप्सुपः २. ४. ८२;

**अव्ययत्वं मकारान्तत्वात् ॥ ९ ॥**

कृदन्तं मान्तमव्ययसंज्ञं भवतीत्यव्ययसंज्ञा भविष्यति* ।

स्वरः कथम्—यत्प्रकारयांचकार ?

**स्वरः कृदन्तप्रकृतिस्वरत्वात् ॥ १० ॥**

'कृदन्तमुत्तरपदं प्रकृतिस्वरं भवती'त्येष स्वरो† भविष्यति ।

**तथा च निघातानिघातसिद्धिः ॥ ११ ॥**

तथा च निघातानिघातसिद्धिर्भवति । चक्षुष्कामं याजयाञ्चकार । 'तिङ्-तिङः' [८.१.२८] इति तस्य चानिघातस्तस्माच्च निघातः सिद्धो भवति ।

**नञा तु समासप्रसङ्गः ॥ १२ ॥**

नञा तु समासः प्राप्नोति । न कारयाम्, न हारयाम् । 'नञ्सुबन्तेन सह समस्यत' इति समासः प्राप्नोति‡ ।

प्र०—लोपोऽस्ति तथापि द्विवचनबहुवचनश्रवणप्रसङ्गः ॥ कृदन्तमिति । कृन्मेजन्त इत्यत्र कृदन्तस्य विशेषणं मेजन्तग्रहणं, न तु कृतः । स्वरादिषु यदामिति पठ्यते तेन तद्धित-प्रकरणात्तद्धितसाहचर्याद्वा तद्धित एव गृह्यते ॥ यत्प्रकारयांचकारेति । अत्र प्रशब्द-स्यानुदात्तत्वमिष्यते, तच्च तिबादिलुकि सति 'गतिर्गतौ' 'तिङि चोदात्तवती'ति सिध्यति नान्यथेति भावः ।

कृदन्तप्रकृतिस्वरत्वादिति । 'प्र'शब्दस्य 'कारया'मित्यनेन समासे कृते समास-स्वराव्ययपूर्वपदप्रकृतिस्वरयोः प्राप्तयोः कृत्स्वरः, ततः शेषनिघातेन गतेरनुदात्तत्वं सिध्यतीत्यर्थः ॥ तस्य चेति । आमन्तस्यातिङन्तत्वान्निघातो न प्रवर्तते । तस्मात्परं तिङन्तं तु चकारादि निहन्यते ॥ न कारयामिति । ततश्च नलोपादिप्रसङ्गः ।

उ०—निवृत्तेस्तथापि तदनुवृत्तिमतेऽपि लुकं साधयितुमाह भाष्ये—अव्ययादिति लुगिति । द्विवचनेति । तदुत्पत्तिप्रकारश्च उत्तरसूत्रे भाष्ये स्पष्टः ॥ ननु कृत इति । तद्विशेषणत्वे हि कृतो मान्तत्वाभावान्न सिध्यतीत्यर्थः । कृद्विशेषणत्वपक्षे तु 'ले'रिति निवर्त्य 'आम' इत्यने-नैवेति बोध्यम् । तद्धितप्रकरणादिति । 'तद्धितश्चासर्वविभक्ति'रिति पठित्वा हि तत्र ते पठिता अतस्तेषु तद्धितपदमनुवर्तत इति भावः । अननुवृत्तावपि न दोष इत्याह—तद्धित-साहचर्याद्वेति ।

समासे कृते इति । गतिसमास इत्यर्थः । 'स च नित्य' इति समासाभावे स्वरो न सिध्येदिति न वाच्यम् । उपसर्गाणां क्रियामात्रेण सामर्थ्यात्, अनभिव्यक्तपदार्थकेन 'कारया'-मित्यनेन नास्य सामर्थ्यमिति न शङ्कनीयम् । तिङ्कृतपदत्वे त्वत्र समासो न स्यादित्य-निष्टम् ॥ 'तथा चे'त्यनेन सूचितं हेतुं दर्शयति—आमन्तस्येति ॥ नलोपादीति । आदिना

* कृन्मेजन्तः १. १. ३९. † गतिकारकोपपदात् कृत् ६. २. १३९.

‡ नञ् २. २. ६; (नलोपो नञः ६. ३. ७३).

उक्तं वा ॥ १३ ॥

किमुक्तम् ? असामर्थ्यादिति× । नात्र नञ आमन्तेन सामर्थ्यम् । केन तर्हि ? तिङन्तेन । न चकार कारयाम्, न चकार हारयामिति ॥८१॥

अव्ययादाप्सुपः ॥ २ । ४ । ८२ ॥

अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात् ॥ १ ॥

अव्ययादापो लुग्वचनमनर्थकम् । किं कारणम् ? लिङ्गाभावात् । अलिङ्गमव्ययम् ।

किमिदं भवान् सुपो लुकं मृष्यत्यापो लुकं न मृष्यति । यथैव ह्यलिङ्गमव्ययमेवमसंख्यमपि ॥ सत्यमेतत् । प्रत्ययलक्षणमाचार्यः प्रार्थयमानः सुपो लुकं मृष्यति । आपः पुनरस्य लुकि सति न किंचिदपि प्रयोजनमस्ति ।

उच्यमानेऽप्येतस्मिन्स्वाद्युत्पत्तिर्न प्राप्नोति । किं कारणम् ? एकत्वादी-

प्र०-न चकारेति । नञो लिङन्तेन सामर्थ्यं प्रदर्शयति, न त्वयं लौकिकः प्रयोगो व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थत्वादनुप्रयोगारम्भस्य । अभिव्यक्तपदार्थेन नञः सामर्थ्यं न त्वनभिव्यक्तार्थेनेत्यर्थः ॥८१॥

अव्यया । लिङ्गाभावादिति । न च स्त्रीसमानाधिकरणपक्षः 'स्त्रिया'मित्यत्राश्रितः, भूतमियं ब्राह्मणी'त्यादौ भूतादिभ्यः प्रत्ययप्रसङ्गादिति भावः । किमिदमिति । संख्याया अप्यभावात् सुपापि नोत्पत्तव्यमिति भावः ॥ प्रत्ययलक्षणमिति । स्वाभाविक्येव सुपोऽनुपलब्धिर्लुग्द्वारेण पदत्वनिबन्धनरुत्वादिकार्यसिद्धयेऽन्वाख्यायत इत्यर्थः । उच्यमानेऽपीति । प्रसक्तादर्शनस्य लोपादिसंज्ञाविधानात् । अनुत्पन्नस्य सुपो

उ०-पूर्वपदप्रकृतिस्वरत्वम् । भाष्ये-न चकार हारयामिति । क्वचित्तु 'न जहार हारया'मिति पाठः । तत्र चकारेत्येतदर्थतो निबद्धं—जहारेति । तत्र सामान्यविशेषयोरभेदान्वयादित्याहुः ॥८१॥

अव्ययादा । ननु मा भूल्लिङ्गं, 'तत्र शालाया'मित्यादौ स्त्रीसामानाधिकरण्यादेव टाप्, तस्य चानेन लुगत आह—न चेति । भूतमिति सामान्ये नपुंसकम् । ननु'क्वैस्तराभ्यां ब्राह्मणीभ्यां कृत'मित्यादावव्ययात्परापः संभव इति चेन्न, 'अव्यया'दिति विहितविशेषणात् । यद्वा आप्सुब्भ्यामाक्षिप्ताङ्गस्याव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणान्न दोषः । एवञ्च 'कृन्मेजन्त'-सूत्रस्थभाष्यमपि स्वरसतः सङ्गच्छते इति दिक् ॥ ननु सुपोऽनुत्पत्तौ कथं लुक्, कथं वा प्रत्ययलक्षणमत आह—स्वाभाविक्येवेति । अव्ययात्परसुबदर्शनमेव लुक्संज्ञमिति भावः । ननु पूर्वोक्तरीत्या सिद्धौ किं सुबुत्पत्त्येत्याशङ्क्याह—प्रसक्तेति । स्वादिवाक्ये एकत्वादीनामनु-

× २.१.१. भाष्ये । १—'लिङन्तेन' पा० । २—'सत्यमेवमेतत्' पा० ।

नामभावात्। एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते न चैषामेकत्वादयः सन्ति। अविशेषेणोत्पद्यन्त उत्पन्नानां नियमः क्रियते।

अथवा प्रकृतानर्थानपेक्ष्य नियमः [ क्रियते ]। के च प्रकृताः ? एकत्वादयः। एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु। द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु। बहुष्वेव बहुवचनं नैकस्मिन्न द्वयोरिति।

अथवाचार्यप्रवृत्तिर्ज्ञापयत्युत्पद्यन्तेऽव्ययेभ्यः स्वादय इति यदयमव्ययादाप्सुप इति [1]सुब्लुकं शास्ति ॥८२॥

## नाव्ययीभावादतोऽम्त्वपञ्चम्याः ॥ २ । ४ । ८३ ॥

### नाव्ययीभावादत इति योगव्यवसानम् ॥ १ ॥

'नाव्ययीभावादत' इति योगो व्यवसेयः। नाव्ययीभावादकारान्तात्सुपो लुग्भवति। ततोऽम्त्वपञ्चम्या इति ॥ किमर्थो योगविभागः ?

### पञ्चम्या अम्प्रतिषेधार्थम् ॥ २ ॥

पञ्चम्या अमः प्रतिषेधो यथा स्यात्।

### एकयोगे ह्युभयोः प्रतिषेधः ॥ ३ ॥

एकयोगे हि [3]सत्युभयोः प्रतिषेधः स्यादमोऽलुकश्च।

स तर्हि योगविभागः कर्तव्यः ? न कर्तव्यः।

### तुर्नियामकः ॥ ४ ॥

तुः क्रियते स नियामको भविष्यति—अमेवापञ्चम्या इति।

### अमि पञ्चमीप्रतिषेधेऽपादानग्रहणम् ॥ ५ ॥

अमि पञ्चमीप्रतिषेधेऽपादानग्रहणं कर्तव्यम्। अपादानपञ्चम्या इति

प्र०–लुगसंभवादिति भावः। एकत्वादिष्विति। वाक्यैकवाक्यतया विशिष्ट एवार्थे स्वादिविधानादिति भावः। अविशेषेणेति। वाक्यान्तरनिरपेक्षत्वात्स्वादिविधिवाक्यस्येति भावः। यदयमिति। एकवाक्यतापक्षेऽपि ज्ञापकात्सुबुत्पत्तिरित्यर्थः ॥८२॥

नाव्ययीभावा। योगव्यवसानमिति। योगविभाग इत्यर्थः। तुर्नियामक इति। अवधारणे तुर्वर्तते। तेन—अमेवापञ्चम्याः, अलुक्तु पञ्चम्या अपीत्यर्थः संपद्यते।

उ०–पादानादाह–वाक्यैकेति। वाक्यान्तरनिरपेक्षत्वादिति। 'उत्पन्नानां नियम'इति भाष्यस्यार्थनियम एवेत्याशयः। एकवाक्यतापक्षेऽपीति। सामान्यापेक्षप्रत्ययनियमेऽपीत्यपि बोध्यम्। अत्र पक्षत्रयेऽपि सङ्ख्यानामपि विभक्तीनामुत्पत्तिरिति बोध्यम् ॥८२॥

१–क्वचिन्न। २–'लुकं' पा०। ३–'सति' क्वचिन्न।

वक्तव्यम्* । किं प्रयोजनम् ?

**कर्मप्रवचनीययुक्तेऽप्रतिषेधार्थम् ॥ ६ ॥**

कर्मप्रवचनीययुक्ते मा भूत्—आपाटलिपुत्रं† वृष्टो देवः ।

**न वोत्तरपदस्य कर्मप्रवचनीययोगात्समासात्पञ्चम्यभावः ॥ ७ ॥**

न वा वक्तव्यम् । किं कारणम् ? उत्तरपदमत्र कर्मप्रवचनीययुक्तम् । उत्तरपदस्य कर्मप्रवचनीययोगात्समासात्पञ्चमी न भविष्यति । यदा च समासः कर्मप्रवचनीयुक्तो भवति तदा प्रतिषेधः । तद्यथा—आ उपकुम्भात् । आ उपमणिकादिति‡ ॥८३॥

## तृतीयासप्तम्योर्बहुलम् ॥ २ । ४ । ८४ ॥

**सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यम् ॥ १ ॥**

सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यमिति वक्तव्यम् । ऋद्धि-सुमद्रम् सुमगधम् । नदीसमास—उन्मत्तगङ्गम् लोहितगङ्गम् । संख्यावयव-एकविंशतिभारद्वाजम् त्रिपञ्चाशद् गौतमम्÷ ॥८४॥

प्र०—आपाटलिपुत्रमिति । आङ्योगेऽत्र पञ्चमी, न त्वपादन इत्यम्भावो भवतीत्यर्थः । न वेति । अव्ययीभावाद्विहितायाः पञ्चम्या अमादेशप्रतिषेधः । अत्र तूत्तरपदाद्विहिता पञ्चमी, तस्याश्च समासप्रातिपदिकत्वाल्लुकि कृते समासात् सुशब्द उत्पद्यते तस्याम्भावः । भवति तदेति । श्रूयत एवेत्यर्थः । आ उपकुम्भादिति । कुम्भस्य समीपमित्यव्ययीभावः । तत आङ्योगे पञ्चमी ॥८३॥

तृतीयासप्त । सुमद्रमिति । मद्राणां समृद्धिरित्यव्ययीभावः । एकविंशतिभारद्वाजमिति । एकविंशतिभरद्वाजा वंश्याः, त्रिपञ्चाशद् गौतमा वंश्या इति 'संख्या वंश्येन'ति समासः । तत्र वर्तिपदानां स्वार्थोपसर्जनाथान्तराभिधायित्वाद् गौतमभरद्वाजशब्दयोरेकत्वविशिष्टेऽर्थान्तरे संक्रमाल्लुगभावः । ततः सप्तमी । नित्योऽम्भावः । बहुलग्रहणलब्धश्चायमर्थो दर्शितः ॥८४॥

उ०— तृतीयासप्त । तत्र वर्तिपदानामिति । 'एकविंशतिभरद्वाजा' इत्यनयोः स्वार्थोपसर्जनवंश्या इत्यर्थाभिधायित्वादित्यर्थः । एवं हि अङ्गानतिक्रान्तोऽत्यङ्ग इति न सिध्येत् । तस्माद्भाष्यकारप्रयोगादत्र लुगभाव इति हरदत्तः । युक्ततरञ्चैतत् । अन्यथा विद्यानामपत्यं वैद इत्यादिसिद्ध्यर्थं तद्राजसूत्रे उक्तवार्तिकभाष्यासङ्गत्यापत्तिः । एतद्भाष्यप्रामाण्यादिमौ उपकादिषु बोद्ध्यावि्ति बोध्यम् ॥८४॥

* अपादाने पञ्चमी २. ३. २८. † पञ्चम्यपाङ्परिभिः २. ३. १०.

‡ अव्ययं विभक्तिसमीप····वचनेषु २. १. ६; पञ्चम्यपाङ्परिभिः २. १. १२.

÷ अव्ययं विभक्तिसमीप···वचनेषु २. १. ६; संख्या वंश्येन २. १. १९.

## लुटः प्रथमस्य डारौरसः ॥ २ । ४ । ८५ ॥

### टितां टेरेविधेर्लुटो डारौरसः पूर्वविप्रतिषिद्धम् ॥ १ ॥

टितां टेरेविधेर्लुटो डारौरसो भवन्ति पूर्वविप्रतिषेधेन । टेरेत्वस्यावकाशः†—पचते पचेते पचन्ते । डारौरसामवकाशः—श्वः कर्ता श्वः कर्तारौ श्वः कर्तारः । इहोभयं प्राप्नोति—श्वोऽध्येता श्वोऽध्येतारौ श्वोऽध्येतार इति । डारौरसो भवन्ति पूर्वविप्रतिषेधेन ॥ स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः ।

### आत्मनेपदानां चेति वचनात्सिद्धम् ॥ २ ॥

आत्मनेपदानां च डारौरसो भवन्तीति वक्तव्यम् ।

### तच्च समसंख्यार्थम् ॥ ३ ॥

तच्चावश्यमात्मनेपदग्रहणं कर्तव्यं समसंख्यार्थम् । संख्यातानुदेशो* यथा स्यात् । अक्रियमाणे ह्यात्मनेपदग्रहणे षट् स्थानिनस्त्रय आदेशाः । वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति ।

पूर्वविप्रतिषेधार्थेन तावन्नार्थ आत्मनेपदग्रहणेन । इदमिह संप्रधार्यम्—डारौरसः क्रियन्तां टेरेत्वमिति किमत्र कर्तव्यम् ? परत्वादेत्वम् । नित्या डारौरसः । कृतेऽप्येत्वे प्राप्नुवन्त्यकृतेऽपि प्राप्नुवन्ति । टेरेत्वमपि नित्यम् । कृतेष्वपि डारौरस्सु प्राप्नोत्यकृतेष्वपि प्राप्नोति । अनित्यमेत्वम् । अन्यस्य कृतेषु डारौरस्सु प्राप्नोत्यन्यस्याकृतेषु शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । डारौरसोऽप्यनित्याः । अन्यस्य कृत एत्वे प्राप्नुवन्त्यन्यस्याकृते शब्दान्तरस्य च

प्र०— लुटः प्रथमस्य । श्वः कर्तेति । तिप्तस्झीनामत्र डारौरसः कृताः ॥ आत्मनेपदानामिति । लुट आत्मनेपदानां च प्रथमसंज्ञकानां डारौरसो भवन्तीति वक्तव्यम् । ततश्च विशेषविहितत्वादादेशैष्टेरेत्वं बाध्यते । पूर्वविप्रतिषेधार्थेनेति । पूर्वविप्रतिषेधस्य

उ०— लुटः प्रथमस्य । प्रथमतः परत्वादेत्वे सकृद्गतिन्यायेन डारौरसो न प्राप्नुवन्तीत्याशयेन वार्तिकं भाष्ये—टितामिति । डादयस्तु परस्मैपदे चरितार्था इति भावः । पूर्वविप्रतिषेधेन डादौ सकृद्गतिन्यायाश्रयणादेत्वाभाव इति तात्पर्यम् । तद्ध्वनयन्नाह—तिप्तस्झीनामिति । आत्मनेपदानां चेति । चेन परस्मैपदम् । भाष्ये—पुनःप्रसङ्गेति । पुनरेत्वं तु न लक्ष्ये

† टित आत्मनेपदानां टेरे ३. ४. ७९. * यथासंख्यमनुदेशः समानाम् १. ३. १०.

प्राप्नुवन्तोऽनित्या भवन्ति । उभयोरनित्ययोः परत्वादेत्वम् । एत्वे कृते पुनः-प्रसङ्गविज्ञानाड्डारौरसो भविष्यन्ति ।

समसंख्यार्थेन चापि नार्थ आत्मनेपदग्रहणेन । स्थानेऽन्तरतमेन† व्यवस्था भविष्यति । कुत आन्तर्यम् ? अर्थतः । एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थः ॥ अथवादेशा अपि षडेव निर्दिश्यन्ते । कथम् ? एकशेष-निर्देशात् । एकशेषनिर्देशोऽयम् ।

अथैतस्मिन्नेकशेषनिर्देशे सति किमयं कृतैकशेषाणां द्वन्द्वः—डा च डा च डा, रौ च रौ च रौ, रश्च रश्च रः । डा च रौ च रश्च डारौरस इति । आहो-स्वित्कृतद्वन्द्वानामेकशेषः—डा च रौ च रश्च डारौरसः । डारौरसश्च डारौरसश्च डारौरस इति । किं चातः ? यदि कृतैकशेषाणां द्वन्द्वोऽनिष्टः समसंख्यः प्राप्नोति । एकवचनद्विवचनयोर्डा प्राप्नोति, बहुवचनैकवचनयो रौ प्राप्नोति, द्विवचनबहुवचनयोश्च रस्प्राप्नोति । अथ कृतद्वन्द्वानामेकशेषो न दोषो भवति । यथा न दोषस्तथास्तु ।

किं पुनरत्र ज्यायः ? उभयमित्याह । उभयं हि दृश्यते—बहु शक्तिकिट-कम्[1], बहूनि शक्तिकिटकानि[2] । बहु स्थालीपिठरम्, बहूनि स्थालीपिठराणि ।

अथवान्तर्यतो व्यवस्था भविष्यति । आन्तर्यादेकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थ इति ।

प्र०—यत्प्रयोजनं तत्प्रयोजनेनेत्यर्थः । किं पुनरिति । कस्य पक्षस्य न्याय्यतरत्वात्प्रशस्यत-रत्वमिति सामान्येन प्रश्नः । इह तु कृतैकशेषाणां द्वन्द्वो दुष्टत्वान्नैव प्रशस्यत इति न

उ०—लक्षणस्येति न्यायादिति भावः । कृतैकशेषद्वन्द्वपक्षस्य दुष्टत्वात्प्रश्नानुपपत्तेरत आह—सामान्येन प्रश्न इति । 'अत्रे'ति भाष्यस्यैवंविधे विषय इत्यर्थः । उदाहरणान्तरविषयः प्रश्न इति भावः । बहु शक्तिकिटकमिति । 'जातिरप्राणिना'मित्येकवत्त्वम् । बहुशब्दोपात्तबहुत्वा-न्यथानुपपत्त्या कृतैकशेषाणामत्र द्वन्द्वः । 'बहूनि शक्तिकिटकानी'त्यत्र बहुवचनान्यथानुपपत्त्या कृतद्वन्द्वानामेकशेष इति बोध्यम् । तस्मादुभयमपि न्याय्यम् । प्रकृते तु कृतद्वन्द्वानामेकशेषो न्याय्य इति बोध्यम् ।

† स्थानेऽन्तरतमः १. १. ५०. १–'शक्तिकीटकम्' पा० । २–'शक्तिकीटकानि' पा० । 'कीटकः कृमिजाते'ति मेदिनी । ३–अयं सन्दर्भो बहुषु भाष्यपुस्तकेषु नास्ति ।

डारौरसः कृते टेरे यथा द्वित्वं प्रसारणे* ।
समसंख्येन नार्थोऽस्ति सिद्धं स्थानेऽर्थतोऽन्तराः ॥
आन्तर्यतो व्यवस्था त्रय एवेमे भवन्तु सर्वेषाम् ।
टेरेत्वं च परत्वात्कृतेऽपि तस्मिन्निमे सन्तु ॥

डाविकारस्य शित्करणं सर्वादेशार्थम् ॥ ४ ॥

डाविकारः शित्कर्तव्यः । किं प्रयोजनम् ? सर्वादेशार्थम् । शित्सर्वस्येति† सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारेऽलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत‡ ।

निघातप्रसङ्गस्तु ॥ ५ ॥

निघातस्तु प्राप्नोति । श्वः कर्ता । 'तासेः परं लसार्वधातुकमनुदात्तं भवती'त्येष स्वरः+ प्राप्नोति÷ ।

यत्तावदुच्यते 'डाविकारस्य शित्करणं सर्वादेशार्थ'मिति ।

सिद्धमलोऽन्त्यविकारात् ॥ ६ ॥

सिद्धमेतत् । कथम् ? अलोऽन्त्यविकारात् । अस्त्वयमलोऽन्त्यस्य । का रूपसिद्धिः ? कर्ता ।

---

प्र०–तदपेक्षः प्रश्नः । डारौरसः कृते टेरे इति । परत्वाट्टेरेत्वे कृते पुनःप्रसङ्गविज्ञानाड्डारौरसो भवन्ति । यथेजतुरीजुरिति कृते संप्रसारणे द्विर्वचनम् ॥ एष एवार्थ आर्यया प्रदर्शितः—आन्तर्यत इति । य एवामी त्रयः श्रूयन्ते त एव सर्वेषां सन्तु ।

डाविकार इति । डादेश इत्यर्थः । 'नानुबन्धकृतमनेकाल्त्व'मित्यन्त्यस्य स्यादिति डाश् वक्तव्यः ॥ श्व कर्तेति । तिपो डादेशः, तस्य 'तास्यनुदात्तेन्ङि'दित्यनुदात्तत्वं

---

उ०– डाया विकारे इत्यर्थेऽनुपपत्तिरत आह—डादेश इति । कर्मधारय इति भावः । नानुबन्धकृतमिति । अनुबन्धत्वयोग्यकृतमित्यर्थः । ध्वनितं चेद'मनेकाल्शि'दिति सूत्रे भाष्ये । भाष्ये–निघातप्रसङ्गस्त्विति । शित्त्वेऽशित्त्वे च सर्वथायं दोष इति सूचयितुं 'तु'शब्दः ।

---

* लिटि धातोरनभ्यासस्य; वचिस्वपियजादीनां किति ६. १. ८; १५.
१–आर्यावृत्तम् । तल्लक्षणं तु छन्दःशास्त्रे 'स्वरा अर्धं चार्यार्धम्' ४।१४ इत्यारभ्य ४।३१ सूत्रपर्यन्तं द्रष्टव्यम् । † अनेकाल्शित् सर्वस्य १. १. ५५. ‡ अलोऽन्त्यस्य १. १. ५२.
\+ तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ६. १. १८६.
÷ तिङ्शित् सार्वधातुकम् ३. ४. ११३.

## डिति टेर्लोपाल्लोपः ॥ ७ ॥

डिति टेर्लोपेन× लोपो भविष्यति । अभत्वान्न प्राप्नोति । डित्करणसामर्थ्याद्भविष्यति ।

## अनित्त्वाद्वा ॥ ८ ॥

अथवानित्त्वादेतत्सिद्धम् । किमिदमनित्त्वादिति ? अन्त्यस्यायं स्थाने भवन्न प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न । असत्यामित्संज्ञायां लोपो न । असति लोपेऽनेकाल् । यदानेकाल्तदा सर्वादेशः । यदा सर्वादेशस्तदा प्रत्ययः । यदा प्रत्ययस्तदेत्संज्ञा* । यदेत्सञ्ज्ञा तदा लोपः† ।

## प्रश्लिष्टनिर्देशाद्वा ॥ ९ ॥

अथवा प्रश्लिष्टनिर्देशोऽयम्—डा आ डा । सोऽनेकाल्शित्सर्वस्य [१. १. ५५] इति सर्वादेशो भविष्यति ।

यदा तर्ह्ययमन्त्यस्य स्थाने भवति तदा तिङ्ग्रहणेन ग्रहणं न प्राप्नोति ।

---

प्र०—प्राप्नोति । यस्तु 'तिङतिङ' इति निघातः स 'न लु'डिति निषिद्धः ॥ डितीति । आकारे डिति परतः सतकारस्य टिसंज्ञकस्य लोपः । डित्करणसामर्थ्यादिति । तत एवानङ्गस्यापीति बोद्धव्यम् । न ह्यन्त्यस्य डादेशे कृते सतकारमङ्गम्, प्रत्यये परतोऽङ्गसंज्ञाविधानात् ॥ अनित्त्वादिति । अनित्संज्ञकत्वादित्यर्थः । अन्त्यस्येति । प्रत्ययस्य ह्यवयवः स्यान्न तु प्रत्ययः, तकारादेः समुदायस्य प्रत्ययत्वात् ।

प्रश्लिष्टनिर्देशादिति । तत्रानेन कृतैकादेशेन समुदायः प्रत्याय्यते, सोऽनेकल्त्वात्सर्वादेशः प्रवर्तते । सर्वादेशे च तस्मिन्कृते एकादेशः क्रियते । 'सिद्धमलोऽन्त्यविकारा'दिति यदुक्तं तत्र दोषमुद्भावयति—यदा तर्हीति । अकृतपरिमाणस्य तिङ्संज्ञासंबन्धा-

---

उ०—ननु 'श्वः'पदयोगे तिङन्तनिघात एव भविष्यतीति किमनेन लसार्वधातुकानुदात्तत्वविचारेणेत्यत आह—यस्त्विति ॥ भाष्ये—अनित्त्वाद्वेति । इयमेकदेशयुक्तिः । अनुबन्धत्वयोग्यत्वेन तत्कृतानेकाल्त्वाभावात् । 'लुट्' इत्यादौ प्रत्ययशब्द उपदिश्यमानप्रत्ययावयवपरोऽपीति अन्त्यादेशेऽपि इत्स्येत्त्वसिद्धिः ।

सर्वादेशे च तस्मिन्कृते एकादेश इति । कृतैकादेशनिर्देशसामर्थ्यादादेशकाले एकादेशस्य नैव प्रवृत्तिरित्यर्थः । ननु तिङवयवमादायैव सा किं न स्यादत आह—अकृतपरिमाण-

---

× टेः ६. ४. १४३. * चुटू १. ३. ७. † तस्य लोपः १. ३. ९.

**तिङ्ग्रहणमेकदेशविकृतस्यानन्यत्वात् ॥ १० ॥**

एकदेशविकृतमनन्यवद्भवतीति तिङ्ग्रहणेन ग्रहणं भविष्यति ।

स्वरः कथम् ?

**स्वरे विप्रतिषेधात्सिद्धम् ॥ ११ ॥**

[इदमिह संप्रधार्यम्–][1] डारौरसः क्रियन्तामनुदात्तत्वमिति किमत्र कर्तव्यम् ? परत्वादनुदात्तत्वम् । नित्या डारौरसः । कृतेऽप्यनुदात्तत्वे प्राप्नुवन्त्यकृतेऽपि प्राप्नुवन्ति । अनुदात्तत्वमपि नित्यम् । कृतेष्वपि डारौरस्सु प्राप्नोत्यकृतेष्वपि प्राप्नोति । अनित्यमनुदात्तत्वम् । अन्यस्य कृतेषु डारौरस्सु प्राप्नोत्यन्यस्याकृतेषु । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । डारौरसोऽप्यनित्याः । अन्यथास्वरस्य कृतेऽनुदात्तत्वे प्राप्नुवन्त्यन्यथास्वरस्याकृते । स्वरभिन्नस्य च प्राप्नुवन्तोऽनित्या भवन्ति । उभयोरनित्ययोः परत्वादनुदात्तत्वम् । अनुदात्तत्वे कृते पुनःप्रसङ्गविज्ञानाड्डारौरसः । टिलोप उदात्तनिवृत्तिस्वरेण* सिद्धम् ।

न सिध्यति । किं कारणम् ? अन्तरङ्गत्वाड्डारौरसः । तत्रान्तरङ्गत्वाड्डारौरस्सु कृतेष्वनुदात्तत्वं क्रियतां टिलोप इति किमत्र कर्तव्यम् ? परत्वाट्टिलोपेन भवितव्यम् ।

प्र०–त्तिशब्दस्यान्त्यादेशे कृते रूपान्तरयोगात्तिङ्ग्रहणेनाग्रहणात्पदत्वं न स्यादित्यर्थः ।

एकदेशविकृतमिति । पचतु पचन्त्वित्यादौ यथा ।

उ०–स्येति । भाष्ये—अनन्यवदिति । अर्द्धाभिकविकारान्न्यायेनासिद्धेः 'स्थानिव'दित्यतिदेशाप्रवृत्तेरुपलक्षणमिदमिति बोध्यम् ।

भाष्ये—तत्रान्तरङ्गत्वादिति । 'तासेः परं लसार्वधातुक'मित्यनुदात्तत्वस्य बह्वपेक्षत्वादित्यर्थः । परत्वाट्टिलोपेनेति । डित्त्वसामर्थ्येनाङ्गत्वभत्ववैकल्येऽपि 'टे'रिति शास्त्रस्यैव प्रवृत्त्या तस्य परत्वादिति भावः । एवं चानुदात्ते उदात्तलोपाभावादुदात्तनिवृत्तिस्वराप्राप्तौ प्रत्ययस्वरप्राप्तावुदात्तत्वमेव श्रूयेतेति तात्पर्यम् । किमपेक्षया न्याय्यत्वमित्याशङ्क्याह—पूव

[1]–अयं पाठः क्वचिन्न । * अनुदात्तस्य च यत्रोदात्तलोपः ६. १. १६१.

एवं तर्हि स्वरे विप्रतिषेधात्सिद्धम् । न्याय्य एवायं स्वरे विप्रतिषेधः । इदमिह संप्रधार्यम्—अनुदात्तत्वं क्रियतामुदात्तनिवृत्तिस्वर इति किमत्र कर्तव्यम् ? परत्वादनुदात्तत्वम् । अनुदात्तत्वे कृते पुनःप्रसङ्गविज्ञानादुदात्तनिवृत्तिस्वरो भविष्यति ।

तदेतत्क सिद्धं भवति ? यत्पिद्वचनम्† । यदपिद्वचनं तत्र न सिध्यति । तत्रापि सिद्धम् । कथम् ? इदमद्य लसार्वधातुकानुदात्तत्वं प्रत्ययस्वरस्यापवादः‡ । न चापवादविषय उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य वापवादविषयं तत उत्सर्गोऽभिनिविशते । तन्न तावदत्र कदाचित्प्रत्ययस्वरो भवत्यपवादं लसार्वधातुकानुदात्तत्वं प्रतीक्षते । तत्रानुदात्तत्वं क्रियतां लोप इति, यद्यपि परत्वाल्लोपः सोऽसावविद्यमानोदात्तत्वेऽनुदात्त उदात्तो लुप्यते ।

प्र०- न्याय्य एवायमिति । पूर्वं प्रदर्शितौ हि डारौरसामन्तरङ्गत्वादन्याय्यः । अयं तु न्याय्यः । अथवा परविप्रतिषेध एवायं न पूर्वविप्रतिषेध इति न्याय्यत्वमुच्यते । इदमिहेति । डारौरस्सु कृतेषु टिलोपे च कृते संप्रधारणीयम् । नन्वकृतेऽनुदात्तत्वे उदात्तनिवृत्तिस्वरो नैव प्राप्नोति, तत्कथमनयोर्विप्रतिषेध इत्याह—तदेतदिति । तिपोऽनुदात्तस्य स्थाने डादेशः स्थानिवद्भावादनुदात्तस्तत्रोदात्तनिवृत्तिस्वरः सिध्यति । यस्तु तशब्दस्य स्थाने क्रियते तत्र परत्वाट्टिलोपे कृतेऽनुदात्ते उदात्तलोपो न कृत इत्युदात्तनिवृत्तिस्वरो न सिध्यति । पुनःप्रसङ्गविज्ञानात्त्वनुदात्तत्वमेव स्यादित्यर्थः । सोऽसाविति । शास्त्रीयस्तत्रानुदात्तो न गृह्यते, किं तर्हि, उदात्तत्वाभावयुक्त इत्यर्थः ।

उ०-प्रदर्शित इति । न्याय्य एवेति । भाष्यस्य—न्याय्यस्त्वयमित्यर्थः । 'अथवे'ति व्याख्या तु चिन्त्या, पूर्वमपि परविप्रतिषेधस्यैवोक्तेरिति बोध्यम् । टिलोपात्पूर्वमेतत्संप्रधारणाया असंभवादाह—डारौरःस्विति । टिलोपे चेति । परत्वादिति भावः । भाष्ये—'पुनःप्रसङ्गविज्ञानाऽ'-दिति । पित्यपि पर्जन्यवल्लक्षणप्रवृत्त्या लसार्वधातुकानुदात्तत्वे कृते इत्यर्थः । नन्वकृते इति । अपिद्विषय इत्यर्थः । ननूदात्तनिवृत्तिस्वराभावेऽपि परेण टिलोपेन प्रत्ययस्वरापवादस्य लसार्वधातुकानुदात्तत्वस्य सकृद्गतिन्यायेन बाधितत्वात्पुनरप्रवृत्तौ प्रत्ययस्वरप्रवृत्त्येष्टसिद्धिरत आह—पुनःप्रसङ्गेति । तत्र 'अनुदात्तस्य च यत्रे'त्यत्र । ततश्चोदात्तनिवृत्तिस्वरानुदात्तत्वयोः

† अनुदात्तौ सुप्पितौ ३. १. ४. ‡ आद्युदात्तश्च ३. १. ३.

